भाष्यम्

* ओ३म् *

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

## तृतीयो भागः

( तृतीयचतुर्थाध्यायात्मकः )

प्रकाशकः—
हरयाणा-साहित्य-संस्थानम्
गुरुकुल झज्जर ( रोहतक )

* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ श्रीकैय्यटकृतप्रदीपेन नागोजीभट्टकृतेन भाष्यप्रदीपोद्द्योतेन च विभूषितम् ]



तस्यायं

## तृतीयो भागः

( तृतीय-चतुर्थाऽध्यायात्मकः )



स च—

परमतपस्विनां श्रीमताम्भगवान्देवाचार्याणामन्तेवासिना महाविद्यालय-
गुरुकुलझज्जरस्योपाचार्येण वेद-व्याकरण-साहित्य-
दर्शन-आयुर्वेदाचार्येण पण्डितवेदव्रतेन
वर्णिना सम्पादितो 'विमर्श'टिप्पण्या
च संयोजितः ।

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्

गुरुकुल झज्जर ( रोहतक )

प्रथमं संस्करणम् द्विसहस्रम् २००० } २०२० विक्रमाब्दे १८८५ शकाब्दे १९६३ खिस्ताब्दे { मूल्यम् १०.०० — ४०-०० ( रुपये )

Rs 40.00

प्रकाशकः—
हरयाणा-साहित्य-संस्थानम्
पो० गुरुकुल झज्जर, जि० रोहतक

सम्पादकः—

श्री वेदव्रतः स्नातकः सिद्धान्तशिरोमणिः

वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्यः

( उपाचार्यः—महाविद्यालयगुरुकुलझज्जरस्य )

मुद्रकः—
श्रीयुतपण्डितभगवान्स्वरूपो न्यायभूषणम्
प्रबन्धकर्त्ता
वैदिक यन्त्रालय, अजमेर ।



* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

तस्यायं—

## तृतीयो भागः

( तृतीय-चतुर्थाऽध्यायात्मकः )

### प्रत्ययः ॥ ३ । १ । १ ॥

अधिकारेणेयं प्रत्ययसंज्ञा क्रियते । सा प्रकृत्युपपदोपाधीनामपि प्राप्नोति तस्याः

प्रदीपः—प्रत्ययः । अधिकारेणेति । यदि तु प्रकारान्तरेण संज्ञिस्वरूपनिर्देशादिना संज्ञा क्रियते ततो न स्यादतिप्रसङ्गः । यदा तु गौरवादिप्रसङ्गपरिहारायाधिकारेण क्रियते ततोऽतिप्रसङ्ग इत्यर्थः । तत्र यदि सर्वे संज्ञिनः स्वरूपेण निर्दिश्येरंस्ततो गौरवं स्यात् । अथ 'सप्प्रत्यय' इति सनः सकारादारभ्य कपः पकारेण प्रत्याहाराश्रयणेन संज्ञा विधीयेत तदाऽनेकस्य पकारस्य संभवात्सन्देहः स्यात् । ननु प्रतियोगमुपस्थानेऽपि वाक्यभेदप्रसङ्गात्प्रकृत्यादीनां प्रत्ययसंज्ञा न भविष्यति । तथाहि 'हरतेर्धातोर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्तरीन्प्रत्ययो भवती'त्येकं वाक्यम् ।

उद्द्योतः—प्रत्ययः । 'अधिकारेणे'त्यस्य प्रयोजनमाह—यदि त्विति । अनेकस्येति । प्रत्यासत्त्याश्रयणे सिपः पकारेण, व्याप्त्याश्रये 'तप्तनप्तनथनाश्चे'ति तनपः पकारेणेत्यर्थः । एवञ्च गौरवाऽतिव्याप्त्यादिदोषपरिहारायाऽधिकार एव कर्तव्यः । तथा च प्रकृत्यादिष्वतिप्रसङ्ग इति भावः । तमाक्षिपति—नन्विति । विधीयमानस्य सनादेः प्रथमान्ततया 'प्रत्यय' इत्यनेन सामानाधिकरण्यादेकवाक्यतया संज्ञासंबन्धः ।

प्रतिषेधो वक्तव्यः। प्रकृति–'गुप्तिज्किद्भ्यः सन्' [३।१।५]। उपपद–'स्तम्बकर्णयो रमिजपोः [ ३ । २ । १३ ]। उपाधि–'हरतेर्दृतिनाथयोः पशौ' [३ । २ । २५]।

प्र०—'ते च हरतिदृतिनाथपशवः प्रत्ययसंज्ञा' इति द्वितीयं वाक्यम्। न चैकवाक्यतायां सम्भवन्त्यां वाक्यभेदो युक्तः। नैतदस्ति। सनादीनामपि वाक्यभेदेनैव संज्ञा विधेया, न ह्यसतः संज्ञिनस्संज्ञाविधानमुपपद्यते। तत्रैकेन वाक्येन सनादीनां विधिः। अपरेण तेषामेव संज्ञाविधिः। ततश्च यथा सनादीनां वाक्यभेदेन संज्ञाविधिः, एवं प्रकृत्यादीनामपि प्रतिसंज्ञि प्रत्ययसंज्ञोपस्थानसामर्थ्यात्संज्ञासंज्ञिसंबन्धप्रतिपत्तियोग्यविभक्त्यन्तराऽध्याहारेण प्राप्नोति। सनाद्युत्पत्तिवाक्य एव प्रथममेतेषां पारार्थ्यमवगतम्। द्वितीये तु संज्ञासंज्ञिसम्बन्धप्रतिपादनवाक्ये सम्बन्धप्रतिपत्तौ स्वार्थता स्यात्, यथा च सप्तमीनिर्दिष्टस्य वाक्यभेदेनोपपदसंज्ञा अधिकाराद्भवति तथा प्रत्ययसंज्ञापि प्राप्नोति। उपाधिशब्देन चेह तुल्यन्यायत्वाद्विशेषणमप्युच्यते। क्वचित्तु तयोर्भेदेन व्यवहारो दृश्यते, यथा 'नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषण'मिति।

'अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः।
अनुपाधिरतोऽन्यः स्याच्छ्लाघादि विशेषणं यद्वत्॥' इति।

उ०—अन्येषान्तु विविभक्तित्वाद्वाक्यभेदेनैव संज्ञासंबन्ध इति भावः। सम्भवत्येकवाक्यत्व एव वाक्यभेदो दोषो न त्वसम्भव इति समाधत्ते—नैतदिति। ननु विविभक्तित्वात्कथं 'प्रत्यय' इत्यनेन तेषां संबन्ध इत्यत आह—विभक्त्यन्तरेति। ननु सनादिविधानार्थत्वात्प्रकृत्यादेरप्रधानतया संज्ञा न भविष्यतीत्यत आह—सनादीति। अन्यत्राऽप्रधानत्वेऽप्यन्यत्र संस्कार्यत्वलक्षणस्वार्थत्वेऽविरोध इति भावः। ननु प्रकृतीनाम्प्रत्ययविधावुद्देश्यतया तासामेव संज्ञायामप्युद्देश्यत्वं न्याय्यं न तु प्रत्ययानामिति चेन्न; समानविभक्तिकत्वेन प्रत्ययानां क्लृप्तोद्देश्यतया विभक्त्यन्तराऽध्याहारेण प्रकृत्यादीनामपि तत्सम्भवादित्यभिमानः। श्लाघादिविशेषणस्य प्रत्ययसंज्ञा कुतो नोद्भावितेत्यत आह—उपाधिशब्देनेति। तुल्यन्यायत्वादिति। प्रत्ययनिमित्तत्वेन प्रकृत्या तुल्यन्यायत्वमित्यर्थः। एवञ्चोपाधिषु तदुद्भावनेनैव विशेषणेऽप्युद्भावितैवेति भावः। तदन्तवाच्यः—प्रत्ययान्तवाच्य इत्यर्थः। समानशब्द इति। प्रयोगे भिन्नशब्दबोध्यतादशायां समानाधिकरणशब्दबोध्यो योऽसौ प्रत्ययान्तशब्दवाच्यः स उपाधिरुच्यत इत्यर्थः। यथा पञ्चालानां विषयः 'पाञ्चाल' इत्यत्र देशो 'दृतिहरि'रित्यादौ च श्वादिः पशुः। नानार्थत्वात्सन्देहवारणाय—'दृतिहरिः श्वे'त्यादौ विशेषनियमार्थाय स्पष्टप्रतिपत्तये वा क्वचित्समानाधिकरणशब्दप्रयोगोऽपि। आभ्यामपत्यकर्त्रादीनामुपाधित्वव्यावृत्तिः, श्लाघादिव्यावृत्तिश्च। श्लाघादीति। आदिना 'धातोः कर्मणः समानकर्तृका'दित्यादि। अतएव तदसमानाधिकरणमेव, 'गार्गिकया श्लाघत' इति पदान्तराऽभिधेयञ्च। तदप्रयोगे च बुद्धोऽसाधुत्वमेव। 'अर्थविशेषउपाधि'रित्यादि कात्यायनवचनमिति न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिमिश्राः।

१ 'प्रकृतिः' 'उपपदं' 'उपाधिः' इति सविभक्तिकं क्वचित्पाठान्तरम्।




एतेषां प्रतिषेधो वक्तव्यः । किं च स्याद्यद्येतेषामपि प्रत्ययसंज्ञा स्यात् । परत्वमाद्युदात्तत्वमङ्गसंज्ञेत्येते विधयः* प्रसज्येरन् ॥ अत उत्तरं पठति—

## प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः ॥ १ ॥

अधिकारेणाऽपि प्रत्ययसंज्ञायां सत्यां प्रकृत्युपपदोपाधीनामप्रतिषेधः । अनर्थकः

प्र०—किञ्च स्यादिति । नहि संज्ञाप्रवृत्तिमात्रादेव दोषो भवति किन्तु तन्निमित्तकार्यप्रवर्तनात्, न च प्रकृत्यादीनां किञ्चित्तन्निमित्तं कार्यं संभवति । परत्वं तावदवधिविशेषोपादानेन सनादिभिरेव प्रतिपन्नम् । न च गुपादीनां सनादीनां च परस्परापेक्षं परत्वं युज्यते, विरोधात् । उपपदस्याऽपि—समासे सति पूर्वनिपातेन भवितव्यमिति परत्वाऽभावः । उपाधेरपि—पौर्वापर्यस्य लौकिके प्रयोगे नियमाऽभावात् स्थितस्यैव च परत्वस्य शास्त्रेणाऽनुवादाच्छास्त्रस्य विधायकत्वाऽभावादनुवादकत्वादर्थस्य चोपाधित्वात्तस्य च परत्वाऽसंभवात्परत्वाऽभावः । आद्युदात्तत्वमपि न भविष्यति, यथास्वं लक्षणेन तेषां स्वरस्य विहितत्वात् । अङ्गसंज्ञा च विधानप्रतिबद्धा, न च प्रकृत्यादयः कुतश्चिद्विहिता इति तेषु परतः सा नान्यस्य भविष्यतीति प्रश्नः ।

परत्वमिति । प्रकृतिप्रत्यययोः पर्यायेण परस्परापेक्षं परत्वं स्यात् । शब्दान्तरापेक्षं वा प्रकृतेः, प्रकृत्यपेक्षं तु प्रत्ययस्य । उपपदस्याऽपि—परत्वादुपसर्जनं पूर्वमित्येतद्राजपुरुषादिषु सावकाशं बाधित्वा परत्वं स्यात् । 'भोक्तुं व्रजती'त्येव च नित्यं स्यान्न तु 'व्रजति भोक्तु'मिति ।

उ०—न च प्रकृत्यादीनामिति । न च प्रातिपदिकत्वाऽभावः फलम्, ङ्याप्प्रातिपदिकादित्यादावुद्देश्यतावच्छेदकत्वेन तत्त्वज्ञापनात् । ननु प्रतिसंज्ञि 'परश्चे'त्युपस्थानात्प्रकृत्यादयोऽवधिविशेषाऽनुपादानेऽपि सन्निधानात्सनादेरेव परे भवन्त्वित्यत आह—न चेति । 'युगप'दिति शेषः । समासे इति । नित्यसमासे इत्यर्थः । लौकिके प्रयोगे पौर्वापर्यस्य नियमाऽभावादुपाधेरपि परत्वाऽभाव इत्यन्वयः । तत्र हेतुमाह—स्थितस्यैवेति । तदनूद्य साधुत्वस्यैव विधेयत्वमिति भावः । विधायकत्वाऽभावादिति । परत्वादिविधायकत्वाऽभावादित्यर्थः ।

तद्विधायकत्वेऽप्याह—अर्थस्य चेति । यथास्वमिति । तेषामनवकाशत्वेन बाधकत्वमिति भावः । पर्यायेणेति । यौगपद्ये हि विरोध इति भावः । सन्नादीनां परत्वबोधनेनैव सूत्रोपपत्तौ सनित्यादेर्विभक्तिविपरिणामादिनाऽर्थान्तरवर्णनमनुपपन्नमित्यत आह—शब्दान्तरापेक्षमिति । प्रकृत्यपेक्षन्त्विति । तासां पञ्चम्यन्तत्वादिति भावः ।

ननु राजादीनामपि 'प्रातिपदिका'दिति निर्दिष्टत्वात्प्रत्ययसंज्ञायां 'परश्चे'त्यस्य प्राप्तौ कथमुपसर्जनं पूर्वमित्येतत्सावकाशमत आह—भोक्तुं व्रजतीति । अत्र समासाऽभावेनोपपदस्य परत्वं स्यादिति भावः । अर्थे परत्वाऽसम्भवस्योक्तत्वादाह—उपाधिवाचिन इति । स्वरान्तरमिति । योऽनवकाशस्तद्विषये मा भूत्, सावकाशविषये तु स्यादिति तात्पर्यम् । न च प्रातिपदिकाद्धातोरित्यनेन सर्वप्रकृतिनिर्देशात्तदंशे सावकाशविषयो दुर्लभ इति वाच्यं, स्वरान्तरगतं नित्यत्वं बाधित्वा पर्यायः स्यादित्यत्र तात्पर्यात् । सिद्धेति । 'दकि

---

* परश्च ३ । १ । २; आद्युदात्तश्च ३ । १ । ३; यस्मात्प्रत्ययविधिः० १ । ४ । १३

प्रतिषेधोऽप्रतिषेधः ॥ प्रत्ययसंज्ञा कस्मान्न भवति ?

**निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि ॥ २ ॥**

निमित्तानि हि निमित्तिकार्यार्थानि भवन्ति । किं पुनर्निमित्तं को वा निमित्ती ? प्रकृत्युपपदोपाधयो निमित्तं, प्रत्ययो निमित्ती । अन्यत्रापि चैष न्यायो दृष्टो नावश्यमिहैव । क्वान्यत्र ? लोके । तद्यथा बहुष्वासीनेषु कश्चित्कंचित्पृच्छति—

प्र०—उपाधिवाचिनोऽपि प्रयोगाऽनियमे प्राप्ते 'परश्चे'ति नियमः स्यात् । 'यः प्रत्ययस्स पर' इति परिभाषणात् । आद्युदात्तत्वमपि स्वरान्तरं बाधित्वा स्यात् । अङ्गसंज्ञेति । ननु विधानप्रतिबद्धाऽङ्गसंज्ञा, न चेह प्रकृत्यादयो विधीयन्ते । नैष दोषः । सिद्धशब्दाऽन्वाख्यानाय तेषामपि शास्त्रेण विधानात् । परत्वेन च पूर्वस्याऽवधेराक्षेपात् । ननु पूर्वाक्षेपेऽपि परत्वे तस्माद्विधिर्नास्तीत्यङ्गसंज्ञा न भविष्यतीति चिन्त्यमेतत् ।

**निमित्तस्येति** । प्रकृत्यादीनां भूतविभक्त्या निर्देशात्सनाद्युत्पत्तौ निमित्तभात्रेनोपादानात्पारार्थ्यात्स्वसंस्कारं प्रति प्रयोजकत्वाऽभावादित्यर्थः । तत्र वाक्यभेदेनाऽपि विधीयमाना प्रत्ययसंज्ञा सनादिभिरेव संबद्ध्यते, तेषामेव निमित्तित्वात्तां प्रति प्रयोजकत्वात् । संज्ञासम्बन्धप्रति-

उ०—लोप' इत्यनुवादेन ढको विध्यनुमानवदिहाप्यनुवादेनैव प्रकृतिविधानाऽनुमानमिति भावः । ननु कुतश्चित्पूर्वस्माद्विधिर्नास्तीति कथमङ्गत्वमत आह—**आक्षेपादिति** । तथा च पूर्वोद्देशेन परत्वेन तेषां विधानमिति भावः । **पूर्वापेक्षेऽपि परत्वे इति** । अनुमितो विधिः सामान्यत एव, पूर्वोद्देशेन तु परत्वमात्रविधानम् । वस्तुतो ढगादेर्मानान्तरेणाऽसिद्धया भवतु तद्विध्यनुमानम्, प्रकृत्यादीनान्तु मानान्तरेण सिद्धतया तद्विध्यनुमानमेव दुर्लभमिति भावः । **चिन्त्यमेतदिति** । 'इत्यादयः प्रत्ययसंज्ञा भवन्ति, ते च प्रत्ययेभ्यः शब्दान्तरेभ्यो वा परे भवन्ती'त्यत्र परशब्दस्य धर्मिप्रधानतया परत्वविशिष्टानां तेषामेव विधानं शाब्दम् । प्राप्ताऽव्याप्तविवेकन्यायेन तु देशमात्रविधानम् । अतएव सर्वोऽपि विशिष्टविधिरेव, प्राप्ताऽप्राप्तन्यायेन तु कस्यचिद्गुणविधित्वमिति **मीमांसकाः** । न हि 'यस्मात्प्रत्यविधि'रित्यत्र प्राप्ताऽव्याप्तविवेकन्यायलब्धविधेयत्वमेव गृह्यत इत्यत्र मानमस्तीत्यङ्गसंज्ञा प्रयोजनमेव । ननु विधिग्रहणसामर्थ्यान्न्यायलब्धविधेयत्वस्य ग्रहः । 'स्त्री ईयती'त्यादाविदम्निरूपिताङ्गत्वस्य दुर्वारत्वेन व्यावर्त्याऽभावादिति चेन्न, 'भनक्ती'त्यादौ दीर्घवारणाय विधिग्रहणस्यावश्यकत्वादित्याशयात् ।

**भूतविभक्त्या**—सिद्धत्वबोधकविभक्त्या । ननु भिन्ने वाक्ये स्वसंस्कारं प्रति प्रयोजकता स्यादेवेत्यत आह—**वाक्यभेदेनाऽपीति** । द्वितीयवाक्यस्याऽपि 'गुप्तिज्किद्भ्यो यः सन् स प्रत्यय' इत्येवंरूपस्यैव स्वीकारेण तत्रापि भूतविभक्त्या निर्देशात्पारार्थ्यमेव प्रकृत्यादीनामिति भावः । तेषामेव तांप्रति प्रयोजकत्वे हेतुमाह—**संज्ञासम्बन्धेति** । न च द्वितीयवाक्ये योग्यविभक्त्या विपरिणामः, योग्यविभक्तिनिर्दिष्टेषु सनादिषु चारितार्थ्यादिति भावः । युक्त्यन्तरमप्याह—**द्वयोश्चेति** । 'प्रत्ययसंज्ञायाः संज्ञित्वेन प्रत्ययापेक्षावत् प्रकृत्याद्यपेक्षायामपि प्रकृत्यादीनाम्प्रत्ययविधौ निमित्तभावेनोपक्षीणानां संज्ञाम्प्रत्यपेक्षाऽभावात् प्रत्ययसंज्ञा ने'त्यर्थो 'निमित्तिकार्यार्थ-

१ इदं क्वाचित्कम् ।





कतरो देवदत्तः कतमो यज्ञदत्त इति ? स तस्मायाचष्टे—'योऽश्वे यः पीठ' [इति[3]। योऽश्वे य पीठः ] इत्युक्ते निमित्तस्य निमित्तिकार्योऽर्थत्वादध्यवस्यति—'अयं देवदत्तोऽयं यज्ञदत्त' इति । नेदानीमश्वस्य पीठस्य वा 'देवदत्त' इति संज्ञा भवति ।

किं पुनर्निमित्तं को वा निमित्ती ? निर्ज्ञातोऽर्थो निमित्तमनिर्ज्ञातोऽर्थो निमित्ती । इह च प्रत्ययोऽनिर्ज्ञातः, प्रकृत्युपपदोपाधयो निर्ज्ञाताः । क्व ? धातूपदेशे प्रातिपदिकोपदेशे च । ते निर्ज्ञाता निमित्तत्वेनोपादीयन्ते ।

## प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम् ॥ ३ ॥

अथवा प्रधाने कार्यसंप्रत्ययो भवति । किं च प्रधानम् ? प्रत्ययः । तद्यथा बहुषु यात्सु कश्चित्कंचित् पृच्छति—'को याती'ति ? स आह 'राजे'ति । 'राजे'त्युक्ते प्रधाने कार्यसंप्रत्ययाद्यः पृच्छति यश्चाचष्टे उभयोः संप्रत्ययो भवति ।

प्र०—पत्तियोग्यविभक्तिनिर्देशात् । द्वयोश्च परस्पराकाङ्क्षायां सम्बन्धो न त्वन्यतराकाङ्क्षायां सीतारावणयोरिवेति सत्यामपि संज्ञाया आकाङ्क्षायां प्रकृत्यादीनां विशेषणत्वादनाकाङ्क्षत्वात् संज्ञासम्बन्धाऽभाव इत्युक्तं भवति । किं पुनरिति । नित्यत्वाच्छब्दानां निमित्तनिमित्तिभावो नोपपद्यत इति प्रश्नः । प्रकृतीति । प्रतिपादकानां शब्दानामुपायभावेन शास्त्रेण व्यवस्थापनात्तदनुगुणविभक्तिनिर्देशादस्ति निमित्तनिमित्तिभावः । कतर इति । 'किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतम'जिति सूत्रद्वये उपाधिप्रत्याख्यानाद्बहूनामप्येकस्य निर्धारणे कतरशब्दः प्रयुक्तः ।

प्रधान इति । प्रत्ययसंज्ञा स्वविषयप्रक्लृप्तये प्रधानमपेक्षते न तु पारतन्त्र्यादप्रधान-

उ०—त्वा'दित्यनेन प्रतिपादित इत्यर्थः । उभयाकाङ्क्षया संबन्धस्य न्याय्यतरत्वादित्यभिमानः । वस्तुतस्तु 'गुपादिभ्यः सन्प्रत्ययः परो भवती'त्येवं विशिष्टस्य संज्ञिन एकवाक्यतया विधिसम्भवाद्भिन्नवाक्यत्वे मानाऽभावान्न प्रकृत्यादीनां संज्ञा । न ह्युद्भिदा यजेतेत्यादौ नामधेयसंबन्धलाभाय वाक्यभेदं मन्वते न्यायविदः । तत्रोद्भित्संज्ञाविशिष्टस्यैव यागस्य विधानात्, शब्दार्थयोरभेदाच्च नाऽन्वयाऽयोग्यता । नापि लक्षणा, अन्यथाऽसतः संज्ञाऽनुपपत्तिवदाद्युदात्तस्याऽपि विधानाऽसंभवात् 'प्रत्ययस्वरश्च तासेर्वृत्तिसन्नियोगशिष्ट' इति 'लुटः प्रथमस्ये'ति सूत्रशेषस्थभाष्यविरोधः । 'यदैव तासिः प्रवर्तते तदैवोदात्तत्वयुक्त' इति कैयटः । किञ्च संज्ञिनमुद्दिश्य संज्ञाविधाने पूर्वं बुद्धिविषयस्य संज्ञेत्यर्थस्य पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा, सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते, सतो हि कार्यिणः कार्येण भवितव्य'मित्यादि भाष्यसम्मतत्वेऽपि प्रकृते-ऽस्य सूत्रस्य शाटकं वये'त्यादिवत् संज्ञाविशिष्टविधाने बाधकाऽभावात् । अयमेव 'निमित्तिकार्य्योर्थत्वा'दिति भाष्यस्याऽर्थः । अयं भावः—निमित्तिनोऽनिर्ज्ञातत्वात्तेनैकवाक्यतया विशिष्टविधिसम्भवः । निमित्तेष्वन्वये

१ 'कतमो देवदत्तः' 'कतरो यज्ञदत्तः' पा० । २ 'स आह' पा० । ३ अयं पाठो न सार्वत्रिकः । ४ 'नाश्रीयन्ते' । ५ 'यश्च कथयति' पा० ।

किं कृतं पुनः प्राधान्यम् ? अर्थकृतम् । यथा पुनर्लोकेऽर्थकृतं प्राधान्यं, शब्दस्येदानीं किंकृतं प्राधान्यम् ? शब्दस्याऽपूर्वोपदेशः प्राधान्यम् । यस्याऽपूर्वोपदेशः स प्रधानम् । प्रकृत्युपपदोपाधयश्चोपदिष्टाः[1] । क्व ? धातूपदेशे प्रातिपदिकोपदेशे च । यद्येवं[2] निमित्तस्य निमित्तिकार्यार्थत्वादर्थोऽपि[3] प्रधाने कार्यसंप्रत्ययात्प्रकृत्युपपदोपाधीनां न भवति, विकारागमानां तु प्राप्नोति । 'हनस्त च' [३ । १ । १०८]

प्र०—मित्यर्थः । किंकृतमिति । भवतु राज्ञः प्राधान्यं तदधीनस्थितित्वादन्येषाम्, इह तु कथमिति प्रश्नः । अर्थकृतमिति । प्रयोजनकृतमित्यर्थः । यस्याऽपूर्व इति । तदर्थत्वादन्येषां तस्यैव प्राधान्यमित्यर्थः । यद्येवेति । ननु ये तावत्प्रकृतेर्विकारागमास्ते प्रकृत्यनुप्रवेशात्प्रकृतिवत्संज्ञया

उ०—तु वाक्यभेद आपततीति वाक्यभेदभिया न तैस्तस्याः सम्बन्ध इति । प्रतिपादकानामिति । अर्थप्रतिपादकत्वेन लोके सिद्धानामित्यर्थः । उपायभावेनेति । काल्पनिकप्रकृतिप्रत्ययविभागमुपायत्वेनाश्रित्याऽन्वाख्यानादित्यर्थः । तदनुगुणेति । तत्र निमित्तत्वाऽनुगुणा प्रथमा, अन्याः प्रायेण निमित्तत्वाऽनुगुणा इत्याहुः । बहुषु निर्धारणे डतरोऽनुपपन्न इत्यत आह—किं यदिति । 'प्रधाने कार्य्यसम्प्रत्यया'दित्यस्य 'निमित्तिकार्यार्थत्वा'दित्यनेन पौनरुक्त्यमाशङ्क्याह—प्रत्ययसंज्ञेति । पूर्वं प्रत्ययसंज्ञाया आकाङ्क्षामङ्गीकृत्य प्रकृत्यादीनां निरपेक्षत्वात्संज्ञाऽभाव इत्युक्तम् । इदानीन्तु प्रत्ययसंज्ञाया अपि गुणभूतेष्वाकाङ्क्षा नास्तीति प्रतिपाद्यत इति विशेष इति भावः । वाक्यभेदभिया तैस्तस्या असंबन्ध इति प्रागुक्तम् । अनेन तु तत्राऽन्वयप्रसक्त्यभाव एवोच्यत इति विशेष इति तत्त्वम् । भाष्ये—को यातीति । डतरस्य वैकल्पिकत्वात्तदप्रयोगः । उभयोः सम्प्रत्ययो भवतीति । तत्र कथयितुः सम्प्रत्ययः—तन्मूलकप्रयोगः । तथाऽत्रापि आचार्यस्तेनैव तात्पर्येण प्रयुक्तवान्, शिष्याणाञ्च तथैव बोध इति भावः । प्रयोजनकृतमिति । प्रयोजकत्वकृतम्, प्रेरणाकृतमित्यर्थः । भाष्ये—यथा पुनरित्यव्ययम्—अस्तु पुनरित्यर्थे । किं कृतमिति । प्रेरकत्वाऽभावादिति भावः । अपूर्वोपदेशमात्रेण कथं प्राधान्यमत आह—तदर्थत्वादिति । तन्निष्पादकत्वादित्यर्थः । प्रयोजकत्वादिति । प्रयुज्यत इति प्रयोजकः—प्रयोज्यः, तत्त्वान्निमित्तित्वादित्यर्थः । प्रधानत्वाच्चेति । अपूर्वोपदेशादित्यर्थ. । योग्यतासम्भवादिति । समानविभक्तिकत्वरूपयोग्यतासम्भवादित्यर्थः । नहि परत्वनिमित्तेति । तद्व्याप्येत्यर्थः । तथा हि सति व्यापकाऽभावेन व्याप्याऽभावः सिध्येदिति भावः । अपि तु प्रत्ययसंज्ञानिमित्तं परत्वमिति । इदं चिन्त्यम्, 'राजपुरुष' इत्यादौ प्रत्ययत्वाऽभावेऽपि पुरुषादिपदस्य परत्वदर्शनात् । अकचामिति । अकचः प्रत्ययत्वफलम्प्रत्ययस्थादितीत्त्वम् । परविज्ञानमिति । परश्चेति परिभाषा । प्रत्ययसंज्ञा च्चाऽस्या लिङ्गम् । प्रत्ययसंज्ञकः परो भवतीत्यर्थं इति भावः । अन्तरङ्गत्वात्स्थानीति । आन्तरतम्येनेत्यर्थः । आद्युदात्तत्वन्तु तव्यादौ चरितार्थमिति भावः । सा हीति । प्रत्ययविधानेन परत्वेन च प्रतिबद्धत्यर्थः । शकारस्येत्संज्ञार्थमिति । अत एव 'तृणह' इत्यादिनिर्देशाः सङ्गच्छन्ते । श्नमः शकारस्तु 'श्नान्नलोप' इत्यत्र विशेषणार्थं इति भावः । नन्वेवम्परविज्ञानादिति पञ्चम्यनुपपन्ना, हेतुत्वाऽभावादत आह—फलमपीति ।

१ 'निर्दिष्टाः' पा० । २ 'यद्येवं' पा० । ३ 'यद्वा' पा० ।

'त्रपुजतुनोः षुक्' [ ४ । ३ । १३८ ] इति । एतेषां ह्यपूर्वोपदेशात्प्राधान्यं, निमित्तिनश्चैवैते ।

**विकारागमेषु च परविज्ञानात् ॥ ४ ॥**

विकारागमेषु च परविज्ञानात्प्रत्ययसंज्ञा न भविष्यति । 'प्रत्ययः परो भवती'-त्युच्यते† न च विकारागमाः परे संभवन्ति ।

किं पुनः कारणं समानेऽपूर्वोपदेशे प्रत्ययः परो, विकारागमो न परे ?

**षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात् ॥ ५ ॥**

षष्ठीनिर्दिष्टं विकारागमयुक्तं[१] [ भवति ] । पञ्चमीनिर्दिष्टाच्च प्रत्ययो विधीयते ।

प्र०—न संभवन्त्यन्ते । ये तु प्रत्ययस्य ते तद्ग्रहणेन गृह्यन्त एवेति नास्त्यनिष्टप्रसङ्गः । नैतदस्ति । प्रकृतिविकारागमानां तत्सम्बन्धित्वेऽपि प्रयोजकत्वात्प्रधानत्वाच्च स्यादेव प्रत्ययसंज्ञा । प्रत्ययसम्बन्धिनामपि तदवयवत्वे सिद्धे पृथक् प्रत्ययसंज्ञा स्यादेव, योग्यतासंभवात् ।

विकारागमेष्विति । 'यः परः स प्रत्ययो, न च विकारागमाः परे । तेन ते प्रत्ययसंज्ञा न भविष्यन्ती' त्येवं न व्याख्येयम्, नहि परत्वनिमित्ता प्रत्ययसंज्ञा, अपि तु प्रत्ययसंज्ञानिमित्तं परत्वम् । तथा च परत्वाऽभावेऽपि श्मबहुजकचां प्रत्ययसंज्ञा भवति । तस्मादेवं व्याख्यायते—प्रयोजनाऽभावाद्विकारागमानां प्रत्ययसंज्ञा न भवति । तथाहि परविज्ञानं प्रत्ययसंज्ञाफलम्, तच्च तेषां न संभवति । षष्ठ्या स्थानसम्बन्धस्याऽवयवसंबन्धस्य च प्रतिपादनात् । आगमानां चाऽनुदात्तत्वेन भवितव्यमित्याद्युदात्तत्वाऽभावः । विकारा अपि येऽनच्कास्ते न स्वरभाजः, ये तु साऽच्कास्ते प्रवृत्तिकाल एवान्तरङ्गत्वात्स्थानिस्वरयुक्ताः । अङ्गसंज्ञाऽपि तन्निमित्ताऽन्यस्य न प्राप्नोति । सा हि प्रत्ययविधानपरत्वनिबद्धा । प्रयोजनसद्भावे तु श्नम आगमत्वेऽपि शकारस्येत्संज्ञार्थं प्रत्ययसंज्ञा प्रवर्तत एव । परविज्ञानादिति । 'विभाषा गुणे' इति हेतौ पञ्चमी । फलमपि प्रयोजकत्वाद्धेतुरित्युच्यते, यथा'ऽध्ययनेन वसती'ति । ततश्चायमर्थः–प्रत्ययसंज्ञायां परत्वं फलन्तच्चाऽत्र न संभवतीति प्रत्ययसंज्ञा प्रयोजनाऽभावान्न भविष्यति । किं पुनरिति । परत्वमेव भवतु प्रत्ययसंज्ञाप्रयोजनमिति भावः ।

उ०—भाष्ये 'न च विकारागमाः परे' इत्येव पाठः, तदुत्तरं 'सम्भवन्ती'त्यपाठ इत्याशयः । अत्राहुः–'प्रत्यय' इत्यादीनां त्रयाणामप्यधिकारत्वेन प्रतिसूत्रमुपस्थितावेकवाक्यतया युगपदेव त्रयाणां विधानस्य न्याय्यत्वेन नाऽन्योऽन्यं प्रत्यन्योऽन्यस्योद्देश्यता न्याय्येति कथं प्रत्ययसंज्ञायाः परत्वं फलं, कथं वाऽऽद्युदात्तत्वमिति । अतएव 'लुटः प्रथमस्ये'त्यादिसूत्रस्थभाष्याऽविरोधः । तस्मादयमर्थः—''स्थानषष्ठ्यानिर्देशादेशाकाङ्क्षाया विकारादीनामभावेन 'पर' इत्यस्याऽसंबन्धे सन्नियोगशिष्टन्यायेन 'प्रत्यय' इत्यादीनामप्यसंबन्ध'' इति । 'परविज्ञाना'दित्यस्य तत्सन्नियोगशिष्टत्वादित्यर्थः । क्वचित्तु 'तृणह इ'मित्यादिनिर्देशात्'न यासयो'रिति ज्ञापकाच्च सन्नियोगशिष्टन्यायाऽनित्यत्वेन प्रवर्तत एव संज्ञेति दिक् । एतदेव ध्वनयन् विकारागमेषु परश्चेत्यस्याऽप्रवृत्तिं प्रश्नमुखेनोपपादयति भाष्ये—किम्पुनरिति ।

१ इदं क्वचिन्न । † परश्च ३ । १ । २ २ 'न विकारागमाः परे' पा० ।

## प्रत्ययविधानानुपपत्तिस्तु ॥ ६ ॥

प्रत्ययविधिस्तु नोपपद्यते । क्व ? यत्र विकारागमा विधीयन्ते[1] । 'हनस्त च' 'त्रपुजतुनोः षु'गिति । किं पुनः कारणं न सिध्यति ? विकारागमयुक्तत्वादपञ्चमी-निर्दिष्टत्वाच्च ।

## तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम्[2] ॥ ७ ॥

तस्मात्तत्र पञ्चमीनिर्देशः कर्तव्यः । न कर्त्तव्यः । इह तावद्धनस्त चेति 'धातोः' [ ३ । १ । ९१ ] इति वर्तते । इह 'त्रपुजतुनोः षु'गिति 'प्रातिपदिका'दिति† वर्तते । यद्येवं 'हनस्त च—धातोः क्यब्भवती'ति धातुमात्रात्क्यप्प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'न धातुमात्रात्क्यब्भवती'ति यदयमेतिस्तुशास्वृदृजुषः क्यप् [ ३ । १ । १०९ ] इति परिगणनं करोति । अथवा हन्तिमेवात्र[3] धातुग्रहणेनाभिसंभन्त्स्यामः[4]—'हन स्तो[5] भवति, धातोः क्यब्भवती'ति । कस्मात् ? हन्तेरिति ।

---

प्र०—षष्ठीनिर्दिष्टस्येति । षष्ठ्या च पूर्वोदितस्य संबन्धस्य प्रतिपादनाद्विरोधात्परत्वाऽभाव इत्यर्थः । पञ्चमीनिर्दिष्टाच्चेति । पञ्चमीनिर्देशे पर्यायेण पूर्वपरत्वयोः प्राप्तयोः 'परश्चे' त्यनेन परत्वं नियम्यत इति नास्ति कश्चिद्विरोध इत्यर्थः ।

प्रत्ययेति । षष्ठीनिर्देशेष्विति भावः । क्वेति । 'गापोष्ट' गित्यादावानन्तर्यसम्बन्धे षष्ठीविज्ञानादुपपद्यत एव प्रत्ययविधिरिति प्रश्नः । हनस्त चेति । श्रुतयोरेव स्थान्यादेशयोरागमा-गमिनोश्च संबन्धप्रतिपादने वाक्यस्योपयोगाद्वाक्यान्तराऽभावाच्च प्रत्ययविधिर्न प्रकल्पत इत्यर्थः । इह तावदिति । प्रकृतिप्रत्ययाऽनुवृत्तिसामर्थ्यात्प्रत्ययोऽपि विधास्यते, विकारागमा अपीत्यर्थः । यद्येवमिति । हन्तेरादेशविधावुपयोगाद्विविभक्तित्वाच्च धातोरविशेषितत्वादिति भावः । अथवेति । पूर्वं लिङ्गेन धातुश्रुतिर्हन्तावुपसंहृता, इदानीं वाक्यभेदेन सन्निधानाद्धन्तिस्तकारसम्बन्धं च प्रतिपद्यते धातुञ्च विशिनष्टीत्युच्यते ।

---

उ०—पूर्वोदितस्येति । स्थानसंबन्धस्याऽवयवसंबन्धस्य चेत्यर्थः । आनन्तर्यसंबन्धे इति । 'धातो'रिति पञ्चमीनिर्देशेन परविधानमुपपद्यत इति भावः । ननु 'धातो'रित्यनुवृत्त्या क्यपोऽनुवृत्त्या च वाक्यभेदेन प्रत्ययस्याऽपि विधानं स्यादत आह—श्रुतयोरेवेति । नन्वनुवृत्तप्रकृतेरपि विभक्तिविपरिणामेन षष्ठ्यन्तविशे-षणतया कथं प्रत्ययविधिरत आह—प्रकृतिप्रत्ययेति । ननु हन्तिना धातुविशेषणात्कथं धातुमात्राप्रसङ्गोऽत आह—हन्तेरिति । भाष्ये—यः स्वमर्थमिति । प्रत्यायकत्वञ्च शब्दस्य स्वार्थविषयमेव गृह्यते, योग्यत्वा-दित्यर्थः । पूर्वोपात्तेति । यौगिकार्थस्य शब्दस्य संज्ञात्वेन विनियोगकाले शब्दस्यैव प्रवृत्तिनिमित्तत्वाऽङ्गी-

---

१ 'शिष्यन्ते' पा० । २ 'तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् । स तर्हि पञ्चमी निर्देशः कर्त्तव्य' इति तु गौडाः पठन्ति । † ४ । १ । १ ३ 'हन्तिरेवाऽत्र'पा० । ४ 'सम्मन्त्स्यते' पा० । ५ 'हन्तेस्तो' पा० ।

## अर्थाश्रयत्वाद्वा ॥ ८ ॥

अथवा अर्थाश्रयः प्रत्ययविधिः । यस्तमर्थं[1] संप्रत्याययति[2] स प्रत्ययः ।

किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? 'प्रत्यय' इति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—'प्रत्याययतीति प्रत्ययः' । यदि प्रत्याययतीति प्रत्ययोऽविकादीनां† प्रत्ययसंज्ञा न प्राप्नोति, नहि ते किंचित्प्रत्याययन्ति । एवं तर्हि प्रत्याय्यत इति प्रत्ययः । एवमपि सनादीनां‡ न प्राप्नोति । एवं तर्ह्युभयसाधनोऽयं, कर्तृसाधनः कर्मसाधनश्च ।

एवमपि कुत एतत्समानेऽपूर्वोपदेशे त्रापुषं जातुषमित्यत्राऽकारस्तमर्थं संप्रत्या-

प्र०—अर्थाश्रयत्वाद्वेति । अन्वर्थसंज्ञाश्रयेणाऽर्थवतः संज्ञाविधानाद्विकारागमानाञ्चाऽनर्थकत्वात्प्रत्ययसंज्ञा न भवतीत्यर्थः । किं वक्तव्यमिति । पूर्वोपात्ताऽर्थपरित्यागेन स्वरूपेणैव संज्ञात्वं संज्ञाशब्दा अनुभवन्तीति प्रत्यायकः प्रत्यय इत्येवं वक्तव्यमिति मत्वा प्रश्नः । महतीति । महत्त्वात्प्रत्ययशब्दस्याऽऽवृत्तिरनुमीयते । तेन यः प्रत्यायकः स प्रत्ययः । महत्त्वसूचितं प्रकारान्तरमपि यद्भवति तत्सर्वादिसूत्रे व्याख्यातं तत एवावधारणीयम् । नहि त इति । अन्वयव्यतिरेकाभ्यां कादीनां वाच्योऽर्थो नावधार्यते । तदभावेऽपि केवलाया एव प्रकृतेस्तदर्थाऽवगमात् । नाऽपि तरबादिवत्कश्चिद्द्योत्योऽर्थ इति भावः । यदप्युच्यते—'अनिर्दिष्टाऽर्थाः प्रत्ययाः स्वार्थे भवन्तीति प्रकृत्यर्थ एव तेषामर्थ' इति । तदपि कल्पनामात्रम् । सत्यर्थवत्त्वे प्रत्ययसंज्ञया भाव्यमित्यभिहिते तदभावे स्वार्थाऽवगमादर्थवत्त्वं कादीनां नोपपद्यत इत्युक्तस्य दुरुत्तरत्वात् । प्रत्याय्यत इति । अभिधेयधर्मस्याऽभिधाने उपचारादेवमुक्तम् । अयमत्रार्थः—यस्यार्थः प्रकृत्या प्रत्याय्यते स प्रत्याय्यमानार्थत्वात्प्रत्याय्यमानः स्वार्थिकः प्रत्ययसंज्ञो भवति । एवमपीति । नहीच्छादावर्थे विधीयमानाः सनादयः प्रकृत्या प्रत्याय्यमानाऽर्था इति भावः । यो गुपादिसन् स प्रकृत्या प्रत्याय्यमानाऽर्थ इतीच्छासनेवात्राभिप्रेतः । । एवन्तर्हीति । एक एव शब्दोऽनेकशक्तियोगादङ्गीकृतप्रवृत्तिनिमित्तद्वयोऽधिक्रियते । तत्र यथासंभवं निमित्ताश्रयणेन सनादीनां कादीनां च प्रत्ययसंज्ञा प्रवर्त्तते । एयन्तस्य निपातनादचि णिलुक् ।

एवमपीति । आगमस्याऽर्थवत्तां निराकर्तुमुपन्यासः । अन्यत्रापीति । प्रत्ययस्यागमम-

उ०—कारेण पूर्वोपात्तयौगिकार्थत्यागादित्यर्थः । संज्ञानां कृत्रिमत्वात्तस्य पूर्वोपात्तत्वं बोध्यम् । प्रकारान्तरम्—अन्यत्र शब्दस्य प्रवृत्तिनिमित्तत्वेऽपि महासंज्ञाविषये तादृशार्थवच्छब्दस्यैव तत्त्वमित्यादि । दुरुत्तरत्वादिति । अन्वयव्यतिरेकाभ्यां वाच्यद्योत्याऽर्थाऽभावनिश्चयेन तेषामर्थवत्त्वाऽभावे शङ्किते 'प्रकृत्यर्थं एवाऽस्याऽप्यर्थ' इत्यसदुत्तरमित्यर्थः । स्वार्थे इत्यस्य च—अर्थराहित्ये एव तात्पर्यमिति भावः । कादीनां केनापि प्रत्याय्य-

[1] 'यः स्वमर्थं' पा० । [2] 'प्रत्यायति' पा० । † अवेः कः ५ । ४ । २८ स्वार्थेऽयं कः प्रत्ययः । ‡ धातोः कर्मणः समानकर्तृकादिच्छायां वा ३ । १ । ७

ययति न पुनः षकार इति ? अन्यत्राऽप्यकारेण तस्याऽर्थस्य वचनान्मन्यामहे— अकारस्तमर्थं संप्रत्याययति न पुनः षकार इति । क्वाऽन्यत्र ? 'बिल्वादिभ्योऽण्' [ ४ । ३ । १३६ ] बैल्वः ॥ १ ॥

## परश्च ॥ ३ । १ । २ ॥

किमर्थमिदमुच्यते ? परो यथा स्यात्पूर्वो मा भूदिति । नैतदस्ति प्रयोजनम् । यमिच्छति पूर्वमाह तम् । 'विभाषा सुपो बहुच्पुरस्तात्तु' [ ५ । ३ । ६८ ] इति ।

प्र०—न्तरेणाऽपि प्रयोगादर्थवत्ताऽवगतिः । आगमस्य तु प्रत्ययमन्तरेण प्रयोगाऽभावादन्वयव्यतिरेकाभ्यामर्थवत्त्वं नाऽवधार्यत इत्यर्थः ॥ १ ॥

परश्च । किमर्थमिति । पञ्चमीनिर्देशे परशब्दाध्याहारेण पञ्चमीविधानात् परत्वं सिद्धम् । षष्ठीनिर्देशेऽपि 'गापोष्ट'गित्यादावानन्तर्यसंबन्धे षष्ठीविज्ञानादिति भावः । पर इति । पूर्वशब्दाध्याहारेणाऽपि पचञ्मीविधानात्पूर्वत्वमपि स्यादिति नियमार्थं परवचनम् । तथाऽऽनन्तर्यस्य पूर्वत्वेऽपि भावात्षष्ठीनिर्देशेऽपि नियमार्थमित्यर्थः । यमिच्छतीति । 'बहुजेव पुरस्ताद्भवति नाऽन्यः प्रत्यय' इति बहुचि पूर्वदेशस्य नियमत्वादन्यः प्रत्ययः पर एव भविष्यतीत्यर्थः । मध्ये तर्हीति । षष्ठीनिर्दिष्टेषु

उ०—मानत्वाभावात् कर्मव्युत्पत्तावपि कथं तेषां प्रत्ययत्वम् । अर्थस्यैव तु तत्प्राप्नोतीत्यत आह—अभिधेयेति । अभिधानं—शब्दः । एकस्य शब्दस्य कथमुभयसाधनत्वमित्यत आह—एक एवेति । निपातनादिति । वस्तुतोऽन्तर्भावितण्यर्थोऽप्रत्यय इति वक्तुमुचितम् । प्रत्ययस्येति । अन्वयव्यतिरेकाभ्यामप्रत्ययस्यैवार्थवत्त्वं नाऽऽगमानामिति भावः । वध-नभ-विरङ्गाद्यादेशानामपि न स्वीयाऽर्थप्रत्यायकता । किन्तु स्थान्यर्थप्रत्यायकतैव । अत एव कोशादौ तेषां पृथगर्थोऽनिर्देशः । अत एव च नभ्यशब्दादपि नाभिशब्दप्रकारकस्तदर्थबोधो 'नाभिहितः' इति, न तु कदाचिदपि 'नभहितः' इति । येऽपि शास्त्राऽनभिज्ञास्तेऽपि वृद्धव्यवहारात्तथैव प्रतियन्ति । एतदर्थमेव भाष्ये 'स्वमर्थ' मित्यत्र 'स्व'मितिपदोपादानम् । स्थानिनो नष्टत्वादन्येन प्रत्याय्यमानार्थकोऽपि नेति दिक् ॥ १ ॥

परश्च । पञ्चमीति । परशब्दाऽध्याहार एव व्याख्यास्यते न तु पूर्वशब्दाध्याहारः । 'गापोष्ट'गित्यादावपि षष्ठ्या आनन्तर्यार्थत्वेन 'धातो'रिति पञ्चम्या पूर्ववदेव परशब्दाध्याहार इति भावः । परशब्दाध्याहारेणेति । तदर्थघटितवाक्यार्थेऽस्यैकदेशस्य वृत्तिस्वीकारेणेत्यर्थः । एवं 'पूर्वशब्दाध्याहारेण'स्यपि व्याख्येयम् । पूर्वशब्देति । व्याख्यानं दुर्ज्ञेयमिति भावः । आनन्तर्यस्येति । 'हलोऽनन्तरा' इत्यादौ तस्याऽव्यवहितपर्यायत्वादित्यर्थः । प्रत्ययनियमेऽन्येषाम्परदेशनियमस्याऽलाभादभिमतं देशनियमं दर्शयति—बहुजेवेति । पञ्चमीनिर्देशे मध्यशब्दाध्याहाराऽसम्भवादाह—षष्ठीति । 'व्रीहिशाल्योर्ढ'गित्यादौ । 'अव्ययसर्वनाम्ना'मित्यादौ 'प्राक्टे'रित्युपादानं विना टेः प्राग्विधेरसिद्धेः कथं नियमोऽत आह—अव्ययेति । मध्यश्च तत्र टिप्राग्रूप एव ग्राह्यो, व्याख्यानादित्यभिमानः । केचित्तु प्राक्टे'रित्यावश्यं नियमो व्याख्येय इत्याहुः । 'प्राक्टे'रित्युपादानात्कथं मध्यमात्राऽपेक्षो नियमोऽत आह—मध्यमात्रेति । मध्यान्तरे इति । व्रीहिशब्दे

१ इदं क्वचिन्न ।

मध्ये तर्हि मा भूदिति। मध्येऽपि यमिच्छत्याह तम्—'अव्ययसर्वनाम्नामकच्प्राक्टेः' [ ५ । ३ । ७१ ] इति । य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेण वचनं पर एव भविष्यतीति नाऽर्थः परवचनेन ।

एवमपि येषामेव प्रत्ययानां देशो नियम्यते त एव नियतदेशाः स्युर्य इदानीमनियतदेशः स कदाचित्पूर्वः, कदाचित्परः, कदाचिन्मध्ये स्यात् । तद्यथा—मातुर्वत्सः कदाचिदग्रतः, कदाचित्पृष्ठतः, कदाचित्पार्श्वतो भवति । पर एव यथा स्यादित्येवमर्थं परवचनम् ।

**परवचनमनर्थकं, पञ्चमीनिर्दिष्टाद्धि परस्य ॥ १ ॥**

परग्रहणमनर्थकम् । किं कारणम् ? पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते† ।

प्र०—मध्यशब्दाध्याहारेणापि षष्ठीविधानं स्यादिति भावः । मध्येऽपीति । 'अव्ययसर्वनाम्ना'मिति मध्यशब्दाध्याहारेण षष्ठीविधानादकच् प्राक्टेः सिद्ध एवेति 'प्राक्टे'रिति नियमार्थम्—'अकजेव प्रकृतिमध्ये भवति नाऽन्य' इति । मध्यमात्रपरिग्रहणे च नियमो विज्ञायते न त्वकजेव प्राक्टेरित्येवं मध्यविशेषाश्रयेण । अन्यथा मध्याऽन्तरे प्रत्ययान्तरं स्यात्, मध्यविशेषे तु यन्मध्यसामान्यमस्ति तदाश्रयेण नियमे विज्ञायमाने नाऽस्ति दोषः ।

एवमपीति । बहुजकचोर्विधेयतया प्राधान्यात्तत्रैव देशविशेषे नियम्येयाताम्,—'पुरस्तादेव बहुच्' 'प्राक् टेरेवाऽक'जित्येवमिति भावः । देशो नियम्यते इति । प्रत्ययनियमेऽप्यनियत-

उ०—रेफकारयोरीकारहकारयोर्मध्ये च स्यादिति भावः । सामान्यनियमाश्रयणे तदुपस्थितिबीजमाह—यन्मध्यसामान्यमिति । नन्वत्र देशनियमे बहुजादीनां नियतदेशत्वं न स्यात्, किञ्च देशनियमाऽसम्भवः, प्राधान्येन प्रत्ययनियमस्यैव युक्तत्वादित्यभिप्रेत्य भाष्ये—एवमपीति । तदाशयमाह—बहुजकचोरिति । नन्वेवं 'देशो नियम्यत' इति भाष्यमनुपपन्नमत आह—प्रत्ययनियमेपीति । ननु देशनियमेऽप्रधानसङ्कोचः, प्रत्ययनियमे प्रधानसङ्कोचः तत्र प्रधानसङ्कोचाऽपेक्षयाऽप्रधानसङ्कोचस्य न्याय्यत्वेन देशनियम एवोचित इति चेन्न, 'आगन्तूनामन्ते निवेश' इति न्यायेन तदग्र एवैवकारनिवेशात् । 'कर्मणि द्वितीये'त्यादौ सूत्रकारस्य प्रधानसङ्कोचकप्रत्ययनियमे एव तात्पर्याच्च । किञ्च लोकेऽपि प्रधानस्य राजादेरेव स्थाननियमादिर्दृश्यते 'राज्ञाऽत्रैव स्थेय'मित्यादिप्रकारेणेति दिक् । भाष्ये—स कदाचित्पूर्वः कदाचित्पर इति । प्रतिलक्ष्यं लक्षणभेदाद्विनिगमनाविरहाद्वा । तस्मादिति । ते प्राग्धातो'रित्यादौ उत्तरांऽशविकलाया इव, 'परश्चे'ति कृतेऽपि व्यवहितप्रयोगवारणाय प्रकृते एवोत्तरांशविकलाया इव च सूत्राऽमात्रे षष्ठ्यंशविकलायाः प्रवृत्तिरिति गूढोऽभिप्रायः ।

उक्तमभिप्रायमजानानः शङ्कते भाष्ये—सतस्तत्रेति । कार्यशब्ददर्शनाश्रयेण वैषम्यमित्याह—यत्रेति । 'उत्तरस्ये'ति षष्ठीनिर्देशादिति भावः । स्वाभाविके परत्वे किं तस्मादित्युत्तरस्येत्यनेनेत्यत आह—नित्या इति । नन्वेकस्याः षष्ठ्या अर्थद्वयपरत्वं कथमित्यत आह—प्रदेशेष्विति । तत्र तत्रोपस्थितं भिन्नं

† तस्मादित्युत्तरस्य १ । १ । ६७

तद्यथा 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' [ ६ । ३ । ९७ ] इति । विषम उपन्यासः । सतस्तत्र परस्य कार्यमुच्यते, इहेदानीं कस्य सतः परस्य कार्यं भवितुमर्हति । इहापि सत एव । कथम् ? परत्वं स्वाभाविकम् । अथ वाचनिके परत्वे सत्यर्थः स्यात्परग्रहणेन । वाचनिके च नाऽर्थः । एतद्धि तत्परस्य कार्यं यदसौ परतः स्यात् । अथवा यदस्य परस्य सतः संज्ञा स्यात् ।

यत्र तर्हि पञ्चमी नास्ति तदर्थमयं योगो वक्तव्यः । क्व च पञ्चमी नास्ति ? यत्र विकारागमाः शिष्यन्ते । क्व च विकारागमाः शिष्यन्ते ? 'हनस्त च' [३।१।१०८]

प्र०—देशप्रसङ्गे विशिष्टदेशप्रतिपादनमेव 'देशनियम' इत्यभिप्रेत्यैतदुक्तम् । मातुर्वत्स इति । अनेन प्रकृतेः कार्यशब्ददर्शने मातृस्थानीयत्वमुच्यते ।

परवचनमिति । 'तस्मादित्युत्तरस्ये'त्यनेनैव नियमस्य सिद्धत्वादिति भावः । सतस्तत्रेति । यत्र विद्यमानमेव कार्यान्तरविधानार्थं कार्यित्वेन निर्दिश्यते तत्र 'तस्मा'दिति परिभाषा नियमार्थाऽवतिष्ठते । अत्र तु सनादयोऽपूर्वा एवोत्पद्यन्त इति न तस्याः परिभाषायाः प्रवृत्तिरिति भावः । कस्य सत इति । असन्नेव सनादिर्भण्यत इति भावः । इहापीति । नित्याः शब्दाः प्रयोगस्थास्तत्र स्वभावत एव गुपादिभ्यः परस्य सनादेः साधुत्वमात्रं प्रतिपाद्यत इत्यर्थः । एतद्धीति । 'तस्मादित्युत्तरस्ये'त्येतस्य प्रदेशेष्वर्थाऽभिव्यक्तिर्भवति । ततश्च यत्र सदेव कार्यित्वेनोपादीयते तत्रोत्तरस्य कार्यंभवतीति कार्यापेक्षा संबन्धे षष्ठी । यत्र त्वसत एवोत्पत्तिः क्रियते तत्रोत्तरस्य भावो भवतीति भावापेक्षया कर्तृषष्ठी विज्ञायत इत्यर्थः ।

परस्य कार्यमिति । उत्पत्तिरेव कार्यमित्यर्थः । नन्वेवं सति सन्नित्यादिप्रथमानिर्देशः षष्ठीप्रकल्पने सति निरर्थकोऽकृतार्थत्वात्स्यात् । नैष दोषः । निर्देशमात्रार्था प्रथमा स्यात् । उत्तरकालन्तु षष्ठी प्रकल्पते । यत्त्वन्यत्रोच्यते—'न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका' इति,

उ०—भिन्नमेवेत्यर्थः । उत्तरस्य भावो भवतीति भाष्ये 'परतः स्या'दित्यनेन सूचितम् । 'प्रत्ययः परो भवती'त्यनेनाऽस्य समानार्थत्वादिति भावः । निर्देशेति । लघुनिर्देशेत्यर्थः । ननु 'प्रत्ययस्याऽनियतदेशत्वे पूर्वमपि प्रत्ययप्रयोगे साधुत्वं स्यादत आह—अयमर्थं इति । एवञ्च परस्य सतः प्रत्ययसंज्ञाविधानसामर्थ्यात्परशब्दाऽध्याहारे आवश्यकेऽन्याध्याहारे मानाऽभावान्नाऽन्यदेशस्थस्य साधुत्वमिति भावः । अनियतदेशा भवन्त्विति अभ्युपगमवादेनोक्तम् । भवन्त्वित्यस्य प्रसज्यतामिति वाऽर्थः । परश्चेति सूत्राऽकरणलाघवाऽनुरोधात्—प्रत्ययसंज्ञा सम्भवत्यप्येकवाक्यत्वे वाक्यभेदेन विधेयेति तात्पर्यम् । तदेवेति । धातोः प्रातिपदिकादित्याद्यनुवृत्तेस्ततः पर एव भविष्यति । ततः परस्यैव वा संज्ञेत्यादीत्यर्थः ।

पूर्वम्प्रयोजनाऽनुक्तेर्वाशब्दं भाष्यकृत्तदर्थे व्याचष्टे इत्याह—वेति । शास्त्रेण दृष्टानामेव लोपविधानात्कथमत्यन्ताऽपरदृष्टेत्यत आह—परेणेति । ननु परत्रोत्पन्नस्यैव प्रत्ययत्वेनाऽपृक्तत्वप्रयुक्तलोप इति पूर्वभूतानां न लोपो नापि साधुत्वमत आह—तेषामिति । ततश्च परस्य सतः प्रत्ययसंज्ञेति नियमाऽप्राप्त्या पूर्वोत्पन्नस्यापि लोपादि सिध्यतीत्यर्थः । अपृक्तसंज्ञा कदाचित्प्रत्ययत्ववतोऽपीति भावः । ननु पूर्वभूतेति । तथा चा'ऽग्निची'त्यपि कदाचित्स्यादिति भावः । न हि तेष्विति । एवञ्चोत्तरस्येत्यत्राऽसंबन्ध इति भावः ।

'त्रपुजतुनोः षुक्' [ ४ । ३ । १३८ ] इति ।

**विकारागमेषु चोक्तम् ॥ २ ॥**

किमुक्तम् ? 'प्रत्ययविधानानुपपत्तिस्तु, तस्मात्तत्र पञ्चमीनिर्देशात्सिद्ध'मिति* ॥

**अत्यन्ताऽपरदृष्टानां वा परभूतलोपार्थम् ॥ ३ ॥**

अत्यन्तापरदृष्टानां तर्हि परभूतलोपार्थं परग्रहणं कर्तव्यम् । य एतेऽत्यन्तापरदृष्टाः क्विबादयो लुप्यन्ते तेषां परभूतानां लोपो यथा स्यादपरभूतानां मा भूत् । किं पुनरत्यन्ताऽपरदृष्टानां परभूतलोपवचने प्रयोजनम् ? किति ङितीति कार्याणि यथा स्युरिति ।

एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'अत्यन्ताऽपरदृष्टाः परभूता लुप्यन्त' इति, यदयं तेषु कादीननुबन्धानासजति । कथं कृत्वा ज्ञापकम् ?

प्र०—तदस्मिन् सूत्रे स्थित इति द्रष्टव्यम् । अथवेति । अयमर्थः—उत्पत्तिः सनादेरनियतदेशा भवतु । पश्चात्तु सत एव परस्य यत्कृत्कृत्यप्रत्ययादिसञ्ज्ञाशास्त्रकार्यं विधीयते तत्राऽन्यदेशस्य । यथोद्देशस्य च शास्त्रीयं कार्यं तद्देशस्यैव साधुत्वात् प्रयोगो भविष्यतीत्यर्थः ।

विकारागमेष्विति । तदेवेहाऽप्यनुगन्तव्यमित्यर्थः । 'गापोष्ट'गित्यादौ 'धातो'रित्यधिकाराद्धातोः परष्टग्भवति गापोरुत्वनन्तर इति व्याख्येयम् ।

अत्यन्तापरदृष्टानां वेति । वाशब्दस्तद्यर्थे । परेण—प्रधानेन प्रमाणेन प्रत्यक्षेण न क्वचिद्दृष्टा ये क्विबादयस्तेषां नित्यशब्ददर्शने कार्यदर्शने वा सत्ताया अभावा'त्तस्मादित्युत्तरस्ये'त्यस्योपस्थानाऽभावादनियतदेशो लोपः स्यादिति परभूतलोपार्थमेतद्वचनम् । अस्मिन्हि सति क्विबादयः परभूता लुप्यन्त इति बुद्धिरुपजायते । तत्राऽग्निचिदित्यादौ प्रत्ययलक्षणेन परभूतप्रत्ययाश्रयास्तुगादयः सिद्ध्यन्ति न तु पूर्वभूतक्विबादिलोप इति भावः । ननु कार्यदर्शने उत्तरस्य भाव इत्येवं व्याख्याततत्वात्परभूताः क्विबादयो भविष्यन्ति । नैतदस्ति । नहि तेषु भावबुद्धिरस्ति, लोपविधानेनाऽभावबुद्धेरुत्पादात् । स्वरूपलाभो हि भावः, नैते कदाचित्स्वरूपं लभन्ते, शशविषाणतुल्यत्वात् । अत एवा'ऽत्यन्ताऽपरदृष्टाना'मित्युक्तम् । केवलं प्रत्ययलोपवचनेन कार्यमात्रं

उ०—परश्चेत्यस्य करणे तु तत्सामर्थ्यात्परत्वबुद्धिविशिष्टो बौद्धः क्विबित्यर्थं इति तात्पर्यम् । नन्वत्यन्ताऽसतामुत्पत्तिर्लोपो वा किमिति विधीयते इत्यत आह—केवलमिति । प्रसक्ताऽदर्शनस्यैव लोपत्वेन प्रसक्तत्वबुद्धये उत्पत्तिबोधनमिति भावः ।

ङित्कार्य-एवौ । परभूतेति । 'किति ङिति' 'पिति कृती'त्यादीनां परसप्तमीत्वादिति भावः । यदेति । यद्विषये इत्यर्थः । एकविषये आवृत्त्या नानादेशविधाने मानाऽभावात् । युगपत्तु दिग्वाचकद्वयेनाऽन्वयाऽसम्भवः । 'एवं पक्षे' इत्यस्यापि विषयविशेष इत्यर्थः । अन्यथाऽसङ्गतिः स्पष्टैव । अतएव 'स्पृश'

* ३ । १ । १ । वा० ६—७

अनुबन्धासञ्जन एतत्प्रयोजनं—'क्ङिति णितीति कार्याणि यथा स्यु'रिति । यदि चात्राऽत्यन्ताऽपरदृष्टाः परभूता लुप्यन्ते ततोऽनुबन्धासञ्जनमर्थवद्भवति ।

**प्रयोगनियमार्थं वा ॥ ४ ॥**

प्रयोगनियमार्थं तर्हि परग्रहणं कर्तव्यम् । परभूतानां प्रयोगो यथा स्यादपरभूतानां मा भूदिति ॥ अस्ति पुनः किंचिदनिष्टं दृश्यते यदर्थो नियमः स्यात् । अस्तीत्याह ।

**प्रकृतेरर्थाऽभिधानेऽप्रत्ययदर्शनात्[1] ॥ ५ ॥**

प्रकृतिरर्थाभिधानेऽप्रत्ययिका दृश्यते । क्व स देवदत्तः क्व स यज्ञदत्तो बभ्रु-

---

प्र०—तेषामत्यन्ताऽसत्त्वेऽपि विधीयते । यदयमिति । यदि पूर्वभूता लुप्येरंस्तदाऽनुबन्धासङ्गोऽनर्थकः स्यात्, सर्वस्यानुबन्धकार्यस्यपरभूतप्रत्ययाश्रयत्वात् । नन्वनियतदेशत्वेऽपि यदा परभूतलोपस्तदानुबन्धासङ्गस्य चरितार्थत्वात्कथं लिङ्गत्वमिति केचिदाहुः । तदयुक्तम् । एवं पक्षेऽनुबन्धासङ्गस्यानर्थक्यमभ्युपगतं स्यात् । 'स्पृशोऽनुदके' इत्यादौ च सकृत्पञ्चमी श्रुता, सा किं पूर्वशब्दाध्याहारेण भवत्यथ परशब्दाध्याहारेणेति सन्देहे पूर्वशब्दाध्याहारेण पञ्चम्यां सत्यामानर्थक्यमेवानुबन्धासङ्गस्येति कथं परभूतलोपेऽनुबन्धासङ्गो न लिङ्गं स्यादिति भाष्यविद आहुः।

प्रयोगनियमार्थं वेति । पूर्वं प्रयोजनं स्थितमिति वार्त्तिककारेण विकल्पाऽर्थो वाशब्दः पठितः । भाष्यकारेण तु लिङ्गेन पूर्वप्रयोजनस्य निराकरणात्तह्यर्थो व्याख्यातः । क्व स देवदत्त इति । देवदत्तादयस्तदपत्येषु वर्तमाना दृश्यन्ते तेषामनेन नियमेनाऽसाधुत्वं प्रतिपाद्यते 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः प्रयोक्तव्य' इति । ननु 'सोऽय'मित्यभिसंबन्धादभेदोपचारादपत्ये प्रयोगात्कथमसाधुत्वम् । नैतदस्ति । भृत्यादेरपि साहचर्यादिनिमित्ताऽभेदाध्या-

---

उ०—इत्यग्रिमग्रन्थसङ्गतिः । प्रकारान्तरेण व्याख्याने तदसङ्गतिः । विषयविशेषमेवाह—स्पृश इति । अत्रैकस्य स्पृश एव लक्ष्यत्वान्न लक्ष्यभेदो नापि लक्षणावृत्तिः । एवञ्च क्ङित्त्वसामर्थ्येनोत्तरस्य बौद्धो भावो भवतीत्यर्थो वक्तुं शक्यः परग्रहणाऽभावेऽपीत्याशयः ।

भाष्ये—अपरभूतानामिति । न परभूता अपरभूता इति, न विद्यन्ते परभूता येषामिति चाऽर्थः । तेन केवलप्रत्ययानां केवलप्रकृतीनाञ्चेत्यर्थः । तदेतदुक्तम्—अप्रत्ययिकेत्यादिना भाष्ये । प्रकृतिरर्थाऽभिधाने कर्तव्येऽप्रत्ययिकाऽपि प्रयुज्यमाना दृश्यत इत्यर्थः । तथा च लोके दृश्यमानानामसाधुत्वप्रतिपादनाय 'परश्चे'ति सूत्रमिति भावः । भाष्ये—यो बभ्रुर्मण्डुलमकः स देवदत्तः क्वेत्यर्थः । देवदत्तस्तु नोदाहरणम्, अन्यथा 'बाभ्रव्यादिषु प्रयोक्तव्येषु बभ्रुरित्यादि प्रयुज्यते' इति कथनवत् 'दैवदत्तिरिति प्रयोक्तव्ये देवदत्त इति' इत्यपि भाष्ये वक्तव्यं स्यात् । क्वचित्तथा पाठं दृष्ट्वा व्याचष्टे—देवदत्तादय इति । 'बभ्रु'रित्यादौ प्रकृतिसुप्रत्यययोर्द्वयोरपि प्रयोगात्कस्याऽसाधुत्वमुच्यते इत्यत आह—तदपत्ये इति । नन्वभेदोपचाररूपलक्षणया प्रयोगे साधुत्वनिश्चयात्कथमस्याऽसाधुत्वमिति शङ्कते—नन्विति । नाऽयमभेदोपचारेण प्रयोगः, भृत्यादेरपि प्रतिपत्त्यापत्तेरित्युत्तराशयः । अभेदोपचारं विनोपगुसम्बन्ध्यपत्यमित्यर्थप्रतिपिपादयिषया प्रयुक्ता

---

[1] 'प्रत्ययाऽदर्श' पा० ।

र्मण्डुर्लमक इति । वाभ्रव्यो माण्डव्यो† लामकायनः‡ इति प्रयोक्तव्ये बभ्रुर्मण्डुर्लमक इति प्रयुज्यते ।

**द्व्यसजादीनां च केवलदृष्टत्वात् ॥ ६ ॥**

द्व्यसजादीनां च केवलानां प्रयोगो दृश्यते । किमस्य द्व्यसम्, किमस्य मात्रम्, काऽद्य तिथीति ? द्व्यसादयो वै वृत्तिजसदृशा अवृत्तिजा यथा बहुस्तथा* ।

**वावचने चानुत्पत्त्यर्थम् ॥ ७ ॥**

वावचने चानुत्पत्त्यर्थं परग्रहणं कर्तव्यम् । वावचनेनाऽनुत्पत्तिरपि यथा स्यात् ।

प्र०—रोपदर्शनादपत्यार्थो नियमेन न प्रतीयेत । तदुक्तं हरिणा—

'सोयमित्यभिसंबन्धात्तद्धितेन विना यदि ।
बभ्र्वादयः प्रयुज्येरन्नाऽपत्ये नियमो भवे'दिति ॥

तस्मादभेदोपचाराद्विनाऽपत्यविवक्षायां 'गर्गा' इति बहुवचनान्तवदेकवचनान्ता बभ्र्वादयो मा प्रयुज्ञतेति नियमार्थं वचनम् । क स देवदत्त इत्यत्र केचिदाहुः—'क स इति' । यथा सुपो लुग्लोपयोः कृतयोः केवला प्रकृतिः प्रयुज्यमाना दृश्यते तथा बभ्र्वादयोऽपीति दृष्टान्तोपन्यासः ।

किमस्य द्व्यसमिति । किमस्य प्रमाणमित्यत्रार्थेऽयं प्रयोगो दृश्यते । तत्र गाव्यादिवदेवमादीनामनेनाऽसाधुत्वं प्रतिपाद्यते । काद्य तिथीति । काऽद्य द्व्यादिसङ्ख्यायाः पूरणीत्यर्थः । बहुतिथीत्यादौ च तिथीशब्दमुपलभ्य भ्रान्त्या केवलमपि प्रयुञ्जते । यस्तु तिथिशब्दान्ङीषि कृते तिथीशब्दः स साधुरेव । द्व्यसज्जादय इति । अवृत्तिजा अपि भ्रान्त्या केवला लोके प्रयुज्यमाना दृश्यन्त इत्यर्थः । यथा बहुरिति । ईषदसमाप्तौ यो बहुच्प्रत्ययस्तत्सदृशो बहुशब्दस्सङ्ख्यावैपुल्यवाची यथा लोके प्रयुज्यते तथा द्व्यसजादयोऽपीति केचिद्व्याचक्षते । अन्ये त्वाहुः—केवल एवेषदसमाप्तौ यो बहुशब्दो लोके प्रयुज्यते स दृष्टान्तोऽसाधुत्वे द्व्यसजादीनामुपात्तः ।

उ०—केवला प्रकृतिस्तथा प्रयुक्तः केवलः प्रत्ययश्चाऽसाधुरित्याह—तस्मादिति । 'बहुवचनान्तव'दित्यनेन तत्र बभ्रुसम्बन्ध्यपत्यमित्यर्थविषयलक्षणां दर्शयति ।

अनेनाऽसाधुत्वमिति । उक्तरीत्याऽपत्यार्थबोधविवक्षायां बभ्रुरित्यस्य, प्रमाणमित्यर्थे द्व्यसज्मात्रस्येत्यर्थः । अयं भावः—'समानेऽर्थेऽन्वाख्यातोऽनन्वाख्यातस्य निवर्तक' इत्युक्तेस्तत्रार्थे प्रत्ययपरस्य साधुत्वकथनात्केवलप्रकृत्यादेरसाधुत्वमिति । 'रघूणा' मित्यादौ तु तदपत्ये रघुत्वारोपेण रघुत्वेनैव रूपेण तेषां बोधान्नाऽसाधुत्वम् । तत्सम्बन्ध्यपत्यमित्यर्थे हि अपसमासयोरेव साधुत्वमिति सूत्रार्थात् । बभ्रु मण्डु—गर्गादी, लमको नडादिरुपकादिश्च । प्रागुक्तयुक्तिभिः परत्वे सिद्धे परश्चेत्येतत्प्रत्ययः परो भवत्येवेति नियमार्थन्तेन केवलप्रकृतेर्न प्रयोगो, नापि केवलप्रत्ययस्येति सिद्धम् ।

† गर्गादिभ्यो यञ् ४ । १ । १०५ ‡ नडादिभ्यः फक् ४ । १ । ९९
* ५ । २ । ३७; ५२; ५ । ३ । ६८

अथ क्रियमाणेऽपि वै परग्रहणे कथमिव वावचनेनाऽनुत्पत्तिर्लभ्या ? क्रियमाणे परग्रहणे वावचनेन 'वा पर' इत्येतदभिसंबध्यते । अक्रियमाणे पुनः परग्रहणे वावचनेन किमन्यच्छक्यमभिसंबन्द्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाऽभावाविष्येते ।

**वावचने चोक्तम् ॥ ८ ॥**

[ वावचने चोक्तम् । ] किमुक्तम् ? 'वावचनानर्थक्यं च तत्र नित्यत्वात्सनः'† इति ।

---

प्र०—वावचने चेति । 'तस्मादित्युत्तरस्ये'त्येव प्रत्ययस्य सिद्धे परत्वे पुनः परवचनं वावचनेन प्रत्ययस्य पक्षेऽनुत्पत्तिं प्रतिपादयति । 'वा परः सन् भवति'—परत्वोपलक्षितस्सन् पक्षे भवति । पक्षे तु नैवोत्पद्यत इत्यर्थः, न त्वत्र परत्वं विकल्प्यते 'पक्षे पूर्वो भवती'ति । परत्वस्य प्रयोगे नियतत्वात्तस्मादिति वचनाद्वानियतत्वात् । अक्रियमाण इति । प्रतियोगं प्रत्ययसंज्ञोपस्थानात्तस्या एव विकल्पः स्यात् । कृते त्वस्मिन् पराधिकारे प्रतियोगमुपस्थिते 'परो वा भवति'—परत्वोपलक्षितः पक्षे भवति, पक्षे नैव भवतीत्यर्थः संपद्यते ।

नित्यत्वात्सन इति । वृत्तिपक्षे नित्य एव सन्निष्यते, कर्तुमिच्छतीत्यवृत्तिपक्षे नैव सन

---

उ०—भाष्ये असाधुत्वोपपादकम्परश्चेत्यस्योदाहरणत्वोपपादकञ्च—अवृत्तिजा इति । 'एकार्थीभावरूपवृत्तिविषयाऽभावेऽपि जाता उच्चारिता वृत्तिजद्वयसादिसदृशाः प्रमाणार्थका बहुच्सदृशसङ्ख्यादिवाचिबहुशब्दवद्द्वयसादयोऽपि साधवः स्युरिति तद्वारणार्थं—परश्चेती'ति भाष्यार्थः । बहुजपेक्षया भिन्नार्थत्वादस्तु बहुशब्दस्य साधुत्वम्, एषां त्वर्थान्तरवृत्तित्वाऽभावादसाधुत्वमेवेति भावस्तदाह—अवृत्तिजा अपि भ्रान्त्येति । तत्सदृशानुपूर्वीकत्वात्तदर्थत्वभ्रान्त्येत्यर्थः । 'प्रत्ययः पर. एवे'ति नियमेऽर्थतः शब्दतश्च यः प्रत्ययजातीयः स पर एवेत्यर्थेनास्याऽसाधुत्वं बोध्यम् । अन्यथाऽस्य प्रत्ययत्वाऽभावेन कथं नियमेनाऽसाधुत्वं बोध्येत । एतेन प्रकृत्युद्देश्येनैव प्रत्ययानां विधानात्केवलप्रत्ययस्याऽसाधुत्वे सिद्धे कथमिदं परश्चेत्यस्य प्रयोजनमित्यपास्तम् । अन्ये त्विति । अत्र पक्षे बहोरपि द्वयसादितुल्यत्वेन दृष्टान्तत्वाऽनुपपत्तिरित्यरुचिः ।

धातोरिच्छायां वा सन् प्रत्ययसंज्ञो भवतीत्यर्थे प्रधानवाक्यस्याऽन्याय्यत्वेनाऽप्रधाने संज्ञाया एव विकल्पः स्यात्, न च स इष्टः । परग्रहणे तु तत्सामर्थ्यात्प्रधानन्यायाऽबाधेन सन एव विकल्पः इति वावचने चेत्यादिभाष्यस्य तात्पर्यार्थः । तमुपपादयति—तस्मादित्युत्तरेति । 'परश्चे'त्यस्य सत्त्वेऽप्यप्रधानत्वात्परत्वस्यैव विकल्पः स्यादिति दूषयति—नत्वत्रेति । नियतत्वादिति । तथा च तद्विकल्पो नेष्ट इति भावः । तस्मादिति वचनाद्वेति । तेन सूत्रेणोत्तरस्येत्यस्याप्युपस्थितावेकार्थकशब्दद्वयेन नित्यं परत्वस्य बोधनेन पश्चात्तद्विरुद्धो विकल्पस्तस्य बोधयितुमशक्य इत्यर्थः । भाष्ये—वा पर इत्येतदभिसंबध्यत इति । यः परः स

---

† ३ । १ । ७ वा० ६

प्रयोगनियमार्थमेव तर्हि परग्रहणं कर्तव्यम् ॥ अथैतस्मिन्प्रयोगनियमार्थे सति किमयं प्रत्ययनियमः—'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यो ऽप्रकृतिपरो ने'ति । आहोस्वित्प्रकृतिनियमः—'प्रत्ययपरैव प्रकृतिः प्रयोक्तव्याऽप्रत्ययपरा ने'ति । कश्चात्र विशेषः ?

**तत्र प्रत्ययनियमे प्रकृतिनियमाऽभावः ॥ ९ ॥**

तत्र प्रत्ययनियमे सति प्रकृतेर्नियमो न प्राप्नोति । अप्रत्ययिकायाः प्रकृतेः प्रयोगः प्राप्नोति । क्व स देवदत्तः क्व स यज्ञदत्तो बभ्रुर्मण्डुर्लमक इति ॥ अस्तु तर्हि प्रकृतिनियमः ।

**प्रकृतिनियमे प्रत्ययाऽनियमः ॥ १० ॥**

प्रकृतिनियमे सति प्रत्ययस्य नियमो न प्राप्नोति, किमस्य द्वयसम् 'किमस्य मात्रम्, काद्य तिथीति । अप्रकृतिकस्य प्रत्ययस्य प्रयोगः प्राप्नोति ।

**सिद्धं तूभयनियमात् ॥ ११ ॥**

सिद्धमेतत् । कथम् ? 'उभयनियमात्' । उभयनियमोऽयम्—'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः' 'प्रत्ययपरैव च प्रकृति'रिति ।

किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? परग्रहणसामर्थ्यादन्तरेणाऽपि परग्रहणं स्यादयं परः । पर एव यथा स्यादित्येत्वमर्थं परग्रहणम् ॥ २ ॥

---

प्र०—उत्पत्तिः प्राप्नोतीति प्रत्याख्याते वावचने प्रयोगनियामावमिदम् ।

सिद्धे तस्मादिति वचनात्परत्वे 'नित्यं परः प्रत्ययो यथा स्यान्मा कदाचित्परो न प्रयोजी' त्येवं सामर्थ्यादुभयनियमलाभः ॥ २ ॥

---

उ०—वा भवतीत्यर्थः । तस्या एवेति । प्रधानत्वेन प्रत्ययविकल्पस्याऽन्याय्यत्वादिति भावः । प्रत्याख्यात इति । सत्त्वेऽपि न संज्ञाया विशेषणं, तद्विकल्पाऽनिष्टेः, 'परश्चे'ति सत्त्वेऽपि परत्वविकल्पाऽभाववत् । तत्र सामर्थ्याद्वृत्त्या वाक्यबाधभ्रमनिवृत्त्यर्थं सन एव विशेषणं वाग्रहणम् । ध्वनितं चेदं 'समर्थानाम्प्रथमा' दिति सूत्रे भाष्य इत्यपि बोध्यम् । प्रयोगार्थमिदमिति । प्रयोगनियमार्थमेवेदमित्यर्थः । क्वचित्तथैव पाठः ।

भाष्ये–प्रत्ययपरैवेति । सामर्थ्यात्प्रत्ययो नित्यं सदा परः प्रयोक्तव्य इत्यर्थेनैतन्नियमसिद्धिरित्यर्थः । ननु 'पर एव स्या' दिति नियमे बभ्रुरित्यादेरपि साधुत्वं स्यादिति चेन्न; 'परः स्यादेवे'त्यर्थात् । तद्ध्वनयन्व्याचष्टे–नित्यं पर इति । मा कदाचित्परो न प्रयोजीति । तेनोभयनियमफललाभ इति भावः ॥ २ ॥

# आद्युदात्तश्च ॥ ३ । १ । ३ ॥

किमर्थमिदमुच्यते ? आद्युदात्तो यथा स्यादन्तोदात्तो मा भूदिति । नैतदस्ति प्रयोजनम् । यमिच्छत्यन्तोदात्तं, करोति तत्र चकारमनुबन्धम्, आह च 'चितोऽन्त उदात्त' इति‡ ।

मध्योदात्तस्तर्हि मा भूदिति । मध्योदात्तमपि यमिच्छति तत्र रेफमनुबन्धं करोति, आह च—'उपोत्तमं रिति' [ ६ । १ । २१७ ] इति ।

अनुदात्तस्तर्हि मा भूदिति । अनुदात्तमपि यमिच्छति तत्र पकारमनुबन्धं करोति, आह च—'अनुदात्तौ सुप्पितौ' [ ३ । १ । ४ ] इति ।

स्वरितस्तर्हि मा भूदिति । स्वरितमपि यमिच्छति करोति तत्र तकारमनुबन्धम्, आह च—'तित्स्वरितम् [ ६ । १ । १८५ ] इति ।

य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेणाऽपि वचनमाद्युदात्त एव भविष्यतीति नाऽर्थ आद्युदात्तवचनेन ।

एवमपि येषामेव प्रत्ययानां स्वरो नियम्यते त एव नियतस्वराः स्युर्य इदानीमनियतस्वरः कदाचिदाद्युदात्तः कदाचिदन्तोदात्तः कदाचिन्मध्योदात्तः कदाचिदनु-

प्र०—आद्युदात्तश्च । अस्वरकस्याऽच उच्चारणाऽभावात्स्वरान्तरस्य प्रत्ययान्तरेषु नियतत्वात्पारिशेष्यादाद्युदात्त एव प्रत्ययो भविष्यतीति मत्वा प्रश्नः–किमर्थमिति । येषामेवेति । चिदादीनामनियतस्वरप्राप्तावन्तोदात्त एव चिदित्येवं नियमात्तेषामेव नियतस्वरत्वं स्यात्, अन्येषां त्वनियतस्वरप्रसङ्ग इत्यर्थः । प्रत्ययाश्रयाणामिति । तदन्तग्रहणादीनामित्यर्थः ।

उ०—आद्युदात्तश्च । एते त्रयोऽप्यधिकाराः । यत्तु परश्चाद्युदात्तश्चेत्यनयोः परिभाषात्वमुक्तं, तन्न; लिङ्गाऽभावात् । न च प्रत्ययसंज्ञैव लिङ्गम्, एकवाक्यतया त्रयाणामपि विधानेनान्यतरस्याऽन्यतरलिङ्गत्वाऽयोगात् । सहविधानञ्चात्रैव सूत्रे भाष्येऽग्रे स्फुटतरम् ।

भाष्ये–अन्तोदात्तो मा भूदिति । अस्वरकाऽच उच्चारणाऽभावेऽपि आद्युदात्तत्वनियमो न स्यादित्यर्थः । नैतदिति । अस्वरकोच्चारणाऽभावादनियतान्तोदात्तत्वादौ प्राप्ते 'चित' इत्यादि 'चित एवे' त्यादिनियमार्थमित्यर्थः । प्रत्ययविषयैर्नियमैरन्येषु स्वरेषु प्रतिबद्धेषु अस्वरकोच्चारणाऽसम्भवादाद्युदात्त एव भविष्यतीति किमनेन सूत्रेणेति भावः । ननु लोके त्रैस्वर्यनियमाऽभावेनाऽस्वरकस्याऽप्यच उच्चारणमस्त्येव, उदात्तादीनामभावस्यैकश्रुतित्वात् । एकश्रुतेरतिरिक्तत्वे तु सापि स्यादिति कथमाद्युदात्तत्वसिद्धिः । न च दूरात्संबुद्धावेव साऽपि नियता, विभाषाछन्दसीत्यादेर्वैयर्थ्यापत्तेः । तेनाऽत्रापि पाक्षिक्यास्तस्या दुर्वारत्वमिति

‡ चितः ६ । १ । १६३

दात्तः कदाचित्स्वरितः स्यात् । आद्युदात्त एव यथा स्यादित्येवमर्थमिदमुच्यते ।

अथ किमर्थं प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वमुच्यतेऽनुदात्तत्वञ्च† न यत्रैवाऽन्यः स्वरस्तत्रैवाऽयमप्युच्येत—'ञ्नित्यादिर्नित्यम्' [ ६ । १ । १९७ ] 'प्रत्ययस्य च' । 'अदुपदेशाल्लसार्वधातुकमनुदात्तम्'‡ 'सुप्पितौ चे'ति । तत्रायमप्यर्थो द्विराद्युदात्तग्रहणं द्विश्चाऽनुदात्तग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते ।

अत उत्तरं पठति ।

**आद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगे प्रयोजनं यस्य संज्ञाकरणं तस्याद्युदात्तार्थम् ॥ १ ॥**

आद्युदात्तत्वस्य प्रत्ययसंज्ञासंनियोगकरण एतत्प्रयोजनं यस्य संज्ञा क्रियते तस्याद्युदात्तत्वं यथा स्यात् ।

**असन्नियोगे हि यस्मात्स विहितस्तदादेराद्युदात्वं तदन्तस्य चानुदात्तत्वम् ॥ २ ॥**

अक्रियमाणे हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः तदन्तस्य ग्रहणं भवती'ति तदादेरेवाद्युदात्तत्वं प्रसज्येत तदन्तस्य चानुदात्तत्वम् ।

अथ क्रियमाणेऽपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वेऽनुदात्तत्वे च कस्मादेव

प्र०—'आद्युदात्तश्चे' त्यस्य तु प्रतियोगमुपस्थाने सति—उत्पद्यमान एव तव्यादिराद्युदात्तो भवत्येव तिबादिरनुदात्त इति दोषाऽभावः । घटाश्रयाणामिति । उदकाहरणादीनामित्यर्थः ।

यदयमिति । प्रत्ययस्य चेत्यनेनाद्युदात्तत्वे सिद्धे 'ञ्नित्यादिर्नित्य' मित्यनारम्भणीयं स्याद्यदि तदादेर्ग्रहणं स्यादित्यर्थः । यत्र हीति । यातीत्यादौ पिति प्रत्यये धातोरुदात्तत्वं भवति ।

उ०—चेन्न; लोके त्रैस्वर्यपक्षे, वेदे चाद्युदात्तार्थमिदं सूत्रं नियमैः सिद्धत्वाद्द्व्यर्थमिति भाष्याशयात् । पक्षे लोके एकश्रुतिरिष्टैवेत्याहुः ।

अनियतस्वरेति । पूर्वनियमे तु ञ्नितोऽन्यस्वराऽव्यावृत्त्या नियतशास्त्रार्थोऽनापत्त्या इष्टाऽनुरोधादावृत्त्योभयविधनियमे मानाऽभावाच्चाऽन्तोदात्त एव ञ्निदित्येव नियमः स्यादित्यन्यत्राऽनियमः स्यादित्यर्थः । भाष्ये—संज्ञासन्नियोगेनेति । अत्र करणे त्रयाणामप्यधिकारत्वादेकवाक्यतया त्रितयविशिष्टतव्यादेर्विधानात् । अन्यत्र करणे तु प्रत्ययाऽनुवादेन विधानान्न सन्नियोग इति भावः ।

भाष्ये—द्विराद्युदात्तग्रहणमिति । 'प्रत्ययस्य चे' ति करणेऽपि तस्याद्युदात्तग्रहणाल्लघुत्वमिति

† अनुदात्तौ सुप्पितौ ३ । १ । ४ ‡ तास्यनुदात्तेन्ङिद० ६ । १ । १८६

१—क्वचिन्न ।

तदादेराद्युदात्तत्वं न भवति तदन्तस्य चाऽनुदात्तत्वम् ? उत्पन्नः प्रत्ययः प्रत्ययाश्रयाणां कार्याणां निमित्तं भवति नोत्पद्यमानः। तद्यथा—कृतो घटो घटाश्रयाणां कार्याणां निमित्तं भवति न क्रियमाणः।

**न वा प्रकृतेराद्युदात्तवचनं ज्ञापकं तदादेरग्रहणस्य ॥ ३ ॥**

न वैष दोषः। किं कारणं ? यदयं ञ्नित्यादिर्नित्यमिति प्रकृतेराद्युदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यो 'न तदादेराद्युदात्तत्वं भवती'ति।

तदन्तस्य तर्ह्यनुदात्तत्वं प्राप्नोति।

**प्रकृतिस्वरस्य च विधानसामर्थ्यात्प्रत्ययस्वराऽभावः ॥ ४ ॥**

यदयं 'धातोरन्तः'†'प्रातिपदिकस्य चाऽन्त' इति प्रकृतेरन्तोदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यो 'न तदन्तस्याऽनुदात्तत्वं भवती'ति। कथं कृत्वा ज्ञापकं ? यत्र ह्यनुदात्तः प्रत्ययः प्रकृतिस्वरस्तत्र प्रयोजयति।

**आगमानुदात्तार्थं वा ॥ ५ ॥**

आगमानुदात्तार्थं तर्हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते। प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृत आगमा अनुदात्ता यथा स्युरिति।

**न वाऽऽगमानुदात्तवचनात् ॥ ६ ॥**

न वैतदपि प्रयोजनमस्ति। किं कारणम् ? 'आगमानुदात्तवचनात्'।

प्र०—यातो यान्तीत्यादौ तु प्रत्ययाद्युदात्तत्वेन सति शिष्टत्वाद्बाध्यते। कृष्णतर इत्यादौ च प्रातिपदिकान्तोदात्तत्वं श्रूयते। यदि च प्रत्ययाऽन्तस्यानुदात्तत्वं स्यान्निर्विषयं धातुप्रातिपदिकान्तोदात्तत्वं स्यादित्यर्थः। 'आस्ते' 'शेते' इत्यादौ लसार्वधातुकानुदात्तत्वे सति धातुस्वरस्य सविषयत्वादज्ञापकत्वमिति चेत, तत्रापि तदन्तविधिप्रसङ्गाज्ज्ञापकत्वमेव।

आगमानुदात्तार्थं वेति। वाशब्दस्तर्ह्यर्थे। लवितव्यमित्यादौ तव्यस्योत्पत्तिकाल एवाद्यु-

उ०—भावेनेदम्। तदादेराद्युदात्तमिति। तदादेरिति तत्पुरुषः। तदन्तस्येति बहुव्रीहिः। उत्पन्नः प्रत्यय इति। 'प्रत्ययग्रहणे यस्मा' दिति परिभाषाया अनुवादविषयत्वादिति भावः। तद्ध्वनयन् व्याचष्टे—उत्पद्यमान एवेति। तथा चेह करणे प्रत्ययस्यानुवाद्यत्वाऽभावान्न परिभाषोपस्थितिरिति भावः। ञ्नित्यादिरिति ञ्निदन्तस्य ञ्निति परे पूर्वस्य वाद्युदात्तविधायकम्। ननु प्रत्ययस्येत्यनेन सिद्धे 'ञ्नित्यादि'रिति सूत्रं स्वस्मिन्नेव तदादितदन्तग्रहणाऽभावस्य ज्ञापकं किन्न स्यादिति चेन्न; प्रथमे 'ञ्नित्यादि'रिति सूत्रे विरोधोपस्थित्यभावेनोत्तरकालिकप्रत्ययस्येत्यस्य बोध एव तदुपस्थित्या तत्रैव तदमात्रकल्पनेत्याशयात्।

प्रातिपदिकान्तोदात्तत्वमिति। 'स्वरविधौ सङ्घातः कार्यी'त्यर्थस्य षष्ठे वक्ष्यमाणत्वादनुदात्तत्वं

† ६। १। १६२ १—'आगमस्य' पाठा०।

'आगमा अनुदात्ता भवन्ती'ति वक्ष्यामि।

के पुनरागमा अनुदात्तत्वं प्रयोजयन्ति? इट्—लविता।

इट् तावन्न प्रयोजयति। इदमिह संप्रधार्यम्—इट् क्रियतामाद्युदात्तत्वमिति, किमत्र कर्तव्यम्? परत्वादिडागमः† ।नित्यमाद्युदात्तत्वम्। कृतेऽपीटि प्राप्नोत्यकृतेऽपि प्राप्नोति। इडपि नित्यः। कृतेप्याद्युदात्तत्वे प्राप्नोत्यकृतेपि प्राप्नोति। अनित्य इट्। अन्यथा स्वरस्य कृत आद्युदात्तत्वे प्राप्नोत्यन्यथा स्वरस्याऽकृते [ प्राप्नोति ], स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति। आद्युदात्तत्वमप्यनित्यम्। अन्यस्य कृत इटि प्राप्नोत्यन्यस्याऽकृते, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वादिडागमः। अन्तरङ्गं तर्ह्याद्युदात्तत्वम्। काऽन्तरङ्गता? उत्पत्तिसन्नियोगेनाद्युदात्तत्वमुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्येडागमः। आद्युदात्तत्वमपि नाऽन्तरङ्गं यावता प्रत्यय आश्रीयमाणे प्रकृतिरप्याश्रिता

प्र०—दात्तत्वे कृते पश्चादिडागमः क्रियमाणः शेषनिघातेनाऽनुदात्तो भवति। अन्यथा परत्वादिडागमे कृते तस्य तद्भक्तत्वात्प्रत्ययग्रहणेन ग्रहणादाद्युदात्तत्वं क्रियमाणमिट एव प्रसज्येतेत्यर्थः।

के पुनरिति। अन्योऽत्र प्रष्टा द्रष्टव्यः, न तु येन 'न वे' त्युक्तं स एव पृच्छति, विरोधात्। लवितेति। लुट्, तिप्, डा, तासिः, इट्। अत्र यदीटोऽनुदात्तत्वं न स्यात्तदा तासि भक्तत्वादिडुदात्तः स्यात्। शेषनिघातेन च तास्याकारोऽनुदात्त इत्युदात्तलोपाऽभावादुदात्तनिवृत्तिस्वर आकारस्य न स्यात्। इटस्त्वनुदात्तत्वे सति तास्याकार एवोदात्त इत्युदात्तनिवृत्तिस्वरः सिध्यति।

उ०—सर्वस्येति तात्पर्यम्। पूर्वप्रयोजनस्य ज्ञापकेन खण्डनादाह—तर्ह्यर्थ इति। अन्यथेति। षष्ठे सूत्रकरण इत्यर्थः। तस्मादागमाऽनुदात्तत्वसिद्धये इह वचनमिति भावः। एतदुत्तरं भाष्यमेकदेश्युक्तिः। भाष्ये—वक्ष्यामीति। व्याख्यास्यामि ज्ञापकादित्यर्थः।

अन्योऽत्रेति—शेषनिघातेनागमाऽनुदात्तत्ववादी। के पुनरित्यस्य शेषनिघातेन यत्र न सिध्यति ते के इत्यर्थः। तृन्तृजन्तत्वे 'ञ्नित्यादि'ति 'चित' इति चोदात्तत्वे शेषनिघातेन सिद्धेराह—लुडिति। षष्ठाऽध्याये 'प्रत्ययस्य चे'ति सूत्रकरणवादी उत्तरयति भाष्ये—इड्लवितेति। तद्ध्वनयन्व्याचष्टे—तासिभक्तत्वादिडुदात्त इति। एवञ्च लवितेत्यादावुदात्तनिवृत्तिस्वरेणाऽन्तोदात्तत्वसिद्धिरागमानुदात्तत्ववचनस्य षाष्ठसूत्रवादिमते फलमित्यर्थः। अपरः—फलं नास्तीत्याह—भाष्ये—इट्तावन्न प्रयोजयतीति। षष्ठतृतीययोरन्यतरत्र पाठेऽपि अन्तरङ्गत्वात्पूर्वमेवाद्युदात्तत्वप्रवृत्त्या ततः शेषनिघातेनेटोऽनुदात्तत्वे उदात्तनिवृत्तिस्वरसिद्धेरित्यर्थः। परोऽन्तरङ्गत्वमपश्यन् स्वमते परत्वेन पूर्वमिडागमं स्थापयितुमाह—इदमिहेत्यादिना परत्वादिडागम इत्यन्तेन। अपरः स्वाशयम्प्रकटयति—अन्तरङ्गन्तर्हीति। षष्ठे सूत्रकरणेऽपि ज्ञापकात्तदादिविध्यभावेनाऽन्तरङ्गत्वात्पूर्वं स्वरे पश्चादिटि उदात्तनिवृत्तिस्वरे शेषनिघातसिद्धेरागमाऽनुदात्तत्वं निष्फलमिति भावः। उत्पत्तिसन्नियो-

† आर्द्धधातुकस्येड्वलादेः ७।२।३५।

भवति । अन्तरङ्गमेवाद्युदात्तत्वम् । कथम् ? इदानीमेव ह्युक्तम् 'न प्रत्ययस्वरविधौ तदादिविधिर्भवती'ति ॥ सीयुट्* तर्हि प्रयोजयति ।

**अवचने हि सीयुडादेराद्युदात्तत्वम् ॥ ७ ॥**

अक्रियमाणे हि आगमानुदात्तत्वे क्रियमाणेऽपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे सीयुडादेर्लिङ आद्युदात्तत्वं प्रसज्येत,—लविषीय पविषीय† ।

तत्तर्हि वक्तव्यम्—'आगमा अनुदात्ता भवन्तीति ? न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—'आगमा अनुदात्ता भवन्ती'ति यदयं 'यासुट्परस्मैपदेषूदात्तो ङिच्च' [ ३ । ४ । १०३ ] इत्याह । नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत् 'यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चे'ति । शक्यमनेन वक्तुं 'यासुट्परस्मैपदेषु भवत्यपिच्च लिङ् भवती'ति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते

प्र०—स्वरभिन्नस्येति । रूपवत्स्वरोऽपि श्रुतिभेदहेतुत्वाच्छब्दान्तरत्वमेव करोतीति भावः । प्रकृतिरप्याश्रितेति । प्रत्ययग्रहणपरिभाषयेति भावः । अन्तरङ्गमेवेति । तत इण्न प्रयोजयतीत्यर्थः ।

लविषीयेति । आशिषि लिङ् । अत्र विशेषविहितत्वाद्वा परत्वाद्वा पूर्वं सीयुट् क्रियते पश्चाल्लादेशः । तत्र प्रत्ययाद्युदात्तत्वं क्रियमाणं सीयुट एव स्यात् । 'आगमा अनुदात्ता' इति तु वचनात्सीयुटोऽनुदात्तत्वे सति 'इटोऽ'दित्यकारस्योदात्तत्वं सिध्यतीत्यर्थः । पिदर्थमिति । 'चिनुया' दित्यादौ पिद्ग्रहणत्वाद्यासुटोऽनुदात्तत्वप्रसङ्गे उदात्तवचनमित्यज्ञापकमित्यर्थः । आगमै-

उ०—गेनेति । उत्पत्तिमात्रनिमित्तत्वेनेत्यर्थः । नेदम्भाष्यं तृतीये सूत्रमिति पक्षे, उपक्रमोपसंहारविरोधात् । अत एव 'लवितव्य' मित्यपि न फलम्, अन्तरङ्गत्वात्पूर्वं स्वरप्रवृत्तेः । इड्विधौ प्रकृतिप्रत्ययोभयाश्रयणे बीजमाह ( भाष्ये )—अङ्गस्येति । अङ्गसंज्ञानिमित्तस्येत्यर्थः । एवञ्च तस्या उभयाश्रितत्वादस्यापि तत्त्वमिति भावः ।

एवं शेषनिघातेनागमानुदात्तमिति वादिना षष्ठे सूत्रारम्भवादिनम्प्रत्यागमाऽनुदात्तवचनस्येटः प्रयोजनत्वाऽभावे उक्तेप्रयोजनान्तरमाह ( भाष्ये )—सीयुट्तर्हीति । अनवकाशत्वे सत्येव विशेषविहितत्वस्य बलवत्त्वप्रयोजकत्वादाह—परत्वाद्वेति । लादेशनिमित्ताऽऽद्युदात्तत्वस्य 'यात' इत्यादिरवकाशः । 'शयिषीष्टे' त्यादौ लसार्वधातुकानुदात्तत्वात्सीयुट्साऽवकाशः । प्रकृते उभयप्रसङ्गे परत्वात्सीयुडित्यर्थः । लाऽवस्थायान्तु न स्वरः, तस्याऽनच्कत्वात् । न च पूर्वं सीयुटि अनिर्दिश्यमानत्वान्न समुदायस्य, व्यवहितत्वान्न निर्दिश्यमानस्येत्यादेशाऽप्रवृत्तिरेव स्यादिति वाच्यं, 'धातो' रित्यस्य विहितविशेषणत्वाऽङ्गीकारेण व्यवहितेऽपि प्रवृत्तेः । एवञ्च तृतीये एतत्सूत्रपाठेऽपि आगमाऽनुदात्तत्ववचनमावश्यकमित्याह भाष्ये—क्रियमाणेऽपीति । यद्यपि तिबादीनाम्प्रत्ययत्वं स्थानिवत्त्वेन सिद्धं तथाप्यधिकृतस्याऽसम्बन्धे मानाऽभाव इति 'प्रत्ययसंज्ञासन्नियोगेने' त्युक्तम् । 'परश्चे' त्यस्याप्यत्र संबन्धे बाधकाऽभावः, धातोः परत्वस्याऽपि सत्त्वात् । न च तृतीये सूत्रे लस्य स्थाने इडुदात्तो भवतीति उत्पत्तिकाल एव स्वरविधानादनुवादविषयाया 'यदागमा' इति परिभाषाया अप्रवृत्तेरागमविशिष्टस्योदात्तत्वाऽप्राप्त्योच्चार्यमाणस्येट एवाद्युदात्तत्वे सीयुटः शेषनिघातेन सिद्धिरिति वाच्यम्, आगमसन्निधाने विधीयमानस्याऽपि तस्य प्रत्ययसंज्ञाविशिष्टे एव, आद्युदात्तत्वञ्च

* ३ । ४ । १०२ † ३ । ४ । १०६

तज्ज्ञापयत्याचार्य 'आगमा अनुदात्ता भवन्ती'ति । शक्यमेवं[1] लब्धुम् ।

यद्येव वचनादथापि ज्ञापकादागमा अनुदात्ता भवन्ति, आगमैस्तु व्यवहितत्वादाद्युदात्तत्वं न प्राप्नोति । । 'आगमा अविद्यमानवद्भवन्ती'ति वक्ष्यामि । 'यद्यागमा अविद्यमानवद्भवन्ती'त्युच्यते लविता—अत्रादेशो न प्राप्नोति । 'स्वरविधा'विति वक्ष्यामि । एवमपि लविता† 'उदात्तादनुदात्तस्य स्वरितः' [ ८ । ४ । ६६ ] इति स्वरितत्वं[2] न प्राप्नोति । पाष्ठिके 'स्वरे' इति वक्ष्यामि । एवमपि शिचितैः[3],—'निष्ठा च द्व्यजनात्' [ ६ । १ । २०५ ] इत्येष स्वरः प्राप्नोति । 'प्रत्ययस्वरविधा'विति वक्ष्यामि ।

तत्तर्हि वक्तव्यम्–'आगमा अविद्यमानवद्भवन्ती'ति ? न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति–'आगमा अविद्यमानवद्भवन्ती'ति यदयं 'यासुट्परस्मैपदेषूदात्तो ङिच्चे'त्याह । नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत्–'यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चे'ति । शक्यमनेन वक्तुं 'यासुट्परस्मैपदेषु भवत्यपिच्च लिङ् भवती'ति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्य 'आगमा अविद्यमानवद्भवन्ती'ति ।

प्र०—रिति । विच्छिन्नत्वादादित्वस्य 'लविषीये' त्यादौ प्रत्ययस्याद्युदात्तत्वं न प्राप्नोतीत्यर्थः । आरब्धे तु सूत्रे प्रत्ययसंज्ञासन्नियोगेन कृते आद्युदात्तत्वे भवन्त्यागमा इति न दोषः । एवमपि लवितेति । तृन्नन्तत्वादाद्युदात्तमेतत् । यदयमिति । यदि प्रत्ययाद्युदात्तत्वे कर्त्तव्ये आदित्वमागमा विहन्युस्तदा 'चिनुयाता'मित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमिति तन्न कुर्यात् । कृतन्तु प्रत्ययाद्युदात्तत्वे कर्तव्ये आगमानामविद्यमानत्वं ज्ञापयतीत्यर्थः ।

स्तौघ्नीति । विभज्याऽन्वाख्यानपक्षे स्तौघ्न अ ई इति स्थिते 'प्रत्ययस्य चे' त्याद्युदात्तत्वात्परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्त्यभावादुदात्तनिवृत्तिस्वर ईकारस्य न स्यात् । प्रत्ययसंज्ञासन्नियोगेन त्वाद्युदात्तविधाने न दोषः ।

उ०—तत्सन्नियोगेन विशिष्टे एवेत्यभिमानात् । अन्यथा तावत एव पृथक्प्रत्ययत्वे सीयुडन्तस्याऽङ्गत्वं स्यात् । तथा च तदन्तस्याऽपि लविषीढ्वमित्यादौ गुणः स्यात् । इटोऽदित्यकारस्येति । अत्र स्वरितत्वं नाशङ्क्यम्, औपदेशिकप्रत्ययत्वाऽभावात्, दित्वाच्च ।

भाष्ये—यदयं यासुडिति । न च परस्मैपदनिमित्तकत्वादस्यादेशोत्तरप्रवृत्त्या पूर्वमेवाऽन्तरङ्गत्वात्परत्वाद्वा प्रत्ययाद्युदात्तत्वे ततो यासुडस्वरको वा स्यात्, शेषनिघातेनाऽनुदात्तो वेति चरितार्थमुदात्तग्रहणं कथं ज्ञापकमिति वाच्यम्, 'परस्मैपदेष्वि' त्यस्य विषयसप्तमीत्वमाश्रित्य लाऽवस्थायामेव यासुटि ततो लादेशे तन्निमित्तकाऽऽद्युदात्तत्वे यासुटः सिद्धे उदात्तग्रहणं ज्ञापकमित्याशयात् । भाष्ये—शक्यमेवं लब्धुमिति । एवं रीत्येदं लब्धुं शक्यं, न त्वपूर्ववचनमेवेत्यर्थः ।

१—,शक्यमिदं' पा० । † ३ । २ । १३५; ६ । १ । १९७ २—'स्वरितो' पा० ।
३–'चिन्तितः, पाठा० ।

## आद्युदात्तस्य वा लोपार्थम् ॥ ८ ॥

आद्युदात्तस्य तर्हि लोपार्थं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते । प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृते ( लोपे ) उदात्तनिवृत्तिस्वरः‡ सिद्धो भवति,—स्रौघ्नी माथुरीति । अत्र हि परत्वाल्लोपः*प्रत्ययस्वरं बाधेत ।

## न वा बहिरङ्गलक्षणत्वात् ॥ ९ ॥

न वैतदपि प्रयोजनमस्ति । किं कारणम् ? 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गलक्षणो लोपोऽन्तरङ्गलक्षणः स्वरः । 'असिद्धं बहिरङ्गमरङ्गे' ॥ अवश्यं चैषा परिभाषाऽऽश्रयितव्या ।

## अवचने हि ञ्नित्कित्स्वरातिप्रसङ्गः ॥ १० ॥

अक्रियमाणायां ह्यस्यां परिभाषायां क्रियमाणेऽपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे ञ्नित्कित्स्वरातिप्रसङ्गः स्यात्—औत्सी कंसिकी आत्रेयीति × । अत्र हि परत्वा-

प्र०—बहिरङ्गलक्षण इति । स्वार्थादीनां क्रमेण प्रतीतिरिति स्त्रीत्वनिमित्त ईकारो बहिरङ्ग इति तन्निमित्तो लोपो बहिरङ्गः । अथवाऽङ्गस्य भस्येत्याद्यपेक्षणाल्लोपो बहिरङ्गः । औत्सीति । उत्से जाता । 'उत्सादिभ्योऽञ्' ङीप् । यद्यत्र परत्वाल्लोप आद्युदात्तत्वं ञ्निल्लक्षणं बाधेत तदा प्रत्ययस्योदात्तत्वादुदात्तनिवृत्तिस्वर ईकारस्य स्यादेव । कंसिकीति । कंसेन क्रीता । 'कंसाट्टिठ'-निति टिठनि ङीपि च ठकारस्याऽकृत इकादेशे उदात्तत्वं मन्यते । आत्रेयीति । अत्रेरपत्यं स्त्री । 'इतश्चानिञ' इति ढक् । 'आयन्नादिषु उपदेशिवद्वचनंस्वरसिद्धयर्थ' मिति पूर्वमेयादेशः, ङीप् । अत्रोदात्तनिवृत्तिस्वरो न स्यात् । अन्तरङ्गत्वे तु स्वरस्याश्रीयमाणे दोषाऽभावः । कंसिकया-

उ०—यद्येव वचनादिति । 'तस्मि' न्निति परिभाषासत्त्वेन विषयसप्तम्यनुचितेति भावः । अथापीति । उक्त आशयः । 'आगमैस्त्वि' त्ययं दोषः षाष्ठत्वादिमत इत्याह—आरब्धे त्विति । तृतीये आरब्धे त्वित्यर्थः । प्रत्ययसंज्ञेति । लावस्थायां सीयुडादावप्याद्युदात्तत्वं केवलस्यैवेति पूर्वं जाता अपि शेषनिघातेनाऽनुदात्ता भवन्तीत्यर्थः । एवञ्च तस्याऽनुदात्तत्वायाऽऽगमाऽनुदात्तत्ववचनमनावश्यकमिति तात्पर्यम् । अङ्गसंज्ञा तु न, तस्यां 'यदागमा' इति न्यायेन विशिष्टस्यैव प्रत्ययग्रहणेन ग्रहणात् । एवञ्च यासुटोऽपि शेषनिघातेनाऽनुदात्तत्वे प्राप्ते उदात्तग्रहणस्य चारितार्थ्येन ज्ञापकाऽसम्भवोऽपि ध्वनितः । एवञ्च 'लविषीये' त्युदाहरणविषया 'क्रियमाणेऽपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे' इत्यादिरेकदेश्युक्तिरसङ्गतेति बोध्यम् । ननु तृतीये सूत्रमतेऽपि 'अनुदात्तं पद' मित्यस्य परिभाषात्वात्तेनैकवाक्यतायामाद्युदात्तत्वविधिकाले सन्निहितानामेव तेन निघातविधानात्पश्चात्सन्निहितस्येटो निघाताऽप्राप्तेरागमाऽनुदात्तत्ववचनमावश्यकमिति चेन्न; 'चिनुत' इत्यादौ श्नोरनुदात्तत्वसिद्धयेऽसन्निहितस्याऽपि तेन निघाताऽवश्यम्भावेन, 'पदग्रहणं परिमाणार्थ'मिति वक्ष्यमाणया रीत्या न्यायसिद्धत्वेन च तन्मते वचनस्याऽनावश्यकत्वात् । न चैकपदे विशेषविधिं विना द्वयोरुदात्तयोरभावादुदात्तस्वरितयोरभावाच्च अस्वरकस्याऽत्र उच्चारणाऽभावादनुदात्तत्वमेवेति वाच्यम्, एकश्रुतिविषये उक्तस्वररहितस्याऽप्युच्चारणसत्त्वात् । एकश्रुतिशास्त्रस्य विध्यर्थत्वे सम्भवति नियमार्थत्वाऽस-

१—क्वचिन्न । ‡ अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१ * यस्येति च ६ । ४ । १४८
२—'ञिनिकित्स्व०' इति कीलहार्नपाठः । × ४ । १ । ८६; ६ । १ । १९७; ५ । १ । २५; ६ । १ । १९७; ४ । १ । १२२; ६ । १ । १६५

ल्लोपो ञ्निन्नित्कित्स्वरान् बाधेत ।

नैष दोषः । ञ्निन्नित्कित्स्वराः प्रत्ययस्वरापवादाः । न चाऽपवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते । न तावदत्र कदाचित्प्रत्ययस्वरो भवति, अपवादान् ञ्निन्नित्कित्स्वरान् प्रतीक्षते ।

कंसिक्यां भूयान् परिहारः । अन्यस्याऽत्रोदात्तत्वमन्यस्य लोपः । आदेरुदात्तत्वमन्त्यस्य लोपः ।

इदं तर्हि आत्रेयीति । अत्र हि परत्वाल्लोपः कित्स्वरं बाधेत । तस्मादेषा परिभाषाऽऽश्रयितव्या । एतस्यां च सत्यां शक्यं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमवक्तुम् ।

**प्रत्ययाद्युदात्तत्वाद्धातोरन्तः ॥ ११ ॥**

प्रत्ययाद्युदात्तत्वाद्धातोरन्त† इत्येतद्भवति विप्रतिषेधेन । प्रत्ययाद्युदात्तत्वस्यावकाशो यत्रानुदात्ता प्रकृतिः—समत्वम् सिमत्वम् । धातोरन्त इत्येतस्यावकाशो यत्रानुदात्तः प्रत्ययः-पचति पठति । इहोभयं प्राप्नोति—गोपायति धूपायति‡ । 'धातोरन्त' इत्येतद्भवति विप्रतिषेधेन ।

प्र०—मिनि । ठचश्चित्करणात् ईमिकादेशः, ततः प्रत्ययाद्युदात्तत्वमिति नास्त्युदात्तलोप इत्यर्थः । कित्स्वरमिति । तत उदात्तनिवृत्तिस्वरो न स्यादित्यर्थः ।

इदानीं प्रत्ययसंज्ञासन्नियोगेन स्वरविधौ प्रयोजनमाह—प्रत्ययाद्युदात्तत्वादिति । यदा 'ञ्नित्यादिर्नित्य'मित्यस्याऽनन्तरं 'प्रत्ययस्य चे' त्युच्येत तदा परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधेत । यथान्यासे तु प्रत्ययस्वरं धातुस्वरो बाधते ।

उ०—म्मत्राच । अत एवा 'ऽनुदात्तम्पद' मित्यस्य चारितार्थ्यम् । 'चिनु' इत्यत्र शेषनिघाताऽप्रवृत्तिस्तु हेरपित्त्वस्य 'अचणुरी' त्यादौ चारितार्थ्येन प्रकृतेऽन्तरङ्गानपीति न्यायेन स्वरात्पूर्वं लुकः प्रवृत्त्या स्वरैकवाक्यताऽऽपन्नस्या 'ऽनुदात्तम्पद' मित्यस्याऽप्रवृत्तेरिति बोध्यम् ।

'आगमा' अनुदात्ता' इति न कर्तव्यं, किन्तु तेऽविद्यमानवदित्येव कार्यमित्याह षष्ठ्वादी भाष्ये—आगमा इति । 'लविने'त्यस्य लुडन्तत्वे तृजन्तत्वे वाऽन्तोदात्तत्वेन स्वरितप्राप्त्यभावादाह-तृन्नन्तत्वादिति । कृतं स्विति । सत्यविद्यमानवत्त्वे तद्रहितप्रत्ययस्यैवाद्युदात्तत्वे शेषनिघातेनाऽऽगमानामनुदात्तत्वं सिद्धमिति भावः । शेषनिघातप्राप्ताऽनुदात्तव्यावृत्तये उदात्तग्रहणं चरितार्थमिति दिक् । एवञ्चागमाऽनुदात्तत्वं न तार्तीयसूत्रफलम्, षष्ठेऽपि ज्ञापकेन सिद्धत्वादित्यभिमानेनैकदेशी उत्तरवार्त्तिकस्थं 'वा' शब्दं तद्यर्थे व्याचष्टे (भाष्ये)—आद्युदात्तस्य तर्हीति । प्रागुक्तकैयटध्वनितरीत्या ज्ञापकाऽसम्भवे तु आगमानुदात्तत्वरूपं प्रयोजनं स्थितमेव । ननु ङीब्युत्पत्तेः प्रागेवाऽण आद्युदात्तत्वे कृते उदात्तनिवृत्तिस्वरः सिद्धस्तत्राह—विभज्येति । बहिरङ्ग इति । तेन विभज्यान्वाख्यानेऽपि न दोष इति भावः । अथवाङ्गस्येत्यादि चिन्त्यं, संज्ञाकृतबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणादित्युक्तम् । पूर्वमेयादेशो ङीबिति । योपधत्वान्न ङीषिति भावः ।

---

१—'ञिनिकित्स्व०' इति कीलहार्नपाठः ।　२—'वाप०' कीलहार्नपाठः ।

३—'प्रत्ययाद्युदात्तत्वं भवति' इति कीलहार्नपाठः ।　† धातोः ६ । १ । १६२

‡ गुपूधूपविच्छि०; सनाद्यन्ता० ३ । १ । २८; ३२

## पित्स्वरात्तित्स्वरष्टापि ॥ १२ ॥

पित्स्वरात्तित्स्वरष्टापि भवति विप्रतिषेधेन* । पित्स्वरस्यावकाशः—पचति पठति । तित्स्वरस्यावकाशः—कार्यम् हार्यम् । इहोभयं प्राप्नोति—कार्या हार्या । तित्स्वरो भवति विप्रतिषेधेन ।

## चित्स्वरश्चापि पित्स्वरात् ॥ १३ ॥

चित्स्वरश्चापि पित्स्वराद् भवति विप्रतिषेधेन† । चित्स्वरस्याऽवकाशः—चलनः कम्पनः । पित्स्वरस्य स एव । इहोभयं प्राप्नोति—आम्बष्ठ्या सौवीर्या‡ । चित्स्वरो भवति विप्रतिषेधेन ।

## न ह्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात् ॥ १४ ॥

न वाऽर्थो विप्रतिषेधेन । किं कारणम् ? 'आद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियो-

---

प्र०—पित्स्वरादिति । एतदत्राऽनुदात्तत्वविधाने सिद्धयति नाऽन्यत्रेति भावः । कार्येति । स्वरितत्वात्प्रागेकादेशं मन्यते । तत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्तित्स्वरः प्राप्नोति । परं प्रत्यादिवद्भावात्तु पित्स्वरप्रसङ्गः ।

नवेति । प्रत्ययसंज्ञासन्नियुक्तस्वरस्याऽन्तरङ्गत्वान्नास्ति विप्रतिषेध इति भावः ।

---

उ०—भाष्ये —न चाऽपवादेति । ञित्स्वरमिव प्रत्ययस्वरमपि बाधित्वा परत्वादस्वरकस्यैव लोपे औत्सी कंसिकीत्यत्रोदात्तनिवृत्तिस्वरो न प्राप्नोतीति भावः । प्रतीक्षत इति । लोपोत्तरमपि प्रत्ययलक्षणेन तत्प्रवृत्तेरिति भावः । ठच इति । अत्रेदं चिन्त्यम्,—अकारविशिष्टस्य प्रत्ययत्वे तस्यान्तरतम्यादिकादेशे आद्युदात्ते प्राप्तेऽन्तोदात्तादेशार्थं तत्सार्थक्यम् । व्यञ्जनमात्रस्य प्रत्ययत्वे तत्राऽद्युदात्तत्वाऽप्राप्त्या तद्विषयाद्युदात्तश्चेत्यस्य सामर्थ्यात्तदादेशे प्रवृत्त्यापत्तौ तद्बाधाय तत्सार्थक्यं स्पष्टमेवेति कथमस्य ज्ञापकत्वम् । 'प्रत्ययाः—अकारविशिष्टास्तत्र व्यञ्जनमात्रस्य व्यञ्जनान्त इकाद्यादेश इति पक्षस्तु 'ठस्येक' इति सूत्रस्थभाष्यस्वग्रन्थविरुद्धः, 'नैषादकर्षुक' इत्यत्र ह्रस्वाऽसिद्धयाऽसङ्गतश्च, गौरवग्रस्तश्च । किञ्च अत्राऽपि व्यञ्जनस्य प्रत्ययत्वे तदेकवाक्यतापन्नस्य तत्र फलाऽभावादादेशोत्तरं तत्रैव स्वरप्रवृत्तिरुचिता । अकारविशिष्टस्याऽपि प्रत्ययत्वे तस्याद्युदात्तत्वे तत्स्थाने आन्तरतम्यादाद्युदात्त एवैकादेश इति ज्ञापकोपन्यासे फलं चिन्त्यमिति दिक् ।

तत इति । कित्स्वरस्य यस्येति लोपेन बाधे एयस्य प्रत्ययस्वरप्रवृत्तावप्रवृत्तौ च दोष इति भावः । भाष्ये—एतस्याञ्च सत्यामित्यादि । एवञ्चाद्युदात्तस्य वा लोपार्थमिति खण्डितम् । इदानीम्प्रत्ययसंज्ञेति । अनेन हि पूर्वप्रयोजनानां खण्डितत्वान्मुख्यं प्रयोजनमिदानीमाहेत्यर्थाल्लभ्यते । स तु न युक्तः, एषामप्यग्रे भगवता खण्डनात् । यथान्यासे त्विति । अत्र पाठे हि विप्रतिषेधो न्याय्यो भवति । षाष्ठपाठे हि धातोरित्यस्य पूर्वत्वात्पूर्वविप्रतिषेधो वक्तव्यः स्यादिति भावः । भाष्ये—यत्राऽनुदात्ता प्रकृतिः समस्वमिति ।

---

* अनुदात्तौ सुप्पितौ ३ । १ । ४; तित्स्वरितम् ६ । १ । १८५ १—'पित्स्वराच्चित्स्वरश्चापि' पाठान्तरम् । † चितः ६ । १ । १६३ ‡ यङश्चाप् ४ । १ । ७४ २—'स्व' क्वचिन्न ।

गात्¹। प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे कृते सति शिष्टत्वाद्धातुस्वरो भविष्यति।

अयं चाऽप्ययुक्तो विप्रतिषेधः-पित्स्वरस्य तित्स्वरस्य च। किं कारणम्?

**टापि स्वरितेनैकादेशः॥ १५॥**

टापि स्वरितेनैकादेशो× भविष्यति॥ इदमिह संप्रधार्यम्—स्वरितत्वं क्रियतामेकादेश इति, किमत्र कर्तव्यम्? परत्वात्स्वरितत्वम्। नित्य एकादेशः। कृतेऽपि हि स्वरितत्वे प्राप्नोत्यकृतेऽपि। स्वरितत्वमपि नित्यम्। कृतेऽप्येकादेशे प्राप्नोत्यकृतेऽपि। अनित्यं स्वरितत्वम्। अन्यस्य कृत एकादेशे प्राप्नोत्यन्यस्याऽकृते। शब्दान्तरस्य च प्राप्नुन्विधिरनित्यो भवति। एकादेशोऽप्यनित्यः। अन्यथास्वरस्य कृते स्वरितत्वे प्राप्नोत्यन्यथास्वरस्याऽकृते स्वरितत्वे। स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति। [ उभयोरनित्ययोः परत्वात्स्वरितत्वम् ]²। अन्तरङ्गस्तर्ह्येकादेशः। काऽन्तरङ्गता? वर्णावाश्रित्यैकादेशः पदस्य स्वरितत्वम्। स्वरितत्वमप्यन्तरङ्गम्। कथम्? वक्ष्यत्येतत्—'पदग्रहणं परिमाणार्थ'मिति+। उभयोरन्तरङ्गयोः परत्वात्स्वरितत्वम्। स्वरितत्वे कृत आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति।

अयं चाऽप्ययुक्तो विप्रतिषेधः—पित्स्वरस्य चित्स्वरस्य च। किं कारणम्?

प्र०—परत्वात्स्वरितत्वमिति। अन्तरङ्गत्वं स्वरितत्वस्याऽनपेक्ष्यैतदुक्तम्। स्त्रीत्वापेक्षटाब्निमित्तो ह्येकादेशो बहिरङ्गः। आन्तर्यत इति। स्वरिते त्वनुदात्तोऽपि विद्यत इति स्वरिताऽनुदात्तयोः स्वरितोऽन्तरतमः।

उ०—ननु प्रातिपदिकप्रत्यये सर्वत्र चारितार्थ्याद्यत्राऽनुदात्तेत्यादि व्यर्थमिति चेन्न; प्रकृतेरुदात्तस्वरितत्वे प्रत्ययोत्पत्त्यनन्तरं प्रकृतिस्वरनिमित्तकशेषनिघातप्राप्त्या तदपवादत्वमस्य वाच्यम्; एवञ्च भाष्यसामान्यचिन्तया 'धातो'रित्यस्याप्यपवादः स्यादिति शङ्कावारणाय तदुक्तेः।

नाऽन्यत्रेति। तथा च तित्स्वरात्पित्स्वर एव परः स्यादिति भावः। 'कार्ये'त्यत्रोभयप्राप्तिं दर्शयति—तत्रैकादेशस्येति। प्रत्ययसंज्ञासन्नियुक्तेति। ननु षाष्ठन्यासेऽपि आये धातुसंज्ञातः परत्वात्पूर्वं, विषयभेदात्तत्समकालमेव वा प्रत्ययस्वरप्रवृत्तौ पश्चात्प्रवर्त्तमानस्य धातुस्वरस्य सतिशिष्टत्वमस्त्येवेति चेत् सत्यं; संज्ञास्वरयोर्विषयभेदेन विरोधाऽभावात् परत्वाप्रवृत्तेः। यौगपद्यमपि न, ज्ञानयौगपद्याऽसम्भवात्।

स्त्रीत्वाऽपेक्षेति। वस्तुतः शब्दशास्त्रत्वादर्थाधिक्याऽपेक्षाकृतं बहिरङ्गत्वमप्रयोजकमिति भाष्याशयः। 'कार्ये'त्यस्य विभज्यान्वाख्याने इदम्। भाष्ये—पदस्य स्वरित्वमिति। 'अनुदात्तम्पद'मित्यनेनैकवाक्यत्वादिति भावः। एवं च वर्णसमूहरूपपदसाऽपेक्षत्वात्स्वरित्वं बहिरङ्गमित्यभिमानः। परिमाणार्थमिति। 'पदत्वं

× अकः सवर्णे दीर्घः ६।१।१०१   १—'भवति' पाठान्तरम्।   २ अयं पाठो न सर्वत्र।
+ ४।३।१४० वा० ४

चापि चित्करणात् ॥ १६ ॥

चापि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति ॥ ३ ॥

## गुप्तिज्किद्भ्यः सन् ॥ ३ । १ । ५ ॥

[ गुपतिज्कितमाना अनुदात्तेतः । ] गुपादिष्वनुबन्धकरणं किमर्थम् ?

गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् ॥ १ ॥

गुपादिष्वनुबन्धाः क्रियन्ते, आत्मनेपदं यथा स्यात् † ॥ [ अथ ] क्रियमाणेष्वप्यनुबन्धेष्वात्मनेपदं नैव प्राप्नोति । किं कारणम् ? सना व्यवहितत्वात् । 'पूर्ववत्सनः' [ १ । ३ । ६२ ] इत्येवं भविष्यति । 'पूर्ववत्सन' इत्युच्यते न चैतेभ्यः प्राक् सन आत्मनेपदं, नापि परस्मैपदं पश्यामः । एवं तर्ह्यनुबन्धकरणसामर्थ्याद्भविष्यति ।

अथवाऽवयवे कृतं लिङ्गं समुदायस्य विशेषकं भविष्यति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं गोर्विशेषकं भवति ।

यद्यवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति [ तर्हि ] जुगुप्सयति मीमां-

प्र०—चापीति । यदि सामान्यग्रहणाऽविघातार्थत्वमेव चकारस्याऽभविष्यट्टाप्प्रत्ययप्रकरण एव यङ्ष्टाब्व्यवास्यतेति भावः ॥ ३ ॥

गुप्तिज्कि । गुबिति । अनुक्रमप्रदर्शनाय कितिः पठितो न त्वयमनुदात्तेत् । गुपादिष्विति । नित्यसन्विषयत्वात्केवलेभ्यो लडाद्यनुत्पादात्प्रश्नः ।

आत्मनेपदार्थमिति । सन्नन्तेभ्य इति भावः । पूर्ववदिति । लिङ्गातिदेशादिति भावः ।

उ०—यादृक्षवति यावतश्च भवति तावत्तावति च सन्निहितमेकवर्जं सर्वमनुदात्तम्भवतीत्यर्थ इति भावः । तेन पदसमुदायस्य न स्वरप्रवृत्तिकालेऽसन्निहितस्य च सिद्ध्यतीति बोध्यम् । अतएव धातोरित्यादिनाऽस्यैकवाक्यतेति दिक् । सामान्यग्रहणेति । द्व्यनुबन्धकत्वसम्पादनद्वारेति भावः । एवं शेषनिघातद्वाराऽऽगमाऽनुदात्तत्वसिद्धये एवात्रास्य सूत्रस्य पाठः । 'आगमाऽनुदात्तार्थं वे'त्येवोपक्रमोक्ता सिद्धान्त्युक्तिः । वचनान्तरकरणे गौरवम् । ज्ञापकन्तु नास्तीति पूर्वमेव निरूपितम् ॥ ३ ॥

गुप्तिज् । 'परदेत्रे चिकित्स्य' इति व्याधिप्रतीकारादावेव व्यवहाराज्जुगुप्सादेर्निन्दादावेव व्यवहारात्, 'गुप गोपने' 'कित निकेतने' इति प्रयोगाच्च, 'विचिकित्सा तु संशय' इत्यादिकोशबलाच्चाऽर्थविशेषोपहितेभ्य एव सन्निति बोध्यम् ।

वेदे 'विचिकित्सती'ति परस्मैपदप्रयोगदर्शनादाह—अनुक्रमेति । अत्राऽग्रहणे सूत्रे एव तदभाव आशङ्क्येति तन्निवारणायेत्यर्थः । भाष्येऽनुदात्तेत्करणं किमर्थमिति वक्तव्येऽनुबन्धकरणमित्युक्तिर्दानशा-

१—अयं पाठोऽसार्वत्रिकः । † अनुदात्तङित आत्मनेपदम् १ । ३ । १२; स्वरितञितः० १ । ३ । ७२

सयतीत्यत्रापि प्राप्नोति । अवयवे कृतं लिङ्गं तस्य समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरति । सनश्च न व्यभिचरति णिचं पुनर्व्यभिचरति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ॥ ५ ॥

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ३ । १ । ६ ॥

### अभ्यासदीर्घत्वेऽवर्णस्य दीर्घप्रसङ्गः ॥ १ ॥

अभ्यासस्य दीर्घत्वेऽवर्णस्य दीर्घत्वं प्राप्नोति—मीमांसते । ननु च इत्वे कृते† दीर्घत्वं भविष्यति । कथं पुनरुत्पत्तिसन्नियोगेन दीर्घत्वमुच्यमानमित्वं प्रतीक्षते ? अथ कथमभ्यासं प्रतीक्षते ? वचनादभ्यासं प्रतीक्षते । [ अभ्यासस्य दीर्घत्व-

प्र०—न चैतेभ्य इति । कार्यातिदेशोऽयं । लिङ्गातिदेशे तु अनुचिकीर्षतीत्यादावप्यात्मनेपदप्रसङ्ग इति भावः । एवं तर्हीति । सना व्यवधानेऽपीति भावः । अथवेति । यत्राऽवयवे लिङ्गाऽऽसङ्गस्य प्रयोजनं नास्ति तत्र समुदायाऽर्थं एवाऽसाविति भावः । शिष्टं भाष्यं 'पूर्ववत्सन' इत्यत्र विस्तरेण व्याख्यातं तत एवावधार्यम् ॥ ५ ॥

मान्बध । सामान्यविधेर्विशेषविधिर्बाधक इत्याह—अभ्यासदीर्घ इति । अथ कथमिति ।

उ०—नोर्न्युक्तस्वरितेत्त्वबोधनाय। यत्तु वृत्त्यादौ बधेरप्यनुदात्तेत्त्वमुक्तं तत्र मानं चिन्त्यम्, भाष्यविरोधश्च । एवं कितेः परस्मैपदित्वेऽपि भाष्याऽनुग्रहश्चिन्त्यः । वैदिकपरस्मैपदिप्रयोगास्तु छान्दसत्वादपि सुसाधाः । लोके त्वात्मनेपदमेवाचितम् । एवञ्च बधेरपि स्वरितत्त्वं परस्मैपदित्वमेव वोचितमिति वदन्ति । केवलेभ्य इति । सनन्ते प्रतीयमानार्थवृत्तिभ्य इत्यर्थः । तदर्थवृत्तीनामेवाऽनुदात्तेत्त्वादिति भावः । अत एवाऽर्थान्तरे नानुबन्धकत्वमिति वृत्त्यादावुक्तम् । भाष्ये न चैतेभ्य इति । सनन्ते प्रतीयमानार्थवृत्तिभ्य इत्यर्थः । नाऽपि परस्मैपदमित । । बधदान्शानभिप्रायेणेदम् । यत्राऽवयवे इति । भाष्ये—अवयवे कृतमित्यस्य 'निष्फलञ्चे'-दिति शेषो बोध्यः ॥ ५ ॥

मान्बध । ननु परत्वादित्वे दीर्घप्राप्तेः कथमवर्णस्य दीर्घोऽत आह—सामान्येति । भाष्ये—उत्पत्तिसन्नियोगेनेति । ननु धातुमात्रोद्देशेन सन्, सन्निमित्तकाभ्यासोद्देश्यकश्च दीर्घ इति कथं तयोः सन्नियोग इति चेन्न, बोधसन्नियोगेन तदुत्पत्तिसन्नियोगोऽपीत्यभिमानात् । वचनादभ्यासमिति । एवञ्च सन्नियोग एवाऽसिद्ध इति भावः । अत एव पूर्वं विशेषविधित्वेनैव बाधकत्वमुक्तं कैयटेनेति केचित् । परेतु तद्बोधसन्नियोगेनाऽनैमित्तिकत्वरूपमन्तरङ्गत्वं बोध्यत इति वदन्ति । न प्रतीक्षत इति । किन्तु विशेषविधित्वाद-न्तरङ्गत्वाद्वा बाधत एवेति भावः । न वाऽभ्यासविकारेष्वपवादेति । अपवादपदं बाधकोपलक्षणम् । एतेन यत्राऽन्यतरप्रवृत्त्युत्तरमन्यतरस्य प्रवृत्त्ययोग्यत्वाऽभावस्तत्रैवेदमिति परास्तम् । एतच्चेति । यंयम्यत इत्यादौ

१—'कस्य' इति पा० । † सन्यतः ७ । ४ । ७९

विधानात् । ] इत्वं पुनर्न प्रतीयते ।

**न वाऽभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात् ॥ २ ॥**

न वैष दोषः । किं कारणम् ? 'अभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात्' । 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त'इत्येवं दीर्घत्वमुच्यमानमित्वं न बाधिष्यते ।

अथवा 'मान्बधदान्शान्भ्य ई चाऽभ्यासस्ये'ति वक्ष्यामि । एवमपि हलादिशेषापवाद* ईकारः प्राप्नोति । 'ई चाऽच' इति वक्ष्यामि ।

अथवा 'मान्बधदान्शान्भ्यो दीर्घश्चेतोऽभ्यासस्ये'ति वक्ष्यामि । सिद्ध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवाऽस्तु । ननु चोक्तम्—'अभ्यासदीर्घत्वेऽवर्णस्य दीर्घप्रसङ्ग' इति । परिहृतमेतत् 'नवाऽभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वा'दिति ।

अथवा नैवं विज्ञायते 'दीर्घश्चाऽभ्यासस्ये'ति । कथं तर्हि ? 'दीर्घश्च आभ्यासस्ये'ति । किमिदमाभ्यासस्येति ? अभ्यासस्य विकार आभ्यासः, तस्येति ॥ ६ ॥

प्र०—यथाऽभ्यासस्येति वचनाद्दीर्घत्वमभ्यासमपेक्षते तथा वचनान्तरविहितमित्वमपीति भावः । **अभ्यासविकारेष्विति** । एतच्च 'दीर्घोऽकित'इत्यत्राकिद्ग्रहणेन ज्ञापयिष्यते । **ई चाऽच इति** । अजन्तस्येत्यर्थः । न चाऽकृते हलादिशेषेऽजन्तत्वं भवति । **अभ्यासविकार इति** । स चेत्वमेव । तथा हि लोपस्य तावदादेशो विधातुमशक्यः, तस्याऽभावरूपत्वात् । यदि च ह्रस्वस्य दीर्घत्वं स्यात्तद्धितनिर्देशोऽनर्थकः स्यात् । दीर्घश्रुत्याऽच्परिभाषोपस्थानादजन्तस्य दीर्घविधानाद्दीर्घस्य ह्रस्वस्य वा दीर्घविधाने विशेषाऽभावात् । तस्मादित्वमेव तद्धितेन प्रत्याय्यते । अथवाऽऽहत्य सनि यो विहितो विकारः 'सन्यत' इति, तस्यैव ग्रहणं विज्ञायते । ह्रस्वश्च मानादीनामिव बधेरपि पर्जन्यवल्लक्षणप्रवृत्त्या भवति ॥ ६ ॥

उ०—नुकि अजन्तत्वाऽभावाद्दीर्घाऽप्राप्तौ 'चरीकर्त्ती'त्यादौ रिको रीग्विधिसामर्थ्येन तदप्राप्तौ व्यर्थमकित इति प्रकृतार्थज्ञापकमित्यर्थः । तेन यथायोगं पूर्वमुत्सर्गप्रवृत्तावपवादप्रवृत्तिः, अपवादप्रवृत्तावपि वा पुनरुत्सर्गप्रवृत्तिरिति बोध्यम् ।

यद्यपि 'ई चाऽच'इत्यत्राऽच इत्यस्य वैयधिकरण्येनाऽन्वयेऽपि न क्षतिस्तथापि सामानाऽधिकरण्यस्य न्याय्यत्वादाह—अजन्तस्येति । 'ई चाऽचोऽभ्यासस्य', 'दीर्घश्चेतोभ्यासस्ये'ति पक्षद्वयेपि सूत्रभेदो दूषणम् । ननु तद्धितेन ह्रस्वग्रहणे बधिर्व्यावर्त्त्यः, तत्र फलाऽभावेन ह्रस्वाऽभावादत आह—ह्रस्वश्चेति । अत्र 'न वाऽभ्यासविकारे'ष्वित्येव समाधानं युक्तम् ॥ ६ ॥

१ '—क्वाचित्कम् । * हलादिः शेषः ७ । ४ । ६०

## धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ३ । १ । ७ ॥

धातोरिति किमर्थम् ? प्रकर्तुमैच्छत् प्राचिकीर्षत् । सोपसर्गादुत्पत्तिर्मा भूदिति ।

### कर्मग्रहणात्सन्निधौ धातुग्रहणानर्थक्यम् ॥ १ ॥

कर्मग्रहणात्सन्निधौ धातुग्रहणमनर्थकम् । 'कर्मणः समानकर्तृकादिच्छायां वा सन् भवतो' त्येव धातोरुत्पत्तिर्भविष्यति । सोपसर्गं वै कर्म, तत उत्पत्तिः प्राप्नोति ।

### सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्याऽनुपसर्गं कर्म ॥ २ ॥

सोपसर्गं कर्मेति चेत्कर्मविशेषक उपसर्गः । अनुपसर्गमेव हि कर्म ॥ अवश्यं

---

प्र०—धातोः कर्मणः । धातोरर्थद्वारके कर्मत्व-समानकर्तृकत्वे । ते चेच्छायाः प्रत्ययार्थत्वेऽपि सन्निधानात्तदन्वेते एव गृह्येते । एवं च प्रकृत्यर्थोपसर्जनः प्रत्ययार्थो भवति, अन्यथा प्रकृतिप्रत्ययार्थयोरसंबन्धः स्यात् । वार्तिकाऽवतारणाय प्रश्नं करोति—धातोरिति किमर्थमिति । अयं भावः-धातुरेव क्रियावाची, उपसर्गस्तु विशेषकः । ततश्चाऽर्थद्वारके कर्मत्वसमानकर्तृकत्वे धातोरेव संभवत इति । सोपसर्गादिति । सङ्घातेन विशिष्टा क्रिया प्रतिपाद्यत इति तत एव सनुत्पत्तिप्रसङ्गः । ततश्च सङ्घातादेरेव द्विर्वचनादिप्रसङ्ग इति भावः ।

कर्म्मग्रहणादिति । एतदुपलक्षणम्, तेन 'समानकर्तृकग्रहणा' दित्यपि बोद्धव्यम् । सोपसर्गमिति । सङ्घातस्य क्रियाविशेषाऽभिधायित्वादिति भावः । कर्मविशेषक इति । अत एव वचनात् षष्ठीसमासप्रतिषेधोऽनित्यः । अयमर्थः—धातुरेव क्रियावाचीति तदर्थस्यैव कर्म्मत्वं न तूपसर्गार्थस्यापि । यथोक्तं 'कट एव कर्म्म तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीया भविष्यती'ति । अथाऽपि विशेषणस्य पृथक्कर्मत्वम् । यथोक्तं'कटोऽपि कर्म भीष्मादयोपी'ति तथापि

---

उ०—धातो कर्मणः । शब्दस्य धातोः कर्मत्वसमानकर्तृकत्वाऽसम्भवात्सूत्रे सामानाधिकरण्याऽनुपपत्तिः । ताभ्यां वार्तिकोक्तधातुग्रहणप्रत्याख्यानाऽनुपपत्तिश्चेत्यत आह—अर्थद्वारके इति । नन्विच्छायामिति सप्तम्यन्तत्वात्कर्मण इत्यादिनाऽन्वयाऽयोग्यमितीच्छारूपेऽर्थे धात्वन्तरार्थकर्मणस्ते न समानकर्तृकादपि सन्स्यादत आह—ते चेति । सन्निधानाद्विभक्तिविपरिणामेन तयोरपि सा विशेषणमिति भावः ।

न केवलं सन्निधानादेव तयोरिच्छाऽपेक्षत्वं किन्तु प्रकृतिप्रत्ययार्थयोःसामर्थ्याऽनुपपत्त्याऽपीत्याह—एवं हीति । वार्त्तिकावतारणायेति । धातुपदस्य प्रयोजने दर्शिते तत्सिद्धिस्तदन्तरेणाऽपि भवतीति वार्त्तिकेन दर्शयितुं शक्यत इति भावः । सोपसर्गव्यावृत्तिर्न फलमित्याह—धातुरेवेति । प्रकृत्यस्येच्छाविषयत्वप्रतीतिविषयसामानाधिकरण्यात्कटसामानाधिकरण्याद्भीष्मादेः कर्मत्वमिवेति भावः । भाष्ये–प्राचिकीर्षदिति । यद्यपि लट्यपि द्विर्वचने दोषस्तथाप्यदृकृतमधिकं दोषं वक्तुं लङुदाहृतः । सङ्घातेनेति । धातुपदाऽभावे विशिष्टस्यैवेच्छाविषयत्वेन कर्मत्वात्तद्वाचकादेव सन्प्रसङ्ग इति भावः । सुबन्तार्थस्याऽपि कर्मत्वात्ततः सन्स्यादत आह—

चैतदेवं विज्ञेयमनुपसर्गं कर्मेति ।

**सोपसर्गस्य हि कर्मत्वे धात्वाधिकारेऽपि सनोऽविधानमकर्मत्वात् ॥३॥**

यो हि मन्यते सोपसर्गं कर्मेति, क्रियमाणेऽपि तस्य धातुग्रहणे सनोऽविधिः स्यात् । किं कारणम् ? 'अकर्मत्वात्' ॥ इदं तर्हि प्रयोजनं सुबन्तादुत्पत्तिर्मा भूत् ।

**सुबन्ताच्चाऽप्रसङ्गः क्यजादीनामपवादत्वात् ॥ ४ ॥**

सुबन्ताच्च सनोऽप्रसङ्गः । किं कारणम् ? 'क्यजादीनामपवादत्वात्' । सुबन्तात्क्यजादयो विधीयन्ते† तेऽपवादत्वाद्बाधका भविष्यन्ति ।

**अनभिधानाद्वा ॥ ५ ॥**

अथवाऽनभिधानात्सुबन्तादुत्पत्तिर्न भविष्यति । नहि सुबन्तादुत्पद्यमानेन सनेच्छाया अभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ।

प्र०—कर्म्मसमुदायस्याऽकर्मत्वात्समुदायादुत्पत्तिर्न भविष्यति । सोपसर्गस्य हीति । यदि सङ्घातस्यार्थद्वारकं कर्मत्वं स्यात्तदा अवयवस्याऽकर्मत्वात्ततः सन्प्रत्ययो न स्यात् । 'कर्म्मण'इत्येषा [ हि ] पञ्चमी । षष्ठ्यां तु सत्यां कर्मणोऽवयवाद्धातोः सन्नित्याश्रीयमाणेऽनुपसर्गात्र स्यात् । तस्मात्—

अडादीनां व्यवस्थायै पृथक्त्वेन प्रकल्पनात् ।
धातूपसर्गयोर्धातुः क्रियावाचीति निर्णयः ॥

सुबन्तादिति । विकल्पितत्वात्सनः पक्षे साऽवकाशाः क्यजादय इति भावः । 'प्रातिपदिका'दिति तु नोक्तम् । 'कर्म्मण' इति वचनात्, कर्मत्वे च सति सुबन्ततताया अवश्यं भावात् ।

उ०—एतदिति । तद्ध्वनयन्नाह भाष्ये—कर्मणः समानकर्तृकादिति । प्रतिषेधइति । 'तृजकाभ्या'मित्यादिः । याजकादित्वात्समास इत्यन्ये । धातुरेवेति । सङ्घातेन विशिष्टक्रियाऽवगतावपि विशेष्यस्यैव कर्मत्वं, प्राधान्यादिति भावः । तत्र दृष्टान्तमाह—यथोक्तमिति । प्रधानस्यैव कर्मत्वमित्यत्रार्थे दृष्टान्तोऽयम् । यद्यपि तत्र तद्विशेषणेऽपि सा शक्तिरिति तात्पर्यंन्तथापि समानाधिकरणविशेषण एव तथा, उपसर्गोऽर्थस्तु व्यधिकरण इति दिक् । 'अथाऽपि विशेषस्ये'ति पाठः । धात्वर्थगतविशेषरूपस्योपसर्गार्थस्येत्यर्थः । क्वचित्तु 'विशेषणस्ये'ति पाठः । तत्राऽप्ययमेवार्थः ।

समुदायस्याऽकर्मत्वादिति । ननु 'प्रतिष्ठासते' इत्यादौ 'प्र'समभिव्याहारे गतेरेव प्रतीयमानत्वात् सैव कर्मेति धातुग्रहणाऽभावे तत्प्रतिपादकात्सोपसर्गादेव स्यादिति चेन्न, तत्राऽपि आदिकर्मद्योतकतायाः 'प्र'शब्दे भूवादिसूत्रे भाष्य उक्तेः ।

भाष्ये—धात्वधिकारेऽपीति । नन्वस्याऽस्वरितत्वादधिकारपदप्रयोगोऽयुक्त इति चेन्न, नेदमधिकारपदं स्वरितपरं, किन्तु करणं कारः, अधिकः कारोऽधिकारः । धातोरित्यस्याऽधिकस्य करणेऽपीत्यर्थः ।

† सुप आत्मनः क्यच् ३ । १ । ८

इयं तावदगतिकागतिर्यदुच्यते—'अनभिधाना'दिति ॥ यदप्युच्यते—सुबन्ताच्चाऽप्रसङ्गः क्यजादीनामपवादत्वा'दिति, भवेत्कस्माच्चिदप्रसङ्गः स्यादात्मेच्छायाम् । परेच्छायां तु प्राप्नोति—'राज्ञः पुत्त्रमिच्छती'ति ।

एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति । किम् ? समानकर्तृकादित्युच्यते न च सुबन्तस्य समानः कर्ताऽस्ति ।

एवमपि भवेत्—कस्माच्चिदप्रसङ्गः स्याद्यस्य कर्ता नास्ति, इह तु प्राप्नोति—आसितुमिच्छति शयितुमिच्छतीति । इच्छायामर्थे सन् विधीयते, इच्छार्थेषु च

---

प्र०—क्यजादीनामिति । कर्ममात्रे सन्विधिः, कर्म्मविशेषात्सुबन्तात्क्यजादय इति भावः । यत्र चोत्सर्गापवादौ विभाषा तत्राऽपवादेन मुक्त उत्सर्गो न भवति, अपि तु वाक्यमेव । इयं तावदिति । लक्षणाश्रया लक्ष्यस्य व्यवस्था न्याय्या, लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्यन्तराऽभावादिति भावः । व्यपदेश्यं सदिति । सच्छोभनं यद्व्यपदेशार्हं तन्न व्यपदिशति । न च सुबन्तस्येति । पुत्रादेः सत्त्वभूताऽर्थाभिधायित्वात्साध्यस्यैव साधनसंबन्धयोग्यत्वादिति भावः । 'कटं करोती'त्यादावपि सुबन्तेन सिद्धरूपोऽर्थोऽभिधीयते । शब्दाऽन्तरसन्निधानात्तु साध्यता प्रतीयते । यथोक्तं हरिणा—

निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः ।
क्रियाणामेव साध्यत्वात्सिद्धरूपोऽभिधीयते ॥ इति ।

आसितुमिच्छतीति । तुमुनन्तस्य साध्यरूपाऽभिधायित्वादस्ति कर्त्रा योग इति भावः । 'क्यचि मान्ताऽव्ययप्रतिषेध' इति क्यजत्र प्रतिषिद्धः । तुमुनोक्तत्वादिति । तुमुन्निमित्तेनेच्छतीत्यनेनेत्यर्थः । न चेच्छतीत्यस्य प्रयोगं बाधित्वा सन्भवतीति युज्यते वक्तुम् । उपपदनिमित्तत्वात्तुमुनस्तदभावेऽभावप्रसङ्गात् । आसनमिच्छतीति । ल्युड्भावमात्रे विधीयते न त्विच्छार्थे-

---

उ०—अवयवस्याकर्मत्वादिति । कर्मत्वपर्याप्त्यनधिकरणत्वादित्यर्थः । अवयवषष्ठ्यां समुदायस्य कर्मत्वेऽपि न दोष इत्यत आह—षष्ठ्यान्त्विति । अनुपसर्गाच्चेति । न च व्यपदेशिवद्भावः, अग्रे भाष्ये वक्ष्यमाणत्वादित्याहुः । तस्मादिति । तेनाऽऽचार्येण तयोः पृथक्त्वेन कल्पनात् क्रियावाचिनां च धातुत्वादुपसर्गरहित एव क्रियावाचीति निर्णय इत्यर्थः । पार्थक्यकल्पनाफलञ्चाऽडादिव्यवस्था । 'समानकर्तृका'दित्यनेन क्रियावाचकादेव सनो विधानमिति न तद्विशिष्टात्सनिति भावः । कर्मत्वे च सतीति । कर्मत्वादिद्योतकत्वाद्विभक्तेरिति भावः ।

कर्मविशेषादिति । क्यजादीनामप्येकार्थीभाव एव प्रवृत्तेः सनभावे तदभावान्न क्यजादीनां सावकाशतेति भावः । एतेन क्यजाद्यभावे सन्स्यादित्यपास्तम् । तद्ध्वनयन्नाह—यत्र चेति ।

लक्षणाश्रयेति । बोद्धॄणां लक्षणैकचक्षुष्कत्वादिति भावः । भाष्ये-आत्मेच्छायामिति । 'कर्मीभूता'दिति शेषः । साध्यस्यैवेति । साध्यत्वेन प्रतीयमानस्यैवेत्यर्थः । साध्यता प्रतीयत इति । सा च न कारकाऽन्वयिताऽवच्छेदिकेति भावः । साधनाश्रय इति । कर्मत्वलक्षणशक्त्याश्रय इत्यर्थः । क्रियाणामेव साध्य-

तुमुन्‡ । तत्र तुमुनोक्तत्वात्तस्याऽर्थस्य सन्न भविष्यति ।

एवमपीह प्राप्नोति—आसनमिच्छति शयनमिच्छतीति+ । इह यो विशेष उपाधिर्वोपादीयते, द्योत्ये तस्मिंस्तेन भवितव्यम् । यश्चेहार्थो गम्यते—आसितुमिच्छति शयितुमिच्छतीति स्वयं तां क्रियां कर्तुमिच्छतीति; नासाविह गम्यते—आसनमिच्छति शयनमिच्छतीति । अन्यस्याप्यासनमिच्छतीत्येषोऽप्यर्थो गम्यते । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते'ऽद्योत्ये तस्मिंस्तेन भवितव्य'मिति, क्रियमाणेऽपि तस्य धातुग्रहण इह प्रसज्येत—'सङ्गतमिच्छति देवदत्तो यज्ञदत्तेने'ति ।

**कर्मसमानकर्तृकग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात् ॥ ६ ॥**

कर्मसमानकर्त्तृकग्रहणं चानर्थकम् । किं कारणम् ? 'इच्छाऽभिधाने प्रत्ययविधा-

प्र०—षूपपदेष्विति भावः । धातुवाच्यक्रियेच्छं च समानकर्तृकत्वमस्ति । इह यो विशेष इति । समानशब्दस्तदन्तवाच्योऽर्थ उपाधिरन्यस्तु विशेष इति भावः । क्वचित्त्वभेदेन व्यवहारः । आसितुमिच्छतीति । वृत्तिसमानाऽर्थेन, वाक्येन भवितव्यम् । आसिसिषत इत्यस्य चाऽऽसितुमिच्छतीति समानार्थं भवतीति भवत्यासेः सन्प्रत्ययः । आसनमिच्छतीत्यत्र तु किमात्मन आसनमिच्छत्यथ परस्येति सन्देहात्समानकर्तृकत्वाऽप्रतिपत्तिरित्यासनशब्दात्सन्प्रत्ययो न भविष्यति । न ह्यतः सनुत्पद्यमानः समानकर्तृकत्वलक्षणं विशेषमन्तर्भावयितुं शक्नोतीति भावः । सङ्गतमिच्छतीति । केवलस्य धातोः प्रयोगाऽभावात्क्तप्रत्ययोपादानं, धातोरेव तु सन्प्रसङ्ग इत्युच्यते । अत्र च किमात्मकर्तृकं सङ्गतमिच्छत्यथ परकर्तृकमिति सन्देहाद्यदा समानकर्तृकत्वं नाऽवधार्यते तदा न भाव्यम् । यदा तु समानकर्तृकत्वं प्रतिपिपादयिषितं तदा भवितव्यमेव सना, 'संजिगंसते वत्सो मात्रे'ति ।

कर्मेति । इच्छायाः कर्मणाऽवश्यं भाव्यमिति प्रत्यासत्त्या प्रकृत्यर्थ एव कर्मत्वेनाश्रयिष्यते न तु तद्व्यतिरिक्तमिति 'गमनेनेच्छती'ति सन्न भविष्यति । प्रत्यासत्त्यैव च समानकर्तृकत्वमाश्रयिष्यत इति 'देवदत्तस्य भोजनमिच्छती'त्यत्रापि न भविष्यतीत्येतन्न्यायमूलमनभिधानम् ।

उ०—त्वात्-साध्यत्वेन प्रतीयमानत्वात् सिद्धरूपः-सिद्धत्वेनैव स प्रतीयत इत्यर्थः । तुमुनन्तस्येति । 'अव्ययकृत'इति वचनात्तस्य साध्यरूपभावाऽभिधायितेत्यर्थः । तुमुन इच्छावाचकत्वाऽभावादाह—तुमुन्निमित्तेनेति । 'समानकर्तृकेषु तुमुन्नि' त्यत्रेच्छार्थेष्वित्यनुवृत्तेस्तस्य तन्निमित्तत्वम् । तदभाव इति । सनस्तु नोपपदत्वं, महासंज्ञाविरोधात् ।

नन्वनस्य सिद्धरूपभावाऽभिधायित्वेन कथं कर्तृसम्बन्ध इत्यत आह—धातुवाच्येति । भाष्ये-द्योत्ये तस्मिन्निति । वृत्त्या शब्दजन्यबोधविषय इत्यर्थः । वृत्तीति । तुमुनन्ते विग्रहवाक्ये समानकर्तृकत्वे तुमुनो विधानात्समानकर्तृकत्वप्रतीतेस्तद्युक्तं समानकर्तृकत्वविषयसनो विग्रहवाक्यम् । भावविषयल्युडन्ते तु तदनि-

‡ समानकर्तृकेषु तुमुन् ३ । ३ । १५८ + ल्युट् च ३ । ३ । ११५

नात्' । इच्छायामभिधेयायां सन्विधीयते ।

**अकर्मणो ह्यसमानकर्तृकाद्वाऽनभिधानम् ॥ ७ ॥**

इच्छायामभिधेयायां सन्विधीयते, न चाऽकर्म्मणोऽसमानकर्तृकाद्वोत्पद्यमानेन सनेच्छाया अभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ।

**अङ्गपरिमाणार्थं तु ॥ ८ ॥**

अङ्गपरिमाणार्थं तर्ह्यन्यतरत्कर्तव्यं कर्मग्रहणं धातुग्रहणं वा,—'अङ्गपरिमाणं ज्ञास्यामी'ति ।

प्र०—इह नित्यानां शब्दानां सङ्कीर्णप्रयोगदर्शने सति साध्वसाधुविभागाय शास्त्रारम्भः । न च गमनेनेच्छति देवदत्तस्य भोजनमिच्छतीत्यत्राऽर्थे जिगमिषति बुभुक्षत इत्यादिप्रयोगोऽस्तीति किं तन्निवृत्त्यर्थेन विशेषणोपादानेनेत्यर्थः ।

अङ्गपरिमाणार्थं त्विति । 'इच्छायां वे'त्येतावत्युच्यमाने यद्यपि प्रत्ययपरत्वेन पूर्वा प्रकृतिराक्षिप्यते तथापि 'प्राऽचिकीर्ष'दित्यादौ सोपसर्गस्याऽङ्गत्वं स्यात् । यदा तु साक्षात्प्रकृतिर्विशिष्टा निर्दिश्यते तदाऽङ्गपरिमाणं ज्ञायते । अन्यतरदिति । त्रितये प्रत्याख्यातेऽन्यतममिति वक्तव्ये समानकर्तृग्रहणं न कर्तव्यमेव गौरवप्रसङ्गादिति मत्वा'ऽन्यतर'दित्युक्तम् । धातुग्रहणमेवेति । कार्यान्तरस्यापि संपादनादित्यर्थः । धातुशब्दोच्चारणेन धातोर्विहितस्यार्द्धधातुकसंज्ञोक्ता । तथा च पूर्वसूत्रद्वयविहितस्य सनस्तदभावाज्जुगुप्सत इत्यादाविडभावः । एतत्सूत्रविहितस्य तु सन आर्द्धधातुकत्वाच्छिशयिषत इत्यादाविड्गुणौ भवतः । नन्विको झलिति कित्त्वमार्द्धधातुकत्वनिमित्तगुणनिषेधार्थं सन आर्द्धधातुकसंज्ञायां ज्ञापकं भविष्यति । नैतदस्ति । सामान्येन ज्ञापके व्याख्यायमाने सर्वत्र सनः प्रसङ्गः । विशेषविषये त्विगन्तप्रकृतेरेव स्यादिति धातुग्रहणं कर्तव्यम् । स्वपक्ष इति । यद्यपि सर्व एव स्वपक्षं वर्णयन्ति तथापि परपक्षदूषणाऽभिनिवेशादयुक्तोऽपि स्वपक्षो वर्णित इत्युक्तं भवति । युक्तमिति । यदेव न्याय्यं तदेव ग्राह्यं न तु दुरभिनिवेशः कार्य इत्यर्थः ।

उ०—श्रयान्न तत्सनो विग्रहवाक्यमिति नाऽऽसनशब्दात्सनुत्पत्तिरिति भावः । नह्यत इति । विग्रहे तदप्रतीतेः । नह्याऽऽसनशब्दगर्भं समानकर्तृकत्वप्रतीतियोग्यं विग्रहवाक्यमस्तीति तदभावात्ततः सनोऽनुत्पत्तिरेवाऽनुमीयत इति भावः । 'पद्यामीच्छति देवदत्त' इत्यादौ तिङन्तात्स्यादिति तु नाऽऽपाद्यं, कर्ममात्रबोधकत्वाऽभावात्, अतिरिक्तस्य कर्त्रादेरपि भावादित्याहुः । अनाऽन्तात्क्तान्तेऽविशेषं द्रष्टवाह—केवलस्येति । यदा त्विति । सङ्गन्तुमिच्छतीति विग्रहवाक्यस्य सन्प्रकृतिधातुगर्भस्य सम्भवादिति भावः ।

नन्वनभिधानादिति भाष्यमनुपपन्नं, समानकर्तृत्वादेर्द्योत्याङ्गीकारेण तदभावे तस्य द्योत्यत्वे प्रमाणाऽभावात्, तस्याऽगतित्वाच्चेत्यत आह—इच्छाया इति । सविषयत्वादित्यर्थः । करणाद्याकाङ्क्षा तु न नियतेति भावः । व्याप्तिन्यायाश्रयणेऽपि समाधत्ते—इह नित्यानामिति । तत्र समानकर्तृकत्वादिप्रकारकबोधो लोकव्युत्पत्तेरेव, न हि सर्वत्र व्याकरणमेव शक्तिग्राहकमस्तीति भावः ।

किं पुनरत्र ज्यायः ? धातुग्रहणमेव ज्यायः । अङ्गपरिमाणं चैव विज्ञातं भवत्यपि च 'धातोर्विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञो भवती'ति सन आर्द्धधातुकसंज्ञा सिद्धा भवति × ।

यच्चाऽप्येतदुक्तं—'कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यं, सोपसर्गं कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्याऽनुपसर्गं कर्म, सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वा'दिति स्वपक्षोऽनेन वर्णितः । युक्तमिह द्रष्टव्यं—किं न्याय्यं कर्मेति । एतच्चाऽत्र युक्तं यत्सोपसर्गं कर्म स्यात् । ननु चोक्तं—'सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वा'दिति । नैष दोषः । 'कर्मणः' इति नैषा धातुसमानाधिकरणा पञ्चमी—'कर्मणो धातो'रिति । किं तर्हि ? अवयवयोगैषा षष्ठी 'कर्मणो यो धातुरवयव' इति । यद्यवयवयोगैषा षष्ठी—'केवलादुत्पत्तिर्न प्राप्नोति,—

प्र०—यत्सोपसर्गमिति । धातूपसर्गसङ्घातेन हि क्रियाविशेषस्य प्रक्रमादर्थद्वारकं तस्यैव कर्मत्वमित्यर्थः । विशिष्टैव च क्रिया साधनेन निर्वर्त्यते न तूत्पन्ना सती विशेषणेनाऽन्यत उत्पन्नेनाऽभिसंबद्ध्यते । तत्र यद्यपि धातुर्वाचक उपसर्गस्तु द्योतकस्तथाप्यसति धातुग्रहणे वाचकद्योतकविभागस्य शब्देनेहाऽनङ्गीकृतत्वात्सङ्घातादेवोत्पत्तिः स्यादिति भावः । 'उपपदमति'-ङित्यत्र च 'साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि' इत्युत्पत्तिविशिष्टाया एव क्रियाया आश्रित्योक्तमित्यविरोधः । अथवा सत्यपि धातोः पूर्वं साधनयोगे इषिकर्मत्वमिह विशिष्टाया एव क्रियायाः प्रतिपाद्यमिति पूर्वमुपसर्गेण संबन्धो धातुग्रहणेऽसति सोपसर्गात्सन 'उत्पत्तिप्रसङ्ग एव । किं तर्हीति । व्याप्तिग्रहणाय षष्ठीपक्ष आश्रीयते, पञ्चम्यां हि सत्यामनुपसर्गादेवोत्पत्तिः स्यान्न तु सोपसर्गात् । षष्ठीपक्षे तु सोपसर्गादपि सिध्यति । एषोपीति । प्रयोगभेदान्नानारूपस्य कर्माभिधायिनोऽवयवः सन्प्रकृतित्वेनाश्रीयमाणो धातुरित्यर्थः । काममिति । इच्छयेत्यर्थः ।

उ०—ननु प्रत्यासत्त्या कर्मबोधकात्प्रत्ययेऽङ्गपरिमाणं ज्ञातमेवेत्यत आह—इच्छायां वेति । न कर्तव्यमेवेति । उत्तरसूत्रकर्तव्यमात्मन इत्यत्रैव कार्यम् । तत्रेच्छायामात्मन इत्यस्य कर्तृत्वेनाऽन्वयस्य क्लृप्तत्वादन्तरङ्गत्वाच्च धातावपि तेनैव सम्बन्धेनाऽन्वयः । एवञ्च प्रत्यासत्त्योभयकर्त्रोरेकत्व एव प्रवृत्तिरिति भावः । 'धातुशब्दोच्चारणेने'त्यस्य फलमाह—तथा चेति । क्रियाविशेषस्य—विशिष्टक्रियायाः । प्रक्रमात्—बोधनात् । विशिष्टैवेति । उपसर्गद्योत्यार्थविशिष्टैवेत्यर्थः । साधनेन—तत्तत्प्रयुक्तकार्येण । निर्वर्त्यते—उत्पन्नबोधविषयीक्रियते । उत्पन्ना—उत्पन्नबोधा । अन्यत उत्पन्नेन,—अन्यत उत्पन्नबोधेन । तथाप्यसतीति । 'कर्मणः' इत्यस्य कर्मबोधकादित्यर्थः स्यादिति भावः । उत्पत्तिविशिष्टाया एव क्रियाया इति । विशिष्टाया एव क्रियाया धातुमात्राद्बोधोत्पत्तिमाश्रित्येत्यर्थः । एवं च पक्षान्तरत्वादविरोध इति भावः । अथवेति । साधनसंबन्धोत्तर-

× आर्द्धधातुकं शेषः ३ । ४ । ११४; ( आर्धधातुकस्येड्वलादेः ७ । २ । ३५; सार्वधातुकार्द्धधातुकयोः ७ । ३ । ८४ )

चिकीर्षति जिहीर्षतीति । एषोऽपि व्यपदेशिवद्भावेन कर्मणो धातुरवयवो भवति ।

कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यो+ 'महान्तं पुत्रमिच्छती'ति,-कर्मणो यत्सुबन्तमवयव इति । न कर्तव्यः । असामर्थ्यान्न भविष्यति । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति ।

**वावचनानर्थक्यं च तत्र नित्यत्वात्सनः ॥ ९ ॥**

वावचनं चाऽनर्थकम् । किं कारणम् ? 'तत्र नित्यत्वात्सनः' । इह द्वौ पक्षौ वृत्तिपक्षश्चाऽवृत्तिपक्षश्च । स्वभावतश्चैतद्भवति—वाक्यं च प्रत्ययश्च । तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्द्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाऽभावाविष्येते । तस्मान्नाऽर्थो वावचनेन ।

**तुमुनन्ताद्वा तस्य च लुग्वचनम् ॥ १० ॥**

तुमुनन्ताद्वा सन् वक्तव्यस्तस्य च तुमुनो लुग्वक्तव्यः । कर्तुमिच्छति चिकीर्षति ।

प्र०—इच्छाया व्याघाताऽभावादित्यर्थः । असामर्थ्यादिति । सुबन्तात्क्यज्विधानात्पदविधित्वात्समर्थपरिभाषोपस्थानादिति भावः । सन्विधौ तु तदनुपस्थानात्सापेक्षादपि सन उत्पत्तिः । अथवा धातुरेव विशिष्टां क्रियामाह, उपसर्गस्तु द्योतक इति सापेक्षत्वाऽभावः ।

वावचनानर्थक्यं चेति । वृत्तेरेकार्थीभावविषयत्वाद्व्यपेक्षाविषयत्वाच्च वाक्यस्य भिन्नार्थत्वाद्बाध्यबाधकभावाऽप्रसङ्गादिति भावः । न च संज्ञाया इति । अनर्थः प्रत्युत वाग्रहणाद्भवति, प्रत्ययसंज्ञाया विकल्पे सति तन्निबन्धनकार्यविकल्पप्रसङ्गात् ।

उ०—मप्युपसर्गसंबन्धे इच्छत्यर्थकसन्संबन्धाऽपेक्षयाऽन्तरङ्गत्वात्पूर्वमुपसर्गसंबन्धः । अतएव न विशेष्यांऽशलाभेनेच्छाया निवृत्तिरित्यभिमानः । व्याप्तिग्रहणायेति । व्याप्तिलाभायेत्यर्थः । बहुलद्वयसंबन्धलाभायेति यावत् ।

परे तु 'गतिर्गता'विति सूत्रे वक्ष्यमाणभाष्यकैयटरीत्योपपदमतिङिति सूत्रोक्तरीत्या च 'पिपठिषती'ति सिद्ध्युत्तरमुपसर्गयोगेन सर्वसिद्धेर्धातुग्रहणाऽऽनर्थक्यमेव । युक्तं यत्सोपसर्ग कर्मेत्येव सिद्धान्तयुक्तिः । तस्य चोपसर्गार्थविशिष्टधात्वर्थः कर्मेत्यर्थः । 'समानकर्तृका' दित्युक्त्या सनन्तकारकेणाऽस्य संबन्धे साध्यत्वप्रतीतावुपसर्गसंबन्धात् । अतएव न विशेष्यांऽशलाभेनेच्छानिवृत्तिः । इतर इदमबुध्वा शङ्कितवान्—सोपसर्गस्य कर्मत्वे इत्यादि । तत्रैकदेशिनः—कर्मण इत्यवयवषष्ठीत्युत्तरम् । यदि कैयटरीत्या सनुत्पत्तेः पूर्वमुपसर्गसंबन्धः स्यात्तदाऽत्रैव धातूपसर्गयोः समासो दुर्वार इत्युपपदमतिङिति सूत्रस्थभाष्यविरोध इत्याहुः । व्याघाताभावादिति । व्याघातः—प्रतिबन्धः । सन्विधावपि वावचनाऽनर्थक्यम्चेत्यनेन तदुपस्थितेर्वक्ष्यमाणत्वादाह—अथवा धातुरेवेति । पृथगुपस्थितस्य यत्रेतराऽपेक्षा स सापेक्ष इति भावः । एवञ्चाऽनुपसर्गस्याऽकर्मत्वमित्यन्तमसङ्गतमिति भावः ।

+ सुप आत्मनः क्यच् ३ । १ । ८

## लिङुत्तमाद्वा ॥ ११ ॥

लिङुत्तमाद्वा सन्वक्तव्यस्तस्य च लिङो लुग्वक्तव्यः । कुर्यामितीच्छति चिकीर्षति ।

## आशङ्कायामचेतनेषूपसङ्ख्यानम् ॥ १२ ॥

आशाङ्कायामचेतनेषूपसङ्ख्यानं कर्तव्यम् । अश्मा लुलुठिषते, कूलं पिपतिषतीति । किं पुनः कारणं न सिध्यति ? एवं मन्यते, चेतनावत एतद्भवति—'इच्छे'ति, कूलं चाऽचेतनम् ।

अचेतनग्रहणेन नाऽर्थः । 'आशङ्काया'मित्येव । इदमपि सिद्धं भवति—श्वा मुमूर्षति ।

प्र०—तुमुन्नन्तादिति । लघ्वेवं लक्षणं भवतीति भावः । वचनसामर्थ्याच्चोपपदश्रवणं बाधित्वा पक्षे तदीयेऽर्थे सन्प्रत्ययो भवति । इच्छाग्रहणं प्रत्ययाऽर्थनिर्देशायावश्यं कर्तव्यम् । अत्र चोदयन्ति—तुमुनन्तस्य पदत्वात्तुमुनो लुकि कृते 'जिघांसती'त्यादौ नलोपादीनि प्राप्नुवन्तीति । नैष दोषः । तुमुनो लुको बहिरङ्गत्वादसिद्धत्वान्नलोपादीनि न भविष्यन्तीति । एतस्मिंस्तु सूत्रन्यासे धातोरिति सनो विधानाऽभावादार्द्धधातुकसंज्ञा न प्राप्नोतीति इको झलिति कित्त्वविधानं ज्ञापकमाश्रयणीयमिष्टसिद्धये ।

आशङ्कायामिति । आशङ्का-संभावना । तद्विशिष्टाऽर्थाऽभिधायिनो धातोः स्वार्थे प्रत्ययः । लुलुठिषत इति । 'रुठ लुठ प्रतीघाते' इति द्युतादिषु पठ्यते । 'वर्तमानसामीप्ये'इति लट्प्रत्ययः । श्वा मुमूर्षतीति । शुनश्चैतन्येऽपि जीवितस्य प्रियत्वाद्व्याध्याद्यभिभवेऽपि तिर्यक्त्वान्मर्तुमिच्छा नास्ति ।

उ०—वृत्तेरिति । नन्वस्य पदविधित्वाऽभावात्समर्थपरिभाषाऽनुपस्थितौ कथमस्यैकार्थीभावविषयत्वमिति चेन्न, भाष्यप्रामाण्यादस्याप्येकार्थीभाव एव प्रवृत्तेरिति भावात् । प्रत्ययसंज्ञाया इति । परत्वस्यापीदमुपलक्षणम् । 'आद्युदात्तश्चे'त्यस्य तु एतद्विषये न संबन्धो, नित्यत्वादिति बोध्यम् । अत्राऽपि समर्थपरिभाषोपतिष्ठत इत्यर्थे वार्तिकसम्मतिं दर्शयन् तान्युदाहरति भाष्ये—तुमुनन्ताद्वेति । वचनसामर्थ्याच्चेति । अतएव चोपपदाऽभावेऽपि तुमुन् वृत्तिविषये इति बोध्यम् । बहिरङ्गत्वादिति । सन्सन्नियोगेन विधानाद्बहिरङ्गत्वं लुक इति भावः । वस्तुतस्तु सुप्तुमुनोर्लुकि पदत्वे नैकदेशविकृतन्यायावतारः, तत्त्वप्रत्यभिज्ञाऽभावात् , अर्थविकारात् । नापि स्थानिवद्भावः, तुमुनन्तस्य षष्ठीनिर्दिष्टत्वाऽभावात् । इष्टसिद्धय इति । अनेन सर्वे शङ्काभासा निरस्ता इत्याहुः ।

आशङ्केति । सा च प्रयोक्तृधर्मः, शङ्के कूलं पतिष्यतीत्यर्थाऽवगमात् । तद्विशिष्टेति । तद्विषयत्वविशिष्टेत्यर्थः । आत्मनेपदप्रयोगे बीजमाह—द्युतादिष्विति । 'रलो व्युपधा'दिति कित्त्वाद्गुणाऽभावः ।

न वा वक्तव्यम्[1] । किं कारणम् ? 'तुल्यकारणत्वात्' । तुल्यं हि कारणं चेतनावति देवदत्ते, कूले चाऽचेतने । किं कारणम् ? 'इच्छाया हि प्रवृत्तित उपलब्धिः' । इच्छाया हि प्रवृत्तित उपलब्धिर्भवति । योऽप्यसौ कटं चिकीर्षुर्भवति नाऽसावाचोपयति—'कटं करिष्यामी'ति । किं तर्हि ? सन्नद्धं रज्जुकीलकपूलपाणिं[2] दृष्ट्वा तत इच्छा गम्यते । कूलस्याऽपि पिपतिषतो लोष्ठाः शीर्यन्ते, भिदोपजायते[3], देशाद्देशान्तरमुपसङ्क्रामति । श्वानः खल्वपि मुमूर्षव एकान्तशीलाः शूनाऽक्षाश्च[4] भवन्ति ।

## उपमानात् सिद्धम् ॥ १४ ॥

उपमानाद्वा सिद्धमेतत् । कथम् ? लुलुठिषत इव लुलुठिषते । पिपतिषतीव पिपतिषति ।

न वै[5] तिङन्तेनोपमानमस्ति । एवं तर्हीच्छेवेच्छा ।

प्र०—न वेति । कार्येणेच्छाऽनुमीयत इतीच्छाऽनुमानकारणं कार्यं लिङ्गम् । तुल्यमिति । वास्तवसदसत्त्वाऽनपेक्षलोकव्यवहाराश्रयकार्यानुमेयेच्छाश्रयेण सन् प्रयुज्यते इत्यर्थः ।

उपमानाद्वेति । यदिच्छानिमित्तं कार्यं तदचेतनेषु नास्ति, यच्चास्ति, न तदिच्छायाः कार्यमिति मत्वा परिहारान्तरोपन्यासः । न वै तिङन्तेनेति । तिङन्ताऽर्थेनेत्यर्थः । क्रियायाः साध्यैकस्वभावत्वादनिष्पन्नरूपत्वादिदं तदिति परामर्शविषयवस्तुगोचरत्वादुपमानोपमेयभावस्येदं

उ०—सम्भावनाविषयलोठने भविष्यत्त्वप्रतीतेराह—वर्त्तमानसामीप्य इति । भाष्ये एवं मन्यते चेतनावत इति । वक्ष्यमाणेनाऽभिप्रायेण 'मन्यत' इत्युक्तम् । कार्येणेति । इच्छानुमितिजनकं कार्यरूपं लिङ्गं तुल्यमित्यर्थः । नन्विच्छाया अचेतने बाधात्कथं बाधितविषयाऽनुमितिरत आह—वास्तवेति । वास्तवं सद्ब्रह्म, अवास्तवमसत्प्रपञ्चः । तदनपेक्ष्य व्यवहारमात्रेण सत इतरस्येवाऽस्या अपि तेन सत्यकार्येणाऽनुमानमिति भावः । बालकादेरयुक्तवृक्षाद्यारोहणं कुर्वतो 'मर्त्तुमिच्छत्यय'मिति व्यवहरति लोक इति तात्पर्यम् । भाष्ये—शूनाक्षा इति । प्रसृताऽक्षा इत्यर्थः । शून्याक्षाइति पाठे विषयाऽग्राहिचक्षुष इत्यर्थः ।

यदिच्छानिमित्तकमिति । बुद्धिपूर्वकप्रवृत्त्यादिकमित्यर्थः । तिङन्तार्थेनेति । क्रिययेत्यर्थः । भाष्यस्थोपमानशब्दस्य सादृश्यमित्यर्थ इति भावः । केचित्तु तिङन्तेनोपमानबोधो नास्तीति भाष्यार्थमाहुः । तदुपपादयति—क्रियाया इति । सिद्धरूपतया प्रतीयमानस्य वस्तुन 'इदन्त'दिति परामर्शविषयत्वादुपमानत्वम्भवति नाऽन्यस्येत्यर्थः । इदन्तदिति परामर्शाभावादित्यस्य–'उपमानत्वाऽभाव' इति शेषेण सम्बन्धः । तथा परामर्शाऽभावे हेतुमाह—साध्यैकेत्यादिना । तथापरामर्शाऽभावेऽपि कुतो न स इत्यत आह--इदन्तदिति । अत्र शब्दशक्तिस्वभावो वस्तुशक्तिस्वभाव एव वा बीजम् । अत्रोपमानोपमेयभावस्येत्युपमेयग्रहणञ्चिन्त्यम् । 'क्षत्रियवदधीते' इत्यादौ क्रियाया उपमेयत्वस्येष्टत्वादिति बोध्यम् । कथं तर्हि 'रोदितीव गायती'

१—'कर्त्तव्यं' पा० । २ 'कीलपूल' पा० । ३ 'भिदा जायते' पा० ।
४—'उच्छूनाक्षाः' इति, 'शून्याक्षाः' पा० । ५ 'न तिङ' पा० ।

## ✗ सर्वस्य वा चेतनावत्त्वात् ॥ १५ ॥

अथवा सर्वं चेतनावत् । एवं ह्याह 'कंसकाः[1] सर्पन्ति' 'शिरीषोऽधः[2]स्वपिति' 'सुवर्चला[3] आदित्यमनुपर्येति' । 'आस्कन्द कपिलके'त्युक्ते तृणमास्कन्दति । 'अयस्कान्तमयः[4] सङ्क्रामति' । 'ऋषिः[5] पठति' । 'शृणोत ग्रावाणः'† ।

इमे इषयो बहवः पठचन्ते । तत्र न ज्ञायते कस्याऽयमर्थे सन्निधीयत इति ?

प्र०—तदितिपरामर्शाऽभावादितिभावः । इवशब्दप्रयोगे तु अध्यारोपस्तु विद्यते,—'रोदितीव गायति' 'नृत्यतीव गच्छति देवदत्त' इति । परिपूर्णेन च न्यूनस्योपमानं भवति । क्रिया च सर्वा स्वाश्रये समाप्तेति न्यूनत्वाऽसंभवस्तस्याम् । तदुक्तम्—

'येनैन हेतुना हंसः पततीत्यभिधीयते ।
आतौ तस्य समाप्तत्वादुपमार्थो न विद्यते ॥' इति ।

भिन्नजातीयानां च क्रियाणां सादृश्यं नास्ति 'भुङ्क्त इव गच्छती'ति । एवं तर्हीति ।

उ०—त्यादिप्रयोगोऽत आह—इवशब्देति । अत्र वाक्ये तुशब्दद्वयफलं चिन्त्यम् । अध्यारोपः—उत्प्रेक्षा । तिङन्ताऽर्थस्योपमानत्वाऽभावे युक्त्यन्तरमप्याह—परिपूर्णेनेति । समाप्तत्वादिति । पातस्य सम्पूर्णत्वादित्यर्थः । आतिः—पक्षिविशेषः । एवञ्चैकस्यां क्रियायां भेदाऽसम्भवान्नोपमानोमेयभावः । भिन्निजातीयासु तु साधारणधर्मरूपसादृश्याऽसम्भवान्नोपमानत्वं, तदाह—भिन्ने ति । समानजातीयास्वपि यथा न तथोक्तम् । 'यथा वै श्येनो निपत्यादत्ते एवमयं भ्रातृव्यं निपत्यादत्ते' इत्यादौ यद्धर्मवच्छ्येनकर्तृकमादानन्तद्धर्मवदेतत्कर्तृकमादानमिति वाक्यार्थेऽवगते यत्तद्भ्यामैक्यमापन्नं तं धर्मं निमित्तीकृत्य श्येनयागयोः पश्चात्सादृश्यबोध इति न तत्र क्रिययोरुपमानोपमेयभाव इति बोध्यम् । इच्छासदृशेऽपीति । पूर्वं व्यवहारादिच्छां तत्राप्यङ्गीकृत्य'कृतः प्रत्यय' इत्युक्तम् । इदानीन्त्विच्छासदृशेऽर्थे प्रत्यय इति भेदः ।

वैचित्र्येणेति । चेतनेषु मनुष्येष्वपि नानाजातीयव्यवहारदर्शनादिति भावः । सर्वत्र परिणामदर्शनेन चेतनाऽधिष्ठानं विना च तदसम्भवात्सर्वस्य तदधिष्ठितत्वं ज्ञायते इति तात्पर्यम् । मन्यत इति । छत्वमपि निपातनादिति तद्भावः । यगभावश्चे ति । भावे शस्य सत्त्वाद्यकः प्राप्तिरिति भावः । शविकरणस्यैवेति । गमियमिसाहचर्य्येणाऽकारविकरणस्यैवेषेर्ग्रहणादिति भावः । तौदादिकस्यैव स्त्रियामिच्छेति निपातनात्कथं

१—'कंस इव प्रतिकृतयः कंसकाः' । ✗

२—'शिरीषोऽयं' इति पा० । शिरीषवृक्षः सायङ्काले यदा म्लानपर्णो मुकुलितपुष्पश्च भवति तदेदमुच्यते ।

३—सुवर्चला=सूर्यभक्ता, सूर्यमुखीपुष्पम् ।

"सुवर्चलाऽऽदित्यकान्ता सूर्यभक्ता सुखोद्भवा ।" इति धन्वन्तरीयनिघण्टौ । अस्या गुणा भावप्रकाश एवं वर्णिताः—

"सुवर्चला हिमा रूक्षा स्वादुपाका सरा गुरुः । अपित्तला कटुः क्षारा विष्टम्भकफवातजित् ॥२८५॥"

४—अयस्कान्तम्='चुम्बक'नाम्ना प्रसिद्धम् ।

५—'ऋषिः=वेदः । इदमपि पृथगुदाहरणमेव सर्वसम्मतप्रयोगदर्शनात् ।

† 'ऋषिः पठति—शृणोत ग्रावाणः' इत्येकमुदाहरणं केचित् पठन्ति ।

इषेश्छत्वभाविनः। यद्येवं,—कर्तुमन्विच्छति-कर्तुमन्वेषणा, अत्रापि प्राप्नोति। एवं तर्हि यस्य स्त्रियामिच्छेत्येतद्रूपं निपात्यते‡। कस्य चैतन्निपात्यते? कान्तिकर्मणः।

अथेह ग्रामं गन्तुमिच्छतीति, कस्य किं कर्म? इषेरुभे कर्मणी। यद्येवं ग्रामं गन्तुमिच्छति,ग्रामाय गन्तुमिच्छतीति,—गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौं+ न प्राप्नुतः। एवं तर्हि गमेर्ग्रामः कर्म, इषेर्गमिः कर्म। एवमपीष्यते ग्रामो गन्तुमिति परसाधन-

प्र०—इच्छाशब्दस्य सत्त्वभूताऽर्थाभिधायित्वादस्ति तदर्थस्योपमानत्वं, ततश्चेच्छासदृशेऽपि व्यापारे सन् भवति। गौणमुख्यन्यायश्च क्वचिल्लक्ष्याऽपेक्षया नाऽङ्गीक्रियते।

सर्वस्य वेति। आत्माऽद्वैतदर्शनेनेति भावः। ऋषिरिति। वेदः सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थः। वैचित्र्येण च पदार्थानामुपलम्भात्सर्वचेतनधर्मप्रसङ्गः सर्वत्र नोद्भावनीयः। इम इति। शश्राश्यन्विकरणास्त्रय इत्यर्थः। तत्रेति। इच्छेति निपातनं त्रयाणामपि संभवतीति मन्यते। छत्वभाविन इति। 'इच्छे'ति शप्रत्ययो यगभावश्च निपात्यते। छत्वं तु लक्षणेनैव सिद्धं, तच्च शविकरणस्यैव विहितमित्यर्थः। यद्येवमिति। 'अन्विच्छती'ति तौदादिकस्यैव रूपमिति भावः। एवं तर्हीति। अर्थविशेषे निपातनमाश्रितमिति भावः। कान्तिकर्मण इति। कान्तिः—कामना। अभिलाषस्तत्क्रियस्येत्यर्थः। 'अन्विच्छती'त्यस्य गवेषयतीत्यर्थो न तु कामयत इति सन्न भवति। अथेहेति। क्रियाद्वयसन्निधानाचङ्क्रमणादिकामस्य गमनमात्रेप्सा-संभवादन्यस्य चोभयेप्सासंभवात् प्रश्नः। इषेरुभे इति। यो हि ग्रामगमनमिच्छति तस्येषि-

उ०—'यस्ये' त्यादिना समाधानमत आह—अर्थविशेष इति। यस्येति भाष्यस्य-यदर्थकस्येत्यर्थः। लोके कान्तिशब्दस्य शोभायाम्प्रसिद्धत्वादाह—कान्तिः कामनेति। ग्रामस्य गतिकर्मत्वं गमेरिषिकर्मत्वञ्च स्पष्टमेवेति कथं सन्देहस्तत्राह—क्रियाद्वयेति। चङ्क्रमणादिकामस्य—अनुद्देश्यकगमनादिकामस्य। अन्यस्य-ग्रामप्राप्तिकामस्य। इषिकर्मत्व इति। उभयोरिषिकर्मत्वे ग्रामस्य गतिकर्मत्वाऽभावं मन्यमानस्य चोद्यमिति भावः। परस्येति। गम्यपेक्षयेत्यर्थः। यदर्थक्रियानिरूपितं यत्कर्म तस्मिन्नेव कर्मणि ततो धातोर्लाद्युत्पत्तिर्न्याय्येत्यर्थः। नन्विषे-रुभयकर्मत्वे कदाचिद्गमनरूपे कर्मणि प्रत्यये 'इष्यते ग्रामं गन्तु' मित्यपि स्यादत आह—इष्यते ग्राम इति। ग्रामार्थत्वादिति। ग्रामप्राप्त्युद्देश्यकत्वादित्यर्थः। अतएव गमनस्य स्वतोऽनुद्देश्यत्वादप्राधान्यन्तदाह—अप्राधान्यादिति। एतेन युगपदुभयोरभिधानं स्यादिति परास्तम्। भिन्नकक्षयोरिति। प्रधानाऽप्रधानयो-रित्यर्थः। नन्वेवं कदाचिदप्रधान एव स्यादत आह—प्रधान इति। नन्वेवमपि गमिनिरूपितकर्मत्व-स्याऽनभिधानात्ततो द्वितीया स्यादेवेति पूर्वोक्तप्रयोगापत्तिर्दुर्वारेत्यत आह—इषिक्रियाया इति। एतेन

‡ इच्छा ३।३।१०१ + २।३।१२

उत्पद्यमानेन लेन ग्रामस्याऽभिधानं न प्राप्नोति । एवं तर्हि गमेर्ग्रामः कर्म, इषेरुभे कर्मणी ।

अथ सन्नन्तात्सना भवितव्यम्,—चिकीर्षितुमिच्छति जिहीर्षितुमिच्छतीति ? न भवितव्यम् । किं कारणम् ? अर्थगत्यर्थः शब्दप्रयोगः । अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्याऽपरस्य प्रयोगेण न भवितव्यम् । किं कारणम् ? 'उक्तार्थानामप्रयोग' इति ।

न तर्हीदानीमिदं भवति—एषितुमिच्छति—एषिषिषतीति ? अस्त्यत्र विशेषः । एकस्याऽत्रेषेरिषिः साधनं वर्तमानकालश्च प्रत्ययः । अपरस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः ।

प्र०—क्रिययोभयमीप्सितं न केवलो ग्रामो नाऽपि केवलं गमनमित्यर्थः । यद्येवमिति । इषिकर्मत्वे ग्रामस्य गतिकर्मत्वाऽभावादिति भावः । परसाधन इति । परस्येषेः साधनं यत्कर्म तत्र लकार उत्पद्यते । तच्च गमनमेव, न तु ग्राम इत्यर्थः । एवं तर्हीति । 'इष्यते ग्रामो गन्तु'मित्यत्र गमनस्य ग्रामार्थत्वादप्राधान्याद्भिन्नकर्तृयोः कर्मणोरेकेन शब्देनाऽभिधानाऽसंभवात् प्रधाने कार्यसंप्रत्ययाद्ग्रामस्यैवाऽभिधानं लकारेण भवति । इषिक्रियायाश्चाख्यातवाच्यत्वात् प्राधान्यमिति प्रधानक्रियाशक्त्यभिधाने गुणक्रियाशक्तेरभिहितवच्चकासनाद्गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न भवतः ।

अथेति । प्रयोगाऽदर्शनाल्लक्षणसद्भावाच्च पृच्छति । न भवितव्यमिति । एकत्वादिच्छायाः, तस्याश्च पूर्वोत्पन्नेनाऽभिहितत्वादपरः सन्न भवतीत्यर्थः । न तर्हीति । इषिणैव धातुनेच्छाया अभिधानात्सन्न प्राप्नोतीति भावः । एकस्येति । इच्छतीत्यत्र य इषिस्तस्यैषितुमित्येतत्पदवाच्य इषिः कर्मेत्यर्थः । तथा हि कश्चिदालस्याद्युपहतोऽध्ययनादिविषयामिच्छामेवेच्छति । सर्वकाल इति । 'समानकर्तृकेषु तुमु'नित्यनेन तुमुनः कालसामान्ये विधानात् ।

उ०—युगपदुभयत्र ग्रामस्य शाब्दाऽन्वयाऽसम्भवात्कदाचिदिषौ कदाचिद्गमौ शाब्दाऽन्वयः । तत्र यदा यत्र शाब्दोऽन्वयस्तदा तत्र तद्विभक्तिरिति 'इष्यते ग्रामो गन्तु' 'मिष्यते ग्रामं गन्तु'मित्युभयमपीष्यत इति परास्तम् ; एवं तर्हि 'गमेर्ग्रामः कर्म इषेरुभे कर्मणी' इति भाष्यविरोधात् कस्य किं कर्मेत्याद्युपक्रमभाष्यपर्यालोचनयाऽस्यापि भाष्यस्यैकप्रयोग उभयत्र ग्रामस्याऽऽवृत्त्या शाब्दाऽन्वयपरत्वलाभात् । तथा सति कदाचिद्गमेर्ग्रामः कर्म कदाचिदुभाविषेरित्येव स्पष्टत्वाय वदेदिति दिक् । नन्वेकस्या इच्छाया उक्तावपीच्छान्तराऽभिधानाय द्वितीयः सन् भविष्यतीत्यत आह—इच्छाया एकत्वादिति । तत्तद्वात्वर्थविषयेच्छात्वेनैक्यादिति भावः । इच्छाविषयेच्छायान्तु न प्रत्ययः, इच्छाविषयेच्छाऽभावादित्यभिमानः । नन्विच्छाविषयेच्छाऽभावात्कथमत्र सन्नित्यत आह—कश्चिदालस्यादीति । तुमुन्ण्वुलाविति तुमुनो भविष्यति विधानात्कथं सर्वकालः प्रत्ययस्तत्राह—समानेति ।

इहाऽपि तर्ह्येकस्येषेः करोतिविशिष्ट इषिः साधनं वर्तमानकालश्च प्रत्ययः। अपरस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः। येनैव खल्वपि हेतुना एतद्वाक्यं भवति—चिकीर्षितुमिच्छति जिहीर्षितुमिच्छतीति, तेनैव हेतुना वृत्तिरपि प्राप्नोति। तस्मात्सन्नन्तात्सनः प्रतिषेधो वक्तव्यः। तं चापि ब्रुवता 'इषि सन्' इति वक्तव्यम्। भवति हि जुगुप्सिषते मीमांसिषत इति†।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥ १॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम्॥

## सुप आत्मनः क्यच्॥ ३। १। ८॥

किमर्थश्चकारः? स्वरार्थः। चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा

प्र०—शैषिकादिति। सन्प्रसङ्गेनाऽन्योऽप्यनिष्टप्रत्ययो निवार्यते। प्रतिव्यक्ति लक्षणप्रवृत्तौ वाचनिको निषेधः, आकृतिपक्षे तु सकृल्लक्षणप्रवृत्तौ तत्प्रवृत्तेः प्राक्तत्प्रत्ययान्तप्रकृत्यसंभवात्तदन्तात् प्रत्ययोत्पत्तिर्न भवतीति न्यायानुवादोऽयं संपद्यते। तत्र शैषिकाच्छैषिकः सरूपो न भवति। शालायां भवः शालीयो घटः। तत्र भवमुदकमिति पुनश्छो न भवति। विरूपस्तु भवति,—अहिच्छत्रे भव आहिच्छत्रः, तत्र भव आहिच्छत्रीयः। यथा दण्डोऽस्यास्तीति दण्डिकः, सोऽस्यास्तीति पुनष्ठन्न भवति। विरूपस्तु भवति—दण्डिमती सेनेति। सन्नन्तान्न सनिष्यत इति। 'सरूप' इत्यपेक्ष्यते। सारूप्येण चात्र सादृश्यं लक्ष्यते, तच्चार्थद्वारकमिति इच्छासन्नन्तादित्यर्थो लभ्यते॥ ७॥

इति जैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याऽध्यायस्य प्रथमेपादे प्रथममाह्निकम्॥

सुप आत्मनः। किमर्थमिति। वक्ष्यमाणोऽभिप्रायः। शिष्यबुद्धिपरीक्षार्थं परिहाराऽऽ-

उ०—तत्प्रवृत्तेः—तत्तल्लक्षणप्रवृत्तेः। तत्प्रत्ययान्तेति। सनादिप्रत्ययान्तेत्यर्थः। न्यायानुवादोऽयमिति। अनुवादफलञ्चाऽन्यत्र व्यक्तिपक्षाश्रयणेन त्वादिसिद्धिः, घटत्वत्वमित्यादौ। अनुवादेनाऽत्रैव तदाश्रयणबोधनादित्याहुः। परे तु 'आर्धधातुक' इति सूत्रभाष्योक्तरीत्या जातौ परत्वाश्रयत्वाऽभाववत्तद्वधित्वाभावाद्वृद्धादित्यादि जातिपक्षे आश्रयितुं न शक्यते इति वचनमेवेदम्। अतएव त्वान्तात् त्वसिद्धिरित्याहुः। शब्दकृतसादृश्यग्रहणे व्यावर्त्याऽसम्भवादाह—तच्चार्थेति॥ ७॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते तृतीयस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम्।

सुप आत्मनः क्यच्। वक्ष्यमाण इति। केषाञ्चित्प्रयोजनानामन्यथासिद्धिरूप इत्यर्थः। पश्चादिति।

† गुपिज्०; मानबध० ३। १। ५; ६

स्यात्‡ । नैतदस्ति प्रयोजनम् । एकाज्यं, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम्× ।

विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः । 'अस्य च्वौ' 'क्यचि च' [ ७ । ४ । ३२; ३३ ] इति । 'क्ये चे'ति ह्युच्यमाने 'अपि काकः श्येनायते'+ अत्रापि प्रसज्येत । नैतदस्ति । 'तदनुबन्धकग्रहणेऽतदनुबन्धकस्य ग्रहणं ने'त्येवमेतस्य न भविष्यति ।

सामान्यग्रहणाऽविघातार्थस्तर्हि । क्व च सामान्यग्रहणाऽविघाताऽर्थेनाऽर्थः ? 'नः क्ये' [ १ । ४ । १५ ] इति ।

अथाऽऽत्मग्रहणं किमर्थम् ? आत्मेच्छायां यथा स्यात्परेच्छायां मा भूत्,—राज्ञः पुत्रमिच्छतीति ।

क्रियमाणेऽपि वै आत्मग्रहणे परेच्छायां प्राप्नोति । किं कारणम् ? 'आत्मन' इतीयं कर्तरि षष्ठी । 'इच्छे'त्यकारो भावे । स यद्येवात्मन इच्छत्यथापि परस्य,

प्र०—भासमाह–चित इति । प्रत्ययस्वरेणेति । यद्यप्यत्र धातुस्वरेण भाव्यं तथापि पूर्वं प्रत्ययस्वरो भवति, पश्चात्सतिशिष्टो धातुस्वर इति क्रमः । तदनुबन्धकेति । स एव यस्याऽनुबन्धस्तस्य ग्रहणम् । यस्य तु स चाऽन्यश्च तस्य न ग्रहणमित्येवमेतद्वचनसामर्थ्यादाश्रीयते । आत्मेच्छायामिति । आत्मन इच्छेति शेषषष्ठ्या समासो न तु कर्तृषष्ठ्या । सुबन्तद्वारकश्चात्मन इच्छया संबन्धो न तु साक्षात् । तेनाऽयमर्थः—'आत्मनः सुबन्तार्थं यदेच्छति तदा यथा स्या'दिति । एवं 'परेच्छाया'मिति व्याख्येयम् । आत्मन इतीयमिति । क्रियाकारकसम्बन्धस्यान्तरङ्गत्वादिति

उ०—एवञ्चाऽन्तरङ्गत्वात्प्रत्ययस्वरकृतैवाऽन्यथासिद्धिरुक्तेत्यर्थः । ननु यत्किञ्चिदनुबन्धयुक्तस्य ग्रहणे तद्विरहितस्य ग्रहणाऽभावः वचनमन्तराऽपि सिद्ध्यतीत्यत आह–स एवेति । उच्चारित एवेत्यर्थः । वचनसामर्थ्यात्सावधारणो बहुव्रीहिराश्रीयते । 'अत'दित्यादावपिशब्दघटितश्च स आश्रीयत इति भावः । क्यङो ह्यनुबन्धकत्वान्न 'क्य'ग्रहणेन ग्रहणमिति तात्पर्यम् । अथात्मग्रहणं किमिति । इच्छापेक्षया कर्त्तरि षष्ठीति प्रश्नः । नतु कर्त्रिति । तथा सति राज्ञः पुत्रमिच्छतीत्यादावपि प्रसङ्ग इति भावः । शेषषष्ठ्यामपि साक्षात्संबन्धेनाऽन्वये दोषस्तदवस्थ इत्यत आह—सुबन्तेति । आत्मशब्दः स्वपर्यायैषितृपरः । 'आत्मनः पुत्रं परस्य दास'मिच्छतीत्यादौ तु न दोषः, इष्यमाणरूपस्यात्मसंबन्धित्वाऽभावात् । परेच्छेति । परसंबन्धिसुबन्तार्थेच्छायामित्यर्थः । कर्त्तरीयं षष्ठीति । अनेनैव संबन्धेनेच्छायां तदन्वयात् । परम्परासंबन्धस्तु न षष्ठ्यर्थ-

‡ चितः ६ । १ । १६३ × आद्युदात्तश्च ३ । १ । ३

+ कर्त्तुः क्यङ् सलोपश्च ३ । १ । ११

आत्मन एवेच्छाऽसौ भवति।

नैष दोषः। नात्मग्रहणेनेच्छाऽभिसंबध्यते। किं तर्हि? सुबन्तमभिसम्बध्यते 'आत्मनो यत्सुबन्त'मिति।

यद्यात्मग्रहणं क्रियते छन्दसि परेच्छायां न प्राप्नोति—'मा त्वा वृकाऽअघायवो विदन्'†। तस्मान्नाऽर्थ आत्मग्रहणेन। इह कस्मान्न भवति 'राज्ञः पुत्रमिच्छती'ति। असामर्थ्यात्। कथमसामर्थ्यम्? 'सापेक्षमसमर्थं भवती'ति। छन्दस्यपि तर्हि न प्राप्नोति—'मा त्वा वृकाऽअघायवो विदन्'†। अस्त्यत्र विशेषः। अन्तरेणाऽप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते। कथं पुनरन्तरेणाऽप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते? ते चैव हि वृका एवमात्मका हिंस्राः, कश्चात्मनोऽघमेषितुमर्हति? अतोऽन्तरेणाऽप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते। यथैव तर्हि च्छन्दस्यघशब्दात्परेच्छायां क्यज्भवत्येवं भाषायामपि प्राप्नोति—'अघमिच्छती'ति। तस्मादात्मग्रहणं कर्तव्यम्। छन्दसि कथम्? आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्यघशब्दाच्छन्दसि परेच्छायां क्य'जिति यदयम्—'अश्वाघस्यात्' [ ७। ४। ३७ ] इति क्यचि प्रकृत‡ इत्वबाधनार्थमकारं शास्ति।

अथ सुब्ग्रहणं किमर्थम्? सुबन्तादुत्पत्तिर्यथा स्यात्प्रातिपदिकान्मा भूदिति। नैतदस्ति प्रयोजनम्। नाऽस्त्यत्र विशेषः सुबन्ताद्वोत्पत्तौ सत्यां प्रातिपदिकाद्वा।

प्र०—भावः। नात्मग्रहणेनेति। आत्मग्रहणोपादानसामर्थ्यात्। नह्येषितारमन्तरेणेच्छा भवतीति व्यभिचाराऽभावादिच्छाया विशेषणस्य निष्फलत्वात्।

कश्चात्मन इति। अघं—व्यसनं दुःखमुच्यते। तच्चात्मनो न कश्चिदिच्छतीत्यर्थः। यदयमिति। न च तदाचारक्यजर्थम्, छन्दस्यघशब्दादाचारे क्यचः प्रयोगाऽभावादिति भावः।

उ०—स्तदाह—क्रियाकारकसंबन्धस्येति। अन्तरङ्गत्वं—साक्षात्संबन्धत्वम्। अत एव सुबन्तविशेषणत्वेन परिहारः। एषितारमिति। स एवात्मपदार्थ इति भावः। भाष्ये—एवमात्मका हिंस्रा इति। एवंस्वभावा हि परस्यैव दुःखमिच्छन्तीत्यर्थः। दुःखमिति। पापवाचिनाऽघशब्देन तत्फलं दुःखं लक्ष्यत इति भावः। 'दुःखीयति सुखहेतो'रित्यादिप्रयोगास्तु वास्तवदुःखस्य सुखत्वभ्रमेणेच्छायां बोध्याः। भाष्ये—विध्यर्थं भविष्यतीति। ननु सुबित्यस्याऽभावे प्रातिपदिकात्सुबन्ताच्चोत्पत्तव्यमविशेषात्। तत्र 'नः क्ये' इत्यस्य नियमाऽर्थत्वे नान्तेभ्यः प्रातिपदिकादुत्पत्तौ नलोपो न स्यात्। विध्यर्थत्वे तु 'वाच्यती'त्यादौ सुबन्तादुत्पत्तिपक्षे जश्त्वादि पदकार्यं स्यादिति चेन्न; 'धातोः कर्मणः' इत्यतः 'कर्म'ग्रहणमनुवर्त्तते। तत्र च धातुरूपं कर्म

१—'आत्मेच्छैवासौ' पाठा०।        † यजुर्वेदे ४। ३४        २—'भवतिच्छन्दस्यघशब्दात्' पा०        ‡ क्यचि च ७। ४। ३३

अयमस्ति विशेषः—सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति ×। प्रातिपदिकात्पुनरुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति। ननु च प्रातिपदिकादप्युत्पत्तौ सत्यां पदसंज्ञा सिद्धा। कथम्? आरभ्यते 'नः क्ये' [ १ । ४ । १५ ] इति। तच्चावश्यं कर्त्तव्यं सुबन्तादुत्पत्तौ सत्यां नियमार्थं, तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति।

इदं तर्हि प्रयोजनं 'सुबन्तादुत्पत्तिर्यथा स्याद्धातोर्मा भू'दिति। एतदपि नास्ति प्रयोजनम्। धातोः सन्विधीयते+ स बाधको भविष्यति। अनवकाशा हि विधयो बाधका भवन्ति [ न सोऽवकाशाः, ] सावकाशश्च सन्। कोऽवकाशः? परेच्छा। न परेच्छायां सना भवितव्यम्। किं कारणम्? 'समानकर्तृका'दित्युच्यते, यावच्चेहाऽऽग्रहणं तावत् तत्र समानकर्तृकग्रहणम्।

इदं तर्हि प्रयोजनं—'सुबन्तादुत्पत्तिर्यथा स्याद्वाक्यान्माभू'दिति, महान्तं पुत्रमिच्छतीति। न वा भवति महापुत्रीयति? भवति यदैतद्वाक्यं भवति—महान् पुत्रो महापुत्रः, महापुत्रमिच्छति महापुत्रीयतीति। यदा त्वेतद्वाक्यं भवति—महान्तं पुत्रमिच्छतीति, तदा न भवितव्यं, तदा च प्राप्नोति, तदा मा भूदिति।

अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेवाऽत्र न भवति?, सुबन्तं ह्येतद् वाक्यम्। नैतत्सुबन्तम्। कथम्? 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति।

अथ यदत्र सुबन्तं तस्मादुत्पत्तिः कस्मान्न भवति?

**समानाधिकरणानां सर्वत्राऽवृत्तिरयोगादेकेन।**

समानाधिकरणानां सर्वत्रैव वृत्तिर्न भवति। क्व सर्वत्र? समासविधौ प्रत्ययविधौ

प्र०—महान्तं पुत्रमिति। यद्यत्र सुबन्तसमुदायात्परः क्यच्प्रत्ययः स्यात्तदा प्रत्ययार्थाभिधाने पदद्वयस्य प्रवर्तनात्परस्परस्य समासाऽभावादुत्तरपदनिबन्धनमात्त्वं न स्यात्। समानाधिकरणानामिति। समानाधिकरणानां पदानां मध्ये एकेन पदेनाऽयोगात्समुदायेनैव योगाद्वृत्तिर्न भवतीत्यर्थ.।

उ०—परिनिष्ठितत्वप्रयोजकप्रत्ययान्तत्वाऽनाक्रान्तमतस्तत्साहचर्यात्तादृशस्यैव कर्मणो ग्रहणात्सुबन्तेऽप्राप्तिरिति भाष्याशयात्। भाष्ये–धातोर्मा भूदिति। तिङन्तात्तु न शङ्कितः, तस्य कर्ममात्रप्रतिपादकत्वाऽभावात्। ननु महान्तम्पुत्रमिति विग्रहेऽपि क्यचि 'सन्मह'दिति समासे आत्त्वे च 'महापुत्रीयती'त्येव भाव्यमिति 'तदा न भवितव्य'मिति कथमत आह—यद्यत्रेति। परस्परस्येति। अन्यत्रैकार्थीभावमापन्नयोर्निष्कृष्य परस्परेण सामर्थ्याऽभावादिति भावः। वस्तुतस्तु विशिष्यैकार्थीभावाऽभावेऽप्येकार्थीभावमात्रेण समासस्य समर्थसूत्रादिस्थभाष्यसम्मततयाऽऽत्वं भवत्येव। स्वरे तु भेदः, सति शिष्टतया समासस्वरेण पुत्रीतीकारोदात्तत्वरूप इति

× सुप्तिङन्तं पदम् १ । ४ । १४ + धातोः कर्मणः समान० ३ । १ । ७

१–नेदं सर्वत्र।

च । समासविधौ तावत्—ऋद्धस्य राज्ञः पुरुषः, महत्कष्टं श्रित इति । प्रत्ययविधौ—ऋद्धस्योपगोरपत्यम्, महान्तं पुत्त्रमिच्छतीति ।

किं पुनः कारणं समानाधिकरणानां सर्वत्र वृत्तिर्न भवतीति ? 'अयोगादेकेन' । न ह्यत्रैकेन पदेन योगो भवति । इह तावत्—ऋद्धस्य राज्ञः पुरुष इति षष्ठ्यन्तस्य सुबन्तेन सामर्थ्यमिति समासो विधीयते । यच्चात्र षष्ठ्यन्तं न तस्य सुबन्तेन सामर्थ्यं, यस्य च सामर्थ्यं न तत्षष्ठ्यन्तं, वाक्यं तत् । ऋद्धस्योपगोरपत्यमिति च षष्ठीसमर्थादपत्येन योगे प्रत्ययो विधीयते । यच्चाऽत्र षष्ठीसमर्थं न तस्याऽपत्येन योगो, यस्य चाऽपत्येन योगो न तत्षष्ठ्यन्तं, वाक्यं तत् ।

'समानाधिकरणाना'मित्युच्यतेऽथ व्यधिकरणानां कथम्—राज्ञः पुत्त्रमिच्छतीति ? एवं तर्हीदं पठितव्यं—'सविशेषणानां सर्वत्राऽवृत्तिरयोगादेकेने'ति ।

## द्वितीयानुपपत्तिस्तु ।

द्वितीया तु नोपपद्यते महान्तं पुत्त्रमिच्छतीति । किं कारणम् ? न पुत्त्र इषिकर्म । यदि पुत्त्रो नेषिकर्म न चावश्यं द्वितीयैव । किं तर्हि ? सर्वा [ अत्र[1] ] द्वितीयादयो विभक्तयो न स्युः । महता पुत्त्रेण कृतम्, महते पुत्त्राय देहि, महतः पुत्त्रादानय,

प्र०—सगुणस्य हि पुत्रस्येषिणा संबन्धो न केवलस्येति भावः । द्वितीयानुपपत्तिस्त्विति । यदि केवलस्य प्रातिपदिकार्थस्येषिसंबन्धो नेष्यते तदा कर्मत्वाऽभावात्केवलात्प्रातिपदिकाद्द्वितीया न प्राप्नोति । नाऽपि समुदायात्, तस्याऽप्रातिपदिकत्वात्, गुणे च संख्याया विवक्षितत्वात् । पुत्त्र एवेति । तस्यैवेप्सिततमत्वाद्गुणानां चेप्साप्रकर्षाऽभावात् । स्वयमकर्मत्वेऽपि तत्सामानाधिकरण्यनिबन्धना विभक्तिरित्यर्थः । सविशेषणानामिति । एकस्यैकदा व्यपेक्षैकार्थीभावविरोधा-

उ०—भाष्याशयः । तदा न भवितव्यमिति—भाष्ये । 'क्यचे'ति शेषः । तथा च स्वरेऽनिष्टमिति भावः । तदा च प्राप्नोतीति । 'क्य'जिति शेषः । नैतत्सुबन्तमिति । समुदायः कर्मेति भावः । प्रत्येकं कर्मत्वे कर्मसमुदायस्याऽकर्मत्वादेवाऽप्रसङ्ग इति बोध्यम् । समानाधिकरणानामेकेन संबन्धिनाऽयोगादिति नार्थः, ऋद्धत्वविशिष्टराज्ञः पुरुषेण संबन्धादत आह—मध्य इति । निर्धारणे षष्ठीति भावः । अयोगादिति । 'इच्छत्यादीना'मिति शेषः । न केवलस्येति । सविशेषणप्रयोगविषये इति भावः । यस्य च सामर्थ्यमिति । वाक्ये व्यपेक्षारूपमित्यर्थः । तदभावादेव तन्मूलक एकार्थीभावो नेति भावः । गुणे चेति । इदञ्चिन्त्यम् । तस्मात्प्रातिपदिकसमुदायस्याऽप्रातिपदिकत्वेन समुदायान्न स्यात् । किञ्च महान्तम्पुत्त्रमित्युभयत्रैव द्वितीयाऽनुपपत्तिरेवेति तत्त्वम् । भाष्ये—यदि पुत्त्रो नेषिकर्मेति । यतः पुत्त्रो नेषिकर्मेत्यर्थः । ननूभयं कर्मेति वाच्ये 'पुत्र एवे'त्यनुपपन्नमत आह—तस्यैवेति । प्रधानत्वादिति वक्तुं युक्तम् । सामानाधिकरण्यनिबन्धनेति ।

[1]—क्वचिन्न पठ्यते ।

महतः पुत्त्रस्य स्वम्, महति पुत्त्रे निधेहीति'। तस्मान्नैतच्छक्यं वक्तुं—'न पुत्त्र इषिकर्मेति। पुत्त्र एवेषिकर्म तत्सामानाधिकरण्यान्महतोऽपि द्वितीयादयो भविष्यन्ति।

वृत्तिस्तर्हि कस्मान्न भवति ? सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति वक्तव्यम्। यदि तर्हि' सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इत्युच्यते मुण्डयति† माणवकम्—इत्यत्र वृत्तिर्न प्राप्नोति। एवं तर्हि 'अमुण्डादीनामि'ति वक्तव्यम्।

तत्तर्हि वक्तव्यं 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यतेऽमुण्डादीना'मिति ? न वक्तव्यम्। वृत्तिस्तर्हि कस्मान्न भवति महान्तं पुत्त्रमिच्छतीति ? अगमकत्वात्। इह समानाऽर्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च। यश्चेहाऽर्थो वाक्येन गम्यते—'महान्तं पुत्त्रमिच्छती'ति नासौ जातुत् प्रत्ययान्तेन गम्यते—'महान्तं पुत्त्रयती'ति। एतस्माद्धेतोर्ब्रूमः—'अगमकत्वादिति, न ब्रूमो'ऽपशब्दः स्या'दिति। यत्र च गमकत्वं भवति,—भवति तत्र वृत्तिस्तद्यथा 'मुण्डयति माणवक'मिति।

अथाऽस्य क्यजन्तस्य कानि साधनानि भवन्ति ? भावः कर्ता च। अथ कर्म ? नास्ति कर्म। ननु चाऽयमिषिः सकर्मको यस्याऽयमर्थे क्यज्विधीयते। अभिहितं

प्र०—दिति भावः। अगमकत्वादिति। लौकिके प्रयोगेऽनुमानादपि गाव्यादिभ्यो गवाद्यर्थप्रतिपत्तिवन्महान्तं पुत्रमिच्छतीत्यादिवाक्यार्थस्य महान्तं पुत्रीयतीत्यादेः प्रतीतिर्नास्तीत्यर्थः। सिद्धानां च शब्दानां सङ्करनिरासायाऽन्वाख्यानं क्रियते, न त्वप्रयुक्ताऽपूर्वशब्दव्युत्पादनाय। न ब्रूम इति। अपशब्दो हि लोके प्रयुज्यते साधुशब्दसमानार्थश्च, अयं त्वप्रयुक्तत्वादपशब्दव्यपदेशस्याऽपि न

उ०—समानाऽधिकरणविशेषणस्य विशेष्यसमानशक्तिकत्वादिति भावः। एकस्येति। सुब्ग्रहणेन पदविधित्वात्समर्थपरिभाषोपस्थितेरिति भावः। व्यपेक्षेति। विशेषणेन व्यपेक्षाविशेष्येणैकार्थीभाव इत्यर्थः। इदमेव सुब्ग्रहणस्य फलमिति बोध्यम्। सविशेषणानामिति—सापेक्षोपलक्षणम्। अत एव 'ऋद्धस्य राज्ञः पुरुष' इत्यत्र ऋद्धपदेनाऽपि न समास इत्याशयेन शङ्कते भाष्ये—मुण्डयति माणवकमिति। एतेन मुण्डस्य गुणशब्दत्वान्माणवकस्य द्रव्यशब्दत्वात्तस्यैव विशेष्यताया न्याय्यत्वेन मुण्डस्य कथं सविशेषणत्वमित्यपास्तम्। अनुमानादपीति। असाध्वनुमानादित्यर्थः। अपिना साधुस्मरणसङ्ग्रहः। वस्तुतोऽपभ्रंशानामपि वाचकत्वमपिना ग्राह्यम्। भाष्ये एतस्माद्धेतोरिति। 'अपशब्दः स्या'दिति हेतोर्वृत्तिर्नेति न ब्रूमः किन्त्वगमकत्वादिति हेतोरित्यन्वयः। तदेवाह—सिद्धानामिति। अर्थप्रत्यायनायाऽन्यासाधूनामिवाऽस्य प्रयोगाऽभावात्किन्तन्निवृत्त्यर्थेन वचनेनेत्यर्थः। भाष्ये—यत्र च गमकमिति। मुण्डयतीति प्रयोगे मौण्ड्यस्य

१—इदं क्वचिन्न। † मुण्डमिश्रश्लक्ष्णलवण० ३। १। २१

तत्कर्माऽन्तर्भूतं धात्वर्थः सम्पन्नो, न चेदानीमन्यत्कर्माऽस्ति येन सकर्मकः स्यात्। कथं तर्ह्ययं सकर्मको भवति--'अपुत्रं पुत्रमिवाचरति पुत्रीयति‡ माणवक'मिति? अस्त्यत्र विशेषो-'द्वे ह्यत्र कर्मणी उपमानकर्मोपमेयकर्म च। उपमानकर्माऽन्तर्भूतम्, उपमेयेन कर्मणा सकर्मको भवति। तद्यथा—अपि काकः श्येनायत× इति अत्र द्वौ कर्तारौ—उपमानकर्ता चोपमेयकर्ता च। उपमानकर्ताऽन्तर्भूतः, उपमेयकर्त्रा सकर्तृको भवति।

अयं तर्हि कथं सकर्मको भवति--'मुण्डयति माणवक'मिति? अत्रापि द्वे कर्मणी,—सामान्यकर्म विशेषकर्म च। सामान्यकर्माऽन्तर्भूतं, विशेषकर्मणा सकर्मको भवति। ननु च वृत्त्यैवात्र न भवितव्यम्। किं कारणम्? असामर्थ्यात्। कथमसामर्थ्यम्?

प्र०—भाजनमित्यर्थः। भावः कर्ता चेति। कर्माऽभावप्रतिपादनपरमेतत्। अधिकरणादौ हि ल्युडादयो यथायोगं भवन्त्येव। भावस्य च लकाराद्युत्पत्तिनिमित्ततया साधनव्यपदेशः। अभिहितमिति। ततश्च जीवतीत्यादिवदिच्छाक्यजन्तस्याऽकर्मकत्वात्कर्मणि लाद्यभावः। न चेदानीमिति। नियतविषयाया इच्छायाः क्यजन्तेन प्रतिपादनात्तस्याश्च वस्त्वन्तरविषयीकरणाऽभावादिति भावः। कथं तर्हीति। अत्राऽपि पुत्रादिकर्मणोऽस्त्यन्तर्भाव इति प्रश्नः। द्वे इति। वाक्य एव कर्मद्वयमाकाङ्क्षितमित्यर्थः। मुण्डयतीति। मुण्डगुणविशिष्टद्रव्यकर्मणो धात्वर्थेऽन्तर्भावादिति भावः। अत्रापीति। ण्यन्तो धातुर्द्रव्यमात्रमन्तर्भावयितुं शक्नोति न तु विशेषणं माणवकादिकमिति भावः। ननु चेति। यद्यप्येतच्चोदितं च परिहृतं च, तथापि गमकत्वाऽगमकत्व-

उ०—क्रियारूपत्वेन कारकांशे नित्यसापेक्षतया गमकत्वमिति भावः। कर्माऽभावेति' लकारवाच्यसाधनानामेव प्रश्नादिति भावः। नन्वेवं 'कानि साधनानी'ति प्रश्ने 'भाव' इत्युत्तरमसङ्गतं, तस्य क्रियारूपस्य साध्यत्वेन साधनत्वाऽभावादत आह—भावस्य चेति। लकारनिमित्तमेव साधनशब्देनोच्यत इति भावः। नियतविषयाया इति। कर्मविशेषेणैकार्थीभावादित्यर्थः। अत एव कर्माऽन्तरेणाऽनन्वयो राजपुरुषो भार्याया इतिवदिति भावः। वाक्य एवेति। क्यजर्थाऽऽचारस्य नियमेनोपमानविषयत्वेऽप्युपमानस्योपमेयसापेक्षत्वात्कर्मद्वयसद्भाव इति भावः। तत्र मुख्यं कर्मोपमेयमेव। उपमाने तु उपमेयसमानशक्तिकत्वात्कर्मत्वव्यवहार इति तस्याऽन्तर्भूतत्वेऽपि न क्षतिरिति तात्पर्यम्। उपमानपुत्रकर्मक उपमेयमाणवककर्मक इति बोधः। ननु मुण्डयतीत्यत्रापि द्वयोः कर्मत्वं 'मुण्डं करोति माणवक'मिति विग्रहे दर्शनादिति कथमत्र प्रश्न इत्यत आह—मुण्डगुणेति। मौण्ड्यस्य कर्मत्वे सति तस्याऽऽश्रयसापेक्षत्वेनाऽसामर्थ्यप्रसङ्गान्मुण्डगुणविशिष्टद्रव्यस्यैव कर्मत्वमभ्युपेयम्, तस्य च धात्वर्थेऽन्तर्भाव इति भावः। विशेषस्याऽपि कर्मत्वस्वीकारेऽसामर्थ्यमिति शङ्कते भाष्ये—ननु चेति। विषयविभागेति। मुण्डशब्दादेर्णिचि गमकत्वं क्यच्यगमकत्वमिति विषयविभागेत्यर्थः। मौण्ड्यमेवेति। वृत्तौ मुण्डशब्दो भावप्रधानः। अतएव भाष्ये 'न हि माणवकत्वं

‡ उपमानादाचारे ३।१।१०　　× कर्तुः क्यङ् सलोपश्च ३।१।११

'सापेक्षमसमर्थं भवती'ति । नैष दोषः । नाऽत्रोभौ करोतियुक्तौ मुण्डो माणवकश्च । नहि माणवकत्वं क्रियते । यदा चोभौ करोतियुक्तौ भवतो न भवति तदा वृत्तिः । तद्यथा बलीवर्दं करोति, मुण्डं चैनं करोतीति ।

कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यो 'माणवकं मुण्डमिच्छती'ति, नोभावि- षियुक्ताविति । न कर्तव्यः, उभावत्रेषियुक्तौ मुण्डो माणवकश्च । कथम् ? न ह्यसौ

प्र०—विषयविभागप्रदर्शनाय पुनरुपन्यासः । नात्रोभाविति । मौण्ड्यमेव करोतियुक्तमिति मौण्ड्यङ्करोतीत्यत्रैवार्थे मुण्डयतीति णिजुत्पद्यत इत्यर्थः । 'मुण्डं करोति माणवक' मित्यत्र तु वाक्ये कर्मत्वमेकस्यैव, तत्सामानाधिकरण्यात्तु द्वितीयस्माद्द्वितीयोत्पत्तिः । गुणप्रधानभावश्च विवक्षा- वशादनियत इति माणवकादयो मौण्ड्याधाराविशेषप्रतिपत्त्यर्थमुपादीयमानाः करोतियुक्ता न भवन्तीत्यर्थः । मुण्डयतेश्च क्रियाविशेषवाचित्वात्तदपेक्षं माणवकादेः कर्मत्वमिति 'माणवकं मुण्डयती'त्यादिप्रयोगोपपत्तिः । तद्यथेति । बलीवर्दमेवात्मसंबन्धित्वेन करोति तं च मुण्डं करो- तीति युगपदुभयोः करोतिकर्मत्वे विवक्षिते 'मुण्डयति बलीवर्द'मिति प्रयोगो न भवतीत्यर्थः । कामन्तर्हीति । अत्रापि मौण्ड्यमेवेष्यते, माणवकस्तु तदाधारविशेषप्रतिपादनायोपात्त इति भावः । उभावत्रेति । माणवकस्य मौण्ड्यकरणेन संस्कार्यत्वादुभयोः कर्मत्वे सापेक्षत्वादेकतर- स्मात्प्रत्ययोत्पत्तिर्न भवतीत्यर्थः । गुणवचनाश्चेति । वचनसामर्थ्यात्सापेक्षेभ्योऽपि मुण्डादिभ्यः प्रत्ययो भवति, क्यच्प्रत्ययस्तु निरपेक्षेभ्यः पुत्रादिभ्यः सावकाश इति 'माणवकं मुण्डमिच्छती'-

उ०—क्रियते'इत्युक्तम्, तस्य च वृत्तौ साध्यावस्थस्यैव भानात् क्रियारूपत्वेन कारकांशे नित्यसापेक्षत्वाद्ग- मकत्वमित्यदोषः । धर्मिपरत्वे हि गुणविशिष्टद्रव्यस्योत्पादनेनाऽसामर्थ्याद्वृत्तिर्न स्यादिति भावः । वस्तुतो नित्यसापेक्षत्वाऽभावेऽपि गमकत्वे वृत्तिर्भवत्येवेति बोध्यम् । एकस्यैवेति । मुण्डस्यैवेत्यर्थः । मौण्ड्यरूपतदर्थ- स्यैवोत्पद्यमानत्वादिति भावः । माणवकपदार्थस्य सर्वथा करोत्यन्वयाऽयोग्यत्वमेवेति बोध्यम् । द्वितीयस्मात्— माणवकशब्दात् । ननु माणवको विशेष्यस्तत्सामानाऽधिकरण्यान्मुण्डाद्द्वितीयेति युक्तं, न तु विपरीतमत आह—गुणप्रधानेति । परिच्छेद्यपरिच्छेदकभावः इत्यर्थः । परिच्छेद्यसमानशक्तिकत्वम्परिच्छेदकस्येति भावः । एवञ्च वाक्येऽपि मुण्डस्यैव करोतियोग इति भावः । तदाह —माणवकादय इति । यद्यपि वाक्ये 'मुण्ड'- शब्दो धर्मिपरस्तथापि तस्य सामान्यशब्दत्वात्तद्विशेषाकाङ्क्षायां तदन्वयेऽपि माणवकस्य न साक्षात्करोति- युक्तत्वमिति बोध्यम् । एवञ्चाऽत्र वृत्तौ 'कटेऽपि कर्म भीष्मादयोऽपी'ति न्यायो नाऽस्त्येवेति तात्पर्यम् । ननु तस्य करोतियोगाऽभावे कथं वृत्तौ माणवकस्य कर्मत्वं, कथञ्च द्वितीयान्तत्वमत आह—मुण्डयतेश्चेति । मौण्ड्यरूपक्रियाश्रयत्वात्कर्मत्वमिति भावः । एवञ्च 'कृतपूर्वी कट'मितिवद्वृत्तिरिति तत्त्वम् । ननु बलीवर्द- त्वस्य क्रियमाणत्वाऽसम्भवादाह —बलीवर्दमेवात्मसंबन्धित्वेनेति । बलीवर्दशब्दस्य चित्रादिपरत्वे तु न शङ्काऽपि । प्रयोगो न भवतीति । 'राजपुरुषो देवदत्तस्ये'त्यादाविवाऽसामर्थ्यादिति भावः । उभयोः कर्मत्वे इति । 'इषिनिरूपिते' इति शेषः । सापेक्षत्वादिति । मुण्डस्य माणवकः समानाधिकरणं विशेषण- मिति सापेक्षत्वमिति भावः । एतावता ण्यन्ते गमकत्वं क्यच्यगमकत्वमिति दर्शितम् । भाष्ये—माणवक-

मौण्ड्यमात्रेण सन्तोषं करोति माणवकस्थमसौ मौण्ड्यमिच्छति। इहापि तर्हि न प्राप्नोति—'मुण्डयति माणवक'मिति। अत्रापि ह्युभौ करोतियुक्तौ मुण्डो माणवकश्च। न ह्यसौ मौण्ड्यमात्रेण सन्तोषं करोति। किं तर्हि? माणवकस्थमसौ मौण्ड्यं निर्वर्तयति।

एवं तर्हि मुण्डादयो गुणवचनाः। गुणवचनाश्च सापेक्षाः। तत्र वचनात्सापेक्षाणां वृत्तिर्भविष्यति।

अथवा धातव एव मुण्डादयः। न चैव ह्यर्था आदिश्यन्ते, क्रियावचनता च गम्यते।

अथवा नेदमुभयं युगपद्भवति—वाक्यं च प्रत्ययश्च। यदा वाक्यं न तदा प्रत्ययः।

प्र०—त्यादौ सापेक्षेभ्यो न भवति। नन्वयमपि णिज्गुणमात्रविवक्षायां सावकाशो 'मुण्डयत्ययं नापितः'। प्रवीणो मौण्ड्यकरणे इत्यर्थावगमात्। ततश्च द्रव्यविशेषापेक्षायां प्रत्ययो न प्राप्नोति। नैष दोषः। 'तत्करोती'ति सिद्धे णिचि पुनर्विधानमिदं सापेक्षेभ्योपि मुण्डादिभ्यो यथा स्यादित्येवमर्थमेव। धातव इति। सौत्रा धातवो मुण्डादयस्तेभ्यश्चुरादिवत्स्वार्थिको णिजित्यर्थः। न चैवेति। यद्यपि क्रियाविशेषाभिधायित्वं मुण्डादीनां नैवोपात्तं तथापि स्वाभाविकत्वादर्थाभिधानस्य प्रयोगादेव तदवसीयत इत्यर्थः। यथा कण्ड्वादयो द्विविधास्तथा मुण्डादय इति भावः। मुण्डविशिष्टेनेति। पूर्वस्मिन्परिहारे कर्मविशेषाऽनपेक्षायां प्रत्ययोत्पत्तिरित्युक्तम्। अस्मिंस्तु

उ०—स्थमसाविति। एवञ्च तद्द्वारा माणवकस्येच्छाविषयत्ववत्करोत्यर्थविषयत्वमपीत्यभिमानः। यद्यपि इषिफलेच्छाश्रयत्वं तस्य वक्तुं युक्तं न तु करोतिफलोत्पत्त्याश्रयत्वन्तस्येत्युभयोः करोतियुक्तस्वाऽभावस्तथापि विशिष्टवेषेण तस्याऽपि तदाश्रयत्वमित्यभिमानेनैकदेशिनः शङ्केयम्। एवञ्च मुण्डपदार्थस्य विशेष्यसापेक्षत्वेनाऽसामर्थ्यम्। वृत्तावुभयत्राऽपि मुण्डशब्दो धर्मिपर इति तद्भावः। तमभ्युपेत्य परिहरति—एवन्तर्हीति। गुणवचना इत्यस्य गुणप्रवृत्तिनिमित्तका इत्यर्थः। सापेक्षा इत्यस्य—परिच्छेद्यविशेषसापेक्षा इत्यर्थः। ननु मुण्डो नित्यसापेक्षोऽन्यथा वा। नाऽऽद्यः, राजपुरुषादौ सावकाशस्यापि समासस्य गुरुकुलादौ प्रवृत्तिवदत्रापि क्यजापत्तेः। नाऽन्त्यः णिचोऽप्यनापत्तेः, असापेक्षे चारितार्थ्यादिति शङ्कते—नन्विति। नैष दोष इति। 'वचना'दिति भाष्यस्य तत्करोतीति सिद्धे वचनसामर्थ्यादित्यर्थ इति भावः। न च तत्करोतीत्यनेन प्रातिपदिकादुत्पत्तेः सुबन्तादुत्पत्त्यर्थमिदमावश्यकं, विशेषाऽभावात्, णिचि भत्वाच्च॥ सौत्रा इति। उत्तरसूत्रस्थधातुग्रहणस्य पूर्वमपकर्षादिति भावः।

भाष्ये—न चैवेति शङ्का. क्रियावचनेत्युत्तरमिति व्याचष्टे—यद्यपीति। यथा कण्ड्वादय इति। तथा च धातुभ्यो णिच्, प्रातिपदिकेन वाक्यमिति भावः। भाष्ये परिहारान्तरमाह—मुण्डविशिष्टेन वेति। ननु पक्षद्वयेऽपि पूर्वं करोतेर्मुण्डसंबन्धः, पश्चान्माणवकस्य संबन्ध इति प्रतीतेः को विशेषोऽत आह—पूर्वस्मिन्निति। 'अथवा नेदमुभय'मिति परिहारे इत्यर्थः। तत्र पूर्वं कर्मविशेषस्याऽनपेक्षणादसंबन्धः। उत्तरत्र

१—क्वचिन्न।

यदा प्रत्ययः सामान्येन तदा वृत्तिर्भवति । तत्राऽवश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । मुण्डयति । कम् ? माणवकमिति । मुण्डविशिष्टेन वा करोतिना तमाप्तुमिच्छति ।

अथवोक्तमेतत्—'नाऽत्र व्यापारोऽनुगन्तव्य' इति । गमकत्वादिह वृत्तिर्भविष्यति—'मुण्डयति माणवक'मिति ।

अथेह क्यचा भवितव्यम्—इष्टः पुत्त्रः, इष्यते पुत्त्र इति ? केचित्तावदाहुः—'न भवितव्य'मिति । किं कारणम् ? स्वशब्देनोक्तत्वादिति । अपरआहुः—'भवितव्य-

प्र०—यथा गां दोग्धि पय इति शुद्धस्य दुहेर्गवा पूर्वं संबन्ध, पश्चात्तु गोदुहिना पयसः, एवं शुद्धः करोतिर्मौण्ड्येन संबध्यते, मौण्ड्यविशिष्टस्तु माणवकेनेत्युच्यते । अनेनैव न्यायेन 'माणवकं मुण्डमिच्छती'ति क्यच्प्राप्नोतीत्याशङ्क्याह—अथवेति । व्यापारो नारम्भणीयः प्रयत्नमन्तरेणापीष्टस्य सिद्धत्वादित्यर्थः । क्यच्त्वगमकत्वान्न भवति । तदुक्तं हरिणा—

सदपीच्छाक्यचः कर्म तदाचारक्यचा हृतम् ।
वाक्यवाच्यमतोऽव्यक्तेर्यथाऽभ्यासः क्रमादिषु' ॥ इति ।

अथेहेति । इच्छाक्यजन्तात्कर्मणि प्रत्ययोत्पत्तिः प्रकारान्तरेणाशङ्क्यते । तथाहि-यद्यत्र क्यज्भवति तदेच्छामात्रस्य क्यचाऽभिधानादवश्यं कर्मणोऽभिधानाय तद्वाचिना प्रत्ययेनोत्पत्त-

उ०—त्वपेक्षायामपि बहिरङ्गत्वान्न पूर्वं संबन्ध इत्युच्यत इति विशेष इत्यर्थः । गवा पूर्वमिति । प्रधानव्यापारेणाऽऽप्यमानत्वादिति भावः । पश्चात्त्विति । विशेषणव्यापारेणाऽऽप्यमानत्वादिति भावः । अन्तःस्थितवस्तुविभागाऽनुकूलव्यापारो हि दुहेरर्थः । मौण्ड्यविशिष्टस्तु माणवकेनेति । मौण्ड्यद्वारेत्यर्थः । व्यापार इति । सापेक्षेभ्योऽपि मुण्डादिसूत्रारम्भसामर्थ्यादित्येवं रूपो, 'धातव' इत्येवं रूपो वा, 'नेदमुभय'मित्यादिरूपो वेत्यर्थः । अगमकत्वादिति । अयं भावः—ण्यन्तवृत्तौ मुण्डशब्दो भावप्रधान इत्युक्तन्यायेन भवति वृत्तिः । क्यजन्तवृत्तौ तु धर्मिपर एव, अतस्तत्र नेच्छाक्यच्, असामर्थ्यात् । अत एव क्यजन्तात्तस्मादाचारार्थप्रतीतिरेव. तदाह—सदपीति । न्यायतः सम्भवदपीत्यर्थः । आचारक्यचा हृतं—निरवकाशीकृतं, निरूढतया तदर्थस्यैव प्रतीतेरित्यर्थ इति भावः । अतस्तद्वाक्यवाच्यमेव—'माणवकं मुण्डमिच्छती'त्यनेनैव बोधनीयं न तु क्यजन्तेन । तत्र हेतुमाह—अत इति । क्यजन्तादव्यक्तेरित्यर्थः । यथा क्रमादिधातुष्वभ्यासः पौनःपुन्यं वाक्येनैव गम्यते न तु यङा, तत्प्रकृतिकस्य तस्य कौटिल्ये निरूढेरिति भावः । अन्यत्रोक्तं हरिणा—

सदपीच्छाक्यचः कर्म वाक्य एव प्रयुज्यते ।
प्रसिद्धेन हृतः शब्दो भावगर्हाऽभिधायिना ॥
अभ्यासे तुल्यरूपोऽपि न यङन्तः प्रवर्तते ।' इति ।

एतेन—'वेदादिविषयोऽभ्यासो यथा क्रमादिषु व्यज्यत इत्यर्थः । यद्वा विसर्गरहितपाठेना-

१ इदं क्वचिन्न ।

मिति । किं कारणम् ? धात्वर्थेऽयं क्यज्विधीयते । स च धात्वर्थः केनचिदेव शब्देन निर्देष्टव्य इति ।

इह भवन्तस्त्वाहुः 'न भवितव्य'मिति । किं कारणम् ? इह समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च । यश्चेहार्थो वाक्येन गम्यते—इष्टः पुत्त्रः इष्यते पुत्त्र इति, नाऽसौ जातुचित्प्रत्ययान्तेन गम्यते ।

**क्यचि मान्ताव्ययप्रतिषेधः ॥ १ ॥**

क्यचि मान्ताव्ययानां प्रतिषेधो वक्तव्यः । इह मा भूत्—इदमिच्छति किमिच्छति । उच्चैरिच्छति । नीचैरिच्छति ।

**गोसमानाक्षरनान्तादित्येके ॥ २ ॥**

[ गोसमानाक्षरनान्तादित्येके वक्तव्यमित्याहुः । ] गामिच्छति गव्यति । समाना-

प्र०—व्यम् । यथा पुत्त्रीयतीति कर्त्रभिधानाय तिपा । स्वशब्देनेति । इष्टशब्दसामानाधिकरण्यात्पुत्त्र इत्यनेन निर्भुक्तेषिक्रियापेक्षकर्मभावस्याऽर्थस्य प्रतिपादनादित्यर्थः । अयमर्थः—यदा क्रियाफलस्य कर्मणः प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव प्रयुज्यते पुत्त्र इष्ट इत्यादि, न तु क्यजन्तः, तस्याऽकर्मकत्वात् कर्मणि प्रत्ययानुत्पादात् ।

स च धात्वर्थ इति । इच्छायाः प्रत्ययार्थत्वं दर्शयितुं वाक्यमुपादेयम् । तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यतां कर्मप्रत्ययो वा । प्रत्यये तूत्पन्नेऽकर्मकत्वात्प्रत्ययो न भवति । नाऽसौ जातुचिदिति । प्रत्ययान्तस्याऽकर्मत्वात्कर्मणि प्रत्ययोत्पत्त्यसंभवादित्यर्थः । गोसमानाक्षरेति ।

उ०—ऽभ्यासेन वर्णकर्माविषयाभिव्यक्ति रित्यर्थो विवरणकारोक्तोऽपास्तः । एतदेवात्र मुख्यं समाधानमिति ध्वनयितुमस्य पुनरुल्लेखः । एवञ्च मुण्डादिसूत्रं प्रपञ्चार्थमेवेति बोध्यम् ।

नन्वकर्मकत्वात्क्यजन्तात्कर्मणि प्रत्ययो नेति प्रागुक्तमेव, तत्किम् 'अथेहे'त्यनेनोच्यत इत्यत आह—इच्छाक्यजन्तादिति । कर्मणोऽभिधानायेति । 'पुत्त्र' इति प्रथमान्तस्येष्टशब्दसामानाधिकरण्यात्कर्मत्वसद्भावेऽपि तस्य तद्वाचकत्वाऽभावात्ततः क्यचि तेन कर्मणोऽनभिधानादिति भावः । एवं सर्वत्राभिधानविषये बोध्यम् । इष्टशब्देति । एवञ्च तत्सामानाधिकरण्याच्चदर्थगतकर्मत्वस्य साक्षात्कर्मवाचिना क्तेनाऽभिधानात् प्रातिपदिकार्थमात्रपरत्वेन 'पुत्त्र' इति सुबन्तस्य कर्मत्ववाचित्वाऽभावान्न ततः क्यजिति भावः । निर्भुक्तेति । इतरसामानाधिकरण्याज्जातकर्मभावस्य न तु स्वत इत्यर्थः । 'निर्मुक्ते'ति पाठे स्ववाच्यतया त्यक्तकर्मभावस्येत्यर्थः । स्वशब्देनोक्तत्वादिति भाष्यस्य—स्वं कर्मत्वं, तद्वाचकशब्देन क्तेन कर्मत्वोक्तेः, 'पुत्त्र' इत्यस्य सुबन्तस्य कर्मत्ववाचकत्वाऽभावान्न भवितव्यं तदर्थे क्यचेत्यर्थः । यदाक्रियाफलस्येति । तथा च विग्रहे फलस्य विशेष्यतया 'पुत्त्रीयती'त्यादौ व्यापारस्य विशेष्यतया भिन्नार्थत्वान्न तदर्थेऽयं क्यच्, किन्तु पुत्त्रमिच्छतीत्यत्राऽर्थे एव । कर्मणि च फलस्य विशेष्यत्वम्—इष्टः पुत्त्र इत्यादौ सामानाधिकरण्याऽनुरोधेनाऽवश्यमङ्गीकार्यमिति भावः । कर्मण इति । कर्मसंज्ञाप्रयोजकस्येत्यर्थः । वस्तुत इयं व्याख्या

१ इदं लुप्तं स्यादिति केचित् ।

च्चरात्—घटीयति पटीयति दधीयति मधूयति कर्त्रीयति । हर्त्रीयति । नान्तात्—राजीयति तक्षीयति ॥ ८ ॥

## काम्यच्च ॥ ३ । १ । ९ ॥

किमर्थश्चकारः ? स्वरार्थः । चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्† । नैतदस्ति प्रयोजनम् । धातुस्वरेणाप्येतत्सिद्धम्‡ । ककारस्य तर्हीत्संज्ञा-परित्राणार्थ आदितश्चकारः कर्तव्यः × ॥ अत उत्तरं पठति—

**काम्यचश्चित्करणानर्थक्यं कस्येदर्थाभावात् ॥ १ ॥**

काम्यचश्चित्करणमनर्थकम् । ककारस्य तर्हीत्संज्ञा कस्मान्न भवति ? 'इदर्था-भावात्' । इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति । ननु च लोप एवेत्कार्यम्+ । अकार्यं लोपः । इह हि शब्दस्य कार्यार्थो वा भवत्युपदेशः श्रवणार्थो वा । कार्यं

प्र०—अकारादयो दश समानाः । तत्र लृवर्णान्तस्य प्रातिपदिकस्याऽसंभवादॄकारान्तस्य च, सप्तानां ग्रहणम् । अस्मिंस्तु न्यासेऽव्याप्तिः, वाच्यतीत्याद्यसिद्धिप्रसङ्गात् । भाष्यकारेण तु मतभेदप्रदर्शनायोपन्यासः कृतः ॥ ८ ॥

काम्यच्च । आदित इति । अन्तेऽपि कृत आदिकृतफलसंपादनाददितः संपद्यते । तथा हि यदाऽऽदौ क्रियते तदा ककारस्याऽनादित्वादित्संज्ञा न भवति । एवमन्तेऽपि कृतश्चित्कार्येऽन्तोदात्तत्वे सिद्धे नियमार्थः संपद्यते—'चिदेवाऽयं व्यपदेष्टव्यो न त्वनुबन्धान्तरेण कि'दिति ।

उ०—'इह भवन्त' इति मते उचिता । कर्मण इत्यस्य कर्मत्वविशिष्टबोधकस्येत्यर्थ इत्येवैतद्व्याख्योचिता । अग्रिममतद्वये तु वस्तुतः कर्मत्वविशिष्टो यस्तद्वाचकादिति सूत्रार्थ इत्याशयः । भाष्ये—इह भवन्त इति । सर्वत्रवृत्तिवाक्ययोः समानार्थत्वमेव । चित्रगुरित्यादेर्विग्रहेऽपि विशेष्यविशेषणभावव्यत्यासात्तत्त्वमिति तदाशयः । भाष्ये—मान्ताऽव्ययानामिति । मान्तत्वं न सुबन्तविशेषणं, पुत्रीयतीत्यादेरसङ्गत्यापत्तेः । किन्तु मान्तप्रकृतिकेत्यर्थकम् । तेन कमिच्छतीत्यादावपि नेति बोध्यम् । तत्र लृवर्णेति । यद्यप्यनुकरणे लृकारान्तं लॄकारान्तं ॠकारान्तं च सम्भवति तथापि तत्र क्यचः प्रयोगदर्शनाऽभाव इत्यर्थः । ॠकारान्तस्य चेति । 'असम्भवा'दित्यपकर्षः । वस्तुतस्तादृशाऽनुकरणस्यैव लोके प्रयुज्यमानस्याऽभाव इति तात्पर्यम् । मतभेदेति । तथा चेदम्मतमरुचिग्रस्तमिति भावः । अन्ये तु अजन्तेभ्यो गोसमानाक्षरेभ्य एव, अनुनासिकान्तेभ्यस्तु नान्तेभ्य एवेत्यस्याऽर्थः । अत एव 'रै'शब्दात्क्यच्छान्दस इत्युक्तं 'स्थानेऽन्तरतम'सूत्रे भाष्ये । 'वाच्यती'-त्यादौ च न दोषः । वाच्यति स्रुच्यतीति च 'नः क्ये' इति सूत्रे भाष्ये प्रयुक्तमित्याहुः ॥ ८ ॥

काम्यच्च । ननु चस्याऽऽदितः पाठे सूत्रभेदः स्यादत आह—अन्तेऽपीति । नियमार्थतयाऽऽदि-पाठफलं सम्पन्नमित्यर्थः । वाक्काम्यतीति । 'क्विब्वचिप्रच्छी'ति वार्त्तिकेन क्विब्दीर्घाऽसम्प्रसारणानि । अस्य

१ इदं क्वचिन्न । † ६ । १ । १६३ ‡ ६ । १ । १६२
× चुटू; लशक्वतद्धिते १ । ३ । ७; ८ + तस्य लोपः १ । ३ । ९

चेह नाऽस्ति । असति कार्ये यदि श्रवणमपि न स्यादुपदेशोऽनर्थकः स्यात् ।

इदं तर्हीत्कार्यम् । अग्निचित्काम्यति । क्ितीति गुणप्रतिषेधो यथा स्यात्† । नैतदस्ति प्रयोजनम् । सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते, धातोश्च विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञां लभते‡ । न चाऽयं धातोर्विधीयते ।

इदं तर्हि प्रयोजनम्, उपयट्काम्यति । क्ितीति संप्रसारणं यथा स्यात्× । एतदपि नास्ति प्रयोजनम् । यजादिभिरत्र क्ितं विशेषयिष्यामो 'यजादीनां यः क्ि'-दिति । कश्च यजादीनां क्ित् ? यजादिभ्यो यो विहित इति ।

अथापि कथंचिदित्कार्यं स्यादेवमपि न दोषः । क्रियते न्यास एव द्विचकारको निर्देशः—'सुप आत्मनः क्यच्च्काम्यच्चे'ति ।

अथवा छान्दसमेतत्+ । दृष्टाऽनुविधिश्छन्दसि भवति, न चात्र संप्रसारणं दृश्यते ॥ ९ ॥

## उपमानादाचारे ॥ ३ । १ । १० ॥

### अधिकरणाच्च ॥ १ ॥

अधिकरणाच्चेति वक्तव्यम् । इहापि यथा स्यात्—कुटीयति प्रासादे । प्रासादीयति कुट्याम् ॥ १० ॥

प्र०—यजादिभ्यो यो विहित इति । अयं तु सुबन्ताद्विहितः । अथापीति । यदा यजादिभिः क्िन्न विशेष्यते कार्यिणैव यजादयो निर्दिश्यन्त इति भावः । अथवेति । 'विजुपे छन्दसी'ति विचश्छन्दसि विधानात् । इह 'वाक्काम्यती'ति संप्रसारणं क्ित्कार्यमस्ति । तस्मात् पूर्वः परिहार आश्रयणीयः । अथवा 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' ॥ ९ ॥

उपमाना । कुट्यामिति । उपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमिति कर्मविवक्षायामेतत्प्रयोगाऽसंभवाद्वार्तिकारम्भः ॥ १० ॥

उ०—प्रयोगस्य सत्त्वे इदं मानं चिन्त्यम् । पूर्वपरिहार इति । यजादिभ्यो विहित इतीत्यर्थः । वाच् अम् इत्यवस्थायां काम्यच्प्रवृत्तेर्नाऽयं वच्यादिभ्यो विहितः । 'काम्यचश्चित्करणाऽऽनर्थक्य'मिति वार्तिकविरोधेन 'पुत्त्रकाम्यती'त्यादौ 'सति शिष्टस्य स्वरं बाधित्वा चित्स्वर एव यथा स्यादिति चित्त्व'मिति हरदत्तोक्तमपास्तम् ॥ ९ ॥

† क्ङिति च १ । १ । ५ ‡ पुगन्तलघूपधस्य च ७ । ३ । ८६ आर्द्धधातुकं शेषः ३ । ४ । ११४
१—क्वचिन्न । × वचिस्वपियजादीनां किति ६ । १ । १५ + विजुपे छन्दसि ३ । २ । ७३
२—'प्रासादीयति कुट्याम्, कुटीयति प्रासाद इत्यत्रापि यथा स्यात्' पा० ।

## कर्तुः क्यङ् सलोपश्च ॥ ३ । १ । ११ ॥

सलोपसन्नियोगेनाऽयं क्यङ्विधीयते तेन यत्रैव सलोपस्तत्रैव [ क्यङ् ] स्यात्—पयायते । इह न स्यात्—अपि काकः श्येनायते । नैतद[२]स्ति । प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टः सलोपो, यत्र च सकारं पश्यसीति । तद्यथा—कश्चिदुक्तो 'ग्रामे भिक्षां चर देवदत्तं चानय' इति । स ग्रामे भिक्षां चरति यदि च देवदत्तं पश्यति तमप्यानयति ।

### सलोपो वा ॥ १ ॥

सलोपो वेति वक्तव्यम् । पयायते पयस्यते ।

### ओजसोऽप्सरसो नित्यम्† ॥ २ ॥

ओजसोऽप्सरसोर्नित्यं सलोपो वक्तव्यः । ओजायमानं य अहिं जघान‡ । अप्सरायते ।

अपर आह—सलोपोऽप्सरस एव, पयस्यत इत्येव भवितव्यम् ॥ कथमोजायमानं यो अहिं जघानेति ? छान्दसः प्रयोगः, छन्दसि च दृष्टमनुविधीयते ।

### आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा ॥ ३ ॥

आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः । अवगल्भते, अवगल्भायते । गल्भ[३] । क्लीब–विक्लीबते, विक्लीबायते । क्लीब । होड–विहोडते, विहोडायते ।

प्र०—कर्तुः क्यङ् । सलोपविधौ 'कर्तु'रिति स्थानषष्ठी सकारेण कर्तुर्विशेषणात्तदन्तविधिसद्भावाद्द हंसायत इत्यादौ सलोपाऽभावः । सलोपसन्नियोगेनेति । एकवाक्यतां संनियोगार्थं च चशब्दं मत्वा चोद्यते । वाक्यभेदमन्वाचये च चशब्दमाश्रित्य परिहारः । अपर आहेति ।

उ०—कर्तुः क्यङ् । एकवाक्यतोपपादकं सन्नियोगार्थञ्चेत्यादि । एतावतैवैकवाक्यतेति व्यवहारः । एतेन 'विधेयाऽनेकत्वात्कथमेकवाक्यते'ति परास्तम् । इत्याहुरिति । अत एवोपक्रमभाष्ये 'पयायते' इत्यत्रैव क्यङ् स्यात्सलोपसन्नियोगशिष्टत्वादिति शङ्कायां तत्प्रयोगाऽभावरूपं समाधानमनभिधायाऽन्यदेव समाधानं कृतम् । क्रियावचनत्वस्य धातुगणमध्ये तत्तदर्थविशिष्टानाम्पठितत्वादेव सिद्धत्वादाह–आचारेति ।

१ कश्चिन्न । २—'नैष दोषः' पा० ।

† 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' इति भट्टोजिदीक्षितः ( वै० सि० कौ० ) ।

'ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया ।
सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः ॥'

इति काशिकावृत्तौ । अस्योत्तरार्द्धभागस्तु न सर्वत्रोपलभ्यते ।

‡ ऋग्वेदे २ । १२ । ११ ३—'गल्भक्लीब' इति पा० ।

किं प्रयोजनम् ? क्रियावचनता यथा गम्येत। नैतदस्ति प्रयोजनम्। धातव एवाऽवगल्भादयः। न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते।

इदं तर्हि प्रयोजनम्—अवगल्भा विक्लीबा विहोडा। 'अ प्रत्ययात्' [ ३ । ३ । १०२ ] इत्यकारप्रत्ययो यथा स्यात्। मा भूदेवम्—'गुरोश्च हलः' [ १०३ ] इत्येवं भविष्यति।

इदं तर्हि प्रयोजनम्—अवगल्भांचक्रे विक्लीबांचक्रे विहोडांचक्रे। 'कास्प्रत्ययादाममन्त्रे लिटि' [ ३ । १ । ३५ ] इत्याम्प्रत्ययो यथा स्यात्।

अपर आह—'सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्यः', अश्वति गर्दभतीत्येवमर्थम् ॥ न तर्हीदानीं गल्भाद्यनुक्रमणं कर्तव्यम् ? कर्तव्यं च। किं प्रयोजनम् ? 'आत्मनेपदार्थाननुबन्धानासङ्क्ष्यामी'ति†। गल्भ क्लीब होड ॥ ११ ॥

प्र०—मतभेदप्रदर्शनायोपन्यासः, न त्वयं स्थितः पक्ष इत्याहुः। क्रियावचनतेति। आचारलक्षणक्रिया वचनतेत्यर्थो विवक्षितः, धातुपाठे हि पाठात्तेषां क्रियावचनता सिद्धैव। न चैव हीति। अनेकार्थत्वाद्धातूनामाचारक्रियावृत्तित्वस्याऽसिद्धत्वादित्यर्थः। अश्वतीति। प्रातिपदिकादेवायं क्विब्विधीयते न सुबन्तात्। तेन पदत्वाऽभावादतो गुण इति पररूपत्वं भवति। एतच्च 'सर्वेभ्य' इति वक्तव्ये 'सर्वप्रातिपदिकेभ्य' इति वचनाल्लभ्यते। आत्मनेपदार्थानिति। वाक्येऽकारस्यानुदात्तत्वाऽनुनासिकत्वे प्रतिज्ञायेते इति भावः ॥ ११ ॥

उ०—भाष्ये न चैव ह्यर्था इति। अस्य 'धातुपाठे' इति शेषः। 'अर्था' इत्यस्य—सर्वेऽर्था इत्यर्थः। क्रियावचनतेति। तादृशक्रियेत्यर्थः। 'गम्यत' इत्यस्य 'लोकत' इति शेषः। अनिर्दिष्टार्थानां धातूनामेवाऽनेकार्थत्वमित्येतद्भाष्यार्थं मन्ये। वाक्य इति। वार्तिक इत्यर्थः। अकारस्येति। ननु क्विप इकारस्यैवानुदात्तत्वमनुनासिकत्वञ्च प्रतिज्ञायतां किमनेनाऽनुबन्धत्रयकरणेनेति चेन्न, 'अश्वती'त्यादावप्यात्मनेपदापत्तेः। अतिरिक्तक्विप्पदकरणे तु गौरवमिति भावः। भाष्ये आत्मनेपदार्थानित्यादेः—'आम्विषये क्विप्सन्नियोगेने'ति शेषः। आसङ्क्ष्यामीति। तद्गुणविशिष्टमवर्णाऽन्तरम्प्रश्लेषेणोपदेक्ष्यामीत्यर्थः। अत एवेत्संज्ञा। अन्यथा क्लीबादीनाम्पचाद्यजन्तानां क्विबर्थमनुवादेनोपदेशाऽभावात्सा न स्यात्। प्रश्लेषे तु तस्य मानान्तरेण सिद्ध्यभावादुपदेश एव। तद्विशिष्टस्य क्लीबादेरप्युपदेश एवेत्यनुबन्धानामेकान्तत्वे करणसाधने 'उपदेश'-शब्दे च न दोषः। अतएव च 'प्रत्ययान्तादामो मित्त्वे न विशेष' इति 'ह्रस्वनद्याप' इति सूत्रस्थभाष्यं सङ्गच्छते। अन्यथाऽवगल्भादिहलन्तप्रकृतिके विशेषः स्यात्। अन्यहलन्तेभ्यस्त्वाचारक्विब्नेति तदाशयः ॥ ११ ॥

---

१—'स्यात्' पा०।　　२—'प्रत्ययः' इति क्वचिन्न।　　३—'क्वचिन्न।

† अनुदात्तङित आत्मनेपदम् १ । ३ । १२

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ ३ । १ । १२ ॥

हलो लोपसन्नियोगेनाऽयं क्यङ्विधीयते, तेन यत्रैव हलो लोपस्तत्रैव प्राप्नोति। नैष दोषः—प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टो हलो लोपो, यत्र च हलं पश्यसीति।

### भृशादिष्वभूततद्भावग्रहणम् ॥ १ ॥

भृशादिष्वभूततद्भावग्रहणं कर्तव्यम्। इह मा भूत्—क्व दिवा भृशा भवन्तीति।

### च्विप्रतिषेधानर्थक्यं च भवत्यर्थे क्यङ्वचनात् ॥ २ ॥

च्विप्रतिषेधश्चाऽनर्थकः। किं कारणम्? 'भवत्यर्थे क्यङ्वचनात्'। भवत्यर्थे हि क्यङ्विधीयते।

### भवतियोगे च्विविधानम् ॥ ३ ॥

भवतिना योगे च्विर्विधीयते‡। तत्र च्विनोक्तत्वात्तस्याऽर्थस्य क्यङ्न भविष्यति।

डाजन्तादपि तर्हि न प्राप्नोति—पटपटायते। डाजपि हि भवतिना योगे विधीयते, भवत्यर्थे क्यष्+।

प्र०—भृशादिभ्यो। हल इति। हला भृशादयो विशेष्यन्ते तेन हलन्तानामेव क्यङ्लोपाभ्यां भवितव्यमित्यर्थः। प्रधानशिष्ट इति। वाक्यभेदेन सर्वेभ्यो भृशादिभ्यः क्यङं विधाय हलन्तानां लोपो विधीयत इत्यर्थः। अन्यथाऽनर्थकः पाठः स्यादहलन्तानाम्। क्व दिवा भृशा भवन्तीति। ये रात्रौ भृशाऽऽलोका नक्षत्रादयस्ते दिवसे क्व प्रदेशे भवन्तीत्यर्थः। अत्राऽभूततद्भावाऽभावः।

उ०—भृशादिभ्यो। ननु भृशादीनां हल्घटितानामेव सत्त्वात्तत्रैव प्राप्नोतीत्यस्य व्यावर्त्याऽभाव इत्यत आह—हलेति। आवृत्त्या विभक्तिविपरिणामेनेति भावः। अन्यथा हि सर्वत्र हलो लोपः स्यादित्यापाद्येदित्याशयः। भृशाऽऽलोका इति। अधिकाऽऽलोका इत्यर्थः। भवत्यर्थे च्वेरविधानेन 'च्विनोक्तत्वा'-दित्यसङ्गतमित्यत आह—च्विसहचरितेनेति। भाष्ये—डाजन्तादपीति। 'क्यं'षिति शेषः। वचनप्रामाण्यस्य क्यष्प्रवृत्तौ हेतुत्वे क्यषन्तसमभिव्याहारे भवतेरपि प्रयोगः स्यादत आह—अप्रयुक्ते इति। भवत्यर्थेति। 'कृभ्वस्तियोग' इत्यस्य डाज्विधावनुवृत्तस्य तदर्थयोग इत्यर्थः। च्विविधौ तु शब्दयोग इत्येवार्थ-

१—'प्रसज्येत' पा०।  ‡ कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः। ५। ४। ५०

\+ अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ५। ४। ५७ लोहितादिडाज्भ्यः क्यष् ३। १। १३

## डाचि वचनप्रामाण्यात् ॥ ४ ॥

डाचि वचनप्रामाण्याद्भविष्यति । किं वचनप्रामाण्यम् ? 'लोहितादिडाज्भ्यः क्यष्' [ ३ । १ । १३ ]इति ।

इह किंचिदक्रियमाणं चोद्यते किंचिच्च क्रियमाणं प्रत्याख्यायते । स सूत्रभेदः कृतो भवति ।

यथान्यासमेवाऽस्तु । ननु चोक्त'मिह कस्मान्न भवति क्व दिवा भृशा भवन्ती'ति ? 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' । नञ्युक्तमिवयुक्तं वा यत्किंचिदिह दृश्यते तत्राऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते । 'अब्राह्मणमानये'-त्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवति । एवमिहाऽप्यच्वे-रितिच्विप्रतिषेधादन्यस्मिन्नच्व्यन्ते च्विसदृशे कार्यं विज्ञास्यते । किं चान्यदंतोऽ-च्व्यन्तं च्विसदृशम् ? अभूततद्भावः ।

इह काश्चित्प्रकृतयः सोपसर्गाः पठ्यन्ते—अभिमनस् सुमनस् उन्मनस् दुर्मनस् । तत्र विचार्यते—भृशादिषूपसर्गः प्रत्ययार्थविशेषणं वा स्यात्—'अभिभवतौ सुभवतौ उद्भवतौ दुर्भवता'विति । प्रकृत्यर्थविशेषणं वा —'अभिमनस्शब्दात् सुमनस्शब्दात् उन्मनस्शब्दात् दुर्मनस्शब्दाद्वे'ति ।

युक्तं पुनरिदं विचारयितुम् । नन्वनेनाऽसंदिग्धेन प्रकृत्यर्थविशेषणेन भवितव्यं

प्र०—च्विनोक्तत्वादिति । च्विसहचरितेन भवतिनेत्यर्थः । डाचि वचनप्रामाण्यादिति । अप्रयुक्त एव भवतौ भवत्यर्थविवक्षायां वचनप्रामाण्याड्डाचं विधाय भवत्यर्थे क्यष्विधीयत इत्यर्थः । यथान्यासमिति । 'अच्वे'रिति पर्युदासाश्रयेण दोषद्वयस्यापि परिहार इत्यर्थः । इह काश्चि-दिति । यदा मनः शब्देनाऽसमस्ता एव सूदुरभय इति पक्षस्तदा प्रत्ययार्थविशेषणं ते भवन्ति । मनःशब्दश्चाऽवृत्तिविषये तद्वति वर्तते । मनस्वी सुष्ठुभवति, उद्भवति, दुष्ठु भवति, आभिमुख्येन भवतीत्यत्रार्थे क्यङ्विधिः । अन्येत्वाहुः—प्राप्त्यर्थस्याऽत्र वृत्तिविषये भवतेर्ग्रहणं, तेन मनः कर्म

उ०—इति भावः । कृभ्वस्तियोग इव क्यष्योगेऽपि डाजिति शाप्यत इति वृत्तिग्रन्थस्यापीदमेव तात्पर्यम् । भाष्ये–अक्रियमाणमिति । अभूततद्भावग्रहणमित्यर्थः । नञिवयुक्तमिति न्याये इवयुक्तमिति दृष्टान्तार्थम् । अन्यस्मिंस्तत्सदृशे इत्यनेनाऽभेदेपि सादृश्यमस्तीति सूचयति । प्राक्प्रकृतेः पाठेन प्रत्यत्यार्थविशेषणत्वपक्षोऽसं-भावितोऽत आह—यदेति । समस्तत्वाऽसमस्तत्वाभ्यां पक्षद्वयसम्भव इति भावः । 'असुमनाः सुमना भवती'त्यर्थस्य क्यङन्ताप्रतीतेः समास एवाऽऽवश्यकोऽत आह—मनःशब्दश्चेति । तदर्थे मतुबादीनामेव साधुत्वाल्लक्षणयाऽपि प्रकृतिमात्रस्याऽसाधुत्वं स्यादत आह—अन्ये त्विति । असुमनाः सुमना भवतीत्यर्थस्तु

१—'किञ्चातोऽन्यदच्व्यन्तं' । २—'वा'शब्दः क्वचिन्न । ३—'ननु तेना' पा० ।

यावता प्राक्प्रकृतेः पठ्यन्ते । यदि हि प्रत्ययार्थविशेषणं स्युः प्राग्भवतेः पठ्येरन् ।

नेमे शक्याः प्राग्भवतेः पठितुम् । एवं विशिष्टे हि प्रत्ययार्थे भृशादिमात्रादुत्पत्तिः प्रसज्येत । तस्मान्नैवं शक्यं वक्तुम् । न चेदेवं जायते विचारणा ।

कश्चात्र विशेषः ?

**भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषः ॥ ५ ॥**

भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषो भवति । अभिमनायते । 'तिङ्ङतिङः' [ ८ । १ । २८ ] इति निघातः प्रसज्येत ।

अस्तु तर्हि प्रकृत्यर्थविशेषणम् ।

**सोपसर्गादिति चेदटि दोषः ॥ ६ ॥**

सोपसर्गादिति चेदटि दोषो भवति । स्वमनायतेति ।

अत्यल्पमिदमुच्यते—'अटि दोषो भवती'ति । अड्ल्यब्द्विर्वचनेष्विति वक्तव्यम् । अटि उदाहृतम् । ल्यपि—सुमनाय्य । द्विर्वचने—अभिमिमनायिषते ।

प्र०—शोमनं प्राप्नोतीत्यादिरर्थः क्यङन्तस्य भवति । यदा तु मनःशब्देन स्वादीनां बहुव्रीहिरिति पक्षस्तदा प्रकृत्यर्थविशेषणं ते भवन्तीति विचारः क्रियते । प्राक्प्रकृतेरिति । प्रकृतेरेवावयवाः पूर्वभूताः पठ्यन्त इत्यर्थः । निघात इति । मनःशब्दात् क्यङि कृते मनायत इत्यस्य तिङन्तस्य पदस्याऽतिङन्तात् स्वादेः पदादुत्तरत्वात् । प्रकृत्यर्थविशेषणत्वे तु सुमनायत इत्यादि तिङन्तं संपद्यत इति तद्व्यतिरिक्तपदान्तराऽभावान्निघाताऽभावः । उपसर्गस्य तु धात्वन्तर्भावात्ततः पूर्वमडटौ प्राप्नुतः । क्यङन्ते च तस्याऽनुप्रवेशात्तद्व्यतिरिक्तपदाऽभावात्समासाऽभावाल्लोपाऽप्रसङ्गः । क्यङन्ते च सनि कृते सोपसर्गस्य द्विर्वचनप्रसङ्गः । अवश्यमिति । ग्रामशब्द एव युद्धे

उ०—पक्षद्वयेऽप्यार्थ इति भावः । मनः कर्मेति । मन कर्तृशोभनं कर्म प्राप्नोतीत्यन्वयः । प्रकृतेः प्राक्पाठे एवाऽसमस्तत्वसमस्तत्वाभ्यामपक्षद्वयोपपत्तेरुक्तत्वेनाह—प्रकृतेरेवेति । अवयवसंबन्धे षष्ठी । प्राक्त्वञ्चावयवान्तरापेक्षयेति भावः । बहुव्रीहिविवक्षयैवमुक्तमित्याशयः । 'न चेदेवं जायते विचारणे'त्यस्य 'समस्तत्वाऽसमस्तत्वाभ्या'मिति शेषः ।

समासाऽभावादिति । क्त्वान्तेन समासाऽभावादित्यर्थः । अनञ्पूर्वे समासे विद्यमानस्य क्त्वो ल्यबिति सूत्रार्थ इति भावः । तत्राऽड्द्विर्वचनयोरनिष्टदेशे प्राप्तिः, ल्यपस्त्वसिद्धेरेवेति भावः । भाष्ये—अवश्यं सङ्ग्रामयतेरिति । सङ्ग्रामयतेः सोपसर्गाद्यथोत्पत्तिर्भवति तिङां, तथा णिजुत्पत्तिर्वक्तव्येत्यर्थः । अवश्यमित्यनेन चाऽस्य फलान्तरमपि सूचितम् । तच्च समः पूर्वमट् । अन्यथा 'तत्करोती'त्यनेन सिद्धे

१ 'स्यात्' पा० । २—'प्रसज्येत' पा० ।

नैष दोषः । अवश्यं सङ्ग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या—'असङ्ग्रामयत शूर' इत्येवमर्थम् । तन्नियमार्थं भविष्यति 'सङ्ग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गा'दिति ।

यदि नियमः क्रियते स्वरो न सिध्यति । एवं तर्हि भृशादिषूपसर्गस्य पराङ्गवद्भावं वक्ष्यामि ।

यदि पराङ्गवद्भाव उच्यते, अड्व्यवधिर्वचनानि न सिध्यन्ति । स्वरविधाविति वक्ष्यामि । एवं च कृत्वाऽस्तु प्रत्ययार्थविशेषणमपि । ननु चोक्तं 'भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोष' इति । स्वरे पराङ्गवद्भावेन परिहृतम् ।

अयं तर्हि प्रत्ययार्थविशेषणे सति दोषः—क्यङोक्तत्वात्तस्यार्थस्योपसर्गस्य प्रयोगो न प्राप्नोति । किं कारणम् ? 'उक्तार्थानामप्रयोग' इति । तद्यथा—'अपि काकः श्येनायते' इत्यत्र क्यङोक्तत्वादाचारार्थस्याऽऽङः प्रयोगो न भवति† । अस्त्यत्र

प्र०—वर्तते सामान्यतोदृष्टाच्चानुमानात् क्रियाविशेषद्योतकः संशब्दः । तथा च 'वा पदान्तस्ये'ति परसवर्णविकल्पो भवति । उपसर्गसदृशाऽनर्थकशब्दान्तराऽवयवे तु संग्रामशब्देऽभ्युपगम्यमाने परसवर्णविकल्पो न स्यात् । तत्र 'ग्राम युद्धे' इत्येव वक्तव्यं, संशब्दस्तु द्योतकः प्रयोगदर्शनाल्लभ्यते । यथा 'इक्स्मरणे' 'इङध्ययने' इत्यनयोरधिः । नियमार्थस्तु संग्रामेतिपाठः । नियमार्थत्वे

उ०—तद्वैयर्थ्यं स्पष्टमेव । तद्ध्वनयन्नुदाहरति—असङ्ग्रामयतेति । यद्यपि संङ्ग्रामशब्दे 'सं'शब्दो नोपसर्गस्तथापि 'सोपसर्गा'दित्यस्य सोपसर्गसमानाकारादित्यर्थो बोध्यः ।

ननु 'प्रातिपदिकाद्धात्वर्थ' इत्येव णिच् सिद्ध इति चेन्न; 'प्रजयती'त्यादावुपसर्गरहितस्यैव धातुताया दृष्टत्वेनाऽत्रापि तद्रहितणिजन्तस्यैव धातुत्वबुद्धिवारणाय तत्सत्त्वात् । प्रकृते तु विशिष्टस्यैव प्रकृतित्वेनोपदेशात्स्वादीनां वाचकत्वाच्च विशिष्टस्यैव धातुत्वापत्तिरित्याशयात् । तदाह—ग्रामशब्द एवेति । अनेनेतरद्योतकसाम्यं बोधितम् । सामान्यत इति । क्रियावाचकयुक्तानां क्रियाविशेषद्योतकत्वस्य दृष्टत्वेनाऽत्रापि युद्धक्रियाद्योतकत्वमनुमीयत इत्यर्थः । उपसर्गसदृशाऽनर्थकेति । अनर्थकत्वमात्रं निषिध्यते । तत्सदृशो निपात इत्यर्थः । इदञ्चिन्त्यम्—उपसर्गसमानाकारत्वेन निपातत्वादनर्थकस्यापि निपातस्य प्रातिपदिकत्वेन सुबन्तत्वात् ।

तत्रेति । युद्धे वर्तमानो यो ग्रामशब्दस्तस्मादित्युक्तिसामर्थ्येन सम्पूर्वाद्भविष्यति णिच् । तद्विशिष्टादेव च तिङ् भविष्यतीति भावः । नियमार्थ इति । 'सङ्ग्रामयतेरेव सोपसर्गाद्यथा तिङुत्पत्तिस्तथा प्रत्ययोत्पत्तिः, अन्यस्मात्तु सोपसर्गाद्यथा तिङुत्पत्तिर्न तथा प्रत्ययोत्पत्ति'रिति नियमार्थः । तत्फलितमाह—प्रत्ययोत्पत्ताविति । प्रत्ययोत्पत्तिकाले पृथक्करणेऽपि सामर्थ्याच्चद्विषयके लक्षणे 'सुबन्ता' दित्यंशे 'यस्माद्विहितस्तदादी'त्यंशाऽप्रवृत्त्या प्रत्ययोत्पत्तौ न दोष इति भावः । पृथक्करणाच्च जातसमासाऽभावः । अतएव 'सुमनाय्ये'त्यादौ पुनः क्त्वान्तेन समासे ल्यप्सिद्धिरिति ज्ञेयम् । ननु प्रत्ययार्थविशेषणपक्षोऽसङ्गतः, तत्र मनस्वी सुष्ठु

† ३ । १ । ११

विशेषः । एकेनात्र विशिष्टे प्रत्ययार्थे प्रत्यय उत्पद्यते, इह पुनरनेकेन । तत्र मनायत इत्युक्ते सन्देहः स्यात्—अभिभवतौ सुभवतावुद्भवतौ दुर्भवताविति । तत्राऽसन्देहार्थमुपसर्गः प्रयुज्यते ।

यत्र तर्ह्येकेन—उत्पुच्छयते‡ ? अत्राप्यनेकेन । 'पुच्छादुदसने पुच्छाद्व्यसने पुच्छात्पर्यसने चे'ति ॥ १२ ॥

## लोहितादिडाज्भ्यः क्यष् ॥ ३ । १ । १३ ॥

किमर्थः ककारः ? गुणवृद्धिप्रतिषेधार्थः । 'क्ङिति च' [ १ । १ । ५ ] इति गुणवृद्धिप्रतिषेधो यथा स्यात् । नैतदस्ति प्रयोजनम् । सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते, धातोश्च विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञां लभते ×, न चायं धातोर्विधीयते । लोहितादीनि प्रातिपदिकानि ।

सामान्यग्रहणार्थस्तर्हि । क्व सामान्यग्रहणार्थेनार्थः ? 'नः क्ये' [ १ । ४ । १५ ] इति । नायं नान्ताद्विधीयते ।

इह तर्हि—'यस्य हलः' 'क्यस्य विभाषा' [ ६ । ४ । ४९; ५० ] इति । नायं हलन्ताद्विधीयते ।

प्र०—च प्रत्ययोत्पत्तावुपसर्गः पृथक्क्रियते । अतो धातौ तेषामनन्तर्भावाद्यथेष्टमडादिसिद्धिः । प्रत्ययार्थविशेषणपक्षे तु विरोधादभूततद्भावविषयत्वं नाश्रीयते । असंग्रामयतेति । संग्रामयतिरनुदात्तेद्बोद्धव्यः ॥ १२ ॥

उ०—भवतीत्याद्यर्थेऽभूततद्भावाऽभावादत आह–प्रत्ययार्थेति । एवंच तद्विरोधादेव प्रत्ययार्थविशेषणपक्षोऽसङ्गत इति भावः । सङ्ग्रामयतिरनुदात्तेदिति । 'सङ्ग्राम युद्धे' इत्यत्राऽकारस्याऽनुदात्तत्वानुनासिकत्वे प्रतिज्ञेये । अवयवे च तस्याऽचारितार्थ्यात्समुदायविशेषकतेति भावः । नन्वकारस्याऽनुदात्तत्वाऽनुनासिकत्वप्रतिज्ञाने तत्सामर्थ्यादुच्चारणकालाऽव्यवहितोत्तरकाले इत्त्वे लोपे उपस्थिते मान्तग्रामशब्दस्य तदन्तस्य वा लोके युद्धे वर्त्तमानत्वाभावेन 'युद्धे योऽयं ग्रामशब्द' इत्यनुवादाऽसम्भवेन सम्पूर्वस्याऽलाभेनच सङ्ग्राम युद्धे वर्त्तते ततश्च णिजित्यर्थं विशिष्टपाठस्यावश्यकत्वेन कथं नियमार्थत्वमिति चेन्न; द्वितीयमकारं प्रश्लिष्य तस्याऽनुदात्तत्वाऽनुनासिकत्वे प्रतिज्ञेये इति तत्तात्पर्यात् । अत्राऽनुदात्तत्वे मानं चिन्त्यम्, भाष्यप्रयोगस्य पाक्षिकात्मनेपदेनोपपत्तेः । भाष्ये—एवन्तर्हि भृशादिषूपसर्गस्येति । भृशादिषु पठितस्योपसर्गस्येत्यर्थः । तेन 'अभिभृशायते' इत्यादौ न निघातः । 'देवदत्तः सुमनायते' इत्यादौ च सोरपि 'तिङ्ङतिङ' इति निघातः ॥ १२ ॥

‡ पुच्छभाण्डचीवराण्णिङ् ३ । १ । २०

× सार्वधातुकार्धधातुकयोः ७ । ३ । ८४; आर्धधातुकं शेषः ३ । १ । ११४

इह तर्हि—'आपत्यस्य च तद्धितेऽनाति' 'क्यच्व्योश्च' [ ६ । ४ । १५१; १५२ ] इति । नायमापत्यद्विधीयते ।

इह तर्हि—'क्याच्छन्दसि' [ ३ । २ । १७० ] इति । 'याच्छन्दसी'त्येव तद्वक्तव्यं चुरण्युस्तुरण्युर्भुरण्युरित्येवमर्थम्+ ।

इदं तर्हि प्रयोजनम् । यत्तदकृद्यकार इति दीर्घत्वं†† तत्र क्ङिद्ग्रहणमनुवर्तते‡‡ तदिहापि यथा स्यात् लोहितायते । किं पुनः कारणं तत्र क्ङिद्ग्रहणमनुवर्तते ? इह मा भूत्—उरुया धृष्णुयेति×× ।

यदि क्ङिद्ग्रहणमनुवर्तते, पित्र्यमिति† पितू रीङ्भावो न प्राप्नोति‡ । रीङ्भावे क्ङिद्ग्रहणं निवर्तिष्यते ।

यदि निवर्त्तते कथमसूया वसूया च यजमाह इति× ? असूयतेरसूया वसूयतेर्वसूया । अथवा छान्दसमेतत् । दृष्टानुविधिश्च छन्दसि भव[ती]ति ।

यदि च्छान्दसत्वं हेतुर्नाऽर्थः क्ङिद्ग्रहणेनाऽनुवर्तमानेन । कस्मान्न भवति उरुया धृष्णुयेति ? छान्दसत्वात् ।

अथवाऽस्त्वत्र दीर्घत्वं, छान्दसं ह्रस्वत्वं भविष्यति । तद्यथा—'उपगायन्तु मां पत्नयो गर्भिणयो युवतय' इति ।

---

प्र०—लोहितादि । भुरण्युरिति । कण्ड्वादियगन्तादुप्रत्ययः । उरुयेति । सुपां सुलुगिति तृतीयास्थाने यादेशः । पित्र्यमिति । पितुरागतमिति 'पितुर्यच्चेति यत्प्रत्ययः । यदीति । यदि

---

उ०—लोहितादिडा । भाष्ये—गुणवृद्धीति । गणरत्नपठितेगन्तेभ्यस्तत्प्राप्तिः । पित्र्यमिति रीङ् । यस्येति लोपः । ननु क्ङितीति निवृत्तावसूयेत्यपि सिद्धमत आह—यदीति । उत्तरमिति । असूयया धनेच्छया च यजामहे इति श्रुत्यर्थः । अप्रत्ययान्तटाबन्ताद्विभक्तेश्छान्दसो लुगिति भावः । अथवेति पक्षे प्राणैर्वसुभिश्च यजामहे इत्यर्थः । भाष्ये नाऽर्थः क्ङिद्ग्रहणेनेति । अत एव 'ज्यादादीयस' इत्यस्याऽङ्ग-

---

१—'स्येतावद्वक्तव्यं' पा० ।

+ 'चुरण । भुरण । तुरण ।' कण्ड्वादिषु ( ३ । १ । २७ ) पठ्यन्ते । तेभ्यो यगन्तेभ्यः 'सनाशंसभिक्ष उः' ( ३ । २ । १६८ ) इत्युः प्रत्ययः ।     †† अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५

‡‡ अयङ् यि क्ङिति ७ । ४ । २२ इत्यस्मात् ।     ×× सुपां सुलुक्० ७ । १ । ३९ इति 'या' आदेशः । प्रयोगस्तु ऋग्वेदे १ । २३ । ११ इत्यादिस्थलेषु द्रष्टव्यः ।

† पितुर्यच्च ४ । ३ । ७९     ‡ रीङ् ऋतः ७ । ४ । २७; यस्येति च ६ । ४ । १४८

× 'सुक्षेत्रिया सुगातुया वसूया च यजामहे' ऋ० १ । ९७ । २

अथ किमर्थः षकारः ? विशेषणार्थः । क्व विशेषणार्थेनार्थः ? 'वा क्यषः' [ १ । ३ । ९० ] इति । वा यादिति ह्युच्यमाने—'पाश्या'+ अतोऽपि प्रसज्येत । नैतदस्ति प्रयोजनं परस्मैपदमित्युच्यते न चाऽत्र[1] परस्मैपदं नाप्यात्मनेपदं पश्यामः । सामान्यग्रहणाविघातार्थस्तर्हि भविष्यति । क्व सामान्यग्रहणाविघातार्थेनार्थः ? 'क्याच्छन्दसी'ति । याच्छन्दसीत्येवं च[2] तद्वक्तव्यम् । चुरण्युः तुरण्युः भुरण्युरित्येवमर्थम् ।

**लोहितडाज्भ्यः क्यष्वचनम् ॥ १ ॥**

लोहितडाज्भ्यः क्यष्वक्तव्यः । लोहितायति, लोहितायते । पटपटायति पटपटायते । [ दमदमायति दमदमायते । मटमटायति मटमटायते ] ।। अथाऽन्यानि लोहितादीनि ?

**भृशादिष्वितराणि ॥ २ ॥**

भृशादिष्वितराणि पठितव्यानि । किं प्रयोजनम् ? 'ङित' इत्यात्मनेपदं† यथा

प्र०—रीङ्भाव एव निवर्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्यां पूर्ववद्यादेशे कृते दीर्घाभावादसूयावसूयेति न सिध्यति । असूयतेः कण्ड्वादियगन्तस्याऽसूयेति । वसूयतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरम् । अथवेति । वर्णव्यत्ययेन दीर्घः क्रियतइत्यर्थः । यदीति । अनेन ककारः प्रत्याख्यातः । इदानीं षकारप्रत्याख्यानाय विचारः क्रियते-अथ किमर्थ इति । पाश्येति । 'पाशादिभ्यो य' इति समूहे यप्रत्ययः । 'वा या'दिति सूत्रं विध्यर्थं मन्यते । टापि कृतएकादेशस्यान्तवद्भावाद्यप्रत्ययान्तमेतत् । नैतदस्तीति । सामान्यविहितानामात्मनेपदपरस्मैपदानां नियमार्थं प्रकरणमित्यदोषः । लोहितडाज्भ्य इति । आदिशब्दप्रत्याख्यानमेतत् । अपठितसङ्ग्रहार्थोप्यादिशब्दो

उ०—वृत्तपरिभाषाज्ञापकत्वं सङ्गच्छते । नियमार्थमिति । ननु नियमार्थत्वेऽपि पाश्यासभ्यादिशब्देभ्य आचारक्विबन्तेभ्यः पदे तङ् स्यात्तद्व्यावृत्त्यर्थं षकारोच्चारणमिति चेन्न, एतद्भाष्यप्रामाण्येन मूलभूताऽनुबन्धमन्यद्वा निमित्तमादायाऽऽचारक्विबन्ते एतत्प्रकरणाऽप्रवृत्तेः । अनभिधानादीदृशे विषये आचारक्विपोऽभाव एवेत्यन्ये ।

भाष्ये भृशादिष्वितराणीति । नन्वभूततद्भावे क्यङ्, क्यष्तु तदभावे—इति तदभावे पदद्वयार्थमावश्यकमादिग्रहणमिति चेन्न; अत्राप्यच्वेरित्यनुवर्त्याऽस्यापि अभूततद्भाव एव प्रवृत्तेः । अत एव नित्यात्मनेपदार्थं भृशादिपाठ इत्युक्तम् । अपठितेति । तेन 'चर्मायति चर्मायते' इत्यादि वृत्त्याद्युक्तमसङ्गतं,

+ पाशादिभ्यो यः ४ । २ । ४९ 1 'चाऽतः' पा० । 2 क्वचिन्न ।
† अनुदात्तङित० १ । ३ । १२

स्यात् ॥ १३ ॥

## कष्टाय क्रमणे ॥ ३ । १ । १४ ॥

'कष्टाये'ति किं निपात्यते ? कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽनार्जवे क्यङ् निपात्यते । कष्टाय कर्मणे क्रामति--कष्टायते ॥ अत्यल्पमिदमुच्यते---कष्टायक्रमण इति ।

सत्त्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम् ॥ १ ॥

सत्त्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचीर्षायामिति वक्तव्यम् । सत्त्र--सत्त्रायते । सत्त्र । कक्ष--कक्षायते । कक्ष । कष्ट--कष्टायते । कष्ट । कृच्छ्र---कृच्छ्रायते । कृच्छ्र । गहन--गहनायते । गहन ।

अपर आह---'सत्त्रादिभ्यश्चतुर्थ्यन्तेभ्यः क्रमणेऽनार्जवे क्यङ् वक्तव्यः । तान्येवोदाहरणानि ।

---

प्र०—न भवति, तस्य वार्तिककारेण दूषितत्वात् ॥ १३ ॥

कष्टाय । कष्टायेति किं निपात्यत इति । विधावनार्जवमेव क्रमणमिति विशेषो न लभ्यत इति क्रमणविशेषलाभाय निपातनाश्रयणम् । सत्त्रेति । सत्त्रादयोऽत्र वृत्तिविषये पापपर्यायाः । कण्वं पापमुच्यते । कुटिलायेति । दुरध्येयत्वादनुवाकस्याऽनार्जवमस्तीति भावः ।

---

उ०—'नाऽयं हलन्ताद्विधीयत' इति भाष्योक्तेश्चेति बोध्यम् ॥ १३ ॥

कष्टाय क्रमणे । 'कष्ट'शब्दाच्चतुर्थ्यन्तात् क्रमणेऽर्थे क्यङित्यर्थेऽर्थविशेषो न लभ्येत तदर्थं निपातनमित्याह—विधाविति । भाष्ये क्रमणेऽनार्जव इति । यद्यत्र अनार्जवमेव क्रमणशब्दार्थस्तदा 'कष्टाय कर्मणे कुटिलो भवती'त्यर्थः स्यात् । न चाऽयमर्थः कष्टायत इत्यतो गम्यते । किञ्च 'सत्त्रादिभ्य' इति वार्तिकभाष्ये 'सत्त्रादिभ्य इति किमर्थं' 'कुटिलायाऽनुवाकाय क्रामती'त्युदाहरणे 'कुटिलाये'त्यस्य वैयर्थ्यापत्तिः । किञ्च 'चतुर्थ्यन्तेभ्य' इति किमर्थम्, अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थकम्'जः कष्टं क्रामती'त्युदाहरणं भाष्ये दत्तमसङ्गतं स्यात्, अनार्जवरूपे क्रमणेऽवृत्तेर्द्वंयङ्गविकलत्वात् । तस्मादनार्जवे इत्यस्याऽनृजुविषये क्रमणे इत्यर्थः । स्वार्थिकाऽण्णन्ताऽऽर्जवशब्देन नञ्तत्पुरुषः । एवञ्चाऽनृजौ वर्तमानात्कष्टशब्दात्क्रमणेऽर्थे क्यङित्यर्थः फलति । 'कष्टाय कर्मणे क्रामती'त्यस्य च कष्टमनृजु कर्म कर्तुं गच्छतीत्यर्थः । अनृजु च पापम् । तेन पापार्थकष्टशब्दात्प्रत्यय इत्यर्थज्ञानार्थं निपातनम् । तेन दुःखपर्यायाद्दुःखमनुभवितुं क्रामतीत्यर्थे न । एतदेव ध्वनयता 'कष्टाय कर्मणे' इति कर्मपदम्प्रयुक्तम् । अत एव सूत्रार्थव्याख्यानोत्तरम्—'अत्यल्पमिदमुच्यते कष्टाय क्रमणे इति, सत्त्रादिभ्यः कण्वचिकीर्षायामिति वक्तव्य'मित्युत्तरभाष्यं सङ्गच्छते । पापचिकीर्षायां गम्यमानायामित्यर्थः । न च चिकीर्षा उत्साह एव, तस्या गम्यत्वे 'क्रामती'ति परस्मैपदप्रयोगाऽनुपपत्तिः, गमनरूपक्रमणपदार्थेनोत्साहस्य गम्यत्वेऽपि क्रमेस्तदर्थत्वाऽभावात् । नव्यैस्तु

---

१ इदं क्वचिन्न ।

सत्त्रादिभ्य इति किमर्थम् ? कुटिलायाऽनुवाकाय क्रामति[1] । चतुर्थ्यन्तेभ्य इति किमर्थम् ? अजः कष्टं क्रामति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैतत्प्रत्ययान्तनिपातनम् । किं तर्हि ? तादर्थ्ये एषा चतुर्थी । कष्टाय यत्प्रातिपदिकं, कष्टार्थे यत्प्रातिपदिकमिति ॥ १४ ॥

## कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ ३ । १ । १५ ॥

रोमन्थ इत्युच्यते कोऽयं[2] रोमन्थो नाम ? उद्गीर्णस्य वाऽवगीर्णस्य वा मन्थो रोमन्थ इति । यद्येवं, हनुचलन इति वक्तव्यम् । इह मा भूत्—कीटो रोमन्थं वर्तयतीति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कस्मान्न भवति—कीटो रोमन्थं वर्तयतीति ? 'अनभिधानात्' ।

### तपसः परस्मैपदं च ॥ १ ॥

तपसः परस्मैपदं चेति वक्तव्यम् । तपश्चरति तपस्यति । कथं 'तपस्यते लोकजिगीषुरग्रेः' ? छान्दसत्वाद्भविष्यति ॥ १५ ॥

प्र०—अज इति । अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थः । कष्टाय यदिति । कष्टलक्षणार्थप्रतिपादनाय यत्प्रातिपादिकं प्रयुज्यते तस्मात् क्रमणेऽर्थे क्यङ्भवतीत्यर्थः । क्रमणविशेषश्चाऽनार्जवमभिधानशक्तिस्वाभाव्याल्लभ्यते । व्यवस्थितविभाषाविज्ञानाच्च पापादिभ्योऽतिप्रसङ्गाऽभावः ॥ १४ ॥

कर्मणो । उद्गीर्णस्येति । मुखप्रदेश आकृष्टस्येत्यर्थः । अवगीर्णस्येति । अपानप्रदेशान्निःसृतस्येत्यर्थः । हनुहलन इति । हनुचलनसहचरितं चर्वितस्य मुखप्रदेश आकृष्य यच्चर्वणं तत्र यथा स्यादित्यर्थः । कीट इति । अपानप्रदेशान्निःसृतमश्नातीत्यर्थः । अनभिधानादिति । रोमन्थायत इति क्यङन्तेन लौकिके प्रयोगे चर्वितचर्वणस्यैवाऽभिधानं न त्वर्थान्तरस्येत्यर्थः ॥ १५ ॥

उ०—'धृत्तिसर्गे'त्यादौ क्लृप्तोत्साहार्थत्वमेवाऽऽश्रित्य चिकीर्षाया एवोत्साहरूपायाः प्रत्ययार्थत्वमाश्रित्य 'क्रमत' इत्यात्मनेपदमप्रयुक्तं, तद्भाष्यविरुद्धम् । अनार्जवमेव क्रमणमिति । अनृजुविषयमेव क्रमणमित्यर्थः । तद्ध्वनयन् वक्ष्यति—अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थं इति । अपर आहेत्यनेन च परस्परं वाक्यानां व्याख्येयव्याख्यानभावो गम्यत इति न कश्चिद्विरोधः । व्यवस्थितेति । अनभिधानादिति तत्त्वम् ॥ १४ ॥

कर्मणो रोम । भाष्ये अवगीर्णस्य वा मन्थ इति । मन्थो—मन्थनम् । तच्चोद्गीर्णस्य चर्वणम् । अन्यस्याऽशनरूपम् । हनुचलन इत्युक्त्योद्गीर्णविषय एव प्रयोगः । तदुपपादयति—सहचरितमिति । अश्नातीत्यर्थं इति । वर्तुलं करोतीत्यर्थ इत्यन्ये । नन्विति । एवञ्च तत्र प्रयोगाऽभावात्किं तन्निवृत्त्यर्थेन यत्नेनेति भावः ॥ १५ ॥

१—'क्रामत्यनुवाकाय' पा० । २—इदं क्वचिन्न ।

## वाष्पोष्मभ्यामुद्वमने ॥ ३ । १ । १६ ॥

फेनाच्चेति वक्तव्यम् । फेनायते ॥ १६ ॥

## शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे ॥ ३ । १ । १७ ॥

अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम् । अटा-अटायते । अट्टा-अट्टायते । शीका-शीकायते । कोटा-कोटायते । पोटा-पोटायते । सोटा-सोटायते । प्रुष्टा-प्रुष्टायते । प्लुष्टा-प्लुष्टायते ।

### सुदिनदुर्दिनाभ्यां च ॥ १ ॥

सुदिनदुर्दिनाभ्यां चेति वक्तव्यम् । सुदिनायते दुर्दिनायते ।

### नीहाराच्च ॥ २ ॥

नीहाराच्चेति वक्तव्यम् । नीहारायते ॥ १७ ॥

## सुखादिभ्यः कर्तृवेदनायाम् ॥ ३ । १ । १८ ॥

कर्तृवेदनायामिति किमर्थम् ? इह मा भूत्—सुखं वेदयते प्रसाधको देवदत्तस्य ।

'कर्तृवेदनाया'मित्युच्यमानेऽप्यत्र प्राप्नोति । किं कारणम् ? 'कर्तु'रितीयं कर्तरि षष्ठी, 'वेदनाया'मिति चा ऽनो भावे । स यद्येवात्मनो वेदयतेऽथापि परस्य, कर्तृवेदनैवाऽसौ भवति ।

न कर्तृग्रहणेन वेदनाऽभिसंबध्यते । किं तर्हि ? सुखादीन्यभिसंबध्यन्ते—'कर्तुर्यानि सुखादीनी'ति[1] ॥ १८ ॥

प्र०—सुखादिभ्यः । किं तर्हीति । वेदनायाः कर्तारमन्तरेणाऽभावात् । कर्तृग्रहणसामर्थ्यात् सुखादीनि विशेष्यन्ते । कर्तृग्रहणं च 'सुपां सुलु'गिति षष्ठीलुका निर्दिष्टम् । ततश्च वेदयिता यदात्मसंबन्धीनि सुखादीनि वेदयते तदा प्रत्ययो, नान्यदीयसुखादिवेदने ॥ १८ ॥

उ०—सुखादिभ्यः । भाष्ये—सुखं वेदयत इति । मुखप्रसादादिना देवदत्तस्य सुखं प्रसाधको वेदयत इत्यन्वयः । यद्यप्यन्तरङ्गत्वात्कारकत्वेन वेदनायामन्वयो न्याय्यस्तथापि सामर्थ्यात्सुखादिभिरन्वय इत्याह—वेदनाया इति । समस्तस्याऽन्यत्राऽन्वयाऽसम्भवादाह—सुपां सुलुगिति । 'वेदना'शब्दे 'विद चेतने'ति चौरादिकण्यन्तात् 'ण्यासश्रन्थ' इति युच् । नान्यदीयेति । मुखप्रसादादिना लिङ्गेनेति भावः ॥ १८ ॥

[1] इति क्वचिन्न ।

## नमोवरिवश्चित्रङः क्यच् ॥ ३ । १ । १९ ॥

### नमसः क्यचि द्वितीयानुपपत्तिः ॥ १ ॥

नमसः क्यचि द्वितीया नोपपद्यते—नमस्यति देवा¹निति । किं कारणम् ? नमःशब्देन योगे चतुर्थी विधीयते† सा प्राप्नोति ।

### प्रकृत्यन्तरत्वात्सिद्धम् ॥ २ ॥

नमःशब्देन योगे चतुर्थी विधीयते, नमस्यतिशब्दश्चायम् । ननु च नमस्यतिशब्दे नमःशब्दोऽस्ति तेन योगे प्राप्नोति । नैष दोषः । अर्थवतो नमःशब्दस्य ग्रहणं, न च नमस्यतिशब्दे नमःशब्दोऽर्थवान् ।

अथवोपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीया विभक्तिर्भविष्यति ।

### क्यजादिषु प्रत्ययार्थनिर्देशः ॥ ३ ॥

क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः । नमसः पूजायाम् । वरिवसः परिचर्यायाम् । चित्रङ आश्चर्ये । भाण्डात्समाचयने । चीवरादर्जने परिधाने च³ । पुच्छादुदसने व्यसने पर्यसने चेति†† । किं प्रयोजनम् ? क्रियावचनता यथा स्यात् ।

नैतदस्ति प्रयोजनम् ? आचार्यप्रवृत्तिर्ज्ञापयति—'क्रियावचनाः क्यजादय' इति, यदयं 'सनाद्यन्ता धातवः' [ ३ । १ । ३२ ] इति धातुसंज्ञां शास्ति । कथं कृत्वा ज्ञापकम् ? धातुसंज्ञावचन एतत्प्रयोजनं 'धातोः' [ ३ । १ । ९१ ] इति तव्यदादी-

प्र०—नमो वरिव० । प्रकृत्यन्तरत्वादिति । 'नमस्ये'ति धातुं व्युत्पादयितुं निपातनमःशब्दसदृशशब्दान्तरावयवकल्पना क्रियते । परमार्थतस्तु अविद्यमानावयवाऽर्थो नमस्यशब्दः पूजावाची प्रकृत्यन्तरमित्यर्थः । ननु चेति । 'स एवाय'मिति प्रत्यभिज्ञानान्निपात एवाऽयमिति भावः । अर्थवत इति । नमस्यशब्दस्य समुदायस्यैवाऽर्थवत्त्वादिति भावः । अथवेति । अर्थवत्ताभ्युपगमेन

उ०—नमोवरि । 'नमस्य'शब्दस्य प्रकृत्यन्तरत्वेऽपि 'नमः'शब्दात्क्यचो विधानेन तद्योगे चतुर्थी स्यादत आह—नमस्येतीति । निपात एवेति । अव्ययत्वोपलक्षणमेतत् । अन्यथा 'साक्षात्प्रभृतीनी'त्यनेन कृञ्योगे एव च्व्यर्थे एव च निपातत्वविधानादत्र तदभावेनाऽसङ्गतिः स्यात् । अर्थवत्त्वादिति । अस्य शुद्धरूढत्वेन वृत्ते जहत्स्वार्थत्वादिति भावः । इत्यर्थाङ्गीकारेणेति । अनेनैतत्सूचयति—'नाऽयमर्थोऽतःप्रतीयते, किन्तु वरिवस्याशब्दादिभ्यः सपर्यादिमात्रप्रतीतिवदस्मात्पूजामात्रप्रतीतिरि'त्याद्य एव समाधिरत्र युक्तः, अयन्त्वेकदे-

१ इति क्वचिन्न । † नमः स्वस्तिस्वाहा० २ । ३ । १६ २—इदं क्वचिन्न ।
३—'वा' पा० । †† पुच्छभाण्डचीवराण्णिङ् ३ । १ । २०

नामुत्पत्तिर्यथा स्यात्‡ । यदि चाऽत्र क्रियावचनता न स्याद्धातुसंज्ञावचनमनर्थकं स्यात् । सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः । किं कारणम् ? साधने तव्यदादयो विधीयन्ते, साधनं च क्रियायाः । क्रियाऽभावात्साधनाऽभावः । साधनाऽभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः । पश्यति त्वाचार्यः—'क्रियावचनाः क्यजादय' इति, ततः सनाद्यन्ता धातव' इति धातुसंज्ञां शास्ति ।

ननु चेदं प्रयोजनं स्यात् 'परसाधने तव्यदादीनामुत्पत्तिं वक्ष्यामी'ति । न परसाधने उत्पत्त्या भवितव्यम् । किं कारणम् ? 'साधन'मिति संबन्धिशब्दोऽयम् । संबन्धिशब्दाश्च पुनरेवमात्मका यदुत संबन्धिनमाक्षिपन्ति । तद्यथा—'मातरि वर्तितव्यम्' 'पितरिशुश्रूषितव्य'मिति । न चोच्यते 'स्वस्यां मातरि' 'स्वस्मिन् वा पितरी'ति, संबन्धाच्चैतद्गम्यते—'या यस्य माता' 'यश्च यस्य पिते'ति । एवमिहाऽपि संबन्धादेतद्गन्तव्यं—'यस्य धातोर्यत्साधन'मिति ।

अथवा धातव एव क्यजादयो, न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते । कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति । येनैव खल्वपि हेतुना पचादयः क्रियावचनास्तेनैव क्यजादयोऽपि । एवमर्थं खल्वाचार्यश्चित्रयति—'क्वचिदर्थानादिशति, क्वचिन्ने'ति[१] ।

एवमप्यर्थदेशनं कर्तव्यं—कथमिमे अबुधा बुध्येरन्निति ।

प्र०—नमस्कारेण पूजयतीत्यर्थाङ्गीकारेण परिहारान्तरम् । चतुर्थ्यास्तु'नमोऽस्तु देवेभ्य' इत्यादिरवकाशः । 'नमस्करोमि नारायण'मित्यत्रापि कारकविभक्तिरेव भवति । क्यजादिष्विति । करणग्रहणस्य वेदनाग्रहणेन व्यवधानादनधिकारे स्वार्थे प्रत्ययप्रसङ्ग इति वचनम् । वरिवस इति । सपर्या—सेवा । 'परिचर्याया'मिति पाठान्तरम् । परसाधन इति । शब्दान्तरवाच्यायां क्रियायां यत्कर्मादिकारकं तत्र तव्यादीनां'वृक्षं पश्ये'त्यादौ द्वितीयादीनामिव स्वार्थिकत्वाद्द्र द्रव्यवाचित्वेऽपि क्यजाद्यन्तानामुत्पत्तिः स्याद्देवेति भावः । न परसाधन इति । द्वितीयादीनां प्रातिपदिकाद्विधानात्तस्य च द्रव्यचनत्वाद्ववचनप्रामाण्यात् परसाधन उत्पत्तिर्भविष्यति । तव्यादयस्तु धात्वन्तरेषु

उ०—शिन इति । करणपदाऽनुवृत्त्या क्रियासामान्ये विधावपि प्रयोगवशादेव तद्विशेषप्रतीतिर्भविष्यतीति किमेतैरित्यत आह–करणग्रहणस्येति । भाष्ये–साधने तव्यदादय इति । भावोऽपि क्रियारूप एवेति भावः । शब्दान्तरेति । स्वार्थिकत्वात्क्यजाद्यन्तानां द्रव्यवाचित्वेऽपि शब्दान्तरवाच्यक्रियाकारके तव्यादीनामुत्पत्तिः स्यादेवेत्यन्वयः । तत्र दृष्टान्तो—वृक्षमित्यादि । तव्यादयस्त्विति । एवञ्च धातुसंज्ञाविधानमेवैषां क्रियावाचकत्वे मानमिति भावः । भाष्ये अथवा धातव एवेति । क्रियावचना एवेत्यर्थः । कः खल्वपीति । पचादी-

‡ तव्यत्तव्यानीयरः ३ । १ । ९६ १ इति क्वचिन्न ।

अथवा शक्यमर्थादेशनमकर्तुम् । कथम् ? करण इति वर्तते†, करणं च करोतेरर्थः । करोतिश्च क्रियासामान्ये वर्तते ॥ १६ ॥

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ ३ । १ । २१ ॥

इमौ हलिकली स्त इकारान्तौ [ हलिः कलिः ] । अस्ति हलशब्दः कलशब्दश्चाऽकारान्तः । कयोरिदं ग्रहणम् ? याविकारान्तौ, तयोरत्वं निपात्यते । किं प्रयोजनम् ?

हलिकल्योरत्वानिपातनं सन्वद्भावप्रतिषेधार्थम् ॥ १ ॥

हलिकल्योरत्वनिपातनं क्रियते सन्वद्भावो* मा भूदिति । अजहलत्, अचकलत् ।

नैतदस्ति प्रयोजनम् । इकारलोपे†† कृते 'ऽग्लोपिनां ने'ति प्रतिषेधो भविष्यति । वृद्धौ कृतायां‡ लोपस्तन्नाऽग्लोप्यङ्ग' भवति ।

प्र०—क्रियावाचिषु स्वसाधने सावकाशाः परसाधने नोत्पद्यन्त इत्यर्थः । अथवेति । अभिधानशक्तिस्वाभाव्यादन्तरेणाप्यर्थादेशनं विशिष्टक्रियावचनत्वस्य सिद्धत्वादित्यर्थः । चित्रयतीति । 'चित्र वैचित्र्यकरणे' इति चौरादिकस्य रूपम् । अनेकं मार्गमाश्रयतीत्यर्थः । क्रियासामान्य इति । सामान्येन च विशेषाणामाक्षेपात्क्वश्चित् प्रत्ययः क्वचिद्विशेषे भवतीत्यर्थः । न च वेदनाग्रहणेन करणस्य विच्छेदः, तयोर्विरोधाऽभावात् ॥ १९ ॥

मुण्डमिश्र । कयोरिदं ग्रहणमिति । किमिकारान्तयोः कृतात्वयोर्ग्रहणमुताऽकारान्तयोरेवेति प्रश्नः । किं प्रयोजनमिति । 'हलिकली' इत्येव कस्मान्न क्रियत इत्यर्थः । शब्दान्तरस्य चेति । यद्यपि वृद्धौ कृतायामपि लोपस्य प्रवृत्तिस्तथापि वाचनिकं तस्याऽनित्यत्वम् । अथवा

उ०—नामर्थरहितानामेव पाठात् । क्वचिदर्थानिति । अनेकान् । क्वचित्त्वेकमित्यर्थः । क्वचिन्नेति । एकमपि नादिशतीत्यर्थः । एवमप्यर्थादेशनमिति । 'नमसः पूजाया'मित्यादि । बोध्येरन्निति । निवृत्तप्रेषणास्वार्थे णिच् । बुध्येरन्नित्येव क्वचित्पाठः ॥ १६ ॥

मुण्डमिश्र । निर्देशादेवाऽकारान्तनिर्णयेन प्रश्नाऽनुपपत्तिरत आह–किमिकारेति । भाष्ये – इमाविति । समानार्थावित्यर्थः । यद्यप्यकारान्तयोरेव ग्रहणेऽपि तयोर्नियमार्थत्वादिकारान्ताभ्यां णिजभावेन सर्वदोषपरिहारोऽस्ति तथाप्येकदेश्याह भाष्ये—याविति । नियमश्चै 'तत्सजातीयानुपूर्वीकानामेतदर्थकानाञ्चेद्धलकलयोरेवे'ति । प्रकाराऽन्तरेणाप्येकदेश्युक्तिस्त्वमस्याऽनुपदं वक्ष्यते । भाष्ये—वृद्धिरपि नित्येति ।

† शब्दवैरकलहाऽभ्र० ३ । १ । १७ १—इदं क्वचिन्न । * सन्वल्लघुनि चङ्परेऽनग्लोपे ७ । ४ । ९३ †† ६ । ४ । १५५ वा० १ ‡ अचो ञ्णिति ७ । २ । ११५

इदमिह संप्रधार्यम्—वृद्धिः क्रियतामग्लोप इति, किमत्र कर्तव्यम् ? परत्वाद्-वृद्धिः । नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि प्राप्नोति । [ वृद्धिरपि नित्या । कृतेऽपि लोपे प्राप्नोत्यकृतेऽपि प्राप्नोति । ] अनित्यो लोपः । अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याऽकृतायाम्, 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' । वृद्धिरप्यनित्या । अन्यस्य× कृते लोपे प्राप्नोत्यन्यस्याऽकृते, 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' । उभयोरनित्ययोः परत्वाद्वृद्धिः । वृद्धौ कृतायां लोपः, तन्नाग्लोप्यङ्ग' भवति ।

अत्वे पुनः सति वृद्धिः क्रियतां लोप इति, यद्यपि परत्वाद्वृद्धिर्वृद्धौ कृताया-

प्र०—अन्यस्य प्रवृत्तावप्यन्यस्य स्थानिनोऽप्रवृत्त्या लोपस्याऽनित्यत्वम् । अन्यस्य कृते लोप इति । 'अत उपधाया' इत्यनेनाऽकारस्येत्यर्थः । ननु लोपस्य स्थानिवद्भावात्कथमकारस्य प्राप्नोति ? नैष दोषः । प्राप्तौ सत्यां स्थानिवद्भावेन प्रतिबन्धः क्रियते । पूर्वस्य विधौ स्थानिवद्भावविधानात् । अप्राप्तौ तु पूर्वविध्यभावात्स्थानिवद्भाव एव न स्यात् । यद्यपि भिन्नलक्षणा भिन्नस्वभावा च वृद्धिस्तथापि वृद्धिशब्दवाच्यत्वादभेदमाश्रित्य शब्दान्तरप्राप्त्या वृद्धेर्नित्यत्वं कथितम् । तत्त्वतस्तु लोपे कृते वृद्धेरप्राप्त्याऽनित्यत्वं वक्तव्यम् । न्यायव्युत्पादनाय त्वन्यथाऽभिहितम् । सूत्रं 'प्रातिपदिकाद्धात्वर्थ'इति णिचि सिद्धे प्रपञ्चार्थमित्याहुः । न च 'तत्करोती'त्यादिना तत्र धात्वर्थ-

उ०—कार्यमात्रं नित्यमिति भावः । वाचनिकमिति । 'शब्दान्तरस्ये'तिवचनमिति भावः । वस्तुतस्तदपि न्यायसिद्धमित्याह—अथवेति । प्राप्तौ सत्यामिति । अत्र तूभयोरनित्ययोः परत्वादन्त्यस्यैव वृद्धिर्न तूपधाकारस्येति भावः । तदनास्थयाऽपि समाहितमित्यत्र तात्पर्यम् । ननु पूर्वमन्त्यवृद्धिप्राप्तावपि लोपे उपधावृद्धिप्राप्तिरिति नैकस्या अनित्यत्वमिति शङ्कते—यद्यपीति । भिन्नस्वभावेति । भिन्नस्थानिकेत्यर्थः । वस्तुतोऽचोञ्णितीत्यस्य लोपेन बाधेऽपि 'अत उपधाया' इत्यस्याऽप्रवृत्तिरेव स्थानिवत्त्वेन वाच्या, 'अचो ञ्णिती'त्यस्य चाऽनित्यत्वं लोपे कृतेऽप्राप्त्यैवेत्याशयेनाह—तत्त्वतस्त्विति । न्यायेति । पूर्वोक्तेत्यर्थः । परे त्विदम्भाष्यमेकदेश्युक्तिः, भिन्नलक्षणाया भिन्नस्थानिकाया वृद्धेर्नित्यत्वोक्तेः सिद्धान्त्युक्तित्वाऽभावात् । कृते लोपे स्थानिवद्भावेन वृद्धेरप्राप्तेरपि तदुक्तेस्तदुक्तित्वाऽभावात् । अत एव 'णौ चङी'ति सूत्रे लोपस्य शब्दान्तरप्राप्त्या वृद्धेर्लोपोत्तरमप्राप्त्योभयोरनित्ययोः परत्वाद्वृद्धिरित्याशङ्क्य 'नाऽग्लोपी'ति सूत्रेऽग्ग्रहणाद्वृद्धेर्लोपो बलीयानिति सिद्धान्तितम् । तेनाऽत्रत्यस्यैकदेश्युक्तित्वं स्पष्टमेवोक्तम् । इदमेवाभिप्रेत्य सप्तमे कैयट आह—'अनाश्रित्य ज्ञापकत्वं निपातनमुक्तं, ज्ञापकाश्रयणमेव तु ज्याय' इति ।

प्रातिपदिकाद्धात्वर्थ इति । चुरादिगणसूत्रमिदमिति भावः । तत्करोतीति । 'हेतुमति चे'त्यत्रवार्त्तिकादिदं गणसूत्रमप्रामाणिकम् । अत एव सत्यापपाशेति सूत्रे पाशादिग्रहणं चरितार्थम् । वार्तिके करोतिर्धात्वर्थोपलक्षणम् । तेन 'अश्वयराज'दित्यादीनां सिद्धिः । सत्यापेति सूत्रेऽनुवृत्तकरण इतिवदित्यन्ये । धात्वर्थ-

१—कोष्ठान्तर्गतः पाठः क्वचिन्न । × अत उपधायाः ७ । २ । ११६

मप्यगेव लुप्यते । तस्मात्सुष्ठूच्यते—'हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थ'-मिति ॥ २१ ॥

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ ३ । १ । २२ ॥

'समभिहार' इति कोऽयं शब्दः ? समभिपूर्वाद्धरतेर्भावसाधनो घञ्, समभिहरणं समभिहारः इति । तद्यथा—पुष्पाभिहारः मालाभिहारः उत्पलाभिहारः फलाभिहार इति ।

विषम उपन्यासः । बह्वचो ह्रीमाः सुमनसस्तत्र युक्तः समभिहारः । इह पुनरेका क्रिया ।

यद्यप्येका सामान्यक्रिया, अवयवक्रियास्तु बह्व्यः । अधिश्रयणोदकाऽऽसेच-

प्र०—नियमः क्रियते, राजानमतिक्रान्तवानत्यरराजदित्यादावपि णिचो दर्शनात् । 'मुण्डं करोति माणवक'मित्यादौ सापेक्षेभ्योऽपि णिजर्थं वा ॥ २१ ॥

धातोरेकाचो । इह समभिहारो नाम मूर्तस्याऽनेकस्यैककालस्य भवति । धातुवाच्या तु क्रियैकैव, युगपदेकेन धातुनाऽनेकस्या अनभिधानात् । सा च निवृत्तभेदा साध्यैकस्वभावत्वाद्धातुना प्रत्याय्यते । अधिश्रयणादीनां च क्रमजन्यत्वाद्युगपदवस्थानाऽभावाच्च क्रियासमभिहारो न संभवतीति मन्यमानः पृच्छति—समभिहार इति कोयमिति । इतरस्तद्बुद्धिपरीक्षार्थं

उ०—नियम इति । एवञ्च धात्वर्थमात्रे विधानार्थं स्यात् । 'करणे' इति च धात्वर्थमात्रोपलक्षणं स्यात् । अतएव 'वर्मणा सन्नह्यति संवर्मयती'त्यादिसिद्धिरिति भावः । सापेक्षेभ्योऽपीति । अयमभ्युच्चय इति 'सुपआत्मन' इत्यत्र भाष्ये स्पष्टम् ॥ २१ ॥

धातोरेकाचो । इहेति । यथा पूलादीनाम् । समभिहारश्चौत्तराधर्यम् । तेन क्रियाया विशेषणाऽनुपपत्त्या प्रश्न इत्यर्थः । एककालस्येति । एकदेशस्याप्युलक्षणमेतत् । ननु दिवेर्विजिगीषाक्रीडाद्यनेकार्थत्वदर्शनादाह—युगपदिति । । ननु विषयभेदात्कर्तृभेदाच्च पाकादीनां नानात्वेन कथमेकैवेत्यत आह—सा चेति । एतद्व्यञ्जयमेव साध्यत्वमित्याह—साध्यैकेति । अत एव 'भवद्भिरास्यते' इत्यादौ बहुवचनं नेति भावः । अधिश्रयणादीनां नानात्वादाह—अधीति । युगपदिति । उत्पन्नविनाशित्वादिति भावः । अमूर्तत्वाच्चेत्यपि बोध्यम् । भाष्ये—कोऽयमित्यस्य किमर्थकोऽयमित्यर्थः । मालाऽभिहारे कर्मधारयः । उत्पलाऽभिहारे षष्ठीतत्पुरुषः । बुद्धीति । अनेकासां सकलानामवयवक्रियाणां बुद्धिविषयत्वेन यौगपद्यमिति भावः । बुद्धौ युगपदवस्थानमत्र समभिहार इति बोध्यम् । प्रधानेति । पौनः पुन्येन तस्या एवाऽनुष्ठानादिति भावः । अत्रापि समभिहारो बौद्ध एवेति बोध्यम् । क्रियाया जातित्वरूपसामान्यत्वाऽसम्भवादाह—साधारणीति ।

१—अयं पाठः क्वचिन्न । २—'हि ताः' पा० ।

नतण्डुलाऽऽवपनैधोऽपकर्षणक्रियाः । ताः कश्चित्कात्स्न्र्येन करोति कश्चिदकात्स्न्र्येन । यः कात्स्न्र्येन करोति स उच्यते—'पापच्यत' इति । पुनः पुनर्वा पचति—पापच्यत इति ।

अथ धातुग्रहणं किमर्थम् ? इह मा भूत्—प्राऽटति भृशमिति ।

अत उत्तरं पठति—

**यङ्विधौ धातुग्रहण उक्तम् ॥ १ ॥**

[ यङ्विधौ धातुग्रहणे उक्तम् । ] किमुक्तम् ? तत्र तावदुक्तम्+ 'कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यं, सोपसर्गं कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म, सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वा'दिति । एवमिहापि—क्रियासमभिहारग्रहणाद्यङ्विधौ धातुग्रहणानर्थक्यं, सोपसर्गः क्रियासमभिहार इति चेत्क्रियासमभिहारविशेषकत्वादुपसर्गस्याऽनुपसर्गः क्रियासमभिहारः, सोपसर्गस्य हि क्रियासमभिहारत्वे धात्वधिकारेऽपि यङोऽविधानमक्रियासमभिहारत्वा'दिति ।

अथैकाज्झलादिग्रहणं किमर्थम् ? इह मा भूत्—जागर्त्ति भृशम् । ईक्षते भृशमि'ति ।

प्र०—शब्दव्युत्पत्तिमाह—समभिपूर्वादिति । यद्यप्येकेति । मुख्यस्य समभिहारस्येहाऽसंभवाद्गौण आश्रीयते । बुद्धिगोचराऽनेकसकलावयवक्रियासंगतः, पौनःपुन्येनाऽनुष्ठीयमानप्रधानक्रियाविषयो वेत्यर्थः । सामान्यक्रियेति । साधारणी समूहरूपा क्रियाधातुवाच्येत्यर्थः । यथोक्तं हरिणा—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते ॥
समूहश्च तथाभूतः प्रतिभेदं समूहिषु ।
समाप्यते ततो भेदे कालभेदस्य संभवः' ॥ इति ।

अथवा अधिश्रयणादीनां तादर्थ्येन प्रवर्तनाद्गुणत्वादवयवत्वं, तस्याश्च साधारणत्व-

उ०—सकलाऽवयवसाधारणीत्यर्थः । तदाह—समूहरूपेति । गुणभूतैरिति । क्रमजन्मनामधिश्रयणादीनां बुद्धया प्रकल्पितो योऽभेदस्तद्रूपसमूहस्तैरेव गुणभूतैरवयवैः सह क्रियेत्युच्यत इत्यन्वयः ।

ननु 'प्रकृतः कटं देवदत्त' इत्यादौ कथं भूते'क्त'इत्यत आह—समूहः स इति । तथाभूतः—उद्भूताऽवयवः । समूहिषु—अवयवेषु । प्रतिभेदं—प्रत्येकम् । अभेद इति । बुद्धिकृताऽभेदेऽपीत्यर्थः । तस्याश्चेति । यदव्यवधानेन फलोत्पत्तिस्तस्या इत्यर्थः । अनन्तरमिति । अव्यवधानेन फलोत्पादिकां प्रधानां क्रियामाहुः । अन्यासां तु तादर्थ्यात्तदाख्यता, गौणो व्यवहार इत्यर्थः । विजातीयेति । यथा द्रव्याणां द्रव्यान्तरैरव्यवेतानां समभिहारस्तथा क्रियाणामपि क्रियान्तरैरव्यवेतानामेव स इत्यर्थः । पुनः पुनर्वेति

१ इदं क्वचिन्न । + ३ । १ । ७ वा० १—३

## एकाज्झलादिग्रहणे च ॥ २ ॥

एकाज्झलादिग्रहणे चोक्तम् । किमुक्तम् ? तत्र तावदुक्तम् × 'कर्मसमान-कर्तृग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात्, अकर्मणो ह्यसमानकर्तृकाद्वाऽन-भिधान'मिति । इहापि—'एकाज्झलादिग्रहणानर्थक्यं च क्रियासमभिहारे यङ्वचना-दनेकाचोऽहलादेर्ह्यनभिधान'मिति ।

तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेऽपि ह्येकाज्झलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङाऽर्थस्याभिधानं न भवति, न भवति तत्रोत्पत्तिः । तद्यथा—भृशं शोभते, भृशं रोचते । यत्र चाऽनेकाचोऽहलादेर्वोत्पद्यमानेन यङाऽर्थस्याऽभिधानं भवति, भवति तत्रोत्पत्तिः । तद्यथा—अटाटचते अरार्यते अशाश्यते सोसूच्यते सोसू-त्र्यते मोमूत्र्यते ।

## ऊर्णोतेश्चोपसङ्ख्यानम् ॥ ३ ॥

ऊर्णोतेश्चोपसङ्ख्यानं कर्तव्यम् । प्रोर्णोनूयते ।

अत्यल्पमिदमुच्यते—'ऊर्णोते'रिति ।

सूचिसूत्रिमूत्र्यटचर्त्यशूर्णोतिग्रहणं यङ्विधावनेकाजहलाद्यर्थम् ।

सूचिसूत्रिमूत्र्यटचर्त्यशूर्णोतीनां ग्रहणं कर्तव्यम् । किं प्रयोजनम् ? 'यङ्विधा-वनेकाजहलाद्यर्थम्' । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अटाटचते । अरार्यते ।

प्र०—मुच्यते । तदुक्तम्—

अनन्तरफलं यस्याः कल्पते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता' ॥

कार्त्स्न्येनेति । विजातीयाऽव्यवहितास्साकल्येनेत्यर्थः । अथेति । धातुरेव समभिहारवि-शिष्टक्रियावाची, द्योतकस्तूपसर्गो न तु वाचक इत्यर्थः । प्राटतीति । धातूपसर्गसमुदायस्य क्रिया-विशेषावगतिहेतुत्वात्ततो यदि प्रत्ययः स्यात्ततः सोपसर्गस्य द्विर्वचनं प्रसज्येत । प्राटाटचते इति चेष्यते । सन्सूत्रोक्तं वस्त्विहाप्यतिदिशति—यङ्विधाविति । धात्वधिकारेऽपीति । 'प्रपापच्यत'

उ०—भाष्ये । समूहरूपायाः क्रियायाः कालभेदाद्भेदेऽपि साजात्यात्सैव पुनः पुनरनुष्ठीयत इति बुद्ध्या पौनः पुन्यमिति तात्पर्यम् । धातुरेवेति । 'क्रियासमभिहारे' इत्यस्य समभिह्रियमाणक्रियावाचकादित्यर्थ इति भावः । क्रियाबोधकादित्यर्थोऽपि सम्भाव्यतेत्युत्तरम् । सनिति । एवञ्चाऽऽर्द्धधातुकसंज्ञार्थं धातुग्रहणमित्याद्यपि तत्रत्यमत्र बोध्यमिति ध्वनितम् । तत्फलञ्च 'सोसूच्यते' इत्यादौ णिलोपः । प्रपापच्यत इति । सूत्रन्तु केवले धातौ चरितार्थमिति भावः । एकाज्झलादिग्रहणप्रत्याख्यानादाह—यथान्यास इति । वचनेन वचनप्रत्याख्याने लाघवाऽभावादाह—कार्यान्तरेति । इडुपग्रहस्य फलत्वेन हेतुत्वाऽभावादाह—फलस्य चेति । 'प्रोर्णुत' इति

× ३ । १ । ७ वा० ६; ७

१—केचित्त्विदं भाष्यवार्तिकमित्याहुः ।

अशाश्यते । प्रोर्णोनूयते ॥ ऊर्णोतेर्न वक्तव्यम् ।

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात् ॥

क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम् ॥ ४ ॥

क्रियासमभिहारे यङो लोड्भवति विप्रतिषेधेन । क्रियासमभिहारे यङ्भवतीत्यस्यावकाशः–धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते ऽधातुसंबन्धः । लोलूयते पोपूयते । लोटोऽवकाशः–धातुर्योऽनेकाजहलादिः क्रियासमभिहारे वर्तते धातुसंबन्धः । 'स भवाञ्जागृहि जागृहीत्येवायं जागर्ति' । 'स भवानीहस्व ईहस्वेत्येवायमीहते' । धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते धातुसंबन्धश्च तस्मादुभयं प्राप्नोति 'स भवाँल्लुनीहि लुनीहीत्येवायं लुनाति' । लोड्भवति विप्रतिषेधेन ।

न तर्हीदानीमिदं भवति, स भवाँल्लोलूयस्व लोलूयस्वेत्येवायं लोलूयत इति ? भवति च ।

न वा नानार्थत्वात्कर्तृकर्मणोर्हि लविधानं क्रियाविशेषे स्वार्थे यङ् ॥५॥

न वाऽर्थो विप्रतिषेधेन । किं कारणम् ? 'नानार्थत्वात्' । का नानार्थता ?

प्र०—इत्यादौ । ऊर्णोतेश्चेति । यथान्यासे सिद्ध्यभावाद्वचनम् । कार्यान्तरसिद्धयेऽवश्यमूर्णोतेर्नुवद्भावो वाच्यस्तेनैव यङोऽपि सिद्धिमाह–वाच्य इति । तत्र यङि भावाऽतिदेश, आमिटोस्त्वभावातिदेशस्तयोर्नुतेरभावात् । इड्डुपग्रहादिति । इड्डुपग्रहः–इट्प्रतिषेधः । 'विभाषा गुणे' इति पञ्चमी । फलस्य चाऽत्र हेतुत्वं, यथाध्ययनेन वसतीति । उदाहरणानि प्रोर्णोनूयते प्रोर्णुनाव प्रोर्णुतः प्रोर्णुतवानिति । यङत्र च क्रियासमभिहारस्य द्योतितत्वान्नित्यवीप्सयोरिति, 'क्रियासमभिहारे द्वे भवत' इति वा द्विर्वचनं न भवति । यदा तु भृशार्थेऽपि पौनःपुन्यं विवक्ष्यते तदा 'पापच्यते—पापच्यते' इति द्विर्वचनं भवत्येव । स भवानिति । सामान्यविशेषभावेन क्रियाभेदाश्रयो धातुसंबन्धः । स इति ।

उ०—'श्र्युकः किती'तीट्प्रतिषेधः । इति चेति । वस्तुस्तद्वार्त्तिकस्य लोड्विषयतैवेति लोड्विधायके वक्ष्यते । भवत्येवेति । 'नित्यवीप्सयो'रित्यनेन । सामान्येति । लोडन्तार्थः सामान्यम् । अनुप्रयोगार्थश्च कर्त्राद्यालिङ्गितत्वाद्विशेषः । अन्यथाऽर्थभेदाऽभावेन धातुसम्बन्धाऽभावात्प्रत्ययो दुर्लभः स्यादिति भावः । भाष्ये लोड्भवति विप्रतिषेधेनेति । पुनः पुनर्लवनाऽभिन्नं वर्त्तमानं लवनमित्येवं विवक्षायां धातुसम्बन्धस्य सत्त्वादुभयप्राप्तिः । ननु विप्रतिषेधाश्रयणे लोटा भाव्यं, स्वार्थिकत्वाद्यङोऽन्तरङ्गत्वे तेनैव भाव्यमिति

१—इजादेश्च गुरुमतोऽनृच्छः ३ । १ । ३६ २—श्र्युकः किति ७ । २ । ११
३—क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ३ । ४ । २ ४—इदं क्वचिन्नास्त्यपि ।

'कर्तृकर्मणोर्हि लविधानम्' । कर्तृकर्मणोर्हि लोड्[1] विधीयते† क्रियाविशेषे स्वार्थे यङ् । तत्रान्तरङ्गत्वाद्यङा भवितव्यम् ।

न तर्हीदानीमिदं भवति—स भवाँल्लुनीहि लुनीहीत्येवायं लुनाति ? भवति च । विभाषा यङ्, यदा न यङ् तदा लोट् ।

## [ नित्यं[2] कौटिल्ये गतौ ॥ ३ । १ । २३ ॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ३।१।२४॥ ]

### उत्तरयोर्विग्रहेण विशेषाऽसंप्रत्ययान्नित्यग्रहणानर्थक्यम् ॥ ६ ॥

उत्तरयोर्योगयोर्विग्रहेण विशेषस्याऽसंप्रत्ययान्नित्यग्रहणमनर्थकम्‡ । नहि कुटिलं क्रामतीति चङ्क्रम्यत इति गम्यते ।

अथैतेभ्यः क्रियासमभिहारे यङा भवितव्यम् ?

### क्रियासमभिहारे च नैतेभ्यः ॥ ७ ॥

क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्—भृशं जपति ब्राह्मणः, भृशं

---

प्र०—भृशार्थपौनःपुन्ययोः प्रतिपिपादयिषितत्वादेकतरस्मिन् यङ्प्रत्ययः । अपरस्मिंस्तु लोट । लोटश्च केवलस्य समभिहारमभिव्यङ्क्तुमसामर्थ्यात्तदन्तस्य द्विर्वचनं प्रवर्तते । तत्रेति । लोड्बहिरङ्गः, कर्त्राद्यपेक्षणाद्धातुसंबन्धापेक्षणाच्च । विभाषा यङिति । 'धातोः कर्मण' इत्यतो 'वे'त्यनुवर्तनात् ।

नित्यं कौटिल्ये । न हीति । चङ्क्रम्यत इत्यस्माद्योऽर्थः प्रतीयते नासौ 'कुटिलं क्रामती'ति वाक्येन शक्य. प्रत्याययितुमिति तदर्थाऽनभिधानादेव वाक्यं न भविष्यति । अर्थान्तरे

---

उ०—किमुच्यते 'भवति चे'तीत्यत आह—भृशार्थेति । तत्रैकतराऽर्थेऽधातुसम्बन्धे यङ् कृत्वाऽपरार्थे धातुसम्बन्धे लोडिति भावः । लोटश्चेति । विध्यादिष्वपि लोटो विधानादिति भावः ।

नित्यं कौ । उत्तरयोरिति पदस्वरसाद्धातोरेकाच इति सूत्र एवेदं वार्तिकमिति लभ्यते । तेनेतः पूर्वं नित्यमित्यादिसूत्रद्वयलेखो लेखकप्रमादात् । तत्राद्यविषयं नित्यग्रहणानर्थक्यमिति । द्वितीयविषयं—क्रियासमभिहारे चेति । तथैव भाष्ये उदाहरणादिति सुधियो विभावयन्तु । नासाविति । कुटिलं पन्थानं क्रामतीत्यर्थप्रत्ययादित्यर्थः । अर्थान्तरे—पथि । तक्रकौण्डिन्यन्यायेनेति । चिन्त्यमिदं, विशेषविहितेन सामान्य-

---

१—'लो विधीयते' पा० । † लः कर्मणि च भावे चाकर्मकेभ्यः ३ । ४ । ६९

२—'नित्यमित्यादिसूत्रद्वयलेखो लेखकप्रमादादि'ति नागेशभट्टः ।

'नायं लेखकप्रमादः शैलीयं भाष्यकारस्याऽन्यत्रापि व्याचिख्यास्यमानसूत्रलेखदर्शना'दित्यन्ये । तथा च 'हयवरट्'सूत्रे 'प्रत्याहारेऽनुबन्धाना'मित्यतः पूर्वं 'अइउण् इत्यादि सूत्रचतुष्टयं भाष्ये दृश्यते ।

‡ नित्यं कौटिल्ये गतौ; लुपसदचर० ३ । १ । २३; २४

समिधो दहतीत्येव ॥ २२ ॥

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण-
चुरादिभ्यो णिच् ॥ ३ । १ । २५ ॥

'सत्यापे'ति किं निपात्यते ?

सत्यस्य कृञ्यापुक् च ॥ १ ॥

सत्यस्य कृञ्यापुक् च निपात्यते, णिच्च । सत्यं करोति सत्यापयति । अत्यल्पमिदमुच्यते ।

णिविधावर्थवेदसत्यानामापुक् च ॥ २ ॥

णिविधावर्थवेदसत्यानामापुक् चेति वक्तव्यम् । अर्थापयति वेदापयति सत्यापयति । यद्यापुक्क्रियते टिलोपः प्राप्नोति† । एवं तर्हि पुक्करिष्यते । एवमपि टिलोपः प्राप्नोति । एवं तर्ह्याक्करिष्यते । एवमपि टिलोपः प्राप्नोति । एवं तर्ह्यक्करिष्यते । एवमप्यनाकारान्तत्वात्पुङ्न प्राप्नोति । [ एवं तर्ह्याट्करिष्यते । एवमप्यनाङन्तत्वात्पुङ्न प्राप्नोति । ] एवं तर्ह्यापुट्करिष्यते ।

अथवा पुनरस्त्वापुगेव । ननु चोक्तम्—'टिलोपः प्राप्नोती'ति । आपुग्वचनसामर्थ्यान्न भविष्यति ।

अथवा पुनरस्तु पुगेव । ननु चोक्तमेत्रमपि टिलोपः प्राप्नोतीति । पुग्वचन-

प्र०—च कौटिल्यमात्रप्रतिपादने वाक्यं निवारयितुमशक्यमिति नित्यग्रहणमनर्थकमित्यर्थः । क्रियासमभिहार इति । तक्रकौण्डिन्यन्यायेन कौटिल्यभावगर्हाभ्यां यङः क्रियासमभिहारादाच्छिद्य स्वीकृतत्वादिति भावः ॥ २२ ॥

सत्याप । एवन्तर्हीति । आचार्यमतभेदप्रदर्शनाऽर्थोऽनेकपक्षोपन्यासः । टिलोप इति । 'णाविष्ठव'दित्यतिदेशादिति भावः । अक्करिष्यत इति । तत्र पररूपे कृतेऽ'चो ञ्णिती'ति वृद्धौ

उ०—विहितस्य बाध उत्सर्गाऽपवादस्थले इत्यत्रैवायं दृष्टान्तो मिदचोन्त्यात्सूत्रे भाष्ये उक्तः । न हि विशेषाऽनुवादेन सामान्याऽनुवादबाधे दृष्टान्तो लौकिकोऽस्ति । नाऽप्येतद्विषये नियमेन तत्प्राप्तिरस्ति । तस्माच्चकारेण 'क्रियासमभिहारे चे'त्यत्रापि 'विशेषाऽसम्प्रत्यया'दित्यस्य सम्बन्धात् 'भृशं जपती'त्याद्यर्थविशेषस्य यङन्ताद्प्रत्ययादित्यर्थ इत्याहुः ॥ २२ ॥

सत्याप । सर्वत्र सामर्थ्यादेव टिलोपवारणे नानामतोपन्यासो व्यर्थोऽत आह—आचार्येति । अग्विधौ पुक्सिद्धय आह—तत्रेति । प्रातिपदिकाण्णिजिति भावः । यद्यप्यत्रापि टिलोपप्राप्तिरस्ति तथापि

† टे० ६ । ४ । १५५ वा० १ १—कोष्ठान्तर्गतः पाठः क्वचिन्न ।







सामर्थ्यान्न भविष्यति ।

अथवा पुनरस्त्वागेव । ननु चोक्तमेवमपि टिलोपः प्राप्नोतीति । आग्वचन-सामर्थ्यान्न भविष्यति ॥ २५ ॥

## हेतुमति च ॥ ३ । १ । २६ ॥

कथमिदं विज्ञायते 'हेतुमत्यभिधेये णिज्भवती'ति, आहोस्वि'द्धेतुमति यो धातु-र्वर्त्त त' इति ?

युक्तं पुनरिदं विचारयितुम् । नन्वनेनाऽसन्दिग्धेन प्रत्ययार्थविशेषणेन भवि-

प्र०—कृतायां पुगागम इति भावः । अनाकारान्तत्वादिति । यद्यत्र वृद्धिः स्यादग्विधानमनर्थकं स्यात्, अगागममन्तरेणाऽपि तस्याः प्रसङ्गात् । ततश्च तद्बाधनार्थमगागमः स्यादिति भावः । आपुडिति । तस्य च णिज्भक्तत्वादकारस्य पूर्वस्य टिलोपे सति 'सत्यापयती'त्यादि सिध्यतीति भावः ॥ २५ ॥

हेतुमति च । कृत्रिमस्य पारिभाषिकस्य प्रयोजकस्येह हेतोर्ग्रहणम् । तदीयो व्यापारः प्रेषणाऽध्येषणतत्समर्थाचरणलक्षणो हेतुमानिह गृह्यते । ननु सकलकारकसाध्यपाकाद्यपेक्षः प्रयोजकस्य हेतुव्यपदेशो, न तु तदर्थावान्तरस्वसाध्यप्रेषणाद्यपेक्षः । यथा काष्ठस्य पाकापेक्षं करणत्वं न तु ज्वलनापेक्षम् । तदपेक्षन्तु कर्तृत्वमेव । ततश्च पाकादेरेव हेतुमद्व्यपदेशो युक्तो न तु प्रेषणादे. । नैष दोषः । णिच्प्रकृत्या धातुनैव तस्याऽर्थस्य प्रकाशितत्वात् प्रयोजनाऽभावात्तत्रै-

उ०—दूषणान्तरसद्भावात्तदनुपन्यासः । अनर्थकं स्यादिति । न च टिलोपबाधनद्वारा वृद्धिसिद्ध्यर्थमेव तदिति वाच्यम्, अन्त्यादेशाऽकारविधानसामर्थ्येनैव टिलोपबाधे सिद्धे आगमलिङ्गककारोच्चारणसामर्थ्येन वृद्धेरपि ब.धः स्यादित्यभिमानः । भाष्ये—एवन्तर्ह्यापुडिति । नन्वत्र पक्षे 'णौ चङी'ति ह्रस्वाऽनापत्तिरापुकि प्राप्नोतीति फलभेद इतिचेन्न; लुङयस्यानभिधानात् ॥ २५ ॥

हेतुमति च । हेतुमच्छब्दार्थज्ञाने सन्देहस्योपपादयितुं शक्यत्वात्तमाह—कृत्रिमस्येति । तस्यैव व्याख्यानं क्वचित्—पारिभाषिकस्येति । तत्प्रयोजको हेतुरित्यस्येत्यर्थः । उत्कृष्टेन निकृष्टप्रेरणमाद्यम् । विपरीतं द्वितीयम् । प्रयोज्यव्यापारानुकूलमाचरणं तृतीयम् । यथा 'भिक्षा वासयती'त्यादौ । पाकाद्यपेक्ष इति । तद्विषयत्वात्प्रेरणाया इत्यर्थः । न तु तदर्थेति । तन्निमित्तेत्यर्थः । हेतुरस्यास्तीति विग्रहेण हेतुत्वनिरूपकस्य तत्कार्यपाकादेरेव प्रतीतेस्तत्रैव णिच् स्यादित्याह—पाकादेरेवेति । तत्रैवार्थेति । न 'चाऽन्यप्रयुक्तः पचती'त्यर्थप्रातिपादनाय णिच्, णिजन्तेन तादृशार्थाऽप्रतीतेरिति भावः । एवमपि हेतुसंबन्धिकार्यरूपार्थाभिधायिना हेतुमच्छब्देन कथं प्रेरणोच्यतेऽत आह—तस्मादिति । लब्धः पाकाद्यपेक्षो हेतुव्यपदेशो येन स चासौ हेतुत्वोपलक्षितश्चासौ प्रयोजकश्च तत्साध्यो व्यापार इति विग्रहः । 'तत्प्रयोजक' इत्यत्रापि 'कारक' इत्यधिकारात्णिजुत्पत्तेः प्राग्धेतुत्वस्याऽभावाद्धेतुत्वोपलक्षितेत्युक्तम् । स च व्यापार एव, 'करणे' इत्यधि-

१ 'आग्वचनान्न' ।

तव्यं यावता 'हेतुमती'त्युच्यते । यदि हि प्रकृत्यर्थविशेषणं स्याद्धेतुमत इत्येवं[1] ब्रूयात् ।

नैतदस्ति । भवन्तीह हि विषयसप्तम्योऽपि । तद्यथा—'प्रमाणे यत्प्रातिपदिकं वर्तते' 'स्त्रियां यत् प्रातिपदिकं वर्तत' इति† । एवमिहाऽपि 'हेतुमत्यभिधेये णिज्भवति,' 'हेतुमति वा यो धातुर्वर्त्तत' इति जायते विचारणा ।। अत उत्तरं पठति—

**हेतुमतीति कारकोपादानं प्रत्ययार्थपरिग्रहार्थं यथा 'तनूकरणे तक्षः' ।।१।।**

हेतुमतीति कारकमुपादीयते । किं प्रयोजनम् ? 'प्रत्ययार्थपरिग्रहार्थम्' । एवं सति प्रत्ययार्थः सुपरिगृहीतो भवति । यथा 'तनूकरणे तक्षः' [ ३ । १ । ७६ ] इति तनूकरणमुपादीयते ।

यदि तर्हि तद्वत्प्रकृत्यर्थविशेषणमिदं[2] भवति । प्रकृत्यर्थविशेषणं हि तत्तत्र

प्र०—वाऽर्थे णिचोऽनुत्पादात् । प्रयोज्योऽपि हेतुमच्छब्देन न गृह्यते, तस्य द्रव्यत्वात् । णिचश्च स्वभावतः करणाधिकाराद्वा क्रियावाचित्वात् । तस्मात्पारिशेष्यात्पाकाद्यर्थो यः प्रेषणादिलक्षणो लब्धपाकाद्यपेक्षहेतुव्यपदेशहेतुत्वोपलक्षितप्रयोजकसाध्यो व्यापारः स एव गृह्यते । कथमिति । यदा 'पचती'त्युक्ते प्रयोज्यसाध्य एव व्यापारो गम्यते । न प्रयोजकसाध्योऽपि तदा प्रत्ययार्थस्य करणाधिकारोपस्थापितस्य करणस्य विशेषणं हेतुमतीति संपद्यते । यदा त्वनेकार्थत्वाद्धातूनां तादर्थ्याद्वाऽधिश्रयणादिवत्प्रयोजकव्यापारोऽपि पचादिवाच्यो भवति,—यथा 'पञ्चभिर्हलैः कृषती'ति, तदा प्रकृतिविशेषणपक्षो भवति । तदा तु णिच्प्रत्ययो द्योतकः संपद्यत इति पक्षद्वयस्य संभवाद्दोषदर्शनाच्च प्रश्नः । **हेतुमत इति** । हेतुमदर्थाऽभिधायिन इत्यर्थः । **कारकोपादानमिति** । कारकशब्देन प्रत्ययार्थ उच्यते, स हि प्रत्ययं करोति—निष्पादयति । **प्रत्ययार्थ इति** । प्रत्ययस्याऽर्थः प्रयोजनं, स सुष्ठु परिगृहीतः परिपूर्णो भवति, वाचकत्वात् प्रत्ययस्य । प्रकृतिविशेषणे

उ०—कारादिति भावः । तत्र मतुपः साधुत्वन्तु हेतुः कर्त्ताऽस्येत्यर्थेनेति भाष्यकृदेव वक्ष्यति । पक्षद्वयोपपादनपूर्वकं प्रत्ययार्थं नेति वक्तुङ्गे प्रत्ययार्थविशेषणेनेत्युक्तेरर्थमाह—यदेति । 'प्रत्ययार्थविशेषण'मित्यस्य प्रत्ययार्थपरिच्छेदकमित्यर्थः । प्रकृतिविशेषणेति । भाष्ये 'प्रकृत्यर्थविशेषण'मित्यस्य प्रकृतेरर्थद्वारा विशेषणमित्यर्थ इत्यभिमानः । वस्तुतः प्रकृत्यर्थस्य पाकादेर्विशेषणमित्यर्थः, द्योतकद्योत्यार्थस्य विशेषणत्वनियमात् । धातोः शब्दस्य प्रागुक्तहेतुत्वाऽसम्भवादाह—**हेतुमदर्थेति** । हेतुमदर्थविशेषणकाऽर्थाभिधायिन इत्यर्थः । भाष्ये—विषयसप्तम्योऽपीति । 'प्रमाणे' इत्यादेस्तद्विषयकबोधजनकं प्रातिपदिकमित्यादिक्रमेणाऽर्थ इत्याहुः । हेतुमच्छब्दस्य प्रेरणापरत्वात्कारकोपादानमसङ्गतमित्यत आह—**कारकशब्देनेति** । **अन्वयव्यतिरेकाश्रयेति** ।

१—'इत्येवं' पा० ।
२ 'विशेषणं भवति' ।

† प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५ । २ । ३७ । स्त्रियाम् ४ । १ । ३

विज्ञायते—'तनूकरणक्रियायां तच्च' इति।

अस्तु प्रकृत्यर्थविशेषणम्। को दोषः? इह 'मुक्तः करोति', 'प्रेषितः करोती'ति णिच् प्राप्नोति। प्रत्ययार्थविशेषणे पुनः सति नैष दोषः। स्वशब्देनोक्तत्वान्न भविष्यति।

प्रकृत्यर्थविशेषणेऽपि सति नैष दोषः। यत्र नाऽन्तरेण शब्दमर्थस्य गतिर्भवति तत्र शब्दः प्रयुज्यते। यत्र ह्यन्तरेणाऽपि शब्दमर्थस्य गतिर्भवति न तत्र शब्दः प्रयुज्यते।

इह तर्हि 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'त्युभयोः कर्त्रोर्लेनाऽभिधानं प्राप्नोति‡। प्रत्ययार्थविशेषणे सति पुनर्न दोषः 'प्रधानकर्तरि लादयो भवन्ती'ति

प्र०—तु प्रत्ययस्याऽनुवादकत्वाद्द्योतकत्वात्प्रयोजनमपरिपूर्णं स्यादित्यर्थः। अथवाऽर्थोऽभिधेय मुच्यते, स चान्वयव्यतिरेकाश्रयव्यवस्थत्वात् प्रेषणादिः प्रत्ययस्यैव न प्रकृतेरिति सुष्ठु परिगृहीतो व्यवस्थापितो भवति। यथा तनूकरण इति। यदा 'विकरणार्थाः कर्त्रादय' इति पक्षस्तदा तनूकरणशब्देन कर्त्ताऽभिधीयते, तदा साधर्म्येण दृष्टान्तः। यदा तु 'सार्वधातुकार्थाः कर्त्रादय' इति पक्षस्तदा वैधर्म्येण दृष्टान्त इति व्याख्यानम्। यथा तनूकरणं प्रकृत्यर्थो न तथा हेतुमद्व्यापार इत्यर्थः।

परस्तु साधर्म्येण दृष्टान्तं सार्वधातुकत्व च कर्त्रादीनां मन्यमान आह—यदीति। अस्त्विति। विनापि णिचा 'पञ्चभिर्हलैः कृषती'ति प्रयोजकव्यापारावगमात् प्रकृत्यर्थत्वं हेतुमत उपपद्यते। 'पचती'त्यादौ तु द्योतको णिज्नास्तीति तदप्रतिपत्तिरिति भावः। उक्तः करोतीति। प्रकृतिविशेषणपक्षे यथा प्रकृत्यभिहिते प्रयोजकव्यापारे णिज्भवत्येवमुक्तप्रेषितादिशब्दाभिहितेऽपि प्राप्नोति, हेतुमद्विशेषणत्वात्करोत्यर्थस्य। प्रत्ययार्थविशेषणपक्षे तूक्तार्थत्वाण्णिजभावः। यत्रेति। यस्याऽर्थस्य द्योतनाय णिज्विधीयते स यदा शब्दान्तराऽवगतो भवति तदा प्रयोजनाऽभावाण्णिज् न भवतीत्यर्थः। उभयोरिति। धातुवाच्यस्य व्यापारस्य कर्तरि लकारेणोत्पत्तव्यम्। यदा च

उ०—'पञ्चभिर्हलैः कृषति' इत्यादौ पञ्चभिर्हलैरित्यस्याऽनन्वयाद्वाचकान्तराऽभावाच्च धातोर्लक्षणेति भावः। कर्त्ताऽभिधीयत इति। बाहुलकात्कर्त्तर्येन इति भावः। तनूकरणस्य धात्वर्थत्वं विना तत्कर्त्तरि कथं प्रत्ययः स्यादिति तदर्थोच्छ्रितमिति बोध्यम्। 'यदीदं तद्धर्तर्हि प्रकृत्यर्थविशेषणमेव भवती'ति भाष्येऽन्वयः। 'अस्त्वि'त्यनेन तत्पक्षोपपत्तिः सूचिता। तामाह—विनापीति। द्योतको णिज्नास्तीति। 'कृषती'त्यादौ तु पञ्चभिर्हलैरिति, एकान्ते तूष्णीमासीनत्वादिकञ्च तद्द्योतकमिति भावः। एवमुक्तप्रेषितेति। प्रकृतिविशेषणपक्षे शब्दान्तराऽभिहितद्योतनायैव णिच्प्रवृत्तिरिति भावः। हेतुमद्विषयत्वादिति। प्रयोजकव्यापारविषयत्वादित्यर्थः। 'हेतुमतो'त्यस्य विषयसप्तमीत्वादिति भावः। शब्दानन्तरेति। वाचकशब्दान्तरेत्यर्थः। यदा चेति। पच्यादिभिः पाकानुकूलत्वेन द्वयोरप्यभिधानमिति मते इदम्भाष्यमिति भावः। एवञ्चोभयोरपि व्यापारयोः समकक्षत्वेन विशेषणविशेष्यभावानापन्नतयोभयोरपि कर्त्रोः प्राधान्यमिति हृदयम्।

‡ लः कर्मणि च भावे चाकर्मकेभ्यः ३। ४। ६९

प्रधानकर्ता तेनाऽभिधीयते, यश्चाऽत्राऽप्रधानं कर्ता सिद्धा त 'कर्तरी'त्येव तृतीया×।
इह च 'गमितो ग्रामं देवदत्तो यज्ञदत्तेने'त्यव्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थानां क्तः कर्तरी'ति कर्तरि क्तः प्राप्नोति+। इह च 'व्यतिभेदयन्ते' 'व्यतिच्छेदयन्त' इत्यव्यतिरिक्तो हिंसार्थ इति कृत्वा 'न गतिहिंसार्थेभ्यः' [ १ । ३ । १५ ] इति प्रतिषेधः प्राप्नोति ।

अस्तु तर्हि प्रत्ययार्थविशेषणम् । यदि प्रत्ययार्थविशेषणं 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'ति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति । भवति हि तस्य तस्मि-

प्र०—पचिना द्वयोरपि प्रयोज्यप्रयोजकयोर्व्यापारोऽभिधीयते, णिच्प्रत्ययः केवले स्वार्थिकत्वात् प्रयोजकव्यापारस्य द्योतकस्तदा धातुवाच्यव्यापारसाम्यात्कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं स्यात्, ततः 'पाचयतो देवदत्तयज्ञदत्ता'विति प्रसज्येतेत्यर्थः । प्रधानकर्तेति । प्रकृत्यर्थोपसर्जनत्वाण्ण्यर्थस्य प्राधान्यात्तस्य कर्ताऽपि प्रधानमिति भावः । गमित इति । प्रयोजकव्यापारस्य गमिवाच्यत्वात्तस्य कर्तरि प्रयोजके क्तः प्राप्नोतीत्यर्थः । प्रयोज्यस्य तु कर्मत्वात्तत्रैव क्त इष्यते । तदुक्तम्—'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति । व्यतिभेदयन्त इति । प्रयोजकव्यापारस्य व्यतीहारो न तु प्रयोज्यव्यापारस्येति द्रष्टव्यम् । भवति हीति । ण्यर्थस्य प्राधान्यात्तद्व्यापारेणेप्सिततमत्वात्प्रयोज्यस्येत्यर्थः । प्रकृत्यर्थविशेषणत्वे तु द्वयोरपि प्रयोज्यप्रयोजकव्यापारयोरेकधातु-

उ०—अत एवाऽत्र पक्षे प्रयोज्यस्य कर्मत्वं नाऽऽपादितम्, प्रयोज्यव्यापारस्य विशेषणतयाऽबोधेन तस्य फलत्वाऽभावेन फलाश्रयत्वाऽभावात् । गत्यादिसूत्रेष्वैतत्पक्षे विध्यर्थमेवेति बोध्यम् । परे त्वेवं हि 'प्रकृत्यर्थविशेषण'मिति भाष्याद्वाराऽसङ्गतिः । तस्माद्प्रवर्तनाप्रयोज्यः पाकः पचेरर्थः । तत्राऽन्यानधीनत्वलक्षणमार्थमप्राधान्यप्रयोजकव्यापारस्य, शाब्दञ्च प्रयोज्यव्यापारस्येत्युभयाश्रययोः कर्तृत्वं, 'स्वतन्त्रः कर्ते'त्यत्रोभयविधप्राधान्यस्यापि विनिगमनाविरहेण ग्रहात् । एवञ्च ण्यन्तोत्तरलेन पर्यायेण द्वयोरप्यभिधानापत्तिरिति भाष्याशयः । प्रधानकर्तरीति । प्रकृतिभूतण्यन्तार्थकर्त्तरीत्यर्थः । प्रयोज्यकर्त्ता तु पच्यर्थस्य, न तु ण्यन्तार्थस्येति न ण्यन्तप्रकृतिकलेन तदभिधानमिति भावः । प्रधानकर्त्ता—स्वप्रकृत्यर्थप्रधानव्यापाराश्रयरूपः कर्त्तेत्यर्थः ।

अप्रधानमिति । णिच्प्रकृत्यर्थप्रधानव्यापाराश्रय इत्यर्थः । अव्यतिरिक्त इति । प्रयोजकव्यापारवाचकातिरिक्ताऽवाच्य इत्यर्थः । णिचस्तदर्थकत्वे तु प्रयोजककर्त्ता न गत्यर्थकर्त्ता, किन्तु ण्यन्तकर्त्तेति न दोष इत्याहुः । ननु प्रत्ययार्थविशेषणपक्षेऽपि कथमत्रात्मनेपदं, हिंसारूपप्रयोज्यव्यापारस्यैव व्यतीहारो, न तु णिज्वाच्यप्रयोजकव्यापारस्य सोऽत आह—प्रयोजकव्यापारस्य व्यतिहार इति । तद्व्यापारेणेप्सिततमत्वादिति । तद्व्यापारप्रयोज्यव्यापाररूपफलाश्रयत्वादित्यर्थः । भाष्ये—तस्य—प्रयोजकस्य । तस्मिन्—प्रयोज्ये । एतेन 'स्वव्यापारे स्वातन्त्र्यात्परत्वेनाऽन्तरङ्गत्वेन च कर्तृत्वमेवे'त्यपास्तम्, अन्तरङ्गादपि प्रधानकार्यस्य लोके बलवत्ताया दर्शनादिति भावः । एकधातुवाच्यत्वादिति । ण्यन्तप्रकृतिधातुवाच्यत्वादित्यर्थः । ननु प्रयोज्यस्य

१ इदं क्वचिन्न । × कर्तृकरणयोस्तृतीया २ । ३ । १८
+ गत्यर्थाकर्मकश्लिषशीङ्स्थासवस० ३ । ४ । ७२

वीप्सा† । इह च 'ग्रामं गमयति' 'ग्रामाय गमयती'ति, व्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थकर्मणी'ति द्वितीयाचतुर्थ्यौ‡ न प्राप्नुतः । इह च—एधोदकस्योपस्कारयतीति, व्यतिरिक्तः करोत्यर्थ इति कृत्वा 'कृञः प्रतियत्ने' [ २ । ३ । ५३ ] इति षष्ठी न प्राप्नोति । इह च 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना'मिति प्रयोज्ये कर्त्तरि षष्ठी × न प्राप्नोति । इह चा'ऽभिषावयति' 'परिषावयती'ति, 'व्यतिरिक्तः सुनोत्यर्थ' इति कृत्वा 'उपसर्गात्सुनोतिसुवती'त्यादिना+ षत्वं न प्राप्नोति ।

नैष दोषः । यत्तावदुच्यते 'पाचयत्योदनं देवदत्तो यज्ञदत्ते'नेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोती'ति 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणी'त्येतन्नियमार्थं भविष्यति*—'एतेषामेव ण्यन्तानां यः कर्त्ता स णौ कर्मसंज्ञो भवति नान्येषा'मिति ।

यदप्युच्यते—'इह च ग्रामं गमयति ग्रामाय गमयती'ति 'व्यतिरिक्तो गत्यर्थ' इति कृत्वा 'गत्यर्थकर्मणी'ति द्वितीयाचतुर्थ्यौ न प्राप्नुत' इति, नासावेवं प्रेष्यते 'गच्छ ग्राम'मिति । कथं तर्हि ? साधनविशिष्टामसौ क्रियां प्रेष्यते—'ग्रामं गच्छ' 'ग्रामाय गच्छे'ति ।

यदप्युच्यते—इह च 'एधोदकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति

प्र०—वाच्यत्वाद्धातुवाच्यव्यापाराऽपेक्षया द्वयोरपि कर्तृत्वाल्लेनाऽभिधानं प्राप्नोतीति दोष उक्तः । ग्रामं गमयतीति । ण्यर्थस्यैव ग्रामः, प्रयोज्यश्च कर्मेति भावः । षष्ठी न प्राप्नोतीति । ण्यर्थस्य कर्मत्वादिति भावः । सुट् तु करोतिधात्वाश्रयत्वाण्णिजुत्पत्तावपि तद्रूपसन्निधानात्सिध्यत्येवेति तन्नाऽचूचुदत् । प्रयोज्ये कर्तरीति । तस्याऽप्राधान्यादिति भावः । अभिषावयतीति । ण्यर्थस्योपसर्गो विशेषक इति भावः । एतेषामेवेति । ण्यर्थस्य प्राधान्यात्तेनेप्सिततमस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा । न च स्वव्यापाराऽपेक्षया स्वातन्त्र्यात्परत्वात्कर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम् ।

उ०—ण्यर्थव्यापारापेक्षया कर्मत्वेऽपि ग्रामादेर्गम्यर्थनिरूपितमेव कर्मत्वमत आह—ण्यर्थस्यैवेति । 'प्राधान्या'-दित्यादि । उत्तरदेशसंयोगे ण्यर्थव्यापारजन्यत्वस्यापि सत्त्वादिति भावः । प्रतियत्नवाचिकरोत्यपेक्षायाः सुट्षष्ठ्योर्विधाववविशिष्टे षष्ठ्यप्राप्तिरेव कथमुक्तेत्यत आह—सुट् त्विति । कर्मणि विधानादर्थसापेक्षा षष्ठी, 'उपात् प्रतियत्ने'ति सुट् धातुस्वरूपापेक्ष इति भावः । तस्याऽप्राधान्यादिति । कृत्प्रकृत्यर्थकर्त्रादौ हि तेन षष्ठी । कृत्प्रकृतिश्च ण्यन्ता । एवञ्च तदर्थकर्त्तर्येव स्यान्न तु णिच्प्रकृत्यर्थकर्त्तरि । अप्राधान्यञ्च कृत्प्रकृत्यर्थाऽकर्तृत्वमेवेति बोध्यम् । नियमत्व उपपत्तिमाह—ण्यर्थस्येति । परत्वादिति । अन्तरङ्गत्वादुपजीव्यत्वाच्चेत्यपि बोध्यम् । प्रधानेति । सर्वापेक्षया प्रधानकार्यस्य बलवत्त्वात् न चोद्देश्यतालक्षणमार्थं प्राधान्यमप्रयोज्य-

† कर्त्तुरीप्सिततमं कर्म १ । ४ । ४९ ‡ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि २ । ३ । १२ × कर्तृकर्मणोः कृति २ । ३ । ६५ + उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८ । ३ । ६५ * १ । ४ । ५२

कृत्वा कृञः प्रतियत्न इति षष्ठी न प्राप्नोती'ति, नासावेवं प्रेष्यते—'उपस्कुरुष्वैधो दकस्ये'ति । कथं तर्हि ? साधनविशिष्टामसौ क्रियां प्रेष्यते—एधो दकस्योपस्कुरुष्वे'ति ।

यदप्युच्यते—'इह च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोती'ति, उक्तं तत्र† कृद्ग्रहणस्य प्रयोजनं 'कर्तृभूतपूर्वमात्रेऽपि षष्ठी यथा स्या'दिति ।

यदप्युच्यते 'इह चाभिषावयति परिषावयतीति—व्यतिरिक्तः सुनोत्यर्थ इति कृत्वोपसर्गात्सुनोतीत्यादिना षत्वं न प्राप्नोती'ति, नासावेवं प्रेष्यते–'सुनु–अभी'ति । कथं तर्हि ? उपसर्गविशिष्टामसौ क्रियां प्रेष्यते—'अभिषुणि'ति ।

प्र०—प्रयोज्यव्यापारस्याऽप्राधान्यात्प्रधानाऽप्रधानव्यापारसंनिधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वात् । नियमेन तु प्रधानप्रयुक्तकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात्कर्तृत्वं भवत्येव । तदुक्तं हरिणा—

'गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः ।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥' इति ।

नासाविति । ग्रामः प्रकृत्यर्थस्य कर्म न तु ण्यर्थस्येत्यर्थः । साधनविशिष्टामिति । ग्रामकर्मिकां गमनक्रियां प्रयोज्यः प्रेष्यति—प्राप्नोतीत्यर्थः । स च प्रेष्यते—प्राप्यते । कर्तृभूतपूर्वमात्रेपीति । प्रधानचरेऽपि कर्तरीत्यर्थः । सुनु–अभीति । न प्रयोजकव्यापारस्याभिमुख्यमभिशब्देन द्योत्यते, अपि तु प्रयोज्यव्यापारस्यैवेत्यर्थः । युक्तं पुनरिति । सन्देह एव विचारनिमित्तं

उ०—व्यापारस्याप्यन्यानधीनत्वलक्षणार्थप्राधान्यस्य प्रयोजकव्यापारेऽपि सत्त्वात्, शब्दशास्त्रे शब्दप्राधान्यस्यैव मुख्यत्वाच्चेति भावः । गुणेति । प्रेषणे कर्मताम्प्राप्तोऽपि पदार्थः कर्मसंज्ञाया नियमादप्राप्त्या गुणक्रियायां स्वातन्त्र्याच्च स्वधर्मेण कर्तृत्वेनाभिधीयत इत्यर्थः । 'स्वान्त्र्येणे'ति पाठेपि—'कर्तृत्वेने'त्येवार्थः । ग्रामः प्रकृत्यर्थस्येति । गमेः सकर्मकत्वेनाऽवश्यं कर्मापेक्षत्वाण्ण्यर्थस्य कर्माकाङ्क्षायाः प्रयोज्यकर्मणा शान्तत्वाच्चेति भावः । 'साधनविशिष्टां क्रियामसौ प्रेष्यते' इत्यत्र कथं द्विकर्मकत्वं, कथञ्च प्रयोज्ये कर्मणि लकार इत्यत आह—प्राप्नोतीति । तथा च पूर्वं इषिः प्राप्त्यर्थः । तस्माण्ण्यन्तात्कर्मणि प्रत्यये प्रेष्यत इतीति भावः । 'प्राप्नोतीत्यर्थ' इति पाठे प्रेष्यतिपदस्य स्वोक्तस्येदमर्थकथनम्, न तु भाष्ये तथा पाठ इति भ्रमितव्यम् । भूतपूर्वत्वस्यानुपपत्ते राह—प्रधानचरेपीति । कृत्प्रकृतिघटकधात्वर्थकर्त्तर्यपीत्यर्थः । तत्सूत्रस्थकृद्ग्रहणामावृत्त्यैतदर्थकमपीति भावः । अपित्विति । एवञ्चाऽभेर्न कदाचिदपि ण्यर्थविशेषणतेति भावः । भाष्यसम्मतेन कैयटोक्तेन प्रयोज्यव्यापारस्यैवेत्येवकारेण तु तदाभिमुख्यद्योतकत्वाऽभाव एवाऽभेर्लभ्यत इति बहवः । यद्यपि पूर्वं 'प्रमाणे द्वयसच्''शेपे''सम्भूते' इति सप्तमीनिर्देशस्योभयथापि दर्शनाद्विचार उपपादित-

† कर्तृकर्मणोः कृति २ । ३ । ६५ इत्यस्यान्ते ।

युक्तं पुनरिदं विचारयितुम् । नन्वनेनाऽसन्दिग्धेन प्रत्ययार्थविशेषणेन भवितव्यं यावता व्यक्तमर्थान्तरं गम्यते—पचति पाचयतीति च । बाढं युक्तम् । इह पचेः कः प्रधानार्थः ? याऽसौ तण्डुलानां विक्लित्तिः । अथेदानीं तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा युक्तं यत्सर्वः पच्यर्थः स्यात् ।

प्र०—नोपपद्यते, अन्वयव्यतिरेकाभ्यां भूयोदर्शनविषयाभ्यां प्रत्ययार्थविशेषणपक्षस्यैवोपपन्नत्वादिति भावः । यासाविति । तदर्थत्वात्कारकग्रामस्य, तदनन्तरञ्च फलोत्पादादिति भावः । तदुक्तं हरिणा—

'अनन्तरं फलं यस्याः कल्पते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता' ॥ इति ।

तत्र यथाऽधिश्रयणादयस्तादर्थ्यात्पचिवाच्यास्तथा प्रेषणादिरपि, द्योतकस्तु णिजपेक्ष्यत इत्यर्थः । न च कारकाणामपि तादर्थ्यात्पच्यभिधेयत्वप्रसङ्गः, तेषामक्रियारूपत्वाद्धातोश्च क्रियावाचित्वात् / विक्लित्तिश्चाऽत्र फलानन्तरव्यापारोपलक्षणम्, 'इष्टकाः पचन्ती'त्यादौ तस्याऽसंभवादित्याहुः । पच्यर्थः स्यादिति । संभावने लिङ् । संभाव्यते पच्यर्थत्वं प्रेषणादेः । अत एव संशयाद्विचार्य प्रत्ययार्थविशेषणपक्षो भाष्यकारेण स्थापितः, तद्दोषाणां परिहृतत्वात्, पक्षान्तरे दोषाणां चापरिहारात् । अथवा प्रकृत्यर्थविशेषणपक्षोऽपि स्थापितः, तत्पक्षभाविनां दोषाणां सुपरिहरत्वात् । तथा हि यदुक्तं—'द्वयोः कर्त्रोर्लेनाभिधानं प्राप्नोती'ति, नाऽयं दोषः, प्रकृत्या प्रयोज्यव्यापारोपसर्जनस्य प्रयोजकव्यापारस्याभिधानात्तस्यैव णिचा द्योतनात् प्रधान एव कर्तरि लो भविष्यति नाऽप्रधाने णिचा च द्योतकेन प्रधानभूतगत्यर्थत्वं निवर्तितं, गमनारूपस्य प्रधानस्याऽर्थस्याभिधानादिति ण्यन्तात्प्रयोजककर्तरि लस्याऽनुत्पत्तिः । 'व्यतिभेदयन्त' इत्यत्रापि हिंसनालक्षणः प्रधानं धात्वर्थो, न तु हिंसारूप इत्यात्मनेपदनिषेधाऽभावः ।

उ०—स्तयाप्यन्वयव्यतिरेकाभ्यामिदानीं विचार आक्षिप्यत इत्याह—अन्वयेति । भाष्ये—व्यक्तमर्थान्तरं गम्यत इति । 'ण्यन्ताऽण्यन्ताभ्यामपरस्परस्मा'दिति शेषः । विक्लित्तेः प्रधानार्थत्वे युक्तिमाह—तदर्थत्वादिति । विक्लित्तिग्रहणं फलाऽव्यवहितपूर्ववर्त्तिव्यापारोपलक्षणम् । स्पष्टञ्चेदमनुपदं स्वयं वक्ष्यति । तद्ध्वनयन्नाह—तदनन्तरञ्चेति । तथा प्रेषणादिरपीति । विक्लित्त्यनुकूलत्वेनेत्यर्थः । वस्तुतः प्रवृत्तं नाप्रयोज्यत्वं तस्य विशेषणता न्याय्या । सम्भावन इति । 'उपसंवादाशङ्कयोश्चे'ति सूत्रे भाष्ये पठितेन 'उपसंवादाशङ्कयोर्लिङि'-त्यनेन । तत्राऽऽशङ्का—उत्प्रेक्षा । सम्भावनापि—उत्कटकोटिका शङ्कैवेति बोध्यम् । भाष्ये—तदभिसन्धिपूर्वकमित्यस्य—'तद्विशेषणभूत'मिति शेषः । अपरिहारादिति । 'सर्वम्पच्यर्थः स्यादिति युक्तन्तथापि स पक्षो दुष्ट' इति शेषः, दोषाणामुक्तत्वादिति भाष्यार्थ इति भावः । अथवेति । अत्र पक्षे 'सर्वं पच्यर्थः' स्यादिति यत् तद्युक्तमेवेति भाष्यार्थ इति भावः । प्रयोज्यव्यापारेति । प्रयोज्यव्यापार उपसर्जनं यस्येति विग्रहः । लोके प्रयोज्यप्रयोजकयोर्गुणप्रधानभावावगतेस्तद्व्यापारयोरपि तत्त्वमेवोचितं, न तु फलानुकूलत्वेन समकक्षतया बोध उचितः । एवञ्च वाचकतापक्ष इव द्योतकतापक्षेऽपि द्वयोर्व्यापारयोर्गुणप्रधानभावेनैवोपस्थितेः प्रधानकर्त्तुरेव लेनाऽभिधानमित्यप्रधाने कर्त्तरि तृतीयादि भवति ।

अथ हेतुमतीति को मत्वर्थः ? हेतुः कर्ताऽस्य स[1] हेतुमान्, 'हेतुमती'ति ।

**हेतुनिर्देशश्च निमित्तमात्रे[2], भिक्षादिषु दर्शनात् ॥ २ ॥**

हेतुनिर्देशश्च निमित्तमात्रे द्रष्टव्यः । यावद् ब्रूयान्निमित्तं कारणमिति तावद्धेतुरिति । किं प्रयोजनम् ? 'भिक्षादिषु दर्शनात्' । भिक्षादिषु हि णिज्दृश्यते—'भिक्षा वासयन्ति, 'कारीषोऽग्निरध्यापयती'ति ।

किं पुनः कारणं पारिभाषिके हेतौ न सिध्यति ? एवं मन्यते—'चेतनावत एतद्भवति प्रेषणमध्येषणं चेति, भिक्षाश्चाऽचेतनाः' । नैष दोषः । नावश्यं स एव वासं प्रयोजयति य आह'उष्यता'मिति । किं[3] तर्हि ? तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽपि वासं प्रयोजयति । भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना-

प्र०—अथेति । यद्यपि षष्ठ्यर्थः सप्तम्यर्थश्च मत्वर्थत्वेन निर्ज्ञातस्तथापि हेतुशब्दस्याऽनेकार्थत्वे सति हेत्वर्थाऽपरिज्ञानात्तद्विशिष्टस्यापि मत्वर्थस्याऽपरिज्ञानात् प्रश्नः । स चाऽर्थाद्धेतुविषय एवाऽवतिष्ठते । को हेतुरिति । किं प्रयोजको हेतुः, अथ निमित्तमात्रम् । हेतुः कर्तेति । हेतुः प्रयोजक इति भावः । नावश्यमिति । तत्समर्थाचरणमपि प्रयोजकव्यापारस्तत्सद्भावाधीनत्वात्प्रयोज्यक्रियासिद्धेरित्यर्थः । पृच्छतु मा भवानिति । प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजको भवतीति तद्व्यापारे णिच्कस्मान्न भवतीति प्रश्नः । एकविषयत्वाल्लोडादेर्णिचश्च पर्यायप्रसङ्गः । अकर्तृत्वादिति । स्वतन्त्रस्य कर्तुः प्रयोजको हेतुरित्युच्यते, प्रयोज्यश्चात्र न कर्त्तेति प्रयोजको न हेतुसंज्ञ इत्यर्थः । तूष्णीमिति । निर्व्यापारत्वात्कारकत्वमात्रमपि तस्य नास्ति कुतस्तद्विशेषः कर्तृत्वमित्यर्थः । कर्तृत्वमेव तस्याऽऽधीयमानं–'प्रश्नक्रियायाः कर्ता त्वं भवे'ति । यथा 'राजा भव युद्धयस्वे'ति राजत्वमेवाऽऽधीयते । यस्तु प्रवृत्तक्रियः संभावितक्रियो वा प्रयोज्यः कर्ता

उ०—परे तु द्योतकत्वात्तस्य विशेषणतैवोचितेति भाष्योक्तदोषाऽनुद्धारः । अत एवाऽस्य पक्षस्य भाष्ये प्रकृत्यर्थविशेषणशब्देनोल्लेखः । किञ्च ण्यन्तात्प्रत्ययस्तत्प्रकृत्यर्थकर्त्तरि सामर्थ्यादित्यवश्यं वाच्यमेतत्पक्षे । एवञ्च प्रयोज्ये कर्त्तरि तृतीयेव लकारोऽपि दुर्वारः । दुहादीनामप्रधाने कर्मण्यपि लादिस्वीकारेण लादिविधौ कर्तृकर्मांशे प्रधानाऽप्रधानन्याय्याऽप्रवृत्तेरुचितत्वाच्च । वाचकत्वे तु न दोषः, प्रयोज्यस्य ण्यन्तप्रकृत्यर्थकर्तृत्वेऽपि ण्यन्तकर्तृत्वाऽभावात्तत्र कर्त्तरि ण्यन्तात्प्रत्ययाऽनुत्पत्तेः । एवमन्ययोरपि दूषणत्वमेवेत्याहुः । णिचेति । प्राधान्येनोत्तरदेशसंयोगानुकूलव्यापारार्थक एव गत्यर्थ इति भावः । अर्थग्रहणसामर्थ्यादिति बोध्यम् । ब्यतीति । सोऽपि प्रागुक्तयुक्त्यैव प्रधानभूतप्राणवियोगानुकूलव्यापारार्थक एवेति भावः । हेतुः प्रयोजक इति । तथा च पारिभाषिकस्यैव हेतोर्ग्रहणमिति भावः । वस्तुतस्तु 'को मत्वर्थ' इत्यस्य किं पाकादिरुत प्रयोजकव्यापार इत्यर्थः । कृत्रिमाऽकृत्रिमन्यायेन हेतुसंज्ञाविधानसामर्थ्येन च तस्यैव ग्रहणं भविष्यतीति तत्प्रश्नाऽनौचित्यात् । हेतुः कर्त्ताऽस्येति । प्रयोजकव्यापार एवेत्युत्तरम् । प्रयोजकस्य पारिभाषिकहेतुत्वेऽपि लक्ष्यानुरोधेनाह भाष्ये—हेतुनिर्देशश्चेति । पारिभाषिकेऽपि लक्ष्यसिद्धिमाह—नावश्यमिति ।

१—'स' इति क्वचिन्न । २ 'मात्रं द्रष्टव्यम्' पा० । ३ अयं पाठः क्वचिन्न ।

वासं प्रयोजयन्ति । तथा कारीषोऽग्निर्निर्वात एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयति ।

इह कश्चित् कंचिदाह—'पृच्छतु मा भवान्, अनुयुङ्क्तां मा भवा'निति, अत्र णिच्कस्मान्न भवति ? अकर्तृत्वात् । न ह्यसौ संप्रति पृच्छति, तूष्णीमास्ते । किं च भो वर्तमानकालाया एव क्रियायाः कर्त्रा भवितव्यं न भूतभविष्यत्कालायाः ? भूतभविष्यत्कालाया अपि भवितव्यम् । अभिसंबन्धस्तत्र क्रियते—'इमां क्रियामकार्षीदिमां क्रियां करिष्यती'ति । इह पुनर्न कश्चिदभिसंबन्धः क्रियते न चासौ संप्रति पृच्छति, [ नचासौ प्रक्ष्यति ] तूष्णीमास्ते । यदि तर्हि कर्ता नास्ति कथं तर्हि कर्तृप्रत्ययेन लोटाऽभिधीयते ? अथ कथमस्मिन्नपृच्छत्ययं प्रच्छिर्वर्तते ? अभिसंबन्धस्तत्र

प्र०—तस्य प्रयोजकोहेतुरित्यत्र णिजभावः । इतरो वर्तमानक्रियस्यैवाऽनेन कर्तृत्वमुक्तमिति मत्वा चोदयति—किं च भो इति । अभिसंबन्ध इति । भूताया भाविन्याश्च क्रियायाः कर्त्राभिसंबन्धो भूतो भावी च प्रतिपाद्यत इत्यर्थः । अथ कथमिति । असत्यर्थे शब्दप्रयोगाऽसंभवात् । अभिसंबन्ध इति । बुद्धिपरिवर्तिन्यर्थे बहिरसत्यपि शब्दप्रयोगादिति भावः । न च कर्तेति । तस्यैवाऽऽधीयमानत्वात् । तदुक्तं हरिणा—

> द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड्विधीयते ।
> सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः' ॥ इति ।

अथापीति । दुर्बलपक्षाभ्युपगमेनाऽपि परिहारोऽभिधीयत इति भावः । लोटोक्तत्वादिति । एकविषयत्वाण्णिचो लोडादीनां च पाक्षिकत्वाद्यदा लोडुत्पद्यते तदा तेनैवाऽभिहित-

उ०—तदाशयमाह—तत्समर्थेति । भाष्ये 'ब्रवीती'त्यनेन तादृशशब्दप्रयोग एव मुख्या प्रवर्तनेति सूच्यते । ननु प्रश्नक्रियाकर्तृतया कस्यचित्सिद्ध्यभावात्प्रयोज्यस्याऽभावे प्रयोजकस्याप्यभावात्कथं णिच्शङ्का ?, तत्राह—प्रष्टेति । 'भावी'ति शेषः ।

समानार्थत्वाद्युगपल्लोट्णिचोरप्रसक्तेराह—एकविषयत्वादिति । वस्तुतस्तु लोडन्ते प्रयुज्यमानलोडन्तशब्द एव प्रयोजकव्यापारस्तस्य सत्त्वाण्णिच्स्यादिति प्रश्नाशयः । पर्यायस्य प्रश्नविषयत्वे लोटोक्तत्वात्प्रेषणस्य णिज्न भविष्यतीत्युत्तरभाष्यासङ्गतिः । न हि पर्याये लोटोक्तत्वमस्ति । पर्यायो नाम कदाचिल्लोडेव, कदाचिण्णिजेवेत्याकारः । ननु 'उक्तः करोती'त्यत्रोक्तन्यायेनाऽत्रापि णिचोऽप्राप्त्या भवदुक्तव्याख्याने भाष्याऽसङ्गतिरिति चेन्न; लोडन्तशब्दप्रयोगरूपप्रयोजकव्यापारस्य लोडवाच्यत्वमित्यभिमानेन शङ्कासत्त्वात् । लोटोक्तत्वादित्युत्तरस्य चाऽयमाशयः । स प्रेरणात्वेन लोड्वाच्य एवेति । एतच्च 'विधिनिमन्त्रणे'ति सूत्रे उपपादयिष्यते । मञ्जूषायाञ्च निपुणतरमुपपादितम् । न कर्त्तेति । तत्र प्रश्नक्रियाया अभावादितिभावः । कुतस्तद्विशेष इति । 'तूष्णीमास्त' इति भाष्यं कैमुतिकन्यायोपलक्षणं बोध्यम् । आधीयमानं—विधीयमानमित्यर्थः । एतेन 'लोटा कर्तृत्वस्याऽभिधानात् कथमकर्तृत्व'मित्यपास्तम् । तदुपपादयति—यस्तु प्रवृत्तेति । अस्य 'विध्यर्थकलोडादिप्रयोगं विनापी'त्यादि । प्रवृत्तक्रियोऽपि शैघ्र्याय प्रेर्यंत एव । भाष्ये—अभिसंबन्ध

१ अयं पाठः क्वाचित्कः ।

क्रियते--'इमां क्रियां कुर्वि'ति। कर्त्रापि तर्ह्यभिसंबन्धः क्रियते। कथम्? 'कर्ता चाऽस्याः क्रियाया भवे'ति। एवं न च कर्ता कर्तृप्रत्ययेन च लोटाऽभिधीयते।

अथापि कथंचित्कर्ता स्यादेवमपि न दोषः। लोटोक्तत्वात् प्रैषस्य णिज्न भविष्यति। विधीयन्ते ह्येतेष्वर्थेषु प्रैषादिषु लोडादयः†। यत्र च द्वितीयः प्रयोज्योऽर्थो भवति, भवति तत्र णिच्। तद्यथा—आसय शाययेति।

## कृष्यादिषु चानुत्पत्तिः॥

कृष्यादिषु चानुत्पत्तिर्वक्तव्या। एकान्ते तूष्णीमासीन उच्यते—'पञ्चभिर्हलैः कृषती'ति। तत्र भवितव्यं 'पञ्चभिर्हलैः कर्षयती'ति।

## कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात्॥ ३॥

कृष्यादिषु चानुत्पत्तिः सिद्धा। कुतः? 'नानाक्रियाणां कृष्यर्थत्वात्'। नानाक्रियाः कृषेरर्थाः। नावश्यं कृषिर्विलेखन एव वर्तते। किं तर्हि? प्रतिविधानेऽपि वर्तते। यदसौ भक्तबीजबलीवर्दैः प्रतिविधानं करोति स कृष्यर्थः। अतश्च प्रतिविधा-

प्र०—त्वात् प्रैषस्य णिज् न भविष्यति। एकान्त इति–कृषावसामर्थ्यं दर्शयति। तूष्णीमासीन इति–व्यापाराऽभावकथनम्। कश्चिद्धि सामर्थ्यातिशयाद्युगपत्पञ्चभिर्हलैः कृषेत्पर्यायेण वेति तन्निराकरणाय 'एकान्ते तूष्णीमासीन' इत्युक्तम्। तत्र पञ्चभिर्हलैर्भूमिमन्यैः कर्षयतीत्यर्थावगमाण्णिचि सति कृषतीति न प्राप्नोतीति तदनुत्पत्तिर्वक्तव्येत्यर्थः। प्रतिविधानेपीति। अनेकार्थत्वाद्धातूनां

उ०—इति। बुद्धिकृतोऽभिसम्बन्ध इत्यर्थः। भाष्ये—न चासौ प्रच्यवतीति। लोडन्तप्रयोगकृतप्रेरणां विनेत्यर्थः। बुद्धीति। बुद्ध्या विषयीकृतस्यैव सर्वत्र बोधात्। प्रकृते च क्रियाया इव कर्तृत्वस्यापि तथाभूतस्यैव विधानमिति भावः। आधीयमानत्वादिति। विधेयत्वादित्यर्थः। [ प्रैष इति ]। द्रव्यमात्रस्य कर्तृत्वरहितस्य प्रयोगः—प्रैषः। दुर्बलेति। ईदृशकर्तुरपि यदि हेतुसंज्ञासूत्रे ग्रहणमिति भावः। पाक्षिकत्वात्—पर्यायेण जायमानत्वात्। एतद्भाष्यनिष्कर्षः प्रागेवोक्तः। कैयटोक्तव्याख्याने हि लोड्विशिष्टे तद्वारणेऽपि तदुक्तरीत्या शक्तितात्पर्यविषयस्य पर्यायस्याऽवारणाच्चिन्त्यमिदम्। नन्वेवं णिज्लोटोः समावेशाऽभावे 'आसये'त्याद्यनुपपत्तिरत आह—भाष्ये—यत्र च द्वितीय इति। प्रयोजकोऽपि एयर्थो यदाऽन्याऽपेक्षया प्रयोज्यो भवति तदा तयोः समावेश इत्यर्थः। ननु प्रयोजकव्यापारस्य पञ्चभिर्हलैरित्यनेनैव द्योतितत्वात्त-

† प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३। ३। १६३ १—इदं भाष्यमिति केचित्।

२—प्रतिविधानं तत्समर्थाचारणमिति कैयटः। प्रतिविधानं प्रतिफलप्रदानम्, प्रबन्धकरणं वा।

३—'भक्तमन्धोऽन्नमोदनः' इत्यमरः। इह तु कर्मकरेभ्यो दीयमानमोदनपिण्डादिभोजनं ग्राह्यम्।

४—अयं पाठः क्वाचित्कः।

नेऽपि वर्तते, यदहरेवाऽसौ न प्रतिविधत्ते तदहरेव तत्कर्म न प्रवर्तते ।

यंज्यादिषु चाऽविपर्यासः ॥

यज्यादिषु चाऽविपर्यासो वक्तव्यः । 'पुष्यमित्रो यजते, याजका याजयन्ती'-ति । तत्र भवितव्यं 'पुष्यमित्रो याजयते, याजका यजन्ती'ति ।

**यज्यादिषु चाऽविपर्यासो नानाक्रियाणां यज्यर्थत्वात् ॥ ४ ॥**

यज्यादिषु चाऽविपर्यासः सिद्धः । कुतः ? 'नानाक्रियाणां यज्यर्थत्वात्' । नानाक्रिया यजेरर्थाः । नावश्यं यजिर्हविः प्रक्षेपण एव वर्तते । किं तर्हि ? त्यागेऽपि वर्तते । तद्यथा—'अहो यजत' इत्युच्यते यः सुष्ठु त्यागं करोति । तं च पुष्यमित्रः करोति, याजकाः प्रयोजयन्ति ।

प्र०—कृषिरेव प्रयोजकव्यापारे तत्समर्थाचरणलक्षणे वर्तत इत्यर्थः । धातुनैव चोपपदसहितेन तस्यार्थस्य प्रकाशितत्वाण्णिजभावः, 'विभाषोपपदेन प्रतीयमान' इति पक्ष आत्मनेपदाऽभावश्च । यदा तु कृषिर्विलेखने वर्तते तदा भवत्येव 'पञ्चभिर्हलैः कर्षयती'ति णिच् । यज्यादिष्विति । यजेः प्रक्षेपविशेषवाचित्वात् प्रक्षेपे च ऋत्विजां कर्तृत्वाद्यजमानस्य प्रयोजककर्तृत्वाण्णिच्प्रसङ्ग-निवारणाय वचनम् ।

उ०—द्योतनाय 'एकान्ते' इत्यादि व्यर्थमत आह—कश्चिदिति । तत्रेति । एवञ्च प्रयोजकव्यापारस्याऽत्र प्रतीतेस्तद्बोधनाय णिच्स्यादिति भावः । अनेकार्थत्वादिति । प्रतिविधानान्तोऽत्र धात्वर्थः । फलानुकूलत्वेन स एव वा । करणस्य च फले एवान्वयः । भाष्ये—तत्कर्मेत्यस्य कृष्यर्थफलमित्यर्थः । आद्येऽत्र प्रयोज्यस्य कर्मत्व इष्टापत्तिः । 'गतिबुद्धी'ति सूत्रन्तु नियमस्य सजातीयापेक्षत्वादन्यण्यन्त एव व्यावर्त्तकम् । अन्ये तु तत्प्राप्तिरेव नेति दिक् । णिजभावइति । द्योतकतापक्षेऽप्युपपदेनैव द्योतितत्वाद्द्योतकणिचोऽभाव इतिभावः । वस्तुतो द्योतकत्ववादिनो वचनाऽऽरम्भः, द्योतकसमुच्चयदर्शनात् । वाचकत्ववादेन तत्खण्डन-

१—इदं भाष्यमिति केचित् ।

२—पातञ्जलं महाभाष्यं संग्रहाब्धिसुधासमम् । पुष्यमित्रस्य समये समुदेति स्म भारते ॥
साकेतमध्यमिकयोर्यवनेनोपरुणद्धयोः । वर्णनं पुष्यमित्रीय-यागस्य च पतञ्जलौ ॥
पुष्यमित्रे मृते पञ्चत्रिंशदब्दिकशासने । अग्निमित्रोऽभवद्राजा तस्य पुत्रो महायशाः ॥
एवं च कालिदासनिर्मितमालविकाग्निमित्रनाटकनायकस्य राज्ञोऽग्निमित्रस्य पिता पुष्यमित्रः २९१६—२९५० कलिगताब्देषु राज्यं चकारेति भारतीयेतिवृत्तनिर्मातारः ।
"अनेक ठोस प्रमाणों से यह निश्चित होता है कि पतञ्जलि का काल विक्रम से न्यूनातिन्यून २००० दो सहस्र वर्ष पूर्व अवश्य है ।" ( सं० व्या० शास्त्र का इतिहास, भाग २, पृष्ठ ३४८, ले० यु० मी० )

३—'याजयन्ती'ति पाठान्तरम् ।

४—इदं क्वचिन्न ।

## तत्करोतीत्युपसङ्ख्यानं सूत्रयत्याद्यर्थम् ॥ ५ ॥

तत्करोतीत्युपसङ्ख्यानं कर्तव्यम् । किं प्रयोजनम् ? 'सूत्रयत्याद्यर्थम्' । सूत्रं करोति सूत्रयति ।

इह व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयतीति वाक्ये षष्ठी, उत्पन्ने च प्रत्यये द्वितीया, केनैतदेवं भवति ? योऽसौ सूत्रव्याकरणयोरभिसंबन्धः स उत्पन्ने

प्र०—नानाक्रिया इति । तत्र त्यागवचनाश्रयेण यः प्रयोगस्तद्विपरीतः प्रक्षेपवचनेद्रष्टव्यः । इह व्याकरणस्येति । लक्ष्ये लक्षणसमुदाये वा व्याकरणशब्दो वर्तत इति भेदनिबन्धना षष्ठी । यदा तु लक्षण एव सूत्रे व्याकरणशब्दो वर्तते तदा व्यपदेशिवद्भावनिमित्ता षष्ठी । यदा 'व्याकरणं सूत्रं करोती'ति सामानाधिकरण्यं तदा यथा 'मुण्डयति माणवक'मिति भवति तथा 'व्याकरणं सूत्रयती'त्यपि भवति ।

योऽसाविति । वाक्ये द्रव्यरूपं सूत्रं 'सूत्र'शब्देनोच्यते । णिचि तूत्पन्ने सत्त्वभावातिवर्तनात्करोत्यर्थाभिधायी सूत्रशब्दः संपद्यते । तदुक्तं—'परार्थाभिधानं वृत्ति'रिति । एतच्च प्रक्रियागतविभागाश्रयेणोक्तम् । परमार्थतस्तु धात्वन्तरं सूत्रिविशिष्टक्रियावचनः । आख्यानादिति । आख्यायत इत्याख्यानम्—इतिवृत्तमुच्यते । प्रकृतिवदिति । णिचो या प्रकृतिः कंसवधादिः,

उ०—मिति तत्त्वम् । प्रयोजकव्यापारफलस्य कर्तृगामित्वात्कर्त्रात्मनेपदमाशङ्क्याह—विभाषेति । सा च प्राप्तविभाषेति भावः । तद्विपरीतः प्रक्षेपेति । 'अविपर्यास' पदेनेष्टप्रयोगसिद्धिरेव न तु विपरीतप्रयोगव्यावृत्तिरपीत्यर्थः । भाष्ये—तदिति,—प्रातिपदिकोपलक्षणम् । प्रातिपदिकादित्यर्थः । कर्मत्वाद्यन्तर्भावेणैकार्थीभावः, लोकव्यवहारात् । करोतीति च धात्वर्थोपलक्षणम् । तेन 'अश्वेनाक्रामत्यश्वयती'त्यादि सिद्धम् । एवञ्च 'प्रातिपदिकाद्धात्वर्थे' इत्यादिगणसूत्राणि प्रक्षिप्तानि, धातुपाठे सूत्रमूत्रधातू चेति बोध्यम् । तत्सत्त्वेनैव सिद्धे वार्त्तिकमफलं स्यात् । अश्वयोस्तदशानकल्पनाऽपेक्षया मदुक्तस्यैवौचित्यात् । एवञ्च 'मुण्डमिश्रे'ति सूत्रस्थः कैयटश्चिन्त्य एवेति बोध्यम् । लक्ष्ये इति । 'व्याकरण'शब्दः कर्मल्युडन्त इति भावः । लक्षणसमुदाये वेति । अष्टाध्यायीरूपेऽर्थे । करणल्युडन्तः स इति भावः । यदा तु लक्षण एवेति । प्रतिसूत्रं 'व्याकरण'-शब्द इत्यर्थः । यदेति । व्यपदेशिवद्भावाद्यनाश्रयणे इत्यर्थः । करोत्यर्थाभिधायीति । करोत्यर्थविशेषणीभूतसाध्यावस्थस्वार्थाऽभिधायीत्यर्थः । सूत्रणे च सूत्रेर्वृत्तिर्बोध्या । भाष्ये—व्याकरणेन सामर्थ्यमिति । तज्जन्यफलाश्रयत्वरूपमित्यर्थः । नित्यशब्ददर्शने 'सूत्रयती'त्यत्राऽवयवार्थाभावाच्छङ्कैव नास्तीत्याह—एतच्चेति । आख्यायत इति । बाहुलकात्कर्मणि ल्युट् । भावल्युटि ह्याख्यानक्रियायां कर्मत्वं न स्यात् । णिच इति । 'कृतो या प्रकृति'रिति तु नोक्तं, प्रत्ययलक्षणेन कृदन्ततयाऽनेनातिदेशेन च षष्ठीप्रसङ्गात्, 'राजागमन'-मित्यादौ राज्ञः कर्तृतया 'राजान'मिति द्वितीयाऽनापत्तेश्च । तदयमर्थः—णिच्प्रकृतेर्यथाऽऽख्यानक्रियायां कारकता तथा कंसादेरपीति । तदाह—यथेति । नन्वेवमद्याद्यव्यवस्थेत्यत आह—प्रकृतिवद्भावातिदेशेनेति ।

प्रत्यये निवर्तते, अस्ति च करोतेर्व्याकरणेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति।

**आख्यानात्कृतस्तदाचष्ट इति कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ ६ ॥**

आख्यानात्कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे। कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्। कंसवधमाचष्टे कंसं घातयति। बलिब-

प्र०—तया तुल्यं कंसादि कारकं भवति। यथाख्यानक्रियापेक्षं कंसवधादेः कर्मत्वं तथा कंसादेरपि अप्रतिपन्नाख्यानकर्मभावस्येत्यर्थः। प्रकृतिवद्भावातिदेशेन च कंसादेः पृथक्कृतत्वात् कंसमघातयदित्यादौ कंसादिशब्दवर्जितस्याङ्गसंज्ञायामडादयः कंसादेर्न भवन्ति। वत्करणाच्च स्वाश्रयमपि भवतीति 'पुष्येण योजयती'ति पुष्यस्य कर्मत्वाऽभावः। अथवा प्रकृत्या तुल्यं वर्ततइति प्रकृतिवत्, प्रकृतेरिव प्रकृतिवत्। ण्यन्तस्य कारकमित्युभयथातिदेशाश्रयणात् क्वचित्क्वचित्परिगृह्यते। प्रकृतिप्रत्यापत्त्या राजागमनादौ नलोपाद्यपि निवर्तत इति राजानमागमयतीत्याद्युपपन्नं भवति। कंसवधमिति। यद्यप्यत्र 'सन्नियोगशिष्टानामन्यतराऽपाये उभयोरप्यभाव' इति वधादेशनिवृत्तिस्सिद्धयति तथापि

उ०—प्रकृताविव प्रकृतिवत्। अत्र प्रकृतिशब्देन कृतः प्रकृतिः। तस्यां यथा कंसादेरनन्तर्भावस्तथा कृदन्तप्रकृतिकणिजन्तेऽपीत्यर्थः। नन्वेवं 'पुष्येण योजयती'त्यत्रापि द्वितीयापत्तिरत आह—वत्करणादिति। क्वचिदिति। 'पुष्ययोगे णी'त्यत्र च प्रकृतेरिव प्रकृतिवदित्येवाश्रयणीयमिति भावः। एवञ्च द्वितीयाद्यन्तत्वाय पृथक्त्वाय चाऽतिदेशद्वयमाश्रयणीयम्भवति, वैरूप्यञ्च भवतीति गौरवम्, अतः 'प्रकृतिवच्चे'त्यस्य कृत्प्रकृतेर्हन्त्यादेर्ण्यन्तत्वे यथा कारकं द्वितीयाद्यन्तं, धातावनन्तर्भूतञ्च तथेत्यर्थ उचितः। 'प्रकृतिप्रत्यापत्ति'रित्यत्र कृत्प्रकृतेरेव ग्रहणेनाऽत्रापि तथैवौचित्याच्च 'पुष्येण योजयती'त्यत्र च न दोषः। प्रकृतिप्रेति। कृत्प्रकृतेः 'प्रत्यापत्तावपि राजन्शब्दे नलोपनिवृत्तिः कथमिति चिन्त्यम्। वस्तुतः 'प्रकृतिवत्कारक'मित्यतिदेशात्पृथक्करणेन समासाऽभावेनाऽपदत्वात्तन्निवृत्तिरिति बोध्यम्। अत्र 'प्रकृतिवच्चे'ति 'चः' 'कारक'मित्यनन्तरं बोध्यः—प्रकृतिवत्कारकञ्चे'ति। तेन तद्वत्कार्यमप्यतिदिश्यते। तेन 'घातयतीत्यादौ कुत्वतत्वे सिध्यतः, अन्यथा 'धातोः स्वरूपग्रहण'इति परिभाषया न स्याताम्। केचित्तूभयत्रापि 'प्रकृति'पदेन हेतुमण्ण्यन्तप्रकृतिः हेतुमण्ण्यन्तश्च प्रत्यासत्योपस्थितकृत्प्रकृतिप्रकृति एव। प्रत्यापत्तिः—प्रत्यभिज्ञा। सा च तत्सत्त्वे तत्रत्य कार्यसत्त्वे च भवतीति। अनेनैव कारकबहिर्भावो वधादेशनिवृत्तिः कुत्वतत्वादिकञ्च सिद्धम्। नन्वेवं प्रत्यय लक्षणेन कृदन्तत्वात्कंसादेः षष्ठी स्यादतः—प्रकृतिवच्च कारकमिति। यद्विभक्त्यन्तं तत्र तादृशमत्रापीत्यर्थः। एवञ्चाऽऽवृत्तिकल्पना न कुत्रापि। 'प्रत्यापत्ति'शब्दस्य च प्रत्यभिज्ञाविषयतयाऽऽपत्तिः स्थितिरित्यर्थो ननु नष्टस्य पुनः प्रादुर्भावः प्रत्यापत्तिः। अतएव 'रात्रिं विवासयति' 'मृगान् रमयती'त्युदाहरणविषयवचने प्रकृतिप्रत्यापत्तिवचःसङ्गतिः। अन्यथा तत्र प्रकृतेरादेशेनाऽनपहारात्प्रत्यापत्तिःयवहाराऽसङ्गतिः स्पष्टैव।

न्धमाचष्टे बलिं बन्धयति ।

### आख्यानाच्च प्रतिषेधः ॥ ७ ॥

आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः । आख्यानमाचष्ट इति ।

किं पुनर्यान्येतानि संज्ञाभूतान्याख्यानानि तत उत्पत्त्या भवितव्यम्, आहोस्वित्क्रियान्वाख्यानमात्रात् ? किं चातः ? यदि संज्ञाभूतेभ्यः, इह न प्राप्नोति,—राजागमनमाचष्टे राजानमागमयतीति । अथ क्रियान्वाख्यानमात्रात्, न दोषो भवति । यथा न दोषस्तथाऽस्तु ।

### दृश्यर्थायां च प्रवृत्तौ ॥ ८ ॥

दृश्यर्थायां च प्रवृत्तौ कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति [ वक्तव्यम् ] । मृगरमणमाचष्टे मृगान् रमयतीति । दृश्यर्थायामिति किमर्थम् ? यदा हि ग्रामे मृगरमणमाचष्टे मृगरमणमाचष्ट इत्येव तदा भवितव्यम् ।

प्र०—पुष्येण योगं जानाति पुष्येण योजयतीति कुत्वस्य सन्नियोगशिष्टत्वाऽभावान्निवृत्तिर्न सिध्यतीति प्रकृतिप्रत्यापत्तिरुच्यते । किं पुनरिति । कंसवध—नलोपाख्यानादीनीत्यर्थः । दृश्यर्थायामिति । यदाऽरण्यस्थो रममाणान् मृगान् प्रतिपद्य व्याचष्टे-एतस्मिन्नवकाशे एवंविधा मृगा रमन्त इति तदा प्रतिपाद्यस्य दर्शनार्था प्रवृत्तिर्भवति । यदाहि ग्राम इति । ग्रामे मृगाणामसंभवान्न तद्दर्शनार्था प्रवृत्तिः । 'दृश्यर्थाया'मित्येतच्च मृगरमणादिविषयमेव द्रष्टव्यम् । राजागमनादिषु तु

उ०—कारकत्वहिर्भावश्च तस्याः फलमित्याहुः । यद्यप्यत्र संनियोगेति । एवञ्च तदनित्यत्वज्ञापकमप्रकृतिप्रत्यापत्तिवचोऽत्रत्यमिति बोध्यम् । भाष्ये—संज्ञाभूतानीत्यस्य प्रसिद्धानीत्यर्थः भाष्ये—राजानमागमयतीति । एवञ्च 'देवदत्तपाकमाचष्टे' इत्यर्थे देवदत्तेन पाचयतीत्येव, 'गतिबुद्धी'तिनियमेन देवदत्तस्य कर्मत्वाऽभावात् । दृश्यर्थेति । 'इक्कृष्यादिभ्य' इति दृशिः साधुः । रममाणान्मृगानिति । एतेन 'मृगरमण'शब्द आखेटे रूढ इत्यपास्तम् । प्रवृत्तिर्भवतीति । आख्यानविषयेत्यर्थः इत्येतच्चेति । प्रयोगाऽनुसारादिति भाव । यावदिति । रात्रिरूपकालेनाऽत्यन्तसंयोगः । कथाश्चाऽऽख्याने कर्मेति भावः । 'आरात्रिविवास'-शब्देन तावत्पर्यन्तकथा लक्ष्यन्त इति बोध्यम् । कालाऽत्यन्तसंयोगे गम्यमाने इत्यर्थः । वसेरकर्मकतया 'गतिबुद्धी'ति रात्रेः कर्मत्वं हेतुमण्णिचि तद्वदिहापि बोध्यम् । भाष्ये—प्रापीति । सम्पदादित्वेन भावक्तिबन्तात्सप्तमी । एवं 'श्री'त्यपि । भू प्राप्ताविति । 'सम्भावयत' इत्यस्य प्राप्नोतीत्यर्थः । उभयप्राप्ताविति । नियमेन चन्द्रमसः प्रतीतेरुभयप्राप्तिः । वस्तुतः सहयोगेऽत्र तृतीया, कर्तृप्रयोगाऽभावेनोभयप्राप्तेरभावात् । मतान्तरोक्ते प्रकृतिवदित्यस्यार्थेऽपि न दोषः, हेतुमण्णिचि गत्यादिनियमात्तृतीयाया एव पुष्येणेत्यत्र प्राप्तेः ।

१—इदं क्वचिन्न । २—'भवतीति' ।

## आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥ ९ ॥

कालात्यन्तसंयोगे मर्यादायां कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे, आङ्लोपश्च । कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्चकारकं भवतीति [ वक्तव्यम् ] । आरात्रिविवासमाचष्टे रात्रिं विवासयतीति ।

## चित्रीकरणे प्रापि ॥ १० ॥

चित्रीकरणे प्राप्यर्थे कृदन्ताण्णिज्वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति [ वक्तव्यम् ] । उज्जयिन्या प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते—सूर्यमुद्गमयतीति ।

## नक्षत्रयोगे ज्ञि ॥ ११ ॥

नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज्वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति [ वक्तव्यम् ] । पुष्ययोगं जानाति पुष्येण योजयति । मघाभिर्योजयतीति ॥ तत्तर्हीदं बहु वक्तव्यम् ?

## न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् ॥ १२ ॥

न वा वक्तव्यम् । किं कारणम् ? 'सामान्यकृतत्वात्' । सामान्येनैवाऽत्र णिज्भविष्यति—'हेतुमती'ति । किं कारणम् ? 'हेतुतो ह्यविशिष्टम्' । हेतुतो ह्यविशिष्टमेत-

प्र०—दृश्यर्थप्रवृत्त्यभावेऽपि णिज्भवति । आरात्रिविवासमिति । यावद्रात्रेर्विवासोऽतिक्रमणं तावत्कथाः कथयतीत्यर्थः । चित्रीकरण इति । आश्चर्यकरणे गम्यमाने तत्प्राप्नोतीत्यत्रार्थे णिज्वक्तव्यः । संभावयत इति । 'भू प्राप्तावात्मनेपदी'त्यस्य रूपम् । पुष्येणेति । पुष्यो योगक्रियायाः

उ०—नातिदेशिके इति । णिच्प्रकृत्यर्थकर्तृत्वाऽतिदेशेऽपि णिजर्थकर्तृत्वाऽतिदेशाऽभावान्न तदुत्तरलेनास्याऽभिधानमित्यर्थः । 'सूर्यमुद्गमयते'इत्यादावादित्यस्य प्रयोज्यत्वात् चेन देवदत्तस्यापि तत्सजातीयताध्वननाद्धेतुतेत्यनुपपन्नमत आह—देवदत्तविषयाऽन्यस्येति । भाष्ये—स्वतन्त्रस्य प्रयोजक इति । स्वाभिप्रेतमात्रोद्देशेन प्रवृत्तस्य प्रवर्तक इत्यर्थः । एव'म्प्रयोजयती'त्यस्य च स्वाभिप्रेतोद्देशेन प्रवृत्तं प्रवर्तयतीत्यर्थः । स्वाभिप्रेतमात्रोद्देश्यकप्रयोज्यनिष्ठप्रवृत्त्यनुकूलव्यापारवत्त्वं हि प्रयोजकत्वमिति फलितम् । सर्वत्र स्वशब्देन प्रयोजकः । एवं प्रयोजकाभिप्रेतमात्रोद्देश्यकप्रवृत्त्याश्रयत्वं प्रयोज्यत्वम् । तदेव च स्वतन्त्रत्वम् । न चैतत्सूर्ये इति भावः । समाधत्ते भाष्ये—स्वतन्त्रेति । स्वतन्त्रप्रयोजकस्य हि हेतुत्वम्, अयञ्च न तथेत्यप्रयोजकोऽहेतुरिति चेदित्यर्थः । प्रवृत्तिर्ह्युभयत्राऽनपेक्षेति । प्रयोज्यप्रवृत्तिरुभयत्रापि प्रयोजकाभिप्रेतानपेक्षा तन्मात्रानुद्देशिकेत्यर्थः । उभयत्रानपेक्ष्यैव किञ्चिदिति । 'किञ्चि'दित्यस्य प्रयोजकाभिप्रेतमात्रं किञ्चिदनपेक्ष्यैवोभयोर्देवदत्तादित्ययोर्भवतीत्यर्थः । तस्मान्मात्रांशो न निवेश्यः । अन्यथा णिजनवकाश इति

१—इदं क्वचिन्न

द्भवति । तुल्या हि हेतुता देवदत्ते चादित्ये च ।

न सिध्यति । 'स्वतन्त्रस्य प्रयोजको हेतुसंज्ञो भवती'त्युच्यते†, न चाऽसावादित्यं प्रयोजयति ।

**स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम् ॥ १३ ॥**

यं भवान् स्वतन्त्रप्रयोजकं मुक्तसंशयं न्याय्यं मन्यते—'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'ति, तेनैतत्तुल्यम् । कथम् ?

**प्रवृत्तिर्ह्युभयत्राऽनपेक्ष्य ॥ १४ ॥**

प्रवृत्तिर्ह्युभयत्रानपेक्ष्यैव किंचिद्भवति देवदत्ते चादित्ये च । नेह कश्चित्परोऽनुग्रहीतव्य इति प्रवर्तते । सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते । ये तावदेते गुरुशुश्रूषवो नाम, तेऽपि स्वभूत्यर्थमेव प्रवर्तन्ते, पारलौकिकं च नो भविष्यतीह च नः प्रीतो गुरुरध्यापयिष्यतीति । तथा यदेतद्दासकर्मकरं[1] नामैतेऽपि स्वभूत्यर्थमेव प्रवर्तन्ते, भक्तं चैलं च लप्स्यामहे, परिभाषाश्च[2] न नो भविष्यन्तीति । तथा य एते शिल्पिनो नाम तेऽपि स्वभूत्यर्थमेव प्रवर्तन्ते वेतनं च लप्स्यामहे मित्राणि च नो भविष्यन्तीति ।

एवमेतेषु सर्वेषु स्वभूत्यर्थं प्रवर्तमानेषु—

**कुर्वतः प्रयोजक इति चेत्तुल्यम् ॥ १५ ॥**

यदि कश्चित्कुर्वतः प्रयोजको नाम भवति तेनैतत्तुल्यम् ।

यदि तर्हि सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते कः प्रयोज्यार्थः ? यदभिप्रायेषु

प्र०—कर्ता, स हि चन्द्रमसं सम्बध्नाति । तत्रोभयप्राप्तौ कर्मणीति नियमात् षष्ठ्यभावे तृतीयासमासः । तत्र प्रकृतेरिव प्रकृतिवदित्येवं प्रकृतिवदतिदेशात्कर्तरि तृतीया भवति । लकारस्तु प्रधान एव कर्त्तरि भवति नातिदेशिके । सामान्यकृतत्वादिति । सामान्यलक्षणेनैव सिद्धत्वादित्यर्थः । देवदत्ते

उ०—भावः । तदेव व्युत्पादयति–नेह कश्चिदिति । 'सत्यामपि प्रेरणाया'मिति शेषः । स[2]निन्द उपालम्भः–परिभाषणम् तदाह—दण्डनादिका इति । अनेन सर्वत्र स्वेष्टसाधनताज्ञानं प्रवर्त्तकमित्युक्तम् । भाष्ये—कुर्वतः प्रयोजक इति । प्रयोजकाऽभिप्रेतमात्रोद्देशं विनापि स्वेष्टोद्देशेनैव कुर्वतः पुंसः प्रयोजको दृश्यते । यथा गुरुः शिष्यानध्ययने प्रवर्त्तयतीत्यादौ तद्वत्सूर्यस्यापीति भावः ।

कः प्रयोज्यार्थं इति । प्रेरणाजन्यप्रवृत्त्याश्रयः प्रयोज्यस्तस्य प्रेरणया कोऽर्थः, प्रयोजनं किमिति प्रश्नः । उत्तरमाह—यदभिप्रायेष्वासज्जन्त इति । प्रेरकाऽभिप्रायेष्वासज्जन्ते । तदभिप्रायं ज्ञात्वा तं निर्वर्त्तयन्ति

† तत्प्रयोजको हेतुश्च १ । ४ । ५५

१—'य एते दासाः कर्मकरा नाम तेऽपि' पा० ।

२—'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषण'मित्यमरः । 'उलाहना' 'डाँट डपट' इति भाषायाम् । 'परिभाषा इति । दण्डनादिकाः ।' इति कैयटः ।

सज्जन्ते—ईदृशौ वध्रौ[1] कुरु, ईदृशौ पुटकौ कुर्विति । आदित्यश्चास्याभिप्राये सज्जते । एष तस्याऽभिप्रायः—'उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयेये'ति, तं चास्याऽभिप्रायमादित्यो निर्वर्तयति ।

भवेदिह वर्तमानकालता युक्ता स्यात्—'उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते सूर्यमुद्गमयती'ति, तत्रस्थस्य हि तस्यादित्य उदेति । इह तु कथं वर्तमानकालता—कंसं घातयति बलिं बन्धयतीति, चिरहते कंसे चिरबद्धे च बलौ ? अत्रापि युक्ता । कथम् ? ये तावदेते शौभिका[2] नामैते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्तीति । चित्रेषु कथम् ? चित्रेष्वपि उद्गूर्णा निपतिताश्च

प्र०—चेति । देवदत्तविषया अन्यस्य हेतुतेत्यर्थः । परिभाषा इति । दण्डनादिकाः । यदभिप्राये-ष्विति । तदुक्तं हरिणा—

'निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये ।
अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये' ॥ इति ।

सज्जन्त इति । भाष्यकारवचनादात्मनेपदम् । परस्मैपदी तु सज्जिः—ग्लुञ्चु षस्ज गता-विति । चिरहत इति । चिरप्रवृत्तत्वाद्वध्यघातकभावस्य प्रयोजकव्यापारस्य वर्तमानत्वाऽसंभ-

उ०—यदेष एव प्रयोज्यस्य प्रेरणायाऽर्थ इत्यन्वयः । एवञ्च क्रियायां स्वाभिप्रायानुरोधफलकं तज्ज्ञापनमेव प्रेरणाफलमिति भावः । 'अभिप्राय'पदेन तद्विषय उच्यते । तदाह—ईदृशावित्यादिना । तदाह निमित्तेभ्य इति । स्वभूतिसाधनस्वज्ञापकप्रेरणादिभ्य इत्यर्थः । ननु स्वभूतिफलकप्रवृत्तिप्रयोजकाऽभिप्रायाऽनुरोधोऽपि किमर्थ इत्यत आह—अभिप्रायेति । ननु शिष्यादीनां स्वार्थसिद्धये गुर्वाद्यभिप्रायानुरोधेऽपि सूर्यस्य तदनुरोधे मानाऽभावः, फलाऽभावश्चेति चेन्न; अभिप्रायसम्पत्तिमात्रेण तदुद्देश्यकप्रवृत्त्याश्रयत्वादिरूपप्रयोज्यप्रयोजक-भावाऽध्यारोपेण णिजिति तात्पर्यात् । भाष्यकारवचनादिति । तत्प्रयोगादस्याऽनुदात्तेत्स्वपि पाठोऽनुमी-यत इति भावः । ननु 'चिरहते कंसे' इत्युक्त्या प्रयोजकव्यापारस्य वर्तमानकालत्वाऽभावो नोक्त इत्यत आह—चिरप्रवृत्तेति । कंसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्वेन तत्प्रयोजकव्यापारस्यापि तत्त्वमेवेति भावः । कंसाद्यनुकारिणां–कंसादिसदृशानाम् । भाष्ये–प्रत्यक्षं कंसं घातयन्तीति । तादृशेनैव वासुदेवेनेत्यर्थः । उद्गूर्णा इति । उद्यता इत्यर्थः । 'गूरी उद्यमने' इत्यस्य रूपम् । एवञ्च चित्रलेखका अपि चित्रस्थं कंसं तादृशेनैव कृष्णेन घातयन्तीत्यर्थः । 'ग्रन्थिक'पदे 'अत इनिठनौ' इति ठन् । शब्दग्रन्थगड्डे ति । शब्दः—कथकमुखोच्चार्यमाणः । ग्रन्थः—तद्धस्तस्थपुस्तकरूपः । गड्डः—मनुष्यसङ्घातः । न तत्र कश्चिदपि कंसा-दिबुद्धिविषय इत्यर्थ इत्याहुः । तेऽपि—ग्रन्थिका अपि । तद्वृत्तीर्व्याचक्षाणा इति । तदैश्वर्याणीत्यर्थः । तानि कथयन्तो ग्रन्थिकाः स्वबुद्धिविषयभूतान् सतो विद्यमानान् कंसादीन् प्रकाशयन्ति—श्रोतृबुद्धौ समर्पय-न्तीत्यर्थः । विद्यमानत्वेन बुद्धिविषयत्वे हेतुमाह—अतश्च सत इति । व्यामिश्राश्चेति । चो हेतौ । यतो

१—'वध्रौ' 'वध्यौ' इति पा० ।   २—'शोभनिका' 'शोभिका' पा० ।

प्रहारा दृश्यन्ते कंसकर्षण्यश्च । ग्रन्थिकेषु कथं, यत्र शब्दग्रन्थगड्डमात्रं लक्ष्यते ? तेऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशाद्वृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति । आतश्च सतो व्यामिश्राश्च दृश्यन्ते । केचित्कंसभक्ता भवन्ति केचिद्वासुदेवभक्ताः । 'वर्णान्यत्वं' खल्वपि पुष्यन्ति—केचित्कालमुखा भवन्ति केचिद्रक्तमुखाः । 'त्रैकाल्यं' खल्वपि लोके लक्ष्यते,—'गच्छ हन्यते कंसः' 'गच्छ घानिष्यते कंसः' । 'किं गतेन, हतः कंस' इति ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ।

## कण्ड्वादिभ्यो यक् ॥ ३ । १ । २७ ॥

किमर्थः ककारः ? गुणवृद्धिप्रतिषेधार्थः । क्ङितीति* गुणवृद्धिप्रतिषेधो यथा स्यात् ।

प्र०—त्वात् । उपसङ्ख्यानारम्भे तु न दोषः, आख्यानस्य वर्तमानत्वादित्यर्थः । शौभिका इति । कंसाद्यनुकारिणां नटानां व्याख्यानोपाध्यायाः । कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या परिगृहीतः कंसो भाष्ये विवक्षितः । ग्रन्थिकेष्विति । कथकेष्वित्यर्थः । तेपीति । तदुक्तं हरिणा—

शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते' ॥ इति ।

शिष्टं भाष्यं स्पष्टम् ॥ २६ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याऽध्यायस्य प्रथमेपादे
द्वितीयमाह्निकम् ।

कण्ड्वादिभ्यो यक् । किमर्थ इति । द्वैविध्यं कण्ड्वादीनां दर्शयितुमुपन्यासः । ककार-

उ०—विरुद्धपक्षाश्रिता दृश्यन्त इत्यर्थः । न ह्यतीतस्वबुद्धौ तत्संभवतीति भावः । तत्कालमृते स्वपक्ष इव वर्णान्यत्वं पुष्यन्ति—पुष्टं कुर्वन्ति, दधतीत्यर्थः । तत्रैव युक्त्यन्तरमाह—त्रैकाल्यं खल्वपीति । एवञ्च बुद्धिविषयसत्त्वैव सर्वोऽपि व्यवहार इति भावः । शब्देति । शब्दसमर्पितबुद्धिविषयाकारानित्यर्थः । साधनत्वेनेति । बुद्धिविषयवधादेरित्यर्थः ॥ २६ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयस्याऽध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ।

कड्वादिभ्यो । धातुभ्यो यकि गुणनिषेधकतया कस्य चारितार्थ्यादाह—द्वैविध्यमिति । प्रातिपदिक-

१—'कंसस्य कृष्णस्य च' पा० । कंसकर्षण्यो हि रजवः । २—'शब्दगड्डमात्र' पा० ।
३—'हि' पा० । ४—'केचिद्रक्तमुखा भवन्ति केचित्कालमुखाः ।' पा० ।
* क्ङिति च १ । १ । ५

नैतदस्ति प्रयोजनम् । सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते, धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते† न चायं धातोर्विधीयते । कण्ड्वादीनि हि प्रातिपदिकानि ।

कण्ड्वादिभ्यो वावचनम् ॥ १ ॥

कण्ड्वादिभ्यो वेति वक्तव्यम् ।

अवचने हि नित्यप्रत्ययत्वम् ॥ २ ॥

अक्रियमाणे हि वावचने नित्यः प्रत्ययविधिः प्रसज्येत ॥ तत्र को दोषः ?

तत्र धातुविधितुक्प्रतिषेधः ॥ ३ ॥

तत्र धातुविधेस्तुकश्च प्रतिषेधो वक्तव्यः स्यात् । कण्ड्वौ कण्ड्वः 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' [ ६ । ४ । ७७ ] इत्युवङादेशः प्रसज्येत । इह च कण्ड्वा कण्ड्वे 'नोङ्धात्वोः' [ ६ । १ । १७५ ] इति [ विभक्तेरुदात्तत्व ] प्रतिषेधः प्रसज्येत ।

प्र०—प्रयोजनमेव दर्शयितुं वस्त्वन्तरमुपक्षिप्यते—कण्ड्वादिभ्यो वावचनमिति । यदा कण्ड्वादीनि प्रातिपदिकानि तदा 'वे'ति वक्तव्यमित्यर्थः । तत्र को दोष इति । नित्येऽपि प्रत्यये क्विपा 'कण्डू'रित्यादि सिध्यतीति भावः । क्विपा यथेष्टं रूपं न सिध्यतीति दर्शयितुमाह—तत्रेति । 'कण्डूय'शब्दात् क्विपि विहितेऽकारलोपस्य स्थानिवत्त्वमुवङि कर्तव्ये नास्ति । क्विलुगुपधात्वच-

उ०—स्वमात्रन्तु प्रष्टा मन्यते । उपक्षिप्यत इति । तत्समाधानेनैव ककारप्रयोजनमप्युक्तमेव भवतीति भावः । यदेति । प्रातिपदिकान्येवेत्यर्थः । केवलधातुपक्षे तु वावचने क्रियमाणेऽपि 'कण्डवती'त्यनिष्टप्रसङ्गः, कण्ड्वावित्यादावुवङादिप्रसङ्गश्चेति भावः । न च प्रातिपदिकान्येव सन्तु, अत्र च सूत्रे 'करणे' इत्यनुवर्त्तते, तेन कण्डूं करोतीत्यर्थे यक् । अन्यदा स्वभावः । तेन कण्ड्वावित्यादेः सिद्धिः । यगन्तेभ्यस्तु न क्विप्, अनभिधानात् । तेन नोवङ्सहितः प्रयोगः । एवञ्च 'वा'वचनं किमर्थमिति वाच्यं, 'सुख्यती'त्यादावतो लोपानापत्तेः । क्विपा—सम्पदादिक्विपा । यथेष्टमिति । वीप्सायां 'यथा सादृश्ये' इत्यव्ययीभावः । एकवचने कुतो नोदाहृतमित्यत आह—कण्डूय इति । क्वीति । 'क्वौ लुप्तं न स्थानिव'दिति निषेधादिति भावः । अथापीति । तदसार्वत्रिकम् । किन्तु 'क्वौ विधौ ने'त्येव सार्वत्रिकमिति भावः । इदं प्रौढ्या । आदिष्टादिति । 'क्वौ विधि'मितिनिषेधादित्यपि बोध्यम् । अत एवेति । आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाऽभावादेवेत्यर्थः । पुनरुवङेति । 'लक्ष्ये लक्षणस्ये'ति न्यायादित्यपि बोध्यम् । न चाऽनादिष्टादचः पूर्वत्वं स्थानिव-

† सार्वधातुकार्द्धधातुकयोः ७ । ३ । ८४; आर्द्धधातुकं शेषः ३ । ४ । ११४
१—इदं क्वचिन्न ।

तुक्च प्रतिषेध्यः[1]—वल्गुः मन्तुरिति । 'ह्रस्वस्य पिति कृति तुक्' [ ६ । १ । ७१ ] इति तुक् प्राप्नोति ।

## ह्रस्वयलोपौ च ॥ ४ ॥

ह्रस्वयलोपौ च वक्तव्यौ स्याताम् । ह्रस्व—वल्गुर्मन्तुरिति । किमर्थमिदं, न ह्रस्व एवायम्[2] ? अन्तरङ्गत्वाद् 'अकृद्यकार'* इति दीर्घत्वं प्राप्नोति[3] । ह्रस्व ॥ यल्लोप—यलोपश्च वक्तव्यः । कण्डूः मन्तुः वल्गुरिति । किमर्थमिदं, न वलीत्येव† सिद्धम् ? वलीत्युच्यते न चाऽत्र वलादिं पश्यामः । ननु च क्विब्वलादिः । क्विब्लोपे कृते‡ वलाद्यभावान्न प्राप्नोति । इदमिह संप्रधार्यम्—क्विब्लोपः क्रियतां वलि लोप इति, किमत्र कर्तव्यम् ? परत्वात्क्विब्लोपः । नित्यः खल्वपि क्विब्लोपः । कृतेऽपि यल्लोपे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वात्परत्वाच्च क्विब्लोपे कृते वलाद्यभावान्न प्राप्नोति । एवं तर्हि प्रत्ययलक्षणेन भविष्यति × । वर्णाश्रये नास्ति प्रत्ययलक्षणम् ।

प्र०—ङ्परनिर्ह्रासकुत्वे'ष्विति निषेधात् । अथापि स्थानिवत्त्वादुवङ् स्यात्तथापि वकारस्योठ् करिष्यते । 'आदिष्टादचः पूर्वो वकार' इत्यूठि कर्तव्ये स्थानिवत्त्वाऽभावः । अत एवोठः पुनरुवङ्न भवति, तत्र 'कण्डू'शब्दादौजसोः कृतयोरुवङ् प्राप्नोति । 'ओःसुपी'ति तु यणादेशोऽसंयोगपूर्वस्योक्तः । नित्यत्वाच्चेति । 'वेरपृक्तलोपात्पूर्वं वलि लोप' इत्येतदनाश्रित्येदमुच्यते । वर्णाश्रय इति ।

उ०—ऊत्वेन लभ्यं, वस्यादेशत्वाऽभावात्, उवङ आदेशत्वेऽपि तस्य कार्याऽभावात् । न च 'सर्वे सर्वपदादेशा' इति 'कण्डू'इत्यस्य कण्डुवादेशे तस्य स्थानिवत्त्वादनादिष्टादचः पूर्वत्वेन तस्य 'कण्डु ऊ' इत्यादेशे कार्ये स्थानिवत्त्वम्, 'सर्वे सर्वपदादेशा' इत्याश्रित्याऽचः परस्मिन्नित्यस्याऽप्रवृत्तेः । अत एव स्वरादिग्रहणस्य व्यवहितसाधारणपूर्वत्वग्रहणज्ञापकता आकरोक्ता सङ्गच्छते । न च 'प्रातिपदिकानी'त्युपक्रम्य भाष्ये वावचनात्, 'यदा कण्ड्वादीनि प्रातिपदिकानी'त्यादिना स्वयं तथैव व्याख्यानाच्च, अल्लोपस्य स्थानिवत्त्वेपि तत्र परे पूर्वस्य 'कण्डू' इत्यस्य धातुत्वाऽभावादुवङोऽप्राप्त्याऽसङ्गतोऽयं कैयटः । स्पष्टञ्चेदं 'लोपो व्यो'रिति सूत्रे कैयटे इति वाच्यम्, अतिदेशेनाऽकारे सत्यपि श्रवणाऽभावेन तस्य लौकिकसत्ताविरहात्, छिन्नपुच्छश्वदृष्टान्तमूलकेन 'प्राग्दीव्यतो'ऽणिति सूत्रेभाष्योक्तेनैकदेशविकृतन्यायेन 'कण्डू' इत्यस्य धातुत्वमित्यभिमानात् । तत्रेति । औजस्निमित्तक उवङ् प्राप्नोति, एकदेशविकृतन्यायेन 'कण्डू' इत्यस्य धातुत्वात् । न चैतन्निमित्ते उवङि अल्लोपस्य स्थानिवत्त्वम्, 'क्वौ लुप्त'मिति निषेधादिति भावः । भाष्ये—ह्रस्वस्य पितीति । ह्रस्वोच्चारणसामर्थ्याद्दीर्घाऽभावं मन्यते । तद्ध्वनयन्नाह ह्रस्वयलोपौ चेति । अन्तरङ्गत्वादिति । 'अकृतव्यूह'परि-

१—'प्रतिषेद्धव्यः' पा० । २ इदं क्वचिन्न । ३—'न ह्रस्व एवायमन्तरङ्गत्वात् अकृद्यकार इति दीर्घत्वं प्राप्नोति ।' पा० ।

* अकृत् सार्वधातुकयोर्दीर्घः ७ । ४ । २५

† लोपो व्योर्वलि ६ । १ । ६६

‡ वेरपृक्तस्य ६ । १ । ६७

× प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२

अथ क्रियमाणेऽपि वावचने यदा यगन्तात्क्विप्तदैते दोषाः कस्मान्न भवन्ति ? नैतेभ्यस्तदा क्विब्दृच्यते । किं कारणम् ? 'अन्येभ्योऽपि दृश्यते [ ३ । २ । १७८ ] इत्युच्यते न चैतेभ्यस्तदा क्विब्दृश्यते । यथैव तर्हि क्रियमाणे [ ऽपि ] वावचनेऽन्येभ्योऽपि दृश्यत इत्येवमत्र क्विब्न भवत्येवमक्रियमाणेऽपि [ वावचने ] न भविष्यति । अवश्यमेतेभ्यस्तदा क्विबेषितव्यः । किं प्रयोजनम् ? एतानि रूपाणि यथा स्युरिति ।

तत्तर्हि वावचनं कर्तव्यम् ? न कर्तव्यम् । उभयं कण्ड्वादीनि, धातवश्चैव प्रातिपदिकानि च । आतश्चोभयं, कण्डूयतीति [ हि ] क्रियां कुर्वाणे प्रयुज्यते, 'अस्ति

प्र०—वल्रूपाश्रयो व्योर्लोपो न तु प्रत्ययाश्रयः । वावचने तु सति पक्षे यगनुत्पादाद्यथेष्टसिद्धिः । नैतेभ्य इति । कर्तरि क्विपो विधानात् । कण्डूरिति च कर्त्रर्थानवगमादिति भावः । अवश्यमिति । संपदादित्वाद्भावे कर्तव्य इति भावः । वेदनामात्रस्येति । वेदना च सत्त्वरूपा प्रतीयते न च साध्यरूपेति भावः । तत्र धात्वधिकाराद्धातुभ्य एव स्वार्थे यग्भवति, प्रातिपदिकेभ्यस्तु स्वाद्युत्पत्तौ सत्यां 'कण्डू'रित्यादिरूपसिद्धिः ।

कस्य चेति । धातुविधानप्रतिबद्धार्धधातुकसंज्ञाश्रयगुणनिषेधार्थातककारासञ्जनादपि धातुः—कण्ड्वादिर्यकमुत्पादयतीति ज्ञायत इत्यर्थः । आह चेति । दीर्घान्तपाठाच्च पाक्षिकं धातुत्वमेषां निश्चीयते । नित्ये हि धातुत्वे नित्ये च यकि सति अकृद्यकार इति दीर्घस्य सिद्धत्वा-

उ०—भाषा तु नास्त्येवेति भावः । वेरपृक्तलोपादिति । इदं क्वाऽस्तीति चिन्त्यम् । 'लोपो व्यो'रिति सूत्रे 'क्वावुपसङ्ख्यान'मिति वार्तिकम् । कर्त्रर्थाऽनवगमादिति । यत्र तु कर्त्रर्थावगमस्तत्र भवत्येव, यथा भिषज्यतेः क्विपि भिषक्शब्दे इत्याहुः । केचित्त्विदम्भाष्यमजन्तपरमेवेत्याहुः । सम्पदादित्वादिति । तेन वेदनामात्रप्रतिपादनेऽपि कण्डूरित्यादि सिद्धमिति भावः ।

भाष्ये—एतानीति । कण्डूरित्यादीनि दीर्घान्तप्रथमैकवचनान्तानीत्यर्थः । एवमपि कण्ड्वावित्याद्यर्थं वावचनं कर्त्तव्यमेवेत्याह—तत्तर्हीति । भाष्ये—उभयं कण्ड्वादीनीति । उभयेत्यर्थे 'उभय'मित्यव्ययम् । द्विप्रकाराणीत्यर्थः । उभयाऽङ्गीकारे प्रमाणमाह—आतश्चेति । ननु भावक्विबन्तेन वेदनामात्रे कण्डूरित्यादिसिद्धिरत आह—सत्त्वरूपेति । सैवेत्यर्थः । भावक्विबन्ते हि प्रकृत्या साध्यरूपेणापि प्रतीतिः स्यादिति भावः । एतच्चैतेभ्यो भावे क्विनास्त्येवेति तत्त्वम् । स्वार्थे इति । 'नित्यमिति शेषः । वाग्रहणाऽननुवृत्तेः । तेन पक्षे कण्डवतीत्यादि न ।

आर्द्धधातुकसंज्ञेति । न च साऽपि माऽस्तु, कोऽपि मास्त्विति वाच्यम्, सुख्यतीत्यादावतोलोपार्थं तस्या आवश्यकत्वात् । दीर्घपाठ इति । 'वल्गु मन्तु'प्रभृतीनां ह्रस्वपाठः प्रातिपदिकविषये चरितार्थं इति तेषामपि दीर्घो भवति । यत्तु केषाञ्चिद्दीर्घपाठेन वल्गुप्रभृतीनां दीर्घाऽभावो ज्ञाप्यते, तन्न, भाष्यविरोधात्, शास्त्रबाधकल्पनाऽपेक्षया प्रातिपदिकत्वकल्पनस्यैव लघुत्वाच्च । एतेन ककारेणार्द्धधातुकत्वमेव कल्प्यतामित्य-

१—क्वचिन्न ।

मे कण्डू'रिति वेदनामात्रस्य सांनिध्ये ॥ अपर आह—

'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः' ॥ इति ॥२७॥

## कर्मणिङ् ॥ ३ । १ । ३० ॥

किमर्थोऽयं णकारः । वृद्ध्यर्थः । 'ञ्णिती'ति* वृद्धिर्यथा स्यात् । क्रियमाणेऽपि वै णकारे वृद्धिर्न प्राप्नोति । किं कारणम् ? 'क्ङिति च' [ १ । १ । ५ ] इति प्रतिषेधात् । णित्करणसामर्थ्याद्भविष्यति ॥ अत उत्तरं पठति—

**णिङि णित्करणस्य सावकाशत्वाद्वृद्धिप्रतिषेधप्रसङ्गः ॥ १ ॥**

णिङि णित्करणं सावकाशम् । कोऽवकाशः ? सामान्यग्रहणार्थो णकारः । क्व सामान्यग्रहणार्थेन णकारेणार्थः ? 'णेरनिटि' [ ६ । ४ । ५१ ] इति । णिङि णित्करणस्य सावकाशत्वाद्वृद्धेः प्रतिषेधः प्राप्नोति ।

ङित्करणमपि तर्हि सावकाशम् । कोऽवकाशः ? सामान्यग्रहणाऽविघाताऽर्थो ङकारः । क्व सामान्यग्रहणाऽविघाताऽर्थेनाऽर्थः ? अत्रैव† । शक्योऽत्र सामान्यग्रहणाऽविघातार्थोऽन्योऽनुबन्ध आसङ्क्तुम् । तत्र ङकारानुरोधाद्वृद्धिप्रतिषेधः प्राप्नोति । अवश्यमत्रात्मनेपदार्थो ङकारोऽनुबन्ध आसङ्क्तव्यो ङित इत्यात्मनेपदं यथा स्यात्‡ । एवमप्युभयोः सावकाशयोः प्रतिषेधबलीयस्त्वात्प्रतिषेधः प्राप्नोति ।

प्र०—दीर्घपाठोऽनर्थकः स्यादित्यर्थः ॥ २७ ॥

कमेर्णिङ् । प्रतिषेधबलीयस्त्वादिति । प्रतिषेधस्य विध्यपवादत्वाद्बाधकत्वाद्बलीयस्त्वम् । णिङन्तस्येति । कामयमानं प्रयुङ्क्त इति णिच् । णिङ्येवेति । णिज्निमित्ता या

उ०—पास्तं, धातुत्वकल्पनस्यैव लघुत्वात् ॥ २७ ॥

कमेर्णिङ् । भाष्ये—ङित्करणमपि सावकाशमिति । एवञ्च परत्वाद्वृद्धिः प्राप्नोतीति भावः । यदयमिति । मित्त्वनिषेधो ह्रस्वाऽभावफलकः वृद्ध्यभावे स्वत एव ह्रस्वसत्त्वाद्व्यर्थः सन् वृद्धेः सत्तां ज्ञापयतीत्यर्थः । ननु णिङ्येवेत्ययुक्तं, प्रतिषेधप्रवृत्तौ ह्रस्वस्यैव भावादत आह—णिज्निमित्तेति । तां त्वसौ मन्यते । ह्रस्वे इति । वृद्धेरसिद्धत्वे ह्रस्वस्य ह्रस्वे प्रयोजनाऽभावात्तस्याऽप्रवृत्तौ ज्ञापकत्वमेव स्थितमिति

* अत उपधायाः ३ । १ । ११६
† णेरनिटि ६ । ४ । ५१
१—'णकारेण' इति क्वचिन्न ।
‡ अनुदात्तङित आत्मनेपदम् १ । ३ । १२

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'न कमेर्वृद्धिप्रतिषेधो भवती'ति यदयं 'न कम्यमिचमा'मिति × मित्संज्ञायाः प्रतिषेधं शास्ति ।

**मित्प्रतिषेधस्य चाऽर्थवत्त्वात् ॥ २ ॥**

मित्प्रतिषेधस्य चार्थवत्त्वाद्वृद्धिप्रतिषेधः प्राप्नोति । अर्थवान् मित्प्रतिषेधः । कोऽर्थः ? णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं+ मा भूदिति । नन्वेतस्या अपि 'क्ङिति चे'ति प्रतिषेधेन भवितव्यम् । न भवितव्यम् । उक्तमेतत्—'क्ङिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोरवीत्यर्थ'मिति* ।

एवं तर्हि न णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं प्राप्नोति । किं कारणम् ? 'णिङा व्यवहितत्वात्' । लोपे कृते† नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव ॥ णिङ्येव तर्हि मा भूदिति । णिङि च न प्राप्नोति । किं कारणम् ? 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति ॥ नैव वा पुनर्णिङन्तस्य णिचि वृद्धिः प्राप्नोति किं कारणम् ? णिङा व्यवहितत्वात् । लोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव ।

इदं तर्हि प्रयोजनं यत्त'च्चिण्णमुलोर्दीर्घोऽन्यतरस्याम् [ ६ । ४ । ९३ ] इति दीर्घत्वं [ शास्ति ] तत्कमेर्णिङि मा भूदिति । किं पुनः कारणं तत्र दीर्घोऽन्यतरस्यामित्युच्यते न ह्रस्वोऽन्यतरस्यामित्येवोच्येत ? यथाप्राप्तं चापि कमेर्ह्रस्वत्वमेव । तत्रायमप्यर्थो ह्रस्वग्रहणं न कर्तव्यं भवति, प्रकृतमनुवर्तते । क्व प्रकृतम् ?

प्र०—वृद्धिस्तस्या णिङ्नमित्तं ह्रस्वत्वं मा भूदित्येवमर्थो मित्प्रतिषेधः स्यादित्यज्ञापको णिङ्वृद्धेरित्यर्थः । णिङि चेति । 'ह्रस्वत्व'मिति शेषः । असिद्धमिति । ह्रस्वे कर्तव्ये बहिरङ्गा वृद्धिरसिद्धेत्यर्थः । स्थानिवद्भावादिति । 'किलुगुपधात्वे'त्युपधाविधौ स्थानिवत्त्वनिषेधः प्रत्ययविधावेवेति तत्रैवोक्तम् । तथा च 'पटयती'त्यत्र वृद्धौ कर्तव्यायां निषेधो न भवति । किं पुनरिति ।

उ०—भावः । ननु पर्जन्यवल्लक्षणप्रवृत्ते र्ह्रस्वदृष्टावपि प्राप्तह्रस्ववारणेन दीर्घश्रवणाय मित्त्वनिषेधः सार्थक इत्यरुचेराह भाष्ये—नैव वेति । प्रत्ययविधावेवेति । 'पारिखीय'इत्यादौ । भाष्ये 'इदन्तर्हि प्रयोजनं यत्तच्चिण्णमुलो'रिति । 'मित्संज्ञाप्रतिषेधस्ये'ति शेषः । 'च्चिण्णमुलो'रित्यत्र ह्रस्वघटितन्यासे दोषमाह भाष्ये-णिज्व्यवहितेष्विति । पाक्षिकेति । वृद्धेर्वैकल्पिकत्वार्थं 'वृद्धिर्वे'त्युपसङ्ख्यानं कर्त्तव्यमित्यर्थः । दीर्घविधाने तु कृतह्रस्वस्य दीर्घविधानात्सिध्यतीति भावः । भाष्ये—दीर्घविधिम्प्रतीति । 'न पदान्त'सूत्रे जशादिसाहचर्येण त्रैपादिक-

× 'न कम्यमिचमाम्' इति धातुपाठे भ्वादिगणे गणसूत्रम् । + मितां ह्रस्वः ६ । ४ । ९२
* १ । १ । ५ वा० १—२ † णेरनिटि ६ । ४ । ५१ १—क्वचिन्न ।

'मितां ह्रस्वः' [ ६ । ४ । ९२ ] इति । का रूपसिद्धिः । अशमि अशामि, शमं शमम्, शामं शामम् । वृद्धया सिद्धम् । न सिध्यति । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' [ ७ । ३ । ३४ ] इति वृद्धिप्रतिषेधः प्राप्नोति । [ नैष दोषः । ] चिण्कृतोः स वृद्धिप्रतिषेधो, न णिचि ।

इदं तर्हि—अजनि अजानि, जनं जनम्, जानं जानम् । 'जनिवध्योश्च' [ ७ । ३ । ३५ ] इति वृद्धिप्रतिषेधः प्राप्नोति । सोपि चिण्कृतोरेव [ न णिचि[1] ]।

णिज्व्यवहितेषु तर्हि यङ्लोपे चोपसङ्ख्यानं कर्तव्यं स्यात् । शमयन्तं प्रयोजितवान्—अशमि अशामि शमं शमम् शामं शामम् । शंशमयतेः—अशंशमि अशंशामि, शंशमं—शंशमम्, शंशामं—शंशामम् । किं पुनः कारणं न सिध्यति ? 'चिण्णमुल्परे णौ मितामङ्गानां ह्रस्वो भवती'त्युच्यते, यश्चात्र णिश्चिण्णमुल्परो, न तस्मिन्मिदङ्गं, यस्मिंश्च मिदङ्गं नाऽसौ णिश्चिण्णमुल्परः । णिलोपे तर्हि कृते चिण्णमुल्परः । स्थानिवद्भावान्न चिण्णमुल्परः ।

अथ 'दीर्घोन्यतरस्या'मित्युच्यमाने यावता स्थानिवद्भावः कथमेवैतत्सिध्यति ? एतदिदानीं दीर्घग्रहणस्य प्रयोजनं—'दीर्घविधिं प्रत्यजादेशो न स्थानिव'दिति‡ स्थानिवद्भावप्रतिषेधः सिद्धो भवति ।

यदा खल्वप्यायादय आर्धधातुके वा भवन्ति* तदा णिचि णिङ्नास्ति

प्र०—कर्मणिङि वृद्धिप्रतिषेधान्नित्यं ह्रस्वत्वमेव स्थितमिति मित्प्रतिषेधो न कर्तव्यो भवति, क्रियमाणस्तु णिङि वृद्धेर्ज्ञापक एवेति भावः । उपसङ्ख्यानं कर्तव्यं स्यादिति । पाक्षिकवृद्धिप्राप्त्यर्थमित्यर्थः । एतदिदानीमिति । ततश्च पाक्षिकदीर्घनिवृत्त्यर्थो मित्प्रतिषेधो न ज्ञापकः । यदेति ।

उ०—दीर्घस्यैव ग्रहणेन 'पूर्वत्राऽसिद्धे न स्थानिव'दित्याश्रित्य भगवता 'न पदान्त'सूत्रे तेषां प्रत्याख्यानेन च स्थानिवत्त्वनिषेधाऽप्रसक्तेरिदम्भाष्यमेकदेश्युक्तिरिति नार्थसाधकम् । णिजन्ताण्णिचि उपसङ्ख्यानेन सिद्धेः । 'शंशमम शंशाम'मित्याद्यपि यङ्लुगन्ताण्णमुलि सिद्धम् । 'न च 'चिण्णमुलो'रित्यत्र दीर्घविधानसामर्थ्यादत्रैपादिकेऽपि निषेध इति वाच्यम्, 'हेड'धातोरहिडि अहीडि—इति साधनेन चारितार्थ्यात् । ह्रस्वविधाने हि 'अहेडी'ति स्यादिति बोध्यम । केचित्त्वेतद्भाष्यप्रामाण्यात्तत्रत्यवार्त्तिके 'वरेयलोपस्वरवर्ज'मित्यत्र दीर्घोऽप्युपलक्षणीयः । एतदिदानीं दीर्घग्रहणस्य प्रयोजनमिति, अत्रत्यभाष्यस्वारस्याद्धेडधातोर्घटादिष्वप्रामाणिकः पाठः । 'ऊकाल'सूत्रस्थभाष्यप्रामाण्याच्च 'वा दान्ते'तिसूत्रस्थभाष्यप्रामाण्याच्च चिण्णमुलोरिति सूत्रस्थभाष्याच्चेति यथाश्रुतभाष्यं रमणीयमेवेत्याहुः । 'अस्माच्प्रतिषेधः प्राप्नोती'त्यस्य 'तन्निषेधो वक्तव्य' इति शेषः।

---

१ इदं क्वचिन्न । ‡ 'स्थानिवद्भतीति' पा० । 'न पदान्त'० १ । १ । ५८

* आयादय आर्धधातुके वा ३ । १ । ३१

तदर्थं च मित्प्रतिषेधः स्यात् ॥ तस्मात्प्रतिषेधः प्राप्नोति ।

उक्तं वा ॥ ३ ॥

किमुक्तम् ? 'तद्धितकाम्योरिक्प्रकरणा'दिति† ॥ ३० ॥

## आयादय आर्द्धधातुके वा ॥ ३ । १ । ३१ ॥

कथमिदं विज्ञायते—'आयादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनां निवृत्तिर्भवतीति, आहोस्विदायादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवती'ति । किं गतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ? गतमित्याह । कथम् ? यदा तावदायादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनां निवृत्तिर्भवतीति तदाऽविशेषेण सर्वमायादिप्रकरणमनुक्रम्य 'आयादय आर्द्धधातुके वे'त्युच्यते । यदाऽप्यायादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवतीति, तदैकं वाक्यं तच्चेदं च । गुपूधूपविच्छिपणिपनिभ्य आयः [ ३ । १ । २८ ] 'आर्द्धधातुके वा' । ऋतेरीयङ् [ २९ ] 'आर्द्धधातुके वा' । कमेर्णिङ् [ ३० ] 'आर्द्धधातुके वे'ति ॥ कश्चात्र विशेषः ?

प्र०—अणिङन्तात्कमेर्यदा णिच्क्रियते तदा तत्र ह्रस्वनिवृत्त्यर्थो मित्प्रतिषेधः स्यादित्यर्थः ॥३०॥

आयादयः । आर्द्धधातुक इति परसप्तमीमाश्रित्य पक्षद्वयविचारः । द्वयोरपि च पक्षयोर्दोष इति मत्वा प्रश्नः—कथमिति । आहोस्विदन्यतरस्मिन्निति । निवृत्तिशब्द उत्पत्तिशब्दो वा निर्देष्टव्य इति मन्यते । यदा तावदिति । एतद्वाक्यनिरपेक्षैरायादिविधानवाक्यैः परनिमित्तानपेक्षा

उ०—अत एव 'उक्तं वे'ति 'वा'शब्दः सङ्गच्छते ॥ ३० ॥

आयादय । विषयसप्तम्यां विचाराऽनारम्भादाह—परेति । आयान्तादिभ्य आर्द्धधातुके सिद्धेऽस्य विध्यभावान्निवृत्तिर्विधेया । तदर्थं तदुपादानं कार्यमित्याह—निवृत्तीति । उत्पत्तिशब्दो वेति । अस्य प्रयोजनं चिन्त्यम् । सर्वत्र विधिवाक्ये तदभावेऽप्युत्पत्त्यवगतेः । एकतरपक्षेऽधिककर्त्तव्यतायामेव भाष्यतात्पर्याच्च । क्वचिदनुत्पत्तिशब्दो वेति पाठः । आयाद्यनुवृत्त्यैव सिद्धे 'आयादय' इति पञ्चम्या विपरिणम्यते । आयादिभ्यो यदार्द्धधातुकं तत्र परे गुपादिभ्य आयाद्यनुत्पत्तिरित्यर्थः । परन्तु इदं गुर्विति दिक् । पक्षे निवृत्तेरिति । निवृत्तिपदं विनापि सामर्थ्यादिति भावः । क्वचिदिति । 'अदिप्रभृतिभ्य' इत्यादौ । क्वचिदिति । यथा दीर्घविषये यणः । सूत्रत्रयस्येति । 'आयादय' इति पदोपादानसामर्थ्यादित्यर्थः । अन्यथाऽव्यवहितत्वात् 'कमेर्णि'ङित्यस्यैव शेषः स्यात् । पृथक्पाठादिति । तत्सामर्थ्याद्भिन्नवाक्यतया एकवाक्यतया च वाक्यार्थ

† १ । १ । ५ वा० ४ अतोऽग्रे 'इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः न चैषा इग्लक्षणा वृद्धि'-रित्यधिकं पठ्यते क्वचित् ।

## आयादिभ्यो यदार्द्धधातुकमायादिप्रकृतेर्यदार्द्धधातुकमिति चोभयथाऽनिष्टप्रसङ्गः ॥ १ ॥

आयादिभ्यो यदार्द्धधातुकमायादिप्रकृतेर्यदार्द्धधातुकमिति चोभयथाऽनिष्टं प्राप्नोति ॥ यदि विज्ञायते–'आयादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनां निवृत्तिर्भवती'ति, गुप्तिः जुगोपेति चेष्टं न सिध्यति, इदं चाऽनिष्टं प्राप्नोति–गोपाञ्चकार गोपेति च‡ । इदं तावदिष्टं सिद्धं भवति गोपायांचकार गोपायेति ।

अथ विज्ञायते—'आयादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवती'ति । गुप्तिर्जुगोपेति चेष्टं सिद्धं भवति । इदं चाऽनिष्टं न प्राप्नोति गोपांचकार गोपेति । इदं त्विष्टं न सिध्यति गोपायांचकार गोपायेति ।

इदं तावदिष्टं सिध्यति—गोपायांचकारेति । कथम् ? अस्त्वत्रायादिप्रकृतेर्यदार्द्धधातुकं लिट्, तस्मिन्नवस्थिते वाऽऽयादयः, आम्मध्ये पतिष्यति यथा विकरणास्तद्वत् ॥ इदं तर्हीष्टं न सिध्यति गोपायेति ।

प्र०—आयादयो यदा विधीयन्ते तदाऽनेनार्द्धधातुके तेषां पक्षे निवृत्तिः क्रियते । यद्यपि नित्याः शब्दास्तथापि शास्त्रप्रक्रियायां क्वचिदुत्पन्नस्य लोपादिद्वारेण निवृत्तिः क्रियते । क्वचिदपवादविधानेनोत्सर्गस्याऽनुत्पत्तिर्ज्ञाप्यते । ततो निवृत्तिपक्षो नाऽऽनुपपन्नः । यदेति । यदा सूत्रत्रयस्याऽयं योगः शेषस्तदैकवाक्यतायां सत्यामार्द्धधातुके परत आयादयो विकल्पेनोत्पद्यन्त इति पक्षः । यदि तर्ह्येकवाक्यता ततः सार्वधातुक आयादयो नोत्पद्येरन् । नैष दोषः । 'गुपधूपे'त्यत्रैवार्द्धधातुके वेति वक्तव्ये पृथक्पाठात्सार्वधातुकेऽप्यायादयो भवन्तीति ज्ञायते । आर्द्धधातुक एव त्वेकवाक्यतया विकल्पेन विधीयन्ते ।

उ०—इति भावः । एकं वाक्यमिति–भाष्यस्य–एकं वाक्यमपीत्यर्थः । अकारेण–'अ प्रत्यया'दिति विहितेन । क्तिनो बाधादिति । स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधेरभावादिति भावः । आमि परत इति । यद्यपि लिट्येवार्द्धधातुके आयादिनिवृत्तिस्तथापि प्रत्ययलक्षणेन प्रत्ययान्तत्वादाम्प्राप्नोति । वस्तुतः परत्वादामि कृते एवैतत्प्रवृत्तिरिति बोध्यम् । तद्भावितेति । अत एव लुकि लोपसंज्ञासिद्धिः । भाष्ये गुप्तिर्जुगोपेति चेष्टं सिद्धमिति । आयस्य वैकल्पिकत्वात्तदभावे सिध्यतीत्यर्थः । इदन्तर्हीष्टमिति । इदमुपलक्षणं, क्तिनि कृते आयप्रत्यये 'गोपायती'त्यनिष्टमपि प्राप्नोतीत्यपि बोध्यम् । अल्लोपस्तु न, आर्द्धधातुकोपदेशे तदभावात् । सार्वधातुके नित्यमिति । अत्र नित्यग्रहणमाधिकार्थकथनं, सामान्यसूत्रे 'वे'त्येवाऽस्य नित्यत्वसिद्धेः । स्यादिभिरिति । लादेशप्रवृत्त्युत्तरं 'स्यतासी' इति पदे इदम् । तुल्यं हि निमित्तमिति । अनेनाऽन्तरङ्गत्वं निरस्यति ।

‡ कास्प्रत्ययादाममन्त्रे लिटि ३ । १ । ३५; अ प्रत्ययात् ३ । ३ । १०२

**सिद्धं तु सार्वधातुके नित्यवचनादनाश्रित्य वाविधानम् ॥ २ ॥**

सिद्धमेतत् । कथम् ? अविशेषणाऽऽयादीनां वाविधिमुक्त्वा 'सार्वधातुके नित्य'मिति वक्ष्यामि ।

**स्यादिबलीयस्त्वं तु विप्रतिषेधेन तुल्यनिमित्तत्वात् ॥ ३ ॥**

स्यादिभिस्त्वायादीनां बाधनं प्राप्नोति विप्रतिषेधेन । किं कारणम् ? 'तुल्यनिमित्तत्वात्' । तुल्यं हि निमित्तं स्यादीनामायादीनां च । स्यादीनामवकाशः—करिष्यति हरिष्यति । आयादीनामवकाशः—गोपायति धूपायति । इहोभयं प्राप्नोति—गोपायिष्यति धूपायिष्यतीति । परत्वात्स्यादयः प्राप्नुवन्ति* ।

**न वाऽऽयादिविधानस्यानवकाशत्वात् ॥ ४ ॥**

न वैष दोषः । किं कारणम् ? 'आयादिविधानस्याऽनवकाशत्वात्' । अनवकाशा आयादयः, उच्यन्ते च ते वचनाद्भविष्यन्ति । ननु चेदानीमेवाऽवकाशः प्रकॢप्तः—गोपायति धूपायतीति ? अत्रापि शप्स्यादिर्भवति† । यद्यप्यत्रापि शप्स्यादिर्भवति न त्वत्रास्ति विशेषः सति वा शप्यसति वा । अन्यदिदानीमेतद्यदुच्यते 'नास्ति विशेष' इति, यत्तु तदुक्तम् 'आयादीनां स्यादिभिरव्याप्तोऽवकाश' इति, स नाऽस्त्यवकाशः । अवश्यं खल्वप्यत्र 'शप्स्यादिरेषितव्यः । किं प्रयोजनम् ? गोपायन्ती धूपायन्तीति, 'शप्श्यनोर्नित्यम्' [ ७ । १ । ८१ ] इति [ नित्यो[1] ] नुम्यथा स्यादिति ।

प्र०—गुप्तिरिति । 'गोपाय'शब्दस्य प्रत्ययान्तत्वादकारेण क्तिनो बाधनाद्गुप्तिर्न सिध्यति । आमि परत आयस्य पाक्षिक्यां निवृत्तौ जुगोपेति न सिध्यति । दोषोपलक्षणं चैतत्, 'गुप्त'इत्यपि न सिध्यति, क्तप्रत्यये परत आयस्य निवृत्तौ सत्यां प्रत्ययलक्षणेन गुणप्रसङ्गात् । न च प्रत्ययलोपसूत्रे लोपसंज्ञासूत्रे वा तद्भावितग्रहणमाश्रितम् । गोपायतीति । विशेषाऽभावादत्र शपोऽनुत्पत्ति-

उ०—परत्वात्स्यादय इति । तथा च 'सकृद्गति'न्यायेनाऽऽयो न स्यादेवेति भावः । न च 'सार्वधातुके नित्य'मित्यस्य परत्वाद्बाधेऽपि सामान्यसूत्रेण वैकल्पिक आयो भविष्यति, न हि तेनाऽपि विप्रतिषेधः, तस्याऽनैमित्तिकत्वेनान्तरङ्गत्वादिति वाच्यम्, अपवादविषये उत्सर्गाऽप्रवृत्त्या सार्वधातुकविषये तदप्रवृत्तेः । न त्वत्रास्तीति । विशेषकृच्छास्त्रं तदभावे न प्रवर्त्तते इति मन्यते । स नाऽस्त्यवकाश इति । पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः । विशेषोऽप्यस्तीत्याह—कामयत इति । 'गोपायन्ती'त्यत्रापि विशेषं भाष्ये दर्शयति—

* स्यतासी लृलुटोः ३ । १ । ३३ † कर्तरि शप् ३ । १ । ६८ १—क्वचिन्न ।

यदि तर्ह्यनवकाशा आयादयः, आयादिभिः स्यादीनां बाधनं प्राप्नोति । यथा पुनरयं सूत्रभेदेन परिहारो यदि पुनः 'शपि नित्य'मित्युच्येत । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवाऽस्तु । ननु चोक्त'मायादिभ्यो यदार्द्धधातुकमायादिप्रकृतेर्यदार्द्धधातुकमिति चोभयथाऽनिष्टप्रसङ्ग' इति । नैष दोषः । आर्द्धधातुक इति नैषा परसप्तमी । का तर्हि ? विषयसप्तमी । आर्द्धधातुकविषय इति । तत्रार्द्धधातुकविषय-आयादिप्रकृतेरायादिषु कृतेषु यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ॥ ३१ ॥

## सनाद्यन्ता धातवः ॥ ३ । १ । ३२ ॥

अन्तग्रहणं किमर्थं न 'सनादयो धातव' इत्येवोच्येत ? केनेदानीं तदन्तानां भविष्यति ? तदन्तविधिना‡ ॥ अत उत्तरं पठति—

### सनादिष्वन्तग्रहण उक्तम् ॥ १ ॥

किमुक्तम् ? पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधि-प्रतिषेधार्थ'मिति × । इदं चाऽपि प्रत्ययग्रहणमयं चाऽपि संज्ञाविधिः ।

प्र०—रित्यायादीनामवकाशं मन्यते । अन्यदिदानीमिति । विशेषाऽभावेऽपि लक्षणवशात् प्रवर्त्स्यं शपेति भावः । 'कामयते'इत्यत्र तु विशेषोऽस्त्येव, शपमन्तरेणाऽस्य रूपस्याऽभावात् । यथा पुनरिति । वार्तिककारेण तु 'सिद्धं सार्वधातुके नित्यवचना'दिति ब्रुवता सूत्रभेदेन परिहार उक्तः । अवश्यकर्तव्ये च सूत्रभेदे 'शपि नित्य'मिति न्यासः कर्तव्यो येन दोषो न भवतीत्यर्थः । ननु तौदादिकत्वाद्विच्छेः शेन भाव्यं न तु शपा । एवं तर्हि न्यासभेदोपलक्षणार्थमिदमिति, शिति नित्यमिति तु न्यासः कर्तव्यः ॥ ३१ ॥

सनाद्यन्ताः । भूवादय इत्येवेति । भुवो वादयो भूवादय इत्यर्थाश्रयणादिति भावः । ततश्च क्रियावाचित्वात्सनाद्यन्तानां धातुसंज्ञा सिध्यतीत्यर्थः । पाठेनेति । 'आदि'शब्दस्य प्रत्येकं

उ०—अवश्यं खल्वपीति । यदि तर्हीति । एवञ्चाऽनवकाशत्वे तैः स्यादिबाधने 'गोपायिष्यती'त्याद्यसिद्धिरिति भावः । यथा पुनर्वार्तिककृता सूत्रभेदेन परिहार उक्तस्तथा सूत्रभेदमङ्गीकृत्य यदि पुनः 'शपि नित्य'मित्युच्यते तदा सर्वदोषपरिहार इति भाष्याक्षरार्थः । क्वचिद्भाष्ये एव 'शिती'ति पाठः । विषयसप्तमीति । 'आर्द्ध-धातुक' इति सूत्रभाष्योक्तरीत्या जातिनिर्देश इति भावः । सूत्रे 'आयादय' इत्युक्तिरनन्तरस्यैव संबन्ध इति भ्रमवारणायेति तत्त्वम् ॥ ३१ ॥

सनाद्यन्ता । गणपाठनिबन्धना संज्ञा कथमेषामत आह—भुवो वादय इति । वदन्तीति वादयः । स्वार्थवाचकाः । क्रियावाचिन इति यावत् । यथा सूत्रादीनां क्रियावाचकत्वन्तयोक्तम् । तेनेति । पाठेन

‡ येन विधिस्तदन्तस्य १ । १ । ७२ × १ । ४ । १४ वा० १

किमर्थं पुनरिदमुच्यते, न'भूवादयो धातवः' [ १ । ३ । १ ] इत्येव सिद्धम् ? न सिध्यति । पाठेन धातुसंज्ञा क्रियते न चेमे तत्र पठ्यन्ते । कथं तर्ह्यन्येषामपठ्यमानानां धातुसंज्ञा भवति—अस्तेर्भूः; ब्रुवो वचिः; चक्षिङः ख्याञ् [ २ । ४ । ५२; ५३; ५४ ] इति । यद्यप्येते तत्र न पठ्यन्ते प्रकृतयस्त्वेषां तत्र पठ्यन्ते, तत्र स्थानिवद्भावात्सिद्धम् । इमेऽपि तर्हि यद्यपि तत्र न पठ्यन्ते येषां त्वर्थ आदिश्यन्ते ते तत्र पठ्यन्ते, तत्र स्थानिवद्भावात्सिद्धम् ।

न सिध्यति । 'आदेशः स्थानिवद्भवती'त्युच्यते* न चेम आदेशाः । इमेऽप्यादेशाः । कथम् ? आदिश्यते यः स आदेशः, इमे चाप्यादिश्यन्ते ।

एवमपि षष्ठीनिर्दिष्टस्यादेशाः स्थानिवद्भवन्तीत्युच्यते न चेमे षष्ठीनिर्दिष्टस्यादेशाः । षष्ठीग्रहणं निवर्तिष्यते† । यदि निवर्त्तते, अपवाद उत्सर्गकृतं प्राप्नोति ।

प्र०—संबन्धादर्थपाठाभ्यां धातुसंज्ञा विहिता, तेनाऽऽणवयत्यादयः समानशब्दाश्च सर्वनामादयो निर्वतिता भवन्तीति भावः । स्थानिवद्भावेन धातुसंज्ञासिद्धिं वक्ष्यामीति पृच्छति—कथं तर्हीति । ननु भूवचिख्यादिशब्दा धातुपाठे पठिता एव । नैतदस्ति । नहि ये धातुपाठे पठितास्त इहाऽतिदिश्यन्ते, शब्दान्तरत्वादादेशानाम् । जग्ध्यादीनां तु पाठशङ्कापि नास्ति । येषां त्वर्थं इति । इष्यादीनामित्यर्थः । न चेम इति । रूढिशब्दस्याऽऽदेशशब्दस्य तत्र ग्रहणाद्येषामेव स्थानिनिवृत्त्यादेशत्वं प्रसिद्धं तेषामेव तत्र ग्रहणमित्यर्थः । इमेऽपीति । क्रियानिमित्तकस्यादेशशब्दस्य तत्र ग्रहणमित्यर्थः । अत्र चोदयन्ति—यदि स्थानिवद्भावेन सनादीनां धातुसंज्ञा विधीयते, तदा तदन्तविध्यभावात् प्रत्ययानामेवाङ्गसंज्ञानिबन्धनान्यडादीनि प्राप्नुवन्ति, प्रत्ययान्तानां चेष्यन्ते । यङ्प्रत्ययश्च समभिहारविशिष्टक्रियावचनाद्धातोः स्वार्थे विधीयते, आयादयश्च शुद्ध एव स्वार्थे

उ०—आणवत्यादयः, अर्थेन—'या' इत्येवमादय इत्यर्थः । 'पाठेने'त्यादिः, 'न चैने तत्र पठ्यन्त' इत्यन्तैवाऽत्र भाष्यकारोक्तिः । धातुसंज्ञासिद्धिमिति । 'सनाद्यन्तेऽपी'ति शेषः । पृच्छतीत्यस्यैकदेशीति शेषः ।

शब्दान्तरत्वादिति । स्थानषष्ठीनिर्देशादपूर्वोपदेशाच्च । तस्यैवात्र ग्रहणे तदीयप्रयोगनियम एव स्यादिति भवतीत्याद्यसिद्धिरिति भावः । पठितसादृश्येन भवतीत्यादिस्थानामिव एषामपि तेनैव धातुत्वेऽप्याह—जग्ध्यादीनामिति । भाष्यमुपलक्षणमिति भावः । अनेनास्यैकदेश्युक्तित्वं ध्वनितम् । रूढीति । तस्या योगाद्बलवत्त्वादिति भावः । न चेमे इति भाष्ये । इमे—सनादय इत्यर्थः । तत्रेति । 'स्थानिव'दित्यत्रेत्यर्थः । स्थानिनिवृत्त्येति । स्थानषष्ठीनिर्देशादिति भावः । क्रियानिमित्तकस्येति । आदेशग्रहणसामर्थ्यादानुमानिकस्येव यौगिकस्यापि ग्रहणमित्याशयः । तदन्तविध्यभावादिति । स्थानिवत्सूत्रे विशेष्याऽसन्निधानात्तदभावे आदेशान्तस्यातिदेशेन धातुत्वाऽभाव इति भावः । यद्वा तिबादिविधौ तदभावादित्यर्थः । अत्रोच्यत

* स्थानिवदादेशोऽनल्विधौ १ । १ । ५६ † षष्ठी स्थानेयोगा; स्थानिवदादेशोऽनल्विधौ १ । १ । ४९; ५६

'कर्मण्यण्' [ ३ । २ । १ ] 'आतोनुपसर्गे कः' [ ३ ] इति केऽप्यणकृतं प्राप्नोति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'नापवाद उत्सर्गकृतं भवती'ति यदयं श्यन्नादीन् कांश्चिच्छितः करोति—श्यन्[1] श्नम् श्ना श्नुरिति ॥ ३२ ॥

## स्यतासी लृलुटोः ॥ ३ । १ । ३३ ॥

इमे विकरणाः पठ्यन्ते तत्र न ज्ञायते क उत्सर्गः कोऽपवाद इति । तत्र वक्तव्यमयमुत्सर्गोऽयमपवाद इति । इमे ब्रूमः—यगुत्सर्गः†, अपवादः शबादिः‡ स्यादयश्च ॥ यद्येवम्—

### अपवादविप्रतिषेधाच्छबादिबाधनम् ॥

अपवादविप्रतिषेधाच्छबादिभिः स्यादीनां बाधनं प्राप्नोति । शबादीनामवकाशः—पचति यजति । स्यादीनामवकाशः[3]—पक्ष्यते यक्ष्यते । इहोभयं प्राप्नोति—पक्ष्यति यक्ष्यति । परत्वाच्छबादयः प्राप्नुवन्ति ।

प्र०—विधीयन्ते इति तेषां स्थानिनः कस्य चिन्निवृत्त्यभावात् स्थानिवत्त्वाऽभावाद्धातुसंज्ञा न प्राप्नोति । अत्रोच्यते—कर्तुमिच्छतीति करणाङ्ग इष्यर्थे 'सर्वे सर्वपदादेशा' इति न्यायाद्वर्तमानस्य इषेः प्रसङ्गे चिकीर्षशब्दस्सनन्त आदिश्यत इति सिद्धं तदन्तस्य धातुत्वम् । एवं समभिहारविशिष्टलवनक्रियावाचि'लू'शब्दप्रयोगप्रसङ्गे 'लोलूय'शब्द आदिश्यते, गुपेः प्रसङ्गे 'गोपाय'शब्द इति भगवतो भाष्यकारस्याभिप्रायः ॥ ३२॥

स्यतासी । उत्सर्गापवादधर्मज्ञानाय पृच्छति—इमे इति । यगुत्सर्ग इति । भावकर्मग्रहणाऽननुवृत्त्या सार्वधातुकमात्रे विधानादिति भाव. । अपवादविप्रतिषेधादिति । यगपवादानामुभयेषां शबादीनां स्यादीनांच विप्रतिषेधे सति परत्वाच्छबादयः स्युरित्यर्थः । अपवाद इति ।

उ० - इति । 'धातोः कर्मण'इत्यादेः समानकर्तृकर्मभूतधात्वर्थविशिष्टेच्छायां प्रतिपाद्यायां तत्स्थानेऽर्थाभिधानयोग्यो यद्धात्वर्थकर्मकत्वमिच्छायां प्रतिपिपादयिषितं तद्धात्वादिः सनन्त आदेश इत्यादि क्रमेणार्थ इति भावः । तत्तद्गणप्रयुक्ता विकरणास्तु न, अदादित्वादेरनतिदेशात् । करणाङ्गे इष्यर्थे कर्तुमि ( च्छ )त्येतत्समभिव्याहारेण वर्त्तमानस्येषेः प्रसङ्गे 'सर्वे सर्वपदादेशा' इति न्यायात्सनन्त आदिश्यत इत्यन्वयः । भगवतो भाष्यकारस्येति । 'एकदेशिन' इति शेषः । अनेन इमेऽपि तर्हि यचपीत्यादिभाष्यग्रन्थ एकदेशिनोरुक्तिप्रत्युक्तिपरतया प्रौढिवाद एवेति ध्वनितम् ॥ ३२ ॥

स्यतासी लृलुटोः । उत्सर्गापवादधर्मेति । स चाऽपवादविषयेऽवश्यं प्राप्तिरूप उत्सर्गस्य धर्मः । तदप्राप्तियोग्यविषयाऽभावेन निरवकाशस्वरूपोऽपवादस्य ।

१—'श्यन्' क्वचिन्न । † सार्वधातुके यक् ३ । १ । ६७ ‡ कर्तरि शप् ३ । १ । ६८ 'अपवादाः शबादयः स्यादयश्चे'ति पा० । २—भाष्यमित्यन्ये ।
३—'स्याद्यवकाशः पक्ष्यते' इति भाष्यपाठो नागेशसम्मतः । ११० पृष्ठे द्रष्टव्यः ।

अपवादो नामानेकलक्षणप्रसङ्गः ॥

अपवादो नाम स भवति यत्राऽनेकलक्षणप्रसङ्गः । अत्र च भावकर्मणोर्यग्विधीयते कर्तरि शप्, कः प्रसङ्गो यद्भावकर्मणोर्यक् कर्तरि शबादयो बाधेरन् ।

एवं तर्हि—यक्शपावुत्सर्गावपवादाः श्यनादयः× स्यादयश्च ॥ [एवमपि—]

अपवादविप्रतिषेधाच्छ्यनादिबाधनम् ॥

अपवादविप्रतिषेधाच्छ्यनादिभिः स्यादीनां बाधनं प्राप्नोति । श्यनादीनामवकाशः—दीव्यति सीव्यति । स्यादीनामवकाशः—पक्ष्यति यक्ष्यति । इहोभयं प्राप्नोति-देविष्यति सेविष्यति । परत्वाच्छ्यनादयः प्राप्नुवन्ति ।

नैष दोषः । शबादेशाः श्यनादयः करिष्यन्ते, शप्च स्यादिभिर्बाध्यते, तत्र दिवादिभ्यः स्यादिविषये शबेव नास्ति कुतः श्यनादयः । तत्तर्हि शपो ग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'कर्तरि शप्' [ ३ । १ । ६८ ] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । [ नैष दोषः । ] 'दिवादिभ्य' इत्येषा पञ्चमी 'श'विति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' [ १ । १ । ६७ ] इति । प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ।

प्र०—यत्रोत्सर्गलक्षणस्याऽपवादलक्षणस्य च प्रसङ्गस्तत्रापवादव्यवहारः । यग्विधौ तु भावकर्मग्रहणानुवर्तनात्कर्तरि यकोऽप्रसङ्गान्नाऽस्ति तदपवादत्वमित्यर्थः । लावस्थायामिति । ननु च परत्वाल्लादेशैर्भाव्यम् । न च लादेशानामनित्यत्वम्, कृतेष्वपि स्यादिषु आतृतीयपरिसमाप्तेर्धात्वधिकारेऽपि धातोर्विहितस्य लस्येत्येवं विहितविशेषणाश्रयणाल्लादेशानां प्रसङ्गात् । एवं तर्हि कृतेष्वपि लादेशेषु स्यादयो भवन्तोऽन्तरङ्गा एव भवन्ति । नहि तद्विधौ शब्देन सार्वधातुकत्वमर्थविशेषो वा कर्त्रादिराश्रितः । श्यन्नादयस्तु तदाश्रयत्वाद्बहिरङ्गाः । अवश्यं चैतदभ्युपगन्तव्यं–'कृतेषु लादेशेषु

उ०—भावकर्मग्रहणाऽनुवृत्तौ उत्सर्गत्वाऽसम्भवादाह–भावेति । भाष्ये–स्याद्यवकाशः पक्ष्यते इति । कर्मादौ शपोऽप्राप्तेरिति भावः । यत्रेति । 'अनेकलक्षणप्रसङ्ग' इति बहुव्रीहिः । अपवादशब्दश्च तद्विषयपरः । अनवकाशोऽपवाद इति भावः । यग्विधौ त्विति । अन्यथा'ऽस्ति च सम्भवो यदुभयं स्या'दिति वार्तिकमते 'पचती'त्यादौ शपि कृते तमेव निमित्तीकृत्य यक्स्यादिति भावः । भाष्ये—अथवाऽनुवृत्तिरिति । एवञ्च तत्तत्सन्निधौ विधानसामर्थ्यान्नास्त्यपवादत्वमिति भावः । लावस्थायामिति भाष्यस्य—आदेशोत्पत्तेः प्रागेव स्यादय इत्यर्थः प्रतिभाति । तत्र शङ्कते—ननु चेति । अनित्यत्वमिति । व्यवधानेन धातोः परत्वाऽभावादप्राप्तेरिति भावः । अन्यथेति । इदञ्च ज्ञापकम्—'अनुदात्तम्पदमेकवर्ज'मित्यत्र भाष्ये स्पष्टम् ।

१ इदं भाष्यमित्यन्ये । २ इदं क्वचिन्न । ३—'तत्र' पा० ।
× दिवादिभ्यः श्यन् ३ । १ । ६९

नाऽयं प्रत्ययविधिः । विहितः प्रत्ययः, प्रकृतश्चानुवर्तते ।

अथवाऽनुवृत्तिः करिष्यते । 'सार्वधातुके यक्' [ ३ । १ । ६७ ] स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवति+ । 'कर्तरि शप्' [ ६८ ] स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवति । 'दिवादिभ्यः श्यन्' [ ६९ ] स्यतासी लृलुटोः च्लि लुङि च्लेः सिज्भवति ।

अथवाऽन्तरङ्गाः स्यादयः । काऽन्तरङ्गता ? लावस्थायामेव स्यादयः सार्वधातुके श्यनादयः ॥ ३३ ॥

## सिब्बहुलं लेटि ॥ ३ । १ । ३४ ॥

### सिबुत्सर्गश्छन्दसि ॥ १ ॥

प्र०—स्यादयः क्रियन्त' इति । अन्यथा तासेः परस्य लसार्वधातुकस्यानुदात्तत्वविधानेन विकरणस्य स्वरो लसार्वधातुकस्वरं बाधत इति—अस्यार्थस्य कथं ज्ञापकं स्यात् । यदि हि लावस्थायां तासिः क्रियेत पश्चात्सार्वधातुकं, तदा सति शिष्टत्वाल्लसार्वधातुकस्योदात्तत्वे प्राप्तेऽप्राप्तानुदात्तार्थं वचनमिति ज्ञापकत्वं नोपपद्येत । ये त्वाहुः—सङ्ख्याविधानवाक्येनात्मनेपदपरस्मैपदप्रकरणेन च लादेशविधानवाक्यस्यैकवाक्यतायां लादेशानां बहिरङ्गत्वाल्लावस्थायामेवान्तरङ्गत्वात् प्रतिपदविधानाच्च स्यादयो भवन्तीति तैस्तासेः परस्य लसार्वधातुकस्यानुदात्तविधानस्य पूर्वोक्तार्थज्ञापकत्वमसमर्थितं भवति ॥ ३३ ॥

सिब्बहुलम् । सिबुत्सर्ग इति । परनिमित्तमनुपादाय सनादिवर्गे धातोः सिब्विधेयः ।

उ०—लादेशोत्तरं स्यादिप्रवृत्तौ तु सति शिष्टस्यादिस्वरनिमित्तकवर्ज्यमानस्वरेण लसार्वधातुकानुदात्तत्वे सिद्धे-पुनर्विधीयमानं तज्ज्ञापकाय सम्पद्यत इति भावः । ये त्विति । एतन्मते 'अन्यत्र विकरणेभ्य' इत्यंशो वाचनिक इति बोध्यम् । प्रतिपदविधानाच्चेति चिन्त्यं, निरवकाशत्वाभावादिति कश्चित् । परे तु—'अनुदात्त'मिति सूत्रे भाष्ये सतिशिष्टस्वरबलीयस्त्वे 'सुनुत' इत्यादौ सार्वधातुकस्वरबाधः स्यादिति शङ्कायां वार्तिककारेणोक्तं 'स्यादिस्वराऽप्रसङ्गस्तासेः परस्यानुदात्तवचना'दिति । 'परत्वाल्लादेशा' इत्येव च तन्मतम् । अत्राप्यपवादविप्रतिषेधाच्छ्यनादिभिः स्यादिबाधनमिति वार्तिकोक्तपूर्वपक्षस्य तन्मताऽनुसारेण समाधानद्वयमुक्त्वाऽथवेति तृतीयं समाधानम्भगवतोक्तम् । तस्याऽयम्भावः—'आर्द्धधातुक' इत्यनुवृत्त्याऽऽर्द्ध धातुकत्वावस्थायां स्यादय इत्यन्तरङ्गा इति । विकरणस्वरस्य दुर्बलत्वन्त्वेतत्पक्षे वाचनिकमेव । कैयटोक्तमर्थापेक्षं सार्वधातुकादिसंज्ञापेक्षञ्च बहिरङ्गत्वं न युक्तं, तस्याऽत्र शास्त्रेऽनाश्रयणादित्युक्तम् । अत एवाऽत्र विप्रतिषेधो वार्तिककृतोक्तः सङ्गच्छते । न्याय्यमन्तरङ्गत्वमृषिभ्यां न ज्ञातमित्युक्तिरत्यन्याय्या, 'काऽन्तरङ्गता' 'लावस्थायां स्यादय' इति भाष्योक्तेर्गर्भस्रावाच्च । अल्पापेक्षत्वात्तिबादिभ्यः पूर्वं स्यादय इत्येव वक्तुमौचित्याच्चेत्याहुः ॥ ३३ ॥

+ ३ । १ । ४३; ४४

सिबुत्सर्गश्छन्दसि कर्त्तव्यः ।

**सनाद्यन्ते नेषत्वाद्यर्थः ॥ २ ॥**

सनाद्यन्ताधिकारे च कर्तव्यः * । किं प्रयोजनम् ? 'नेषत्वाद्यर्थः' इन्द्रो नस्तेन नेषतु । गा वो नेष्टादिति ।

**प्रकृत्यन्तरत्वात्सिद्धम् ॥ ३ ॥**

प्रकृत्यन्तरत्वात्सिद्धमेतत् । प्रकृत्यन्तरं नेषतिः† ।

**नेषतु नेष्टादिति दर्शनात् ॥ ४ ॥**

नेषतु नेष्टादिति‡ दृश्यते ।

अथ किमर्थः पकारः । स्वरार्थः । 'अनुदात्तौ सुप्पितौ' [ ३ । १ । ४ ] इत्येष स्वरो यथा स्यात् ।

**पित्करणानर्थक्यं चाऽनच्कत्वात् ॥ ५ ॥**

पित्करणं चानर्थकम् । किङ्कारणम् ? 'अनच्कत्वात्' । अनच्कोऽयं तत्र नाऽर्थः स्वरार्थेन पकारेणानुबन्धेन । इटि कृते साऽच्को भविष्यति ।

प्र०—तेन तदन्तस्य धातुसंज्ञायां सत्यां नेषत्वादीनि सिध्यन्ति । नीशब्दात्सिपि गुणे च कृते लोटि च नेषत्विति रूपम् । प्रकृत्यन्तरत्वादिति । जेषृणेषृएषृप्रेषृगताविति पाठान्नयत्यर्थं उत्सर्गो न कर्तव्यः । अवयासिसीष्ठा इत्याद्यर्थस्तु कर्तव्य एव । सवयमिति । सनादिमध्येऽत्रैव वेति भावः । यदवयासिसीष्ठा इति । यातेरवपूर्वात् सप् लिङ् थास् सुट् सीयुट् । सबन्तस्याङ्गस्यानेकाच्त्वा-

उ०—सिब्बहुलम् । उत्सर्गपदार्थमाह—परनिमित्तमनुपादायेति । एवं हि सामान्यविधित्वादुत्सर्गत्वं भवति । भाष्ये—सनाद्यन्ताधिकार इति । सनाद्यन्त इति येषामधिकारो बुद्धिस्थता तेषु कर्तव्य इत्यर्थः । सिध्यन्तीति । लोट्यपि सिप्सिद्धिरित्यर्थः । नेषत्विति प्रयोगे सिप्शपोः समावेशः सिध्यति । विकरणत्वे तु स न स्यादिति भावः । लोट्त्वाच्छन्दसि 'लेटोऽडाटा'वित्यस्याऽप्राप्तिरिति बोध्यम् । अत्रोत्सर्गः कर्तव्यः, स च सनाद्यन्ते कर्तव्य इति पूर्वपक्षद्वयम् । तत्रान्त्यः खण्डित एव, उत्सर्गता त्वावश्यकीत्याह—अवयेति । लिङि सिप्सिध्यर्थमुत्सर्गः कर्तव्य इत्यर्थः । भाष्ये—इति हीति । 'नेषतु'इत्यर्थं सनादिवर्गे करणे 'नेष्टा'-

१—'सनाद्यन्ते च कर्तव्यः' पा० ।  * सनाद्यन्ता धातवः ३ । १ । ३२

† त्रिधाऽत्र भाष्यपाठसङ्गतिः प्रतीयते पाठान्तरदर्शनात् । 'प्रकृत्यन्तरत्वात् सिद्धमेतत् । प्रकृत्यन्तरं नेषतिः ।' इत्येका विधा । 'प्रकृत्यन्तरत्वात् सिद्धमेतत् । कथम् ? प्रकृत्यन्तरं नेषतिः ।' इति द्वितीया । 'कथं प्रकृत्यन्तरं नेषः ?' इति प्रश्ने 'नेषतु नेष्टादिति दर्शनात्' इति वार्तिकेनोत्तरमिति तृतीया ।

‡ 'नेषतु नेषतादिति भाष्ये पाठः' । नेष्टादिति पाठस्तु लेखकप्रमादकृत इति नागेशाशयः ।

## इटोऽनुदात्तत्वमिति चेदागमानुदात्तत्वात्सिद्धम् ॥ ६ ॥

आगमानुदात्तत्वेनेटोऽनुदात्तत्वं भविष्यति ॥ एवं तर्हि सवयं कर्तव्यः । किं प्रयोजनम् ? यदवयासिसीष्ठाः × । एकाज्लक्षण इट्प्रतिषेधो* मा भूदिति । क्वाय-मकारः श्रूयते ? न क्वचिच्छ्रूयते । लोपोऽस्य भविष्यत्यतो लोप आर्द्धधातुक इति† । यदि न क्वचिच्छ्रूयते नाऽर्थः स्वराथन पकारेणाऽनुबन्धेन ।

एवमपि कर्तव्य एव । किं प्रयोजनम् ? अनुदात्तस्य लोपो यथा स्यादुदात्तस्य

प्र०—स्सीयुडागमेरिडागमो भवति । यदि पुनः सिप् क्रियेत तदावश्यमिकार उच्चारणार्थो व्याख्येयः । अन्यथा तस्य श्रवणं स्यात् । तत्र सिबन्तस्य धातोरेकाच्त्वादिट्प्रतिषेधः प्रसज्येत । ननु योऽत्र धातुरुपदेशेऽनुदात्तो, याशब्दो न तस्मात् परमार्द्धधातुकं, सिपा व्यवधानात् । यस्माच्च सिबन्ता-त्परमार्द्धधातुकं नासावुपदेशेऽनुदात्तः । एवं तर्हि 'सनाद्यन्ता धातव' इत्यस्य यदा सनाद्यवयवा धातवो भवन्तीत्यर्था व्याख्यायते तदा सिपो यात्यवयवत्वाद्यातिग्रहणेन ग्रहणादिट्प्रतिषेधप्रसङ्गः । यदाऽपि स्थानिवद्भावाश्रयणेन सूत्रं प्रत्याख्यातं तदा स्थानिवद्भावेनाऽनुदात्तादेकाचः श्रूयमाणात् प्राप्नोत्येवेट्प्रतिषेधः । अनुदात्तस्येति । 'धातो'रित्यनाश्रित्योक्तम् । अथवैतत्प्रदेशपाठाश्रयमेत-द्भाष्यम् । उदात्तस्येति 'छन्दस्युभयथे'ति सार्वधातुकत्वादनुपदेशादिति लसार्वधातुकाऽनुदात्तत्वे

उ०—दित्यस्याऽसिद्धिः । अत्र करणे 'नेषत्वि'त्यस्याऽसिद्धिः । प्रकृत्यन्तरत्वे तु 'नेष्टा'दिति नयतेः सिपि सिद्धम्, अत्रैव लेटीतिपदरहितसूत्रकरणादित्याशयः । यद्वा 'नेष्टा'दित्यत्र विकरणव्यत्ययेन शपो लुक् । 'नेषतु नेषतादिति दृश्यते' इति भाष्ये पाठः । 'लोकेऽपी'ति शेषः । 'नेष्टादिति दृश्यते',इति लेखकप्रमादः । अन्यथा प्रकृत्यन्तराऽऽवश्यकत्वं न दर्शितं स्यात् । भाष्ये—आगमाऽनुदात्तत्वादिति । 'तारिष'दित्यादौ धातुस्वरप्रयुक्तशेषनिघातेनेति भावः । सनादिमध्ये इति । 'लेटी'ति पदरहितमिति भावः । एवञ्च सपः साध्क-त्वेन पित्त्वं चरितार्थमिति बोध्यम् । ननु स्थानपरिवर्तनेन सनादिवर्गे करणे फलाऽभावस्य भाष्ये उक्तेराह—अत्रैव चेति । अत्राऽपि करणे नेट्सिद्धिरिति तात्पर्यम् । भाष्ये किंप्रयोजनमित्यकारविषयः प्रश्नः । यदवया-सिसीष्ठा इति । नन्वत्र सिप्यपि तेन व्यवधानान्निषेधाऽप्रवृत्त्याविट्सिध्यत्येवेत्यत आह—सबन्तस्याऽङ्ग-स्येति । 'एकाच' इत्यङ्गस्यैव विशेषणम् । 'उपदेशे' इति चाऽनुदात्तेनैव संबध्यते । उपदेशे योऽनुदात्तस्त-द्घटितादेकाऽचोऽङ्गादिति चार्थः । सत्रनैमित्तिकत्वात्पूर्वमेव, ततश्च लादेशा इति भावः । उच्चारणार्थ इति । इत्संज्ञायाम्फलान्तराऽभावादितिभावः । उच्चारणे सहायसम्पादनेन चरितार्थस्येत्संज्ञया लोपेन निवृत्तिरिति बोध्यम् । सिबन्तस्य धातोरिति । 'अङ्गस्ये'ति वक्तुमुचितम् । सीयुटः सस्य षत्वाऽभावश्छान्दसः । ननु चेति । तद्घटितादित्यर्थे न मानमित्यभिमानः । नाऽसावुपदेशे इति । सिबन्तस्योपदेशाऽभावादिति भावः । एवञ्च सिपैव सिद्धेऽकारोच्चारणं व्यर्थमिति पूर्वपक्षाशयः । सनादिवर्गपाठाऽभिप्रायेणादम्फलमुक्तमिति समाधत्ते—एवन्तर्हीति । अकारोच्चारणसामर्थ्यादुपदेशेऽनुदात्तघटितैकाचोऽङ्गादित्यर्थं इति न दोष इति

× देवस्य हेळोऽवयासिसीष्ठाः ( ऋग्वेदे ४ । १ । ४ ) * एकाच उपदेशेऽनुदात्तात् ७ । २ । १०

† अतो लोपः ६ । ४ । ४८

मा भूदिति । किं च स्यात् ? उदात्तनिवृत्तिस्वरः‡ प्रसज्येत ।

सिब्बहुलं छन्दसि णित् ॥ ७ ॥

सिब्बहुलं छन्दसि णिद्वक्तव्यः× । सविता धर्मं साविषत्+ प्र ण आयूंषि तारिषत्* ॥ ३४ ॥

कास्प्रत्ययादाममन्त्रे लिटि ॥ ३ । १ । ३५ ॥

कास्ग्रहणे चकास उपसङ्ख्यानम् ॥ १ ॥

कास्ग्रहणे चकास उपसङ्ख्यानं कर्तव्यम् । चकासांचकार ।

न कर्तव्यम् । 'चकास्प्रत्यया'दिति वक्ष्यामि । चकास्ग्रहणे कास उपसङ्ख्यानं कर्तव्यम् । कासांचक्रे । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'कास्ग्रहणे चकास उपसङ्ख्यान'मिति । नैष दोषः । चकास्शब्दे कास्शब्दोऽस्ति, तत्र 'कास्प्रत्यया'दित्येव सिद्धम् । न सिध्यति ।

प्र०—सति प्रत्ययस्वरेण धातुस्वरेण वा सशब्दाऽकारस्योदात्तत्वादुदात्तनिवृत्तिस्वर इटः प्रसज्येत । पकारे तु सति अनुदात्त एवेड्भवति । पित्करणसामर्थ्यादेव च सशब्दाऽकारस्य धातुस्वरो न भवति, एतत्प्रदेशपाठाद्वा । याशब्दस्यैव तु भवति । 'तिङ्ङतिङ' इति यो निघातः स 'निपातैर्यद्यदी'ति प्रतिषिद्धः । अवशब्दस्य 'तिङि चोदात्तवती'ति निघातः साविषदिति । 'षू प्रेरणे' इत्यस्य लेटि रूपम् । 'तारिष'दिति तरतेः ॥ ३४ ॥

उ०—तत्त्वम् । अनुदात्तादेकाच इति । सपि तु परत्वादिडादिषु कृतेषु अतो लोप इति भावः । अथवेति । अत्र पाठे हि तदन्तस्याऽधातुत्वात्तदप्राप्तिरिति भावः । इदमेव युक्तम् । नन्वत्र योऽनुदात्त इकारस्तत्र परतो न लोपः । आर्द्धधातुके हि सः । न च तदनुदात्तमत आह—लसार्वधातुकाऽनुदात्तत्वे सतीति । अत्र पाठे—प्रत्ययस्वरेणेति । सनादिपाठे—धातुस्वरेणेति । 'प्रत्ययस्वरेणे'त्येव युक्तं, सनादिपाठस्य स्थानत्यागे फलाऽभावेन भाष्ये दूषितत्वात् । 'पित्करणसामर्थ्या'दित्यपि चिन्त्यम्, एतत्प्रदेशेत्याद्येव युक्तम् । याशब्दस्यैवेति । एवञ्च 'यासिसीष्ठा' इत्याद्युदात्तमिति भावः । ननु 'तिङ्ङतिङ' इति निघातः स्यादत आह—तिङ्ङतिङ इति । अत्रेदं तत्त्वम्—अत्रैव पाठो 'लेटी'ति पदरहितः कार्यः, अकारस्तु लसार्वधातुकानुदात्तत्वायोक्तरीत्येट्प्रतिषेधाऽभावाय च । उदात्तनिवृत्तिस्वरवारणाय च पकारः । अन्तरङ्गत्वाच्च पूर्वं सपि ततो विकरणव्यवधानेप्यादेशाः । अत आर्द्धधातुकोपदेशेऽकारान्तत्वाल्लोपसिद्धिरिति ॥ ३४ ॥

कास्प्रत्यया । नन्वत्र 'प्रत्यय'ग्रहणं व्यर्थम् 'आममन्त्रे लिटी'ति योगविभागेन सामान्यत आमं

‡ अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१ × प्रयोजनं तु अचो ञ्णिति ७ । २ । ११५
+ श्रेष्ठं सवं सविता साविषन्नो ( ऋग्वेदे १ । १६४ । २६ ) * ऋग्वेदे १ । २५ । १२

किं कारणम् ? अर्थवतः कास्शब्दस्य ग्रहणं, न च चकास्शब्दे कास्शब्दोऽर्थवान् ।

एवं तर्हि 'कास्यनेकाच' इति वक्तव्यम् । किं प्रयोजनम् ? चुलुम्पाद्यर्थम् । चुलुम्पांचकार दरिद्रांचकार ॥ ३५ ॥

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३ । १ । ३६ ॥

### गुरुमत आम्विधाने लिण्निमित्तात्प्रतिषेधः ॥ १ ॥

गुरुमत आम्विधाने लिण्निमित्ताद्गुरुमतः[1] प्रतिषेधो वक्तव्यः । इयेष उवोष । गुणे कृते* 'इजादेश्च गुरुमतोऽनृच्छ' इत्याम् प्रसज्यते[2] ॥ गुरुमद्वचनमिदानीं किमर्थं स्यात् ?

प्र०—इजादेः । उवोषेति । नन्वत्रोषविदेति विकल्पेनाऽऽमा भाव्यम् । अत्राहुः । द्विवचनबहुवचनयोर्गुणाभावाद्गुरुमत्त्वाऽभावाद्विकल्पः सावकाश इति यत्र गुरुमत्त्वं तत्र नित्यमेवाम् प्राप्नोति । एतच्च 'विप्रतिषेधे पर'मिति, प्रतिपदविधेश्च बलवत्त्वमनाश्रित्य भाष्यकारेणोदाहृतम् । तत्र ह्याश्रिते विकल्प एव भविष्यतीति नैतदिहोपन्यसनीयम् । गुरुमद्वचनमिति । ईषतुरीषुरित्यत्रापि सवर्णदीर्घे गुरुमत्त्वादिजादेः सर्वत्र गुरुमत्वादामा भवितव्यमिति गुरुमद्वचनसामर्थ्यादुपदेशावस्थायां गुरुमत इत्याश्रयिष्यत इति भावः । णल्युत्तम इति । एतच्चोपलक्षणं, तेन थलपि गृह्यते—इयष्ठ इयजिथेति । लिटयभ्यासस्य संप्रसारणे कृते यजादय इजादयो भवन्तीति ।

उ०—विधाय कास्ग्रहणं नियमार्थं व्याख्येयम् । 'औपदेशिकधातोश्चेत्कास एवे'ति प्रत्ययान्ते सिद्धेरिति चेन्न, अनेकाच्प्रत्ययान्तग्रहणार्थत्वात् । तेन कादिभ्य आचारक्विबन्तेभ्य आम्न । ध्वनितञ्चेदं हरदत्तग्रन्थे । न च एकाच्प्रत्ययान्तपरमेवास्तु, क्विग्रहणेनैव सिद्धे प्रत्ययग्रहणवैयर्थ्यापत्तेः, गोपायाञ्चकारेत्यादिभाष्यप्रयोगविरोधापत्तेश्च । कास्यनेकाच इति । कासिपदमनेकाज्धातुमात्रस्य यथा भवति तथा व्याख्येयमित्यर्थः । तथा हि—'एकाचो धातोश्चेत्कास एवे'ति नियमपरतया तद्व्याख्येयमिति । एवञ्च 'चकास उपसङ्ख्यान'मिति वार्तिकं, सूत्रस्थप्रत्ययग्रहणञ्च न कार्यमिति भाष्यतात्पर्यम् । यथाश्रुतवार्तिकेऽपि प्रत्ययग्रहणस्थानेऽनेकाज्ग्रहणं कर्तव्यमित्येव तात्पर्यमिति हरदत्तानुसारिणः । अन्ये तु 'कासी'ति सप्तमी, कास्घटिते सूत्रे इत्यर्थः । अन्यथा समाहारद्वन्द्वे टजापत्तिः । इतरेतरयोगे तु द्विवचनापत्तिः । प्रत्ययग्रहणाऽपनयने च न मानम् । सूत्रे प्रत्ययग्रहणान्तु योगविभागनियमकल्पनारूपगौरवपरिहारेण स्पष्टार्थमेव । एवञ्च 'क'शब्दादिभ्य आचारक्विपि 'कामास' इत्यादिरूपाण्येव, सत्यभिधाने इत्याहुः ॥ ३५ ॥

इजादेश्च । भाष्ये लिण्निमित्ताद्गुरुमत इति । गुरुमति लिण्निमित्तत्वं गुरुद्वारा बोध्यम् । द्विवचनबहुवचनयोरिति । तयोः कित्वादिति भावः । तत्र द्विर्वचनाऽपेक्षया नित्यत्वाद्वैकल्पिक आम् ।

---

१—'गुरुमतः' इति क्वचिन्न । * पुगन्तलघूपधस्य च ७ । ३ । ८६

२—'प्राप्नोति' पा० ।

**गुरुमद्वचनं किमर्थमिति चेदाम्ल्युत्तमे यजादिप्रतिषेधार्थम् ॥ २ ॥**

गुरुमद्वचनं किमर्थमिति चेदाम्ल्युत्तमे यजादीनां† मा भूदिति । इयजाऽहम् । उवपाऽहम् ।

**उपदेशवचनात्सिद्धम् ॥ ३ ॥**

उपदेशे गुरुमत इति वक्तव्यम् ।

यद्युपदेशग्रहणं क्रियते उछेराम्वक्तव्यः । व्युच्छाञ्चकारेति ।

**ऋच्छिप्रतिषेधो ज्ञापक उच्छेराम्भावस्य ॥ ४ ॥**

यदयमनृच्छ इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यस्तुङ्निमित्ता‡ यस्य गुरुमत्ता, भवति तस्मादामिति ।

स तर्हि ज्ञापकार्थ ऋच्छिप्रतिषेधो वक्तव्यः । ननु चावश्यं प्राप्त्यर्थोऽपि वक्तव्यः । नार्थः प्राप्त्यर्थेन । 'ऋच्छत्यॄताम्' [ ७ । ४ । ११ ] इति ऋच्छेर्लिटि गुणवचनं ज्ञापकं 'नर्च्छेर्लिटयाम्भवती'ति । नैतदस्ति ज्ञापकम्, अस्त्यर्थमेतत्स्यात् । कथं पुनर्ऋच्छेर्लिटि गुण उच्यमानोऽस्त्यर्थः शक्यो विज्ञातुम् ? सामर्थ्यात् । ऋच्छेर्लिटि नास्तीति× कृत्वा प्रकृत्यर्थं विज्ञायते । तद्यथा—'तिष्ठतेरित्' [ ७ ।

प्र०—उपदेशवचनादिति । वचनं व्याख्यानमभिप्रेतम् । अन्यथा वचनेन वचनान्तरस्य निरासे को गुणः स्यात् । तस्मान्नित्ययोगे मतुप आश्रयणादुपदेशावस्थायां गुरुमत इत्याश्रयिष्यत इत्यर्थः । 'उपदेशग्रहण'शब्देनाऽव्युपदेशो गृह्यतेनेनेति व्युत्पत्त्या व्याख्यानमेवोच्यते । उछेरिति । उछी विवास इत्युपदेशे गुरोरपाठान्नाऽयं गुरुणा नित्ययुक्तः । तुङ्निमित्तेति । तुग्ग्रहणमागममात्रोपलक्षणं, तेनेङ्खांचकारेत्यत्रापि भवति । प्राप्त्यर्थोपीति । प्रतिषेधप्राप्त्यर्थ इत्यर्थः । ऋच्छेरिति ।

उ०—णलि तु परत्वाद्गुणेन नित्य आम्प्राप्नोतीति विशेषः । एतेन 'अत्रापि सवर्णदीर्घे गुरुमत्त्वमस्तीति कथमवकाश' इत्यपास्तम् । विप्रतिषेधे इति । यद्यसम्भवे विप्रतिषेधः, अस्ति चाऽत्रोभयोः संभवबुद्धिरित्युच्यते तदापि विकल्पसिद्ध्या 'उवोषे'त्यस्य सिद्धिरिति भावः । प्रतिपदेति । अनवकाशत्वाऽभावेऽपि पूर्वप्रवृत्ताविदं नियामकमिति भावः । 'उवोखे'ति कवर्गद्वितीयान्तपाठ इत्यन्ये । ननु द्विवचनादौ किति गुणाऽभावे आममावाय गुरुमद्वचनं चरितार्थमत आह—ईषतुरिति । उपदेशेति । एवञ्च 'लिण्निमित्ता'दिति प्रतिषेधोऽनर्थक इति भावः । इयष्ठेति । संयोगपरत्वेन गुरुमत्त्वेऽपि उपजीव्यविरोधान्नाऽऽमिति गुरुमद्ग्रहणस्येद-

† लिट्यभ्यासस्योभयेषाम् ६ । १ । १७ इति सम्प्रसारणे कृते यजादय इजादयो भवन्ति ।
‡ छे च ६ । १ । ७३ × पाघ्राध्मा······पश्यर्च्छधौशीयसीदाः ७ । ३ । ७८ इत्यत्रैः शित्येव 'ऋच्छ'आदेशो विधीयते ।
१—'प्रकृत्यर्थो' पा० । २ 'विज्ञास्यते' पा० ।

४ । ५ ] 'जिघ्रतेर्वा' [ ६ ] इति चङि तिष्ठतिजिघ्रती न स्त इति कृत्वा प्रकृत्यर्थं[1] विज्ञायते ।

किं पुनरर्तेर्लिटि गुणवचने प्रयोजनम् ? आरतुः आरुः, एतद्रूपं यथा स्यात् । किं पुनः कारणं न सिध्यति । द्विर्वचने कृते सवर्णदीर्घत्वे च यदि तावद्धातुग्रहणेन ग्रहणमॄकारान्तानां लिटि गुणो भवतीति गुणे कृते रपरत्वे च† अरतुः अरुरित्येतद्रूपं

प्र०—आमा व्यवधानेऽपि वचनाद्गुणो भविष्यतीति चेत्, एवं सति 'तस्मिन्निति निर्दिष्ट'इत्येतद्बाध्येत, तस्मादाम एवाऽभावो गुणविधानेन ज्ञाप्यते । सामर्थ्यादिति । 'ऋ गतिप्रापणयो'रित्यस्य शितिपि शपि ऋच्छादेशः कृतो न त्वनादेश ऋच्छिर्निर्दिष्ट इत्यर्थः । ऋच्छिरिति । शिति ऋच्छादेशविधानाल्लिटि तदभावः । तिष्ठतेरिति । अत्रापि स्थः शिति तिष्ठादेशं कृत्वा निर्देशः कृतः, तत्राऽनेन रूपेण स्थाशब्द एव प्रतीयत इत्यर्थः । द्विर्वचन इति । यणादेशात् पूर्वविप्रतिषेधेन द्विर्वचन क्रियते । तथा हि—सति स्थानिवद्भावशास्त्रे द्वयोरपि यण्द्विर्वचनयोर्नित्यत्वमिति विप्रतिषेध उपपद्यते । अथवा यथा 'निन्यतु'रित्यत्र यणादेशेन भाव्यमिति द्विर्वचनात् पूर्वमेव इयङ्न प्रवर्तते तथेहाऽपि द्विर्वचने कृते सवर्णदीर्घेण भाव्यमिति यण्न प्रवर्तते । सति वा यणि

उ०—ष्फलमिति भावः । इयजिथेत्येव वा प्रत्युदाहरणम् । ननु यजादीनां कथमिजादित्वं, तत्राह—लिटयभ्यासस्येति । तस्मान्नित्ययोग इति । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने' इत्युक्तेः । प्रकृते लक्ष्यानुसारात्तत्रैव मतुबिति भावः । ननु वचनशब्दस्य व्याख्यानपरत्वेऽप्युपदेशग्रहणमित्यसङ्गतमत आह—उपदेशग्रहणेति । तुग्रहणमिति । सामान्यापेक्षं ज्ञापकमित्यर्थः । ऋच्छावामोऽभावादाह—प्रतिषेधेति । तुनिमित्ते त्याद्यर्थे ज्ञापिते ततोऽपि प्राप्तस्य प्रतिषेधार्थ इति भावः । तस्मादाम एवेति । यद्यप्यङ्गभूतपरिभाषाबाध एवोचितस्तथाऽपि तस्या वाक्यार्थबोधप्राक्कालोपस्थितिकतया वैयर्थ्यस्य च लक्ष्यसंस्कारवेलायामुपस्थितत्वेनाऽसञ्जातविरोधन्यायेनाऽऽम्बाध एवेति भावः । एवञ्च तुन्निमित्ते त्याद्यर्थे ज्ञापितेऽप्यस्य सार्थक्यं दुरुपपादम् । ऋच्छेरामभावस्य प्रकारान्तरेण सिद्धेरिति नैतज्ज्ञापकमिति तात्पर्यम् । ननु स्थानिकार्यस्याऽऽदेशे जायमानत्वेऽपि आदेशकार्यस्य कथं सामर्थ्यादपि स्थानिनि प्रवृत्तिः, तत्र स्थानिवद्भावस्यैवाऽत्रोपायाऽभावादत आह—ऋ गतीति । शितीति । स्वतन्त्रस्य त्वामा व्यवधानाल्लिट्परत्वाऽभावो बोध्यः ।

ननु परत्वाद्यणि 'द्विर्वचनेऽची'त्यनेन द्वित्वे स्थानिवद्भावाद्द्वित्वे कृते पुनरादेशरूपेणैवोत्तरखण्डस्याऽवस्थानादभ्यासस्योरति हलादिः शेषेऽत आदेरिति दीर्घे आरतुरित्यादिसिद्धिरत आह—यणादेशादिति । ननु 'यणिनस्य' इति कथं विप्रतिषेधोऽत आह—सतीति । 'द्विर्वचनेऽचीत्यस्मिन्नि'ति शेषः । 'द्विर्वचनेऽची'ति सूत्रे स्थानिवद्भावपूर्वविप्रतिषेधयोः किं ज्याय इति भाष्योक्तेः पूर्वविप्रतिषेधारम्भे तदभावस्य लाभादयम्पूर्वविप्रतिषेधो नित्यानामपि बाधक इति वक्तुं युक्तम् । इत एवाऽरुचेराह—अथवेति । सति वा यणीति । द्वित्वे रूपातिदेशेन द्वित्वे जाते पश्चाद्यथायथं योग्यशास्त्रप्राप्तिरिति दीर्घ एवेति भावः । अन्तादिवदिति । उत्तरखण्डस्यैव क्रियावाचकत्वेन धातुत्वमिति भावः । समुदायस्य धातुत्वे त्वेतदसङ्गतिः स्पष्टैवेति

[1] —'प्रकृत्यर्थौ' पा० । † ऋच्छत्यॄताम् ७ । ४ । ११ इति गुणः, उरण् रपरः १ । १ । ५१ इति रपरत्वम् ।

प्रसज्येत । अथाऽभ्यासग्रहणेन ग्रहणम् उरत्वं[1], रपरत्वं, हलादिः शेषः‡ 'अत आदेः' [ ७ । ४ । ७० ] इति दीर्घत्वम्, 'आतो लोप इटि च' [ ६ । ४ । ६४ ] इत्याकारलोपः—अतुः उरिति वचनमेव श्रूयेत । गुणे पुनः सति, गुणे कृते रपरत्वे च द्विर्वचनं हलादिः शेषोऽत आदेरिति दीर्घत्वं तत्र सिद्धं भवति [ आरतुरारुरिति[2] । ] यथा आटतुः आटुरिति ।

किं पुनः कारणं सवर्णदीर्घत्वं तावद्भवति न पुनरुरत्वम् × । परत्वादुरत्वेन भवितव्यम् । अन्तरङ्गत्वात् [ सवर्णदीर्घत्वं प्राप्नोति[2] ] । अन्तरङ्गं सवर्णदीर्घत्वं, बहिरङ्गमुरत्वम् । काऽन्तरङ्गता ? वर्णावाश्रित्य सवर्णदीर्घत्वम्, अङ्गस्योरत्वम् । उरत्वमप्यन्तरङ्गम् । कथम् ? वक्ष्यत्येतत्—'प्रागभ्यासविकारेभ्योऽङ्गाधिकार' इति+ । उभयोरन्तरङ्गयोः परत्वादुरत्वम् । उरत्वे [ च[2] ] कृते रपरत्वं हलादिः शेषोऽत आदेरिति दीर्घत्वं परस्य रूपस्य यणादेशः, सिद्धं भवति—आरतुः आरुरिति ।

अथापि कथं चिदर्तेर्लिटि गुणेनाऽर्थः स्यात्, एवमपि न दोषः । ऋच्छत्यॄतामित्यृकारोऽप्यत्र निर्दिश्यते । कथम् ? प्रश्लिष्टनिर्देशोऽयम् । ऋच्छति ऋ ॠताम्—ऋच्छत्यॄतामिति ।

प्र०—तस्य स्थानिवद्भावाद्द्विर्वचनम् । तत्र कृते यणादेशात् परत्वात्सवर्णदीर्घत्वम् । यदि तावदिति । अन्तादिवद्भावादुभयादेशस्याऽन्यतरतो व्यपदेशात्स्थानिवद्भावाद्वेति भावः । अन्तरङ्गत्वादिति । 'वार्णादाङ्गं बलीय' इत्येतत्तु समानाश्रयाङ्गवार्णविषयम् । यथा कारकश्चयनमिति गुणवृद्धी भवतो यणादेशात् । इह तूरदत्वं लिडाश्रयं, वर्णद्वयाश्रयं तु सवर्णदीर्घत्वमिति भिन्नाश्रयत्वमनयोः । अथापीति । आसप्तमपरिसमाप्तेरङ्गाधिकारो वव्रश्चेत्यादिसिद्धय आश्रित इति भावः । ॠकारोऽपीति । बहुवचननिर्देशादिति भावः । इहापीति । 'ॠ' इति वर्णग्रहणात्तदन्तविधिसद्भावादिति भावः ।

उ०—बोध्यम् । स्थानिवदतिदेशस्यापि सम्भवादाह—स्थानिवद्भावाद्वेति । स्थान्यलाश्रयत्वाऽभावाच्चाऽनल्विधाविति प्रतिषेधाऽभावः । स्थानिवत्त्वप्राप्त्युपपादकम्—उभयादेशस्येत्यादि । भाष्ये—गुणे पुनः सतीति । ननु परत्वात्कृतेऽपि गुणे 'द्विर्वचनेऽचीति' रूपातिदेशात् ऋशब्दस्यैव द्वित्वमिति को विशेष इति चेन्न; यत्राऽऽदेशे कृते एकाच्त्वादिव्याघातप्रयुक्ता द्वित्वाऽप्राप्तिस्तत्रैवातिदेशप्रवृत्तिरित्याशयात् । इह तूरदत्वमिति । आसप्तमसमाप्त्यङ्गाधिकारादिति भावः । इदम्प्रौढ्या कैयट आहेत्यनुपदमेव स्फुटं भविष्यति । वव्रश्चेति । अत्राऽभ्यासे रेफस्य सम्प्रसारणे उरदत्वे तस्याऽङ्गाक्षिप्तपरनिमित्तत्वेन 'न सम्प्रसारण' इति तस्य तन्निषेधे स्थानिवत्त्वं

१—'उरदत्वे रपरत्वम्' पा० । ‡ उरत् ७ । ४ । ६६; उरण् रपरः १ । १ । ५; हलादिः शेषः ७ । ४ । ६० २—कोष्ठान्तर्गतः पाठोऽसार्वत्रिकः । × अकः सवर्णे दीर्घः ६ । १ । १०१; उरत् ७ । ४ । ६६ + अङ्गस्य ६ । ४ । १ सूत्रभाष्ये ।

इहापि तर्हि प्राप्नोति चक्नुशुश्चकु रिति । संयोगादिग्रहणं* नियमार्थं भविष्यति 'संयोगादेरेवाऽकेवलस्य नान्यस्याऽकेवलस्ये'ति ।

तदेतदन्तरेणाऽर्तेर्लिटि गुणवचनं रूपं सिद्धम्, अन्तरेण चर्च्छिग्रहणमर्तेर्लिटि गुणः सिद्धः । स एषोऽनन्यार्थ ऋच्छिप्रतिषेधो वक्तव्य उच्छेर्वाऽऽम्वक्तव्यः ॥ उभयं न वक्तव्यम् । उपदेशग्रहणं न करिष्यते । कस्मान्न भवति—इयेष उवोषे'ति ?

उक्तं वा ॥ ५ ॥

किमुक्तम् । 'सन्निपातलक्षणो विधिरनिमित्त' तद्विघातस्येति† ।

ऊर्णोतेश्चोपसङ्ख्यानम् ॥ ६ ॥

ऊर्णोतेश्चोपसङ्ख्यानं कर्तव्यम् । प्रोर्णुनाव ॥ न कर्तव्यम् ।

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाश्चेड्डुपग्रहात्‡ ॥

अथवोकारोऽप्यत्र निर्दिश्यते । कथम् ? अविभक्तिको निर्देशः,—अनृच्छ उ

प्र०—संयोगादेरिति । अकेवलस्य । वर्णान्तरसहितस्येत्यर्थः । ततश्च धातोरेव ग्रहणमवतिष्ठते । स एष इति । आगमनिमित्तगुरुमत्त्वधात्वर्थ इत्यर्थः । 'अनृच्छ' इति पर्युदासाश्रयेण तत्सदृशधातुग्रहणादुच्छेराम्भवति । अथवा यद्यपि गुणविधानेन ऋच्छेराम्न भवतीति ज्ञायते तथाप्यनृच्छ इति प्रतिषेधः प्राप्तिसम्भावनयाक्रियमाणो ज्ञापको यथोक्तस्यार्थस्य भवति । उपदेशग्रहणमिति । 'गुरुमत' इति गुरुमत्तामात्राश्रयो मतुप्, यथा 'पितृमा'निति, न तु नित्ययोग

उ०—सिध्यतीत्यर्थः । ऋकारनिर्देशे लिङ्गमप्याह—बहुवचनेति । धातोरेवेति । गत्यर्थस्य । न तु तदन्तविधिरित्यर्थः । भाष्ये—तदन्तरेणार्त्तेरिति । वार्णपरिभाषयैवेति भावः । सा समानाश्रयविषयैवेति तु न, मानाभावादिति भावः । ननु पूर्वमुर ( द ) त्वेऽपि हलादिः शेषेऽत आदेरिति दीर्घे परखण्डे यणादेशं बाधित्वाऽतो गुण इति प्राप्नोतीत्यसिद्धिरत आह—अन्तरेण ऋच्छिग्रहणमिति । ऋकारनिर्देशेनेति भावः । अयमेव 'अथाऽपि कथञ्चि'दिति भाष्यास्याऽऽशयः । ननु गुणविधिस्थऋच्छिग्रहणेन ज्ञापकेन ऋच्छेरामोऽप्राप्तावनृच्छ इत्यस्य ज्ञापितेऽपि चारितार्थ्योऽभावात्कथं ज्ञापकत्वमत आह—अनृच्छ इतीति । तत्सदृशागमवद्धातुलक्षणायैव तदुपादानमिति भावः । वाक्यभेदश्च बोध्यः । तेनैधादेः सिद्धिः । 'अन्यन्यार्थं' इत्यनेन भाष्ये ध्वनितमेतत् । अथवेति । इदं प्रौढया । लेलु केति । अव्यवधानविघातश्च बोध्यः । एवञ्च 'अनृच्छ' इति, 'लिप्निमित्ता'दिति च प्रत्याख्यातम् । ननु 'उपदेश' इति व्याख्याने 'ईत्' 'ऊत्' शब्देभ्य आचारक्विपि

* ऋतश्च संयोगादेर्गुणः ७ । ४ । १० १—'इति' क्वचिन्न । † १ । १ । ३९ वा० ३
‡ धातोरेकाचः क्रियासमभिहारे यङ् ३ । १ । २२ इति यङ्प्रसिद्धिः । आम्प्रतिषेधस्त्वनेनैव सूत्रेण ज्ञेयः ( ३ । १ । ३६ ) इडुपग्रहः—इयनिषेधः । स च 'श्र्युकःकिति' ७ । २ । ११ इत्यनेन बोध्यः ।

अनृच्छो 'दयायासश्च' [ ३ । १ । ३७ ] इति ॥ ३६ ॥

## उषविद्जागृभ्योऽन्यतरस्याम् ॥ ३ । १ । ३८ ॥

### विदेराम्कित् ॥ १ ॥

विदेराम्किद्वक्तव्यः* । विदांचकार । न वक्तव्यः । विदिरकारान्तः । यद्यकारान्तो 'वेत्ती'ति गुणो न सिध्यति । लिट्सन्नियोगेन । एवमपि 'विवेदे'ति न सिध्यति । एवं तर्हि—आम्सन्नियोगेन ।

भारद्वाजीयाः पठन्ति—'विदेराम्किन्निपातनाद्वा गुणत्वम्' इति ॥ ३८ ॥

## भीह्रीभृहुवां श्लुवच्च ॥ ३ । १ । ३९ ॥

श्लुवदतिदेशे किं प्रयोजनम् ?

### श्लुवदतिदेशे प्रयोजनं द्वित्वेत्त्वे ॥ १ ॥

प्र०—इति व्याख्यास्यत इत्यर्थः । सन्निपातलक्षण इति । लिट्सन्निपातनिमित्तो गुणस्तद्विघातनिमित्तस्यामो निमित्तं न भवति । आमि सति हि लेर्लुक्वा भाव्यमिति लिट्सन्निपातस्य विघातः स्यात् । ऊर्णोतेरिति । प्रतिषेध इत्यर्थः । उकारोपीति । तेनोकारान्तस्योर्णोतेराम्न भवति । संहितया च सूत्र पाठ इति दर्शयति—अनृच्छो दयायासश्चेति ॥ ३६ ॥

उषविद । विदिरकारान्त इति । सूत्रे अकारान्तत्वं विदेर्निपात्यत इति भावः । इतरो धातुपाठ एवाऽकारान्तत्वमनेन विदेरुक्तमिति मत्वाह—यदीति । गुणो न सिध्यतीति । इकारस्योपधत्वाऽभावादकारलोपाऽभावाच्च विदतीति स्यादित्यर्थः । आम्सन्नियोगेनेति । आमः प्राधान्येन विधीयमानत्वात्तदनुयायित्वमत्वस्येत्यर्थः ॥ ३८ ॥

उ०—आम्न प्राप्नोति, तत्प्रत्याख्याने च प्राप्नोतीति चेन्न, प्रत्ययान्तत्वेनैव तत्राम्सिद्धिरित्याशयात् । हलन्तेभ्य आचारक्विपोऽभावाच्च ।

भाष्ये—वाच्य ऊर्णोरिति । तत्र यङि भावातिदेशः, आमिटोरभावातिदेश इति बोध्यम् । तेनेजादेरिति; अनेकाच इति । चाम्नेति बोध्यम् । उकारप्रश्लेषेऽपि तत्सामर्थ्याद्बाध्यसामान्यचिन्तया सर्वस्याप्यामः प्रतिषेध इति बोध्यम् । तेनोकारान्तस्येति । ऋच्छिसाहचर्यादौपदेशिकस्येत्यर्थः । तदाह ऊर्णोतेरिति ॥ ३६ ॥

उषविद । उषिजागृसाहचर्यात्परस्मैपदिन आदादिकस्यैव विदेर्ग्रहणम् । अकारलोपाऽभावाच्चेति । गुणाऽसिद्धिर्दोषोपलक्षणमिति भावः । ननु लिटोऽप्युपस्थित्या तत्सन्नियोगेनाऽपि विधानं स्यादत आह—आमिति । निपातनाद्वेति भाष्ये । सूत्रेऽदन्तत्वनिपातनादित्यर्थः ॥ ३८ ॥

* क्ङिति च । १ । १ । ५ १—भाष्यमिदमिति केचित् ।

विभरांचकार† ॥ ३९ ॥

## कृञ्चानुप्रयुज्यते लिटि ॥ ३ । १ । ४० ॥

किमर्थमिदमुच्यते ? अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् । आमन्तमव्यक्तपदार्थकं, तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ अत उत्तरं पठति—

### कृञोऽनुप्रयोगवचनमस्तिभूप्रतिषेधार्थम् ॥ १ ॥

कृञोऽनुप्रयोगवचनं क्रियते, 'अस्तिभूप्रतिषेधार्थम्' । अस्तिभुवोरनुप्रयोगो मा भूदिति ।

### आत्मनेपदविध्यर्थं च ॥ २ ॥

आत्मनेपदविध्यर्थं च कृञोऽनुप्रयोगवचनं क्रियते । आत्मनेपदं यथा स्यात् ॥ उच्यमानेऽप्येतस्मिन्नवश्यमात्मनेपदार्थो यत्नः कर्तव्यः‡ ॥ अस्तिभूप्रतिषेधार्थेन चाऽपि नार्थः ।

### इष्टः सर्वानुप्रयोगः ॥ ३ ॥

सर्वेषामेव कृभ्वस्तीनामनुप्रयोग इष्यते । किमिष्यत एवाऽहोस्वित्प्राप्नोत्यपि ?

---

प्र०—भीह्री । द्विर्वचनमेव विधेयं किमतिदेशेनेति पृच्छति—श्लुवदतिदेश इति । 'न लुमताऽङ्गस्ये'ति गुणप्रतिषेधो न भवति । 'प्रत्ययलोप' इत्यस्याः प्राप्तेरयं निषेधो न चाऽत्रासौ प्राप्तिरस्ति ॥ ३९ ॥

कृञ्चानु । किमर्थमिति । अन्तरेणाऽपि सूत्रारम्भमनुप्रयोगः सिद्धः कालसाधनसङ्ख्याप्रत्यक्तृवादिप्रतिपादनाय लिट्परस्य कृञः । आमन्ताद्धि कालविशेष एवावसीयते न त्वर्थान्तरं, तत्र समानार्थस्य धातोरनुप्रयोगो न भविष्यति ओषामुवोषेति । उत्तरेणैव सर्वार्थाभिव्यञ्जनादा-

---

उ०—भीह्रीभृहुवां । न लुमतेति लुमच्छब्दवति कार्ये सत्यङ्गस्य कार्यं नेत्यर्थ इति मन्यते । प्रत्ययेति । लुमता शब्देन लुप्ते प्रत्ययलक्षणेनाऽङ्गकार्यं नेति तदर्थं इति भावः ॥ ३९ ॥

कृञ्चाऽनु । अनुप्रयोगाऽन्यधात्वनुप्रयोगस्य वारणाय च सूत्रमावश्यकमित्यत आह—अन्तरेणाऽपीति । 'लिट्परस्य कृञ' इत्यस्या'ऽनुप्रयोगः सिद्ध' इत्यनेनाऽन्वयः । 'आमन्ताद्धि क्रियाविशेष एवे'ति पाठः । 'कालविशेष' इति पाठे कालेन विशेष्यते यः स क्रियारूप इत्यर्थः । सामान्य इति । सामान्यस्याऽपि विशेषे पर्यवसानात्तदुत्पन्नतिबादिनापि विशेषसंबन्धिसाधनाद्यवगतिरित्यर्थः । भ्वस्त्योरिति । तयोरपि

---

† श्लौ ६ । १ । १०; भृञामित् ७ । ४ । ७६ १—'अस्तिभुवोः' पा० ।
‡ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य १ । ३ । ६३ ।

इष्यते च प्राप्नोति च। कथम् ? 'कृ'ञिति नेदं' धातुग्रहणम्। किं तर्हि ? प्रत्याहार-ग्रहणम्। क्व संनिविष्टानां प्रत्याहारः ? 'कृभ्वस्तियोग' इत्यतः प्रभृत्या कृञो ञकारात् ×।

**सर्वानुप्रयोग इति चेदशिष्यमर्थाऽभावात् ॥ ४ ॥**

सर्वानुप्रयोग इति चेदशिष्यं कृञोऽनुप्रयोगवचनम्। किं कारणम् ? 'अर्था-भावात्'। आमन्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति। इदं तर्हि प्रयोजनं 'कृभ्वस्तीनामेवाऽनुप्रयोगो यथा स्यात् पचादीनां मा भू'दिति। एतदपि नास्ति प्रयोजनम्।

**अर्थाऽभावाच्चान्यस्य [ सिद्धम् ] ॥ ५ ॥**

अर्थाऽभावाच्चाऽन्यस्य सिद्धमेतत्। [ कुतः ? ] कृभ्वस्तयः क्रियासामान्य-वाचिनः, क्रियाविशेषवाचिनः पचादयः, न च सामान्यवाचिनोरेव विशेषवाचिनोरेव वा प्रयोगो भवति। तत्र विशेषवाचिन उत्पत्तिः सामान्यवाचिनोऽनुप्रयोद्यन्ते।

**लिट्परार्थं वा ॥ ६ ॥**

लिट्परार्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते। लिट्परस्यैवाऽनुप्रयोगो यथा स्यादन्यपरस्य मा भूदिति।

प्र०—मन्तस्यानर्थक्यप्रसङ्गात्। नापि भिन्नार्थस्य—ईहांपपाचेति। आमन्तसम्बद्धसाधनाद्यसम्प्रत्य-यात्। कृञ् तु सामान्यवचनः। सामान्यविशेषवाचिनोश्च प्रयोगोऽर्थविशेषप्रतिपादनेऽनुगुण इति भावः। **अनुप्रयोग इति**। यद्यप्यामन्तात्सकलार्थाभिव्यक्तिर्न भवति तथापि प्रकरणादिवशाद्भवि-ष्यति, तस्मादनुप्रयोगसिद्ध्यर्थमिदं वक्तव्यमिति भावः। **आमन्तमिति**। पूर्वोक्तानामर्थानां प्रकर-णादिवशादशक्या प्रतिपत्तिरिति तदर्थाभिधानायानुप्रयोगः सिध्यत्येवेति भावः। करोतेरेवाऽनुप्र-योगो यथा स्याद्भ्वस्त्योर्मा भूदिति नियमार्थमेतदिति दर्शयितुमाह—**कृञ इति**। **आत्मनेपदेति**। सिद्धे कृञोऽनुप्रयोगे पुनर्वचनमतिशयेनाऽनुगुणस्यानुप्रयोगार्थं, तेनात्मनेपदप्रकृतेरामन्तस्यात्म-

उ०—सामान्यवाचकत्वादिति भावः। भाष्ये दूषयति—**उच्यमानेऽपीति**। **परस्मैपदेनाऽपीति**। सूत्रन्यासेन त्वदुक्तातिशयाऽलाभादिति भावः। **सम्पदश्चेति**। चेन 'सं'—रहितपदधातोरपीत्यर्थः। एतेन सम्पदो धातुत्वाऽभावात्कृभ्वाद्यसाजात्येन प्रत्याहारे न सन्निवेश इत्यपास्तम्। मध्यवर्त्तिनः सजातीया एव ग्राह्या इत्यर्थे मानाऽभावाच्च। **विद्यतीति**। 'विद सत्ताया'मिति स्मरणादिति भावः। भाष्ये—**अर्थाऽभावाच्चेति**। 'एधा'मित्यादिना पच्यादेरन्वयाऽयोग्यत्वात्, एधामित्याद्यग्रे स्व स्याऽनुप्रयोगोऽसम्भवी, तत्राप्यामः प्राप्तेः।

१—'नैतद्' पा०। × कृभ्वस्तियोगे० ५।४।५० इत्यतः प्रभृति 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ५।४।५८ पर्यन्तम्। २—क्वचिन्न।

किंपरस्य पुनः प्राप्नोति ? लट्परस्य । न लट्परस्यानुप्रयोगेण भूतकालो विशेषितः स्यात् ॥ निष्ठापरस्य तर्हि मा भूत् [ इति ] । न निष्ठापरस्याऽनुप्रयोगेण पुरुषोपग्रहौ विशेषितौ स्याताम् ॥ लुङ्परस्य तर्हि मा भूत् । न लुङ्परस्याऽनुप्रयोगेणाऽनद्यतनो भूतकालो विशेषितः स्यात् । लङ् परस्य तर्हि मा भूत् । न लङ् परस्यानुऽ प्रयोगेणाऽनद्यतनः परोक्षः कालो विशेषितः स्यात् ॥ अयं तर्हि भूते परोक्षेऽनद्यतने लङ् विधीयते 'हशश्वतोर्लङ्च' [ ३ । २ । ११६ ] इति, तत्परस्य मा भूदिति । एतदपि नास्ति प्रयोजनम् । 'एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भवति' । तद्यथा—'गोषु स्वाम्यश्वेषु चे'ति । न चं भवति'गोषु चाऽश्वानां च स्वामी'ति+ ।

**अर्थसमाप्तेर्वाऽनुप्रयोगो न स्यात् ॥ ७ ॥**

अर्थसमाप्तेस्तर्ह्यनुप्रयोगो न स्यात् । आमन्तेन परिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो न स्यात् ॥ एतदपि नास्ति प्रयोजनम् । इदानीमेव ह्युक्तमामन्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यतीति ।

प्र०—नेपदान्त एव करोतिरनुप्रयुज्यत इत्याम्प्रत्ययवदिति सूत्रं न कर्तव्यं भवतीत्यर्थः । अवश्यमिति । परस्मैपदेनाऽपि कर्त्रर्थस्यावगमात्तदन्तस्याऽनुप्रयोगः स्यादिति भावः । प्रत्याहारग्रहणमिति । एतच्चाम्प्रत्ययवदित्यत्र कृञ्ग्रहणाद्भ्वस्तिनिवृत्त्यर्थाद्विज्ञायते । सम्पदश्चार्थविरोधान्न भविष्यत्यनुप्रयोगः । अशिष्यमिति । विद्यतिनिवृत्त्यर्थमपि नोपयुज्यते । प्रयुक्तानामन्वाख्यानात्तस्य चानुप्रयोगादर्शनात् । न चेति । द्वयोरेकार्थयोः प्रयोगाऽभावादिति भावः । न्यायप्रदर्शनार्थं च 'सामान्यवाचिनो'रित्युक्तम्, न तु सामान्यवाचिभ्यः कृभ्वस्तिभ्य आम्विधानमस्ति । सामान्यवाचिनश्चार्थं द्योतयितुं विशेषवचनो न शक्तः । प्रत्युत विशेषान्तरव्यावृत्या तदर्थविरोधी । लट्परस्येति । भूतविशेषस्यामन्तेन प्रतिपादनाद्भूतस्याऽपि भूतपूर्वां वर्तमानतामाश्रित्य लट्प्रयोगः स्यादिति भावः ।

न लट्परस्येति । आमन्तार्थाभिव्यक्त्यर्थत्वादनुप्रयोगस्य विरुद्धकालाभिधायिलडनुप्रयोगो न भविष्यति । न च साम्प्रतिकवर्तमानतासम्भवे भूतपूर्वाश्रयो लट्प्रयोग उपपद्यत इत्यर्थः । एकस्या इति । वेदलोकप्रसिद्धोऽयं न्यायः । तथा हि 'खादिरे बध्नाति' 'पालाशे

उ०—कृभ्वादिभ्यस्तु आम्प्राप्त्यभावादेव न तद्विषये तदनुप्रयोगः । तदाह भाष्ये—न च सामान्येत्यादिना । द्वयोरेकार्थयोरिति । आम्विषययोरित्यर्थः । द्वितीयप्रयोगेऽप्यामः प्राप्तेरिति भावः । न च 'पाचया'मित्युत्तरं पचेरन्तर्भावितण्यर्थस्य समानार्थतया प्रयोगः स्यादिति वाच्यम्, उत्तरेणैव सिद्धे पूर्वस्य वैयर्थ्यापत्तेरिति भावः । ननु निवृत्तप्रेषणकृञो णिचि कारयामित्यतः पचेरनुप्रयोगः स्यादिति सामान्यविशेषवाचिनोरित्यपि वक्तुं युक्तमत आह—सामान्यवाचिनश्चेति । वर्तमानविहितस्य लटः कथं भूते प्रसक्तिरत आह—

१—'हि' पा० ।    + स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च २ । ३ । ३९

## विपर्यासनिवृत्त्यर्थं वा ॥ ८ ॥

विपर्यासनिवृत्त्यर्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । ईहांचक्रे । चक्र ईहामिति मा भूत् ।

## व्यवहितनिवृत्त्यर्थं च ॥ ९ ॥

व्यवहितनिवृत्त्यर्थं च कृञोऽनुप्रयोगवचनं क्रियते । अन्वेव चांऽनुप्रयोगो यथा स्यात् । ईहाञ्चक्रे । व्यवहितस्य मा भूत् । ईहां देवदत्तश्चक्र इति ॥ ४० ॥

इति श्री भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ।

---

प्र०—बध्नाती'त्यादौ विकल्पितेषु साधनेषु येनैव साधनेनोपक्रान्ता क्रिया तेनैव निर्वाह्यते । तत्र यदि कदाचित्खदिरस्य भ्रेषो भवति तदा तत्सदृशः बर्बुरः सादृश्यात्खदिरबुध्या प्रतिनिधीयते,न तु पलाशः परिगृह्यते । साधनभेदेन क्रियान्यत्वादुपक्रान्तक्रियाऽनिर्वाहप्रसङ्गात् । लोकेऽपि यदा स्वस्वामिभावप्रतिपादनाय 'गवां स्वामी'ति षष्ठ्युपक्रम्यते तदा 'अश्वानां चे'त्यत्रापि तत्प्रतिपादनाय सैव निर्वाह्यते । अन्यथा'ऽश्वेषु चे'त्युक्तऽधिकरणप्रतिपत्तिरपि स्यादश्वेषु च तिष्ठतीति । तस्माद्योऽर्थो यया शब्दाकृत्या प्रतिपादयितुमुपक्रान्तस्तयैवाऽसौ निर्वाह्यो न त्वन्यथाशब्दाकृत्येत्यर्थः । एवं हि प्रतिपत्तिलाघवं भवति । **अर्थसमाप्तेर्वेति** । आमन्तं पदं यावन्तमर्थमभिधातुं शक्नोति तावानर्थस्तत्रैव परिसमाप्त इत्यनुप्रयोगो न स्यादिति भावः । एतद्भाष्यकारो दूषयितुमाह—**एतदपीति** । 'अशिष्यमर्थाऽभावा'दित्युक्तत्वात् । **विपर्यासनिवृत्त्यर्थं वेति** । सिद्धे कृञ्प्रयोगे देशनियमार्थं वचनम् । अनुशब्दस्य पश्चादर्थत्वात् । तेनाऽऽमन्तस्य पश्चादेव कृञ्प्रयुज्यते न पूर्वं नापि व्यवहितमित्यर्थसम्पत्तिः ॥ ४० ॥

इति भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ।

---

उ०—**भूतपूर्वामिति** । न च साम्प्रतिकेति । वर्तमानसामीप्ये लट्यपि न विवक्षितमुख्यभूतत्वप्रतीतिः स्यादिति भावः । **खादिरे**—खदिरविकारे यूपे । **सादृश्यादिति** । एवञ्च बहुखदिराऽवयवसामान्ययोगो—बुर्बुरस्येति तत्र खदिरबुद्ध्युत्पादनेन खदिरारब्धैव क्रिया निर्वाहिता भवति । पालाशे तूपादीयमाने तत्र खदिरबुध्द्यनुत्पादात्खादिरेणोपक्रान्ता क्रिया न निर्वाहिता स्यादिति न तदुपादानमिति भावः । **अश्वेषु चेति** । एवञ्च तथा प्रयोगेऽसाधुतेति वदन्ति । वार्त्तिके 'वा'शब्दो विकल्पार्थकोऽपि पूर्वत्र प्रयोजनानां खण्डितत्वात्तदर्थे भाष्यकृता व्याख्यायते—**विपर्यासनिवृत्त्यर्थं तर्हीति** । भाष्ये—**अन्वेवेति** । पश्चादव्यवधानेनेत्यर्थः ॥ ४० ॥

इति श्रीनागेशभट्टकृते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे तृतीयमाह्निकम् ।

---

१ 'च कृञोऽनु' पा०

# च्लि लुङि ॥ ३ । १ । ४३ ॥

क्वाऽयं च्लिः श्रूयते ? न क्वचिच्छ्रूयते । एतस्य सिजादय आदेशा उच्यन्ते* । यदि न क्वचिच्छ्रूयते किमर्थस्तर्हि च्लिरुत्सर्गः क्रियते न सिजुत्सर्ग एव कर्तव्यः । तस्य क्सादयोऽपवादा भविष्यन्ति [1]। अत उत्तरं पठति—

## च्ल्युत्सर्गः सामान्यग्रहणार्थः ॥ १ ॥

च्लिरुत्सर्गः क्रियते सामान्यग्रहणार्थः । क्व सामान्यग्रहणार्थेनाऽर्थः ? 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' [ २ । ४ । ८० ] इति । तत्राऽवरतस्त्रयाणां ग्रहणं कर्तव्यं स्यात् । चङ्ङोः सिचश्चेति ।

प्र०—च्लि लुङि । आदेशैः सर्वत्र बाधितत्वाऽन्नास्य प्रयोगः प्रयोजनं, नापि क्विबादीनामिव कार्यार्थिता दृश्यते । ततोऽस्यानर्थकं विधानमिति पृच्छति—क्वायमिति । च्लिरुत्सर्ग इति । स्थानीत्यर्थः । स ह्यादेशेनाऽपोद्यते । सिजुत्सर्ग इत्यत्र तु सामान्यविधिरुत्सर्गशब्देनोच्यते । च्ल्युत्सर्ग इति । च्लेरुत्सर्गो धातुमात्राद्विधानमित्यर्थः । तत्रावरत इति । त्रयाणां तावदवश्यं कर्तव्यं, जनेस्तु दीपजनेति तशब्दे विहितस्य चिणो मन्त्रे यदि लुग्दृश्यते तदा चतुर्थस्यापि ग्रहणं कर्त्तव्यमित्यवरत इत्युक्तम् । तत्र धयतेराकारान्तत्वात्तदर्थं चङ्सिज्ग्रहणं कर्तव्यं, घस्लशगम्यर्थमङ्ग्रहणं, धात्वन्तरार्थं तु सिज्ग्रहणमित्यर्थः । क्सविधान इति । 'अनिट' इत्येतत् च्लेर्विशेषणं यथा स्यादित्यर्थः । तथा हि यद्यनिङ्ग्रहणेन धातुर्विशेष्यते 'यस्मादन्यत्रेडागमो न दृष्ट' इति विषयान्तरगतमनिट्त्वमाश्रयणीयम्, लुङादेशानां सार्वधातुकत्वादिटः प्राप्त्यभावात् । ततश्च गुहादिभ्यः क्सो न स्यात्, तेषां विकल्पितेनेटा सेट्त्वात् । अथापि पाक्षिकेनेडभावेन तेषामनिट्त्वं स्यात् तथापि नित्यं क्सः स्यात् । च्लौ तु विशेष्यमाणे यदा तस्येण्नास्ति तदा

उ०—च्लि लुङि । नन्वश्रवणेऽपि क्विबादिवत् कार्यार्थः स्यादत आह—नापीति । उत्सर्गपदस्याऽपवादप्रतियोगिन्येव प्रसिद्धेराह—स्थानीत्यर्थं इति । ननु च्ल्युत्सर्ग इत्यनुपपन्नं, च्लेरन्यस्योत्सर्गस्याऽभावात् । कर्मधारये तूत्सर्गशब्दस्य पूर्वनिपातापत्तिरत आह—च्लेरिति । च्लिरुत्सर्गं इति भाष्यन्तु फलिताऽर्थपरम् । क्वचित्तु भाष्येऽपि 'च्ले'रित्येव पाठः । 'मन्त्रे' इति सूत्रे त्रयाणामपि चङङ्सिचां लिग्रहणेन लुग्यथा स्यादिति प्रयोजनं च्लिकरणस्य । अन्यथा सिच इत्यनुवर्तेतेति चङङोर्दोषः । लित्वं तु तेषां स्थानिवद्भावेन । अन्तरङ्गानपीति न्यायस्त्वत्र नास्ति, अनित्यत्वात् । तेन मन्त्रे 'अधान्' 'अधुः' इत्युभयसिद्धिः । तद्ध्वनयन्नाह—त्रयाणामिति । चङङोश्चेति कर्तव्यं, चेन सिचोऽनुकर्ष इति पदत्रयं कार्यमिति भावः । एतेन चङ्ग्रहणं व्यर्थं, धयतावेव हि तदुपयोगः । तत्र सिचो लुकैव सिद्धमित्यपास्तम् । 'अधान्'

* च्लेः सिच्; शल इगुपधादनिटः क्सः; श्लिष, आलिङ्गने ३ । १ । ४४—४६.

१—'सिच इति'पाठ ।

**क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः ॥ २ ॥**

क्सविधाने चाऽनिड्वचनेच्लिसंप्रत्ययार्थः च्लिरुत्सर्गः क्रियते । च्लेरनिटः क्सः सिद्धो भवति† ।

**घस्लृभावे च ॥ ३ ॥**

घस्लृभावे च च्लावेव कृते'लृदित'इत्यङ्सिद्धो भवति‡ ।

अथ चित्करणं किमर्थम् ।

**च्लेश्चित्करणं विशेषणार्थम् ॥ ४ ॥**

च्लेश्चित्करणं क्रियते विशेषणार्थम् । क्व विशेषणार्थेनार्थः ? 'च्लेः सिच्' [ ३ । १ । ४४ ] इति । 'लेः सि'जित्युच्यमाने लिङ्लिटोरपि प्रसज्येत ।

नैतदस्ति प्रयोजनम् । 'लुङी'त्युच्यते न च लुङि लिङ्लिटौ स्तः ।

प्र०—क्सो भवति—'अधुक्ष'—दिति । यदा त्विड्भवति तदा सिच्—'अगूही'दिति । घस्लृभावे चेति । लुङि यदार्द्धधातुकं तत्रादेर्घस्लृभावो विधीयते । तत्र च्लौ परतो घस्लृभावे सत्यङ्सिध्यति । अन्यथा सिच्येव घस्लृभावः स्यात् । ततश्च सिचः श्रवणं स्यात् । नहि प्रवृत्तस्योत्सर्गस्यापवादेन बाधः कर्तुं शक्यत इति भावः । तथा 'मन्त्रे घसे'ति यदि सिचो लुक्क्रियते तदा 'आदिः सिचोऽन्यतरस्या'मिति स्वरः स्यात् । लुमता लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनाऽस्य स्वरस्येष्टत्वात् । लुङीत्युच्यत इति । लुङीत्यनुवर्ततइत्यर्थः । तदनुबन्धकग्रहण इत्ययमपि परिहारः सम्भवति । भाष्यकारेण तु प्रकारान्तरेण परिहृतत्वान्नोक्तः । आम इति चेति । तत्र सामान्यग्रहणे सति यथासम्भवं कार्यं विज्ञायत इति भावः । अत्रैवेति । अन्यथा तदनुबन्ध-

उ०—इत्यसिध्यापत्तेः । आकारान्तत्वादिति,—'मन्त्रे घस' इति सूत्रप्राप्तिनिमित्तकथनम । भाष्ये—च्लिसम्प्रत्ययार्थ इति । अनिटम्प्रति च्लेर्विशेष्यत्वेन यः सम्प्रत्ययस्तदर्थमित्यर्थः । यस्मादन्यत्रेति । अस्य 'तर्हो'त्यादिः । यस्माद्धातोर्लुङ्भिन्ने प्रत्यये इत्यर्थः । लुङि योऽनिडित्याश्रयितुमशक्यमित्याह—लुङादेशानामिति । ततश्चेति । विषयान्तरगताऽनिट्त्वाश्रयणाच्चेत्यर्थः । अथापीति । इटोऽभावोऽनिट्, तस्मान्मतुपः सौत्रत्वाल्लुगिति भावः । यदा त्विडिति । तदा निर्दिश्यमानपरिभाषया इड्रहितस्य सिजित्यर्थः । 'धातो'रित्यस्य विहितविशेषणत्वाश्रयणान्निर्दिश्यमानस्य व्यवहितत्वमिति न शङ्क्यम् । अगूहीदिति । 'ह्म्यन्ते'ति वृद्धिनिषेधे; गुणे 'ऊदुपधाया' इत्यूत्वम् । आर्द्धधातुके विवक्षिते घस्लादेशविधानादाह—लुङीति । परसप्तमीत्यभिमानेनेदमिति भावः । ननु च्लिर्न कार्यः, चङ्क्सादयश्च सिच एवाऽऽदेशाः कार्याः । 'च्ले'रित्यस्य स्थाने 'सिच' इति कार्यम् । मन्त्रे इति सूत्रे च 'च्ले'रिति न कार्यं, सिच इत्यनुवृत्त्यैवेष्टसिद्धेरिति नैते दोषा इति चेन्न; 'अपुष'दित्यादौ जुसापत्तेः । दोषान्तरमप्याह—तथा मन्त्रे

† शल इगुपधादनिटः क्सः ३ । १ । ४५.

‡ लुङ्सनोर्घस्लृ २ । ४ । ३७; पुषादिद्युताद्यॢदितः परस्मैपदेषु ३ । १ । ५५

अथेदित्करणं किमर्थम् ?

इदित्करणं सामान्यग्रहणार्थम् ॥ ५ ॥

इदित्करणं क्रियते सामान्यग्रहणार्थम् । क्व सामान्यग्रहणार्थेनार्थः ? 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' [ २ । ४ । ८० ] इति, 'आमः' [ २ । ४ । ८१ ] इति च ॥ इकारे चेदानीं सामान्यग्रहणार्थे क्रियमाणेऽवश्यं सामान्यग्रहणाविघातार्थश्चकारः कर्तव्यः । क्व सामान्यग्रहणाऽविघातार्थेनार्थश्चकारेण ? अत्रैव× ।

यत्तावदुच्यते 'च्ल्युत्सर्गः सामान्यग्रहणार्थ'इति । क्रियमाणेऽपि वै च्ल्युत्सर्गे, तान्येव त्रीणि ग्रहणानि भवन्ति,—'च्लि लुङि' 'च्लेः सिच्' 'ले'रिति ॥ यदेत-'ल्ले'रिति, तत्परार्थं भविष्यति । कथम् ? यदेतद् 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' [ २ । ४ । ७७ ] इत्यत्र सिचो ग्रहणमेतल्लेरिति वक्ष्यामि ॥ यदि

प्र०—परिभाषयाऽस्यैव ग्रहणं स्यान्न लिटस्ततश्चाऽऽम इत्यनेन लिटो लुङ्न स्यादित्यर्थः । तान्येवेति । 'च्लि'—'च्लेः'लेरिति । 'सिज्लुङी'त्येतत्त्वितरेणाऽपि कर्तव्यम् । 'मन्त्रे घसे'त्यत्र चङोऽङः सिच इति तान्येव त्रीणीत्यर्थः । च्ल्युत्सर्गवाद्याह—यदेतदिति । लेरिति वक्ष्यामीति । तदेव 'मन्त्रे घसे'त्यत्रानुवर्तिष्यते, ततश्च लाघवं भवतीत्यर्थः । धेट इति । 'विभाषा घ्राधे'ङित्यत्र लिग्रहणाऽनुवृत्तौ सत्यां लेरादेशेषु कृतेषु स्थानिवद्भावाल्लिग्रहणेन तेषां ग्रहणाल्लुकि कृते चङ्निमित्तं द्विर्वचनं प्राप्नोतीत्यदधादित्यपि स्यात् । ननु चङ्लोपस्य स्थानिवद्भावादाकारलोपे सत्यधदिति भाव्यं, तत्कथमुच्यते 'अदधादिति प्राप्नोती'ति । नैष दोषः । 'किलुगुपधात्वे'ति लुका

उ०—इति । ननु 'लुमति प्रतिषेधे एकपदस्वरस्योपसङ्ख्यान'मिति प्रत्ययलक्षणप्रतिषेधात् कथं स्वरप्राप्तिरत आह—लुमतेति । तस्य 'सर्वाऽऽमन्त्रितसिज्लुक्स्वरवर्जं' मिति निषेधादिति भावः । अस्य—'आदिः-सिच' इत्यस्य । 'सर्वाऽऽमन्त्रितसिज्लुक्स्वरवर्जं'मिति तत्रोक्तत्वादिति भावः । तदनुबन्धकेति । चकाराऽभावेऽस्यैकानुबन्धकत्वादिति भावः । तत्रेति । 'आम' इति सूत्रेऽनुवर्त्तमानेन 'ले'रिति पदेन लिटोऽपि ग्रहणं सिध्यतीत्यर्थः । तदेव मन्त्रे इति । 'गातिस्थे'ति सूत्रे लिग्रहणे यदि 'अन्तरङ्गानपी'ति न्यायेन च्ल्यवस्थायां लुक्तर्हि 'अगु'रित्यादौ 'सिजभ्यस्ते'ति जुस्न न स्यात् । 'मा हि गाता'मित्यादौ 'आदिः सिचोऽन्यतरस्या'मिति स्वरश्च न स्यात् । तस्मादन्तरङ्गानपीति न्यायाऽनाश्रयणेनाऽऽदेशेकृते स्थानिवद्भावेन लित्वाल्लुगेषितव्यः । तत्राह भाष्ये—धेटश्चातुः शब्यमिति । तद्ध्वनयन्नाह—लेरादेशेष्विति । आकारलोपे इति । तिपो हल्ङ्यादिलोपे भष्भावे चेत्यपि बोध्यम् । 'अधदिति भाव्य'मिति पाठः । 'अदधदिति भाव्य'मित्यपपाठः । नैष इति । अङ्गकार्यत्वादत्र 'न लुमते'ति निषेधो, न तु द्वित्वे

× आमः २ । ४ । ८१

'ले'रित्युच्यते धेटश्चातुःशब्द्यं प्राप्नोति+ । अदधत् अधात् अधासीत् । अदधादित्यपि प्राप्नोति ।

## [ न चङो लुकि द्विर्वचनम् ॥ ]

न चङो लुकि द्विर्वचनेन भवितव्यम् । किं कारणम् ? 'चङि' [ ६ । १ । ११ ] इत्युच्यते, न चाऽत्र चङं पश्यामः । प्रत्ययलक्षणेन । 'न लुमता तस्मिन्नि'ति प्रत्ययलक्षणप्रतिषेधः ॥ बहुवचने तर्हि चातुःशब्द्यं प्राप्नोति । अदधन् अधुः अधासिषुः । अधानित्यपि प्राप्नोति ॥ नैष दोषः । 'आतः' [ ३ । ४ । ११० ] इति जुस्भावो भविष्यति ॥ न सिध्यति । सिज्ग्रहणं* तत्राऽनुवर्तते ॥ सिज्ग्रहणं [ तत्रं ] निवर्तिष्यते ॥ यदि निवर्तते 'अभूव'न्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति ॥ एवं तर्हि लुक्सिजपवादो विज्ञास्यते ॥ यदि लुक्सिजपवादो विज्ञायते 'मा हि दाताम्' 'माहि धाता'मित्यत्र 'आदिस्सिचोन्यतरस्याम्' [ ६ । १ । १८७ ]

प्र०—लुप्तस्य स्थानिवत्त्वनिषेधा'न्नलुमताङ्गस्ये'ति प्रत्ययलक्षणनिषेधाचाऽऽकारलोपाऽभावात् । आत इति । विध्यर्थमेतद्भविष्यति न तु नियमार्थमित्यर्थः । एवं तर्हीति । अकृतेष्वादेशेषु तदपवादो लेरेव लुग्विधास्यते, तेनाऽभूवन्निति जुस्न भविष्यति । 'आत' इत्येतच्च विध्यर्थं भविष्यति, अधुरदुरपुरित्यादिसिध्यर्थमिति भावः । तस्मादिति । स्वरसिद्धये सिजादेशे कृते लुक्कर्तव्य इत्यर्थः । कथमिति । आर्द्धधातुकस्य हीड्विधीयते । तदेव तदभावादनिडिति व्यपदिश्यते, मत्वर्थे बहुव्रीहिविज्ञानादिति भावः ।

उ०—इत्यभिमानः । विध्यर्थमिति । 'चङो लुकी'ति शेषः । भाष्ये—अभूवन्निति । चङ्लुकि विध्यर्थत्वे सम्भवति नियमार्थत्वं न स्यादिति 'सिजभ्यस्ते'ति जुस्स्यादित्यर्थः । प्राप्तेष्वादेशेष्विति । च्ल्यादेशेष्वित्यर्थः । अकृतेष्वादेशेष्विति पाठान्तरम् । नन्वेवमगुरित्यत्र जुस्न स्यादत आह—आत इत्येतदिति । नियमस्याऽसम्भवादित्यर्थः । न च च्ल्यभ्यस्तेति कार्यं, तेन चङ्लुक्यपि जुस्, च्लिपदानुवृत्त्या 'आत' इत्यस्य नियमत्वादभूवन्नित्यपि सिद्धमिति वाच्यम्, 'अधुक्षन्' 'अवोच'न्नित्यादौ क्सादिभ्योऽपि परस्य जुसापत्तेः । तस्मान्मन्त्रे इति सूत्रार्थं च्लिर्न कार्यं इति सिद्धम् । 'आम' इत्यत्राऽपि 'ले'रित्यस्य नोपयोगः, प्रत्ययमात्रस्य तेन लुग्विधानात् । ननु धातुरपि 'न विद्यते इड्यस्मा'दिति व्युत्पत्त्याऽनिट्पदवाच्योऽत आह—मत्वर्थे इति । अवयवाऽवयविभावादिरूपे षष्ठ्यर्थे इत्यर्थः । भाष्ये—अनिमित्तं वा इट इति । न विद्यते इट्कार्यं यस्येत्यर्थः । पञ्चम्यन्तार्थेऽन्यपदार्थे बहुव्रीहिरिति पक्षान्तरमाह—न वाऽस्मादिति । तद्व्याचष्टे—वचनसामर्थ्यादिति । मत्वर्थं इति । 'कर्मकर्तृवचनेनाऽप्रथमाया' इति च वार्तिकोक्तेरिति

+ विभाषा धेट्श्व्योः ३ । १ । ४९; विभाषाघ्राधेट्शाच्छासः २ । ४ । ७८

१—नेदं सर्वत्रोपलभ्यते । * सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९ इत्यतः ।

इत्येष स्वरो न प्राप्नोति । तस्मान्नैतच्छक्यं वक्तुं—'लुक्सिजपवाद' इति । न चेदुच्यते—अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति । तस्मादात इत्यत्र सिज्ग्रहणमनुवर्त्यं, तस्मिंश्चाऽनुवर्तमाने धेटश्चातुःशब्दं प्राप्नोति । तस्माद्गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्वित्यत्र सिज्ग्रहणं कर्तव्यम्, तस्मिंश्च क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति 'च्लि लुङि' 'च्लेः सिच्' 'ले'रिति ।

यदप्युच्यते—'क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थ'इति । धातुमेवाऽत्राऽनिट्त्वेन विशेषयिष्यामो—'धातोरनिट' इति । कथं पुनर्धातुर्नामाऽनिट् स्यात् ? धातुरेवाऽनिट् । कथम् ? अनिमित्तं वा इटः,—अनिट् । न वा तस्मादिडस्ति सोऽयमनिडिति ।

अथ धातौ विशेष्यमाणे क्व योऽनिडिति विशेषयिष्यसि ? किञ्चाऽऽतः ? यदि विज्ञायते—'निष्ठायामनिट' इति, भूयिष्ठेभ्यः प्राप्नोति । भूयिष्ठा हि शलन्ता इगुपधा निष्ठायामनिटः । अथ विज्ञायते—'लिटि योऽनि'डिति, न कुतश्चित्प्राप्नोति, सर्वे हि शलन्ता इगुधा लिटि सेटः ।

किं पुनः कारणं धातौ विशेष्यमाण एतयोर्विशेषयोर्विशेषयिष्यते न पुनर्यत्र सामान्येनेटो विधिप्रतिषेधौ ? क्व सामान्येन ? वलादावार्द्धधातुके ।

यदप्युच्यते 'घस्लृभावे चे'ति । आर्द्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु

प्र०—अनिमित्तमिति । धातोरिटश्च निमित्तनिमित्तिभावोऽस्तीति नाऽनुपपन्नः षष्ठ्यर्थे बहुव्रीहिरिति भावः । न वा तस्मादिति । 'अनिट' इति वचनसामर्थ्यात्पञ्चम्यर्थे बहुव्रीहिराश्रयिष्यत इत्यर्थः । क्व योऽनिडिति । असति च्लिविधाने विकरणेन क्सेनाऽनिट्त्वाश्रयेण भाव्यम् । तत्राऽस्मिन् विषय इटः प्राप्त्यभावाद्विषयान्तरमनिट्त्वस्यापेक्षणीयमिति प्रश्नः । निष्ठायामिति । यद्यार्द्धधातुकमात्रं परिगृह्यते ततो गुहादिभ्य ऊदिद्भ्यो न स्यादिति निष्ठाश्रयणम् । तदाश्रये च गुहादिभ्यो नित्यं क्सः प्रसज्येत, विकल्पितश्चेष्यते । भूयिष्ठाहीति । इषुरिषुरुषुश्रिषु-

उ०—भावः । अस्मिन् विषये—लुङ्रूपे विषये । यत्राऽनिट्त्वस्याऽव्यभिचारात् । विषयान्तरम्—प्रत्ययान्तररूपम् । ऊदिद्भ्यो नेति । आर्द्धधातुकतासादिविषये पक्षे सेट्त्वादिति भावः । नित्यः क्स इति । 'यस्य विभाषे'ति निष्ठायामनिट्त्वादिति भावः । इष्यते इति । अनेनैषोऽपि तत्र पक्षे दोष इति सूचितम् । निष्ठाग्रहणपक्षे भूयिष्ठेभ्य इति सूचितं दोषमाह—इषिवति । भाष्ये—वलाद्यार्द्धधातुक इति । अयं भावः,—अनिटो धातोरित्युक्ते केति विषयविशेषाऽऽकाङ्क्षायां लुङ्परवलाद्यार्द्धधातुके यदा योऽनिडिति कालविशेषावच्छिन्नो

१—'न चेदेवमुच्यते' पा० । २—'सिचो ग्रह' पा० ।

प्रत्ययेषु । तत्रार्द्धधातुकसामान्ये घस्लृभावे कृते 'लृदित' इत्यङ् भविष्यति ॥४३॥

## च्लेः सिच् ॥ ३ । १ । ४४ ॥

किमर्थश्चकारः ? विशेषणार्थः । क्व विशेषणार्थेनाऽर्थः ? 'सिचि वृद्धिः परस्मैपदेषु [ ७ । २ । १ ] इति । 'सौ वृद्धि'रितीयत्युच्यमानेऽग्निर्वायुरित्यत्रापि प्रसज्येत । नैतदस्ति प्रयोजनम् । 'परस्मैपदेष्वि'त्युच्यते न चाऽत्र परस्मैपदं पश्यामः ।

स्वरार्थस्तर्हि । 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात्† । एतदपि नास्ति प्रयोजनम् । अनच्कोऽयं, तत्र नार्थः स्वरार्थेन चकारेणाऽनुबन्धेन । इटि कृते साऽच्को भविष्यति । तत्र प्रत्ययाद्युदात्तत्वेनेट उदात्तत्वं भविष्यति‡ । न सिध्यति । 'आगमा अनुदात्ता भवन्ती'त्यनुदात्तत्वं प्राप्नोति ॥ अत उत्तरं पठति—

### सिचश्चित्करणानर्थक्यं स्थानिवत्त्वात् ॥ १ ॥

सिचश्चित्करणमनर्थकम् । किं कारणम् ? 'स्थानिवत्त्वात्' । चितोऽयमादेशः स्थानिवद्भावाच्चिद्भविष्यति ।

प्र०—प्रष्वादीनां च निष्ठायामनिट्त्वात् क्सः प्राप्नोति । न पुनर्यत्रेति । गुहादयो विकल्पितेट इटो भावाऽभावाभ्यां भिद्यन्ते, तत्र ये सेटस्तेभ्यः सिज्भविष्यति, अनिड्भ्यस्तु क्स इति न कश्चिद्दोषः । आर्द्धधातुकसामान्य इति । अङ्प्रत्ययगतमार्द्धधातुकसामान्यं लुङ्विशेषितमाश्रयिष्यत इत्यर्थः । यदि तर्हि च्लिः प्रत्याख्यायते तदा 'मन्त्रे घसे'ति सिचो लुक्या'दिः सिच'इति स्वरः प्राप्नोति । नैष दोषः । तत्र हि छन्दसि क्वचिदडाटोरुदात्तत्वेन भाव्यं, क्वचित्तिङ्निघातेन । यत्र त्वडाटोस्तिङ्निघातस्य च निषेधः प्रत्ययस्वरश्चेष्यते स विषयश्छन्दसि नास्ति । एतच्च भाष्यकारेण च्लेः प्रत्याख्यानाद्विज्ञायते । 'मा हि लावी'दित्यादौ तु सिच एव चित्त्वेनाऽनन्याऽर्थेन चागमानुदात्तत्वं बाधिष्यत इति तदर्थोऽप्यनुबन्धासङ्गार्थं च्लिर्न कर्तव्यः ॥ ४३ ॥

च्लेः सिच् । अग्निरिति । सौ च परस्मैपदेषु चेति समुच्चयो विज्ञायेत, तथा चात्रापि स्यात् । साविति च सिसुशब्दयोः साधारणो निर्देशः स्यात् । आगन्तुना चेकारेण सकारो

उ०—विषयविशेषो ग्रहीष्यते लक्ष्याऽनुरोधादिति । तदाऽऽह—गुहादय इति । सामान्यमिति । 'आर्द्धधातुक' इति विषयसप्तमीति भावः । यत्र त्विति । 'मा हि दाता'मित्यादौ । सिच एव चित्त्वेनेति । एतच्चोत्तरसूत्रे स्फुटम् ॥ ४३ ॥

च्लेः सिच् । साधारण इति । तन्त्रेणेति भावः । पक्षान्तरमाह—आगन्तुना चेति । तथा च सकारमात्रे तात्पर्यमिति भावः । पृथगिति । अन्यथा 'सपरस्मैपदयो'रित्येव वदेत् । 'स'इति वर्णमात्रम् ।

† चितः ६ । १ । १६३ ‡ आद्युदात्तश्च ३ । १ । ३

**अर्थवत्तु चित्करणसामर्थ्याद्धीट उदात्तत्वम् ॥ २ ॥**

नैष दोषः । अर्थवत्तु सिचश्चित्करणम् । कोऽर्थः ? चित्करणसामर्थ्याद्धीट उदात्तत्वं भविष्यति । [ नाऽप्राप्ते प्रत्ययस्वरे आगमानुदात्तत्वमारभ्यते तद्यथैव प्रत्ययस्वरं बाधते एवं स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेत । ]

**तस्माच्चित्करणम् ॥ ३ ॥**

तस्माच्चकारः कर्तव्यः ॥ अथेदित्करणं किमर्थम् ?

**इदित्करणं नकारलोपाऽभावार्थम् ॥ ४ ॥**

इदित्करणं क्रियते नकारलोपो मा भूदिति । अमंस्त अमंस्थाः । 'अनिदितां हल उपधायाः क्ङिति [ ६ । ४ । २४ ] इति ।

प्र०—निर्दिश्येतेति भावः । न चात्रेति । पृथग्विभक्तिनिर्देशादङ्गाऽङ्गिभावोऽत्र न तु समुच्चय इति भावः । स्वरार्थ इति । सिचोऽनचकत्वेऽपि 'चितस्सप्रकृते'रिति वचनान्मा हि कार्ष्टमित्यादौ धातोरुदात्तार्थ इत्यर्थः । अनचकोयमिति । 'मा हि कार्ष्टा'मित्यादावा'दिः सिचोऽन्यतरस्या'मिति पाक्षिकेणोदात्तत्वेन भाव्यमिति चित्स्वरस्यायमविषय इति भावः । अर्थवदिति । च्लेश्चित्करणस्य सामान्यग्रहणाऽविघातार्थत्वान्मा हि लावीदित्यादौ स्थानिवद्भावप्राप्तं स्वरमागमानुदात्तत्वं बाधेत । तस्मादन्तोदात्तार्थं सिचश्चित्त्वमित्यर्थः । नैष दोष इति । 'सिचश्चित्करणानर्थक्य'मिति य उक्तः स नास्तीत्यर्थः । अत्र केचिदाहुः—प्रत्ययस्वरस्य द्वावपवादौ—आगमानुदात्तत्वं यासुडित्यत्र ज्ञापितं तद्देशं, चित्स्वरश्च षाष्ठिकः । तत्रापवादविप्रतिषेधाच्चित्स्वर एव

उ०—स च परस्मैपदसाहचर्यादङ्गाधिकाराच्च प्रत्यय एव ग्रहीष्यते । धातोरुदात्तार्थ इति । लादेशनिमित्तनिघाते जाते पुनरुदात्तार्थ इत्यर्थः । भाष्ये तत्र प्रत्ययाद्युदात्तत्वेनेति । सन्निधाद्युपस्थिताद्युदात्त इति शास्त्रस्याऽनच्कत्वात्तत्र वैयर्थ्येन तदुत्तरकालमिटि स्वरविधायकतेत्यर्थः । अनच्कविषये बाधेन लाघवात्तदसम्बन्ध एवेति 'धातो'रित्याद्येकवाक्यतापन्नशेषनिघातो भविष्यतीत्युत्तरयति—आगमा इति । एवञ्च तद्बाधेनोदात्तत्वाय च्चित्त्वं सार्थकमिति भावः ।

स्थानिवद्भावप्राप्तमिति । 'स्थानिनि दृष्टस्यैवाऽतिदेश' इत्यत्र न मानं, किन्तु तत्र सम्भावितस्याऽपीति भावः । कार्याऽतिदेशेऽतिदेशेनैव कार्यविधानात्परत्वेन 'धातो'रित्येकवाक्यतापन्नशेषनिघातबललभ्येनाऽऽगमाऽनुदात्तत्वेन बाध्येतेति तात्पर्यम् । न च च्लेश्चित्त्वसामर्थ्यादेव तद्बाधः, 'मन्त्रे' इति सूत्रे 'ले'रिति

१—कोष्ठान्तर्गतः पाठः प्रक्षिप्त इति नागेशाशयः । तथा चोद्द्योते—'नाऽप्राप्ते प्रत्ययस्वर'इत्यारभ्य 'स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेते' त्यन्तग्रन्थो भाष्यपुस्तकेषु प्रायेण दृश्यमानोऽप्यग्रन्थ इति भावः ।

**न वा हन्तेः सिचः कित्करणं ज्ञापकं नकारलोपाऽभावस्य ॥ ५ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? यदयं 'हनः सिच्' [ १ । २ । १४ ] इति हन्तेः सिचः कित्त्वं शास्ति तज्ज्ञापयत्याचार्यो 'न सिजन्तस्य नकारलोपो भवती'ति।

नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? सिच्येव नलोपो यथा स्यात् परस्मिन्निमित्ते मा भूदिति । कः पुनरत्र विशेषः—सिचि वा नलोपे सति परस्मिन्वा निमित्ते ? अयमस्ति विशेषः—सिचि नलोपे सति नलोपस्याऽसिद्धत्वादकारलोपो × न भवति । परस्मिन्पुनर्निमित्ते नलोपे सत्यकारलोपः प्राप्नोति । समानाश्रयमसिद्धं व्याश्रयं चेदम् ।

ननु च परस्मिन्नपि निमित्ते नलोपे सत्यकारलोपो न भवति । कथम् ? 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति । तदेतद्धन्तेः सिचः कित्करणं ज्ञापकमेव 'न सिजन्तस्य लोपो भवती'ति ।

**इदिद्वा स्थानिवत्त्वात् ॥ ६ ॥**

अथाऽप्यनेनेदिताऽर्थः स्यात्, इदितोऽयमादेशः स्थानिवद्भावादिदिद्भविष्यति ।

प्र०—भविष्यति नाऽर्थः सिचश्चित्त्वेनेति । नैतदस्ति । नहि प्रत्ययस्वरस्यैतावपवादौ, प्रकृत्यागमानामानुगादीनां तदप्रसङ्गात् । कुण्डिनजादीनां च चिताम् । 'स्थानिव'दित्ययं च कार्यातिदेश इति परत्वमपि चित्स्वरस्य नास्ति । आगमानुदात्तत्वेन चाऽविशेषात्सर्वः स्वरो बाध्यः । तस्मात्तद्बाधनार्थं सिचश्चित्त्वं कर्तव्यमिति स्थितम् । परस्मिन्निति । सिचः परं यत्सार्वधातुकं तस्मिन्नित्यर्थः । असिद्धमिति । बाह्यसार्वधातुकाश्रयस्य बहिरङ्गत्वादसिद्धत्वमित्यर्थः । आर्द्धधातुकोपदेशे

उ०—सामान्यग्रहणार्थत्वात् । अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यान्न लिटः । ततश्च 'आम' इति सूत्रे लेरित्यस्याऽसम्बन्धः स्यात् । ततश्च परत्वाऽन्तरङ्गत्वाभ्यां तिबादिषु सत्सु लुकि प्रत्ययलक्षणेन तिङन्तत्वाद्देवदत्तः कारयाञ्चकारेत्यत्राऽऽमन्तस्य निघातः ततः परस्य चाऽनिघातः स्यादिति 'आम'इत्यत्र 'ले'रित्यनुवर्त्तनीयमित्यभिमानः । यदि त्व'न्तरङ्गानपी'ति न्यायेन तिबादिभ्यः पूर्वमेव लुक्तदा न च्लौ चस्य प्रयोजनमिति तत्सामर्थ्यादेवाऽन्तोदात्तत्वं सिद्धम् । तस्मात्पूर्वाचार्याऽनुसारेण सिचि च्लौ वा चकारोच्चारणमिति सूत्राशयः । अपवादविप्रतिषेधादिति । स्थानिवद्भावेन हि चित्त्वमात्रमतिदिश्यते, स्वरस्तु स्वशास्त्रेणैवेति भावः । न हि प्रत्ययस्वरस्यैताविति । एवञ्च 'नाऽप्राप्ते प्रत्ययस्वर' इत्यारभ्य 'स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेते'त्यन्तग्रन्थो भाष्यपुस्तकेषु प्रायेण दृश्यमानोऽप्यग्रन्थ इति भावः । आगमाऽनुदात्तत्वेनेति । बाध्यसामान्यचिन्तयेति भावः । वस्तुतस्तु 'लवितव्य'मित्यादौ प्रत्ययसन्नियोगेनाऽऽद्युदात्तत्वे कृते पश्चादिड् जायमानोऽस्वरकः स्यादिति सामान्यतः स्वराऽप्राप्तिविषये तस्य चारितार्थ्याद्बाधकत्वोक्तिश्चिन्त्या,

× असिद्धवदत्राभात्; अतो लोपः ६ । ४ । २२; ४८

स्पृशमृशकृषतृपदृपां सिज्वा ॥ ७ ॥

स्पृशमृशकृषतृपदृपां सिज्वेति वक्तव्यम् । स्पृश—अस्पृक्षत् अस्प्राक्षीत् । स्पृश ॥ मृश—अमृक्षत् अम्राक्षीत् । मृश ॥ कृष—अकृक्षत् अक्राक्षीत् । कृष ॥ तृप—अतृपत् अत्राप्सीत् । तृप ॥ दृप—अदृपत् अद्राप्सीत् ॥ किं प्रयोजनम् ? सिज्यथा स्यात् । अथ क्सः सिद्धः ? सिद्धः 'शल इगुपधादनिटः क्सः' [ ३ । १ । ४५ ] इत्येव ।

सिजपि सिद्धः । कथम् ? च्लेश्चित्करणं प्रत्याख्यायते+ तत्र च्लावेव झल्लक्षणेऽमागमे कृते* विहतनिमित्तत्वात्क्सो न भविष्यति । यद्येवमन्त्यस्य सिजादयः प्राप्नुवन्ति† ।

सिद्धं तु सिचो यादित्वात् ॥

सिद्धमेतत् । कथम् ? यादिः सिच्करिष्यते सोऽनेकाल्शित्सर्वस्य [ १ । १ । ५५ ] इति सर्वादेशो भविष्यति । किं पुनर्न श्रूयते यकारः ? लुप्तनिर्दिष्टो यकारः । चङ्ङोः कथम् ?

प्र०—यदकारान्तं तस्य लोप इत्येवं वा हन्तेरतो लोपो न भविष्यति । तथा चोच्यते—'अवयवलोपिनामतो लोपो नास्ती'ति । स्पृशेति । त्रिभ्यः क्से प्राप्ते, द्वाभ्यां पुषाद्यङि पक्षे सिज्विधीयते । च्लेश्चित्करणमिति । ततश्च प्रयोजनाऽभावाच्चकारस्येत्सञ्ज्ञा नास्तीति च्लौ झलादौ पक्षेऽमागमे कृते सिच् । अमभावपक्षे तु क्स इति त्रयाणां ग्रहणं न कार्यमित्यर्थः । अन्त्यस्येति । अन्त्यग्रहण-

उ०—सुतरां सर्वस्वरस्य । यदि शेषनिघातेन तत्राऽनुदात्तत्वसिद्धिरित्युच्यते तदा तद्वचनमेव व्यर्थं नास्ति चेति 'आद्युदात्तश्चे'ति भाष्ये ध्वनितम् । चित्वन्तु धातुस्वरेण प्रत्ययस्वरेण वैकवाक्यतापन्नशेषनिघातेन प्राप्तानुदात्तत्वबाधनार्थं कार्यमेव । ननु सिचि जायमानोऽपि परस्मिन्निमित्त एव जायतेऽत आह—सिचः परमिति । भाष्ये—नलोपस्याऽसिद्धत्वादिति । 'असिद्धवदत्राभा'दित्यनेनेत्यर्थः । बहिरङ्गत्वादिति । ननु 'त'शब्दनिमित्तलोपे तस्य बहिरङ्गतयाऽसिद्धत्वादाहतेत्यादौ 'ह्रस्वादङ्गा'दिति न स्यात् । सिज्निमित्तत्वे त्वसिद्धत्वाऽभावात्सेत्स्यतीति चेन्न,—त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्तेः । भाष्ये—अथाऽप्यनेनेत्येकदेश्युक्तिः ।

एकदेश्येवाह—कथं च्लेरिति । ततश्चेति । स्वरस्य सिच्चित्त्वेनैव सिद्धिरिति भावः । भाष्ये—चित्करणं प्रत्याख्यायत इत्यस्य इत्संज्ञा प्रत्याख्यायत इत्येव तात्पर्यम् । चङादय इति । णिश्रिद्रुस्रुभ्य इत्यादि पञ्चमीनिर्देशेन विधानादित्यर्थः । 'णिश्रिद्रुस्रुभ्य' इति विहितविशेषणमिति भाष्याशय इत्यन्ये । भाष्ये—च अङिति । चिण्न्यायेनाऽत्रापि चस्येत्वाऽभावेऽनेकाल्त्वात्सिद्धमित्यत्र प्रश्लेषे फलं चिन्त्यम्,

१—'दृपः' पा० ।  + ३ । १ । ४३ वा० ४  * अनुदात्तस्य चर्दुपधस्यान्तरस्याम् ६ । १ । ५९  † अलोऽन्त्यस्य १ । १ । ५२  २—भाष्यमिदमिति केचित् ।  ३ इदं क्वचिन्न ।

चङङोः प्रश्लिष्टनिर्देशात्सिद्धम्[३] ॥

चङङोरपि [ सिद्धम् । कथम् ? 'प्रश्लिष्टनिर्देशात्' ] प्रश्लिष्टनिर्देशोऽयम् । च अङ् चङ्, अ अङ् अङ् । सोऽनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति ।

चिणः कथम् ?

चिणोऽनित्त्वात्[२] ॥

चिणश्चकारस्याऽनित्त्वात्सिद्धम्[१] । किमिदमनित्त्वादिति ? अन्त्यस्याऽयं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपेऽनेकाल् । यदाऽनेकाल्तदा सर्वादेशः । यदा सर्वादेशस्तदा प्रत्ययः । यदा प्रत्ययस्तदेत्संज्ञा‡ । यदेत्संज्ञा तदा लोपः × ।

एवं च तत्र+ वार्तिककारस्य निर्णयः सप्रयोजनं चित्करणमिति । अपि च त्रैशब्द्यं न प्रकल्पते—अस्पृक्षत् अस्प्राक्षीत् । अस्पार्क्षीदिति न सिध्यति । सिचि पुनः सति विभाषा सिच् । सिच्यपि झलक्षणोऽमागमो विभाषा ॥ यस्य खल्वप्यमा

प्र० —मुपलक्षणं, चङादयो ह्यादेः परस्य प्राप्नुवन्ति । चिणोऽनित्त्वादिति । 'चिण्भावकर्मणो'-रित्यत्र धातुग्रहणं नापेक्ष्यत इत्यादेः परस्येति न भविष्यति । पदेर्दीपादिभ्यश्चा'देः परस्ये'ति प्राप्नोति । तस्माद्विहितविशेषणाश्रयेण परिहर्तव्यम् । सप्रयोजनमिति । सामान्यग्रहणाऽविघातार्थत्वस्योक्तत्वात् । सति च प्रयोजने चकारस्येत्संज्ञया भाव्यं, लकारश्च झल्न भवतीत्यमागमाऽभावात्

उ०—उपायान्तरपरमेतदभ्युपेत्यापीत्संज्ञालोपयोः पूर्वप्रवृत्तिं, प्रवृत्तमिति बोध्यम् । नन्व'न्त्यस्याऽयं स्थाने भव'न्निति भाष्यमनुपपन्नम्, 'आदेः परस्ये'त्यस्य प्राप्तेः प्रत्ययादित्वेनेत्त्वसिद्धेरत आह—चिण्भावेति । विहितेति । पदादिभ्यो विहितस्य च्लेरित्यर्थे परशब्देन विधानाऽभावादादेः परस्येत्यस्याऽप्रवृत्तिरिति भावः । भाष्ये—अप्रत्ययः स्यादिति । प्रत्ययाऽधिकारे पाठेऽप्यन्वर्थसंज्ञालभ्यार्थोऽभावात्, न हि प्रत्ययाऽवयवस्तदर्थवानिति भावः । ननु धात्वन्तः पातिनोऽपि अमोऽर्थवत्त्वमिवाऽन्याऽवयवस्याऽप्यर्थवत्त्वमस्तु, समुच्चित्य चाऽवयवसमुदाययोर्द्योतकता । तद्वदेव चाऽर्थोऽधिकाराप्रत्ययत्वेऽपि न बाधकमिति चेन्न, एकदेशयुक्तित्वेनाऽदोषात् । तद्ध्वनयन्नाह—एष चेति । एतेन 'नाऽनुबन्धकृतमनेकाल्त्व'मिति सर्वादेशत्वं दुर्लभमित्यपास्तम् । 'वार्तिककारस्ये'त्युक्त्या स्वीकरीत्या चकारस्य च्लेरेव वा प्रत्याख्यानमिति सूचितम् । च्लावेव झलादिलक्षणेऽमि 'अस्पार्क्षी'दित्यस्याऽसिद्धिरूपं दूषणान्तरमाह—अपि चेति । तृपदर्पाशे फलं दर्शयति भाष्ये—यस्य

१—इदं क्वचिन्न २—'चिणोऽनित्त्वात्सिद्धम्' पा० । ‡ चुटू १ । ३ । ७
× तस्य लोपः १ । ३ । ९ + ३ । १ । ४३ वा० ४ ३—भाष्यमिदमिति केचित् ।

[ अङो ] निमित्तं न विहन्यते स स्यादेव* ।
तस्मात्सुष्ठूच्यते—'स्पृशमृशकृषतृपदृपां सिज्वे'ति ॥ ४४ ॥

## शल इगुपधादनिटः क्सः ॥ ३ । १ । ४५ ॥

### क्सविधान इगुपधाभावश्च्लेर्गुणनिमित्तत्वात् ॥ १ ॥

क्सविधान इगुपधस्याऽभावः । किं कारणम् ? 'च्लेर्गुणनिमित्तत्वात्' । च्लिर्गुणस्य[3] निमित्तम्†, तत्र च्लावेव गुणे कृत 'इगुपधा'दिति क्सो न प्राप्नोति ।

### न वा क्सस्याऽनवकाशत्वादपवादो गुणस्य ॥ २ ॥

न वैष दोषः । किं कारणम् ? 'क्सस्याऽनवकाशत्वात्' । अनवकाशः क्सो गुणं बाधिष्यते ।

### अनिड्वचनमविशेषणं च्लेर्नित्याऽऽदिष्टत्वात् ॥ ३ ॥

अनिड्वचनमविशेषणम् । किं कारणम् ? 'च्लेर्नित्यादिष्टत्वात्' । नित्यादिष्टश्चिलर्न क्वचिच्छ्रूयते, तत्र 'च्लेरनिट' इति क्सो न प्राप्नोति ।

---

प्र०—क्स एव प्रसज्येतेत्यर्थः । यस्य खल्वपीति । पुषाद्यङः । स हि कृतेऽप्यमागमे प्रवर्तते ॥४४॥

शल इगु । क्सविधान इति । विशेषणाऽसंभवाल्लक्षणदोषमुद्भावयति । भूतपूर्वगत्याश्रये विहितविशेषणाश्रये वा लक्ष्याऽसिद्धिः । कित्करणं तु 'क्सस्याची'ति विशेषणार्थं वत्सा इत्यादौ लोपनिवृत्तये स्यात् । न वा क्सस्येति । भूतपूर्वगत्याश्रये कित्त्वमनर्थकं स्यादिति सानुबन्धकं रूपमनवकाशमित्यपवादत्वाद्गुणस्य बाधकमित्यर्थः । न च क्सस्याचीति विशेषणार्थं कित्त्वम्, प्रत्ययत्वादर्थवत्त्वाचास्यैव क्सस्य तत्र ग्रहणस्य सिद्धत्वात् । उणादीनामव्युत्पन्नत्वाद्वत्सा इत्यादौ प्रसङ्गाऽभावात् । अनिड्वनचमिति । अनिट इत्येतच्च्लेर्विशेषणं यथा स्यादिति

---

उ०—खल्वपीति ॥ ४४ ॥

शल इगुप । लक्षणदोषमिति । असम्भवरूपमित्यर्थः । भूतपूर्वेति । विशेषणसामर्थ्याद्धि तदाश्रयणम् । लक्ष्याऽसिद्धिरिति । सर्वत्र गुणश्रवणापत्तिरित्यर्थः ॥ ननु क्सस्य कित्वसामर्थ्यात्पूर्वमपि गुणो न भविष्यतीत्यत आह—कित्करणन्त्विति । वत्से वदेः स औणादिकः । क्सस्य गुणाऽपवादत्वे हेतुमाह—भूतेति ॥ ननु मासावित्यादावपि लोपापत्तिरत आह—प्रत्ययत्वादिति । 'वत्सा'इत्यादौ दोषवारणायाह—उणादीनामिति । तृ[4]णसावित्यादौ दोषस्तु 'लुग्वा दुहे'त्यत्रेतः क्सपदाऽनुवृत्तेरर्थाधिकाराऽनुरोधेन दुहादिषु

---

१ इदं क्वचिन्न । * पुषादिद्युताद्यॢदितः परस्मैपदेषु ३ । १ । ५५ २—'दृपः' पा० ।
† पुगन्तलघूपधस्य च ७ । ३ । ८६ ३—'गुणनिमित्तम्' पा० । ४—तृणान्यस्मिन् देशे सन्तीति तृणस इत्यत्र 'वुञ्छण्' इत्यनेन 'तृणादिभ्यः स' इति पदमञ्जरी ।

**न वा क्सस्य सिजपवादत्वात्तस्य चानिडाश्रयत्वादनिटि प्रसिद्धे क्सविधिः ॥ ४ ॥**

न वैष दोषः । किं कारणम् ? 'क्सस्य सिजपवादत्वात्' । सिजपवादः क्सः, स चाऽनिडाश्रयः । न चापवादविषय उत्सर्गोऽभिनिविशते । 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' । 'प्रकल्प्य वाऽपवादविषयं तत उत्सर्गोभिनिविशते' । तन्न तावदत्र कदाचित् सिज्भवति, अपवादं क्सं प्रतीक्षते । क्सस्य सिजपवादत्वात्तस्य चानिडाश्रयत्वादनिट्त्वं प्रसिद्धम् । 'अनिटि प्रसिद्धे क्सविधिः' । अनिटि प्रसिद्धे क्सो भविष्यति ॥ सिजिदानीं क्व भविष्यति ?

**शेषे सिज्विधानम् ॥ ४ ॥**

शेषे सिज्विधानं भविष्यति । अक्रोक्षीत् अमोषीदिति ॥ ४५ ॥

## श्लिष आलिङ्गने ॥ ३ । १ । ४६ ॥

किमर्थमिदमुच्यते ? नियमार्थम् । श्लिष आलिङ्गन एव क्सो यथा स्यात् । इह मा भूत्—उपाश्लिषज्जतु च काष्ठं च । समाश्लिषद्ब्राह्मणकुलमिति ।

अत उत्तरं पठति—

प्र०—च्लिरुत्सर्गः कृत इत्युक्तम् । तत्रास्य सिचा नित्यं भाव्यमितीडभावोपलक्षितस्य रूपं न कचिद्विद्यत इति च्लेरनिट इति विशेषणस्याऽप्रसिद्धिरित्यर्थः । **न वा क्सस्येति** । अयं भावः-लिह् लित् इति स्थिते सिचा न भाव्यं, क्सस्यायं विषय इति । क्सेनाऽपि न तावद्भाव्यं यावदस्याऽनिट्त्वं न ज्ञातम् । तत्र लकारस्यैवेटः प्राप्तौ तन्निषेधादनिट्त्वमस्तीति क्सः सिद्धः—अलिक्षदिति । यत्र त्विटः प्रतिषेधो नास्ति तत्र सिजेव भवति—अकोषीदिति ॥ ४५ ॥

**श्लिष आ । किमर्थमिति** । किं पुषादिपाठादङि प्राप्ते तद्बाधनाय विध्यर्थमिदम्, अथ पूर्वेण क्से सिद्धे नियमार्थमिति प्रश्नः । इतरो वक्ष्यमाणयोगविभागं मनसि कृत्वाह—**नियमार्थ-**

उ०—यस्य सम्भवस्तस्यैव पूर्वसूत्रेऽपि ग्रहणाद्वारणीयः । अत एव दृशेः क्से तादृक्षावित्यादौ न दोष इति कित्त्वसामर्थ्याद्गुणो नेति बोध्यम् । 'दुधुक्षती'त्यादौ सनः सानुबन्धकत्वान्न दोषः । एतल्लोपविषये तृणसतादृक्षादेरनभिधानमिति कश्चित् । **सिचा नित्यमिति** । आदेशान्तराऽभावे तस्याऽवश्यम्भावादित्यर्थः । **सिजेव भवतीति** । निर्दिश्यमानपरिभाषया लेरेव सः । 'धातो'रिति च विहितविशेषणमिति निर्दिश्यमानस्य न व्यवहितत्वमिति भावः ॥ ४५ ॥

**श्लिष आलिङ्गने** । विधित्वसम्भवे नियमार्थत्वं कथमित्यत आह—**इतर इति** । **प्रत्यासत्तिः**—संबन्धमात्रम् । प्राणिकर्तृकाद्विशेषश्चाऽऽलिङ्गनमिति बोध्यम् । **श्लिषेर्नाऽप्राप्ते इति** । परस्मैपदविषये विधित्वं

**श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात् ॥ १ ॥**

श्लिष आलिङ्गन इति नियमस्यानुपपत्तिः । किं कारणम् ? 'विधेयभावात्' । कैमर्थक्यान्नियमो भवति ? 'विधेयं नास्ती'ति कृत्वा । इह चास्ति विधेयम् । किम् ? पुषादिपाठादङ्प्राप्तः‡ तद्बाधनार्थः क्सो विधेयः । तत्राऽपूर्वो विधिरस्तु नियमो वेत्यपूर्व एव विधिः स्यान्न नियमः ।

किञ्च स्याद्यद्ययं नियमो न स्यात् ? आत्मनेपदेष्वालिङ्गने चाऽनालिङ्गने च क्सः प्रसज्येत । यथैव च क्सोऽङं बाधत एवं चिणमपि बाधेत । उपाश्लेषि कन्या देवदत्तेनेति ।

**सिद्धं तु श्लिष आलिङ्गनेऽचिण्विषये ॥ २ ॥**

सिद्धमेतत् । कथम् ? 'श्लिष आलिङ्गनेऽचिण्विषये क्सो भवती'ति वक्तव्यम् ।

**अङ्विधाने च श्लिषोऽनालिङ्गने ॥ ३ ॥**

अङ्विधाने च श्लिषोऽनालिङ्गन इति वक्तव्यम् ।

सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावा'दिति । नैष दोषः ।

प्र०—मिति । उपाश्लिषदिति । प्रत्यासत्तावत्र श्लिषिर्वर्तते, नालिङ्गने । अङ्प्राप्त इति । श्लिषेर्नाप्राप्ते अङि क्सस्यारम्भाद्बाधकत्वमित्यर्थः । यथैवेति । विध्यर्थत्वे दोषान्तरोद्भावनम् । सिद्धं त्विति । पूर्वेण क्से सिद्धे नियमार्थमेतद्वचनं कर्तव्यम् । अचिण्विषय इति । अनेन नियमार्थत्वं समर्थ्यते । अन्यथा चिण्बाधनाय तद्विषये विध्यर्थमेतत्स्यान्न तु नियमार्थम् । अङ्विधान इति । ततश्चाऽऽलिङ्गनेऽङ्प्रतिषेधात्—श्लिष आलिङ्गनेऽचिण्विषये इति नियमार्थं भवति, अन्यथा विध्यर्थमेतत्स्यात् ।

उ०—स्यादित्यर्थः । भाष्ये—आलिङ्गनेऽनालिङ्गने चेति । कर्मणि कर्मव्यतिहारे चाऽऽताम्प्रभृतिष्वित्यर्थः । तत्राऽऽलिङ्गने इष्टमेव, अन्यत्रापत्तिरेव दोषः । दोषान्तरेति । बाध्यसामान्यचिन्तया पदद्वयविषयको विधिः स्यादिति भावः । नियमार्थमिति । अचिण्विषये श्लिष आलिङ्गन एवेत्यर्थः । 'अचिण्विषय'शब्देन भावकर्मार्थक'त'शब्दभिन्नमात्मनेपदमुच्यते । अन्यथा विध्यर्थमिति । 'अचिण्विषय' इत्यनेन तद्भिन्नतिङामेव ग्रहणं स्यादित्यर्थः । तत्तु चिण्विषये विधिव्यावृत्त्यर्थं स्यादिति भावः । दाहार्थस्येति । अन्यथा तत्र चारितार्थ्यादङो बाधो न स्यादिति भावः । सानुबन्धकत्वाद्वेति । 'श्लिषु दाहे' इति पाठात् । अनुमित इति । न च क्सोऽचरितार्थः, तत्रादिपदस्यैतत्सामर्थ्येनेतरपुषादिमात्रपरत्वमित्यभिमानः । पुषादिपाठोऽपि

‡ पुषादिद्युताद्यॢदितः परस्मैपदेषु ३ । १ । ५५

## योगविभागात्सिद्धम् ॥ ४ ॥

योगविभागः करिष्यते । 'श्लिषः' । श्लिषः क्सो भवति । किमर्थमिदम् ? पुषादिपाठादङ्प्राप्नोति तद्बाधनार्थम् । तत 'आलिङ्गने' । 'आलिङ्गने च श्लिषः क्सो भवति' । इदमिदानीं किमर्थं [ स्यात् ] ? नियमार्थम् । 'श्लिष आलिङ्गन एव' । क्व मा भूत् ? उपाश्लिषज्जतु च काष्ठं च । समाश्लिषद्ब्राह्मणकुलमिति ।

यदप्युच्यते—यथैव क्सोऽङं बाधत एवं चिणमपि बाधेतेति, 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरा' नित्येवं क्सोऽङं बाधिष्यते, चिणं न बाधिष्यते । अथवा तत्र × वक्ष्यति चिण्ग्रहणस्य प्रयोजनं—'चिणेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदि'ति ॥ ४६ ॥

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ३ । १ । ४८ ॥

### णिश्रिद्रुस्रुषु कमेरुपसङ्ख्यानम् ॥ १ ॥

णिश्रिद्रुस्रुषु कमेरुपसङ्ख्यानं कर्तव्यम् + ।

> नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।
> अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः[1] ॥ इति ।

प्र०—श्लिषः क्स इति । श्लिष इत्यत्राऽनिट इत्यनुवर्तनाद्दाहार्थस्य सेटो ग्रहणाऽभावः । साऽनुबन्धकत्वाद्वा । तत्र पुषादित्वादनुमितोऽङ् प्रत्यक्षशिष्टेन क्सेन बाध्यते । अथवेति । समुदायापेक्षायां पुरस्तादपवादा इति परिभाषा नास्तीति परिहारान्तरोपन्यासः ॥ ४६ ॥

णिश्रिद्रु । कमेरिति । आर्द्धधातुके विकल्पेन णिङो विधानादणिङ्पक्षे सिचि प्राप्ते वचनम् । तत्राऽचकमतेति भवति । णिङ्पक्षे तु सन्वद्भावादचीकमतेति । 'सन्वल्लघुनि चङी'ति वक्तव्ये परग्रहणसामर्थ्यादन्यपदार्थो णिराश्रीयते, अन्यस्याऽसंभवात् । तेन चङ्परे णौ परतो यल्लघु धात्वक्षरं तत्र परतोऽभ्यासस्य सनीव कार्यं भवतीत्यर्थः ।

उ०—श्यन्नर्थः । न चाऽन्यत्रैव पाठ्यः, अशोकवनिकान्यायात् । वस्तुतः पुषादिपाठसामर्थ्यादादिपदेन तत्र ग्रहणसामर्थ्याच्चाऽङ्क्सयोः परस्मैपदे आलिङ्गनाऽनालिङ्गनविषये सर्वत्र विकल्पे प्राप्ते, आत्मनेपदे चाऽऽलिङ्गनाऽनालिङ्गनयोरविशेषेण क्से प्राप्ते द्वितीयेन नियमः—'आलिङ्गन एवे'ति । एवञ्चाऽर्थान्तरे सावकाशोऽङ् आलिङ्गने क्सेन बाध्यते । तस्यैव बाधस्याऽनुवादो भाष्ये—तद्बाधनार्थमिति । न चा'ऽऽलिङ्गने क्स एवे'ति विपरीतनियमापत्तिः, लक्ष्यानुरोधात्प्रत्ययनियमस्यैवाङ्गीकारादित्यूह्यम् । योगविभागसामर्थ्याच्च नियमेन सर्व'क्स[2]'प्राप्तिबाधः ॥ ४६ ॥

× चिण् भावकर्मणोः ३ । १ । ६६ इत्यत्र भाष्यकृत् । + कमेर्णिङ्; आयादय आर्धधातुके वा ३ । १ । ३०; ३१ १—'अचकमते'ति प्रयोक्तव्ये 'अचीकमते'ति प्रयुञ्जाना इत्यर्थः ।
२—'सर्वाङ्प्राप्ति बाधः' पा० ।

## कर्मकर्तरि च ॥ २ ॥

कर्मकर्तरि चोपसङ्ख्यानं कर्तव्यम् । कारयति कटं देवदत्तः । अचीकरत कटः स्वयमेव । उच्छ्रययति कटं देवदत्तः । उदशिश्रियत कटः स्वयमेव ।

## न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम् ॥ ३ ॥

न वा कर्तव्यम् । किं कारणम् ? कर्मण्यविधानात् । नहि कश्चित्कर्मणि विधीयते यश्चङं बाधेत । कर्तृत्वाच्च कर्मकर्तुः सिद्धम् । अस्ति च कर्मकर्तरि कर्तृत्वमिति कृत्वा चङ् भविष्यति । ननु चायं कर्मणि विधीयते—'चिण्भावकर्मणोः' [ ३ । १ । ६६ ] इति । प्रतिषिध्येते तत्र यक्चिणौ—'यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यान'मिति* ।

यस्तर्हि हेतुमण्णिच्—उदपुपुच्छत गौः स्वयमेव । अत्रापि यथा भारद्वाजीयाः पठन्ति तथा भवितव्यं प्रतिषेधेन । 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यान'मिति* ॥ ४८ ॥

प्र०—नाकमिष्ट सुखमिति । नाकं स्वर्गमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैर्यैः 'कमेर्लुङि किं रूपं भवती'ति पृष्टैः 'अचकमते'त्युक्तम् । यैस्तु 'अचीकमते'त्युक्तं ते पत्काषिणो यान्ति । लक्षणाऽस्मरणान्निन्दार्थवादोऽयं लक्षणस्मरणादरार्थः । अन्ये त्वाहुः—अकमिष्टेति यैरुक्तं त एवोपचारादकमिष्टशब्देनानुकरणशब्देनोच्यन्ते । अनुकार्यानुकरणयोर्भेदस्याऽविवक्षितत्वाद्विभक्तिर्न कृता । ते सुयुक्तैरपि वडवारथैर्गच्छन्तः सुखं न प्राप्नुवन्ति, अपशब्दोच्चारणात् । ये त्वचीकमतभाषिणस्ते पत्काषिणोऽपि सुखं यान्तीति ।

कर्मकर्तरि चेति । कर्तर्युच्यमानश्चङ्कर्मकर्तरि न प्राप्नोतीति वचनम् । उदपुपुच्छतेति । पुच्छमुदस्यति उत्पुच्छयते गौः, तत्र यदान्तर्भावितण्यर्थत्वादस्य गवा सकर्मकत्वं भवति तदा 'उत्पुच्छयते गा'मिति भवति । पुनर्गोरेव यदा सौकर्यातिशयेन कर्तृत्वं विवक्ष्यते भूतकालश्च तदैतदुदाहरणम् ॥ ४८ ॥

उ०—णिश्रिद्रुस्रुभ्यः । ननु णिङ्भावपक्षेऽपि सन्वत्त्वं दुर्वारं, तत्र णावित्यनुवर्तेरत आह—सन्वल्लघुनीति । अन्ये त्वाहुरिति । अत्राऽरुचिस्तु भाष्याऽननुगुणत्वम् । वार्तिकोत्तरं पाठेन तस्तुत्यर्थस्वस्य स्वरसतः प्रतीतेः । पूर्वव्याख्यायां विशेषलक्षणस्मरणप्रयुक्ताऽधिकसुखप्राप्तिः । 'कमेर्लुङि कीदृशं रूप'मिति प्रश्ने स्वरसतः कम्प्रकृतिके लुङीत्यर्थके तस्य साधुत्वेऽप्यसमञ्जसोत्तरत्वान्न्यूनसुखप्राप्तिः । एवञ्च सामान्यशास्त्राऽनुगतलक्ष्यप्रयोगाऽपेक्षया विशेषलक्षणानुगतशब्दप्रयोगे धर्माधिक्यमित्यस्य भाष्यस्य तात्पर्यम् । कर्मकर्तरीति । कर्मवद्भावाच्चिणा बाधः स्यादित्यभिमानः । भाष्ये—कर्मणि विधीयते य इति । कर्मवद्भावप्राप्त इति भावः । उत्पुच्छयते गामिति । 'कर्तुरीप्सिततम'मिति कर्मत्वं बोध्यम् ॥ ४८ ॥

* ३ । १ । ८६ वा० १

१—व्याकरणान्तरलक्षणमपि मान्यमेवेत्यनेन सूचयति भाष्यकारः ।

## अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ३ । १ । ५२ ॥

अस्यतिग्रहणं किमर्थम् ?

**अस्यतिग्रहणमात्मनेपदार्थम् [ पुषादित्वात् ] ॥ १ ॥**

अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम् । किमुच्यत आत्मनेपदार्थमिति, न पुनः परस्मैपदार्थमपि स्यात् ? 'पुषादित्वात्' । पुषादिपाठात्परस्मैपदेष्वङ् भविष्यति† ।

**कर्मकर्तरि च ॥ २ ॥**

कर्मकर्तरि चोपसङ्ख्यानं कर्तव्यम् । पर्यास्थेतां कुण्डले स्वयमेव ॥ अत्रापि 'न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्ध'मित्येव‡ ॥ ५२ ॥

## जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ३ । १ । ५८ ॥

इदं ग्लुचिग्रहणं ग्लुञ्चिग्रहणं च क्रियते । अन्यतरच्छक्यमकर्तुम् । कथम् ? यदि तावद् ग्लुचिग्रहणं क्रियते ग्लुञ्चिग्रहणं न करिष्यते । तेनैव सिद्धं न्यग्लुचत् । न्यग्लोचीत् । इदमिदानीं ग्लुञ्चे रूपं—न्यग्लुञ्चीत् ।

अथ ग्लुञ्चिग्रहणं क्रियते ग्लुचिग्रहणं न करिष्यते तेनैव सिद्धं न्यग्लुचत् न्यग्लुञ्चीत् । इदमिदानीं ग्लुचे रूपं न्यग्लोचीदिति ॥ ५८ ॥

---

प्र०—अस्यति । पुषादय आगणान्तात् । अन्तराले वृत्करणं रधादिसमाप्त्यर्थम्, न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह—अस्यतिग्रहणमिति । अत्रापीति । आतिदेशिकस्य कर्मकार्यस्य कस्यचिदत्राऽविधानात् स्वाश्रयं कार्यं प्रतिबन्धकाऽभावात् प्रवर्तत एवेति भावः ॥ ५२ ॥

जॄस्तम्भु । अन्यतरदिति । अनेकार्थत्वाद्धातूनामत्र विषयेऽर्थभेदो न प्रयोजक उभयोरुपादानस्येति भावः । यत्तूभयोपादानसामर्थ्यात् ग्लुञ्चेरङि नलोपो न भवति न्यग्लुञ्चदिति कैश्चिदभ्यधायि, तद्भाष्यविरोधादनादरणीयम् ॥ ५८ ॥

---

उ०—अस्यतिवक्ति । ननु परस्मैपदेष्वप्यङ्दर्शनादात्मनेपदार्थमित्ययुक्तमत आह—पुषादय आगणान्तादिति । आतिदेशिकस्येति । यकश्चिलना बाधाद्द्विवचने चिणोऽप्राप्तेः । आत्मनेपदमपि 'उपसर्गादस्यत्यूह्यो'रिति वार्त्तिकेन सिद्धमित्यर्थः ॥ ५२ ॥

जॄस्तम्भु । ग्लुचेः स्तेयकरणार्थत्वात्कथं सिद्धिरत आह—अनेकार्थत्वादिति ॥ ५८ ॥

---

१—नेदं सर्वत्र । † पुषादिद्युता० ३ । १ । ५५ ‡ ३ । १ । ४८ वा० ३

## चिणते पदः ॥ ३ । १ । ६० ॥

अयं तशब्दोऽस्त्येवात्मनेपदम्, अस्ति परस्मैपदम्, अस्त्येवैकवचनम्, अस्ति बहुवचनम् । कस्येदं ग्रहणम् ? यः पदेरस्ति । कश्च पदेरस्ति ? पदिरयमात्मनेपदी × ॥ ६० ॥

## चिण्भावकर्मणोः ॥ ३ । १ । ६६ ॥

'चि'णिति वर्तमाने+ पुनश्चिण्ग्रहणं किमर्थम् ? नेत्येवं* तदभूद्विध्यर्थमिदम् ॥ अथवा वेत्येवं† तदभून्नित्यार्थमिदम् ॥ अथवा चिणिति वर्तमाने पुनश्चिण्ग्रहणस्यैतत्प्रयोजनं—'चिणेव यथा स्याद्यदन्यत्प्राप्नोति तन्माभू'दिति ॥ ६६ ॥

## सार्वधातुके यक् ॥ ३ । १ । ६७ ॥

इह पश्यामः कर्मणि द्विवचनबहुवचनान्युदाह्रियन्ते—'पच्येते ओदनौ' 'पच्यन्ते ओदना' इति । भावे पुनरेकवचनमेव—आस्यते भवता, आस्यते भवद्भ्याम्' आस्यते भवद्भिरिति । केनैतदेवं भवति ?

---

प्र०—चिण्भाव । नेत्येवमिति । प्रतिषेधसंबद्धं तदभूदित्यर्थः । नन्वत्र प्राप्त्यभावान्नेति नापेक्षिष्यत इत्याह—अथवेति । विकल्पोऽपि पूर्वमेव निषेधेन निवर्तितत्वान्नाऽपेक्षिष्यत इत्याह—अथवेति । तेनोपाश्लेषीति क्सो न भवति ॥ ६६ ॥

सार्वधा । इह पश्याम इति । वक्ष्यमाणस्य वाक्यार्थस्य दृशिक्रियायां कर्मत्वं, यथा 'पश्य मृगो धावती'ति मृगकर्तृकायाः सरणक्रियायाः । केनैतदिति । इह क्रियाप्रधानमाख्यातम् । सा च क्रिया साध्यरूपत्वान्निवृत्तभेदा । तदुक्तम्—

निवृत्तभेदा सर्वैव क्रियाऽऽख्यातेऽभिधीयते ।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना ॥' इति ।

---

उ०—सार्वधातुके यक् । दृशेः कर्मणि नियताकाङ्क्षत्वात्तद्दर्शयति—वक्ष्यमाणस्येति । वाक्यार्थः—क्रिया । सा चेह केनैतदेवम्भवतीत्येतद्रूपा । सरणं—धावनम् । अध्याहृतधावनादिति । पदोपस्थाप्यस्य कर्मत्वमित्यन्यत्रोक्तम् । ननु भावस्य क्रियारूपस्य सङ्ख्ययाऽयोगान्न द्विवचनादिकं भविष्यति । कर्मणि तु शक्तिशक्तिमतोरभेदोपचाराच्छक्तिमतश्च सङ्ख्यायोगाद्द्विवचनादिकं सेत्स्यतीत्यत आह—इहेति । श्रुतेरिति । साधनादिभेदाद्भिन्नत्वेऽपि श्रुतेराख्यातशब्दात् प्रविभागकल्पना भेदावगमरूपाऽशक्येत्यर्थः । कथं तर्हि द्विवचनादिकं, तत्राह—तत्रेति । साधनभेदादिति । साधनभेदकृतभेदारोपादित्यर्थः । अथैकेति । शब्दशक्तिस्वभावादिति भावः ।

---

× तेनात्मनेपदप्रथमपुरुषादेशस्य ग्रहणमिति दिक् ।　　+ चिणते पदः ३ । १ । ६०

* न रुधः ३ । १ । ६४　　† दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३ । १ । ६१

**कर्माऽनेकम्, तस्याऽनेकत्वाद्द्विवचनबहुवचनानि भवन्ति । भावः पुनरेक एव । कथं तर्हीह द्विवचनबहुवचनानि भवन्ति—पाकौ पाका इति ? आश्रयभेदात् । यदसौ द्रव्यं श्रितो भवति भावस्तस्य भेदाद्द्विवचनबहुवचनानि भवन्ति । इहापि तर्हि यावन्तस्ते तां क्रियां कुर्वन्ति, सर्वे ते तस्या आश्रयभूता भवन्ति, तद्भेदाद्द्विवचनबहुवचनानि प्राप्नुवन्ति ।**

प्र०—तत्र यथा साधनभेदात्कर्तृकर्माभिधायिनि लकारे द्विवचनबहुवचने भवतस्तथा भावाभिधायिन्यपि प्रसजतः । अथैकपदवाच्यसाधनसङ्ख्याश्रये द्विवचनबहुवचने भवत इति पक्षस्तदा पाकौ पाका इत्यत्र न प्राप्नुतः, साधनस्य घञाऽनभिधानादिति प्रश्नः । कर्मानेकमिति । कर्मशक्त्याधारो द्रव्यमनेकम् । शक्तिशक्तिमतोश्च शब्देन भेदो न प्रतिपाद्यत इति शक्त्यभिधायिनाऽप्याख्यातेनौदनः पच्यत इति शक्तिमद्द्रव्यवाचिन ओदनशब्दस्य सामानाधिकरण्यं भवति । भावः पुनरिति । भेदाऽभावलक्षणमभेदैकत्वं भावस्य, न त्वेकत्वसङ्ख्याऽऽख्यातवाच्यस्य भावस्याऽस्ति । तस्याद्रव्यधर्मत्वादसत्त्वभूतत्वाच्चाख्यातवाच्यस्य भावस्य । आश्रयभेदादिति । गुडतिलौदनादीनामाश्रयाणां भेदादाश्रितोऽपि पाको भिद्यते । घञादिभिश्च सत्त्वरूपोऽर्थोऽभिधीयत इति द्रव्यधर्मसङ्ख्याभेदाश्रयो वचनभेदो न विरुध्यत इति भावः । इहापीति । आख्यातवाच्यस्याऽपि भावस्याश्रयभेदाद्भेदोऽस्तु । ततश्च वचनभेदप्रसङ्ग इत्यर्थः । पाकविशेषानिति । केचित्पाकशब्दं कर्मसाधानं व्याचक्षते । पक्तव्यविशेषान् गुडादीनित्यर्थः । तत्त्वयुक्तम् । असंज्ञायां कर्मणि घञो दुर्लभत्वात् । तस्मादाश्रयप्रकारादिभेदभिन्नान् पाकविशेषानित्यत्राऽयमर्थः । अथवा

उ०—तदा पाकाविति । क्रियारूपस्य स्वतः सङ्ख्यासम्बन्धाऽभावादिति तात्पर्यम् । ननु कर्मपदस्य शक्त्यभिधायित्वाच्छक्तेश्च विभक्तिवाच्याया असत्त्वभूतत्वात्सङ्ख्यायोगाऽभावेन'ऽनेक'मित्यनुपपन्नमत आह—कर्मशक्तीति । शब्देनेति । न हि'घटस्य शुक्ल' इतिवत् 'घटस्य कर्मे'ति प्रयोगोऽस्तीति भावः । तदेवाह—सामानाधिकरण्यमिति । कर्मादिपदैः शक्तिमदभेदमापन्नैव शक्तिरुच्यते । अत एव 'कर्मत्व'मिति भावप्रत्ययेन शक्तिरुच्यते । प्रवृत्तिनिमित्तेन व्यक्तेस्तादात्म्यसम्बन्धस्याऽङ्गीकारादिति तत्त्वम् । एवञ्च कर्मणि विधीयमानाऽऽख्यातेनाऽपि तथैव शक्तिरुच्यते इति सामानाधिकरण्योपपत्तिरिति भावः । ननु भावस्यैकत्वयोगे द्वित्वादियोगोऽपि स्यादत आह—भेदाऽभावेति । परे त्वस्त्येवैकत्वसङ्ख्या क्रियायाम् । असत्त्वन्त्वनारोपितद्व्यादिसम्बन्धाऽभावमात्रेण । तदेव 'एक एवे'त्येवकारेण भाष्ये ध्वनितमित्याहुः । आधारद्रव्याणाम्भेदेऽपि कुतः पाकादेर्भेदोऽत आह—गुडतिलेति । आश्रितः पाकोऽपीत्यन्वयः । आश्रयभेदात्तत्रापि भेदाऽध्यवसाय इति भावः । नन्वेवं तिङ्यपि द्विवचनादि स्यान्न स्याद्वा कृत्यपीत्यत आह—घञादिभिरिति । तिङ्वाच्यस्तु न सत्त्वभूत इति भावः । उक्तार्थोऽज्ञानवतश्चोद्यमित्याह—आख्यातेति । वस्तुतः पूर्वभाष्येण कृत्यपि तदनुपस्थाप्यसाधनगताया अपि सङ्ख्याया आरोपेण 'द्विवचनादी'त्युक्तम् । तत्र शङ्का समञ्जसैव । घञो दुर्लभत्वादिति । 'यो गुडस्ये'त्यादि वक्ष्यमाणभाष्यविरोधादित्यपि बोध्यम् । एतेनाऽथवेत्यपि न समञ्जसम् । एवञ्चाऽऽश्रयप्रकारादिकृतभेदानां पाकशब्दादवगतिसम्भवेन युक्तं बहुवचनं, न तु तिङन्ते

१ 'आश्रयाः' पा० ।

एवं तर्हीदं तावदयं प्रष्टव्यः 'किमभिसमीक्ष्यैतत्प्रयुज्यते—पाकौ पाका इति ? यदि तावत्पाकविशेषानभिसमीक्ष्य, यश्चौदनस्य पाकः, यश्च गुडस्य, यश्च तिलानां बहवस्ते शब्दा सरूपाश्च तत्र युक्तं बहुवचनमेकशेषश्च । तिङभिहिते चाऽपि तदा भावे बहुवचनं श्रूयते । तद्यथा—'उष्ट्रासिका आस्यन्ते', 'हतशायिकाः शय्यन्त' इति ।

प्र०—संज्ञाग्रहणस्य प्रत्याख्यातत्वादसंज्ञायामपि कर्मणि घञ्भवति । उष्ट्रासिका आस्यन्ते इति । अत्राश्रयाणामुष्ट्राणां भेदादनेकप्रकारयुक्तान्यासनानि भिन्नानि, तत्सामानाधिकरण्याचाख्यातवाच्यभावभेदादास्यन्त इति बहुवचनमित्यर्थः । इवशब्दप्रयोगमन्तरेणाऽपि चेवार्थगतिर्भवति । तदयमर्थः—यादृशान्युष्ट्राणामनेकप्रकाराण्यासनानि तादृशानि देवदत्तादिभिः क्रियन्त इति । 'भवद्भिरास्यते' इत्यत्र त्वाश्रयभेदादाश्रितभेदस्य प्रतिपन्नत्वात् प्रयोजनाऽभावाद्भावो भेदं नोपादत्त इत्येकवचनमेव भवति । यथा 'ताम्रः पलाशेषु बभूव राग' इति । न च सर्वत्राश्रयभेदादाश्रितभेदस्य प्रतीतिः, 'घटान् पचती'त्यादौ पाकस्याऽभिन्नस्यैवाऽवगमात् । केचित्तूष्ट्रासिका आस्यन्त इति कर्मणि लकारमिच्छन्ति, उष्ट्रासिकालक्षणस्य भावस्य कर्मत्वात् । यथा 'गोदोहः सुप्यते' इति । एवं तु विवक्षान्तरे भवत्येवेति भाष्यकारेण भावेऽपि लविधाने बहुवचनमुपपादितम् । तेऽपि बहव इति । भिन्नकालत्वादेवेति भावः । तत्र युक्तमिति । शास्त्रेणैकशेषे सत्येकस्याऽनेकार्थाभिधायित्वादन्तरेण वैकशेषारम्भं सरूपाणामेकस्यैव स्वभावतोऽनेकार्थत्वादिति भावः । तिङभिहित इति । नह्येकं तिङन्तमनेककालभावप्रत्यायने समर्थं किंचिदस्तीति

उ०—तत्कृतभेदाऽनवगमके इति भावः । यत्र त्वस्ति तत्कृतभेदावगमस्तत्र भवत्येव बहुवचनमित्याह भाष्ये—तिङभिहिते चापीति । ननू'ष्ट्रासिके'त्यादावाख्यातवाच्ये भावे कथं भेदावगमोऽत आह—अत्राश्रयाणामिति । तत्साम्याच्चेति । न ह्येकासने तावत्साम्यसम्भवः, तत्प्रतिपादने फलश्चेत्यर्थः । 'तत्सामानाधिकरण्याच्चे'ति पाठेऽप्ययमेवार्थः । उपमानोपमेययोः सामानाधिकरण्यादित्यर्थः । ननु साम्यवाचकेवाद्यभावात्कथं तत्प्रतीतिरत आह—इवेति । 'परत्र परशब्दः प्रयुक्त' इति न्यायादिति भावः । प्रयोजनाऽभावादिति । प्रकृते तु साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भावः । यथेति । पलाशरूपाश्रयाऽनेकत्वेऽपि 'राग' इत्येकवचनमेवेति भावः । वस्तुतस्तत्रैकजातीयरागप्रतिपादनायैकवचनमिति बोध्यम् । किञ्चाश्रयभेदादाश्रितभेदप्रतीतेरसार्वत्रिकत्वादपि न सा भावाऽऽख्याते द्विवचनादिनियामिकेत्याह—न चेति । एवञ्चासिका इत्यादिक्रियाविशेषणम्प्रथमान्तम् । क्तिन्नधिकारस्थण्वुलः स्त्रीत्वस्य सत्त्वेन'सामान्ये नपुंसक'मित्यस्याऽप्रवृत्त्या न क्लीवत्वम् । उपमानोष्ट्रासनाऽभिन्नान्यासनानीति बोधः । बहुत्वाऽवधारणाच्च नैकवचनमिति बोध्यम् । कर्मणीति । अत्र पक्षे आख्याताऽवयवाऽऽसादेः परिच्छेदकत्वनिरूपके आसनादौ वृत्तिः । परिच्छेदकत्वरूपफलाश्रयत्वात्कर्मत्वम्, दृष्टान्ते व्याप्त्याश्रयादिव । परिच्छेदकत्वञ्च सादृश्येन । नाऽयं भाष्यार्थ इत्याह—एवन्त्विति । विवक्षान्तरे—आसेः परिच्छेदत्वार्थरूपविवक्षाविशेषे । 'भावेऽपि लविधाने यदुपपादितं बहुवचनं भाष्यकारेण तन्नोपपादितं स्या'दिति शेषः । एवञ्च यथा पाकप्रकारानभिसमीक्ष्य पाकावित्यादि द्विवचनाद्येवमासनप्रकारानभिसमीक्ष्याऽऽस्यन्त इत्यादि भावे बहुवचनमिति भाष्यार्थः । आख्यातवाच्येऽसत्त्वं लिङ्गकारकाऽन्वयित्वमेव

अथ कालविशेषानभिसमीक्ष्य, यश्चाद्यतनः पाकः, यश्च ह्यस्तनः, यश्च श्वस्तनस्तेऽपि बह्वः शब्दाः सरूपाश्च तत्र युक्तं बहुवचनमेकशेषश्च । तिङभिहिते चापि तदा भावेऽसारूप्यादेकशेषो न भवति—आसि आस्यते आसिष्यते ।

अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य तिङभिहितस्य च । कृदभिहितो भावो द्रव्यवद्भवति । किमिदं 'द्रव्यव'दिति ? द्रव्यं क्रियया समवायं गच्छति । कं समवायं [ गच्छति ][1] ? द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमुपैति । तद्वच्चाऽस्य भावस्य कृदभिहितस्य भवति—'पाको वर्त्तत' इति । क्रियावन्न भवति । किमिदं क्रियावदिति ? क्रिया क्रियया समवायं न गच्छति—पचति पठतीति । तद्वच्चास्य कृदभिहि-

प्र०—भिन्नकालासनक्रियाप्रत्यायनाय भिन्ना एव शब्दाः प्रयुज्यन्त इति भावः । द्रव्यवदिति । द्रव्यत्वेन प्रसिद्धो यो घटादिस्तद्वदयं भावो भवति लिङ्गसङ्ख्यासाधनसंबन्धप्रतिपत्त्या । तत्र 'वस्तूपलक्षणं यत्रे'ति द्रव्यलक्षणयोगेऽपि प्रसिद्धचप्रसिद्धचपेक्ष उपमानोपमेयभावः ।

क्रिया क्रिययेति । ननु 'भवति पचति' 'पश्य मृगो धावती'ति कर्तृकर्मभावेन क्रिया क्रियया संबध्यत एव । एवं तर्हि करणादिरूपेण समवायं न गच्छतीति विवक्षितम् । ननु साध्यत्वात् क्रियायाः कथं क्रियान्तरं प्रति कर्मकर्तृभावः । विषयभेदादेकस्याप्यर्थस्य साध्यसाधनभावसंबन्धसंभवाददोषः । तदुक्तं हरिणा—

'तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया ।
सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति ।।
'मृगो धावति पश्ये'ति साध्यसाधनरूपता ।
यथा विषयभेदेन सरणस्योपपद्यते' ।। इति ।

उ०—बोध्यम् । भिन्नकालत्वादिति । भिन्नकालार्थवाचकत्वादित्यर्थः । नन्वेकशेषमात्रेणाऽविद्यमानाऽनेकार्थाऽभिधानशक्तिः कथमत आह—अन्तरेण चेति । तिङभिहिते चापीत्यादि भाष्ये । तिङन्तार्थे भावे तथात्वेऽपि कालभेदेन भेदेऽप्यसारूप्यादेकशेषाऽभावेन न बहुवचनादीत्यर्थः । तदेवोपपादयति—न ह्येकमिति । इतः परं भिन्नपदवाच्यसाधनादिकृतभेदेन भेदावगमः कृदन्तेऽस्ति, न तिङन्ते इत्यत्र बीजभूतं तयोर्वैषम्यमाह—अस्ति खल्वपीति । भाष्ये—ननु लिङ्गसङ्ख्याद्यन्वयित्वमेव द्रव्यत्वमिति वतिरनुपपन्नोऽत आह—तत्रेति । भाष्ये । क्रियया समवायमिति । क्रियानिरूपितकर्मादिसंज्ञासमानाधिकरणशक्तिभिः सम्बन्धं गच्छतीत्यर्थः । द्रव्यं क्रियाऽभिनिर्वृत्तौ साधनत्वमित्यस्य कारकशक्तिमत्त्वमित्यर्थः । करणादिरूपेणेति । कृदन्ते 'पाकेन वैरं कृत'मित्यादौ तथान्वयादिति भावः । ननु साध्यत्वादिति । असिद्धस्य जनकत्वाऽसम्भवादिति भावः । सिद्धा त्विति । यन्निरूपितं सिद्धत्वं तमेव प्रति पुनः साध्यत्वं नेत्यन्वयः । एवञ्चाऽन्यनिरूपितसिद्धत्वेऽप्यन्यनिरूपितं साध्यत्वं सम्भवत्येवेति भावः । तथा विषयेति । तथा सति विषयभेदेनेत्यर्थः । क्रियाफलत्वा-

१—क्वचिन्न ।

**तस्य न भवति—'पाको वर्त्तत' इति।**

**अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य, तिङभिहितस्य च। तिङभिहितेन भावेन कालपुरुषोपग्रहा अभिव्यज्यन्ते, कृदभिहितेन पुनर्न व्यज्यन्ते।**

**अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य, तिङभिहितस्य च। तिङभिहितो भावः कर्त्रा संप्रयुज्यते, कृदभिहितः पुनर्न संप्रयुज्यते।**

प्र०—तत्र कर्तृकर्मत्वमाख्यातवाच्यस्य भावस्य न विरुद्धम्। तथा हि भवतिक्रियापेक्षमेव तस्य कर्तृत्वम्। सर्वश्चार्थः स्वेन रूपेण भवतीति भवने कर्तृत्वमुपपन्नम्। एवं कर्मापि क्रियाफलत्वात् प्रधानमिति कर्मत्वमपि तस्योपपद्यते। करणत्वादीनि तु सर्वात्मना गुणभावमन्तरेण नोपपद्यन्त इति प्राधान्येनाऽत्यन्तविरोधात्तस्य नोपपद्यन्ते। कालेति। पुरुषशब्देन तदर्थः, प्रत्यक्पराग्भावश्चोच्यते। उपग्रहः—अनेकप्रकारः स्वार्थपरार्थत्वादिकः। कृदभिहित इति। ननु कृदभिहितस्यापि भावस्य भवति कर्त्रा योगः, यथा 'ब्राह्मणानां प्रादुर्भाव' इति। तत्राहुः—एकपदवाच्येन कर्त्रा न युज्यते, यथा पचतीति कर्ता वाच्यो, नैवं पाक इति। शुद्धस्यैव भावस्य प्रत्यायनात्। अथवा घञादिभिः सिद्धरूपता भावस्याभिधीयत इति तेन रूपेण कर्त्रायोगाऽभावः। धातुरूपप्रतिपाद्यया तु साध्यतया कर्त्रा योगो भवति। अथवोपलक्षणभावेन भावः कर्त्रा युज्यते कृत्सु 'पाचक' इति। तिङ्षु तु पचतीति साध्यमानतया प्राधान्येन। तत्र कृत्सु प्राधान्येन कर्त्रा योगो नास्तीत्ययमत्रार्थः। इदं विचार्यत इति। विचरति नाना गच्छति यद्वस्तु तद्विचार्यते नानात्वं नीयत इत्यर्थः। इहान्वयव्यतिरेकाश्रया शास्त्रीया पदावयवानामावापोद्धारिक्यर्थवत्ता।

उ०—दिति। अर्श आद्यचा तद्वत्त्वादित्यर्थः। तस्य आख्यातवाच्यभावस्याऽन्वयस्त्वीदृशे विषयेऽन्यतराऽऽकाङ्क्षयैव, 'ज्योतिष्टोमेन यजेते'त्यादौ करणत्वेनाऽन्वयसत्त्वेऽपि स्वघटितपदाऽवाच्यक्रियायां तत्त्वाऽभाव एवेति बोध्यम्। गुणभावमिति। इदं चिन्त्यं, कर्मणः क्रियाफलाश्रयत्वादिव कर्तुः क्रियाश्रयत्वादिव च प्राधान्यवत् करणस्यापि स्वव्यापाराऽव्यवधानेन फलोत्पादकतयाऽन्यकारकापेक्षया प्राधान्यमस्त्येव। न हि कर्तृकर्मणोः प्राधान्यमेवाश्रयणीयं नेतरस्येदृशमित्यत्र मानमिति। तस्मात्स्वभावत एव तदन्वयाऽभाव इति बोध्यम्। एवं च करणत्वोद्देश्यत्वावधित्वैरन्वयित्वेन कृदभिहितो भावो द्रव्यधर्मैव, तिङभिहितस्तु तद्विरुद्ध एवेति बोध्यम्। अस्यैवाऽर्थस्य साधकं वैषम्यान्तरं दर्शयति—कालपुरुषेत्यादि। असत्त्वभूताया एवैतत्सम्भव इति भावः। प्रत्यक्त्वमुत्तमे, पराक्त्वं मध्यमे। प्रत्यक्त्वं—स्वगतत्वं, पराक्त्वं—संबोध्यगतत्वम्। युष्मदस्मद्व्यतिरेकेणापि मध्यमोत्तमाभ्यां तद्बोधः। स्वार्थत्वपरार्थत्वादिकमपि बोधविषय इति भावः। भाष्ये—कर्त्रा सम्प्रयुज्यत इति। तिङन्तवाच्यो भावो नियमेन कर्त्राकाङ्क्षः, कृदुपात्तस्तु न तथा। न हि 'पाको' 'राग' इत्युक्ते 'कस्ये'ति नियमेन कर्त्राकाङ्क्षा दृश्यते। नाऽपि तस्य नियमेन प्रयोगो दृश्यते। इदमेव ध्वनयितुं 'सम्' 'प्रे'त्युपसर्गद्वयोपादानमित्यर्थो मम भाति। यतश्च क्रियात्वं सामान्यमुभयत्राऽपि, साध्यत्वसिद्धत्वकृतश्च पूर्वोक्तो विशेषो दृश्यते तथाऽयमपि। यत्तिङर्थस्य भावस्य लिङ्गग्राह्यसाधनकृतसङ्ख्याद्ययोग्यता, कृदर्थस्य तु तद्योग्यतेति भाष्यार्थः। ब्राह्मणानामिति—कर्तरि षष्ठी। एकपदेति। इयं व्याख्या

यावता किंचिच्च सामान्यं कश्चिच्च विशेषो युक्तं यदयमपि विशेषः स्याल्लिङ्गकृतः सङ्ख्याकृतश्चेति ।

इदं विचार्यते—भावकर्मकर्तारः सार्वधातुकार्था वा स्युर्विकरणार्था वेति ? कथं च सार्वधातुकार्थाः स्युः कथं वा विकरणार्थाः ? 'भावकर्मवाचिनि सार्वधातुके यग्भवति, कर्तृवाचिनि सार्वधातुके शब्भवती'ति* सार्वधातुकार्थाः । 'भावकर्मणोर्यग्भवति सार्वधातुके' 'कर्तरि शब्भवति सार्वधातुक'* इति विकरणार्थाः ॥ कश्चात्र विशेषः ?

**भावकर्मकर्तारः सार्वधातुकार्थाश्चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वात् ॥ १ ॥**

भावकर्मकर्तारः सार्वधातुकार्थाश्चेदेकद्विबहुषु नियमस्यानुपपत्तिः† । किं कारणम् ? 'अतदर्थत्वात्' । नहि तदानीमेकत्वादय एव विभक्त्यर्थाः । किं तर्हि ? भावकर्मकर्तारोऽपि ॥ सन्तु तर्हि विकरणार्थाः ।

प्र०—तौ चाऽन्वयव्यतिरेकावेकतरस्यापि न व्यवतिष्ठेते । सार्वधातुकमन्तरेणाऽपि कर्त्राद्यवगमात् । यथा गच्छ ग्रामम्, अशायि भवता, अकारि कट इति । तथा विकरणाऽभावेऽपि कर्त्राद्यवगतिरस्ति—'लविषीष्ट क्षेत्र'मिति । उभयाभावेप्यस्ति —'अजागर्भवा'निति । क्वचित्तूभयसंनिधौ कर्त्राद्यवगतिः—पचति पच्यत इति । तत्र निश्चयाऽभावाद्विचारः क्रियते—कः पक्ष आश्रीयमाणः शास्त्रं न विरुणद्धीति ।

एकद्विबहुष्विति । 'एकत्व एवैकवचनं नार्थान्तरे'इति यो नियमः स नोपपद्यते, कर्त्रादीनामपि तदर्थत्वादित्यर्थः । अतदर्थत्वादिति । सामर्थ्यादत्रावधारणमाश्रीयते न तान्येवैकत्वा-

उ०—भाष्याऽननुगुणा, 'पाचक' इति कृदन्ते तस्यापि सत्त्वात् । न च तत्र न कृदभिहितो भावः, पचतीत्यत्रापि न तिङभिहितो भाव इति तुल्यम् ।

उपलक्षणभावेनेति । विशेषणत्वेनेत्यर्थः । अत्रापि पक्षे भाष्यस्वरसश्चिन्त्य एव, पाकादिशब्दोपक्रमेणैव भाष्यस्य प्रवृत्तेः । भाष्ये—सार्वधातुकार्था इत्यत्र सार्वधातुकपदं तिङुपलक्षकम् । नानापक्षोत्थितौ बीजमाह—इहेति । शास्त्रीयाऽर्थवत्ता पदाऽवयवानामावापोद्धारिकी अन्वयव्यतिरेकाश्रयेत्यन्वयः । आवापः—प्रक्षेपः । उद्धारः—अपनयस्तत्कृता । अत एव भाष्यकारः शास्त्रमेव पक्षद्वयसाधकत्वेनोपन्यसिष्यति । सार्वधातुकमिति । इदञ्च तिङ्परम् । अत एवाऽग्रे 'गच्छे'त्युदाहरणं सङ्गच्छते । एकद्वीति । 'द्व्येकयो'रित्यादिसूत्रेष्वित्यर्थः । ननु 'अतदर्थत्वा'दित्यस्य तदर्थत्वाऽभावादित्यर्थो न युक्तः, एकत्वाद्यर्थत्वस्य सत्त्वादित्यत आह—सामर्थ्यादिति । न तान्येवेति । न तानि एवाऽर्थो यस्येति विग्रह इत्यर्थः ।

* कर्तरि शप् ३ । १ । ६८ † बहुषु बहुवचनम्; द्व्येकयोर्द्विवचनैकवचने १।४।२१;२२

**विकरणार्था इति चेत् कृताऽभिहिते विकरणाऽभावः ॥ २ ॥**

विकरणार्था इति चेत्कृताऽभिहिते विकरणो न प्राप्नोति—धारयः पारय इति‡ । किमुच्यते 'कृताऽभिहित' इति, न लेनाप्यभिधानं भवति ? अशक्यं लेनाऽभिधानमाश्रयितुम् । पक्षान्तरमिदमास्थितं 'भावकर्मकर्तारः सार्वधातुकार्था वा स्युर्विकरणार्था वे'ति, यदि च लेनाऽप्यभिधानं स्यान्नेदं पक्षान्तरं स्यात् । कथमशक्यं यदा भवानेवाह—'लः कर्मणि च भावे चाऽकर्मकेभ्यः' [ ३ । ४ । ६९ ] इति ? एवं वक्ष्यामि 'लः कर्मणो भावाच्चाऽकर्मकेभ्य' इति । यस्मिंस्तर्हि ले विकरणा न श्रूयन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति ? क्व च न श्रूयन्ते ? य एते लुग्विकरणाः श्लुविकरणाश्च । अत्राप्युक्ते कर्तृत्वे लुग्भविष्यति । यस्मिंस्तर्हि ले विकरणा नैवोत्पद्यन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति ? क्व च नैवोत्पद्यन्ते ? लिङ्लिटोः ।

प्र०—दीन्यर्थः । अपि तु कर्त्रादयोऽपीत्यर्थः । कृताऽभिहित इति । क्वचिदेव कृति विकरणो विधीयते न सर्वत्रेति कृत एव 'कर्तरि कृ'दिति कर्तार्थो निर्दिश्यते, तेनैव च कर्तुरुक्तत्वात्तदभिधायी विकरणो न प्राप्नोति । ततश्च 'धारय'इत्यादावसति शपि गुणो न स्यात् । न लेनापीति । 'लः कर्मणि चे'ति वचनाल्लादेशैरपि कर्त्रादेरभिधानमिति तत्रापि विकरणाऽप्राप्तिः किं न चोद्यत इत्यर्थः । ततो 'लः कर्मणी'ति वचनात्कर्त्रादीनां विकरणार्थत्वं नैव संभवतीत्युक्तं भवति । एवं वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । लः कर्मणीति । कर्मणि वर्त्तमानाद्विकरणादिति व्याख्यास्यत इत्यर्थः । तत्र कर्माभिधायी विकरणः 'कर्म'शब्देन भाष्य उक्तः । ननु सार्वधातुकनिमित्तो लकारः, तत्कथमेवं व्याख्यायते । एवं तर्हि कृते लकारे सार्वधातुक इति विषयसप्तम्याश्रयणात्

उ०—तत्पदार्थमाह—एकत्वादीनीति । तन्मात्रार्थत्वाऽभावादित्यर्थ इति तात्पर्यम् । ननु विकरणानां तदर्थत्वे 'कृताऽभिहित' इत्यनुपपन्नमत आह—क्वचिदेवेति । एवञ्च सर्वत्र विकरणाऽभावात् कृतां तेषु शक्तिकल्पनाऽऽवश्यकीति भावः । विकरणार्थत्वपक्षे शङ्कते भाष्ये—किमुच्यते कृतेत्यादिना । इतर आह—न शक्यमिति । तत्र तदुक्तदूषणे 'कृते'त्ययुक्तम्, 'अभिहिते' इत्येव युक्तमित्याह—पक्षान्तरमिति । यदि चेति । यदि लेनाऽभिधानं स्यान्नेदम्पक्षान्तरं स्यादित्यर्थः । कथमिति । पक्षान्तरत्वाऽसम्भवेऽपि लेनाऽभिधानमाश्रयितुं कथमशक्यमित्यर्थः । तदाश्रयणस्य शक्यत्वमुपपादयति—यदा भवानेवेति । तद्व्याचष्टे—ततो ल इति । अत एव लिङादिषु कर्त्राद्यर्थावगतिरिति बोध्यम् । इतरोऽशक्यत्वमुपपादयति—एवं वक्ष्यामीत्यादिना । 'लः कर्मण' इति न्यासे गौरवं, सूत्रभेदश्च स्यादत आह—व्याख्यास्यामीति ।

‡ अनुपसर्गाल्लिम्पविन्दधारिपारि० ३ । १ । १३८; कर्त्तरि कृत् ३ । ४ । ६७; कर्त्तरि शप् ३ । १ । ६८; सार्वधातुकार्धधातुकयोः ७ । ३ । ८४ १—'न शक्यं' पा० ।

तस्मान्नैतच्छक्यं वक्तुं 'न लेनाप्यभिधानं भवती'ति । भवति चेदभिहिते विकरणाभाव इत्येव ।

एवं तर्हीदं स्यात्,—यदा भावकर्मणोर्लस्तदा कर्तरि विकरणाः, यदा कर्तरि लस्तदा भावकर्मणोर्विकरणाः ।

इदमस्य यद्येव स्वाभाविकमथापि वाचनिकं 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इति न चास्ति सम्भवो यदेकस्याः प्रकृतेर्द्वयोर्नानार्थयोर्युगपदनुसहायीभावः स्यात् । एवं च कृत्वैकपक्षीभूतमेवेदं भवति—'सार्वधातुकार्था एवे'ति ।

---

प्र०—कृते विकरणे'लः कर्मणिचे'त्यनेन भावकर्मकर्त्रभिधायिनो विकरणात्परो लः साधुर्भवतीति व्याख्यानाददोषः ।

अत्राप्युक्त इति । विकरणलोपद्वारेण प्रकृतिरेव, तत्र कर्त्राद्यभिधायिनीति प्रतिज्ञातं भवतीत्यर्थः । यस्मिंस्तर्हीति । ततश्च विकरणानुत्पादाल्लादेशस्याऽसाधुत्वप्रसङ्गो, विधानसामर्थ्याद्वा साधुत्वे भावाद्यर्थावगतिर्न स्यात्, 'कर्तरि कृ'दिति वचनात्कर्तर्येव लकारः स्यादित्यर्थः । भवति चेदिति । ततश्च विकरणार्थपक्षोऽनुपपन्न एवेति भावः ।

एवं तर्हीति । प्रकारान्तरेण विकरणार्थत्वपक्षं समर्थयते । यथा 'ग्रामं गच्छती'ति गमिक्रियायाः कर्तृकर्मणी साधने । तत्र कर्तरि लकारः, कर्मणि द्वितीया । तथाऽत्राप्येकस्मिन्नर्थे सार्वधातुकमपरस्मिन्विकरणो भविष्यतीति भावः । इदमस्येति । अयमर्थः—यत्र पदद्वयवाच्ये कर्तृकर्मणी साधने तत्र विरोधाऽभावात्तन्निबन्धनः कार्यभेदो युक्तः । एकस्मिंस्तु पदे विरुद्धार्थयोर्विकरणसार्वधातुकयोर्विशिष्टार्थप्रतिपादने साहायकाऽभावात्परस्परानुपकारादप्रयोग एव

---

उ०— उक्तेऽर्थे भाष्यं योजयति-तत्र कर्मेति । कृते लकारे इति । 'वर्तमाने ल'डित्यादिभिः परत्वादिति भावः । यथान्यासेऽपि'वर्तमाने ल'डित्यादिभिः सिद्धलकारानुवादेन कर्त्राद्यर्थसंबन्धेन साधुत्वविधायकमेवेदम् । लस्य साधुत्वञ्चाऽऽदेशद्वारा बोध्यम् । ननु लुकि तदभावात्कोऽभिदध्यादत आह—लोपद्वारेणेति । 'कर्त्रमी'ति पाठः । कर्त्राद्यमीति पाठे 'आदि'शब्दार्थश्चिन्त्यः । लादेशस्येति । लस्य क्वापि प्रयोगाऽभावादेवमुक्तम् । विधानेति । लिङ्लिटोर्विधानसामर्थ्यादित्यर्थः । भाष्ये—तस्मान्नैवमिति । 'लः कर्मणि' इत्येतदित्यर्थः । 'तस्मान्नैत'दिति पाठान्तरम् । ततः किम् । तत्राह—शक्यं नेति । यदुक्तं 'न लेनाप्यभिधानं भवती'ति तद्वक्तुं शक्यमित्यर्थः । भवति चेदिति । लेनाऽभिधानं भवति चेद्विकरणार्थत्वपक्षेऽभिहिते विकरणानामनापत्तौ तच्छास्त्रवैयर्थ्यं स्यादित्यर्थः । तदाह—ततश्चेति । भाष्ये—'एवन्तर्ही'त्यादिनोक्तं विकरणार्थत्वं दूषयति—इदमस्येति । इदम्—'प्रकृती'त्यादि । अस्य-आचार्यस्य । स्वाभाविकं-लोकव्युत्पत्तिसिद्धम् । वाचनिकं—व्याकरणान्तर इव । प्रत्ययार्थं सहेति । प्रतीयमानार्थं सह । ब्रूतः—एकोपस्थितिविषयीकुरुतः । लोके तथैव व्युत्पत्तेरिति भावः । नानार्थयोः—भिन्नार्थयोः । सहायीभावः—सहायत्वम् । अयम्भावः—'पच'न्तीत्यादौ'प्रत्ययार्थः प्रधान'मित्युत्सर्गरीत्या द्वयोरपि प्रत्ययार्थयोः प्राधान्ये एकत्र विशेषणतयाऽन्वितप्रकृतेरपरत्र विशेषणतया संबन्धो व्युत्पत्तिविरुद्धः, तदर्थाऽनालिङ्गितप्रत्ययार्थभानमप्युक्तव्युत्पत्ति-

ननु चोक्तं 'भावकर्मकर्तारः सार्वधातुकार्थाश्चेदेकद्विबहुषु नियमानुपपत्तिरतद-र्थत्वा'दिति ? नैष दोषः ।

**सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम् ।**

सुपां तिङां च सङ्ख्या चैवार्थः कर्मादयश्च ।

**प्रसिद्धो नियमस्तत्र**

प्रसिद्धस्तत्र नियमः ।

**नियमः प्रकृतेषु वा ॥**

अथवा प्रकृतानर्थानपेक्ष्य नियमः । के च प्रकृताः ? एकत्वादयः । 'एकस्मि-न्नेवैकवचनं, न द्वयोर्न बहुषु' । 'द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । 'बहुष्वेव बहुवचनं, नैकस्मिन्न द्वयो'रिति ।

**भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसङ्ख्यानम् ॥ ३ ॥**

भावकर्मणोर्यग्विधाने कर्मकर्त्तर्युपसङ्ख्यानं कर्तव्यम् । पच्यते [ ओदनः ] स्वयमेव । पठ्यते [ विद्या ] स्वयमेव ॥ किं पुनः कारणं न सिध्यति ?

प्र०—स्यात् । तथा हि—'पचती'ति क्रियाविशिष्टः कर्ताऽभिधीयते ; 'पच्यते' इति क्रियाविशिष्टं कर्म । न त्वेकेन साधनद्वयं क्रियाविशिष्टं प्रतिपादयितुं शक्यते । एकपक्षीभूतमिति । एक एव पक्षः—सार्वधातुकार्थाः कर्मादय इत्यर्थः । पूर्वभेदाऽपेक्षश्च च्विप्रत्ययनिर्देशः । **प्रसिद्धो नियम इति** । अर्थनियम इत्यर्थः । कर्माद्यर्थान्तरनिर्देशान्न प्रत्ययनियमः प्रमाणसिद्धः । तत्रैकत्व एक-वचनमेवेत्येवमेकत्वादिरर्थो नियम्यते न तु प्रत्यय इति तस्याऽर्थान्तरमपि कर्मादि न विरुध्यते । अथवेति । कर्माद्यर्थविधानसामर्थ्यात्तुल्यजातीयसङ्ख्यापेक्ष एव नियम इत्यर्थः । **कर्मकर्तरीति** ।

उ०—विरुद्धमित्ययं पक्षोऽसङ्गत इति भावः । विशिष्टार्थप्रतिपादने साहायकाऽभावादिति । 'प्रकृते'रिति शेषः । परस्परेति । प्रकृतिप्रत्यययोरित्यर्थः । पचतीति । आख्याते कारकविशिष्टक्रियाप्राधान्यादिदं चिन्त्यम् । भाष्यन्तु 'पचन्' 'पच्यमान' इत्याद्यभिप्रायकतया नेयम् । कैयटे 'पचती'त्याद्यपि 'पच'न्नित्यादेरुपलक्षणं वा । 'सहायीभाव' इत्यत्र च्विस्तूभयत्र तस्या असहायत्वादुपपन्नः । केचित्तु—'क्रियाविशिष्ट'इत्यस्य क्रियासहित इत्यर्थः । कर्तृविशेषणिका कर्मविशेषणिका चेति यावत् । एकेन चोभयविशेषणिका क्रिया न प्रतिपादयितुं शक्येति भाष्यार्थमाहुः । तच्चिन्त्यम् । न त्वेकेनेति । धातुनेत्यर्थः । अत्र केचित्—सुपामिव तिङामपि कर्त्रादिद्योतकत्वमेव, भाष्यमत्राऽपि सुयोजमेवेत्याहुः । निरूपितञ्चैतद्विस्तरेण मञ्जूषायामाख्यातवादे । भाष्ये—प्रसिद्धो नियमस्तत्रेति । तत्र—अर्थविषये । यतः सुपां तिङाञ्चाऽर्थद्वयं दृश्यतेऽतः प्रत्ययनियमा-

१—श्लोकवार्त्तिकम् ।　　२—इदं क्वचिन्न ।

## विप्रतिषेधाद्धि शपो बलीयस्त्वम् ॥ ४ ॥

विप्रतिषेधाद्धि शपो बलीयस्त्वं प्राप्नोति* । शपोऽवकाशः—पचति पठति । यकोऽवकाशः–पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेन । इहोभयं प्राप्नोति–पच्यते [ ओदनः ] स्वयमेव, पठ्यते [ विद्या ] स्वयमेव । परत्वाच्छप्प्राप्नोति ।

## योगविभागात्सिद्धम् ॥ ५ ॥

योगविभागः करिष्यते* । 'चिण्भावकर्मणोः' । [ ततः सार्वधातुके यक् ] सार्वधातुके यग्भावकर्मणोः । ततः 'कर्तरि' । कर्तरि च यग्भवति भावकर्मणोः ।

यथैव तर्हि कर्मणि कर्तरि यग्भवत्येवं भावे कर्तरि प्राप्नोति—'एति जीवन्तमानन्दः'† । 'नास्य किंचिद्रुजति रोग' इति‡ ।

द्वितीयो योगविभागः करिष्यते × । 'चिण्भावे' । ततः 'कर्मणि' । कर्मणि च चिण्भवतीति । ततः [ 'सार्वधातुके यक्' । ] सार्वधातुके यग्भवति भावे च कर्मणि च । ततः 'कर्तरि' । कर्तरि च यग्भवति । 'कर्मणी'त्यनुवर्तते, 'भाव' इति निवृत्तम् । ततः 'शप्' । शप् च भवति 'कर्तरी'त्येव । कर्मणी'त्यपि निवृत्तम् ।

एवमप्युपसङ्ख्यानं कर्तव्यम् । विप्रतिषेधाद्धि श्यनो बलीयस्त्वं प्राप्नोति+ । श्यनोऽवकाशः—दीव्यति सीव्यति । यकोऽवकाशः—पच्यत ओदनो देवदत्तेन,

प्र०—'कर्मव'दित्यतिदेशेन स्वाश्रयस्य कार्यस्याऽबाधनात्कर्त्राश्रयविकरणप्राप्तौ वचनम् । विप्रतिषेधादिति । यदा शास्त्रातिदेशपक्षस्तदा शपो बलीयस्त्वम् । कार्यातिदेशे तु यक एव बलीयस्त्वम् ।

उ०—ऽसम्भवादिति भावः । नियम इत्यर्थं इति । प्रत्ययनियम इत्यर्थः । ननु कर्मवद्भावादेव यक् सिद्धोऽत आह—कर्मवदिति । स्वाश्रयस्य कार्यस्येति । परत्वेन बलवत इत्यर्थः । अतिदेशस्त्वात्मनेपदादिविधानेन चरितार्थ इति भावः । बलीयस्त्वमिति । 'कर्मवदिति सूत्रस्य परत्वा'दिति शेषः । वस्तुतः कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति प्रत्ययलक्षणसूत्रोक्तरीत्या भाष्यं समञ्जसमेव ।

* कर्तरि शप् ३ । १ । ६८ १–इदं क्वचिन्न । † भावे ३ । ३ । १८ कृत्स्नश्लोकस्त्वेवमुपलभ्यते वा० रा० सुन्दरकाण्डे ३४ तमे सर्गे—

'कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६ ॥'

‡ रुजार्थानां भाववचनानामज्वरेः २ । ३ । ५४ इम उदाहरणे भाष्ये १ । ३ । १२ सूत्रेऽपि द्रष्टव्ये । × चिण् भावकर्मणोः ३ । १ । ६६ + दिवादिभ्यः श्यन् ३ । १ । ६९

पठ्यते विद्या देवदत्तेन । इहोभयं प्राप्नोति—दीव्यते स्वयमेव, सीव्यते स्वयमेव । परत्वाच्छ्यन्प्राप्नोति ।

ननु चैतदपि योगविभागेनैवं सिद्धम् । न सिध्यति । अनन्तरा या प्राप्तिः सा योगविभागेन शक्या बाधितुम् । कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । परा प्राप्तिरप्रतिषिद्धा तया प्राप्नोति । ननु चेयं प्राप्तिः परां प्राप्तिं बाधेत । नोत्सहते प्रतिषिद्धा सती बाधितुम् ।

एवं तर्हि शबादेशाः श्यन्नादयः करिष्यन्ते† शप् च यका बाध्यते, तत्र दिवादिभ्यो यग्विषये शबेव नास्ति कुतः श्यन्नादयः ? तत्तर्हि शपो ग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'कर्तरि शप्' [ ३ । १ । ६८ ] इति ।

---

प्र०—ननु चेति । सर्वा प्राप्तिर्योगविभागेन बाधिष्यत इति भावः । परा प्राप्तिरिति । परत्वाद्बलीयस्त्वादित्यर्थः । ननु चेयमिति । योगविभागप्राप्तिः पूर्वविप्रतिषेधेन बाधिका भविष्यतीत्यर्थः । नोत्सहत इति । न्याय्यविप्रतिषेधाश्रयणस्य युक्तत्वाद्दुर्बलो योगविभागप्राप्तिक इत्यर्थः । इहेति । 'सार्वधातुके यग्भवती'ति सामान्योक्तावपि कर्तरि शबाद्यपवादविधानाद्भावकर्मणोरेव यग्भविष्य-

---

उ०—भाष्ये एवमप्युपसङ्ख्यानं कर्त्तव्यमिति । कर्मकर्त्तर्युपसङ्ख्यानमित्यर्थः । [भाष्ये] परत्वाच्छ्यन्निति । श्यन्यकोःस्वरे विशेषः । सर्वा प्राप्तिरिति । बाध्यसामान्यचिन्तयेति भावः । भाष्ये—अप्रतिषिद्धेति । अबाधितेत्यर्थः । नोत्सहते प्रतिषिद्धेति । 'अनन्तरस्ये'ति न्यायेन तद्विषयाधीना कृता सती तां बाधितुं

---

१—'योगविभागादेव' पा० । २—'श्यनादयः' पा० ।

† श्यन्नादयः शबादेशाः शबपवादाश्चेत्युभयथाऽपि व्याख्यानं भाष्यानुकूलं दृश्यते । आदेशविधायकं भाष्यम्—"इह तर्हि 'कर्त्तरि शप्' [ ३ । १ । ६८ ] 'दिवादिभ्यः श्यन्' [ ६९ ] इति वचनाच्च श्यन् स्यात्, यथाप्राप्तश्च शप् श्रूयेत । नैष दोषः । शबादेशाः श्यन्नादयः करिष्यन्ते ।" ( १ । १ । २७ सूत्रे, २७६ पृष्ठे )

शबपवादपक्षज्ञापकभाष्यम्—"अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—नापवाद उत्सर्गकृतं भवतीति यदयं श्यन्नादीन् [ श्यन्नादीनां ] कांश्चिच्छितः करोति । श्यन् श्नम् श्ना शः श्नुरिति ।" ( १ । १ । ५६ वा० १७ ) ४१४ पृष्ठे ।

सर्वासु वृत्तिसु टीकासु चाऽपवादपक्षमेवाऽऽश्रित्य 'कर्त्तरि शप्' 'दिवादिभ्यः श्यन्' 'स्वादिभ्यः श्नुः' 'तुदादिभ्यः शः' 'रुधादिभ्यः श्नम्' 'तनादिकृञ्भ्य उः' 'क्र्यादिभ्यः श्ना' इत्येतेषां विकरणविधायकसूत्राणां व्याख्योपलभ्यते । परन्त्वष्टाध्यायीभाष्य आदेशपक्षानुकूलं सूत्राणीमानि व्याचचक्षे महर्षिदयानन्दः । तद्यथा—

'धातुमात्रात् कर्तरि सार्वधातुके शप्, तस्य स्थाने श्यन्नादय आदेशा वक्ष्यन्ते ।' 'कर्तरि सार्वधातुके परतो दिवादिभ्यः परस्य शपः स्थाने श्यन् भवति ।' इत्यादि ।

तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। 'दिवादिभ्य' इत्येषा पञ्चमी श'निति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' [ १ । १ । ६७ ] इति। प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नाऽयं प्रत्ययविधिः । विहितः प्रत्ययः, प्रकृतश्चानुवर्तते ।

अथवा—

**भावकर्मणोरित्यननुवृत्त्यैव सिद्धे सत्यनुवृत्तिर्यको भावाय ।**

इह सार्वधातुके यगित्यन्तरेण भावकर्मणोरित्यनुवृत्तिं सिद्धम् । सोऽयमेवं सिद्धे सति यद्भावकर्मणोरित्यनुवर्तयति तस्यैतत्प्रयोजनं कर्मकर्तर्यपि यग्यथा[1] स्यादिति ।

**कर्तरीति च योगविभागः श्यनः पूर्वविप्रतिषेधाऽवचनाय ।**

कर्तरीति च योगविभागः कर्तव्यः,—श्यनः पूर्वविप्रतिषेधं मा वोचमिति ।

अथवा कर्मवद्भाववचनसामर्थ्याद्यग्भविष्यति‡ । अस्त्यन्यत्कर्मवद्भाववचने प्रयोजनम् । किम् ? आत्मनेपदं यथा स्यात् । वचनादात्मनेपदं भविष्यति×। चिण् तर्हि यथा स्यात् । चिणपि वचनाद्भविष्यति+ । चिण्वद्भावस्तर्हि यथा स्यात्* । नैकं प्रयोजनं योगारम्भं प्रयोजयति । तत्र कर्मवद्भाववचनसामर्थ्याद्यग्भविष्यति ।

प्र०—तीति भावकर्मानुवृत्तिरधिको यत्न इति कर्मकर्त्तर्यपि यग्भविष्यतीत्यर्थः । अत्रापि व्याख्याने योगविभागः कर्तव्य एवेत्याह—कर्तरीति चेति । अन्यथा भावकर्मानुवृत्तियत्नाच्छप एवानन्तरस्य बाधः स्यान्न तु श्यन्नादीनाम् । योगविभागेन तु तेऽपि बाध्यन्ते । वचनादिति । 'कर्तरि कर्मव्यतिहारे' इत्यत्र 'कर्तरी'ति योगविभागात् । तत्र च कर्मग्रहणानुवर्तनादन्तरेणाप्यतिदेशमात्मनेपदं भविष्यतीत्यर्थः । चिणपीति । चिण्ग्रहणेऽनुवर्तमाने पुनश्चिण्ग्रहणमधिकविधानार्थमिति कर्मकर्तर्यपि चिण्भविष्यतीत्यर्थः । नैकमिति । अन्यथा 'स्यसिच्सीयु'डित्यत्रैव 'कर्मणा तुल्यक्रिये

उ०—नोत्सहत इत्यर्थः । तद्व्युत्पादयति—न्याय्येति । परविप्रतिषेधेत्यर्थः । पूर्वविप्रतिषेधकल्पने न मानमिति भावः । ननु कर्त्तर्यपि यक्प्राप्तेः कथं सिद्धमत आह—सार्वधात्विति । भाष्ये—कर्मकर्त्तर्यपीति । 'पच्यते स्वयमेवे'त्यादौ शबादीन् बाधित्वेति भावः । भाष्ये पूर्वविप्रतिषेधं मा वोचमिति । अनेन पूर्वविप्रतिषेधोऽपूर्ववचनसाध्य इति सूचयति । भाष्ये—कर्मवद्भाववचनसामर्थ्यादिति । तत्सामर्थ्यादनन्तरस्येति न्यायो

१—'यथा स्यात्' पा० । ‡ कर्मवत् कर्मणा तुल्यक्रियः ३ । १ । ८७

× अनुदात्तङित आत्मनेपदम् १ । ३ । १२ । + चिण् भाव कर्मणोः ३ । १ । ६६

* स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६ । ४ । ६२

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'भवति कर्मकर्तरि य'गिति, यदयं 'न दुहस्नुनमां यक्चिणौ' [ ३ । १ । ८९ ] इति यक्चिणोः प्रतिषेधं शास्ति ॥ ६७ ॥

## यसोऽनुपसर्गात् ॥ ३ । १ । ७१ ॥

अनुपसर्गादिति किमर्थम् ? आयस्यति प्रयस्यति ।

अनुपसर्गादिति शक्यमकर्तुम् । कथमायस्यति प्रयस्यति ? 'संयसश्च' [ ३ । १ । ७२ ] इत्येतन्नियमार्थं भविष्यति—'संपूर्वादेव यसो नान्यपूर्वा'दिति ॥ ७१ ॥

## रुधादिभ्यः श्नम् ॥ ३ । १ । ७८ ॥

किमर्थः शकारः ? सार्वधातुकार्थः । शित्सार्वधातुकमिति सार्वधातुकसञ्ज्ञा, 'सार्वधातुकमपि'दिति ङित्त्वं, 'क्ङिती'ति गुणप्रतिषेधो यथा स्यात्†, भिनत्ति छिनत्तीति ।

नैतदस्ति प्रयोजनम् । सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते, यस्माच्च प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गसंज्ञं भवति‡, यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यच्च प्रत्यये परतो न तस्मात्प्रत्ययविधिः ।

इदं तर्हि प्रयोजनम्—'आर्द्धधातुकसंज्ञा मा भू'दिति । किं च स्यात् ? वलादिलक्षण इट्प्रसज्येत+ ।

प्र०—कर्तरी'ति वाच्यं स्यादित्यर्थः ॥ ६७ ॥

रुधादि । भिनत्तीति । भिशब्दस्याङ्गसंज्ञानिबन्धनो गुणो मा भूदिति शित्त्वं कृतमित्यर्थः । यस्माच्चे ति । भिद्शब्दादित्यर्थः । तस्यैव रुधादित्वात्, न तु तदवयवाद्भिशब्दात्प्रत्ययविधानम् । पृणतीति । पृ मृ इति क्र्यादिषु पठितौ, ताभ्यां व्यत्ययेन श्नम्प्रत्ययः ।

उ०—नाऽऽश्रीयते । किन्तु बाध्यसामान्यचिन्तैवेति भावः ॥ ७० ॥

यसोऽनु । इदं विकल्पेन श्यन्विधायकम् । 'संपूर्वादेव यस' इति सोपसर्गविषयो नियम इति भावः । एतेन एवं नियमे केवलान्न स्यादित्यपास्तम् । तदाह—नाऽन्यपूर्वादिति ॥ ७१ ॥

† तिङ्शित्सार्वधातुकम् ३ । ४ । ११३, सार्वधातुकमपित् १ । २ । ४; क्ङिति च १ । १ । ५
‡ सार्वधातुकार्धधातुकयोः; पुगन्तलघूपधस्य च ७ । ३ । ८४; ८६; यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ४ । १३ + आर्धधातुकस्येड्वलादेः ७ । २ । ३५

एतदपि नास्ति प्रयोजनम् । वलादेरार्द्धधातुकस्याऽङ्गस्येडुच्यते, यस्माच्च प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गसंज्ञं भवति, यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यच्च प्रत्यये परतो, न तस्मात्प्रत्ययविधिः ॥ अत उत्तरं पठति—

**श्नमि शित्करणं प्वादिह्रस्वार्थम् ॥ १ ॥**

श्नमि शित्करणं क्रियते । प्वादीनां शिति ह्रस्वत्वं यथा स्यात्* पृणाति मृणातीति ।

**न वा धात्वन्यत्वात् ॥ २ ॥**

न वा कर्तव्यम् । किं कारणम् ? 'धात्वन्यत्वात्' । धात्वन्तरं पृणिमृणी ।

यत्तर्हि न धात्वन्तरम्—यत्र भूम्यां वृणसे । नैष श्नम् । श्न एतदह्रस्वत्वम् । यदि श्नो ह्रस्वत्वं स्वरो न सिध्यति—वृणसे । 'अदुपदेशाल्लसार्वधातुकमनुदात्तं भवती'त्येष स्वरो† न प्राप्नोति । तस्माच्छ्नमेषः । यदि श्नम्, 'श्नसोरल्लोपः [ ६ । ४ । १११ ] इति लोपः प्राप्नोति । 'उपधायाः'‡ इति वर्ततेऽनुपधात्वान्न भविष्यति । न स शक्य उपधाया इति विज्ञातुम् । इह हि दोषःस्यात्—अङ्क्तः अञ्जन्ति × । तस्माच्छ्न एव ह्रस्वत्वम् । [ यद्येवं[2] ] स्वरः कथम् ?

**बहुलं पित्सार्वधातुकं छन्दसि ॥ ३ ॥**

सार्वधातुकस्य बहुलं छन्दसि पित्त्वं वक्तव्यम्+ । पितश्चाऽपित्त्वं दृश्यतेऽपि-

प्र०—धात्वन्तरमिति । तौदादिकावित्यर्थः । वृणस इति । 'वृ वरणे' इति क्र्यादिस्तस्माद्व्यत्ययेन श्नम्थासौ । श्न इति । छान्दसमिति भावः । अङ्क्त इति । 'श्नान्नलोप' इत्यस्याऽसिद्धवदत्राभादा-दित्यसिद्धत्वादकारस्योपधात्वाऽभावः । प्रमिणीमीति । मीञो 'मीनातेर्निगम' इति ह्रस्वः ।

उ०—रुधादिभ्यः श्नम् । भाष्ये—आर्द्धधातुकस्याङ्गस्येति । अङ्गसंज्ञानिमित्तस्यार्द्धधातुकस्येत्यर्थः । पृमोः क्र्यादित्वात्तयोः श्नम् दुर्लभोऽत आह—व्यत्ययेनेति । 'इति क्र्यादि'रिति, 'क्रैयादिक' इति वा पाठः । ननु श्नान्नलोपे उपधात्वं सुलभमत आह—असिद्धत्वादिति । भाष्ये—पित्वं वक्तव्यमिति । एवञ्च तेनाऽनुदा-त्तत्वं सिद्धमित्यर्थः । अनित्यत्वाश्रयणेनेति । ननु तत्सूत्रविषये तत्परिभाषायाः 'कष्टाये'त्यादिनिर्देशैरनित्य-

* प्वादीनां ह्रस्वः ७ । ३ । ८०

१—'धात्वन्तरे' पा० ।

† तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ६ । १ । १८६

‡ ऊदुपधाया गोहः ६ । ४ । ८९

× श्नान्नलोपः; असिद्धवदत्राभात् ६ । ४ । २३; २२

२—क्वचिन्न ।

+ अनुदात्तौ सुप्पितौ ३ । १ । ४

तश्च पित्त्वम् । पितस्तावदपित्त्वं—मातरं प्रमिणीमि जनित्रीम् । अपितः पित्त्वं—शृणोत ग्रावाणः ।

तत्तर्हि [ श्नो[1] ] ह्रस्वत्वं वक्तव्यम् ? अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्—'उपगायन्तु मां पत्नयो गर्भिणयो युवतय' इत्येवमर्थम् ।

विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः ? 'श्नान्नलोपः' [ ६ । ४ । २३ ] इति । 'नान्नलोप, इ [ तीयं ] त्युच्यमाने यज्ञानाम् यत्नानामित्यत्रापि प्रसज्येत । दीर्घत्वे कृते* न भविष्यति । इदमिह संप्रधार्यं दीर्घत्वं क्रियतां नलोप इति, किमत्र कर्तव्यम् ? परत्वान्नलोपः स्यात् । तस्माच्छकारः कर्तव्यः ।

अथ क्रियमाणे शकार इह कस्मान्न भवति—विश्नानाम् प्रश्नानामिति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति† ॥ ७८ ॥

## तनादिकृञ्भ्य उः ॥ ३ । १ । ७९ ॥

अथ किमर्थं करोतेः पृथग्ग्रहणं क्रियते न 'तनादिभ्य' इत्येवोच्येत ? अन्यानि तनोत्यादिकार्याणि मा भूवन्निति[2] । कानि ? अनुनासिकलोपादीनि‡ । दैवरक्ताः

प्र०—मिपोऽपित्त्वान्ङित्त्वे सतीत्वम् । परत्वादिति । यत्तु 'सुपि चे'ति दीर्घत्वं, तत् सन्निपातलक्षणपरिभाषावशान्न प्रवर्तते । यत्त्वन्यत्रोक्तं 'नामि दीर्घात्परत्वात् सुपि चेति भवितव्य'मिति तत्सन्निपातपरिभाषाया अनित्यत्वाश्रयेणेति न विरोधः । लक्षणेति । लाक्षणिकस्याऽनुमीयमानरूपत्वात्प्रतिपदोक्तस्य तु प्रत्यक्षत्वादिति भावः ॥ ७८ ॥

उ०—त्वावश्यकत्वेनाऽऽम्विषयेऽपि तत्त्वमाश्रित्य शः प्रत्याख्येय इति चेन्न, नलोपविधायकेऽङ्गाऽवयवश्नमः परस्य नस्य लोप इत्यर्थेऽनैमित्तिकतयाऽन्तरङ्गत्वेन, 'सुपि चे'त्यस्य परनिमित्तकतया बहिरङ्गत्वेन तस्याऽसिद्धतया नलोपप्राप्तेरित्याशयात् । भाष्ये—परत्वादिति । अन्तरङ्गत्वस्याऽप्युपलक्षणम् । किञ्च 'सुपि चे'त्यतो 'नामी'ति नित्यं विशेषाऽभावेऽपि शास्त्रप्राप्तेः सत्त्वात् । ध्वनितञ्चेद'मायादय' इति सूत्रे 'इको झ'लित्यत्र च भाष्ये इति वदन्ति ॥ ७८ ॥

१—क्वचिन्न । * नामि ६ । ४ । ३. † ओत् १ । १ । १५ सूत्रभाष्ये परिभाषेयम् ।

२—"यदि तर्हि करोतेरन्यत् तनादिकार्यं नेष्यते कस्मात्तर्हि भ्वादावेव न पठितः । कः पुनरेवं लाघवकृतो विशेषः ? भ्वादावपि पाठे नियोगतोऽस्य विकरणविधौ ग्रहणं कर्त्तव्यमित्यदेश्यमेत"दिति जिनेन्द्रबुद्धिपादः ( का. वि. प. ) । भाष्यकारेण तु सूत्रे कृञ्ग्रहणं प्रत्याख्यातं निष्प्रयोजनत्वात् ।

‡ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । ३७

किंशुकाः ×। अनुनासिकाऽभावादेवानुनासिकलोपो न भविष्यति।

इदं तर्हि—तनादिकार्यं मा भू'त्तनादिभ्यस्तथासोः' [ २ । ४ । ७६ ] इति। ननु च भवत्येवाऽत्र 'ह्रस्वादङ्गात्' [ ८ । २ । २७ ] इति। तेनैव यथा स्यादनेन मा भूदिति। कश्चाऽत्र विशेषस्तेन वा सत्यनेन वा? तेन सति सिज्लोपस्याऽसिद्धत्वाच्चिण्वद्भावः+ सिद्धो भवति। अनेन पुनः सति चिण्वद्भावो न स्यात्। अनेनाऽपि सति चिण्वद्भावः सिद्धः। कथम्? विभाषा लुक्। यदा न लुक्तदा तेन लोपः। तत्र सिज्लोपस्याऽसिद्धत्वाच्चिण्वद्भावः सिद्धो भवति।

तनादित्वात्कृञः सिद्धं सिज्लोपे च न दुष्यति।
चिण्वद्भावेऽत्र दोषः स्यात्सोऽपि प्रोक्तो विभाषया॥

## धिन्विकृण्व्योर च॥ ३ । १ । ८०॥

क्वायमकारः श्रूयते? न क्वचिच्छ्रूयते, लोपोऽस्य भवत्यतो लोप आर्द्धधातुक इति*। यदि न क्वचिच्छ्रूयते किमर्थमत्वमुच्यते न लोप एवोच्येत। नैवं

प्र०—तनादि। विभाषा लुगिति। ननु येन नाप्राप्तिन्यायेन लुका 'ह्रस्वादङ्गा'दिति लोपो बाध्यत इति कथं लुगभावपक्षे लोपः स्यात्। नैष दोषः। यत्र पक्षे लुक् प्रवर्तते तत्राऽसौ लोपस्य बाधको न त्वप्रवर्तमानः॥ ७९॥

धिन्वि। आर्द्धधातुकनिमित्त इति। 'धातुलोप' इति बहुव्रीह्याश्रयणादिति भावः।

उ०—तनादिकृञ्भ्यः। भाष्ये–अनेन माभूदिति। अन्यथा तस्याऽसिद्धत्वादनेनैव स्यादिति भावः। ननु येन नेति। न च 'ह्रस्वादङ्गा'दित्यस्याऽसिद्धत्वात्कथं तेन येननाप्राप्तिन्यायः, तनादिपाठस्तु विकरणार्थः स्यात्, विकल्पोऽपि तनादौ चरितार्थ इति वाच्यम्, असिद्धत्वेऽपि यदीदं न स्यात्तदा स्यादेव 'ह्रस्वादङ्गादित्यस्य प्राप्ति'रित्याशयात्। यदुत्सर्गप्रवृत्तौ विकल्पवैयर्थ्यं स उत्सर्गोऽपवादाऽभावपक्षेऽपि न प्रवर्त्तत एवेत्युक्तराशयः। भाष्ये–सोऽपि प्रोक्त इति। लुक्, चिण्वद्भावश्चेत्यर्थः। एवञ्च सूत्रे कृञ्ग्रहणम्प्रत्याख्यातम्। एतेन कृञ्ग्रहणं गणकार्योऽनित्यत्वज्ञापनार्थम्, तेन 'न विश्वसे'दित्यादिसिद्धिरित्यपास्तम्। 'न विश्वसे'दित्याद्यसाध्वेव॥ ७६॥

धिन्विकृण्व्यो। भाष्ये–ननु च लोपे सति न धात्विति। समुच्चयविषये एकसमभिव्याहृतस्याऽप-

× यथा पलाशपुष्पेषु रक्तिमा स्वाभाविकी न मनुष्यकृता, तथैव कृञि—अननुनासिकत्वमपि श्रवणाऽभावादेव बोध्यं न तु लोपापेक्षयेत्यभिप्रायः।

+ स्यसिच्सीयुट्तासिषु······चिण्वदिट् च ६ । ४ । ६२

१—'भावे न दोषः' पा०। २—'भविष्यति' पा०। * अतोलोपः ६ । ४ । ४८

३—'अयमुच्यते' पा०। ४—'इत्येव' पा०।

शक्यम्, लोपे हि सति गुणः प्रसज्येत† । अत्वे पुनः सत्यकारलोपस्य स्थानिवद्भावाद्गुणो न भ^१वति‡ ।

ननु च लोपेऽपि सति 'न धातुलोप आर्द्धधातुके' [ १ । १ । ४ ] इति प्रतिषेधो भविष्यति । आर्द्धधातुकनिमित्ते लोपे स प्रतिषेधो, न चैष आर्द्धधातुकनिमित्तो लोपः । अपि च प्रत्याख्यायते स योगः । तस्मिन्प्रत्याख्याते गुणः स्यादेव । तस्मादत्वं वक्तव्यम् ।

अथ किमर्थं नुमनुषक्तयोर्ग्रहणं क्रियते न 'धिविकृव्यो'रित्येवोच्येत × ? 'धिविकृव्यो'रित्युच्यमानेऽत्वे कृतेऽनिष्टे देशे नुम् प्रसज्येत × । इदमिह संप्रधार्यमत्वं क्रियतां नुमिति, किमत्र कर्तव्यम् ? परत्वान्नुमागमः । अन्तरङ्गमत्वम् । काऽन्तरङ्गता ? प्रत्ययोत्पत्तिसंनियोगेनाऽत्वमुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याऽङ्गस्य नुमागमः । नुमप्यन्तरङ्गः । कथम् ? वक्ष्यत्येत'न्नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थ'मिति+ । उभयोरन्तरङ्गयोः परत्वान्नुमागमः । तस्माद्धिविकृव्योरिति वक्तव्यम् ॥ ८० ॥

## हलः श्नः शानज्झौ ॥ ३ । १ । ८३ ॥

किमर्थः शकारः ? 'शित्सार्वधातुक'मिति सार्वधातुकसंज्ञा, 'सार्वधातुकमपि'-

प्र०—न चैष इति । सन्नियोगशिष्टत्वान्निमित्तनिमित्तिभावाऽप्रसङ्गः । अत्वे कृत इति । अकारात्परः स्यादित्यर्थः । उत्पन्ने प्रत्यय इति । नुम्विधावङ्गाधिकारादिति भावः ॥ ८० ॥

हलः श्नः शा । तबादिष्विति । 'तप्तनप्तनथनाश्चे'ति शृणोतेत्येवमादौ ये तिङां ङित्ता-

उ०—रसमभिव्याहृतार्थाऽधीनत्वप्रतीतेरनुभवसिद्धतया 'द्विर्वचनेऽची'ति च तद्भावभावितामात्रेणाऽऽर्द्धधातुकनिमित्तो लोपः । तद्भावभाविता च समकालोत्पत्तावप्यन्वयव्यतिरेकगम्या सन्नियोगशिष्टानां सह प्रवृत्तेर्निवृत्तेश्चेति भावः । सन्नियोगेति । ननु तादृशविषये परनिमित्तत्वाऽभावेऽपि केवलनिमित्तत्वाभावे मानाऽभावः । 'जीरदानोरुदाहरणत्व'मिति वदतो वाक्यकारस्य तद्भावभावितामात्रेणैव निमित्तत्वनिवेशस्येष्टत्वाच्चेति चेन्न; पूर्वकालवर्त्तिबुद्ध्या विषयीकृतस्यैव निमित्तत्वमित्याशयात् । भाष्ये—अपि च प्रत्याख्यायत इति । अनेन सूत्रमताऽपेक्षया प्रत्याख्यानवादिमतम्प्रबलमिति ध्वनितम् । एतन्मूलकमेव पठ्यते—'यथोत्तरं मुनीनाम्प्रामाण्य'मिति ॥ ८० ॥

हलः श्नः । भाष्ये—ज्ञापनार्थं इति । ज्ञापनरूपोऽर्थः प्रयोजनमित्यर्थः । हेः पित्त्वं नेति । अपिद्ग्रहणं

† पुगन्तलघूपधस्य च ७ । ३ । ८६ १—'भविष्यति' पा० ।

‡ अचः परस्मिन् पूर्वविधौ १ । १ । ५७ × इदितो नुम् धातोः ७ । १ । ५८ इति नुम्भविष्यति ।

+ ७ । १ । ५८ वा० १.

दिति ङित्त्वं, ङितीति प्रतिषेधो यथा स्यात्* । कुषाण पुषाणेति ॥ अत उत्तरं पठति—

**श्नाविकारस्य शित्करणानर्थक्यं स्थानिवत्त्वात् ॥ १ ॥**

श्नाविकारस्य शित्करणमनर्थकम् । किं कारणम् ? 'स्थानिवत्त्वात्' । शितोऽयमादेशः स्थानिवद्भावाच्छिद्भविष्यति ।

**अर्थवत्तु ज्ञापकं सार्वधातुकादेशेऽनुबन्धाऽस्थानिवत्त्वस्य ॥ २ ॥**

अर्थवत्तु श्नाविकारस्य शित्करणम् । कोऽर्थः ? 'ज्ञापकार्थम्' । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यः—सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्ती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?

**प्रयोजनं हितातङोरपित्त्वम् ॥ ३ ॥**

हेः पित्त्वं न प्रतिषेध्यम्† । पितोऽयमादेशः स्थानिवद्भावात्पित्स्यात् । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नायं पिद्भविष्यति ।

तातङि च ङकारो नोच्चार्यो भवति‡ । पितोऽयमादेशः स्थानिवद्भावात्पित्स्यात् । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नाऽयं पिद्भविष्यति ।

**तबादिषु चाऽङित्त्वम् ॥ ४ ॥**

तबादिषु चाऽङित्त्वं प्रयोजनम्× । शृणोत ग्रावाणः । ङित इम आदेशाः स्थानिवद्भावान्ङितःस्युः । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नेमे ङितो भवन्ति ।

प्र०—मादेशा विधीयन्ते ते तबादयः । एवमपीति । पित्त्वनिमित्तमनुदात्तत्वं, भवतु ब्रूताद्ब्रुवानितीडागमश्च । ङित्त्वनिमित्तश्च गुणवृद्धिप्रतिषेध इत्यर्थः । पिन्नेति । अपिदिति प्रसज्यप्रतिषेध

उ०—न कार्यमित्यर्थः । शङ्कते—पितोऽयमिति । उत्तरयति—सार्वधातुकादेश इति । तबादिषु च ङित्त्वं न प्रतिषेध्यमिति भाष्ये ङित्त्वप्रतिषेधाय पित्त्वं न कार्यमिति भावः । तबादिष्विति निर्धारणे सप्तमी । न च स्थानिवत्त्वप्रयुक्तङित्त्ववारणेऽपि स्थानिवद्भावेन सार्वधातुकत्वात् 'सार्वधातुकमपि'दिति ङित्त्वप्रतिषेधाय पित्त्वमावश्यकमिति-वाच्यम्, एतदाशयेनैव 'क्रियन्ते न्यास एवे'ति वक्ष्यत इत्यदोषात् । हेरपित्त्वमनुदात्तसेः

* तिङ्शित् सार्वधातुकम् ३ । ४ । ११३; सार्वधातुकमपित् १ । २ । ४; क्ङिति च १ । १ । ५

† सेर्ह्यपिच्च ३ । ४ । ८७ ‡ तुह्योस्तातङाशिष्यन्यतरस्याम् ७ । १ । ३५

× तप्तनप्तनथनाश्च ७ । १ । ४५

## तस्य दोषो मिप आदेशे पिद्भावः ॥ ५ ॥

तस्यैतस्य लक्षणस्य दोषो मिप आदेशे पितोऽभावः† । अचिनवम् असुनवम् अकरवम् । पितोऽयमादेशः स्थानिवद्भावात्पिद्भवति । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नायं पित्स्यात् ॥ अत्यल्पमिदमुच्यते 'मिप आदेश' इति ।

तिप्सिब्मिपामादेशा इति वक्तव्यम्‡ । वेद वेत्थ ।

## विदेर्वसोःशित्त्वम् ॥ ६ ॥

विदेरुत्तरस्य वसोः शित्त्वं वक्तव्यम् × । शितोऽयमादेशः स्थानिवद्भावाच्छिद्भवति । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नाऽयं शित्स्यात् ।

## क्त्करणाद्वा सिद्धम् ॥ ७ ॥

अथवाऽवश्यमत्र सामान्यग्रहणाऽविघातार्थः ककारोऽनुबन्धः कर्तव्यः । क्व सामान्यग्रहणाविघातार्थेनाऽर्थः ? 'वसोः संप्रसारणम्' [ ६ । ४ । १३१ ] इति । तेनैव यत्नेन गुणो न भविष्यति ।

अस्य ज्ञापकस्य सन्ति दोषाः सन्ति च प्रयोजनानि । समा दोषा भूयांसो वा । तस्मान्नार्थोऽनेन ज्ञापकेन । कथं यानि प्रयोजनानि ? तानि क्रियन्ते न्यास एव ।

एवमपि भवेत्पित्करणसामर्थ्यात्पित्कृतं स्यान्ङित्करणसामर्थ्यान्ङित्कृतम् । यत्तु खलु पिति ङित्कृतं प्राप्नोति ङिति च पित्कृतं केन तन्न स्यात् ? तस्माद्वक्तव्यं— 'पिन्न ङिद्भवती'ति, 'ङिच्च न पिद्भवती'ति ।

प्र०—आश्रीयते । पिद्भवन् ङिन्न भवतीत्यर्थः । योगविभागाद्या च यावती सार्वधातुकस्य ङित्त्वप्राप्तिस्सर्वाऽसौ निषिध्यते । असंयोगादिति । अत्र ङिदपिदिति वर्तते । तेन ङिद्भवन् पिन्न भवतीति

उ०—स्थाने आन्तरतम्यात्प्राप्तस्यानुदात्तहेर्वारणार्थमावश्यकमिति तातङोऽपि ङित्त्वमन्त्यादेशार्थमावश्यकमितिच्च तद्भावः । [ भाष्ये–] अवश्यमत्रेति । उकार इत्संज्ञकत्वेऽपि सामान्यग्रहणार्थो वा तदनुबन्धकपरिभाषाप्रवृत्त्यर्थो वेति सन्देहः स्यादिति । तस्मान्नार्थोऽनेनेति । न च वक्ष्यमाणेति ङीबापत्तिर्लृङादेशत्वेन टित्त्वादिति वाच्यं, सत्यमिधाने तत्राऽजादिपाठाद्वाप्सिद्धेः । एतेन इदं शित्त्वं क्वचित्स्थानिवत्त्वेनाऽनुबन्धकार्या-

† तस्थस्थमिपां तांतंतामः ३ । ४ । १०१ ‡ विदो लटो वा ३ । ४ । ८३
× विदेःशतुर्वसुः ७ । १ । ३६; सार्वधातुकमपित् १ । २ । ४

न वक्तव्यम् । एवं वक्ष्यामि—सार्वधातुकं ङिद्भवति पिन्न* । एवं तावत्पितो ङित्त्वं प्रतिषिद्धम् । ततः—असंयोगाल्लिट्किद्भवतीति† । ङिच्च पिन्न भवति । एवं ङितः पित्त्वं प्रतिषिद्धम् ॥ ८३ ॥

## छन्दसि शायजपि ॥ ३ । १ । ८४ ॥

### शायच् छन्दसि सर्वत्र ॥ १ ॥

शायच् छन्दसि सर्वत्रेति वक्तव्यम् । क्व सर्वत्र ? हौ चाऽहौ च । किं प्रयोजनम् ? मही अस्कभाकत् यो[1] अस्कभायत् उद्‌गृभायत उन्मथायतेत्यर्थम् ॥ ८४ ॥

## व्यत्ययो बहुलम् ॥ ३ । १ । ८५ ॥

### योगविभागः कर्तव्यः ।

'व्यत्ययः' । व्यत्ययो भवति स्यादीनामिति × । आण्डा शुष्णस्य भेदति+ । भिनत्तीति प्राप्ते । स च न मरति** । म्रियत इति प्राप्ते ।

ततो 'बहुलम्' । बहुलं छन्दसि विषये सर्वे विधयो भवन्तीति । सुपां व्यत्ययः, तिङां व्यत्ययः, वर्णव्यत्ययः, लिङ्गव्यत्ययः, कालव्यत्ययः, पुरुषव्यत्ययः, आत्मनेपदव्यत्ययः, परस्मैपदव्यत्यय इति ।

---

प्र०—तातङः स्थानिवद्भावप्राप्तं पित्त्वं निषिध्यते ॥ ८३ ॥

छन्दसि । अस्कभायदिति । स्कम्भुः सौत्रो धातुः । लङि तिप्शः शायच् अडागमः ॥ ८४ ॥

---

उ०—ऽभावस्य ज्ञापकमित्यपास्तम् । भाष्ये-एवमपीत्यस्य 'केन तन्न स्या' दित्यनेनान्वयः । पिति ङित्कृतमिति । 'अवे'दित्यादौ लङस्तिपः पित्त्वादनुदात्तत्वमस्तु, स्थानिवद्भावेन ङित्त्वाद्गुणनिषेधश्च प्राप्नोतीत्यर्थः । आदेशविधौ विशिष्टस्याऽननुवादान्ङित्त्वाद्यतिदेशेऽनल्विधाविति निषेधाऽप्रवृत्तेः । 'ङिति पित्कृत'मित्यस्योदाहरणमाह—ब्रूतादिति । अत्राऽनुदात्तत्वं, 'ब्रुव ईं' डितीडागमश्चापाद्यौ ॥ ८३ ॥

छन्दसि शाय । अडागम इति । 'लुङ्लङ्लृङ्क्ष्वड्' ति ॥ ८४ ॥

---

* सार्वधातुकमपित् १ । २ । ४ † असंयोगाल्लिट् कित् १ । २ । ५

१—'द्यौरस्कभायत्' पा० । २—इदं क्वचिन्न । × स्यतासी लृलुटोः ३ । १ । ३३

\+ ऋग्वेदे ८ । ४० । ११ ** 'सो चिन्नु मराति' इति ऋग्वेदे ( १ । १६१ । १० ) पाठ उपलभ्यते ।

सुपां व्यत्ययः—युक्ता मातासीद्धुरि दक्षिणायाः†† । दक्षिणायामिति प्राप्ते ॥ तिङां व्यत्ययः—चषालं ये अश्वयूपाय तक्षति ×× । तक्षन्तीति प्राप्ते ॥ वर्णव्यत्ययः–त्रिष्टुभौजः शुभितमुग्रवीरम् । सुहितमि[१]ति प्राप्ते ॥ लिङ्गव्यत्ययः–मधोर्गृह्णाति । मधोस्तृप्ता इवासते । मधुन इति प्राप्ते ॥ कालव्यत्ययः—श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । आधाता यष्टेत्येवं प्राप्ते* ॥ पुरुषव्यत्ययः–अधा स वीरैर्दशभिर्वियूयाः† । वियूयादिति प्राप्ते ॥ आत्मनेपदव्यत्ययः—ब्रह्मचारिणमिच्छते × । इच्छतीति प्राप्ते ॥ परस्मैपदव्यत्ययः—प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥

## लिङ्याशिष्यङ् ॥ ३ । १ । ८६ ॥

अयमाशिष्यङ्विधीयते । तस्य किं प्रयोजनम् ?

**आशिष्यङः प्रयोजनं स्थागागमिवचिविदयः ॥ १ ॥**

स्था—उपस्थेयं वृषभं तुग्रियाणाम् । स्था ॥ गा—अञ्जसा सत्यमुपगेयम्+ । गा ॥ गमि—यज्ञेन प्रतिष्ठां गमेयम् । गमि ॥ वचि—मन्त्रं वोचेमाग्नये** । वचि ॥ विदि —विदेयमेनां मनसि प्रविष्टाम्‡‡ ।

प्र०—लिङ्याशि । दृशेरगिति । अङि गुणः स्यात् । उपस्थेयामेति । स्था, लिङ् मस् यासुट्, अङ्, आकारलोपः, सलोपश्च । 'अतो येय' इति इय् । मस्याडागमः कार्योऽन्यथा यलोपे सति

उ०—व्यत्ययो बहु । भाष्ये—स्यादीनामिति । स्यतासिप्रभृतीनामित्यर्थः । मधुन इति प्राप्ते इति । अमृतक्षीराऽन्यतरवाचिनित्यनपुंसकाभिप्रायमिदम् । उपग्रहः—लादेशव्यङ्ग्यं स्वार्थत्वादि । इह तत्प्रतीतिनिमित्ते परस्मैपदात्मनेपदे उपग्रहशब्देन लक्षणयोच्येते ॥ ८५ ॥

लिङ्याशिष्यङ् । गास्थोरङभावे 'अतो येय'इति न स्यात् । अङि गुण इति । 'ऋदृशोऽङि' इत्यनेनेति भावः । भाष्ये--आडपीति । 'मस्ये'ति शेषः । आकारलोप इति । अङमाश्रित्य'आतो लोप

†† ऋ० वे० १ । १६४ । ६    ×× ऋ० वे० १ । १६२ । ६
१—शुधितमिति पा० ।    २—इदं क्वचिन्न ।
* अनद्यतने लुट् ३ । ३ । १५    † ऋ० वे० ७ । १०४ । १५
× अथर्व० ११ । ५ । १७    + यजु० ५ । ५ इत्यत्र 'उपगेष' मिति पाठ उपलभ्यते ।
** यजु० ३ । ११    ‡‡ अथर्व० १६ । ४ । २

[ शकिरुहोश्चं । ]

शकिरुहोश्चेति वक्तव्यम् । शकेम त्वा समिधं [ साधया धियः ] ×× । अस्व-वन्तीमारुहेमा स्वस्तये++ ।

दृशेरक् पितरं च दृशेयं मातरं च ॥ २ ॥

दृशेरग्वक्तव्यः** । 'पितरं च दृशेयं मातरंच'†दृशेयमित्येवमर्थम् ।

इह उपस्थेयामेत्याङपि वक्तव्यो न ह्यङैव सिध्यति ॥ न वक्तव्यः । सार्व-धातुकत्वात् सलोपः× आर्द्धधातुकत्वादेत्वम्+ । तत्रोभयलिङ्गात्सिद्धम्§ ।॥ ८६ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याऽध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ।

## कर्मवत्कर्मणा तुल्यक्रियः ॥ ३ । १ । ८७ ॥

वत्करणं किमर्थम् ? स्वाश्रयमपि यथा स्यात्—भिद्यते कुसूलेनेति । अकर्म-काणां भावे लो भवतीति भावे लो यथा स्यात्* ।

'कर्मणे'ति किमर्थम् ? करणाधिकरणाभ्यां तुल्यक्रियः कर्ता यः स कर्मवन्मा

प्र०—उपस्थेमेति स्यात् ॥ ८६ ॥

इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ।

कर्मवत्कर्मणा । वत्करणमिति । विनापि वतिना परार्थे शब्दप्रयोगात्तदर्थलाभ इति

उ०—इटि चे' त्यालोपः । भाष्ये आर्द्धधातुकत्वादेत्वमिति । 'वाऽन्यस्यसंयोगादेः'इत्यनेन । अङ्भावोऽपि छान्दसत्वादिति बोध्यम् । उभयलिङ्गत्वादिति । 'छन्दस्युभयथे'त्यनेनोभयसंज्ञकत्वादित्यर्थः ॥ ८६ ॥

इति श्रीनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयस्य प्रथमे चतुर्थमाह्निकम् ।

कर्मवत् । 'तेन तुल्य'मिति वतिः, उपमेये प्रथमादर्शनात् । कर्मणेति पारिभाषिकस्य कर्मणो

१—क्वाचित्कमिदम् । 'शकिरुह्योः'रिति पा० । ×× ऋग्० १ । ६४ । ३
++ ऋग्० १० । ६३ । १० **ऋदृशोरङि गुणः ७ । ४ । १६; क्ङिति च १ । १ । ५ † ऋग्० १ । २४ । १ × लिङः सलोपोऽनन्त्यस्य ७ । २ । ७९ + एर्लिङि ६ । ४ । ६७ § छन्दस्युभयथा ३ । ४ । ११७
* लः कर्मणि च भावे चाऽकर्मकेभ्यः ३ । ४ । ६९; कर्तृकरणयोस्तृतीया २ । ३ । १८

भूत्—साध्वसिश्छिनत्ति, साधु स्थाली पचति ।

'तुल्यक्रिय' इति किमर्थम् ? पचत्योदनं देवदत्तः । 'तुल्यक्रिय' इत्यप्युच्य-

प्र०—भावः । स्वाश्रयमपीति । असति वत्करणे कर्तुः कर्मसंज्ञा विज्ञायेत । ततश्चाऽकर्मकव्यपदेशाऽभावाद्भावे लो न स्यात् । वत्करणे तु सति कर्मकार्याणि कर्तुरतिदिश्यन्ते न तु स्वाश्रयं कार्यं निवार्यत इति भावे लस्सिद्धो भवतीति लादेशेन कर्तुरनभिधानात्तृतीया भवति,—भिद्यते कुसूलेनेति । न चाऽसत्यपि वत्करणे लान्तस्य कर्तेति वक्ष्यमाणेन भावे लस्सिध्यति । यस्माद्भावे लविधिर्लान्तस्य कार्यमिति स्वाश्रयनिवारणं स्यादेव । कर्मणेति किमिति । धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता, तत्र कर्तृस्थया क्रियया तुल्यक्रियः कर्ता न संभवतीति कर्मस्थैव क्रियाऽऽश्रयिष्यत इति भावः । साध्वसिश्छिनत्तीति । ननु करणादिव्यापारो धातुना नाऽभिधीयते, यदा त्वभिधीयते तदा तेषां कर्तृत्वमेव, न तु करणादिरूपता । न च कर्तृकर्मव्यतिरेकेण कारकान्तराश्रयत्वं क्रियाया उपपद्यते । नैष दोषः । यद्यपि करणादिव्यापारो धातुवाच्यो न भवति तथापि स्वव्यापारं कुर्वन्ति करणादीनि प्रधानक्रियां साधयन्ति । तत्राऽवश्यं तुल्यक्रियत्वं कर्तुराश्रयितुमवस्थान्तरमपेक्षणीयम्—'अवस्थाऽन्तरयुक्तक्रियया तुल्यक्रियः कर्ते'ति । ततश्च कर्मावस्थावत्करणाद्यवस्था अप्याश्रीयेरन् । प्रधानव्यापारश्च कर्तृकर्मणोरेव स्थितो न त्ववान्तरव्यापारोऽपि, तस्य सर्वत्रैव कारके व्यवस्थानात् । यद्यपि स्वव्यापारे कर्तृत्वं तस्य तथापि प्रधानक्रियापेक्षलब्धकरणादिव्यपदेशवस्तुव्यवस्थितक्रियातुल्यत्वग्रहणनिवारणाय'कर्मणे'ति कर्तव्यमेव । यद्यपि करणादिव्यापारस्य धातुवाच्यत्वं नास्ति, तथापीह सूत्रे धातुवाच्यत्वस्य

उ०—ग्रहणं कृत्रिमत्वात्, सामर्थ्याच्च 'तुल्यक्रिय' इत्येतावतैव क्रियया तुल्यत्वस्य लाभात् । न ह्यक्रियया क्रिया तुल्या भवति । ननु वत्यर्थलाभे स्वाश्रयमपि भविष्यतीत्यत आह—असतीति । तदभावे तल्लाभ एव न भवतीति भावः । संज्ञेति । 'आधिशी'ङितिवदिति भावः । अकर्मकव्यपदेशाऽभावादिति । एतच्छास्त्रीयकर्मसंज्ञकाऽन्वयित्वमेव सकर्मकत्वमिति भावः । ननु भावे ले कर्त्तरि वा ले को विशेषोऽत आह—लादेशेनेति । तृतीया भवतीति । कर्त्तरि लादेशे तु सा दुर्लभेति भावः । न चाऽसत्यपीति । लान्तवाच्यः कर्त्ता कर्मेत्यर्थं मत्वा शङ्का । ततश्च यावत्कर्त्तरि न लस्तावत्कर्मसंज्ञाऽभावादकर्मकत्वेन भावे लेऽपि सिध्यतीत्यर्थः । 'लान्तस्य कार्ये कर्त्तव्ये कर्त्ता कर्मे'त्यर्थं मत्वोत्तरयति—यस्मादिति । ततश्च भावे लेऽपि कर्त्तव्ये कर्त्तुः कर्मकत्वं स्यात् । ततश्चाऽकर्मकत्वाऽभावाद्भावे लो न स्यादिति भावः । 'लः कर्मणी'ति विधेयविध्युक्तरीत्या साधुत्वाऽऽख्यापकत्वाल्लान्तकार्यत्वं बोध्यम् । वस्तुतो लवाच्यस्यैव कर्तुः कर्मवत्त्वेन नेदं वतेः प्रयोजनम् । 'नमते दण्ड' इत्यादौ शप्सिद्धिस्तु मुख्यं प्रयोजनं वक्ष्यति । धातुवाच्येति । प्रत्यासत्त्या धातुवाच्यक्रियापेक्षयैव तुल्यक्रियत्वस्य ग्रहणमिति भावः । प्रत्यासत्तिमाश्रित्य शङ्कते—नन्विति । कारकान्तराश्रयत्वमिति । कारकान्तरस्याश्रयत्वेनाश्रयणमित्यर्थः । व्याप्तिन्यायाश्रयेणोत्तरयति—नैष दोष इति । स्वव्यापारमिति । स्वव्यापारावेशं विना क्रियासाधकत्वाऽयोगादिति भावः । तत्राऽवश्यमिति । एकाऽवस्थायां भेदनिबन्धतुल्यत्वाऽसम्भवादिति भावः । करणाद्यवस्था अपीति । व्याप्तिन्यायादिति भावः । प्रधानव्यापारः—धात्वर्थव्यापारः । कर्तृत्वमिति । आश्रयतामात्रमित्यर्थः । तन्निरूपितकरणत्वाऽभावप्रति-

मानेऽत्र प्राप्नोति । अत्रापि हि कर्मणा तुल्यक्रियः कर्त्ता ।

न तुल्यक्रियग्रहणेन समानक्रियत्वमभिधीयते । किं तर्हि ? यस्मिन्कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते, यथा कर्मणि, स कर्मणा तुल्यक्रियः कर्ता कर्मवद्भवतीति ।

कर्मवदकर्मकस्य कर्ता ॥ १ ॥

अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम् । किं प्रयोजनम् ? सकर्मकस्य कर्ता कर्मवन्मा भूदिति । भिद्यमानः कुसूलः पात्राणि भिनत्तीति[2] ॥ तथा—

प्र —शब्देनाऽनाश्रयणाद्वस्तुसद्भावाश्रयेण प्रसङ्गः स्यादेव । साधु स्थाली पचतीति । स्थाल्या अधिकरणत्वे यादृशी धारणसंभवनादिरूपा क्रिया तादृश्येव कर्तृत्वेऽपीति स्यात्कर्मवत्त्वम् । तुल्यक्रिय इति किमर्थमिति । कर्मणेति तृतीया तुल्यशब्दाध्याहारेण व्याख्यास्यते । तुल्यक्रियत्वाच्च कर्तुस्तुल्यत्वमिति प्रश्नः । अथवा क्रियमाणेऽपि तुल्यक्रियग्रहणेऽतिप्रसङ्ग इति प्रश्नः । पचत्योदनमिति । सहार्थेऽपि तृतीया विज्ञायेत, तेन कर्मणा सह यः कर्ता प्रतिपाद्यत इति भावः । अकर्मकनिवृत्त्यर्था कर्मश्रुतिः स्यादास्ते शेत इति । अत्रापीति । तुल्यशब्दस्य साधारणवचनत्वात् कर्तृकर्मसाध्यत्वाच्चात्र क्रियाया इति भावः । समानक्रियत्वमिति । साधारणक्रियत्वमित्यर्थः । एतच्च तुल्यक्रियग्रहणादेव लभ्यते । अन्यथा 'कर्मवत्कर्मणे'त्येव ब्रूयात् । यस्मिन्निति । सादृश्यवाची तुल्यशब्द आश्रीयत इत्यर्थः । कर्तृभूत इति । च्वेर्विकल्पेन विधानादत्राऽभावः । कर्तरि संपन्न इत्यर्थः । अथवा 'भू प्राप्ता'वित्यस्याधृषाद्वेति णिचो विकल्पनाद्रूपमेतत् । तेन कर्तृत्वं प्राप्त इत्यर्थः । वृत्तिविषये कर्तृशब्दः कर्तृत्वे वर्तते । कर्तृकर्मावस्थाभेदाच्च एकस्या अपि क्रियाया भेदाश्रयं सादृश्यमुपपद्यते । कर्मणेति । कर्मस्थया क्रिययेत्यर्थः । साध्यसाधनयो-

उ०—पादनपरञ्चैतत् । प्रधानक्रियापेक्षो लब्धः करणादिव्यपदेशो येन वस्तुना तत्र व्यवस्थिता या क्रिया तत्तुल्यत्वग्रहणनिवारणायेत्यर्थः । यदि तु लक्ष्याऽनुरोधात्प्रत्यासत्त्या धातुवाच्यक्रिययैव तुल्यक्रियत्वं विवक्ष्यते, प्रत्यासत्तिस्तु यस्य धातोर्यत्कर्म तत्रत्यक्रियया तस्यैव धातोः कर्त्ता यदि तुल्यक्रिय इति वक्ष्यमाणार्थलाभार्थमावश्यकी, तदा नेदम्प्रयोजनम् । अतो 'यत्र कर्मणि क्रियाकृतविशेषस्तदर्थ'मिति प्रयोजनान्तरं वक्ष्यति । ननु कर्मकर्त्रोः साधनयोरत्यन्तभेदात्कथं तुल्यत्वमत आह—तुल्यक्रियत्वाच्चेति । अतिप्रसङ्ग इति प्रश्न इति । इति व्युत्पादयितुं प्रश्न इत्यर्थः । साधारणेति । यथा 'एतौ तुल्यधना'वित्यत्रेत्यर्थः । कर्तृकर्मसाध्यत्वाच्चेति । 'जन्यत्वेनोभयोः साधारणी क्रिये'त्यर्थः । समानशब्दे सदृशवाचकत्वस्याऽपि सत्त्वादाह—साधारणेति । एतच्चेति । 'किन्तर्हीं'त्यादि चेत्यर्थः । सादृश्यवचनतुल्यशब्दस्य प्रसिद्धतरत्वाच्चेत्यपि बोध्यम् । इत्येवेति । सहार्थयुक्ततृतीयया एकक्रियाजनकत्वरूपसाहित्यलाभेन त्वदुक्तार्थलाभादिति भावः । च्विप्रत्यये कर्तृशब्देरीङ् स्यादत आह—च्वेरिति । ननु च्वेरभावेऽकर्त्तरि कर्त्तरि भूते इत्येवोचितम्प्रकृतिविकृतिभावप्रतीतयेऽत आह—अथवेति । भाष्ये—यथा कर्मणीति पूर्वान्वयि । ननु विक्लित्तिद्विधाभवन-

१—'मभिसम्बध्यते' पा० । २—इति क्वचिन्न ।

## कर्म दृष्टश्चेत्समानधातौ ॥ २ ॥

कर्म दृष्टश्चेत्समानधाताविति वक्तव्यम् । इह मा भूत्—पचत्योदनं देवदत्तः । राध्यत्योदनः स्वयमेवेति[1] ॥ तथा—

## कर्मस्थभावकानां कर्मस्थक्रियाणां च ॥ ३ ॥

कर्मस्थभावकानां कर्मस्थक्रियाणां वा कर्ता कर्मवद्भवतीति वक्तव्यम् । कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्ता कर्मवन्मा भूदिति । [[2] कर्मस्थभावकानाम्—आसयति देवदत्तम्, शाययति देवदत्तम्, स्थापयति देवदत्तम् ॥ कर्मस्थक्रियाणाम्—गामवरुणद्धि, करोति कटम् ॥ कर्तृस्थभावकानाम्—चिन्तयति, मन्त्रयते ॥ कर्तृस्थक्रियाणाम्—गच्छति, धावति, हसति । ]

प्र०—रत्यन्तभेदात्तुल्यत्वाऽसंभवात् कर्मस्था क्रिया कर्मशब्देनोच्यते । भवति हि तात्स्थ्यात्ताच्छब्द्यं यथा 'मञ्चाः क्रोशन्ती'ति । तत्र पचत्योदनमित्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदात्सादृश्याऽभावात्कर्मवद्भावाभावः । 'लूयते केदारः स्वयमेवे' त्यत्र केदारस्य तु द्विधाभवनलक्षणा कर्मावस्थायां यादृशीक्रिया तादृश्येव कर्त्रवस्थायामपीति भवति कर्मवद्भ भाव. । भिद्यमान इति । पात्राणामपि द्विधा भवनं कुसूलस्यापीति प्राप्नोति कर्मवद्भावः । कर्म दृष्ट इति । समान एकस्मिन् धातौ कर्ता कर्मत्वेन यदि दृष्टो भवति तदा कर्मवद्भावो, यदा त्वन्यस्मिन्धातौ कर्माऽन्यस्मिंश्च कर्ता तदा मा भूत्कर्मवद्भाव इत्यर्थः । पचत्योदनमिति । ओदनस्य कर्मत्वे यादृशीक्रिया विक्लित्तिलक्षणा तादृश्येव कर्तृत्वेऽपि । राध्यतेर्विक्लित्तिवचनत्वात् । नचास्य वाक्यद्वयस्य युगपत्प्रयोगः । कर्मस्थक्रियातुल्यत्वप्रतिपादनाय तु वाक्यद्वयोपन्यासः । अन्यथा समानधातावपि व्याख्यातृभिः कथं तुल्य-

उ०—रूपायाः क्रियाया एकत्वात्कथम्भेदनिबन्धनसादृश्योपपत्तिरत आह—कर्तृकर्मेति । तत्तत्संज्ञालाभरूपाऽवस्थाभेदादाश्रयस्य भेदाऽवसाये तन्मूलकः क्रियाया भेदावसायः इति सादृश्योपपत्तिरिति भावः । लक्षणायां हेतुमाह—साध्येति । साध्या—क्रिया । साधनं-कारकम् । व्यापारयोरिति । व्यापारशब्देन धात्वर्थउच्यते । तद्धात्वर्थस्वरूपं सादृश्यंन विवक्षितम् । किन्तु सामर्थ्यादवान्तरसादृश्यमेव विवक्षितमिति तात्पर्यम् । भाष्ये—कर्त्ता कर्मवदिति । 'कर्तरि श'न्नित्यतोऽनुवृत्तस्य कर्त्तरीत्यस्य प्रथमया विपरिणाम इति भावः ।

पात्राणामपीति । एवञ्च भिदेः कर्मसु पात्रेषु या क्रिया सा तत्कर्तरि कुसूलेऽपीति भावः । समानशब्दः साधारणपर्याय एकस्मिन्नित्यर्थे पर्यवस्यतीत्याह—एकस्मिन्निति । ननु युगपत्स्वातन्त्र्यपारतन्त्र्ययोर्विरुद्धत्वात्कथम्भाष्येऽनयोर्वाक्ययोर्युगपत्प्रयोगोऽत आह—न चाऽस्येति । प्रतिपादनायेति । तत्प्रयोगे या कर्मस्था साऽत्र प्रयोगे कर्तृस्थेति प्रदर्शनायेत्यर्थः । लुनाताविति । 'लुनाति केदारं देवदत्त'इति प्रयोग इत्यर्थः । लावयते केदार इति । 'णिश्रन्थी'ति यक्चिणोः प्रतिषेधः । कर्मवद्भावफलन्त्वात्मने-

१—इति क्वचिन्न २—कोष्ठान्तर्गतं भाष्यं कीलहार्नसंस्करणे न दृश्यते ।

यत्तावदुच्यते—अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यमिति, न वक्तव्यम्। वक्ष्यत्येतत् 'सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत' इति* ।

यदप्युच्यते—'कर्म दृष्टश्चेत्समानधाताविति वक्तव्य'मिति, न वक्तव्यम्। धातोरिति† वर्तते। धातोः कर्मणः कर्तुरयं कर्मवद्भावोऽतिदिश्यते। तत्र संबन्धादेतद्गन्तव्यं 'यस्य धातोर्यत् कर्म तस्य चेत् कर्ता स्या'दिति। तद्यथा—धातोः कर्मण्यण्भवतीति ×। तत्र सम्बन्धादेतद्गम्यते—'यस्य धातोर्यत्कर्मे'ति। इह मा भूत्—'आहर कुम्भम्' 'करोति कट'मिति।

प्र०—क्रियत्वं प्रदर्श्यते। यद्येवं लुनातौ केदारस्य कर्मत्वमिति लावयते केदारः स्वयमेवेति कर्मवद्भावो न स्यात्। अत्र केचिदाहुः—'लुनातिरेव णिचि लाविः संपन्न इत्यस्ति समानधातुत्वम्'। अन्ये त्वाहुः—'लावयतावेव केदारस्य कर्तृत्वं कर्मत्वं चेति दोषाऽभाव.'। कर्मस्थभावकानामिति। अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः। सपरिस्पन्दनसाधनसाध्यस्तु क्रिया। यत्र च क्रियाकृतविशेषदर्शनं तत्स्था क्रियोच्यते। ततश्च 'पश्यति राजा स्वयमेव' 'आरोहति हस्ती स्वयमेवे'ति कर्मवद्भावाऽभावः। सकर्मकाणामिति। अन्योन्यमाश्लिष्यत इत्युदाहरणमात्रमेतन्न तु व्यतीहा-

उ०—पदमेव। 'णिचश्चेत्यनेन तु न सिद्धिः, क्रियोद्देश्यफलस्य कर्तृगामित्वाऽभावात्। आहुरिति। अत्राऽरुचिस्तु ण्यन्तस्य धात्वन्तरत्वम्। लावयताविति। निवृत्तप्रेषणपक्ष इति भावः। अन्यत्र भावक्रिययोरभेदेन व्यवहारादाह—अपरिस्पन्दनेति। इदञ्च प्रकृताऽभिप्रायेण। 'भावे घ'ञित्यादौ तु सिद्धावस्थापन्नो धात्वर्थो भाव इति बोध्यम्। यत्र चेति। यथा लूभिदादौ कर्मणि क्रियाकृतविशेषदर्शनात्तत्स्था सा। 'पश्यती'त्यादौ राजादिदर्शनकर्त्तर्येव हर्षादिलक्षणविशेषदर्शनात्तत्स्थैवेति भावः। न चैवं पच्यादिकर्त्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्, किञ्च पश्यत्यादीनां कर्तृस्थभावकत्वाऽनापत्तिः, कर्त्तरि क्रियाकृतविशेषाऽभावादिति वाच्यम्, येन धातुना कर्तृकर्मसाधारणं फलं शब्देन प्रतिपाद्यते स—कर्तृस्थभावकः। यथा 'पश्यति' 'गच्छती'त्यादौ। तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम्। संयोगश्चोभयनिष्ठः। एवं ह्रासोऽपि। यत्र तु कर्त्रवृत्तिधर्मरूपं फलं स कर्मस्थभावकादिः। यथा भिदादिरित्यत्र तात्पर्यात्। भाष्ये—वक्ष्यत्येतत्सकर्मकाणामिति। अयं भावः—कालादिभिन्नकर्माऽभाववतामन्यत्राऽकर्मकग्रहणेन ग्रहणदर्शनादत्राऽपि तथात्वापत्तौ 'मासम्पचत्योदनःस्वयमेवे'त्यादौ कर्मवदकर्मकस्येति वचनेन कर्मवत्त्वं प्राप्नोतीति 'सकर्मकाणां प्रतिषेध' इत्यावश्यकमिति। अन्यथा वचनेन वचनप्रत्याख्याने लाघवं न स्यात्। न त्विति। उदाहरणबलात्तादृशे विषय एव प्रतिषेध इति न भ्रमितव्यमिति भावः। अन्ये त्विदमुदाहरणञ्चिन्त्यम्। आश्लेषः—संयोगविशेषाऽनुकूलव्यापारः। तत्र संयोगाश्रयत्वेन तयोः कर्मत्वं, व्यापाराश्रयत्वेन कर्तृत्वम्। तत्र संयोगाऽनुकूलक्रियायाः कर्तृत्वोपयोगित्वेऽपि व्यक्तिभेदोऽवश्यमङ्गीकार्यः। अन्यथोभयोरपि कर्तृत्वमेव स्यात्। 'इमावाश्लिष्यत' इति यथा। भेदे त्वन्यनिष्ठाप्रत्ययस्य कर्मत्वमुपपद्यते। एवञ्च कर्मत्वोपयोगिक्रियया

* ३।१।८७ वा० ११ † धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२
× कर्मण्यण् ३।२।१

यदप्युच्यते—'कर्मस्थभावकानां कर्मस्थक्रियाणां वा कर्ता कर्मवद्भवतीति वक्तव्यं कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्ता कर्मवन्मा भू'दिति, न वक्तव्यम् । कर्मस्थया क्रिययाऽयं कर्तारमुपमिमीते, न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्मणि क्रियायाः प्रवृत्तिरस्ति ।

किं पुनः कर्मकर्तरि कर्माश्रयमेव भवत्याहोस्वित्कर्त्राश्रयमपि ? किं चातः ? यदि कर्माश्रयमेव, चङ्शप्कृद्विधयो न सिध्यन्ति । चङ्—अचीकरत* कटः स्वयमेव । शप्—नमते† दण्डः स्वयमेव । कृद्विधिः—भिदुरं× काष्ठं स्वयमेव ।

अथ कर्त्राश्रयमपि सिद्धमेतद्भवति । किं तर्हीति ।

## आत्मनेपदशबादिविधिप्रतिषेधः ॥ ४ ॥

आत्मनेपदं विधेयं शबादीनां च प्रतिषेधो वक्तव्यः ॥ उभयं क्रियते न्यास एव+ ।

प्र०—रविशिष्टक्रियाविषयकर्मवद्भावप्रतिषेधप्रतिपादनार्थमित्यर्थः । धातोः कर्मण इति । कर्मणः सतः कर्तुरित्यर्थः । कर्मणेति चोपादानादयमर्थो लभ्यते,—'यस्य धातोर्यत्कर्म तत्स्थया क्रियया तुल्यक्रियः कर्ता तस्यैव धातोर्यदि भवति ततः कर्मवद्भवति' । आहर कुम्भमिति । समर्थपरिभाषोपस्थानमन्तरेणापि भवत्येवेष्टसिद्धिरिति प्रदर्शनायोपन्यासः । कर्तारमिति । कर्तृस्थां क्रियामित्यर्थः । किं पुनरिति । किमतिदेशेन स्वाश्रयं निवर्त्यते आहोस्विन्नेति प्रश्नः । यद्यपि स्वाश्रयमपि यथा स्यादित्यत्र निर्णयः कृतस्तथापि दोषान्तरोद्भावनाय पुनर्विचार्यते । अचीकरतेति । यक्चिणोः प्रतिषेधेऽपि स्वाश्रयौ चङ्शपौ न प्राप्नुतः । भिदुरमिति । कर्तरि कुरज्न

उ०—तुल्यक्रियस्य तदीयकर्तुरभावात् कर्मवत्त्वाऽप्राप्तेरित्याहुः । तन्नेत्यग्रे वक्ष्यते । ननु 'कर्मणः' कर्तुरिति युगपद्विरुद्धमत आह—सत इति । कर्मणेति चोपादानादिति । प्रत्यासत्त्येति भावः । समर्थपरिभाषयैवेदं सिद्धमत आह—समर्थेति । एवञ्च दृष्टान्त एकदेश्युक्तिरिति ध्वनितम् । क्रियया कर्तुरुपमाऽसम्भवादाह—कर्तृस्थामिति । भाष्ये—न च कर्तृस्थेति । तेषां धातूनां वाच्यायाः फलरूपक्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थः । करणादितुल्यक्रियेऽतिव्याप्तिवारणस्य प्रत्यासत्त्यैव सिद्ध्या 'कर्मणे'त्युपादानसामर्थ्यात्कर्ममात्रनिष्ठफलरूपकर्मस्थक्रिया लक्ष्यत इति भावः । यथाश्रुतप्राचुक्तकैयटरीत्या व्याख्याने तु जानात्यादिकर्तर्यपि क्रियाकृतविशेषाऽनुपलम्भेन 'चिन्तयती'त्याद्युपक्रमेणैतदुक्त्यसङ्गतिः । एतेन क्रियायाः क्रियाकृतविशेषाणा-

* ( ३ । १ । ८६* ) ४८ † ( न दुहस्नुनमां यक्चिणौ ३ । १ । ८६ ) कर्तरिशप् ३ । १ । ६८ × कर्तरि कृत् ३ । ४ । ६७; विदिभिदिच्छिदेः कुरच् ३ । २ । १६२
+ १ । ३ । ७८ वा० ४; ३ । १ । ६७ वा० ५

किमर्थं पुनरिदमुच्यते।

कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात् ॥ ५ ॥

कर्मकर्त्तरि कर्तृत्वमस्ति। कुतः ? 'स्वातन्त्र्यस्य विवक्षितत्वात्'। स्वातन्त्र्येणैवाऽत्र कर्ता विवक्षितः।

किं पुनः सतः स्वातन्त्र्यस्य विवक्षा, आहोस्विद्विवक्षामात्रम् ? 'सतः' इत्याह। कथं ज्ञायते ? इह भिद्यते कुसूलेनेति, न चान्यः कर्ता दृश्यते क्रिया चोपलभ्यते। किं च भो विग्रहवत्यैव क्रियायाः कर्त्रा भवितव्यं, न पुनर्वातातपकाला अपि कर्तारः स्युः। भवेत्सिद्धं यदि वातातपकालानामन्यतमः कर्ता स्यात्। यस्तु खलु निवाते निरभिवर्षेऽचिरकालकृतः कुसूलः स्वयमेव भिद्यते तस्य नाऽन्यः कर्ता भवत्यन्यदतः कुसूलात्।

यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्यः कर्ता नास्ति, इह तु कथं न स्यात्—लूयते केदारः स्वयमेवेति, यत्रासौ देवदत्तो दात्रहस्तः समन्ततो विपरिपतन्दृश्यते। अत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ता भवत्यन्यदतः केदारात्।

अस्ति प्रयोजनमेतत् ? किं तर्हीति।

प्र०—प्राप्नोति। 'लान्तस्य कर्ता कर्मव'दिति न तावत्स्थापितमिति कृद्विधेरसिद्धिरुक्ता। उभयमिति। कर्त्तैव यः कर्ता तत्र परस्मैपदाभावादात्मनेपदं भवति। कर्तरि शबित्यत्र कर्तरीति योगविभागेन शबादीनां यका बाधनं भवति। कार्यातिदेशो वाऽयमाश्रीयते। यच्चाऽविरुद्धमतिदेशेन स्वाश्रयं तद्भवति न तु विरुद्धमिति शबादिपरस्मैपदाभावः। स्वातन्त्र्यस्येति। 'पच्यते ओदनः स्वयमेवे'ति विक्लित्तिमात्रवाची पचिः। तत्र चौदनस्य कर्तृत्वमेव। 'लूयते केदार इति द्विधाभवनवाची लुनातिस्तथा च केदारस्य कर्तृत्वम्। क्रिया चेति। विशरणक्रियेत्यर्थः। किञ्च भो इति। कारणाऽभावे विशरणाख्यकार्याभावादवश्यं केन चिद्वातादिना कारणेन भाव्यमिति भावः।

उ०—मित्यर्थं इत्यपास्तम्। तदुक्तं हरिणा—

'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥ इति।

अन्येषामिति। 'मते' इति शेषः। इदमेव मतं युक्तम्, उक्तयुक्तेः। दोषान्तरेति। तदुद्भावनपूर्वकं मुख्यफलप्रदर्शनायेत्यर्थः। प्रतिषेधेपीति। 'न दुहे'ति 'णिश्री'ति च। शपाविति। नमतिविषयकमिदम्।

कर्त्तैवेति। 'शेषा'दिति सूत्रे 'कर्त्तरि कर्मव्यतिहार' इत्यतः कर्त्तरीति पदानुवृत्त्याऽयमर्थो लब्ध इति भावः। योगविभागेनेति। इदञ्च यग्विधायके निरूपितम्। कार्यातिऽदेशो वाऽयमिति। एवञ्च परत्वादात्मनेपदविधिः शब्बाधश्च सिद्ध इत्यर्थः। नन्वेवं स्वाश्रयनिवृत्तिरेव पर्यवसन्नेत्यत आह— यच्चेति। अतिदेशेन—तदाश्रयकार्येण। एवञ्च 'नमते दण्डः' 'अचीकरते'त्यादौ यक्चिणोरभावे चङ्शपौ भवतोऽन्यत्र च न भवत इति भावः। भाष्ये—किमर्थं पुनरिदमुच्यत इति। कर्मणः कर्तृत्वाऽसम्भवात् सूत्रं व्यर्थमिति

### तत्र लान्तस्य कर्मवदनुदेशः ॥ ६ ॥

तत्र लान्तस्य कर्मवदनुदेशः कर्तव्यः । 'लान्तस्य कर्ता कर्मवद्भवती'ति वक्तव्यम् ।

### इतरथा हि कृत्यक्तखलर्थेषु प्रतिषेधः ॥ ७ ॥

अक्रियमाणे हि लग्रहणे कृत्यक्तखलर्थेषु† प्रतिषेधो वक्तव्यः स्यात् ।

कृत्य—भेत्तव्यः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितस्तदाऽस्य कर्मवद्भावः स्यात् । तस्य प्रतिषेधो वक्तव्यस्तस्मिन् प्रतिषिद्धेऽकर्मकाणां भावे कृत्या भवन्तीति भावे यथा स्यात्—भेत्तव्यं कुसूलेनेति । कृत्य ।

क्त—भिन्नः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितस्तदाऽस्य कर्मवद्भावः स्यात्, तस्य प्रतिषेधो वक्तव्यः, तस्मिन् प्रतिषिद्धेऽकर्मकाणां भावे क्तो भवतीति भावे क्तो यथा स्यात्—भिन्नं कुसूलेनेति । क्त ।

---

प्र०—अन्यदत इति । कुसूलस्यैव विशरणक्रियायां कारणत्वोपपत्तावदृश्यमानकारणान्तरकल्पनाया अयुक्तत्वादिति भावः । सुकरतेति । द्विधाभवनलक्षणक्रियेत्यर्थः । अन्यथा पर्वतमपि देवदत्तो लुनीयादिति भावः । लान्तस्य कर्त्तेति । लान्तवाच्यो यः कर्त्ता लान्तकार्य एव कर्मवद्भवतीत्यर्थः । तेन कर्मणि विधीयमानाः कृत्यादयोऽतिदेशात्कर्मकर्तरि न भवन्तीति भाव एवोत्पद्यन्ते । ततश्चैतैः कर्तुरनभिहितत्वात्कर्तृविभक्ती षष्ठीतृतीये भवतः—भेत्तव्यं कुसूलस्य, भेत्तव्यं कुसूलेनेति । 'भिद्यते कुसूल' इत्यत्र च द्वितीया न भवति । क्तग्रहणस्याऽत्र प्रयोजनं न दृश्यते । गवा दुग्धं पय इत्यत्र दृश्यत इत्याहुः । तथा ह्यकर्मकत्वाद्गत्यर्थाकर्मकेति वचनात् कर्तरि भवितव्यमेव

---

उ०—प्रश्नः । तत्सम्भवम्प्रदर्शयति—कर्मकर्त्तरीति । स्वातन्त्र्यञ्च प्रधानधात्वर्थाश्रयत्वम् । तच्च कर्मव्यापारमात्रस्य धात्वर्थत्वे सम्भवतीत्याह—पच्यत इति । कुसूले क्रियाऽदर्शनादाह—विशरणेति । भाष्ये—विग्रहवतैवेति । सशरीरेण चेतनेनैवेत्यर्थः । निरभिवर्षे इति । अनातपे इत्यर्थः । ननु सुकरता यदि प्रयोजकव्यापारस्तर्हि तस्य देवदत्तः कर्तेति, 'नाऽन्य' इति भाष्यमनुपपन्नं स्यादत आह—द्विधेति । सुकरताविषयक्रिया सुकरताशब्देनोच्यत इत्यर्थः । कर्मगतसौकर्यं निरीक्ष्यैव देवदत्तादेः कर्तृत्वम्, नाऽन्यथेत्याह—अन्यथेति । एवञ्च सौकर्यातिशयविवक्षया विद्यमानोऽपि कर्तृव्यापारो न विवक्ष्यते । किन्त्वनेकार्थत्वाद्धातूनां कर्मनिष्ठव्यापारमात्रपरता तदा कर्मणः 'कर्तृत्वे कर्मणा तुल्यक्रिय' इत्यत्राऽवस्थान्तरीयकर्मणा तुल्यक्रियत्वमित्येवार्थो विवक्षित इति दिक् । 'लान्तस्ये'ति षष्ठी वाच्यवाचकसम्बन्धे, निमित्तनिमित्तिभावे चेत्याह—लान्तेति । 'लान्तवाच्य' इत्यर्थस्य फलमाह—तेनेति । षष्ठीतृतीये इति । 'कृत्यानां कर्तरि वे'ति वचनादिति भावः । यद्यपि स्वाश्रयाऽनिवृत्तेर्भावे सिद्ध्यन्त्येव तव्यादयस्तथापि 'भेत्तव्यः कुसूलः स्वमेवे'त्यपि स्यादिति दोषः । भाष्यस्यापि—'भेत्तव्यं कुसूलेने'ति भाव एव कृत्यो यथा स्यादित्यर्थो बोध्यः । लान्तकार्य एवेत्यस्य

---

† तयोरेव कृत्यक्तखलर्थाः ३ । ४ । ७०

खलर्थ—ईषद्भेदः कुसूल इति कर्म। स यदा स्वातन्त्र्येण विवक्षितस्तदाऽस्य कर्मवद्भावः स्यात्, तस्य प्रतिषेधो वक्तव्यः, तस्मिन्प्रसिद्धेऽकर्मकाणां भावे खल्भवतीति भावे खल्यथा स्यात्—ईषद्भेदं कुसूलेनेति।

तत्तर्हि लग्रहणं कर्तव्यम्? न कर्तव्यम्। क्रियते न्यास एव। 'लिङ्याशिष्यङ् [ ३। १। ८६ ] इति द्विलकारको निर्देशः।

सिद्धं तु प्राकृतकर्मत्वात् ॥ ८ ॥

सिद्धमेतत्। कथम्? 'प्राकृतकर्मत्वात्'। प्राकृतमेवैतत् कर्म, यथा—कटं करोति, शकटं करोतीति॥ कथं पुनर्ज्ञायते—'प्राकृतमेवैतत्कर्मे'ति?

प्र०—क्तेन,—भिन्नः कुसूलः स्वयमेवेति। तथा च सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यमिति सिनो ग्रासः स्वयमेवेति क्तः कर्तर्युदाहरिष्यते। सिद्धं त्विति। प्राकृतं स्वाभाविकमेवैतत्कर्म न त्वातिदेशिकमित्यर्थः। आत्मसंयोग इति। एकस्यैव वस्तुनो भेदेनात्मा कर्मत्वेन कर्तृत्वेन च विवक्ष्यत इत्यर्थः। तदुक्तम्—

'एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते।
कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते'॥ इति।

कर्म दृश्यत इति। कर्मत्वं दृश्यत इत्यर्थः। विषम उपन्यास इति। अयं भावः—दृष्टान्ते आत्मभेदस्य शब्देन प्रतिपादितत्वाद्युक्तं कर्मत्वम्। इह तु 'लूयते केदारः' 'पच्यते ओदन' इत्यादौ यदा 'स्वय'मिति शब्दो न प्रयुज्यते, तदात्मभेदाऽविवक्षायां कर्मत्वाऽभावात्कर्तृत्वमेव द्विधाभवनादौ केदारादीनामिति कर्मवदतिदेशः कर्तव्य एव। 'नमते दण्ड'

उ०—फलमाह-भिद्यते कुसूल इति। कर्त्तरि लेऽपि कर्मवद्भावेन द्वितीया स्यादिति भावः। ननु ह्यङ्गविकलमेतत्, कर्मत्वेनाऽभिहितत्वेन च। तत्राऽतिदेशेन कर्मत्वेऽपि अभिहितत्वात्कथं द्वितीयेति चेन्न, कार्यातिदेशेऽनेनैव द्वितीया विधीयते तत्र चाऽनभिहिताऽधिकाराऽभाव इत्यभिमानात्। वस्तुतः 'कर्मव' दित्युक्तेः कर्मणि यत्कार्यं येनोपाधिना यथा भवति तथा कर्तर्यपीत्यर्थादभिहितत्वेन द्वितीयावारणस्य सुकरत्वाद्भ्रान्तस्य कार्ये इति चिन्त्यफलम्। अत्र-'भिन्नं कुसुलेने' त्यत्र। अत्र कर्मवत्त्वाऽभावेपि अकर्मकत्वनिबन्धनकर्तृत्वमादाय 'भिन्नः कुसूल' इत्यस्य दुर्वारत्वेन तत्प्रवृत्त्यप्रवृत्त्योर्न फलमिति भावः। तद्वक्ष्यति—तथा हीत्यादिना। गवा दुग्धमिति। अत्र गोः कर्मवत्त्वे'अप्रधाने दुहादीना'मिति वचनात्तस्मिन्नेव कर्मणि क्तः स्यात्। तदभावे तु कर्मान्तराऽभावात्पयस्येव कर्मणि क्ते 'गवा दुग्धं पय' इति भवतीत्यर्थः। वस्तुतस्तु कर्मवद्भावेन कर्मणि क्ते 'परशुभिन्नः कुसूल' इत्यादौ तृतीयान्तं पूर्वपदं कर्मवाचकक्तान्त उत्तरपदे प्रकृतिस्वरमित्यर्थक-'तृतीया कर्मणी'त्यनेन पूर्वपदप्रकृतिस्वरः प्राप्नोति, कर्त्तरि तु नेति फले विशेषस्य स्पष्टतया चिन्त्योऽयं कैयटः। कर्मणि प्रत्ययेनैव प्रयोगाणां सिद्धेः सूत्रं व्यर्थमित्याशङ्कते भाष्ये—सिद्धन्त्विति। आत्मसंयोग

१—क्वचिन्न।

## आत्मसंयोगेऽकर्मकर्तुः कर्मदर्शनात् ॥ ९ ॥

आत्मसंयोगेऽकर्मकर्तुः कर्म दृश्यते । क्व ? हन्त्यात्मानम्, हन्यत आत्मनेति । विषम उपन्यासः । 'हन्त्यात्मान'मिति कर्म दृश्यते कर्ता न दृश्यते । आत्मना हन्यत इति । कर्ता दृश्यते कर्म न दृश्यते ।

## पदलोपश्च ॥ १० ॥

पदलोपश्चात्र द्रष्टव्यः । हन्त्यात्मानमात्मा । आत्मना हन्यत आत्मेति ॥ कः पुनरात्मानं हन्ति को वाऽऽत्मना हन्यते ? द्वावात्मानौ, अन्तरात्मा शरीरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवति ।

प्र०—इत्यादौ च प्राकृतकर्मत्वे यक्चिणोः प्रतिषेधे शप्चङौ न स्याताम् । 'भिद्यते कुसूलेने'ति च सकर्मकत्वाद्धातोर्भावे लो न स्यात् । कर्म दृश्यत इति । 'आत्मान'मिति द्वितीयान्तवाच्यं कर्म । कर्ता न दृश्यत इति । 'हन्ती'ति कर्तरि लकारोत्पत्तावपि कर्तृविशेषानुपादानादिति भावः । कर्ता दृश्यत इति । तमन्तरेण क्रियाया अभावादात्मनेत्येतद्वाच्य इति भावः । कर्म न दृश्यत इति । कर्तृविशेषव्यतिरेकेणाऽन्यस्याऽत्र कर्मणो दुरुपपादत्वादिति भावः । पदलोपश्चेति । गम्यमानार्थत्वादप्रयोगः पदस्येत्यर्थः । यत्तु 'लूयते केदारः स्वयमेवे'ति वृत्तिकारैरुदाह्रियते तत्र कर्त्रन्तराऽभावप्रतिपादनेन केदारस्यैव कर्तृत्वप्रतिपादनाय स्वयं शब्दः प्रयुज्यते, नत्वेतत्कर्मवद्भावस्योदाहरणं स्वयं शब्दस्यात्मनेति तृतीयान्तार्थे वर्तनादात्मनः कर्तृत्वे केदारस्य प्राकृतकर्मत्वसद्भावात् । द्वावात्मानाविति,—णेरणावित्यत्र व्याख्यातमिति तत एवावधार्यम् । आश्लिष्यत इति ।

उ० - इति । आत्मवाचकपदसमभिव्याहारे इत्यर्थः । अकर्मकर्तुरिति । कर्मभिन्नस्य कर्तुरात्मनः सत्त्वेऽपि कर्म दृश्यत इत्यर्थः । तथा 'भिद्यते कुसूल' इत्यादावपि आत्मनः कर्तृत्वात्कर्मण्येव लकारेण सिद्धम् । अत एव 'आत्मने'त्यर्थकं 'स्वयमेवे'ति कर्मकर्त्रुदाहरणेषु प्रयुज्यत इति तात्पर्यम् । समाधत्ते—विषम इति । तत्र हृत्स्थं वैषम्यं दर्शयति—दृष्टान्त इति । भावे ल इति । इदमुपलक्षणं तव्यादीनाम् । एतेन 'भिद्यते कुसूलेनात्मे'ति कर्मण्येवाऽयमप्रयोग इत्यपास्तं, भेत्तव्यमीषद्भेदमित्याद्यसिद्धयापत्तेः । न च तत्राऽपि कर्मणि, नियमेन नपुंसकप्रयोगाऽनापत्तेः । हृत्स्थमुक्तं वैषम्यं विघटयति भाष्ये—हन्त्यात्मानमित्यादिना । एवञ्चात्र शब्देन प्रतिपादनाऽभावेऽपि यथा कर्मत्वं तथा प्रकृतेऽपि भविष्यतीति भावः । वैषम्युपपादयति—पदलोपश्चेति । तद्व्याचष्टे—गम्यमानेति । एवञ्च झटित्यध्याहारसम्भवाद्वाक्यैकदेशन्यायेन बोधसम्भवाद्वा तत्राऽऽत्मभेदस्य शब्देन प्रतिपादनमिति वैषम्यमस्त्येवेति भावः । ननु कर्मवद्भावविषयेऽपि 'स्वय'मित्यस्य प्रयोग उदाहरणेषु दृश्यत इति तत्राऽप्यस्त्येव भेदस्य शब्देन प्रतिपादनमत आह—यत्त्विति । न त्वेतदिति ।

१—'कर्मकर्तुः' । २—'आत्मना हन्यते इति' पा० ।

## सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति ॥ ११ ॥

सकर्मकाणां प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? अन्योन्यमाश्लिष्यतः, अन्योन्यं संस्पृशतः, अन्योन्यं गृह्णीत[1] इति ।

## तपेर्वा सकर्मकस्य वचनं नियमार्थम् ॥ १२ ॥

तपेर्वा सकर्मकस्य वचनं† नियमार्थं भविष्यति—'तपेरेव सकर्मकस्य नान्यस्य सकर्मकस्ये'ति ।

तस्य तर्ह्यन्यकर्मकस्यापि प्राप्नोति—उत्तपति सुवर्णं सुवर्णकारः । उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपति ।

प्र०—क्रियाफलस्य संयोगस्य कर्मणि दर्शनात्कर्मस्थक्रियत्वमत्र द्रष्टव्यम् । तपेर्वेति । तप इति योगविभागेन नियमः क्रियत इति भावः । ननु 'तप्यते तपस्तापस' इत्यत्र कर्मस्थक्रियया तुल्यक्रियत्वं कर्तुर्नास्ति, उपवासादेस्तपसः कर्तृत्वे तपेर्दुःखार्थत्वात्तापसस्य तु कर्तृत्वेऽर्जनार्थत्वात् । नैष दोषः । शरीरसंतापलक्षणायाः क्रियायास्तुल्यत्वादवस्थाद्वयेऽपि शरीरसंतापलक्षणमेवार्जनं

उ०—'आत्मने'त्यर्थक'स्वयं'पदघटितं विवक्षितात्मकर्तृकमित्यर्थः । नन्वेकस्यैव वस्तुनः कथं शब्दभेदमात्रेण भिन्नधर्मतेति शङ्कते भाष्ये—कः पुनरिति । 'आघ्नान' हन्ति य आत्मा स क इत्यर्थः । औपाधिकभेदेन भेदमारोप्य भिन्नधर्मतेत्युत्तराशयः । संयोगस्य कर्मणीति । अन्योन्यसंयोगकृतहर्षादिलक्षणस्येत्यर्थः । ननु संयोगस्य तत्कृतहर्षादेश्च कर्तर्यपि सत्त्वेनोक्तरीत्या कथं कर्मस्थत्वमिति चेन्न, हर्षरूपविशेषस्य धात्वर्थकर्मत्वकृतत्वेन कर्मस्थत्वमेवेत्याशयात् । यद्यप्युक्तरीत्या नेदमुदाहरणं तथाप्ययमत्र भाष्यार्थः, कर्मपदेन तत्स्था क्रिया लक्ष्यते, 'मञ्चाः क्रोशन्ती'तिवत् । अन्यतरक्रियां प्रति कर्मण्यन्यतरस्मिन् या संयोगानुकूलक्रिया तादृश्येवाऽपरस्मिन् कर्त्तरीति स्यादेव प्रसङ्गः । यद्यपि 'देवदत्तादयः पचन्ती'त्यादाविव धातुना भेदस्याऽप्रतीतिस्तथाप्याश्रयभेदकृतं वास्तवं भेदमादाय तुल्यत्वाऽक्षतिः । 'कर्मत्वोपयोगिकर्मस्थक्रियया कर्तृत्वोपयोगिक्रिया तुल्या यस्य कर्तु'रित्यर्थे तु न मानमिति बोध्यम् ।

एकयोगे नियमद्वयाऽलाभादाह—योगविभागेनेति । भाष्ये—किमिदं तप इति । सूत्रे 'तपः कर्मकस्ये'त्यत्र 'तपः' पदेन किमुच्यत इति प्रश्नः । 'धात्वर्थः सन्ताप' इत्युत्तरम् । दुःखार्थत्वादिति । 'तापसं तपस्तपती'त्यतस्तं दुःखयतीत्यर्थावगमात् । अर्जनार्थत्वादिति । 'तापसस्तपस्तप्यते' इत्यतोऽर्जयतीत्यर्थावगमादिति भावः । शरीरेति । शरीरसन्तापलक्षणायाः क्रियाया अवस्थाद्वयेऽपि तुल्यत्वात्, यतः शरीरसन्तापलक्षणमर्जनमेव तापसस्य व्यापारो नाऽन्य इत्यन्वयः । अयं भावः 'तपति तापसं तप' इत्यस्य सन्तापविशेषस्तापसं तपतीत्यर्थः । तपतिरत्राऽन्तर्भावितण्यर्थः । तापसवृत्तिशरीरसन्तापसामान्यानुकूलव्यापारानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः । तदनुकूलो व्यापारश्च सन्तापविशेषे स्वरूपावस्थानरूप

१—'सङ्गृह्णीतः' पा० । † तपस्तपः कर्मकस्यैव ३ । १ । ८८

## तस्य च तपःकर्मकस्यैव ॥ १३ ॥

तस्य च तपःकर्मकस्यैव कर्ता कर्मवद्भवति नान्यकर्मकस्येति ।

किमिदं तप इति ? तपेरयमौणादिकोऽस्कारो भावसाधनः । कः प्रकृत्यर्थः कः प्रत्ययार्थः ? स एव सन्तापः । कथं पुनः स एव नाम प्रकृत्यर्थः स्यात्स एव च प्रत्ययार्थः । सामान्यतपेरवयवतपिः कर्म भवति । तद्यथा—स एतान्पोषान-पुषत्,—गोपोषमश्वपोषं रैपोषमिति सामान्यपुषेरवयवपुषिः कर्म भवति । एवमिहापि सामान्यतपेरवयवतपिः कर्म भवति ।

## दुहिपच्योर्बहुलं सकर्मकयोः ॥ १४ ॥

दुहिपच्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् । दुग्धे गौः पयः [ स्वयमेव ] । तस्मादुदुम्बरः स लोहितं फलं पच्यते । बहुलवचनं किमर्थम् ? 'परस्मैपदार्थम्' । यद्येवं नार्थो बहुलवचनेन । न हि परस्मैपदमिष्यते ।

प्र०—तापसस्य यतो व्यापार ।कः प्रत्ययार्थ इति । तापसेन तपस्तप्यत इति कर्मणि लकारोत्पत्तौ प्रकृत्यर्थस्यैव क्रियारूपस्य प्रत्ययार्थत्वं दृश्यते । क्रियाकर्मणोश्च साध्यसाधनभावाद्भेदेन भाव्यम् । इह तु भेदाऽभावात् प्रकृतिप्रत्ययार्थानुपपत्तिः । अथवा 'तपः कर्मकस्ये'ति वचनात् प्रकृत्यर्थस्यैव कर्मत्वमाश्रितं, तच्च विरुद्धमिति भावः । अवयवतपिरिति । विशेषतपिर्ज्ञानलक्षणं तप इत्यर्थः । दुग्धे गौरिति । गौमुंश्चति पय इत्यर्थः । दुहेर्द्विकर्मकत्वात्कर्मस्थक्रियातुल्यक्रियत्वेऽपि सकर्मक-त्वादप्राप्ते वचनम् । 'फलं पच्यत' इत्यत्र वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम् । अन्ये

उ०—एव । तापसे शरीरसन्तापसामान्यानुकूलव्यापारश्च सन्तापविशेषस्वीकार एव । एयर्थत्यागे तापसस्य कर्तृत्वम् । 'तापसस्तपः सन्तप्यते' इत्यत्र सन्तापविशेषाऽभिन्नशरीरसन्तापाऽनुकूलव्यापारस्तापसकर्तृक इति बोधः । कैयटे शरीरसन्तापपदेन स व्यापार एव । तदेव चाऽर्जनमिति बोध्यम् । तत्र क्रियाविशेषणत्वात् 'स्तोकमेधते' इत्यादाविव तपसः कर्मत्वमिति । भाष्ये—तपेरयमौणादिकोऽस्कारो भावसाधन इति । इदमुणादीनां व्युत्पन्नत्वमिति मते उक्तम् । अव्युत्पन्नत्वमिति पाणिनिसम्मते पक्षे तु 'तपः' शब्दस्य सन्तापोऽर्थ इति बोध्यम् । एतदेव परसम्मताऽन्वाख्यानेन दर्शितम् । ननु प्रकृतिप्रत्यययोरप्रकृतत्वाप्र-श्चाऽनुपपत्तिरत आह—तापसेनेति । प्रकृत्यर्थस्यैवेति । सन्तापस्येत्यर्थः । तस्यैव तपः पदार्थत्वादिति भावः । प्रत्ययार्थत्वम् । तिङ्प्रत्ययार्थकर्मरूपत्वम् । यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न, कर्तृसाह-चर्येण धात्वर्थे भेदेनान्वयिकर्मण एव तत्र ग्रहणात्, तथाऽपि भाष्यप्रामाण्यात्सामान्यविशेषभावेनान्वयिनि क्रियाविशेषणे कर्मणि लकारो भवत्येव । अत एव 'स्तोक'मित्यादेः क्रियाविशेषणस्यैकत्वनपुंसकत्वेऽपि । 'एतान् पोषानपुष'दित्यादौ पुंस्त्वबहुवचन इति बोध्यम् । ज्ञानलक्षणं तप इति । ज्ञानजनकोपवासादिरूप-

१—'प्रत्ययार्थः स्यात्स एव प्रकृत्यर्थः' पा० । २—'अपुष्यत्' पा० । ३—इदं क्वचिन्न ।

## सृजियुज्योः श्यंस्तु ॥ १५ ॥

सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् । श्यंस्तु भवति† ॥ सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यश्चिणात्मनेपदार्थः । सृज्यते मालाम्, असर्जि मालाम् ॥ युजेस्तु न्याय्ये कर्मकर्तरि यकोऽभावाय । युज्यते ब्रह्मचारी योगम् ।

प्र०—त्वाहुः-पचिरत्र विषये द्विकर्मको वृक्षस्य पाकमन्तरेण फलपाकाऽसम्भवाद्वृक्षोऽकथितंकर्म, तस्यैव च यदा कर्तृत्वविवक्षा तदाऽयं कर्मवद्भावः । एवंविध एव च विषये कर्मवद्भाव इष्यते न पुनरोदनं पचतीत्यादौ । श्रद्धोपपन्न इति । श्रद्धायुक्ते कर्तरीत्यर्थः । चिणात्मनेपदार्थ इति । श्यना यगेव बाध्यते न तु चिणित्यर्थः । श्यनि तु प्रकृतेराद्युदात्तत्वं भवति, यकि तु लसार्वधातुकानुदात्तत्वे यक एवोदात्तत्वमिति श्यन्यकोरत्र स्वरे विशेषः । सृज्यते मालामिति । श्रद्धया मालां निष्पादयतीत्यर्थः । असर्जि मालामिति । मालां निष्पादितवानित्यर्थः । यकोऽभावायेति ।

उ०—मित्यर्थः । स एव सन्ताप इति भाष्यस्य—स एव सन्तापविशेष इत्यर्थः । विशेषेऽपि सामान्यसत्त्वात् 'स एवे'त्यस्य नाऽनुपपत्तिः । भाष्ये 'एतान् पोषा'नित्यस्य विशेषसमर्पकाणि 'गोपोष'मित्यादीनि घञन्तानि बोध्यानि । अत्यन्तमप्राप्त इति । तुल्यक्रियत्वस्याप्यभावादिति भावः । सकर्मकाणामप्रतिषेधोत्तरमस्योक्तत्वेन दुहिसाहचर्येण च सकर्मकत्वप्रयुक्ताऽप्राप्तावेवैतस्य विध्यर्थतोचितेति ध्वनयन्नाह—अन्ये त्वाहुरिति । वृक्षस्य पाकमिति । वृक्षनिष्ठपाकानुकूलव्यापारं विनेत्यर्थः । तदा च कालस्य कर्तृत्वं बोध्यम् । एवञ्च पचेः फलपाकानुकूलव्यापाराऽनुकूलव्यापारोऽर्थः । तत्र फलपाकानुकूलव्यापाराऽऽश्रयत्वात् 'कर्तुरीप्सिततम'मिति वृक्षः कर्म । तस्य कर्तृत्वविवक्षायां भाष्योदाहरणसाम्राज्यात् । 'अकथितं कर्मे'त्यत्र अकथितपदमविवक्षितपरम् । कर्मत्वेनाऽविवक्षितमित्यर्थः । किंत्वेन तर्हि विवक्षेत्यत्राह—तस्यैव चेति । न तु तत्सूत्रविषयता, अस्य दुहादिषु भाष्येऽगणनात् । 'गौर्दुग्धे' इत्यपि 'कर्तुरीप्सिततम'मिति कर्मत्वे एवोदाहरणं बोध्यम् । विभागानुकूलव्यापारार्थकत्वे एव दुहेस्तदुदाहरणमिति तु न युक्तम् । तत्रार्थे कर्मस्थक्रियया तुल्यक्रियत्वाऽनुपपादनादित्याहुः । यद्यपि कालस्याकर्तृत्वविवक्षायां कर्मणि लकारेऽपीदं सिद्ध्यति तथाऽप्युदुम्बरस्य कर्तृत्वविवक्षायामुदुम्बरः फलं पचतीत्येतद्व्यावृत्तये इदम् । न पुनरोदनमिति । कर्मस्थक्रियया तुल्यक्रियत्वाऽभावादिति भावः । श्रद्धायुक्ते कर्तरीति । मुख्ये कर्तरीत्यर्थः । श्रद्धा—आदरः । तेन युक्तो मुख्य एव, तस्यैव क्रियायामादरादिति बोध्यम् । तेनाऽत्यन्ताप्राप्तौ विध्यर्थोऽयमंशः । श्यन्यकोर्विशेषमाह—श्यनि त्विति । मुख्यकर्तृत्वं निदर्शयति—श्रद्धयेति । तत्र सृजेः कर्तरि श्यन्सिद्धः । चिणात्मनेपदे एव कर्मवद्भावलब्धयका बाधो माभूदिति प्रतिप्रसवमात्रम् । 'दैवादिकः सृजिरकर्मक एवे'ति त्वश्रद्धेयमेवेति केचित् । भाष्ये—न्याय्ये इति । न्यायः—उत्सर्गसूत्रं 'कर्मवत्कर्मणे'ति । तदनपेते । तत्प्राप्तियोग्ये इति यावत् । सकर्मकत्वात्तदप्राप्तौ विधिः । श्यंस्तु अप्राप्त एव विधीयते यग्बाधनायेति विशेषः । यकोऽभावायेत्यस्य 'श्यंस्त्वि'त्यादिः । योगो ब्रह्मचारिणमिति । पूर्ववत्क्षेयम् । 'सम्बध्नाती' त्यस्य सम्बन्धानुकूलव्यापारवान्

† श्यनः प्रयोजनम्—'ञ्नित्यादिर्नित्यम्' ( ६ । १ । १९७ ) इत्यनेनाद्युदात्तस्वरः ।

## करणेन तुल्यक्रियः कर्ता बहुलम् ॥ १६ ॥

करणेन तुल्यक्रियः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् । परिवारयन्ति कण्टकैर्वृक्षम् । परिवारयन्ते कण्टका वृक्षमिति ।

## स्रवत्यादीनां प्रतिषेधः ॥ १७ ॥

स्रवत्यादीनां प्रतिषेधो वक्तव्यः । स्रवति कुण्डिकोदकम्, स्रवति कुण्डिकाया उदकम् । स्रवन्ति वल्लीकान्युदकम्, स्रवति वल्लीकेभ्य उदकमिति ।

स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । 'तुल्यक्रिय' इत्युच्यते, क्रियान्तरं चाऽत्र गम्यते । इह तावत्स्रवति कुण्डिकोदकमिति,—विसृजतीति गम्यते । 'स्रवति कुण्डिकाया उदक'मिति,—निष्क्रामतीति गम्यते । 'स्रवन्ति वल्लीकान्युदक'मिति,—विसृजन्तीति गम्यते । स्रवति वल्लीकेभ्य उदकमिति—पततीति गम्यते ।

प्र०—अकारप्रश्लेषाद्यबाधनायेत्यर्थः । युज्यत इति । योगो ब्रह्मचारिणं युनक्ति, सम्बध्नातीत्यर्थः । ततो ब्रह्मचारिणः कर्तृत्वविवक्षायां 'युज्यते ब्रह्मचारी योग'मिति भवति । करणेनेति । बहुलग्रहणात् 'साध्वसिश्छिनत्ती' त्यादौ न भवति । स्रवति कुण्डिकेति । निष्क्रामदुदकं निष्क्रामयतीत्यस्मिन्नर्थे तुल्यक्रियत्वात् प्राप्तः कर्मवद्भावो निषिध्यते । विसृजतीति गम्यत इति । तथा च लोके कथ्यते 'कृपणोऽसौ न किञ्चित् स्रवती'ति । विसर्गश्च दानमुच्यते इति तुल्यक्रियत्वाऽभावः । भूषाकर्मेति । कर्मशब्दः क्रियावाची । भूषाफलं च शोभाख्यं कर्मणि दृश्यते इति कर्मस्था भूषा । अण्यन्तार्थं च भूषाग्रहणं, ण्यन्तानां च वक्ष्यमाणेन यक्चिणोः प्रतिषेधस्य सिद्धत्वात् । तेन अलंकुरुते स्वयमेव कन्या, अलमकृत स्वयमेव कन्येति भवति ।

उ०—भवतीत्यर्थः । तत इति । प्रतियोगित्वावच्छिन्नः सम्बन्धो युजेरर्थः । प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वम् । यत्तु 'योग'मिति प्रतियोगे द्वितीया । एवञ्चाऽकर्मकत्वात्कर्मवद्भावे सिद्धे यग्बाधनाय श्यन्मात्रविधानार्थमिदमिति, तन्न, 'सृजियुज्यो'रिति वार्तिके 'सकर्मकयो'रिति भाष्यविरोधापत्तेः । भाष्ये परिवारयन्ते कण्टका इति । न च 'णिचश्चे'त्यनेनैवात्मनेपदं सिद्धम्, यक्चिणौ तु 'णिश्रन्थिग्रन्थी'ति प्रतिषिद्धावेवेति व्यर्थमिदमिति वाच्यम् । कर्तृगामित्वाऽभावेऽप्यात्मनेपदार्थं चिण्वद्भावार्थञ्च वार्तिकस्याऽवश्यकत्वात् । स्रवति कुण्डिका उदकमित्यस्य निष्क्रामयतीत्यर्थः । स्रवति कुण्डिकाया इत्यस्य निष्क्रामतीत्यर्थः । तदाह—निष्क्रामदिति । ननु विसर्गोऽपि विभागाऽनुकूलव्यापारो निष्क्रमणादनतिरिक्तोऽत आह—विसर्गश्च दानमिति । मुख्यदानपदार्थस्याऽत्राऽऽरोप इति भावः । सिद्धत्वादिति । वक्ष्यमाणेन यक्चिणोः प्रतिषेधे सिद्धेऽपि स्यतासिविषये चिण्वद्भावाऽभावाय यत्नोऽपि एतत्प्रवृत्तिरावश्यकी । 'अन्यत्रात्मनेपदा'दित्यनेन तस्याऽप्यत्र निषेधात् । 'णिश्रन्थी'त्यनेन तु न सिद्धिः, न हि चिणिनिषेधेन चिण्वद्भावनिषेधो लभ्यत इति चिन्त्यमेतत् । कर्तृत्वेन हस्तीति । अवकिरते—व्याप्तो भवतीत्यर्थ इति भावः । आद्यकक्षायां विक्षेपणेन व्याप्तं करोती-

भूषाकर्मकिरतिसनां चाऽन्यत्रात्मनेपदात् ॥ १८ ॥

भूषाकर्मकिरतिसनां चान्यत्रात्मनेपदात्प्रतिषेधो वक्तव्यः । भूषयते कन्या स्वयमेव । अबुभूषत कन्या स्वयमेव । मण्डयते कन्या स्वयमेव । अममण्डत कन्या स्वयमेव ॥ किरति—अवकिरते हस्ती स्वयमेव । अवाकीर्ष्ट हस्ती स्वयमेव ॥ सन्—चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट कटः स्वयमेव ॥ ८७ ॥

न दुहस्नुनमां यक्चिणौ ॥ ३ । १ । ८९ ॥

यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यानम् ॥ १ ॥

कक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यानं कर्तव्यम् । णि—कारयते कटः स्वयमेव । अचीकरत कटः स्वयमेव । णि ॥ श्रि—उच्छ्रयते दण्डः स्वयमेव । उदशिश्रियत दण्डः स्वयमेव । श्रि ॥ ब्रूञ्—ब्रूते कथा स्वयमेव । अवोचत कथा स्वयमेव ।

भारद्वाजीयाः पठन्ति—'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्म-

प्र०—अवकिरत इति । हस्तिनं कश्चित्पांस्वादिनाऽवकिरति, तत्र सौकर्यात्कर्तृत्वेन हस्ती विवक्ष्यते । चिकीर्षत इति । करोतिक्रियापेक्षमत्र कर्मस्थक्रियत्वम्, इच्छा तु कर्तृस्थैव, अर्थाच्च करोतेः प्राधान्यं, तदर्थत्वादिच्छायाः ॥ ८७ ॥

न दुहस्नु । यक्चिणोरिति । आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थास्सकर्मका भवन्ति तदा कर्मवद्भावात् प्राप्तौ यक्चिणौ प्रतिषिध्येते । यथा 'विकुर्वते सैन्धवाः' । वलान्तीत्यर्थः । तान् यदा अन्यो वलयति तदा तेषां कर्मत्वम् । पुनः सौकर्यातिश-

उ०—त्यर्थः । भाष्ये—अवाकीर्ष्टेति । 'अन्यत्राऽत्मनेपदा'दित्युक्तेश्चिण्वद्भावोऽपि नेति भावः । अत एवेदं वार्तिकं 'न दुहे'त्यत्र न पठितम् । चिकीर्षेरिच्छावाचकत्वात्कर्मस्थक्रियत्वाऽभावमाशङ्क्याह—करोतिक्रियापेक्षमिति । ननु यतः परलवाच्यस्य कर्मवद्भावस्तत्प्रधानार्थस्य न कर्मस्थत्वमित्यत आह—अर्थाच्चेति ॥ ८७ ॥

न दुहस्नुनमां । अकर्मकाणां कर्मस्थक्रियया तुल्यक्रियकर्त्रभावात्कर्मवत्त्वाऽप्राप्तौ निषेधो व्यर्थोऽत आह—आत्मनेपदेति । सकर्मका भवन्तीति । 'ततो व्यापारनिवृत्तौ यदा कर्मकर्तृत्व'मिति शेषः । व्यकृषतेति । अत्र 'चिण्वद्भावोऽपिने'ति कैयटाशयमाहुः केचित् । 'कृञ' इत्यनुवर्त्तमाने 'वेः शब्दकर्मणः' 'अकर्मकाच्चे'त्यत्राऽयं निर्दिष्टः । परे तु पक्षे चिण्वद्भावे 'व्यकारिषते'त्यपि बोध्यम् । यदि चिण्प्रतिषेधे चिण्वद्भावप्रतिषेधोऽपीष्टः स्यात्तर्हि 'भूषाकर्मे'ति पूर्ववार्तिकमप्यत्रैव कुर्यात् । एतद्वा तत्रैव कुर्यात् । विभेदेन करणाच्च चिण्वद्भावस्य प्रतिषेधोऽनेन नेति ध्वनयति । चिण् उदाहरणमेकवचने बोध्यमित्याहुः ।

काणामुपसङ्ख्यान'मिति ॥ ८६ ॥

## कुषिरजोः प्राचां श्यन्परस्मैपदं च ॥ ३ । १ । ९० ॥

### कुषिरजोः श्यन्विधाने सार्वधातुकवचनम् ॥ १ ॥

कुषिरजोः श्यन्विधाने सार्वधातुकग्रहणं कर्तव्यम् ।

अवचने हि लिङ्लिटोः प्रतिषेधः ॥ २ ॥

अक्रियमाणे हि सार्वधातुकग्रहणे लिङ्लिटोः प्रतिषेधो वक्तव्यः स्यात् । चुकुषे पादः स्वयमेव । ररञ्जे वस्त्रं स्वयमेव । कोषिषीष्ट पादः स्वयमेव । रङ्क्षीष्ट वस्त्रं स्वयमेव ।

क्रियमाणे चापि सार्वधातुकग्रहणे कतीह कुष्णानाः* पादाः इत्यत्रापि प्राप्नोति । श्यना च स्यादीनां बाधनं प्राप्नोति । कोषिष्यते पादः स्वयमेव । रङ्क्ष्यते वस्त्रं स्वयमेव । अकोषि पादः स्वयमेव । अरञ्जि वस्त्रं स्वयमेव ।

प्र०—यात्कर्तृत्वविवक्षायां–'विकुर्वते सैन्धवाः स्वयमेव' 'व्यकृषत सैन्धवाः स्वयमेवे'ति यक्चिणौ न भवतः । 'उत्पुच्छयते गौ'रित्यत्राप्यन्तर्भावितण्यर्थत्वात्कर्मवद्भावाद्यक्चिणोः प्राप्तिः । ब्रूते कथेति । वचनं शब्दप्रकाशनफलत्वात्कर्मस्थम् ॥ ८९ ॥

कुषिरजोः । यकि प्राप्ते श्यन्विधीयते तेन श्यनि 'ञ्नित्यादि'रित्याद्युदात्तं पदं भवति । 'शप्श्यनोर्नित्य'मिति नित्यश्च नुमागमः,—कुष्यन्ती जङ्घेति । सार्वधातुकवचनमिति । सार्वधातुके विषयभूते श्यन्परस्मैपदे भवत इत्यर्थः । कुष्णाना इति । 'ताच्छील्यवयोवचने'ति चानश् । तत्र श्यन् प्राप्नोति, परस्मैपदं चान्वाचयशिष्टं मन्यते । श्यना चेति । विशेषविहितत्वा-

उ०—भारद्वाजीयानां 'हेतुम'त्पदत्यागे बीजमाह—उत्पुच्छयतेति । अत्र यगादिकं न । ब्रूते कथेति । 'अत्रे'ति शेषः । प्रकाशनफलकं वचनं ब्रूञोऽर्थः, प्रकाशनस्य कर्ममात्रनिष्ठत्वाच्छब्दे प्रकाशनकृतविशेषदर्शनाच्च कर्मस्थत्वं बोध्यम् ॥ ८६ ॥

कुषिरजोः । यक्श्यनोर्विशेषं दर्शयति—ञ्नित्यादिरित्यादिना । परस्मैपदस्य सार्वधातुके विधानाऽसम्भवादाह—विषयेति । भाष्ये—लिङ्लिटोः प्रतिषेध इति । तत्र नित्यात्मनेपदस्यैवेष्टत्वादिति भावः । ननु 'कुष्णाना' इत्यत्र परस्मैपदाऽप्राप्तेस्तत्सहचरितः श्यन्नपि नेत्यत आह—परस्मैपदञ्चेति । विशेषविहित्वादिति । लृलुट्लुङ्व्यतिरिक्ते श्यनश्चारितार्थ्यादिदञ्चिन्त्यम् । 'परत्वाद्बाध' इत्युचितमिति कश्चित् ।

१—'लिङ्लिङोः' इत्येवं पाठो भवेदुदाहरणक्रमदर्शनात् ।

* ताच्छील्यवयोवचनशक्तिषु चानश् ३ । २ । १२९; तिङ्शित् सार्वधातुकम् ३ । ४ । ११३

यत्तावदुच्यते 'सार्वधातुकग्रहणं कर्तव्य' मिति, न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'सार्वधातुके यक्' [ ३ । १ । ६७ ] इति । यदि तदनुवर्तते पूर्वस्मिन् योगे† किं समुच्चयो—ले च सार्वधातुके चेति, आहोस्विल्लग्रहणं सार्वधातुकविशेषणम् ? किं चातः ? यदि समुच्चयः—'कतीह भिन्दानाः कुसूला' इत्यत्रापि प्राप्नोति । अथ लग्रहणं सार्वधातुकविशेषणं,—लिङ्लिटोर्न सिध्यति—बिभिदे कुसूलः स्वयमेव, भित्सीष्ट कुसूलः स्वयमेवेति ।

अस्तु लग्रहणं सार्वधातुकविशेषणम् । ननु चोक्तं 'लिङ्लिटोर्न सिध्यती'ति । लिङ्लिड्ग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'कास्प्रत्ययादाममन्त्रे लिटि' [ ३५ ] 'लिङ्याशिष्यङ्' [ ८६ ] इति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं—'कतीह कुष्णानाः पादा इत्यत्रापि प्राप्नोती'ति । अत्रापि लविशिष्टं सार्वधातुकग्रहणमनुवर्तते ।

यदप्युच्यते—'श्यना च स्यादीनां बाधनं प्राप्नोती'ति । यक्प्रतिषेधसंबन्धेन श्यनं वक्ष्यामि । 'न दुहस्नुनमां यक्चिणौ' [ ८९ ] । ततः [ 'कुषिरजोः प्राचाम्' । ] कुषिरजोः प्राचां यक्चिणौ न भवतः । ततः 'श्यन्परस्मैपदं चे'ति ।

यथैव तर्हि यको विषये श्यन्भवत्येवं चिणोऽपि विषये प्राप्नोति—अकोषि पादः स्वयमेव, अरञ्जि वस्त्रं स्वयमेव ।

एवं तर्हि द्वितीयो योगविभागः करिष्यते [ नर्दुहस्नुनमां । ] न दुहस्नुनमां चिण्भवति । ततो 'यक्' । 'यक्च न भवति दुहस्नुनमाम्' । ततः 'कुषिरजोः प्राचां' [ कुषिरजोः प्राचां ] यग्न भवति । ततः 'श्यन्परस्मैपदं चे'ति ।

प्र०—दिति भावः । यक्प्रतिषेधसंबन्धेनेति । तेन यत्र यकः प्राप्तस्य प्रतिषेधस्तत्र श्यन्परस्मैपदे भवतो नान्यत्रेति स्यादिविषये न भवतः । लकारावस्थायामेवेति । अकृतेष्वेव लादेशेषु विशेषविहिताः स्यादयो भवन्ति, पूर्वं तैश्च श्यनो विरोधाद्बाधितत्वात् संनियोगशिष्टं परस्मैपद-

उ०—भाष्ये—पूर्वस्मिन् योग इति । 'कर्मवत्कर्मणा' त्यत्र । ले च सार्वधातुके चेति । लसार्वधातुकयोर्वाच्यत्वेन स्थितः कर्मवदित्यर्थः । भिन्दाना इति । चानश् । भाष्ये—इहाऽपि लेति । 'कुषिरजोः' इत्यत्रापि । लादेशसार्वधातुकविषये इत्यर्थ इति भावः । अकृतेष्वेव लादेशेष्विति । निरवकाशत्वाऽभावेऽपि विशेषविहितत्वस्य पूर्वप्रवृत्तिप्रयोजकतेति भावः । परे तु 'स्यतासी' इति सूत्रे 'आयादय' इत्यत'आर्द्धधातुके'

† कर्मवत् कर्मणा तुल्यक्रियः ३ । १ । ८७ १—'कुशूला' पा० । २—'कुशूलः' पा० । ३—'इति प्राप्नोतीति' पा० । ४—क्वाचित्कम् ।

अथवाऽनुवृत्तिः करिष्यते—'स्यतासी लृलुटोः' [ ३३ ] च्लि लुङि [ ४३ ] च्लेः सिज्भवति × । 'कर्तरि शप्' [ ६८ ] स्यतासी लृलुटोः, च्लि लुङि, च्लेः सिज्भवतीति । 'दिवादिभ्यः श्यन्' [ ६९ ] स्यतासी लृलुटोः, च्लि लुङि, च्लेः सिज् भवतीति । 'कुषिरजोः प्राचां श्यन्परस्मैपदं च' स्यतासी लृलुटोः, च्लि लुङि, च्लेः सिज्भवतीति ।

अथवाऽन्तरङ्गाः स्यादयः । क्वान्तरङ्गता ? लकारावस्थायामेव स्यादयः । सार्वधातुके श्यन् ॥ ९० ॥

## धातोः ॥ ३ । १ । ९१ ॥

आ कुतोऽयं धात्वधिकारः ? किं प्राग्लादेशात्*, आहोस्विदा तृतीयाध्याय-परिसमाप्तेः ?

**धात्वधिकारः प्राग्लादेशात् ॥ १ ॥**

प्राग्लादेशाद्धात्वधिकारः ।

**लादेशे हि व्यवहितत्वादप्रसिद्धिः ॥ २ ॥**

अनुवर्तमाने हि लादेशे धात्वधिकारे व्यवहितत्वादप्रसिद्धिः स्यात् ।

किञ्च स्यात् ?

प्र०—मपि न भवति ॥ ९० ॥

धातोः । स्वरितत्वप्रतिज्ञानादधिकारत्वमस्य ज्ञायते न त्ववधिविशेषः । अथापि स्वरिते सति नाधिकारो भवतीति व्याख्यानं तथापि दुर्लक्ष्यत्वान्न ज्ञायते क्व स्वरितत्वं धात्वधिकार-निवृत्त्यर्थं प्रतिज्ञातमिति पृच्छति—आ कुत इति । आद्ये योग इति । 'तिप्तस्झी'त्यत्र । विकरणैरिति । स्यादयोऽत्र विकरणा अभिप्रेता न शबादयः, तेषां सार्वधातुकाश्रयत्वादकृते

उ०—इत्यनुवर्त्त्यं तत्त्वावस्थायामेव स्यतासी । अतोऽकृतेष्वेवादेशेषु तत्प्रवृत्तिः । इदमेवाऽभिप्रेत्य भाष्ये—लावस्थायामित्युक्तमित्याहुः । श्यनो विरोधादिति । उभयोः परत्वाऽसम्भवरूपो विरोधः ॥ ९० ॥

धातोः । तथाऽपीति । धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञातं यत्स्वरितत्वं तत् क्वेति न ज्ञायत इति योजना । 'अनुदात्तङित' इत्यादिभिर्लादेशविधानात्तत्र धात्वधिकाराऽभावाद्भाष्ये उक्तम्— आद्ये योग इति । सर्वेषामेतन्नियामकत्वात्तिप्तस्झीत्यस्याऽऽद्यत्वमिति भावः । 'आद्ये योगे धातोरित्यस्य सम्बन्धे व्यवधाने तिङो न स्यु'रिति सम्बन्धः । 'पचति पठती'ति भाष्योदाहरणाऽसङ्गतिं मत्वाऽऽह—यदा त्विति । इदमेवाऽभिप्रेत्य विकरणानामादेशाऽपेक्षया नित्यत्वं वक्ष्यति । भाष्ये—टित्संज्ञानामिति । इत्संज्ञकटकार-

× च्लेः सिच् ३ । १ । ४४

* तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३ । ४ । ७८

## आद्ये योगे न व्यवाये तिङः स्युः

आद्ये योगे* विकरणैर्व्यवहितत्वात्तिङो न स्युः। पचति पठतीति।

इदमिह सम्प्रधार्यं विकरणाः क्रियन्तामादेशा इति, किमत्र कर्तव्यम्। परत्वादादेशाः। नित्या विकरणाः†। कृतेष्वप्यादेशेषु प्राप्नुवन्त्यकृतेष्वपि प्राप्नुवन्ति। नित्यत्वाद्विकरणेषु कृतेषु विकरणैर्व्यवहितत्वादादेशा न प्राप्नुवन्ति। अनवकाशास्तर्ह्यादेशाः। सावकाशा आदेशाः। कोऽवकाशः? य एते लुग्विकरणाः, श्लुविकरणाश्च, लिङ्लिटौ च।

### न स्यादेत्वं टेष्टितां यद्विधत्ते।

यच्च टित्सञ्ज्ञकानां टेरेत्वं विधत्ते‡ तच्च विकरणैर्व्यवहितत्वादादेशानां[1] न स्यात्।

### एशः शित्त्वं

एकारश्च शित्कर्तव्यः×। किं प्रयोजनम्? शित्सर्वस्येति+ सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारे 'तस्मादित्युत्तरस्यादेः परस्य' [ १। १। ६७; ५४ ] इति तकारस्यैत्वे कृते द्वयोरेकारयोः श्रवणं प्रसज्येत। निवृत्ते पुनर्लादेशे धात्वधिकारेऽलोन्त्यस्य विधयो†† भवन्तीत्येकारस्यैकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति।

### यच्च लोटो विधत्ते

[ यच्च[2] लोटो विधीयते। ] तच्च विकरणैर्व्यवहितत्वान्न स्यात्। किं पुनस्तत्? 'लोटो लङ्वत्' 'एरुः' 'सेर्ह्यपिच्च' 'वा छन्दसि' [ ३। ४। ८५—८८ ] इति।

प्र०—लादेशे प्राप्त्यभावात्। यदा तु सार्वधातुक इति विषयसप्तमीपक्षस्तदाऽकृतेपि लादेशे शबादीनां प्राप्तिरस्ति। द्वयोरेकारयोरिति। यद्यप्येकस्यायादेशस्तथाप्यादेशश्रवणद्वारेण तस्यापि श्रवणप्रसङ्ग इति भावः। अकार इति। यस्थस्य स्थाने विधीयते। थकारस्यात्व इति। ननु पच्

उ०—वतामित्यर्थः। भाष्ये—एकारस्यैकारवचने इति। यद्यपि विशेषविहितत्वात् 'टित' इति बाधित्वा 'लिटस्तझयो'रिति प्राप्नोति तथापि एकारस्य सिद्धात्रेकारवचने प्रयोजनं नास्तीति व्याख्येयम्। सर्वादेशो भविष्यतीति। निर्दिश्यमानपरिभाषयेति भावः। यस्थस्येति। 'परस्मैपदाना'मित्यनेन। भाष्ये—सार्वधातुके

* तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३। ४। ७८

† स्यतासीलृलुटोः ३। १। ३३ ‡ टित आत्मनेपदानां टेरे ३। ४। ७९

१—'आदेशाना'मिति क्वचिन्न। × लिटस्तझयोरेशिरेच् ३। ४। ८१

+ अनेकाल्शित् सर्वस्य १। १। ५५ †† अलोऽन्त्यस्य १। १। ५२ २—क्वाचित्कम्।

**यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात् ॥**

किं पुनस्तत् ? 'नित्यं ङितः' 'इतश्च' 'तस्थस्थमिपां तान्तन्तामः' 'लिङः सीयुट्' 'यासुट्परस्मैपदेषूदात्तो ङिच्च' [ ३ । ४ । ९९—१०३ इति ।

**तस्मात्प्राग्लादेशाद्धात्वधिकारः ।**

यदि प्राग्लादेशाद्धात्वधिकारः, अकारः शित्कर्तव्यः× । किं प्रयोजनम् ? 'शित्सर्वस्ये'ति सर्वादेशो यथा स्यात् । अनुवर्तमाने पुनर्लादेशे धात्वधिकारे 'तस्मादित्युत्तरस्यादेः परस्ये'ति थकारस्याऽत्वे द्वयोरकारयोः पररूपेण+ सिद्धं रूपं स्यात् पेच यूयम् चक्र यूयमिति । ननु च निवृत्तेऽपि लादेशे धात्वधिकारेऽलोन्त्यस्य विधयो भवन्तीत्यकारस्याऽकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति । अस्त्यन्यदकारस्याऽकारवचने प्रयोजनम् । किम् ? वक्ष्यत्येतत् 'अकारस्याकारवचनं समसङ्ख्यार्थ'मिति* ।

आर्द्धधातुकसंज्ञायां** धातुग्रहणं कर्तव्यं धातोः परस्यार्द्धधातुकसंज्ञा यथा स्यात् । इह मा भूद् वृक्षत्वं वृक्षतेति ॥ तस्माल्लादेशे धात्वधिकारोऽनुवर्त्त्यः ।

ननु चोक्त'माद्येयोगे न व्यवाये तिङः स्यु'रिति । नैष दोषः । आनुपूर्व्यात्सिद्धमेतत् । नात्राऽकृतेष्वादेशेषु विकरणाः प्राप्नुवन्ति । किं कारणम् ? सार्वधातुके विकरणा उच्यन्ते† । न चाऽकृतेष्वादेशेषु सार्वधातुकत्वं भवति । ये तर्हि नैतस्मिन्विशेषे विधीयन्ते । के पुनस्ते ? स्यादयः×× । अत्रापि विहितविशेषणं धातुग्रहणं— 'धातोर्विहितस्य लस्ये'ति ।

प्र०—थ इति स्थिते परत्वादिट्प्राप्नोति । नैष दोषः । अकारो नित्यः, कृतेऽपीटि प्राप्नोत्यकृतेऽपि । इट् तु कृतेऽकारे वलादित्वाऽभावान्न प्राप्नोतीत्यनित्यः । यद्यपि शब्दान्तरस्य प्राप्त्या अकारस्या-

उ०—विकरणा इति । विषयसप्तम्यान्तु परिभाषाबाधः स्यादिति भावः । अत्राऽपीति 'सिद्ध'मिति शेषः । कथम् ? तत्राह–धातुग्रहणमिति । टेरेत्वसिद्धये विषयसप्तमीवादिनोऽपि विहितविशेषणमावश्यकमिति भावः । अपिबन्निति । शबेकादेशस्य परादिवत्वेन ग्रहणादिति भावः । 'लङः शाकटायनस्ये'ति जुस्मातः । वस्तुतः

× परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३ । ४ । ८२ + अतो गुणे ६ । १ । ९७
* ३ । ४ । ८२ वा० ४ ** आर्द्धधातुकं शेषः ३ । १ । ११४
† सार्वधातुके यक् ३ । १ । ६७ ×× स्यतासी लृलुटोः ३ । १ । ३३
१—'तत्रापि' पा० ।

यद्येवं विन्दतीति णलादयः प्राप्नुवन्ति* । धातुनाऽत्र विहितं विशेषयिष्यामो विदिना चाऽऽनन्तर्यम्—'धातोर्विहितस्य लस्य विदेरनन्तरस्ये'ति ।

इह तर्हि—अजक्षिष्यन् अजागरिष्यन्निति,—अभ्यस्ताज्झेर्जुस्भवतीति† जुस्भावः प्राप्नोति । अत्रापि धातुना विहितं विशेषयिष्यामोऽभ्यस्तेनानन्तर्यम्—'धातोर्विहितस्याभ्यस्तादनन्तरस्ये'ति ।

आतः [ ३ । ४ । ११० ] इत्यत्र कथं विशेषयिष्यसि ? यदि तावद्धातुग्रहणं विहितविशेषणमाकारग्रहणमानन्तर्यविशेषणम्,—अलुनन् अपुनन्नित्यत्रापि प्राप्नोति । अथाऽऽकारग्रहणं विहितविशेषणं धातुग्रहणमानन्तर्यविशेषणम्,—अपिबन् अजिघ्रन्नित्यत्रापि प्राप्नोति × । अस्तु तर्हि धातुग्रहणं विहितविशेषणमाकारग्रहणमानन्तर्यविशेषणम् । ननु चोक्तमलुनन्नपुनन्नित्यत्रापि प्राप्नोतीति । नैष दोषः । लोपे कृते न भविष्यति । नाऽत्र लोपः प्राप्नोति । किं कारणम् ? ईत्वेन बाध्यते । नात्रेत्वं प्राप्नोति । किं कारणम् ? अन्तिभावेन बाध्यते । नात्राऽन्तिभावः प्राप्नोति । किं कारणम् ? जुस्भावेन बाध्यते । नाऽत्र जुस्भावः प्राप्नोति । किं कारणम् ? लोपेन बाध्यते । लोप ईत्वेन, ईत्वमन्तिभावेनाऽन्तिभावो जुस्भावेन जुस्भावो लोपेनेति+ चक्रकमव्यवस्था प्रसज्येत । नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा

प्र०—ऽनित्यत्वं तथापि कृताऽकृतप्रसङ्गित्वान्नित्यत्वमस्त्येव । न च शब्दान्तरप्राप्तिकृतमनित्यत्वमिह सर्वत्र शास्त्र आश्रीयते ।

तावत्येवेति । कृत एव झिशब्देऽकृत एव विकरण इत्यर्थः । आयन्नादिषूपदेशिवद्वचनादुपदेशकाल एव झस्याऽन्तादेशेन भाव्यमिति भावः । प्रतिपदिकान्मा भूवन्निति । द्वितीया-

उ०—क्वचिद्विहितविशेषणमिति सर्वत्र तदेवाश्रयणीयमिति न नियम इति न दोषः । भाष्यकारस्तु तथाऽऽश्रयणेऽप्यभ्युपेत्यवादेन दोषाऽभावं प्रतिपादयति । चक्रकमव्यवस्थेति—भाष्ये । चक्ररूपाऽव्यवस्थेत्यर्थः । आयन्नादिष्विति । आदिना झोऽन्तस्यापि ग्रहादिति भावः । उपदेशकाल एवेति । उपदेशोत्तरकाले कार्यान्तरात्पूर्वमेवेत्यर्थः । भाष्ये—अन्तिभावे कृते लोप इति । नचाऽन्तरङ्गत्वात्पूर्वं कृतेऽप्यन्तौ लोपात्पूर्वं स्थानिवद्भावेन झित्वाज्जुस्प्राप्नोति अनाङ्गत्वेनाऽन्तरङ्गत्वादिति वाच्यं, 'झेर्जु'सित्यत्रेकारस्योच्चारणार्थत्वेना-

* विदो लटो वा ३ । ४ । ८३ † जक्षित्यादयः षट् ६ । १ । ६; सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९ १—क्वाचित्कम् । × पाघ्राध्मा······पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७ । ३ । ७८ + श्नाऽभ्यस्तयोरातः; ई हल्यघोः ६ । ४ । ११२; ११३; झोऽन्तः ७ । १ । ३; लङः शाकटायनस्यैव ३ । ४ । १११

शास्त्रेण भवितव्यम् । शास्त्रेण नाम व्यवस्थाकारिणा भवितव्यम् । न चाऽत्र हलादिना मुहूर्तमपि शक्यमवस्थातुम् । तावत्येवाऽन्तिभावेन भवितव्यम् । अन्तिभावे कृते लोपः । लोपेन व्यवस्था भविष्यति ॥ यदप्युच्यते 'एशः शित्त्व'मिति, क्रियते न्यास एव ।

कानि पुनरस्य योगस्य प्रयोजनानि ?

**प्रयोजनं प्रातिपदिकप्रतिषेधः ॥ ३ ॥**

प्रातिपदिकप्रतिषेधः प्रयोजनम् । धातोस्तव्यदादयो* यथास्युः प्रातिपदिकान्माभूवन्निति ।

नैतदस्ति प्रयोजनम् । साधने तव्यदादयो विधीयन्ते, साधनं च क्रियायाः । क्रियाऽभावात्साधनाऽभावः, साधनाऽभावादसत्यपि धात्वधिकारे प्रातिपदिकात्तव्यदादयो न भविष्यन्ति ।

**स्वपादिषु ॥ ४ ॥**

स्वपादिषु तर्हि प्रयोजनम् । स्वपिति । सुपतीति मा भूत् ।

**अङ्गसञ्ज्ञा च ॥ ५ ॥**

अङ्गसञ्ज्ञा च प्रयोजनम् । 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' [ १ । ४ । १३ ] इति धातोरङ्गसंज्ञा सिद्धा भवति ।

---

प्र०—दिवदिति भावः । साधन इति । प्रकृतिवाच्यान्तरङ्गक्रियासाधनसंभवे शब्दान्तरवाच्यबहिरङ्गक्रियासाधने तव्यदादयो न भविष्यन्ति । द्वितीयादयस्तु प्रातिपदिकादेव विधीयमानाः शब्दान्तरवाच्यक्रियापेक्ष एव साधने वचनसामर्थ्याद्भवन्तीति भावः । स्वपादिष्विति । येऽपभ्रंशरूपाः कियावचना आणवयत्यादितुल्यास्तेभ्यस्तव्यदादयो मा भूवन् । न हि ते धातवः । पाठेन धातुसंज्ञायास्तेषां निरस्तत्वात् । ततः स्वपितीति प्रयोक्तव्ये सुपतीति प्रयोगोऽपभ्रंशः, ततः प्रत्ययोत्पत्तिर्मा भूदित्यर्थः ।

---

उ०—ऽल्विधित्वेन स्थानिवत्त्वाऽभाव इत्याशयात् । वस्तुत 'आत' इत्यत्र सिज्ग्रहणाऽनुवृत्तेस्तत्सूत्रस्थभाष्ये, 'क्ङिति'ति सूत्रस्थभाष्ये चोक्तत्वेन न क्वाऽपि दोषप्रसङ्ग इति ध्येयम् । प्रकृतसूत्रस्थभाष्यन्त्वेकदेश्युक्तिः । द्वितीयादीति । ता हि यथा शब्दान्तरवाच्यक्रियाऽपेक्षे स्वप्रकृत्यर्थस्य कर्मत्वे विधीयन्ते तथा तव्यादयोऽपि स्युरित्यर्थः । द्वितीयादिभ्यो वैषम्यमुपपादयति प्रकृतीति । येऽपभ्रंशेति । स्वप्यपभ्रंशत्वात् क्रियावाचकत्वमेषामस्तीति भावः । ततः प्रत्ययोत्पत्तिरिति । 'सुपती'त्येतद्घटकात्सुपेरित्यर्थः । भाष्ये—कृत्संज्ञा च प्रयोजनमिति । एतद्धात्वधिकारे धातोर्विहितस्य कृत्संज्ञकत्वम् । अन्यथा स्यादीनामपि तत्त्वं स्यादिति भावः ।

---

* तव्यत्तव्यानीयरः ३ । १ । ९६ १—'सुपितीति' पा० ।

## कृत्सञ्ज्ञा च ॥ ६ ॥

कृत्सञ्ज्ञा च प्रयोजनम् । धातोर्विहितः प्रत्ययः कृत्संज्ञो भवतीति कृत्संज्ञा सिद्धा भवति† ।

## उपपदसंज्ञा च ॥ ७ ॥

उपपदसंज्ञा च प्रयोजनम् । तत्रैतस्मिन् धात्वधिकारे यत्सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवतीत्युपपदसंज्ञा सिद्धा भवति‡ ।

कृदुपपदसंज्ञे तावन्न प्रयोजयतः । अधिकारादप्येते सिद्धे ॥ स्वपादिषु तर्ह्यङ्गसंज्ञा च प्रयोजनम् ।

## धातुग्रहणमनर्थकं यङ्विधौ धात्वधिकारात् ॥ ८ ॥

धातुग्रहणमनर्थकम् । किं कारणम् ? 'यङ्विधौ धात्वधिकारात्' । यङ्विधौ× धातुग्रहणं प्रकृतमनुवर्तते ॥ तच्चावश्यमनुवर्त्यम् ।

प्र०—अङ्गसंज्ञेति । असति धात्वधिकारे धातूपसर्गसमुदायस्य क्रियाविशेषवाचित्वात्ततः प्रत्ययविधाने तस्यैवाङ्गसंज्ञायां सत्यामडादिप्रसङ्गः—प्राऽस्थितेत्यादावित्यर्थः । तत्रैतस्मिन्निति । सत्यस्मिन्धात्वधिकारे'तत्रोपपद'मित्यस्य तच्छब्देन परामर्श उपपद्यते नान्यथा । यद्यमिति । यद्यविशेषेण धातुमात्राण्णिच्स्यात्तदा करणे करोत्यर्थे विधीयमानो हेतुमत्यपि करणे सिद्ध इति पुनस्तत्र णिचं न विदध्यादित्यर्थः । चुरादिग्रहणं तु 'प्रातिपदिकाद्धात्वर्थे' इत्याद्यर्थं स्यादित्यज्ञापकम् । व्यपदेशिवद्वचनादिति । धातुव्यपदेशो विद्यते येषां ते पचादयो धातुपाठपठिता

उ०—एवं'च्लि लुङि'त्यादेर्लुङन्ते उपपदे इत्यादिक्रमेणाऽर्थः स्यादिति बोध्यम् । अधिकारादप्येत इति । 'कृदतिङ्' 'तत्रोपपद'मित्यनयोरधिकारत्वादित्यर्थः । ननु 'चुरादिभ्य' इत्यनेन स्वार्थे विधानात्प्रयोजकव्यापारे णिजर्थं 'हेतुमति चे'त्यावश्यकमत आह—यद्यविशेषेणेति । हेतुमत्यपीति । आपना स्वार्थरूपकरणसङ्ग्रहः । नन्वेवं चुरादिग्रहणमेव ज्ञापकं किमिति नोक्तमत आह–चुरादीति । प्रातिपदिकाद्धात्वर्थे 'सङ्ग्राम युद्धे' इत्यादितद्गणपठितेभ्योऽधातुभ्यो णिजर्थमित्यर्थः । परे तु चुरादिग्रहणं स्वार्थरूपकरणे विध्यर्थम्, अन्यथाऽन्यधातुभ्य

१—'धातुविहितस्य प्रत्ययस्य कृत्संज्ञा सिद्धा भवति' । इति कीलहार्नपाठः ।

† कृदतिङ् ३ । १ । ९३

२—यत्तदिति क्वचिन्न । ‡ तत्रोपपदं सप्तमीस्थम् ३ । १ । ९२

× धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३ । १ । २२

अनधिकारे ह्यङ्गसंज्ञाऽभावः ॥ ९ ॥

अनधिकारे हि सत्यङ्गसंज्ञाया अभावः स्यात्—करिष्यति हरिष्यतीति+ । यदि तदनुवर्तते चूर्णचुरादिभ्यो णिज्भवति* धातोश्चेति धातुमात्राण्णिच्प्राप्नोति ।

हेतुमद्वचनं तु ज्ञापकमन्यत्राऽभावस्य ॥ १० ॥

यदयं हेतुमति च [ ३ । १ । २६ ] इत्याह तज्ज्ञापयत्याचार्यो 'न धातुमात्राण्णिज्भवती'ति ।

इह तर्हि कण्ड्वादिभ्यो यग्भवति† धातोश्चेति धातुमात्राद्यक्प्राप्नोति ।

कण्ड्वादिषु च व्यपदेशिवद्वचनात् ॥ ११ ॥

यदयं कण्ड्वादिभ्यो यग्भवतीत्याह तज्ज्ञापयत्याचार्यो 'न धातुमात्राद्यग्भवती'ति । अथवा कण्ड्वादीनेव धातुग्रहणेनाऽभिसंभन्त्स्यामः—'कण्ड्वादिभ्यो धातुभ्य इति ॥ ९१ ॥

तत्रोपपदं सप्तमीस्थम् ॥ ३ । १ । ९२ ॥

'स्थ' ग्रहणं किमर्थम् ? 'तत्रोपपदं सप्तमी'तीयत्युच्यमाने यत्रैव सप्तमी श्रूयते

प्र०—व्यपदेशिनस्तैस्तुल्यं कण्ड्वादयो वर्तन्ते । यकः कित्त्वेन तेषां धातुत्वानुमानात् । तदयमर्थः—यदि धातुमात्राद्यक्प्रत्ययः स्यात्ततः कण्ड्वादिग्रहणमनर्थकं स्यात्, तेषामपि क्रियावाचित्वाद्धातुमात्राद्यकः सिद्धत्वात् । अथवेति । सामानाधिकरण्येन संबन्धे संभवति समुच्चयाश्रयणस्याऽयुक्तत्वादिति भावः । आर्द्धधातुकसंज्ञार्थोऽप्ययं धात्वधिकारो नोपयुज्यते । यङ्विवावेवोपात्तस्यानुवृत्तस्य विहितविशेषणार्थत्वा'ज्जुगुप्सते' 'लूभ्या'मित्यादावार्द्धधातुकसंज्ञानिवृत्तेः सिद्धत्वात् । शमिधातोरित्यतो द्वितीयधातुग्रहणानुवर्तनाद्वा ॥ ९१ ॥

उ०—इव तेभ्योऽपि प्रयोजकव्यापाररूपे करणे एव स्यात् । एवञ्च 'प्रातिपदिकाद्धात्वर्थे' इत्यस्याऽनार्षत्वेऽपि न दोष इत्याहुः । धातुमात्राद्यक इति । धातुमात्राद्यको विधायकेन तेषामपि यकः सिद्धत्वादित्यर्थः । विहितविशेषणेति । स्वरितत्वद्वयं प्रतिज्ञाय तत्सामर्थ्याद्धातोरित्येवं विहितेत्यर्थः कार्य इति भावः । तदाह—जुगुप्सत इत्यादि । नन्वेकेन धातुग्रहणेन कथमेषोऽर्थो लभ्येताऽत आह—शमिधातोरिति । 'वासरूप' इत्यप्यधिकार एवेति एतदभावे क्सादिभिः सिचः समावेशः स्यादिति न शङ्क्यम् ॥ ९१ ॥

+ स्यतासी लृलुटोः ३ । १ । ३३; सार्वधातुकार्द्धधातुकयोः ७ । ३ । ८४

* सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वच्वर्मवर्णचूर्णचुरादिभ्यो णिच् ३ । १ । २५

† कण्ड्वादिभ्यो यक् ३ । १ । २७

तत्रैव स्यात्—स्तम्बेरमः कर्णेजपः‡। यत्र वैतेन शब्देन निर्देशः क्रियते—'सप्तम्यां जनेर्डः' [ ३ । २ । ९७ ] इति। इह न स्यात्—कुम्भकारो नगरकारः×। स्थग्रहणे पुनः क्रियमाणे यत्र च सप्तमी श्रूयते यत्र च न श्रूयते यत्र चैतेन शब्देन निर्देशः क्रियते यत्र—चान्येन [ शब्देन ] सप्तमीस्थमात्रे सिद्धं भवति।

अथ 'तत्र'ग्रहणं किमर्थम् ?

तत्रग्रहणं विषयार्थम् ॥ १ ॥

[ तत्रे ग्रहणं क्रियते। किं प्रयोजनम् ? विषयार्थम्'। ] विषयः प्रतिनिर्दिश्यते। तत्रैतस्मिन्धात्वधिकारे यत्सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवतीत्युपपदसंज्ञा सिद्धा भवति।

प्र०—तत्रोपपदं। स्थग्रहणमिति। सप्तमीशब्देन साहचर्यात्सूत्रेषु सप्तमीनिर्दिष्टा ग्रहीष्यन्त इति प्रश्नः। यत्रैव सप्तमीति। मुख्यार्थसंभवे गौणग्रहणस्याऽन्याय्यत्वात्सप्तम्या एवोपपदसंज्ञा स्यात्। संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधात्। समासस्तु समर्थपरिभाषोपस्थानात्तदन्तविधेः स्यात्। यत्रवेति। सप्तमीति यदा रूपग्रहणं तथा सति 'सप्तम्यां जनेर्ड' इत्यादावेव स्यात्, उपसरजादिसिद्धयर्थम्, कुम्भकारादिषु तु नैव स्यादित्यर्थः। स्थग्रहण इति। स्थग्रहणे तु सति सौत्रसप्तम्युपलक्षितस्य संज्ञाविधानात्सर्वत्र सिध्यतीत्यर्थः। अथ तत्र ग्रहणमिति। 'धातो'रित्यनुवर्तनादस्मिन्नेव धात्वधिकारे उपपदसंज्ञा भविष्यतीति प्रश्नः। तत्रैतस्मिन्निति। तत्रग्रहणेनाधिकारपरामर्शे स्पष्टा प्रतिपत्तिर्भवतीति भावः। अथवोपपदसंज्ञोत्तरत्राधिकारादत्रैव धात्वधिकारे भविष्यतीति प्रश्नः। प्रतिसूत्रमधिकार आश्रीयमाणे गौरवं स्यात्। 'तत्र'ग्रहणे तु क्रिय-

उ०—तत्रोपपदं। ननु 'स्थ'ग्रहणाऽभावे सप्तम्या एव संज्ञा स्यादत आह—सप्तमीशब्देनेति। सूत्रस्थसप्तम्यन्तपदनिर्दिष्टं सप्तमीपदेन लक्ष्यत इत्यर्थः। ननु प्रत्ययग्रहणे तदन्तग्रहणात्कथं सप्तम्या एव संज्ञेत्यत आह—संज्ञेति। नन्वेवमुपपदसमासोऽपि सप्तमीमात्रस्य स्यादत आह—समासस्त्विति। सूत्रे सप्तमीपदं विभक्तिपरं स्वरूपपरं वा। आद्ये सप्तम्या एव संज्ञा। अन्त्ये तु यत्र सप्तमीपदं तत्रैव स्यादित्याह—यदेति। तथा सति। तदेत्यर्थः। इत्यादावित्यादिना 'सप्तम्यां चोपपीडे'ति सङ्ग्रहः। ननु 'स्थ'ग्रहणेऽपि कुम्भादीनां सप्तमीस्थत्वाऽभावात्कथमुपपदत्वं तत्राह स्थग्रहणे त्विति। अयं भावः—सप्तमीपदं तदन्तपरं, संज्ञाविधौ प्रत्ययांशे तदन्तविधिप्रतिषेधस्तु उद्देश्यप्रत्ययांशे एव। तत्स्थत्वञ्च तद्वाच्यत्वमिति तदाह—सौत्रसप्तम्युपलक्षितस्येति। सौत्रसप्तम्यन्तपदबोध्यस्येत्यर्थः। धातोरित्यनुवर्त्तनादिति। धातोरित्यधिकारविहितप्रत्ययविधौ सप्तमीस्थमित्यर्थादिति भावः। धातोरित्यनुवृत्तावपीदृशार्थाऽलाभादाह—अथवेति। अत्रैवेति। न तु 'च्लि लुङी'त्यादाविति भावः। 'उपपदसंज्ञा सिद्धा भवती'ति भाष्यस्याऽपीष्टविषये स्फुटतया सिद्धा भवतीत्यर्थः। विभक्तिमन्तरेणेति। तामन्तरेण कर्मत्वाद्यभावादित्यर्थः। शब्दस्य कर्मत्वादि हि तद्विशिष्टा-

‡ स्तम्बकर्णयो रमिजपोः ३ । २ । १३ × कर्मण्यण् ३ । २ । १

१—'यत्र वान्येन' पा०। २—इदं क्वचिन्न।

## उपपदसंज्ञायां समर्थवचनम् ॥ २ ॥

उपपदसंज्ञायां समर्थग्रहणं कर्तव्यम् । 'समर्थमुपपदं प्रत्ययस्ये'ति वक्तव्यम् । इह मा भूत्—आहर कुम्भं करोति कटमिति† ।

[ अथ ] क्रियमाणे चाऽपि समर्थग्रहणे 'महान्तं कुम्भं करोती'त्यत्रापि प्राप्नोति । न वा भवितव्यं महाकुम्भकार इति ? भवितव्यं यदैतद्वाक्यं भवति—महान्कुम्भो महाकुम्भः, महाकुम्भं करोतीति महाकुम्भकारः । यदा त्वेतद्वाक्यं भवति—'महान्तं कुम्भं करोती'ति, तदा न भवितव्यम् । तदा च प्राप्नोति, तदा मा भूदिति ।

यत्तावदुच्यते—'समर्थग्रहणं कर्तव्य'मिति । न कर्तव्यम् । 'धातो'रिति× वर्तते । धातोः कर्मण्यण्भवति । तत्र सम्बन्धादेतद्गन्तव्यं—'यस्य धातोर्यत्कर्मे'ति ।

प्र०—माणे अनेनैवैकवाक्येन परिपूर्णत्वात्संज्ञा विधीयत इति प्रतिपत्तिलाघवं भविष्यतीत्युत्तरम् । समर्थवचनमिति । इह यदा त्रिकः प्रातिपदिकार्थः स्वार्थद्रव्यलिङ्गलक्षणस्तदा विभक्तिमन्तरेण कर्माऽधिकरणाद्युपपदं न भविष्यतीत्यवश्योत्पत्तव्यं विभक्त्या । ततश्च पदविधित्वात्समर्थपरिभाषाया उपस्थानं भवत्येव । चतुष्कपक्षे पञ्चकपक्षे वा प्रातिपदिकस्यैव कर्मादिवाचित्वात्पदविधित्वाभावात्समर्थपरिभाषानुपस्थानात्समर्थवचनं कर्तव्यमिति भावः । आहर कुम्भमिति । कुम्भशब्द उपपदे करोतेरणप्रत्ययः स्यात् । उपपदसमासस्तु सामर्थ्याऽभावान्न स्यात् । महान्तं कुम्भमिति । महत्त्वयुक्तस्य कुम्भस्य करोतिना सामर्थ्यमस्तीति भावः । यदि चाऽत्र प्रत्ययः स्यात्तदा कुम्भशब्दस्य कारशब्देन समासे कृते कारार्थे एकार्थीभावान्महच्छब्देन समासो न

उ०—र्थवाचकत्वमेवेति भावः । चतुष्कपक्षे इति । 'द्योतकसमभिव्याहारे चतुष्कं प्रातिपदिकार्थं' इति पक्षे इत्यर्थः । प्रातिपदिकस्यैवेति । चिन्त्यमिदम्, पञ्चकपक्षेऽपि द्योतकसमभिव्याहारं विना प्रातिपदिकमात्रस्य तद्बोधकत्वाऽभावात् । प्रं विना जयतेः प्रकृष्टजयबोधकत्ववत् । एवञ्च तत्पक्षेऽपि पदविधित्वं दुर्वारमेव । तस्मादयमत्र भाष्यार्थः, सुबन्तत्वेन पदत्वेन वा यत्र निमित्तता तत्रैव तत्परिभाषाप्रवृत्तिरिति प्रकृते तदभावात्परिभाषाऽनुपस्थित्या समर्थग्रहणं कर्त्तव्यमिति युक्तमाभाति । भाष्ये—समर्थमुपपदमिति । सामर्थ्यञ्च प्रत्यासत्त्या प्रत्ययान्तेनैवेति बोध्यम् । प्रत्ययस्योत्पत्तौ निमित्तं यत्समर्थं सप्तम्यन्तपदवाच्यं तदेवोपपदसंज्ञमिति वक्तव्यमित्यर्थः । ननु 'महान्तं कुम्भ'मिति सविशेषणे कथं सामर्थ्यमत आह—महत्त्वयुक्तस्येति । विशिष्टस्यैव कर्मत्वेन विशिष्टेन सामर्थ्यमस्तीति भावः । तदा न भवितव्यमिति भाष्ये । 'अणे'ति शेषः । तदा च प्राप्नोतीत्यस्यापि—'अ'णित्येव शेषो न तु 'महाकुम्भकार' इति, तद्ध्वनयन्नाह—महच्छब्देन समासो न स्यादिति । कारार्थविशेषणतयोपस्थितस्येतरविशेष्यत्वाऽसंभवेन महच्छब्देन कुम्भशब्दस्य कर्मधारयो न स्यादिति भावः । बहुलवचनेनोत्तरपदे 'विशेषणं विशेष्येणे'त्यस्य तत्प्रपञ्चभूतानाम्पूर्वनिपा-

† कर्मण्यण् ३ । २ । १    १—इदं क्वचिन्न ।    × धातोः ३ । १ । ९१

यदप्युच्यते—'क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं करोतीत्यत्रापि प्राप्नोती'ति । 'उपपद'मिति महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—'अन्वर्थसंज्ञा यथा विज्ञायेत' । उपोच्चारि पदमुपपद'मिति । यच्चाऽत्रोपोच्चारि न तत्पदं, यच्च पदं न तदुपोच्चारि । यावता चेदानीं पदगन्धोऽस्ति पदविधिरयं भवति । पदविधिश्च समर्थानां भवति† । तत्राऽसामर्थ्यान्न भविष्यति ।

अथ च्व्यन्त उपपदे किमणा भवितव्यम्—अकुम्भं कुम्भं करोति कुम्भीकरोति मृदमिति ? न भवितव्यम् । किं कारणम् ? 'प्रकृतिविवक्षितत्वात्' । प्रकृतिविवक्षायां च्विर्विधीयते । तत्सापेक्षम् । सापेक्षं चाऽसमर्थं भवति ।

प्र०—स्यात् । सुबन्तसमुदायस्याप्यसुबन्तत्वात् । उपपदसमासे तृतीयान्तस्य सुब्ग्रहणस्य निवृत्तावपि प्रथमान्तस्यानुवर्तनात्समासाऽभावः । न तत्पदमिति । पदसमुदायत्वादिति भावः । यच्च पदमिति । 'महान्त'मित्येतत् । कुम्भमित्येतच्च यद्यपि पदं भवति उपोच्चारितं च, तथापि सापेक्षत्वादसामर्थ्यात्प्रत्ययोत्पत्तिनिमित्तं न भवति । अन्वर्थसंज्ञाकरणादेव सप्तमीनिर्दिष्टत्वेऽपि प्रकृत्यर्थविशेषणानां प्रत्ययार्थानां तद्विशेषणानां चोपोच्चरितत्वाभावादुपपदसंज्ञा न भवति । पदविधिरिति । पदनिमित्तत्वात्प्रत्ययविधेरिति भावः । अथ च्व्यन्त इति । इह क्वचित्सापेक्षत्वे प्रत्ययो न भवति 'महान्तं पुत्रमिच्छती'ति । क्वचित्त भवति माणवकं मुण्डयतीति, तत्र सन्देहात्प्रश्नः । च्व्यन्तस्य चाऽव्ययत्वेऽपि कर्मत्वं मन्यते । सत्त्वभूतत्वस्याऽनिवर्तनात् । प्रकृतिविवक्षायामिति । प्रकृतिविकारयोरभेदविवक्षायां च्विर्विधीयते । तत्राऽवश्यं विकारेण प्रकृतिविशेषोऽपेक्षणीयः । तदनपेक्षायां च्वेरभावात् । ततश्च यथा महान्तं कुम्भं करोतीत्यत्रा-

उ०—तनियमार्थनाच्च निवृत्तेः समर्थसूत्रे भाष्ये ध्वनितत्वादिति निरूपितं समर्थसूत्रे भाष्ये । न च पूर्वं कर्मधारयः, उपपदसमासस्य परत्वादिति बोध्यम् । ननु समुदायेनैवोपपदसमासो भविष्यतीत्यत आह—सुबन्तसमुदायस्येति । वस्तुतः प्रथमान्तनिवृत्तावपि समुदायेन समासेऽपि 'कुम्भ'शब्दस्योत्तरपदत्वाऽभावादात्वाऽभावे 'महत्कुम्भकार' इत्यनिष्टस्याऽऽपत्तिरिति भाष्याशयः । यदुक्तं 'कुम्भशब्दस्य कारशब्देन समास'इति, तदपि चिन्त्यम्, कुम्भशब्दस्य केवलस्य सविशेषणत्वेनाऽसमर्थत्वात् । समासविधौ समर्थपरिभाषोपस्थानेन समासाऽप्राप्तेः । भाष्यं तु सर्वथा समासाऽभावेऽप्यणापत्तिपरतया योजयितुं शक्यमेवेति दिक् । यावता चेदानीमिति भाष्यमवतारयति—कुम्भमित्येतच्च यद्यपीति । समाधानाशयमाह—तथाऽपीति । भाष्ये 'गन्ध'शब्दः संबन्धवाची, स च महासंज्ञाबलात्प्रत्ययविधौ पदत्वेन निमित्तत्वात्स्पष्ट एव । असामर्थ्यात्प्रत्ययाऽभावे चोपपदसंज्ञाऽपि फलाऽभावान्नेत्युपपदसंज्ञायां समर्थवचनमनर्थकमिति भावः । एवञ्च सुबन्तस्यैवोपप-

† समर्थः पदविधिः २ । १ । १ १—क्वचिन्न ।

न तर्हीदानीमिदं भवति—'इच्छाम्यहं काशकटीकार'मिति । इष्टमेवैतद्गोनर्दीयस्य ।

निमित्तोपादानं च ॥ ३ ॥

निमित्तोपादानं च कर्तव्यम् । 'निमित्तमुपपदं प्रत्ययस्ये'ति वक्तव्यम् ।

अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः ॥ ४ ॥

अक्रियमाणे हि निमित्तोपादानेऽनुपपदेऽपि प्रत्ययः प्रसज्येत ॥ निर्देश इदानीं किमर्थः स्यात् ?

निर्देशः संज्ञाकरणार्थः ॥ ५ ॥

यदोपपदे प्रत्ययस्तदोपपदसंज्ञां वक्ष्यामीति ॥ तत्तर्हि निमित्तोपादानं कर्तव्यम् ? न कर्तव्यम् ।

तत्रवचनमुपपदसन्नियोगार्थम् ॥ ६ ॥

तत्रवचनं क्रियते तदुपपद [ सञ्ज्ञा ] संनियोगार्थं भविष्यति । कर्मण्यणिवधीयते तत्र चेत्प्रत्ययो भवतीति ।

प्र०—ऽएन भवत्येवं मृदं कुम्भीकरोतीत्यादावपीत्यर्थः । काशान्कटीकरोतीत्यत्र त्विष्टयाऽएप्रत्ययो भवति । तस्मिन्नुत्पन्ने काशशब्दात् कृद्योगे षष्ठी तस्याः षष्ठीति समासः । समासरूपस्यैव चेष्टत्वेनोपात्तत्वात् काशानां कटीकार इति वाक्यं भवतीत्याहुः । निर्देश इति । 'कर्मणी'ति सत्सप्तमीविज्ञानात्सत्येव कर्मणि प्रत्ययो भविष्यतीति भावः । निर्देशः संज्ञाकरणार्थ इति । यथेत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायते तथाऽर्थनिरपेक्षा कर्मणीत्यादिसप्तमी उपपदसंज्ञालिङ्गं सौत्रीति भावः । अर्थापेक्षायां तु सप्तम्यामणप्रत्ययस्याभिधेयं कर्म स्याद्यथा 'ध कर्मणि ष्ट्र'न्निति । तथा च उपपदत्वं न प्रतीयेत । अर्थानपेक्षत्वे च सप्तम्या धातोरणभवति कर्म चोपपदसंज्ञमित्यर्थः

उ०—दत्वम् । 'स्तम्बकर्णयो'रित्यादौ तु तत्प्रकृतिके लक्षणा । इदमेवाऽभिप्रेत्य 'उपपदमति'ङिति सूत्रे प्रथमान्तसुप्पदस्याऽपि निवृत्तिर्भगवतोक्तेति दिक् । कर्मत्वं मन्यत इति । 'स्वरादिव'दिति शेषः । तत्र हेतुमाह—सत्त्वेति । च्विप्रत्ययेऽपि स्वाश्रयसत्त्वमावस्य निवृत्तौ मानाऽभावादिति भावः । 'सत्त्वभूतस्ये'ति पाठेऽपि भावे क्तः । प्रकृतिविवक्षायामिति भाष्यस्य,—प्रकृतेर्विकृत्यभिन्नत्वेन विवक्षायां विकृतिवाचकाच्च्विरित्यर्थः । तत्फलितमाह—प्रकृतीति । तत्राऽवश्यमिति । नन्वेवं नित्यसापेक्षत्वेनाऽसामर्थ्याऽभावादण्दुर्वारः, तदनपेक्षायां च्वेरभावेन च्व्यन्तस्य नित्यसापेक्षताया उपपादितत्वादिति चेदत्र महद्भिर्यतनीयम् । मम तु प्रतिभाति,—न नित्यसापेक्षत्वं वृत्तौ प्रयोजकं, किन्तु गमकत्वम् । एवञ्च नित्यसापेक्षत्वेऽप्यगमकत्वान्न वृत्तिः । 'काशकटीकार'मित्यत्र तु गमकत्वाद्भवत्येवेति स्पष्टञ्चेदं 'समर्थ'सूत्रे 'सुप आत्मन' इति सूत्रे च भाष्ये

१—['कर्मणि' इत्यादीनां निर्देशः क्रियते । किमर्थः ? संज्ञाकरणार्थः । प्रत्ययसन्नियोगेन संज्ञा क्रियेत । ] इत्यधिकः पाठः क्वचित् ।

ननु चान्यत्तत्रग्रहणस्य प्रयोजनमुक्तम् । किम् ? 'तत्रग्रहणं विषयार्थ'मिति । अधिकारादप्येतत्सिद्धम् ॥ ९२ ॥

## कृदतिङ् ॥ ३ । १ । ९३ ॥

अतिङिति किमर्थम् ? पचति करोति ॥ अतिङिति शक्यमकर्तुम् । कस्मान्न भवति पचति करोतीति ? धातोः परस्य कृत्संज्ञा प्राक् च लादेशाद्धात्वधिकारः† ।

एवमपि स्थानिवद्भावात्कृत्सञ्ज्ञा प्राप्नोति‡ । अथाऽतिङित्युच्यमाने यावता स्थानिवद्भावः कथमेवैतत्सिध्यति ? प्रतिषेधवचनसामर्थ्यात् । अथवा तिङ्भाविनो लकारस्य कृत्संज्ञाप्रतिषेधः । किं च स्याद्यद्यत्र कृत्संज्ञा स्यात् ? 'कृत्प्रातिपदिक'-मिति प्रातिपदिकसंज्ञा स्यात् । प्रातिपदिकादिति स्वाद्युत्पत्तिः प्रसज्येत × । नैष दोषः । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते+ ते चाऽत्र तिङोक्ता एकत्वादय इति कृत्वोक्तार्थत्वान्न भविष्यन्ति ।

प्र०—स्यादिति कर्मणः प्रत्ययोत्पत्तिनिमित्तत्वं न प्रतीयेत। तत्र वचनमिति। तत्रैव सति प्रत्ययो भवति नासतीति तत्रग्रहणाल्लभ्यते । कथमिति चेत्—उच्यते, प्रत्यय इत्यत्रानुवर्तते । तत्रायमर्थः, सप्तमीस्थमुपपदसंज्ञं भवति, तत्र चोपपदे प्रत्ययो भवतीति ॥ ९२ ॥

कृदतिङ् । स्थानिवद्भावादिति । 'अति'ङिति प्रतिषेधः स्वाश्रयामेव तिङः कृत्संज्ञां बाधितुमुत्सहते नत्वतिदेशशास्त्रेण प्रसक्ताम् । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति वचनादिति भावः । प्रतिषेधेति । अन्यथाऽनर्थकः प्रतिषेधः स्यादिति भावः । अथवेति । तिङ्भावी

उ०—सूत्रमदशाम् । भाष्ये—अधिकारादपीति । नन्वधिकारादेतस्मिन्धात्वधिकार इत्यर्थवत्तत एव प्रतिसूत्र-मुपपदसंज्ञाविधानेन 'सन्नियोगशिष्ट'न्यायात्तत्र सत्येव प्रत्ययो भविष्यति किं 'तत्र' ग्रहणेनेति चेन्न तदभावे 'अन्वाचयशिष्टत्वमपि सम्भाव्येते'ति स्पष्टप्रतिपत्त्यर्थमिति तत्त्वम् ॥ ९२ ॥

कृदतिङ् । भाष्ये एकदेश्याह—पचतीत्यादि । शङ्किताऽऽह—शक्यमकर्तु मिति । तदुपपादयति स एव—धातोः परस्येति । 'धातो'रिति पदमुच्चार्य धातोः परत्वेन विहितस्येत्यर्थः । अत एव वक्ष्यति—प्राग् लादेशाद्धात्वधिकार इति । एवञ्च तिङ्षु कृत्संज्ञाया अप्राप्त्या निषेधो व्यर्थ इति भावः । तत्सार्थक्य-मेकदेशी शङ्कते—एवमपीति । सिद्धान्ती शिष्यबुद्धिपरीक्षायै प्रतिबन्दीमाह—अथेति । एकदेश्याह—प्रतिषेधेति । तृतीयाऽध्यायान्तं धात्वधिकारे तिङो व्यावृत्त्या तत्सार्थक्यमत आह—अथवेति । तिङ्भा-वीति । अत एवाऽऽमन्तविषयलकारस्य कृत्त्वम्भवत्येव, तस्य तिङ्भावित्वाऽभावात् । तिङ्भावित्वस्य

† धातोः ३ । १ । ९१; तिप्तस्झि० ३ । ४ । ७८ ‡ लस्य ३ । ४ । ७७
× कृत्तद्धितसमासाश्च १ । २ । ४६; ङ्याप्प्रातिपदिकात् ४ । १ । १
+ बहुषु बहुवचनम्; द्व्येकयोर्द्विवचनैकवचने १ । ४ । २१; २२

टाबादयस्तर्हि तिङन्तान्मा भूवन्निति । स्त्रियां टाबादयो विधीयन्ते* न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति ।

अणादयस्तर्हि तिङन्तान्मा भूवन्निति । अपत्यादिष्वर्थेष्वणादयो विधीयन्ते** न च तिङन्तस्याऽपत्यादिभिर्योगोऽस्ति ।

अथापि कथंचिद्योगः स्यादेवमपि न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'न तिङन्तादणादयो भवन्ती'ति, यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति—'अतिशायने तमबिष्ठनौ' 'तिङश्च' [ ५ । ३ । ५५; ५६ ] इति ।

प्र०—लकार एव तिङ्शब्देनोच्यत इति मूलोच्छेद एव कृत्संज्ञाप्रतिषेधेन क्रियते । टाबादय इति । यथा साधनाश्रयसंख्यानिमित्तैकवचनाद्युत्पत्तिस्तथैव तद्गतलिङ्गाश्रयाट्टाबादयः स्युरिति भावः । स्त्रियामिति । शब्दशक्तिस्वाभाव्यात्साधनाश्रयसंख्योपादानमस्ति तिङन्तस्य न लिङ्गोपादानमिति भावः । धातोरिति । 'धात्वादे'रित्यतः । एकादेश इति । ननु स्थानिवद्भावं बाधित्वा परत्वादन्तवद्भावेन भाव्यम् । नैष दोषः । परशब्दस्येष्टवाचित्वात् स्थानिवद्भाव एवान्तवद्भावस्य

उ०—फलोपहितस्यैव निवेशात् । मूलोच्छेद इति । मूलभूते लकार एव कृत्वोच्छेदः क्रियत इत्यर्थः । 'भोभगो' इति सूत्रे भाष्योक्तरीत्याऽल्विधित्वादप्यत्र स्थानिवत्त्वप्रतिषेध इत्यपि बोध्यम् । अथ तृतीयाऽध्यायान्तं धात्वधिकारेऽपि भाष्ये फलाऽभावान्निषेधप्रत्याख्यातुमाह—किञ्च स्यादिति ।

एकत्वादिष्विति । ननूक्तेऽप्येकत्वे एकशब्दात्कर्मत्वमात्रप्रतिपत्तये द्वितीयावत् 'पचति पश्ये'त्यादौ कर्मत्वोक्तये द्वितीया स्यात् । किञ्च—'एकवचनमुत्सर्गत' इति तद्वारमिति चेन्न, कर्मत्वस्याऽपि वाक्येन प्रतीत्या तदनुत्पत्तेः । तिङोक्ता इत्यस्य च—तिङ्घटितवाक्येनोक्ता इत्यर्थः । 'एकत्वादि'ष्वित्यादिपदेन कर्मत्वादीनामपि ग्रहणं बोध्यम् । उत्सर्गोऽव्ययविषय एवेत्याशयात् । तिङन्तस्येति । तदर्थक्रियाया इत्यर्थः । भाष्ये—अथाऽपि कथञ्चिद्योगः स्यादिति । 'शेष' इत्यस्य विधायकत्वात् 'दृषदि पिष्टा' इत्याद्यर्थे इव पचत्यादिभ्यः पश्यत्याद्यर्थे प्रत्ययः स्यादिति भावः । न तिङन्तादिति । अयमत्राऽभिसन्धिः,—तिङन्तानां कृदन्तत्वप्रयुक्तप्रातिपदिकत्वाऽभावो ज्ञाप्यत इति 'पचति भवती'त्यादौ प्रथमाऽपि नेति बोध्यम् । 'पचेरन्' इत्यादौ नलोपश्चाऽत एव न । अत एव 'अह'न्नित्यादौ न दोषः । परशब्दस्येष्टेति । अन्तवद्भावस्य प्रायिकत्वेन स्थानिवद्भावस्याभावाऽतिदेशकत्वेन निषेधकतया 'निषेधाश्च बलीयांस' इति न्यायेन 'अचः परस्मि'न्नित्यस्यैव प्रवृत्तिरित्यपि बोध्यम् । यत्किञ्चित्स्थानिभूतादचः पूर्ववृत्तिधर्माऽवच्छिन्नोद्देश्यकत्वादचः परस्मिन्नित्यस्य प्रवृत्तिः । एतेन 'अन्तवद्भावेन शबन्तस्यैव कार्यमिति पूर्वविध्यभावात्कथं स्थानिवत्त्व'मिति परास्तम् । स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यत इत्यत्र न मानम्, तक्रकौण्डिन्यन्यायस्याऽनवकाश-

* स्त्रियाम् ४ । १ । ३ ** तस्याऽपत्यम् ४ । १ । ९२

इह तर्हि पचति पठतीति—'ह्रस्वस्य पिति कृति तुग्भवती'ति तुक् प्राप्नोति[†]। धातोरिति वर्तते।

एवमपि 'चिकीर्षती'त्यत्र प्राप्नोति। अत्रापि शपा व्यवधानात्। एकादेशे कृते नास्ति व्यवधानम्। 'एकादेशः पूर्वविधौ स्थानिवद्भवती'ति स्थानिवद्भावाद् व्यवधानमेवेति ॥ ९३ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याऽध्यायस्य
प्रथमे पादे पञ्चममाह्निकम्।

## वाऽसरूपोऽस्त्रियाम् ॥ ३ । १ । ९४ ॥

कथमिदं विज्ञायते 'स्त्रियामभिधेयायां वाऽसरूपो न भवती'ति आहोस्वित्स्त्री-

---

प्र०—बाधकः। नन्वतिङिति प्रत्याख्यायमाने पचेरन्निति प्रातिपदिकान्तत्वान्नकारलोपः प्राप्नोति। 'झस्य र'न्निति नकारोच्चारणसामर्थ्यान्न भविष्यति। इह तर्हि 'विचीया'दिति कृद्यकारत्वाद्दीर्घो न प्राप्नोति। एषोऽप्यदोषः। सार्वधातुकप्रतिषेधो ज्ञापयत्यकृदिति प्रतिषेधस्तिङो न भवतीति। यदि हि स्यात् सुनुयाच्चिनुयादित्यादावपि सार्वधातुके कृत्प्रतिषेधेन दीर्घो न भविष्तीति पृथक्सार्वधातुकप्रतिषेधोऽनर्थकः स्यात् ॥ ९३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याऽध्यायस्य
प्रथमेपादे पञ्चममाह्निकम्।

वासरूपोऽस्त्रियाम्। कथमिति—स्त्रियामित्यभिधेयसप्तमी वा स्यात् स्त्रियामित्यस्यैव वा स्वरूपस्य निषेधः स्यात्,—'स्त्रियामित्युच्चार्य ये प्रत्यया विधीयन्ते तेषु वासरूपो न भवती'ति

---

उ०—विषयकत्वेन विधेयविषयकत्वेन चेदृशे विषयेऽप्राप्तेः। तत्र सूत्रेऽभावाऽतिदेशस्याऽप्यङ्गीकारेण स्थानिनि सत्यभवतस्तुक एकादेशेऽप्यभावाऽतिदेशो बोध्यः। एतेन 'स्थानिवद्भावेऽपि शबन्तस्य शपा व्यवधानाऽभावा-त्सुदुर्वार' इत्यपास्तम्। 'धीः धियौ धिय' इत्यत्र तु न दोषः, 'ध्यायतेः सम्प्रसारणञ्चे' त्यनेन सम्प्रसारणे पूर्वत्वे 'हल' इति दीर्घत्वे च कृते एकादेशस्य निवृत्तेस्तस्य स्थानिवत्त्वाऽप्रवृत्तेः। 'जुहुवतु'रित्यादावपि ह्वेञोऽन्तरङ्गत्वादात्वे 'वार्णादाङ्ग'मित्यालोपे सम्प्रसारणे एकादेशस्यैवाऽभावान्न दोषः। स्पष्टं चेदं 'सर्वत्र प्रसारणिभ्य' इति वार्तिकभाष्ये। धियावित्यादावियङ् आकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाऽभावाच्च। नकारोच्चारणेति। समाधानान्तरमपि प्रागुक्तम्। पृथक्सार्वधातुकेति। न च श्यनर्थं, दीर्घप्रवृत्तियोग्याऽज-न्तेभ्यः श्यनभावात् ॥ ९३ ॥

इति श्रीनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयस्याध्यायस्य प्रथमे
पादे पञ्चममाह्निकम्।

वाऽसरूपो। ननु स्वरूपस्य निषेधे तदभाव एव स्यादतस्तत्पक्षे वाक्यार्थं दर्शयति—स्त्रियामि-त्युच्चार्येति। स्वरूपस्येत्यस्य—स्वरूपपरस्येत्यर्थः। निषेधः स्यादित्यस्य निषेधान्वय्यन्वयित्वं स्यादित्यर्थः।

---

[†] ह्रस्वस्य पिति कृति तुक् ६। १। ७१

प्रत्ययेष्विति ? किं चातः ? यदि विज्ञायते 'स्त्रियामभिधेयाया'मिति लव्या लवितव्या अत्र वाऽसरूपो न प्राप्नोति* । अथ विज्ञायते 'स्त्रीप्रत्ययेष्वि'ति व्यावक्रोशी व्यावक्रुष्टिरिति न सिध्यति† ।

एवं तर्हि नैवं विज्ञायते—'स्त्रियामभिधेयायां' नापि 'स्त्रीप्रत्यये'ष्विति । कथं तर्हि ? स्त्रीग्रहणं स्वरयिष्यते' । तत्र स्वरितेनाधिकारगतिर्भवतीति स्त्रियामित्यधिकृत्य‡ ये प्रत्यया विहितास्तेषां प्रतिषेधो विज्ञास्यते ॥ किमर्थं पुनरिदमुच्यते ?

**असरूपस्य वावचनमुत्सर्गस्य बाधकविषयेऽनिवृत्त्यर्थम् ॥ १ ॥**

असरूपस्य वावचनं क्रियत उत्सर्गस्य बाधकविषयेऽनिवृत्तिर्यथा स्यात् । तव्यत्तव्यानीयर उत्सर्गास्तेषामजन्ताद्यदपवादः* । चेयम् । चेतव्यमित्यपि यथा स्यात् ।

प्र०—संदिहानः पृच्छति । लव्येति । 'अचो य'दिति यता तव्यादीनां नित्यं बाधनं प्राप्नोतीत्यर्थः । व्यावक्रोशीति । 'कर्मव्यतिहारे णच्स्त्रिया'मिति णचा क्तिनो बाधः प्राप्नोतीत्यर्थः । स्त्रियामित्यधिकृत्येति । 'स्त्रियां क्ति'न्नित्यस्मिन् स्त्र्यधिकारे ये उत्सर्गापवादास्तेष्वपवाद उत्सर्गस्य बाधक एवेत्यर्थः । तत्रोत्पत्तिवाप्रसङ्ग इति । वासरूप इत्येतावच्छ्रूयते । तत्र वाग्रहणेन किं भावो विकल्प्यताम्—असरूपोऽपवादो वा भवति पक्षे न भवतीति । अथ बाधकत्वं विकल्प्यतां—वा बाधको भवति पक्षे न बाधक इति । तत्राऽन्तरङ्गत्वात्सत्ताया एव विकल्पः स्यात् । यथोक्तम्—'यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्ती पर' इति । न तु बहिरङ्गस्य बाधक-

उ०—ननु ये विहितास्तेषाम्प्रतिषेधे विधिवैयर्थ्यं स्यात्, विहितप्रतिषिद्धत्वाद्विकल्पो वा स्यादत आह–स्त्रियां क्तिन्निति । तदधिकारे ये विहिता उत्सर्गास्तेषां वासरूपविधिना प्रसक्तानां प्रतिषेधो—बाधो विज्ञास्यत इति भाष्याद्वार्थ इति भावः । एवञ्चोत्सर्गाऽपवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशित्वे सत्यस्त्रियामिति प्रतिषेध इति लभ्यते । अन्येनाऽपि यत्राऽसमावेश इष्टः सोऽनभिधानात्साध्यः । भाष्ये तत्रोत्पत्तिवाप्रसङ्ग इति । उत्पत्तेर्वार्थविकल्पप्रसङ्ग इत्यर्थः । ननु बाधकत्वविकल्पे नाऽयं दोष इत्याशङ्क्य तद्विकल्प एव न सिध्यतीत्याह—वाऽसरूप इति । असरूपोऽपवादोवा भवतीति । अपवादपदं वक्ष्यमाणसिद्धान्ताऽभिप्रायेण । बहिरङ्गस्येति । शब्दानुपात्तस्येत्यपि बोध्यम् । 'इत्येतन्ने'त्यन्तो भाष्ये छेदः । भाष्ये—यद्येतल्लभ्येतेति । अपवादपदाऽभावादपवादविषय एव विकल्प इत्यत्र मानाऽभावादपवादोत्सर्गोभयविषयो विकल्प स्यात् । एवञ्च तद्धित इवोत्सर्गाऽपवादयोर्विकल्पाद्यत्रोत्सर्गाऽपवादौ विभाषा, तत्राऽपवादेन मुक्ते उत्सर्गाऽप्रवृत्त्या पक्षेऽनुत्पत्तिरेव प्राप्नोतीति भावः । 'अपवादशास्त्रेण'ति कैयटोपपत्तिस्तु चिन्त्या, तद्धितेषु सर्वमुत्सर्गाऽपवाद

* तव्यत्तव्यानीयरः; अचो यत्; ३ । १ । ९६; ९७

† कर्मव्यतिहारे णच् स्त्रियाम् ३ । ३ । ४३; स्त्रियां क्तिन् ३ । ३ । ९४

‡ स्त्रियां क्तिन् ३ । ३ । ९४　　* तव्यत्तव्यानीयरः; अचो यत् ३ । १ । ९६; ९७

नैतदस्ति प्रयोजनम् । अजन्ताद्यद्विधीयते हलन्ताण्ण्यद्विधीयते†, एतावन्तश्च धातवो यदुताऽजन्ता हलन्ताश्च । उच्यन्ते च तव्यदादयस्ते वचनाद्भविष्यन्ति ।

एवं तर्हि ण्वुल्तृचावुत्सर्गौ, तयोः पचादिभ्योऽजपवादः‡ । पचतीति पचः । पक्ता पाचक इत्यपि यथा स्यात् ।

एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत् 'अजपि सर्वधातुभ्यो वक्तव्य' इति× ॥ एवं तर्हि ण्वुल्तृजच उत्सर्गाः, तेषामिगुपधात्कोऽपवादः+ । विक्षिपः विलिखः । विक्षेप्ता विक्षेपक इत्यपि यथा स्यात् ॥ अस्ति प्रयोजनमेतत् । किं तर्हीति ।

तत्रोत्पत्तिर्वाप्रसङ्गो यथा तद्धिते ॥ २ ॥

तत्रोत्पत्तिर्विभाषा प्राप्नोति यथा तद्धिते ॥ अस्तु यदा विक्षिपो विलिख इत्येतन्न, तदा विक्षेप्ता विक्षेपक इत्येतद्भविष्यति ॥ यद्येतल्लभ्येत कृतं स्यात्तत्तु न लभ्यम् । किं कारणम् ? यथा तद्धित इत्युच्यते, तद्धितेषु च सर्वमेवोत्सर्गापवादं विभाषा । उत्पद्यते वा न वा ।

प्र०—त्वस्येत्युत्पत्तेरेव विकल्पः स्यात् पक्षे तु न कश्चित्प्रत्यय उत्पद्येतेत्यर्थः । अस्त्विति । बाधकाऽभावे उत्सर्गस्याऽनिवार्यत्वादिति भाव । यद्येतदिति । अपवादशास्त्रेणोत्सर्गशास्त्रस्य बाधितत्वादपवादाऽभावपक्षेप्युत्सर्गस्याऽप्रवर्तनादिति भावः । तत्र यथा 'अत इञ्' इति विकल्पितेनेञा मुक्ते पक्षेऽण्न भवति अपि तु वाक्यमेव, तथेहाप्यपवादाऽभावपक्षे प्रकृतिरेव कर्त्रादीनर्थानभिदध्यात् । यथाग्निचिदित्यादौ क्विबादिलोपे कृते । सिद्धं त्विति । बाधकत्वे विकल्पिते यत्र पक्षेऽपवादस्य बाधकत्वं नास्ति तत्र बाधकत्वाऽभावादुत्सर्गः प्रवर्तते । अन्येनेति । दक्षस्यापत्यमि-

उ०—विभाषेति दृष्टान्तेन मदुक्तार्थस्यैव लाभात् । सिद्धन्त्विति । भाष्ये बाधकपदे कृतेऽसरूपस्य बाधकस्यैव विकल्पे उत्सर्गविकल्पाऽभावात्सिद्धमिति भावः । इदञ्चापवादशास्त्रेणैकवाक्यताऽऽपन्नम् । न चैवमसरूपो वा बाधको भवतीति भाष्येण बाधकत्वविकल्पप्रतिपादनं व्यर्थमिति वाच्यम्, 'असरूपस्य बाधकस्य वावचना'दिति वार्तिकस्वारस्येनाऽसरूपो बाधको वा भवतीत्येव भाष्येऽन्वयात् । वार्त्तिकाद्धि बाधकाऽनुवादेन विकल्पविधिरित्येव स्वरसतो लभ्यते न तु बाधकत्वाऽनुवादेनेति दिक् । प्रत्यासत्त्या च यन्निरूपितं बाधकत्वं तस्यैव पक्षेऽभ्यनुज्ञानमिति नाऽतिप्रसङ्गः । कैयटे—बाधकत्वे विकल्पित इत्यादि । इदञ्चिन्त्यं, वार्तिको-

† ऋहलोर्ण्यत् ३ । १ । १२४
‡ ण्वुल्तृचौ; नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३३; १३४
× ३ । १ । १३४ वा० १ + इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५

## सिद्धं त्वसरूपस्य बाधकस्य वावचनात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'असरूपस्य बाधकस्य वावचनात्' । असरूपो बाधको वा बाधको भवतीति वक्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवाऽस्तु । ननु चोक्तं 'तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धित' इति । नैष दोषः । अस्ति कारणं येन तद्धितेषु विभाषोत्पत्तिर्भवति । किं कारणम् ? प्रकृतिस्तत्र प्रकृत्यर्थे वर्तते, अन्येन च शब्देन प्रत्ययार्थोऽभिधीयते । इह पुनर्न केवला प्रकृतिः प्रकृत्यर्थे वर्तते, नचाऽन्यः शब्दोऽस्ति यस्तमर्थमभिदधीतेति कृत्वाऽनुत्पत्तिर्न भविष्यति ।

अथवा समयः कृतो 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय' इति* । एतस्मात्समयादनुत्पत्तिर्न भविष्यति । ननु च य एव तस्य समयस्य कर्ता स एवेदमप्याह । यद्यसौ तत्र प्रमाणमिहाऽपि प्रमाणं भवितुमर्हति । प्रमाणमसौ तत्र

प्र०—त्यादावपत्यादिशब्देनेत्यर्थः । इह पुनरिति । केवला प्रकृतिः स्वार्थमात्रमपि नाभिधत्ते किं पुनः कर्त्रादिकमर्थमभिधास्यति । तथाहि प्रकृतिप्रत्ययसमुदाये प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यां प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययस्तु प्रत्ययार्थे इत्युच्यते अनुत्पन्नप्रत्यया तु प्रकृतिर्न कञ्चिदर्थं गमयति । अथापि क्षिपेः कर्तेति कर्त्रादिशब्दाः प्रयुज्यन्ते तथापि करोतिक्रियापेक्षमपि कर्तृत्वं प्रतीयेत न तु क्षिपिक्रियापेक्षमेव तस्मात्सामर्थ्याद्बाधकत्वं बहिरङ्गमपि विकल्प्यते । य एवेति । समयस्यायं बाधकोऽस्त्विवति भावः । सामर्थ्यमिति । अर्थप्रत्यायनाय शब्दाः प्रयुज्यन्ते न च प्रत्ययस्याऽ-

उ०—क्वाधकपदार्थैकदेशस्य बाधकत्वस्य विकल्पेनाऽन्वयाऽयोगात् । किञ्च—पक्षे बाधकत्वाऽभावे शप्श्नपोरिव समुच्चयः स्यादिति महदनिष्टं, धर्मनिषेधे धर्म्यभावाऽप्रतीतेः । अत एव 'न वे'ति सूत्रे साधुत्वविकल्पे पक्षे तस्यैवाऽसाधुत्वमापादितम् । क्षिपेरिति । धात्वर्थनिर्देशे इक्प्रत्ययः । 'इक्कृष्यादिभ्य' इति इग्वा । तथापीति । 'कर्ते'त्यत्र तस्याऽपि सत्त्वादिति भावः । बाधकत्वं बहिरङ्गमपीति । इदञ्चिन्त्यम् । सामर्थ्यादपवाद एवाऽसरूपशब्देन विवक्षितो न तूत्सर्गोऽपीति तु भाष्यतात्पर्यं बोध्यम् । भाष्ये—अथवा समय इति । एवञ्च समयैतत्सूत्रयोरन्यतरस्याऽप्यबाधाय 'असरूप'पदेनाऽपवाद एव गृह्यत इति भावः । इहापि प्रमाणञ्चेत्किमेतावता, तत्राह—समयस्येति । अर्थः प्रत्याययितुमिति । न च प्रत्ययाऽनुत्पत्तौ प्रयोगे सामर्थ्यमस्ति 'न केवला प्रकृति'रिति निषेधात्, नापि प्रयुक्तादर्थबोध इति भाष्यार्थ इति भावः । असरूपशब्देनेति । भिन्नरूपो वेत्युक्ते भावाऽभावयोः परस्परभिन्नरूपस्य सत्ताप्रतीतिरिति नाऽनेनोभयोरुत्सर्गापवादयोर्विभाषाबोधनम् । तथा सति पक्षेऽनुत्पत्तिः स्यात् । सा च न रूपवतीत्यभावपक्षे न भिन्नरूपस्य सत्ता स्यादिति भावः । नन्वस्तु

* ३ । १ । २ वा० ११ इत्यत्रोक्तम्—"प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिरिति ।"

चेह च । सामर्थ्यं त्विह द्रष्टव्यं शब्दानां प्रयोगे, न चाऽनुत्पत्तौ सामर्थ्यमस्ति । तेनाऽनुत्पत्तिर्न भविष्यति । कथं तर्हि तद्धितेष्वनुत्पत्तौ सामर्थ्यं भवति ? अन्येन प्रत्ययेन सामर्थ्यम् । केन ? षष्ठ्या ॥ अथवा रूपवत्तामाश्रित्य वाविधिरुच्यते । न चाऽनुत्पत्ती रूपवती । तेनानुत्पत्तिर्न भविष्यति ।

एवमपि कुत एतदपवादो विभाषा भविष्यति न पुनरुत्सर्ग इति ? नचैवाऽस्ति विशेषो यदपवादो विभाषा स्यादुत्सर्गो वा । अपि च सापेक्षोऽयं निर्देशः क्रियते—'वासरूप' इति । न चोत्सर्गवेलायां किंचिदपेक्ष्यमस्ति, अपवादवेलायां पुनरुत्सर्गोऽपेक्ष्यते । तेन यो रूपवानन्यपूर्वको बाधकः प्राप्नोति स वा बाधको भविष्यति । कः पुनरसौ ? अपवादः ।

यदि 'यो रूपवानन्यपूर्वको बाधकः प्राप्नोति स वा बाधको भवती'त्युच्यते क्विबादिषु समावेशो न प्राप्नोति—ग्रामणीः ग्रामणाय इति† । न ह्येते रूपवन्तः । एतेऽपि रूपवन्तः । कस्यामवस्थायाम् ? उपदेशावस्थायाम् ॥ यद्येवम्—

प्र०—नुत्पत्तावर्थः प्रत्याययितुं शक्यत इत्यर्थः । पूर्वस्मिन् परिहारे प्रकृतेरेव केवलायाः स्वार्थमात्राभिधानेपि सामर्थ्यं नास्तीत्युक्तम् । उत्तरत्र तु समयात् प्रयोग एव केवलाया नास्तीत्युच्यते । कथं तर्हीति । समयात् केवलस्य प्रातिपदिकस्य तद्धितानुत्पत्तौ साधुत्वं न प्राप्नोतीत्यर्थः । अन्येनेति । दत्तस्यापत्यमिति षष्ठ्यन्तस्य प्रातिपदिकस्य प्रयोगो न केवलस्य, इह तु कृदनुत्पत्तौ सत्यां केवल एव धातुः स्यात्तस्य च समयात् प्रयोगाऽभावः । अथवेति । असरूपशब्देन भिन्नरूप उच्यते । तस्य च भिन्नरूपत्वं रूपवदुत्सर्गापेक्षया भवतीति स एव पक्षेऽभ्यनुज्ञायते, न त्वरूपानुत्पत्तिरित्यर्थः । न चैवास्तीति । उत्सर्गविकल्पेऽप्राप्तविभाषा अपवादविकल्पे तु प्राप्तविभाषेति न कश्चिद्विशेषः । अपवादवेलायामिति । बाध्यत्वेन यावदुत्सर्गो नापेक्ष्यते तावदपवादस्य

उ०—सामर्थ्यादन्यतरस्य विकल्पो न तूभयोरिति बाधकपदाऽभावे अपवाद एवेति कुतो लभ्यत इत्याशङ्कते भाष्ये—कुत एतदिति । इष्टापत्त्या समाधत्ते—न चैवास्तीति । तद्व्याचष्टे—उत्सर्गेति । 'असरूप उत्सर्गो वा भवती'त्यनेन प्रत्यासत्त्याऽसरूपोऽपवाद एव पक्षे स्थाप्यत इति 'क'विषये नाऽणिति भावः । वस्तुतोऽसरूपपदेनाऽपवाद एवोपतिष्ठत इत्याह—भाष्ये—अपि च सापेक्ष इति । अवधिसापेक्ष इत्यर्थः । भिन्नरूपत्वं हि—असरूपत्वम् । तत्र 'कुतो भिन्नरूप' इत्यपेक्षायां स्वविधानवेलायां यः स्वविषये प्राप्तः स एव बुद्धिस्थो गम्यतेऽपवादविधिसमये चोत्सर्गस्तमपि विषयमुपढौकमान उपारूढो बुद्धौ भवतीति तदपेक्षया भिन्नरूपोऽपवाद एव गृह्यत इत्यर्थः । न चोत्सर्गवेलायामिति । नन्वपवादवाक्यार्थोत्तरमुत्सर्गस्य लक्ष्यसंस्कारकतेति प्रातिपदिकार्थसूत्रभाष्ये उक्तत्वेनोत्सर्गोऽपि स्ववेलायामपवादमपेक्षत इति कथमेतदिति चेन्न;

† सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्; कर्मण्यण ३ । २ । ६१; १

## अनुबन्धभिन्नेषु विभाषाप्रसङ्गः ॥ ४ ॥

अनुबन्धभिन्नेषु विभाषा प्राप्नोति । कर्मण्यण् [ ३ । २ । १ ] 'आतोऽनुपसर्गे कः' [ ३ ] इति कविषयेऽणपि प्राप्नोति ।

## सिद्धमनुबन्धस्याऽनेकान्तत्वात् ॥ ५ ॥

सिद्धमेतत् । कथम् ? 'अनुबन्धस्याऽनेकान्तत्वात्' । अनेकान्ता अनुबन्धाः । अथवा प्रयोगेऽसरूपाणां वाविधिर्न्याय्यः ।

## प्रयोगे चेल्लादेशेषु प्रतिषेधः ॥ ६ ॥

प्रयोगे चेल्लादेशेषु प्रतिषेधो वक्तव्यः । 'ह्योऽपच'दित्यत्र‡ लुङपि प्राप्नोति । 'श्वः पक्ते'त्यत्र × लृडपि प्राप्नोति ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति'न लादेशेषु वासरूपो भवती'ति यदयं 'ह्शश्वतोर्लङ् च' [ ३ । २ । ११६ ] इत्याह । अथवा प्रयोगेऽसरूपाणां वाविधौ न सर्वमिष्टं सङ्गृहीतमिति कृत्वा द्वितीयः प्रयोग उपास्यते । कोऽसौ ? उपदेशो नाम । उपदेशे चैतेऽसरूपाः[1] ।

---

प्र०—प्रवृत्तिरेव नास्तीत्यर्थः । उपदेशावस्थायामिति । प्रत्यासत्तिन्यायादुपदेशावस्थायामसारूप्यमाश्रीयते इत्यर्थः । ह्योऽपचदिति । लङ्यनच्कस्तकारप्रत्ययः, लुङि त्वपाक्षीदिति ईच्छब्द इति भिन्नरूपत्वात्समावेशप्रसङ्गः । यदयमिति । 'परोक्षे लि'डिति लिटा लङः समावेशोऽसारूप्यात्सिद्ध एवेति नार्थो लङ्विधानेन । विहितस्तु लकाराणामसमावेशं ज्ञापयतीत्यर्थः । अथवेति । क्विबादयो

---

उ०—लक्ष्यसंस्कारवेलायामपेक्षायामपि वाक्यार्थबोधवेलायां तदभावात् । अस्य च तदैवैकवाक्यतेति भावः । स वा बाधको भवतीति भाष्ये । स बाधको वा भवतीत्यन्वयः । सिद्धमनुबन्धस्याऽनेकान्तत्वादिति । ननु यद्यनुबन्धोऽनवयवस्तदा कथं कप्रत्यये कस्येत्त्वमप्रत्ययादित्वाऽभावात् । कथं वा डादीनामनेकाल्त्वेन सर्वादेशत्वम् । न चाऽऽदेशप्रवृत्तिकालेऽनुबन्धत्वाऽभावादनेकाल्त्वं, तर्हि केऽपि वाक्यार्थबोधात्पूर्वं प्रत्ययत्वाऽज्ञानेन तदुत्तरमेवेत्संज्ञाप्रवृत्तौ सर्वत्र 'नाज्झला'वितिसूत्रभाष्योक्तरीत्या उपदेशोत्तरकालमेवेत्संज्ञाप्रवृत्त्या चोपदेशेऽनुबन्धसत्त्वादसारूप्यकरत्वं स्यादिति चेन्न; 'चुटू' इत्यादावादिशब्दस्य समीपपरत्वान्न दोषः । 'अनेका'लित्यत्र संबन्धसामान्यषष्ठ्यर्थे बहुव्रीह्यङ्गीकारान्न दोषः । 'डा'देशेऽपि 'डा—आ' इत्याकारप्रश्लेषात्सर्वादेशत्वम् । इत एव वाऽस्वरसात्—'अथैकान्तेषु दोष एवे'ति वक्ष्यति भाष्यकृत् ।

---

‡ अनद्यतने लङ्; लुङ् ३ । २ । १११; ११० × अनद्यतने लुट्; लृट् शेषे च ३ । ३ । १५; १३

[1]—'सरूपाः' इति कीलहार्नपाठः ।

ननु चोक्त'मनुबन्धभिन्नेषु विभाषाप्रसङ्ग' इति । परिहृतमेतत् । कथम् ? 'सिद्ध-मनुबन्धस्यानेकान्तत्वा'दिति । अथैकान्ते दोषः एव । एकान्ते च न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमसारूप्यं भवती'ति,—यदयं ददातिदधात्योर्विभाषा शं शास्ति† ।

अथवाऽसरूपो बाधको वा बाधको भवतीत्युच्यते । अपवादो नामाऽनुबन्धभिन्नो वा भवति रूपान्यत्वेन वा । तेनाऽनेनाऽवश्यं किंचित्त्याज्यं किंचिच्च[1] सङ्ग्रहीतव्यम् । तद्यदनुबन्धकृतमसारूप्यं तन्नाश्रयिष्यामो यत्तु रूपाऽन्यत्वेनाऽसारूप्यं तदाश्रयिष्यामः ।

अथवाऽसरूपो बाधको वा बाधको भवतीत्युच्यते । सर्वश्चाऽसरूपः, तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो योऽसरूप' इति । कश्च साधीयः[2] ? यः प्रयोगे च प्राक् च प्रयोगात् ।

अथवाऽसरूपो बाधको वा बाधको भवतीत्युच्यते, न चैवं सन्ति[3] कश्चिदपि सरूपः । त एवं विज्ञास्यामः—'क्वचिद्येऽसरूपा' इति । अनुबन्धभिन्नाश्च प्रयोगे सरूपाः ।

प्र०—न सङ्गृहीतास्तेषां प्रयोगे रूपाऽभावादित्यर्थः । क्वचिद्य इति । प्रयोग इत्यर्थः । उपदेशे सर्वस्यैवासारूप्यमित्यसरूपग्रहणमनर्थकं स्यात् । कथमिति । स्त्र्यधिकारविहितेष्वेव किं प्रतिषेधः,

उ०—अथवा प्रयोगे इति । क्विरूपाऽभावादेव स प्रयोगेऽसरूपः । 'असरूप'पदेन च समानरूपाऽभाववानुच्यत इति भावः । न लादेशेषु वाऽसरूप इति । आदेशगतमसारूप्यं गृहीत्वा लकारविषये वाऽसरूपविधिर्नास्तीति तात्पर्यम् । आदेशप्रवृत्त्युत्तरकालिकवैरूप्यवत्सु लकारेष्वित्यक्षरार्थः । तदाह—लकाराणामसमावेश इति । सर्वेष्टाऽसङ्ग्रहमुपपादयति—क्विबादय इति । 'असरूप'पदेन भिन्नरूपस्यैव ग्रहणमित्याशयः । भाष्ये—नाऽनुबन्धकृतमिति । भाव्यनुबन्धत्वज्ञानविषयवर्णकृतमसारूप्यं नेत्यर्थः । ददातिधात्योर्विभाषा शः । पक्षे णः । डादौ तु प्रश्लेषान्निर्वाहः । 'चुटू' इत्यादावादिशब्दस्य समीपपरत्वे चुञ्चुप्चणपोर्यादित्वेऽपीत्त्वापत्तेः । अथवेति । उभयकृताऽसारूप्ये गृह्यमाणे व्यावर्त्याऽभावादसरूप इति व्यर्थं, स्पष्टत्वाद् 'वाऽपवाद'इत्येव वदेत् । तत्सामर्थ्यादनुबन्धकृताऽसारूप्यं नाऽऽश्रीयते, किन्तु रूपाऽन्यत्वेनैवेत्यर्थः । तत्सामर्थ्यात्प्रकर्षगतिः । तेन प्रयोगे उपदेशे चाऽसरूप इति द्वितीयः पक्षः । तत्सामर्थ्यात्प्रायोगिकमसारूप्यमिति तृतीयः पक्षः । तत्राऽन्त्ययोः क्विबादिसङ्ग्रहः कथमिति चेद्रूपाऽभावादेव सारूप्याऽभावस्याक्षतेः । 'असरूप'पदेन च सारूप्याऽभाववानुच्यत इत्याहुः । प्रागिति । अत्र पक्षे सूत्रे सन्धिः सौत्रः । यद्वा परिभाषापक्षे प्रथमः पक्षः ।

† ददातिदधात्योर्विभाषा ३ । १ । १३९

१—'किंचित्तु' पा० । २—'साधीयान्' पा० । ३—कश्चिन्न ।

अथ कथमिदं विज्ञायते 'ऽस्त्रिया'मिति ? किं'स्त्रियां न भवती'ति, आहोस्वित्प्राक् स्त्रिया भवतीति ? कश्चात्र विशेषः ?

**स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः ॥ ७ ॥**

स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषा प्राप्नोति । क्त—हसितं छात्रस्य शोभनम् । घञपि प्राप्नोति† । ल्युट्—हसनं छात्रस्य शोभनम् । घञपि प्राप्नोति‡ । तुमुन्—इच्छति भोक्तुम् । लिङ्लोटावपि प्राप्नुतः× । खलर्थः—ईषत्पानः सोमो भवता । खलपि प्राप्नोति+ ॥ एवं तर्हि 'स्त्रियाः प्रा'गिति वक्ष्यामि ।

**स्त्रियाः प्रागिति चेत्क्त्वायां वावचनम् ॥ ८ ॥**

स्त्रियाः प्रागिति चेत्क्त्वायां वावचनं कर्तव्यम् । आसित्वा भुङ्क्ते । 'आस्यते भोक्तु'मित्यपि यथा स्यात्* ।

प्र०—परस्तात् स्त्र्यधिकारस्य भवत्येव वाऽसरूपविधिः, अथ स्त्र्यधिकारात्प्राग्वासरूपविधिर्भवति स्त्र्यधिकारेण विच्छिद्यत इति प्रश्नः । लिङ्लोटाविति । 'लिङ्चे'ति लिङ् भवत्येव । 'इच्छार्थेषु लिङ्लोटा'वित्यत्र तु लिङ्लोटोः सहनिर्देशादत्रापि सहनिर्देशः कृतः । लिङ्चेति नियमाल्लोण्न भविष्यतीति शक्यते वक्तुम् । ननु तुमुन् भावे कर्तृकर्मणोर्लिङ्लोटाविति भिन्नार्थत्वात् कुतो बाध्यबाधकभावः । नैष दोषः । भावेऽपि लिङ्लोटोरस्ति विधानमिति तदपेक्षया बाध्यबाधकभावोऽभिमतः । आस्यते भोक्तुमिति । भोजनार्थत्वादासनस्य पौर्वकाल्यमात्रं गम्यते इति समानविषयत्वाद्बाध्यबाधकभावप्रसङ्गः । क्त्वा भावे, तत्रैव च लकारोत्पत्तिरत्रेति । समानार्थत्वमपि

उ०—अधिकारत्वे द्वितीयः, तदा 'स्त्रिया' मित्यस्य 'स्त्रिया'मिति दृष्ट्वा निवर्त्तत इत्यर्थः । 'समानकर्तृकेषु तुमुन्' 'लिङ् चे'ति वचनाल्लिङ इष्टत्वादाह—लिङ् चेति । लोडापादन एव भाष्यतात्पर्यमिति भावः । नियमादिति । नियमो वा कल्प्यो, ज्ञापकं वा कल्प्यमिति तु भाष्याशयः । किञ्च, लिङ् कर्तृकर्मणोश्चरितार्थः, भावे तुमुन्भावार्थयोस्तयोरपवाद एवेतीष्टं भगवत इति ज्ञायते इति लिङ्भवत्येवेत्यपि कैयटश्चिन्त्यः । ननु लिङ्लोटौ कामप्रवेदने विधीयेते, 'इच्छामि भुञ्जीत' इच्छामि भुङ्क्ताम्भवा'निति हि तदुदाहरणम् । इदं त्वकामप्रवेदनेऽपीति कथमनयोर्बाध्यबाधकभावः । न चेदमपि कामप्रवेदनविषयम्, इच्छति भोक्तुमित्युदाहरणाऽसङ्गतेः, वक्त्रभिप्रायाविष्करणमेव हि 'कामप्रवेदन'शब्देनोच्यत इति चेन्न; 'तव भोजनमिच्छती'ति तदर्थेनाऽत्राऽपि

† नपुंसके भावे क्तः; भावे ३ । ३ । ११४; १८ ‡ ल्युट् च; भावे ३ । ३ । ११५; १८
× समानकर्तृकेषुतुमुन्; इच्छार्थेषु लिङ्लोटौ ३ । ३ । १५८; १५७
+ आतो युच्; ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३ । ३ । १२८; १२६
१—'स्त्रिया'मिति कीलहार्नपाठः । * समानकर्तृकयोः पूर्वकाले ३ । ४ । २१; समानकर्तृकेषु तुमुन् ३ । ३ । १५८

## कालादिषु तुमुन्विधाने वाचनम् ॥ ९ ॥

कालादिषु तुमुन्विधाने वावचनं कर्तव्यम् । कालोभोक्तुम् । कालो भोजनस्येत्यपि यथा स्यात्† ।

## अर्हे तृज्विधानम् ॥ १० ॥

अर्हे तृज्विधेयः‡ । इमेऽर्हे कृत्या विधीयन्ते, ते विशेषविहिताः सामान्यविहितं तृचं× बाधेरन् ।

नैष दोषः । भावकर्मणोः कृत्या विधीयन्ते, कर्त्तरि तृच्+ । कः प्रसङ्गो यद्भावकर्मणोः कृत्याः कर्तरि तृचं बाधेरन् ।

एवं तर्हि—अर्हेकृत्यतृज्विधानम् । अर्हे कृत्यतृचो विधेयाः । अयमर्हे लिङ्विधीयते* स विशेषविहितः सामान्यविहितान् कृत्यतृचो** बाधेत ॥ ९४ ॥

## कृत्याः ॥ ३ । १ । ९५ ॥

## कृत्यसंज्ञायां प्राङ्ण्वुल्वचनम् ॥ १ ॥

कृत्यसंज्ञायां प्राङ्ण्वुल× इति वक्तव्यम् । किं प्रयोजनम् ? ण्वुलः कृत्यसंज्ञा माभूत् ।

## अर्हे कृत्यतृज्वचनं तु ज्ञापकं प्राङ्ण्वुल्वचनानर्थक्यस्य ॥ २ ॥

यदय'मर्हे कृत्यतृचश्च' [ ३ । ३ । १६९ ] इति तृज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः'—प्राङ्ण्वुलः कृत्यसंज्ञा भवती'ति ॥ एवमपि ण्वुलः कृत्यसंज्ञा प्राप्नोति । योगापेक्षं ज्ञापकम् ॥ ९५ ॥

प्र०—विद्यते । तत्रायं निर्णयः—स्त्र्यधिकारस्य परस्तादपि वासरूपविधिर्भवति । 'अर्हे कृत्यतृचश्चे' त्यत्र तु कृत्यतृज्ग्रहणेन तस्याऽनित्यत्वं ज्ञाप्यते ॥ ९४ ॥

कृत्याः । 'कृत्या' इत्येतावत्सूत्रमित्याह—कृत्यसंज्ञायामिति । योगापेक्षमिति । ण्वुल्तृचावित्येतस्माद्योगात्प्राक्कृत्यसंज्ञाधिकार इत्येवं तृज्ग्रहणेनानुमास्यत इत्यर्थः ॥ ९५ ॥

उ०—तत्सत्त्वात् । ननु पौर्वकाल्याऽप्रतीतेः कथं क्त्वाविषये लकारप्राप्तिरत आह—भोजनार्थत्वादिति । 'क्रियाः प्रा'गित्यत्र पक्षे दूषणान्तरमाह—भाष्ये—कालादिष्विति । 'अर्हे तृ'जिति च ॥ ९४ ॥

१—'तुमुनि' इति कीलहार्नपाठः ।

† कालसमयवेलासु तुमुन्; ल्युट् च ३ । ३ । १६७; ११५ ‡ अर्हे कृत्यतृचश्च ३ । ३ । १६९ × ण्वुल्तृचौ ३ । १ । १३३ + तयोरेव कृत्यक्तखलर्थाः; कर्त्तरिकृत् ३ । ४ । ७०; ६७ * लिङ् यदि ३ । ३ । १६८ ** कृत्याः; ण्वुल्तृचौ ३ । १ । ९५; १३३

## तव्यत्तव्यानीयरः ॥ ३ । १ । ९६ ॥

### केलिमर उपसङ्ख्यानम् ॥ १ ॥

केलिमर उपसङ्ख्यानं कर्तव्यम् । पचेलिमा माषाः । पक्तव्याः । भिदेलिमाः सरलाः । भेत्तव्याः ।

### वसेस्तव्यत्कर्तरि णिच्च ॥ २ ॥

वसेस्तव्यत्कर्तरि वक्तव्यः । णिच्चाऽसौ भवतीति वक्तव्यम्† । वसतीति वास्तव्यः ।

### तद्धितो वा ॥ ३ ॥

तद्धितो वा पुनरेष भविष्यति । वास्तुनि भवो वास्तव्यः‡ ॥ ९६ ॥

प्र०—तव्यत्तव्या । केलिमर इति । कर्मकर्तरि चायं कैश्चिदिष्यते । भाष्यकारेण तु कर्मणि प्रदर्शितः । वास्तुनि भव इति । 'दिगादिभ्यो य'दिति दिगादित्वाद्यत्प्रत्ययः । नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यानं कर्तव्यमिति मन्यते । यथोक्तम्—

उपादायापि ये हेयास्तानुपायान् प्रचक्षते ।
उपायानां च नियमो नावश्यमवतिष्ठते ॥' इति ।

अवास्तव्य इत्यत्र स्वरे भेदोऽपि नास्ति । 'कृत्योकेष्णु'जिति यदन्तोदात्तत्वं विधीयते तदेव 'ययतोश्चाऽतदर्थे' इत्यनेन ॥ ९६ ॥

उ०—तव्यत्तव्या । कैश्चिदिति । वृत्तिकारैरित्यर्थः । कर्मणि प्रदर्शित इति । 'पक्तव्या' इति विवरणात् । न हि तव्यः कर्मकर्तरि, 'लवाच्यः कर्त्ता कर्मव'दिति वचनादिति भावः । ननु बोधे विशेषात्कथं तद्धितेन सिद्धिरत आह--नित्यानामिति । वास्तुभवत्वेनापि वासकर्त्तुरेव रूढया बोधान्नार्थविशेषः, रूढया सर्वदोष-परिहारादिति भावः । उपादायापि ये हेया इति,--उपायशब्दव्युत्पत्तिः । पृषोदरादित्वात्साधुः । रेखागव-यस्थानीयत्वादिति भावः । कृत्योकेति, ययतोरिति चान्तोदात्तविधायके । नञिति च तत्र वर्त्तते । अनेन वास्तव्योऽनवास्तव्य इत्यादिसमासस्त्वनभिधानान्न भवतीति भाष्याशयः ॥ ९६ ॥

१—'प्राक्तृचः' इति पाठेन भवितव्यम् । एवं पाठे सति 'ण्वुलः कृत्यसञ्ज्ञा प्राप्नोति' इत्याक्षेपः सङ्गच्छते । 'प्राङ्ण्वुलः' इति पाठे तु ण्वुलः कृत्यसञ्ज्ञापत्तिर्न सङ्गच्छते । (टिप्पणीयं २०० पृष्ठे 'पाङ्ण्वुलः' कृत्यासंज्ञा भवती'त्यत्र पठनीया ।)

† अत उपधायाः ७ । २ । ११६ ‡ दिगादिभ्यो यत् ४ । ३ । ५४

# अचो यत् ॥ ३ । १ । ९७ ॥

अज्ग्रहणं किमर्थम् ? अजन्ताद्यथा स्याद्धलन्तान्मा भूदिति । नैतदस्ति प्रयोजनम् । हलन्तापण्यद्विधीयते† स बाधको भविष्यति ।

यथैव तर्हि ण्यद्यतं बाधत एवं तव्यदादीनपि बाधेत‡ । अज्ग्रहणे पुनः क्रियमाणेऽजन्ताद्यद्विधीयते हलन्तापण्यत् [ विधीयते ] । एतावन्तश्च धातवो यदुताऽजन्ता हलन्ताश्च । उच्यन्ते च तव्यदादयः । ते वचनाद्भविष्यन्ति । नैतदस्ति प्रयोजनम् । वासरूपेण × तव्यदादयो भविष्यन्ति ।

इदं तर्हि प्रयोजनम्, अजन्तभूतपूर्वमात्रादपि यथा स्यात् । लव्यम् पव्यम् । आर्द्धधातुकसामान्ये गुणे कृते यि प्रत्ययसामान्ये च वान्तादेशे कृते 'हलन्ता'दिति ण्यत्प्राप्नोति+ । तथा दित्स्यम् धित्स्यम्,—आर्द्धधातुकसामान्येऽकारलोपे कृते 'हलन्ता'दिति ण्यत्प्राप्नोति§ । अज्ग्रहणसामर्थ्याद्यदेव भवति ।

## यति जनेरुपसङ्ख्यानम् ॥ १ ॥

यति जनेरुपसङ्ख्यानं कर्तव्यम् । जन्यं वत्सेन ।

अत्यल्पमिदमुच्यते । 'तकिशसिचतियतिजनीनामुपसङ्ख्यानमिति वक्तव्यम्' । तकि—तक्यम् । शसि—शस्यम् । चति—चत्यम् । यति—यत्यम् । जनि—जन्यम् ।

प्र०—अचो यत् । यति जनेरिति । यतोऽनाव इति स्वरार्थं जनेर्यद्विधानम् । जन्यमिति तु ण्यताऽपि सिध्यति, जनिवध्योश्चेति वृद्धिप्रतिषेधात् । वधमर्हतीति । दण्डादिभ्य इति यत्प्रत्ययः । यदि तद्धित इति । तेन सह समासस्य लक्षणाऽभावात् । स्वरे हि दोष इति ।

उ०—अचो यत् । भाष्ये आर्द्धधातुकसामान्य इति । विषयसप्तम्यामपि परभूतविषयसत्त्वे एव प्रवृत्त्या परनिमित्तत्वमस्त्येवेति 'कथयती'त्यादौ स्थानिवत्त्वनिर्वाहः । आर्द्धधातुके इति च जातिनिर्देश इति भावः । यतोऽनाव इति । आद्युदात्तस्वरार्थमित्यर्थः । यत्प्रत्यय इति । एतेन 'दण्डादिभ्यो य' इति वृत्तिपाठ एतद्भाष्यविरुद्ध इति भावः । लक्षणाऽभावादिति । 'सुप्सुपे'ति' तु न सार्वत्रिकमित्यर्थः । भाष्ये—

† ऋहलोर्ण्यत् ३ । १ । १२४ ‡ तव्यत्तव्यानीयरः ३ । १ । ९६
१—क्वचिन्न । × वाऽसरूपोऽस्त्रियाम् ३ । १ । ९४
+ सार्वधातुकार्धधातुकयोः ७ । ३ । ८४; वान्तो यि प्रत्यये ६ । १ । ७९; ऋहलोर्ण्यत् ३ । १ । १२४ § अतो लोपः ६ । ४ । ४८; ऋहलोर्ण्यत् ३ । १ । १२४

## हनो वा वध च ॥ २ ॥

हनो वा यद्वक्तव्यः । 'वध' इत्ययं चाऽऽदेशो वक्तव्यः । वध्यः घात्यः¶ ।

## तद्धितो वा ॥ ३ ॥

तद्धितो वा पुनरेष भविष्यति—वधमर्हति वध्यः* । यदि तद्धितः, समासो न प्राप्नोति—असिवध्यः मुसलवध्य इति । यति पुनः सति 'साधनं कृतेति वा पादहारकाद्यर्थ'मिति† समासः सिद्धो भवति ।

यदि पुनरसिवधशब्दादुत्पत्तिः स्यादसिवधमर्हतीति ? नैवं शक्यम् । स्वरे हि दोषः स्यात्–'असिवध्यः' एवं स्वरः प्रसज्येत‡ । असिवध्य इति चेष्यते× ॥ ९७ ॥

## गदमदचरयमश्चाऽनुपसर्गे ॥ ३ । १ । १०० ॥

## अनुपसर्गाच्चरेराङि चाऽगुरौ ॥ १ ॥

अनुपसर्गाच्चरेरित्यत्राङि चागुराविति वक्तव्यम् । आचर्यो देशः । अगुराविति किमर्थम् ? आचार्य उपनयमानः ॥ १०० ॥

## अर्यः स्वामिवैश्ययोः ॥ ३ । १ । १०३ ॥

## स्वामिन्यन्तोदात्तत्वं च ॥ १ ॥

स्वामिन्यन्तोदात्तत्वं च वक्तव्कम् । अर्यः स्वामी ॥ १०३ ॥

प्र०—असिवधशब्दाद्यति सति 'तित्स्वरित'मिति स्वरितः प्रसज्येत । कृदन्तेन तु समासे कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तो भवति। न चाऽसिवधशब्दात् प्राप्नोति यत्, दण्डादिषु केवलस्य वधशब्दस्य पाठात्तदन्तविध्यभावाच्च ॥ ९७ ॥

उ०—यदि पुनरिति । असिवध्यादयः समस्ता अपि गणे पाठ्याः, आकृतिगणो वा स इति भावः । एतेन 'न चाऽसिवधे'त्याद्यपास्तम् । कृदुत्तरपदेति । 'वध्य'शब्दो हि 'यतोऽनाव' इति द्व्यच्कत्वादाद्युदात्तः । एवञ्च तद्धितेनाऽसिद्धिरिति वार्तिकं कार्यमेवेति भावः ॥ ९७ ॥

¶ ऋहलोर्ण्यत् ३ । १ । १२४; हनस्तोऽचिण्णलोः; हो हन्तेर्ञ्णिन्नेषु ७ । ३ । ३२; ५४
* दण्डादिभ्यो यत् ५ । १ । ६६ † २ । १ । ३३ वा० २ ‡ तित्स्वरितम् ६ । १ । १८५
× यतोऽनावः ६ । १ । २१३; गतिकारकोपपदात् कृत् ६ । २ । १३९

## अजर्यं सङ्गतम् ॥ ३ । १ । १०५ ॥

'सङ्गत'मिति किं प्रत्युदाह्रियते ? अजरः कम्बलः । अजरिता कम्बल इति । किं पुनः कारणं कर्तृसाधनः प्रत्युदाह्रियते न भावसाधनः प्रत्युदाहार्यः । एवं तर्हि,—

### अजर्यं कर्तरि ॥ १ ॥

'अजर्यं कर्तरी'ति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । गत्यर्थानां क्तः कर्तरि विधीयते+, तेन योगादजर्यं कर्तरि भविष्यति । गत्यर्थानां वै क्तः कर्मण्यपि विधीयते+, तेन योगादजर्यं कर्मण्यपि प्राप्नोति । जीर्यतिरकर्मकः । भावे तर्हि प्राप्नोति । सङ्गतग्रहणमिदानीं किमर्थं स्यात् ? कर्तृविशेषणं सङ्गतग्रहणम् । सङ्गतं चेत् कर्तृ

प्र०—अजर्यम् । तयोरेवेति वचनाद्भावेऽजर्यशब्दः प्राप्नोति—'अजर्यं सङ्गतेने'ति । कर्तरि च सङ्गते इष्यते—'अजर्यमार्यसङ्गत'मित्यतः पृच्छति—किं प्रत्युदाह्रियत इति । अजर इति । कर्तर्ययं प्रत्ययो निपात्यते । ततो ह्यङ्गविकलतापरिहाराय कर्तैव प्रत्युदाहरणे प्रदर्शनीय इति भावः । गत्यर्थानामिति । यद्यपि सङ्गमनं सङ्गतमिति भावे इह क्तो विहितस्तथापि गत्यर्थानां क्तः प्रत्ययः कर्तरि दृष्टो—गतो ग्रामं देवदत्त इति । ततो गत्यर्थधातुसाहचर्यादजर्यमिति कर्तरि निपातनमिति मन्यते । जीर्यतिरकर्मक इति । सोपसर्गस्य सकर्मकत्वेपीहानुपसर्गस्य निपातनादकर्मकत्वं बोद्धव्यम् । द्रव्यकर्माभावाश्रयेण चाऽकर्मकत्वमुक्तम् । कालादिना तु सर्वस्यैव सकर्मकत्वम् । सङ्गतग्रहणमिति । नहि गमेर्भावस्य जीर्यतेर्भावेन सामानाधिकरण्यमुपपद्यत इति प्रश्नः । कर्तृविशेषणमिति । वैयधिकरण्यमनयोः पदयोः स्यादिति भावः । लोमानि चेदिति । तथा च 'हृष्टं

उ०—अजर्यं सङ्गतम् । कर्तरि च सङ्गत इष्यत इति । कर्तर्यर्थे सङ्गते विशेष्ये इष्यत इत्यर्थः । कर्तर्ययमिति । अत एव 'अजर्य'मिति निपातनाश्रयणम् । ह्यङ्गेति । कर्त्रर्थत्व—सङ्गतविशेष्यकत्वरूपेत्यर्थः । गत्यर्थानामिति । भाष्यं दृष्ट्वा 'सङ्गतमिति कर्तरि क्तः, तदर्थे च निपात्यमानमजर्यं कर्तरीति प्रतीयते, तदसङ्गतम्, सङ्गतमिति मैत्रीपर्यायस्य भावक्तान्तस्यैवाऽत्र ग्रहात् । अतस्तत्तात्पर्यमाह—तथापीति । तेन योगादिति भाष्यस्य,—तेन साहचर्यादित्यर्थः । सोपसर्गस्येति । अर्थान्तरवृत्त्येति भावः । ननु कालादिकर्मसद्भावात्कथमकर्मकत्वन्तत्राह—द्रव्येति । एतच्च 'गतिबुद्धी'ति सूत्रे 'कालाध्वनो'रिति सूत्रे च निरूपितम् । 'कर्त्तरी'ति वार्तिकारम्भवाद्याह भाष्ये—भावे तर्हीति । गत्यर्थेभ्यो विशिष्य विधानेन भावेऽपि 'क्त'दर्शनादिति भावः । प्रत्याख्यानवाद्याह—सङ्गतग्रहणमिति । तथा च तत्सामर्थ्यात्कर्त्तर्येव भविष्यति नाऽर्थो वार्तिकेनेत्यर्थः । वार्तिकारम्भवाद्याह—कर्तृविशेषणमिति । कर्त्तृपदाऽध्याहारेणेति भावः ।

+ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ३ । ४ । ७२

चेद्भवतीति । तद्यथा—'हृषेर्लोमसु' [ ७ । २ । २९ ] इति लोमानि चेत्कर्तॄणि भवन्ति ॥ १०५ ॥

## वदः सुपि क्यप् च ॥ ३ । १ । १०६ ॥

### वदः सुप्यनुपसर्गग्रहणम् ॥ १ ॥

वदः सुप्यनुपसर्गग्रहणं कर्तव्यम् । इह मा भूत्—प्रवाद्यम् अपवाद्यमिति । तत्तर्हि कर्तव्यम् ? न कर्तव्यम् । 'अनुपसर्ग' इति† वर्तते । एवं तर्ह्यन्वाचष्टे—'अनुपसर्ग इति वर्तत' इति । नैतदन्वाख्येयम्—'अधिकारा अनुवर्तन्त' इति । एष एव [ च ] न्यायो यदुत 'अधिकारा अनुवर्तेर'न्निति ॥ १०६ ॥

## भुवो भावे ॥ ३ । १ । १०७ ॥

भावग्रहणं किमर्थम् ? कर्मणि मा भूदिति । नैतदस्ति प्रयोजनम् । भवतिरयमकर्मकः । अकर्मका अपि वै धातवः सोपसर्गाः सकर्मका भवन्ति तेनाऽनुभव्यमाम-

प्र०—लोमभिः, हृषितं लोमभि'रिति वैयधिकरण्येऽपीड्विकल्पो भवति । तस्मात्कर्तरीति वक्तव्यम्[1] । अथवा सामानाधिकरण्यत्यागेन वैयधिकरण्याश्रयणस्याऽयुक्तत्वान्निपातनाद्वा कर्तर्येव प्रत्ययो भवतीति स्थितम् ॥ १०५ ॥

वदः सुपि । नैतदिति । यत्राधिकारस्य विच्छेदोऽवध्यपरिज्ञानं वा सिंहावलोकितन्यायाश्रयणं वा तत्रावश्यवक्तव्यो विशेषः । एवमादौ तु प्रयोजनाभावादवक्तव्य इत्यर्थः ॥ १०६ ॥

भुवो भावे । भवतिरकर्मक इति । ननु प्राप्त्यर्थः सकर्मकोऽस्ति । नैष दोषः । प्राथम्यात्सत्तार्थस्यैवेह ग्रहणात् । ननु कालादिकर्मणि प्राप्नोति । अनभिधानात्कालादिकर्मणि न

उ०—तद्व्याचष्टे—वैयधिकरण्यमिति । 'अजर्यं सङ्गतेने'त्युदाहरणमिति भावः । एवञ्च तत्सामर्थ्याऽभावेन भावे प्रत्ययव्यावृत्त्यर्थं कर्त्तरीति वाच्यं, निपातनसामर्थ्याद्वा कर्त्तरीति भावः । वैयधिकरण्येऽपीडिति । कर्त्तरि निष्ठायां सामानाधिकरण्येऽपि तद्विकल्प इति भावः ॥ १०५ ॥

वदः सुपि । यत्राऽधिकारस्येति । यथा मण्डूकाऽनुवृत्तिविषये 'धान्याना'मित्यादौ । अवधीति । यथा'ऽलुगधिकारः प्रागानङ' इति । सिंहेति । यथा 'प्राचां ष्फे'त्यत्र 'सर्वत्रे'ति ॥ १०६ ॥

१—'वक्तव्यम्' पा० ।

† गदमदचरयमश्चानुपसर्गे-३ । १ । १००

न्त्रणमित्यत्रापि* प्राप्नोति । एतदपि नास्ति प्रयोजनम् । 'अनुपसर्गे' इति† वर्तते । उत्तरार्थं तर्हि भावग्रहणं कर्तव्यम् । 'हनस्त च' [ १०८ ] भावे यथा स्यात्—श्वहत्या वर्तते । क्व मा भूत्—'श्वघात्यो वृषलः' इति ॥ १०७ ॥

## हनस्त च ॥ ३ । १ । १०८ ॥

### हनस्ताश्चित्स्त्रियां छन्दसि॥ १ ॥

'हनस्त चे'त्यत्र चित्स्त्रियां छन्दसि वक्तव्यः × । 'तां भ्रूणहत्यां निगृह्यानुचरणम्' 'अस्यै त्वां भ्रूणहत्यायै चतुर्थं प्रतिगृहाण' । स्त्रियामिति किमर्थम् ? आघ्नते दस्युहत्याय । छन्दसीति किमर्थम् ? दस्युहत्या श्वहत्या वर्तते ॥ १०८ ॥

## एतिस्तुशास्वृदृजुषः क्यप् ॥ ३ । १ । १०६ ॥

'क्य'बिति वर्तमाने+ पुनः क्यब्ग्रहणं किमर्थम् ? क्यबेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? ण्यत् । 'ओरावश्यके ण्यतः स्तौतेः क्यप्पूर्वविप्रतिषिद्ध'मिति वक्ष्यति††, स पूर्वविप्रतिषेधो न पठितव्यो भवति । अथवा 'हनस्ताश्चित्स्त्रियां छन्दसि' चोदितः‡, स न वक्तव्यो भवति ।

### क्यब्विधौ वृञ्ग्रहणम् ॥ १ ॥

क्यब्विधौ वृञ्ग्रहणं कर्तव्यम् । इह मा भूत्—'वार्या ऋत्विजः' इति ।

---

भविष्यतीति मन्यते ॥ १०७ ॥

हनस्त च । दस्युहत्यायेति । छन्दस्येवैतत्क्यबन्तं नपुंसकं, भाषायान्तु स्त्रीलिङ्गमेव ॥ १०८ ॥

एतिस्तु । अथवेति । पूर्वस्मात् क्यपोऽस्य वैलक्षण्यप्रदर्शनाय क्यब्ग्रहणं कृतम् । तेन पूर्वः क्यप्छन्दसि स्त्रियां चिद्भवति । क्यब्विधाविति । 'ईडवन्दवृशंसदुहां ण्यत'इति वार्य-

---

भुवो । प्राथम्यादिति । धातुपाठे इति भावः । प्रसिद्धत्वाच्चेत्यपि बोध्यम् ॥ १०७ ॥

हनस्त च । भाषायान्त्विति । शब्दशक्तिस्वभावादेतद्विहितक्यबन्तस्य स्त्रीत्वमित्यर्थः ॥ १०८ ॥

एतिस्तु । आत्मनेपदिभ्यामिति । अकारवद्विकरणाभ्यामित्यपि बोध्यम् । एतदंशे उत्तरसाहचर्यमप्यनुग्राहकम् । वृणातिरिति । 'वृङ् संभक्ता'वित्ययम् । एवञ्च क्यप् वृञ एवेति भावः । वस्तुतो व्याख्याना-

---

* अचो यत् ३ । १ । ६७
† गदमदचरयमश्चानुसर्गे ३ । १ । १००
× चितः ६ । १ । १६३
+ वदः सुपिक्यप् च ३ । १ । १०६
†† ३ । १ । १२५ वा० ३
‡ ३ । १ । १०८ वा० १

अञ्जेश्चोपसङ्ख्यानं संज्ञायाम् ॥ २ ॥

संज्ञायामञ्जेश्चोपसङ्ख्यानं कर्तव्यम् । आज्यम् ॥ यदि क्यप्—वृद्धिर्न प्राप्नोति ×, तस्माण्ण्यदेशः । यदि ण्यत्, उपधालोपो + न प्राप्नोति । तस्मात्क्यबेषः । ननु चोक्तम्—'वृद्धिर्न प्राप्नोती'ति । आङ्पूर्वस्यैष प्रयोगो भविष्यति । यद्येवमवग्रहः प्राप्नोति । न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् ॥ १०६ ॥

ई च खनः ॥ ३ । १ । १११ ॥

दीर्घोच्चारणं किमर्थं न 'इ च खनः' इत्येवोच्येत ? का रूपसिद्धिः—खेयम् ? आद्गुणेन सिद्धम्* । न सिध्यति । 'षत्वतुकोरसिद्ध एकादेश'इत्येकादेशस्याऽसिद्धत्वात्तुक्प्रसज्येत† । नैतदस्ति । पदान्तपदाद्योरेकादेशोऽसिद्धो न चैष पदान्तपदाद्यो-

प्र०—शब्दस्याद्युदात्तविधानादेतज्ज्ञायते । तत्र ह्रीडिवन्दिभ्यामात्मनेपदिभ्यां साहचर्याद्वृ शब्देन वृणातिर्गृह्यते । तस्माण्ण्यदेष इति । ननु स्वरभेदो भवति, क्यपि सत्याद्युदात्तं पदं, ण्यति सत्यन्तस्वरितम् । नैष दोषः । 'नञ्विषयस्यानिसन्तस्ये' त्याद्युदात्तविधानात् । न लक्षणेनेति । संहिताया एव नित्यत्वम् । पदविच्छेदस्य तु पौरुषेयत्वम् । तथा च यत्रार्थनिश्चयाभावस्तत्राऽवग्रहो न क्रियते । तदुक्तम्—'हरिद्रूरनवगृह्यते' इति हरिद्रूरित्यत्र किं हरिशब्दः इकारान्तः, अथ हरिच्छब्दस्तकारान्त इति सन्देहात् ॥ १०६ ॥

ई च खनः । दीर्घोच्चारणे भाष्यकारेण प्रत्याख्याते केचित् प्रश्लेषनिर्देशेन द्वितीय इकारो 'ये विभाषे'त्यात्वस्य पक्षे परत्वात्प्राप्तस्य बाधनार्थ इत्याहुः । तदयुक्तम् । क्यप्सन्नियोगेन

उ०—दन्न वृञो ग्रहणमित्येव तत्त्वम् । संहिताया एव नित्यत्वमिति । अविच्छिन्नपारम्पर्यत्वमेवाऽत्र नित्यत्वम् । अर्थनिश्चयाऽभाव इति । आज्यशब्दस्य रूढत्वादाङर्थोऽस्ति न वेति निश्चयाऽभाव इत्यर्थः । 'समासे संहिता नित्ये' त्यवग्रहस्य साधुत्वाऽभावात्सम्प्रदायमात्रशरणस्य तस्य लक्षणाऽविषयते'त्यर्थं मन्ये ॥ १०६ ॥

ई च खनः । क्यप्सन्नियोगेनेति । नन्वन्तरङ्गे इत्वे कृते एकदेशविकृतन्यायेन प्राप्ताऽऽत्ववारणार्थं तदावश्यकम् । इत्वन्तु पक्षे चरितार्थम् । किञ्च 'अचः कर्तृयकी'ति सूत्रे भाष्ये 'ये विभाषे'त्यत्र 'ये' इत्यस्य विषयसप्तम्यन्तताया उक्ततया परत्वेन क्यपः पूर्वमेवात्वे ततः परत्वात्सवर्णदीर्घे एकदेशविकृतन्यायेन 'इ च खन' इत्यस्य प्रवृत्तौ 'खिय'मिति स्यात्तद्वारणार्थं दीर्घनिर्देश इति केषाञ्चिदाशय इति चिन्त्यमेतदिति केचित् । भाष्याशयस्तु व्यवस्थितविभाषयाऽत्राऽऽत्वाऽप्रवृत्तिरिति । इदञ्च तवाऽप्यावश्यकम्, अन्यथा आकारस्य दीर्घेऽकारेऽपि 'खीय'मिति स्यान्न तु खेयमिति । न च खनेर्नस्याऽनुनासिकेकारः स्यात्त-

× क्ङिति च १ । १ । ५ + अनिदितां हल उपधायाः क्ङिति ६ । ४ । २४

* आद् गुणः ६ । १ । ८७ † षत्वतुकोरसिद्धः; ह्रस्वस्य पिति कृति तुक् ६ । १ । ८६; ७१

रेकादेशः । तस्मात्—'इ च खनः' इत्येव वक्तव्यम् ॥ १११ ॥

## भृञोऽसंज्ञायाम् ॥ ३ । १ । ११२ ॥

असंज्ञायामिति किमर्थम् ? भार्या ।

**भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात् ॥ १ ॥**

भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । किं कारणम् ? 'अन्येन विहितत्वात्' । अन्येन लक्षणेन स्त्रियां क्यब्विधीयते,—संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' [ ३ । ३ । ९९ ] इति ।

प्रतिषेध इदानीं किमर्थः स्यात् ?

**प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञाप्रतिषेधार्थः ॥ २ ॥**

प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञाऽस्ति तदर्थः प्रतिषेधः स्यात्—भार्या नाम क्षत्रियाः ।

**सिद्धं तु स्त्रियां संज्ञाप्रतिषेधात् ॥ ३ ॥**

सिद्धमेतम् । कथम् ? स्त्रियां संज्ञाप्रतिषेधो वक्तव्यः । 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' । ततो 'न स्त्रियां भृञः' इति । सिध्यति । सूत्रं तर्हि भिद्यते ।

---

प्र०—विधीयमानस्येत्वस्यान्तरङ्गत्वात् । आत्वस्य तु यकारादावुत्पन्ने विधीयमानस्याऽऽङ्गस्य बहिरङ्गत्वाद्विप्रतिषेधाऽभावात्प्राप्त्यभावात् ॥ १११ ॥

भृञोऽसं । असंज्ञायामिति किमर्थमिति । क्रियमाणेऽपि प्रतिषेधे इष्टं न सिध्यतीति प्रश्नः । भार्येति । गृहिण्या इयं संज्ञेति क्यबभावे ण्यत्प्रत्ययः । अनर्थक इति । भृञ इति प्राप्तेरयं प्रतिषेध आनन्तर्यात्, नतु लक्षणान्तरप्राप्तेः, व्यवधानादिति भावः । प्रतिषेध इदानीमिति ।

---

उ०—स्याद्गुणोऽपि कदाचित्तादृश एव स्यात्, तद्वारणाय इकाररूप एवेकार इत्यर्थं दीर्घनिर्देश इति वाच्यं, स्थान्यनुरूपेऽनुनासिके एवोच्चारणीयेऽननुनासिकोच्चारणात् । स्पष्टञ्चेदं 'पथिमथि' 'अष्टन आ' इत्यत्र भाष्यकैयटयोरित्याहुः ॥ १११ ॥

भृञोऽसं । स्त्रियामप्रतिषेध इति भाष्ये । स्त्रीलिङ्गभार्याशब्दविषयेऽनर्थकोऽसंज्ञायामिति प्रतिषेध इत्यर्थः । अस्त्रीशब्दस्य संज्ञाशब्देन समानाऽधिकरणसमासमभिप्रेत्य तत्सिद्धये कर्मणि संज्ञाशब्दं व्युत्पादयति—संज्ञायत इति । अस्त्री रूढ्या बोध्या यस्याऽस्तीत्यर्थः । अन्यथेति । 'संज्ञायां समजे'ति क्यबन्तानां

यथान्यासमेवास्तु । ननु चोक्तम्—'भृञः संज्ञाप्रतिषेधे स्त्रियाः प्रतिषेधोऽन्येन विहितत्वा'दिति । नैष दोषः । भाव इति‡ तत्रानुवर्तते, कर्मसाधनश्चायम् । अथवा य एते संज्ञायां विधीयन्ते तेषु नैवं विज्ञायते—'संज्ञायामभिधेयायां'मिति । किं तर्हि ? 'प्रत्ययान्तेन चेत्संज्ञा गम्यत' इति ॥ अपर आह—

**संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।**

**संज्ञायां पुंसि दृष्टत्वात्तव भार्याशब्दो न सिध्यति ।**

**स्त्रियां भावाऽधिकारोऽस्ति तेन भार्या प्रसिध्यति ॥ १ ॥**

भाव इति तत्र वर्तते*, कर्मसाधनश्चायम् ।

**अथवा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम् ।**

अथवा 'कृत्यल्युटो बहुलम्' [ ३ । ३ । ११३ ] इत्येवमत्रापि ण्यद्भविष्यति ।

प्र०—प्रतिषेधविधानसामर्थ्याल्लक्षणान्तरेण प्राप्तस्यापि क्यपः प्रतिषेधो भविष्यतीति भावः । अस्त्री-संज्ञेति । संज्ञायत इति संज्ञेति । कर्मसाधनोऽत्र संज्ञाशब्दः । ततो न स्त्रियामिति । स्त्रीशब्दे-नाऽत्र स्तनकेशवती गृह्यते । अन्यथा विधिप्रतिषेधयोर्विषयविभागो न स्यात् । तस्माद्भरणं भृत्येति विधेर्विषयः । लौकिकी तु स्त्री प्रतिषेधस्य । भाव इति तत्रेति । 'व्रजयजोर्भावे क्यप्'-इत्यतः । संज्ञायामिति । संज्ञाशब्दः कर्मसाधनो न गृह्यते, किं तर्हि ? भावसाधनः । तेन प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्ययः । न च भृत्याशब्देन हि गृहिण्यभिधीयत इति क्यपो-ऽप्रसङ्गः । संज्ञायामिति । 'भार्या नाम क्षत्रिया' इत्यत्राऽसंज्ञायामिति प्रतिषेधस्य चरितार्थ-त्वात्सूत्रान्तरेण स्त्रियां संज्ञायां क्यपः प्रसङ्गाद्भार्याशब्दो न सिध्यतीति चोद्यते । स्त्रीप्रकरणे

उ०—'समज्ये'त्यादीनां स्त्रीलिङ्गत्वादिति भावः । लौकिकी त्विति । न च विपरीतं किन्न स्यादिति वाच्यं, 'स्त्रियां क्ति' न्नित्यत्र शास्त्रीयस्यैव ग्रहणाऽस्याऽपि तत्रैव प्रवृत्तेरिति भावः । भाष्ये—यथान्यासमिति । 'संज्ञायां समे'ति सूत्रे यदधिकं 'न स्त्रियां'मित्यादि कृतं तन्न कार्यमित्यर्थः । भाव इति तत्र वर्तते इति । ननु समज्यानिषद्यानिपत्यानामधिकरणे, मन्याविद्ययोः करणे तेन सिद्धेरङ्गीकारेण कथं 'भावे' इत्यस्य तत्र सम्बन्ध इति चेन्न; भृञ्विषये भाव इति वर्तते इत्यर्थः । एवञ्च भृञो भाव एवेष्यत इति भावः । एवमग्रे 'भावाऽधिकारोस्ती'ति व्याख्येयम् । संज्ञाशब्द इति । संज्ञाशब्देन कर्मसाधनेन संज्ञायमानमभिधीयते । तत्राऽभिधेये प्रत्ययश्चेत्तर्हि भृत्याशब्देन स्यादेव गृहिण्यभिधानमिति भावः । भावसाधनेन धातूनामनेकार्थ-त्वाद्रूढिरुच्यते, तदाह—रूढिरिति । तद्विषयोऽर्थ इत्यर्थः । तेन रूढ्यर्थो गम्यत इत्यर्थः । नामधेय-वाची संज्ञाशब्दस्तु करणव्युत्पन्न इति बोध्यम् । अपर आहेति भाष्ये । 'सिद्धन्तु स्त्रियां संज्ञाप्रतिषेधा'-

‡ व्रजयजोर्भावे क्यप् ३ । ३ । ९८

* व्रजयजोर्भावे क्यप् ; संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ३ । ३ । ९८; ९९

यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा ॥ ३ ॥

समश्च बहुलम् ॥ ४ ॥

समश्च बहुलमुपसङ्ख्यानं कर्तव्यम् । संभृत्या एव संभाराः । संभार्या एव संभाराः ॥ ११२ ॥

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः ॥ ३ । १ । ११४ ॥

सूर्यरुच्याव्यथ्याः कर्तरि ॥ १ ॥

सूर्य रुच्य अव्यथ्य इत्येते कर्तरि निपात्यन्ते ॥ किं निपात्यते ? सूर्यः—

सूसर्तिभ्यां सरतेरुत्वं सुवतेर्वा रुडागमः ।

सरणाद्वा सुवति वा कर्मणीति सूर्यः । सूर्य ॥ रुच्यः—रोचतेऽसौ रुच्यः ॥ न व्यथत इत्यव्यथ्यः ।

कुप्यं संज्ञायाम् ॥ २ ॥

'कुप्यं संज्ञाया'मिति वक्तव्यम् । गोप्यमन्यत् ।

कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च ॥ ३ ॥

कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि चेति वक्तव्यम् । कृष्टे पच्यन्ते स्वयमेव । 'कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे'† । यो हि कृष्टे पक्तव्यः कृष्टपाक्यः स भवति ॥ ११४ ॥

प्र०—भावग्रहणानुवर्तनात्कर्मणि क्यबभावाण्ण्यदेव भवतीत्युत्तरम् । यथेति । अजन्ताद्विधीयमानो यद्यथा हलन्तात्कुतश्चिद्भवति बहुलवचनात्, यथा च भित्तिरित्यङ्विषये क्तिन्भवति, एवं भार्येति क्यप्प्रसङ्गे ण्यद्भवतीत्यर्थः ॥ ११२ ॥

उ०—दित्याद्यकरणेन पक्षान्तरत्वम् । कर्मणि क्यबभावादिति । 'भृञ' इति शेषः । जन्ये स्वरार्थं यदेवेष्यते, स बाहुलकादेव सिद्ध इति 'यति जने'रित्युक्तमुपसङ्ख्यानं न कार्यमिति बोध्यम् । भाष्ये—सम्भार्या एव सम्भारा इति । सम्भरा इति पाठे 'भ' इति दीर्घान्तात् क्र्यादेः 'ऋदोर'बिति बोध्यम् ॥ ११२ ॥

राजसूयसूर्यं । सूसर्तिभ्यामिति । भाष्यस्य—'क्यन्निपात्यत' इति शेषः । कुप्ये गुपेरादेः कत्वम् । सुवर्णरजतभिन्नं धनं कुप्यम् ॥ ११४ ॥

प्रत्यपिभ्यां ग्रहेः । 'अपिगृह्य'शब्देन बलात्कारग्राह्यमुच्यत इति केचित् ॥ ११८ ॥

† यजुर्वेदे १८ । १४

## प्रत्यपिभ्यां ग्रहेः ॥ ३ । १ । ११८ ॥

### प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ १ ॥

प्रत्यपिभ्यां ग्रहेश्छन्दसीति वक्तव्यम् । 'मत्तस्य न प्रतिगृह्यमनृतं हि मत्तो वदति । तस्मान्नापिगृह्यम्' । प्रतिग्राह्यम् अपिग्राह्यमित्येवाऽन्यत्र ॥ ११८ ॥

## अमावस्यदन्यतरस्याम् ॥ ३ । १ । १२२ ॥

कस्याऽयमनुबन्धः ? प्रधानस्य । यदि प्रधानस्य,—अमावस्या इत्येवं स्वरः प्रसज्येत* अमावस्या इति चेष्यते† । तथा—अमावास्याग्रहणेनाऽमावस्याग्रहणं न प्राप्नोति‡ ॥ एवं तर्हि निपातनस्य । यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति 'श्रोत्रियंश्छन्दोधीते' [ ५ । २ । ८४ ] इति व्यपवर्गाभावाञ्ञ्नितीत्याद्युदात्तत्वं × न प्राप्नोति ॥ एवं तर्हि—

प्र०—अमावस्यत् । प्रधानस्येति । विधीयमानत्वात्प्रत्ययस्य प्राधान्यमिति यत्प्रत्ययो निपात्यत इत्युक्तं भवति । एवं स्वर इति । 'यतोऽनाव' इति उत्तरपदमाद्युदात्तं स्यात् । अन्तस्वरितं चेष्यते । अमावास्याग्रहणेनेति । शब्दान्तरत्वात् । अमावास्याशब्दस्य ण्यदन्तत्वादमावस्याशब्दस्य यदन्तत्वादिति भावः । एवं तर्हीति । यत्प्रत्ययान्तत्वं न निपात्यत इत्यर्थः । ननु तिति प्रत्ययग्रहणं चोदयिष्यते, निरस्तविभागे च निपातन आश्रीयमाणे स्वरितत्वं न सिध्यतीति मत्वाह—यदि तर्हीति । एवं जातीयकानीति । निरस्तावयवविभागानीत्यर्थः ।

उ०—अमाव । यत्प्रत्यय इति । सूत्रे तदानुपूर्व्या एव श्रवणादित्यर्थः । अन्तस्वरितमिति । 'अमे'ति लुप्तसप्तमीकमित्युपपदत्वान्निपातनेन वा तत्त्वादुपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणेति भावः । यत्प्रत्ययेति । निरस्ताऽवयवविभागः समुदाय एव निपात्यते । तस्य च तकारोऽन्त इत्यन्तस्वरितत्वं सिध्यतीति भावः । 'अमावस्या'शब्दस्थाने चेदं निपातनमिति तद्ग्रहणेनाऽस्य ग्रहणमपि सिद्धमिति तात्पर्यम् । भाष्ये ञ्नितीत्याद्युदात्तत्वं न प्राप्नोतीति । 'ञ्निती'ति परसप्तमीत्यभिप्रायेणेदम् । प्रकृते स्वरितत्वं न प्राप्नोतीत्यपि बोध्यम् । तत्सूत्रे प्रत्ययग्रहणस्य प्रत्याख्यास्यमानत्वात्तद्रीत्येदम्भाष्यमित्यन्ये ।

* यतोऽनावः ६ । १ । २१३; गतिकारकोपपदात् कृत् ६ । २ । १३९

† तित् स्वरितम् ६ । १ । १८५ ‡ अमावास्याया वा ४ । ३ । ३०

× ञ्नित्यादिर्नित्यम् ६ । १ । १९७

**अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ।**
**तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥**

## छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्य-खन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्य-भाव्यस्ताव्योपचाय्यपृडानि॥३।१।१२३॥

'निष्टर्क्य' इति किं निपात्यते ? निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थः । यथा कृतेस्तर्कुः, कसेः सिकता, हिंसेः सिंहः ॥ अपर आह—

**निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् ।**
**ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥ १ ॥**

निष्टर्क्यं चिन्वीत पशुकामः ।

प्र०—अमावसोरिति । वृद्धिभावाभावकृतभेदाश्रयो द्विवचननिर्देशः । निपातयामीति । 'एकतरस्येति' शेषः । एकवृत्तितेति । एका तद्धितवृत्तिरुभयोः सिध्यति, एकदेशविकृतस्याऽनन्यत्वात् । तथा हि ण्यत्यमावास्याशब्दस्य न्याय्यत्वादाकारस्य प्रकृतित्वमकारस्य तु विकारत्वम् ॥ १२२ ॥

छन्दसि । कृताद्यर्थ इति । कृतशब्दस्य धातोर्य आदिः ककारस्तत्प्रयोजनः । आदेर-

उ०—एकतरस्येतीति । वस्धातुभ्यां ण्यतोः कृतयोरन्यतरस्येत्यर्थः । वसोरिति पञ्चम्यर्थे षष्ठीद्विवचनम् । ण्यदप्यमाशब्दे उपपदे निपात्यते इति बोध्यम् । अन्यथोपपदत्वाऽभावे समास उत्तरपदप्रकृतिस्वरश्च न स्यादिति बोध्यम् । वार्तिके 'अवृद्धिता'शब्देन ह्रस्वो लक्ष्यते । तद्ध्वनयन्नाह—एकदेशेति । भाष्ये—स्वरश्च मे इति । 'तित्प्रत्ययप्रयुक्तः स्वरित इत्यर्थः ॥ १२२ ॥

छन्दसि निष्टर्क्यं । 'कृतेराद्यन्तविपर्ययः कृताद्यर्थ' इत्यसङ्गतं मत्वाऽऽह—कृतशब्दस्येति । तत्प्रयोजन इत्यस्याऽन्तस्थाने तदुत्पत्तिप्रयोजनस्तत्स्थानेऽन्तोत्पत्तिप्रयोजनश्चेत्यर्थः । तद्ध्वनयन्नाह—परस्परेति । अन्यथाऽऽद्यन्तयोः स्थाने तृतीयवर्णकरणमप्याद्यन्तविपर्ययः स्यादिति भावः । 'निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थ' इत्येव भाष्यपाठ इति कैयटतात्पर्यम् । साम्प्रतिकपुस्तकेषु तु 'निष्टर्क्यं कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थो 'यथा कृतेस्तर्क' इत्यादि दृश्यते । तत्र 'निष्टर्क्यं कृतेश्छन्दसि' इत्यन्वयः । 'निपात्यते' इति शेषः । प्रत्ययप्रकरणाण्ण्यन्निपात्यः, षत्वञ्च निपात्यमित्यर्थः । अन्यथा ऋदुपधत्वात्क्यबेव स्यादिति भावः । 'आद्यन्तविपर्ययः' कृताद्यर्थ इत्यस्य कृताद्यर्थ आद्यन्तविपर्यय आवश्यकस्तेनाऽत्राऽपि सिद्धे तदर्थं न निपातनमित्यर्थः । 'कृताद्यर्थ' इत्यादिशब्दार्थमेव दर्शयति—कृतेस्तर्क इत्यादिना ।

ण्यदेकस्माच्चतुर्भ्यः क्यप्चतुर्भ्यश्च यतो विधिः ।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ २ ॥

'ण्यदेकस्मात्'—निष्टर्क्यः । 'चतुर्भ्यः क्यप्'—देवहूयः, प्रणीयः, उन्नीयः, उच्छिष्यः । 'चतुर्भ्यश्च यतो विधिः'—मर्यः, स्तर्या, ध्वर्यः, खन्यः । 'ण्यदेकस्मात्'—खान्यः । 'यशब्दश्च'-देवयज्या । 'द्वौ क्यपौ'-आपृच्छ्यः, प्रतिषीव्यः । 'ण्यद्विधिश्चतुः'-ब्रह्मवाद्यः, भाव्यः, स्ताव्यः, उपचाय्यपृडम् ॥ उपपूर्वाच्चिनोतेरायादेशो निपात्यते । नहि ण्यतैव सिध्यति । हिरण्य इति च वक्तव्यम् । 'उपचेयपृड'-मित्येवान्यत्र ॥ १२३ ॥

## ऋहलोर्ण्यत् ॥ ३ । १ । १२४ ॥

पाणौ सृजेर्ण्यद्विधिः ॥ १ ॥

पाणौ सृजेर्ण्यद्विधेयः* । पाणिसर्ग्या रज्जुः ।

समवपूर्वाच्च ॥ २ ॥

समवपूर्वाच्चेति वक्तव्यम् । समवसर्ग्यः ।

लपिदभिभ्यां च ॥ ३ ॥

लपिदभिभ्यां† चेति वक्तव्यम् । अपलाप्यम् अवदाभ्यम् ॥ १२४ ॥

## ओरावश्यके ॥ ३ । १ । १२५ ॥

प्र०—न्तत्वम्, अन्तस्य चादित्वं यथा स्यादित्यर्थः । आद्यन्तयोः परस्पररूपापत्तिर्न तु वर्णान्तररूपापत्तिरिति प्रदर्शनाय 'कृताद्यर्थे' इत्युक्तं भवति ॥ १२३ ॥

ओरावश्यके । कथमिति । किमावश्यकार्थवाचिन्युपपदे प्रत्ययः, उत प्रत्ययेन आवश्यके

उ०—अपर आह निष्टर्क्ये व्यत्ययमिति । वर्णव्यत्ययं, प्रत्ययव्यत्ययञ्चेत्यर्थः । 'व्यत्ययो बहुल'मिति सूत्रेणेति भावः । एवञ्च षत्वमात्रफलकं निपातनमित्याह—निसः षत्वमिति । भाष्ये—ण्यद्विधिश्चतुरिति । सुजन्तमेतत् । चतुरो वारानित्यर्थः । चतुर्भ्य इति यावत् । उपपूर्वाच्चिनोतेरिति । पृडे उत्तरपदे इति यावत् । पृडेरिगुपधलक्षणः कः ॥ १२३ ॥

ऋहलोर्ण्यत् । पाणौ सृजे'र्ऋदुपधा'दिति क्यपोऽपवादो ण्यत् । लपिदभिभ्यां 'पोरदुपधा'दिति ॥ १२४ ॥

* ऋदुपधाच्चाक्लृपिचृतेः ३ । १ । ११० † पोरदुपधात् ३ । १ । ९८

कथमिदं विज्ञायते—आवश्यक उपपदे, आहोस्विदावश्यके द्योत्य इति । कश्चात्र विशेषः ?

**आवश्यक उपपद इति चेद्द्योत्य उपसङ्ख्यानम् ॥ १ ॥**

आवश्यक उपपद इति चेद्द्योत्य उपसङ्ख्यानं कर्तव्यम् । लाव्यम् पाव्यम् । अस्तु तर्हि द्योत्ये ।

**द्योत्य इति चेत्स्वरसमासानुपपत्तिः ॥ २ ॥**

द्योत्य इति चेत्स्वरसमासानुपपत्तिः‡ । अवश्यलाव्यम् अवश्यपाव्यम् ॥ नैष दोषः । मयूरव्यंसकादित्वात्समासो × विस्पष्टादिवत्स्वरो भविष्यति ।

**ओरावश्यके ण्यतः स्तौतेः क्यप्पूर्वविप्रतिषिद्धम् ॥ ३ ॥**

ओरावश्यके ण्यतः स्तौतेः क्यब्भवति पूर्वविप्रतिषेधेन । ओरावश्यके ण्यद्भवतीत्यस्यावकाशः—अवश्यलाव्यम् अवश्यपाव्यम् । क्यपोऽवकाशः—स्तुत्यः+ । इहोभयं प्राप्नोति—अवश्यस्तुत्यः । क्यब्भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । उक्तं तत्र* क्यबिति वर्तमाने पुनः क्यब्ग्रहणस्य प्रयोजनं 'क्यबेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भू'दिति ॥ १२५ ॥

प्र०—द्योत्य इति प्रश्नः । अवश्यलाव्यमिति । 'द्वावपूपा'वित्यादौ गतार्थस्यापि क्वचित् प्रयोगो लोके दृश्यते लाघवं प्रत्यनादरादिति मन्यते । विस्पष्टादिवदिति । यथा 'विस्पष्टकटुक'मित्यत्र मयूरव्यंसकादित्वात्समासे कृते पूर्वपदप्रकृतिस्वरो भवति, एवमवश्यलाव्यमित्यादावपि मयूरव्यंसकादिषु निपातनादुत्तरपदप्रकृतिस्वरो भविष्यतीत्यर्थः ॥ १२५ ॥

उ०—ओरावश्यके । ननूक्तार्थत्वादवश्यशब्दप्रयोग एव न स्यात्, ण्यदेव वा न स्यादिति कुतो नोक्तमत आह—द्वावपूपाविति । 'द्योत्य' इत्युक्तेर्द्योतकसमुच्चय इष्ट एवेति लभ्यते । उपपदत्वाऽभावात्स्वरसमासयोरनुपपत्तिरिति भावः । ननु 'विस्पष्टादीनि गुणवचनेषु' इत्यनेन पूर्वपदप्रकृतिस्वरविधानादत्र चोत्तरपदप्रकृतिस्वरस्येष्टत्वेन 'विस्पष्टादिव'दित्यसङ्गतमिति मत्वाऽऽह—यथेति । एवञ्च मयूरव्यंसकादिषु निपातनादेव सिद्धे 'विस्पष्टादीनी'ति सूत्रमपि न कार्यमिति भावः ॥ १२५ ॥

‡ उपपदमतिङ् २ । २ । १९; गतिकारकोपपदात् कृत् ६ । २ । १३९

× मयूरव्यंसकादयश्च २ । १ । ७२ + एतिस्तुशास्वृदृजुषः क्यप् ३ । १ । १०९

* ३ । १ । १०९ सूत्रभाष्ये ।

## आनाय्योऽनित्ये ॥ ३ । १ । १२७ ॥

दक्षिणाग्नाविति वक्तव्यम् । आनेयोऽन्यः ।

आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृतं भवेत् ।
एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ ३ । १ । १२९ ॥

पाय्यनिकाय्ययोः किं निपात्यते ?

**पाय्यनिकाय्ययोरादिपत्वकत्वनिपातनम् ॥ १ ॥**

पाय्यनिकाय्ययोरादिपत्वमादिकत्वं च निपात्यते । मेयम् निचेयमित्येवान्यत्र ॥ १२९ ॥

## ऋतौ कुण्डपाय्यसंचाय्यौ ॥ ३ । १ । १३० ॥

**कुण्डपाय्ये यद्विधिः ॥ १ ॥**

कुण्डपाय्ये यद्विधेयः† । कुण्डपाय्यः क्रतुः ॥ १३० ॥

## अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ ३ । १ । १३१ ॥

**समूह्य इत्यनर्थकं वचनं सामान्येन कृतत्वात् ॥ १ ॥**

समूह्य इति वचनमनर्थकम् । किं कारणं ? 'सामान्येन कृतत्वात्' । सामान्ये-

---

प्र०—आनाय्यो । आनाय्योऽनित्य इति चेदिति । 'घटादिष्वपि प्रसङ्ग' इति शेषः । भवेदिति । संभावने लिङ् । निपातनाद्धि रूढिराश्रीयते । एकयोनाविति । यो गार्हपत्यादानीयते आहवनीयेन सहैकयोनिर्दक्षिणाग्निस्तत्रेत्यर्थः । यस्तु वैश्यकुलादानीयते तत्राऽऽनाय्यशब्दो न भवति ॥ १२७ ॥

अग्नौ परि । ऊहिविग्रहादिति । वहिसमानार्थेनोहिना ब्राह्मणे समूह्यशब्दस्य निर्वचनं

---

उ०—आनाय्यो । सम्भावने लिङिति । दक्षिणाग्नौ युक्तत्वं सम्भाव्यते निपातनादित्यर्थः ॥ १२७ ॥
पाय्य । भाष्ये—पाय्यनिकाय्ययोरिति । आयादेशोऽपि निपात्यत इति बोध्यम् ॥ १२९ ॥
क्रतौ कुण्ड । यद्विधेय इति । तेन 'यतोऽनाव' इत्याद्युदात्तः, कृदुत्तरपदप्रकृतिस्वरेण तत्सत्ता च । युक् च निपात्यत इत्यपि बोध्यम् ॥ १३० ॥
अग्नौ परि । भाष्ये—वहेरर्थदिति । 'समूह्यशब्दे' इति शेषः । तत्र कृते सम्प्रसारण—दीर्घत्वे निपातनादित्यर्थः । वहिसमानार्थेनेति । संवाह्यमित्यग्नौ तु न, अनभिधानादिति भावः । भाष्ये—ऊहिविग्र-

---

† यतोऽनावः ६ । १ । २१३; गतिकारकोपपदात् कृत् ६ । २ । १३९

नैवाऽत्र ण्यद्भविष्यति—'ऋहलोर्ण्यत्' [ ३ । १ । १२४ ] इति—

वह्यर्थं तर्हि निपातनं कर्तव्यम् । वहेर्ण्यद्यथा स्यात् ।

**वह्यर्थमिति चेदूहेस्तदर्थत्वात्सिद्धम् ॥ २ ॥**

ऊहिरपि वह्यर्थे वर्तते । कथं पुनरन्यो नामाऽन्यस्यार्थे वर्तते, कथमूहिर्वह्यर्थे वर्तते ? बह्वर्था अपि धातवो भवन्तीति ॥ अस्ति पुनः क्वचिदन्यत्रापि ऊहिर्वह्यर्थे वर्तते । 'अस्ती'त्याह ।

**ऊहिविग्रहाच्च ब्राह्मणे सिद्धम् ॥ ३ ॥**

ऊहिविग्रहाच्च ब्राह्मणे सिद्धमेतत् । समूह्यं चिन्वीत पशुकामः । पशवो वै पुरीषं पशूनेवास्मै तत्समूहति ॥ १३१ ॥

## चित्याग्निचित्ये च ॥ ३ । १ । १३२ ॥

**अग्निचित्या भावेऽन्तोदात्तः ॥ १ ॥**

अग्निचित्येतिभावेऽन्तोदात्तो भवति । अग्निचयनमेवाग्निचित्या ॥ १३२ ॥

## ण्वुल्तृचौ ॥ ३ । १ । १३३ ॥

किमर्थश्चकारः ? स्वरार्थः । चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्* । नैतदस्ति प्रयोजनम् । एकाऽजयं तत्र नाऽर्थः स्वरार्थेन चकारेणाऽनुबन्धेन । प्रत्ययस्वरेणैव सिद्धम्† ।

विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः ? 'अप्तृन्तृ'जिति‡ । 'तृ' इत्युच्यमाने मातरौ मातरः पितरौ पितरः अत्रापि प्रसज्येत । स्वसृनप्तृग्रहणं नियमार्थं भविष्यति,— 'एतयोरेव योनिसम्बन्धयोर्नान्येषां योनिसम्बन्धाना'मिति ।

सामान्यग्रहणाविघातार्थस्तर्हि । क्व सामान्यग्रहणाविघातार्थेनार्थः ? अत्रैव‡ । यदेतत्तृन्तृचोर्ग्रहणमेतत्'तृ' इति वक्ष्यामि । यदि 'तृ' इत्युच्यते मातरौ मातरः पितरौ

प्र०—कृतमित्यर्थः ॥ १३१ ॥

ण्वुल्तृचौ । मातराविति । उणादिषु तृप्रत्ययान्ता मात्रादयो निपातिता इति भावः । स्वसृनप्तृग्रहणमिति । नप्तृग्रहणं नियमार्थं, स्वसृशब्दस्तु ऋन्प्रत्ययान्तत्वाद्विध्यर्थ एव । सामा-

उ०—हादिति । ब्राह्मणे ऊहिना विग्रहदर्शनादूहेर्वह्यर्थत्वं सिद्धमित्यर्थः ॥ १३१ ॥

ण्वुल्तृचौ । भाष्ये यदि 'तृ' इत्युच्यते मातरौ मातरः अत्रापि प्राप्नोतीति । न च निरनुबन्धकत्वादस्यैव ग्रहणं स्यादिति वाच्यम्, लक्ष्याऽनुरोधेन ज्ञापकसिद्धतयाऽनित्यत्वेन च तस्या इहाऽप्रवृत्तेरिति

* चितः ६ । १ । १३३ † आद्युदात्तश्च ३ । १ । ३

‡ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६ । ४ । ११

पितरः अत्रापि प्रसज्येत । स्वसृनप्तृग्रहणं नियमार्थं भविष्यति—'एतयोरेव योनिसम्बन्धयोर्नान्येषां योनिसम्बन्धाना'मिति ।

**ण्वुलि सकर्मकग्रहणम् ॥ १ ॥**

ण्वुलि सकर्मकग्रहणं कर्तव्यम् । इह मा भूत्—आसिता शयितेति ।

**न वा धातुमात्राद्दर्शनाण्ण्वुलः ॥ २ ॥**

न वा वक्तव्यम् । किं कारणम् ? धातुमात्राण्ण्वुल्दृश्यते । इमेऽस्य आसकाः, इमेऽस्य शायकाः । उत्थिता आसका वैश्रवणस्येति ।

**तृजादिषु वर्तमानकालोपादानमध्यायकवेदाध्यायाद्यर्थम् ॥ ३ ॥**

तृजादिषु वर्तमानकालोपादानं कर्तव्यम् । किं कारणम् ? 'अध्यायकवेदाध्यायाद्यर्थम्' । अध्यायकः[1] वेदाध्यायः* । अधीतवत्यध्येष्यमाणे वा मा भूदिति ।

**नवा कालमात्रे दर्शनादन्येषाम् ॥ ४ ॥**

न वा वक्तव्यम् । किं कारणम् ? 'कालमात्रे दर्शनादन्येषाम्' । कालमात्रे ह्यन्येऽपि प्रत्यया दृश्यन्ते । चर्चापारः शमनीपारः* ॥ १३३ ॥

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ ३ । १ । १३४ ॥

**अजपि सर्वधातुभ्यः ॥ १ ॥**

अजपि सर्वधातुभ्यो वक्तव्यः । इहापि यथा स्यात्—भवः शर्वः[2] ॥ न तर्हीदानीमिदं पचाद्यनुक्रमणं कर्तव्यम् ? कर्तव्यं च । किं प्रयोजनम् ?

प्र०—न्यग्रहणाऽविघातार्थत्वं चकारस्य स्थितम् । 'तुश्छन्दसि' 'तुरिष्ठेमेय.स्वि'त्यत्राप्येतत्प्रयोजनसद्भावात् ॥ १३३ ॥

उ०—भावः । तृप्रत्ययान्ता इति । निरनुबन्धक'तृ'प्रत्ययान्ता इत्यर्थः । अस्यापि तृच्त्वे यथान्यासेऽप्यापत्तेः सत्त्वेन 'यदि तृ इत्युच्यमाने' इत्यस्याऽसङ्गत्यापत्तेः । भाष्ये—तृ इति वक्ष्यामीति । एवञ्च तृनो ग्रहणसिध्यर्थं चकार इति भावः । यदि तृ इत्युच्यमाने इति । चकारकरणसामर्थ्यात्सानुबन्धकग्रहणेऽपि निरनुबन्धकग्रहणं दुर्वारमेवेति भावः । अन्यत्राऽपि तदर्थत्वं दर्शयति—इति चोभयोर्ग्रहणमिति । इदमुणादयो व्युत्पन्ना इति शाकटायनादिमते । अव्युत्पत्तिवादिमते तु प्राप्तिरेव न । 'मातयती'त्यादौ 'तृ' लोपवारणायाऽत्राऽव्युत्पत्तिपक्ष एवाऽवश्यक इति 'अचि र ऋत' इति सूत्रे कैयटः । किं कारणमिति । कस्माद्धेतोरित्यर्थः । हेतुमाह—धातुमात्रादित्यादिना । अन्येषामिति । ण्वुल्तृज्व्यतिरिक्तानामित्यर्थः । एवञ्च 'वर्तमान' इति कृते दोषः । ण्वुल्तृचोस्त्वन्यत्र कालेऽनभिधानं स्वीकार्यमिति भावः ॥ १३३ ॥

१—'अध्यापक' पा० । * कर्मण्यण् ३ । २ । १ २—'सवः' इति नागेशाऽभिमतः पाठः ।

पचाद्यनुक्रमणमनुबन्धासञ्जनार्थमपवादबाधनार्थं च ॥ २ ॥

अनुबन्धासंजनार्थं तावत् । नदट्—नदी । चोरट्—चोरी† । अपवादबाधनार्थम्—जारभरा श्वपचेति ॥ १३४ ॥

## इगुपधज्ञाप्रीकिरः कः ॥ ३ । १ । १३५ ॥

### इगुपधेभ्य उपसर्गे कविधिर्मेषाद्यर्थः ॥ १ ॥

इगुपधेभ्य उपसर्गे को विधेयः । किं प्रयोजनम् ? 'मेषाद्यर्थः' । मेषः देवः सेवः ।

### न वा बुधादीनां दर्शनादनुपसर्गेऽपि ॥ २ ॥

न वा को विधेयः¹ । किं कारणम् ? बुधादीनामनुपसर्गेऽपि को दृश्यते । बुधः भिदः युधः सिव इति ॥ कथं मेषः देवः सेव इति ? पचादिषु* पाठः करिष्यते ॥ १३५ ॥

## पाघ्राध्माधेट्दृशः शः ॥ ३ । १ । १३७ ॥

### जिघ्रः संज्ञायां प्रतिषेधः ॥ १ ॥

जिघ्रः संज्ञायां प्रतिषेधो वक्तव्यः । व्याजिघ्रतीति व्याघ्रः ।

इह केचिच्छस्यैव प्रतिषेधमाहुः, केचिज्जिघ्रभावस्य‡ । किं पुनरत्र न्याय्यम् ? शस्यैव प्रतिषेधो न्याय्यः । जिघ्रभावे हि प्रतिषिद्धे केन श आकारलोपः स्यात्+ ॥ १३७ ॥

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ ३ । १ । १३८ ॥

### अनुपसर्गान्नौ लिम्पेः ॥ १ ॥

अनुपसर्गान्नौ लिम्पेरिति वक्तव्यम् । निलिम्पा नाम देवाः ।

प्र०—नन्दि । श्वपचेति । कर्मण्यणबाध्यते । न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात्पक्षे सोपि

उ०—नन्दिग्रहि । 'भवः सव' इति भाष्ये पाठः ॥ १३४ ॥

पाघ्राध्मा । केचिदिति भाष्ये । 'जिघ्रः संज्ञाया'मित्यादेशेऽकार उच्चारणार्थं इति जिघ्र इति पञ्चमीति भावः । केचिज्जिघ्रभावस्येति । वार्तिके 'जिघ्र' इति षष्ठ्यन्तं मन्यन्ते । केन शे आकारलोप इति । 'आतो लोप' इत्यत्रार्द्धधातुक इत्यधिकारादिति भावः । 'श्नाऽभ्यस्तयोः' इत्यस्य प्राप्तिरेव न ॥ १३७ ॥

† टिड्ढाणञ्० ४ । १ । १५  १—'न वा वक्तव्यः' पा० ।
* नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ ‡ पाघ्राध्मा……धौशीयसीदाः ७ । ३ । ७८
+ आतो लोप इटि च ६ । ४ । ६४; आतश्चोपसर्गे ३ । १ । १३६

## गवि च विन्देः संज्ञायाम् ॥ २ ॥

गवि चोपपदे विन्देः संज्ञायामुपसङ्ख्यानं कर्तव्यम् । गोविन्द इति ॥ अत्यल्पमिदमुच्यते—'गवी'ति । गवादिष्विति वक्तव्यम् । गोविन्दः । अरविन्दः ॥ १३८ ॥

## ज्वलितिकसन्तेभ्यो णः ॥ ३ । १ । १४० ॥

## तनोतेर्ण उपसङ्ख्यानम् ॥ १ ॥

तनोतेर्ण उपसङ्ख्यानं कर्तव्यम् । अवतनोतीत्यवतानः ॥ १४० ॥

## शिल्पिनि ष्वुन् ॥ ३ । १ । १४५ ॥

नृतिखनिरञ्जिभ्य इति वक्तव्यम् । इह मा भूत् । ह्वायक इति × ॥ १४५ ॥

## प्रुसृल्वः समभिहारे वुन् ॥ ३ । १ । १४६ ॥

## प्रुसृल्वः साधुकारिणि वुन्विधानम् ॥ १ ॥

प्रुसृल्वः साधुकारिणि वुन्विधेयः । सकृदपि यः सुष्ठु करोति तत्र यथा स्याद्बहुशोऽपि यो दुष्टु करोति तत्र मा भूदिति ॥ १४६ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् । पादश्च समाप्तः ।

---

प्र०—भवति ॥ १३४ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयाध्यायस्य प्रथम पादे षष्ठमाह्निकम् । पादश्च समाप्तः ।

---

उ०—अनुपसर्गात् । अरविन्दोऽर्द्धर्चादिः ॥ १३८ ॥

प्रुसृल्वः । साधुकारिणीति । समभिहारग्रहणस्थाने इदं कार्यमित्यर्थः ॥ १४६ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयाऽध्यायस्य प्रथमे पादे षष्ठमान्हिकम् । पादश्चायं समाप्तः ।

---

× ण्वुल्तृचौ ३ । १ । १३३

## कर्मण्यण् ॥ ३ । २ । १ ॥

कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् । इह मा भूत्—आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीति ।

**कर्मणि निर्वर्त्यमानविक्रियमाणे [ इति ] चेद्वेदाध्यायादीनामुपसङ्ख्यानम् ॥ १ ॥**

कर्मणि निर्वर्त्यमानविक्रियमाण इति चेद्वेदाध्यायादीनामुपसङ्ख्यानं कर्तव्यम् । वेदाध्यायः चर्चापारः शमनीपारः ।

**यत्र च नियुक्तः ॥ २ ॥**

यत्र च नियुक्तस्तत्र चोपसङ्ख्यानं कर्तव्यम् । छत्रधारः द्वारपालः ।

प्र०—कर्मण्यण् । निर्वर्त्यमानेति । हरिणा निर्वर्त्यादीनां विशेषो दर्शितः ।

'सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते' ॥

यस्योपादानकारणं नास्ति तन्निर्वर्त्यं, यथा—'संयोगं करोती'ति । यस्यापि सदप्युपादानकारणं न विवक्ष्यते तन्निर्वर्त्यं, यथा—'घटं करोती'ति । यदा तूपादानकारणमेव परिणामित्वेन विवक्ष्यते—'मृदं घटं करोती'ति, तदा विकार्यं कर्म । भेदविवक्षायां तु 'मृदा घटं करोती'ति निर्वर्त्यमेव कर्म । विकार्यमपि द्विविधम् ।

'प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादिभस्मवत् ।
किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्' ॥ इति ।

प्राप्यमपि—

'क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते' ॥ इति ।

उ०—कर्मण्यण् । यस्य सती परिणामिनी प्रकृतिर्नाश्रीयते यस्य वाऽविद्यमाना तन्निर्वर्त्यमित्युच्यत इत्यर्थः । तदेवाह—यस्येति । कार्यसामानाधिकरण्येन प्रतीयमानं नास्तीत्यर्थः । यथा 'मृदं घटं करोती'ति । विवक्ष्यत इति । 'कार्याऽभेदेने'तिशेषः । तदा विकार्यं कर्मेति । अवस्थाद्वयाऽनुगमेन पूर्वाऽऽकारपरित्यागेनाऽऽकारान्तरप्राप्त्यवगमादिति भावः । भेदविवक्षायामिति । कर्मणः सकाशादुपादानस्य भेदविवक्षायामित्यर्थः । मृदा घटमिति । करणत्वविवक्षायां तृतीया । नो चेत्संबन्धसामान्यविवक्षायां 'मृदो घट'मिति षष्ठीति बोध्यम् । विकार्यमपीति । पूर्वरूपस्य सर्वात्मना परित्यागतदभावाभ्यामित्यर्थः । दर्शनादिति । प्रत्यक्षादि-

१—क्वचिन्न ।

## हृग्रहिनीवहिभ्यश्च॥ ३ ॥

हृग्रहिनीवहिभ्यश्चेति वक्तव्यम् । हृ–भारहारः । ग्रहि–कमण्डलुग्राहः । नी–उष्ट्रप्रणायः । वहि–भारवाहः ।

## अपरिगणनं वा ॥ ४ ॥

न वाऽर्थः परिगणनेन । कस्मान्न भवति—आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीति ?

## अनभिधानात् ॥ ५ ॥

अनभिधानदेव न भविष्यति ।

## अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन ॥ ६ ॥

अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन ॥ अनुपपदस्यावकाशः—पचतीति पचः* । कर्मोपपदस्याऽवकाशः—कुम्भकारः नगरकारः । ओदनपाचं उभयंप्राप्नोति । कर्मोपपदो भवति विप्रतिषेधेन ।

प्र०—तत्र प्राप्यत्वं सर्वस्य कर्मणोऽस्तिक्रियया प्राप्यमाणत्वात् । अवान्तरविवक्षायां तु त्रैविध्यमुच्यते । वेदाध्याय इति । नित्यो वेदः स्थित एवाधीयते इति निर्वर्त्यत्वाभावः । छत्रधार इति । वेदाध्यायादिग्रहणेन च्छत्रधारादीनां ग्रहणं नास्ति, प्रकारार्थेनाऽऽदिशब्देन सदृशानां शास्त्राध्यायादीनामेव शब्दानां ग्रहणात् । तत्प्राप्यमेव न विकार्यम् । नहि धारणादूर्ध्वं छत्रस्य कश्चित् क्रियाकृतो विशेषः प्रत्यक्षानुमानपरिच्छेद्योऽस्ति । अनभिधानदिति । नित्यानां शब्दानामिदमन्वाख्यानमात्रम् । न चादित्यं पश्यतीत्याद्यर्थप्रतिपादनायादित्यदर्शादयः शब्दा लोके प्रयुज्यन्त इति शास्त्रेणापि साधुत्वेन नाऽनुमास्यन्त इत्यर्थः । कर्मोपपदस्येति । यदा गणपठितधातुविषय एवाऽच्प्रत्ययस्तदायं विप्रतिषेधो यदा तु सर्वधातुविषयोऽच्प्रत्ययस्तदा येन नाप्राप्तिन्यायादण्प्रत्ययस्यापवादत्वादुत्सर्गापवादयोर्विप्रतिषेधोनुपपन्नः । तथा च करोतेरच्प्रत्ययः कृतः

उ०—त्यर्थः । निर्वर्त्ये स्वरूपलाभ एव क्रियाकृतो विशेषो, विकार्ये विकाररूप एव सः । घटं करोति, स्वर्णं कुण्डलं करोति, काष्ठं भस्म करोति । अनुमानाद्यथा—पुत्रः सुखं करोतीति । अत्र मुखरूपलाभो मुखप्रसादाऽनुमेयः । नित्यः । तत्तत्कल्पेऽविच्छिन्नपारम्पर्यं इत्यर्थः । ननु 'वेदाऽध्यायादी'नामित्यादिनैव सर्वसङ्ग्रहे सिद्धे 'यत्र च नियुक्त' इत्यादेर्वैयर्थ्यमत आह—वेदाऽध्यायादीनामिति । वस्तुतः प्रपञ्चार्थमेव तानीति बोध्यम् । शास्त्रेणाऽपि । 'कर्मण्य'णिति सामान्यशास्त्रेणापि । ननु सर्वधातुभ्योऽज्विधानेन 'कुम्भकार'-इति कथमणोऽवकाश इत्यत आह—यदेति । सर्वधातुविषयश्चाऽच्प्रत्यय आवश्यक इत्याह—तथा चेति ।

* नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ १—'इहोभयं प्राप्नोति–ओदनपाचः' पा० ।

अनुपपदस्यावकाशः—विक्षिपः विलिखः† । कर्मोपपदस्य स एव । काष्ठभेदं[1] उभयं प्राप्नोति । कर्मोपपदो भवति विप्रतिषेधेन । अनुपपदस्यावकाशः—जानातीति ज्ञः† । कर्मोपपदस्य स एव । अर्थज्ञ उभयं प्राप्नोति[2] †† । कर्मोपपदो भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः । ण्वुल्तृजचः । तेषां णः । णस्य कः‡ । स यथैव को णं बाधत एवं कर्मोपपदमपि बाधेत । कर्मोपपदोऽपि तृतीयः । ण्वुल्तृजचः । तेषामण् । अणः कः × । उभयोस्तृतीययोर्युक्तो विप्रतिषेधः ।

अनुपपदस्यावकाशः—लिम्पतीति लिम्पः+ । कर्मोपपदस्य स एव । कुड्यलेप[3] उभयं प्राप्नोति । कर्मोपपदो भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः ।

प्र०—'शिवशर्मरिष्टस्य करे' इति । ततश्च कुम्भकारादिरपि नाऽणोऽवकाश', तत्राप्यच्प्रत्ययप्रसङ्गात् । अत एव भाष्यकार उदाहरणान्तराणि काष्ठभेदादीनि विप्रतिषेधस्य वक्ष्यति । काष्ठभेद इति । सर्वे धातुभ्यो विधानादच उत्सर्गस्य काऽणावपवादौ तयोर्विप्रतिषेधादणेवात्र भवति । स यथैव क इति । प्राप्तिमात्रस्य बाध्यत्वमपेक्ष्यैतदुच्यते । यदा तु प्राप्तिविशेषोऽपेक्ष्यते तदा तु येन नाप्राप्तिन्यायाएणस्यैव को बाधको न तु कर्मोपपदस्याऽणः । कः पुनरनयोः प्रत्यययोर्विशेषः ? उच्यते ।

उ०—उदाहरणान्तराणि—काऽणिविषयाणि । काऽणाविति । 'इगुपधे'ति कः । 'कर्मण्यण्' । भाष्ये—अर्थज्ञः कर्मोपपद इति । विप्रतिषेधेन प्राप्तमणं बाधित्वा 'आतोऽनुपसर्गे' इति 'क' इति तात्पर्यम् ।

एतत्तात्पर्यमजानान एकदेश्याह—नैष युक्त इति । ज्ञाविषये काऽणोर्यं इत्यर्थः । तेषां ण इति । 'श्याद्व्यधे'ति विहितः । तत्र हि 'श्या—आदि'ति च्छेदः । स यथैवेति । बाध्यसामान्यचिन्तयाऽणोपि स बाधक इत्यर्थः सिद्धो विप्रतिषेधं विनाऽपीत्यर्थः । तदाह—प्राप्तिमात्रस्येति । न तु कर्मोपपदस्येति । एवञ्च विप्रतिषेधो युक्त एवेति भावः । नन्वर्थज्ञ इत्यत्राऽणं बाधितुं न 'क'प्रत्ययेन विप्रतिषेध उच्यते किन्तु 'आतोऽनुपसर्गे क' इति कं बाधितुम् । एवञ्च 'इगुपधे'ति कस्याऽणा बाधेऽप्यातोऽनुपसर्गे इति केन तृतीयकक्ष्याप्राप्तस्येगुपधेति कस्य विप्रतिषेधः सम्भवत्येवेत्याह सिद्धान्त्येकदेशी—कर्मोपपदोऽपीति । अणः क इति । 'आतोऽनुपसर्गे' इत्ययमिति भावः । उभयोरिति । सोपपदनिरुपपदयोः कयोरित्यर्थः । कर्मोपपदस्य कस्य विषय इति । अनाकारान्तत्वादिति भावः । किन्तु 'गोद' इत्यवकाश इति वक्तुं युक्तमिति तात्पर्यम् । क्रममाहस्येति । 'अर्थज्ञः कर्मोपपदो भवति विप्रतिषेधेने'त्युत्तरं 'नैष युक्त' इत्यादि'र्युक्तो विप्रतिषेध'इत्यन्तं भाष्यन्त्वेकदश्युक्तिरित्युक्तमेव । अथ विप्रतिषेधस्योदाहरणान्तरमाह—अनुपपदस्येत्यादिना ।

---

† इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५

१—'इहोभयं प्राप्नोति—काष्ठभेदः' पा० ।

२—'इहोभयं प्राप्नोति—अर्थज्ञः' पा० ।

†† आतोऽनुपसर्गे कः ३ । २ । ३

‡ ३ । १ । १३३—१३४*; १४१; १३५

× ३ । १ । १३३—१३४*; ३ । २ । १; ३

+ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ३ । १ । १३८

३—'इहोभयं प्राप्नोति—कुड्यलेप' इति पा० ।

अनुपपदस्तृतीयः । ण्वुल्तृजचः । तेषां कः । कस्य शः** । स यथैव शः कं बाधत एवं कर्मोपपदमपि बाधेत । का तर्हि गतिः ? मध्येऽपवादाः पूर्वान् विधीन्बाधन्ते [ नोत्तरान् ] इत्येवं शः कं बाधिष्यते कर्मोपपदं न बाधिष्यते ।

अनुपपदस्यावकाशः—सुग्लः सुम्लः* । कर्मोपपदस्य स एव । वडवासंदाय उभयं प्राप्नोति† । कर्मोपपदो भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः । ण्वुल्तृजचः । तेषां णः । णस्य कः‡ । स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत । का तर्हि गतिः ? पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते [ नोत्तरान् ] इत्येवमयं को णं बाधिष्यते कर्मोपपदं न बाधिष्यते ।

## शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरं च ॥ ७ ॥

शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्यः, पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । शीलि—मांसशीलः मांसशीला । शीलि' ॥ कामि—मांसकामः मांसकामा । कामि' ॥ भक्षि—मांसभक्षः मांसभक्षा । भक्षि' ॥ आचरि—कल्याणाचारः कल्याणाचारा ।

प्र०—कर्मोपपदे के सति नित्यसमासो भवति । अकर्मोपपदे तु विकल्पेन षष्ठीसमासः स्यात् । नन्वर्थज्ञ इत्यत्रा'तोऽनुपसर्गे क' इति कः प्राप्नोति न त्वण्प्रत्ययः, तत्कथमुच्यते 'कर्मोपपदस्य स एवे'ति, न हि कुम्भकारः कर्मोपपदस्य कस्य विषयः । एवं तर्हि काऽणोर्विप्रतिषेधे परत्वादण् कं बाधते, अणमपि कर्मोपपदः कोऽपवादत्वादिति क्रममादृत्यैतदुक्तमित्यदोषः । मांसकाम इति । मांसशब्दः 'स'प्रत्ययान्तोऽन्तोदात्तः । कल्याणशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरु'रिति मध्योदात्तस्तत्र कृदुत्तरपदप्रकृतिस्वरे प्राप्ते पूर्वपदप्रकृतिस्वरो विधीयते ।

उ०—भाष्ये-का तर्हि गतिरिति तृतीयस्य प्रश्नः । समासे पूर्वपदप्रकृतिस्वरत्वं दर्शयितुं पूर्वपदस्वरान्दर्शयति-मांसेति । 'एकस्मिन्नन्ते लघौ द्वयोर्वाऽन्तयोर्लघ्वोः सतोर्बह्वषः बह्वच्कस्ये'त्यर्थः । भाष्ये—ईकारश्च माभूदिति । अतो णः कृत इति भावः । मांसं तस्य भक्ष इति । भक्षेः कर्मण्यच् । 'घञजपाः पुंसि' इति नित्यं पुंस्त्वम् । एतेन 'इदं भावघञ्विषयमेवे'त्यापास्तम् । भक्षणं भक्ष इति । भावेऽजिति भावः । कर्मोऽजन्तेन समानाधिकरणबहुव्रीहिस्तु नाऽनभिधानात् । तच्च तवाऽप्यावश्यकमिति बोध्यम् । भाष्ये तज्ज्ञापयत्याचार्य-इति । नन्वणि सति 'मांसभक्षी'ति प्रयोगः स्यादिति तद्वारणेन चरितार्थं वार्तिकं कथं ज्ञापकमिति चेत्,

** ३ । १ । १३३—१३४*; १३५; १३८ १—क्वचिन्न ।

* आतश्चोपसर्गे ३ । १ । १३६ २—'इहोभयं प्राप्नोति—गोसंदायः वडवासंदायः' । पा० ।

† कर्मण्यण् ३ । २ । १ ‡ ३ । १ । १३३—१३४*; १४१; १३६

## ईक्षिक्षमिभ्यां च ॥ ८ ॥

ईक्षिक्षमिभ्यां चेति वक्तव्यम् । सुखप्रतीक्षः सुखप्रतीक्षा । कल्याणक्षमः कल्याणक्षमा ।

किमर्थमिदमुच्यते ? पूर्वपदप्रकृतिस्वरत्वञ्च वक्ष्यामि, ईकारश्च× मा भूदिति । नैतदस्ति प्रयोजनम् । इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति । [ तत्र[1] ] योऽसौ भक्षयतेरच्तदन्तेन+ बहुव्रीहिः ।

एवं तर्हि सिद्धे सति यत्कर्मोपपदे ण्वं शास्ति तज्ज्ञापयत्याचार्यः 'समानेऽर्थे केवलं विग्रहभेदाद्यत्र कर्मोपपदश्च प्राप्नोति बहुव्रीहिश्च, कर्मोपपदस्तत्र भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? काण्डलावः । काण्डानि लावोऽस्येति बहुव्रीहिर्न भवति ॥ भवति तु बहुव्रीहिरपि, मांसे कामोऽस्य मांसकामः, मांसकामुक इति वा ।

न त्वम्भोऽभिगमा ।

न त्विदं भवति अम्भोऽभिगमोऽस्या [ अम्भोभिगमा ] इति । किं तर्हि ? अम्भोभिगामीत्येव भवति ॥ काण्डलावेऽपि च विग्रहाऽभावान्न ज्ञापकस्य प्रयोजनं भवतीति । नैषोऽस्ति विग्रहः—काण्डानि लावोऽस्येति ।

प्र०—भक्षयतेरजिति । 'एरजण्यन्ताना'मित्येतत्तु मुनित्रयस्य मते नास्ति । कल्प्यादिभ्यः प्रतिषेध एवास्ति । ननु च बहुव्रीहौ सति बहवो भक्षा अस्य बहुभक्ष इत्यत्र 'बहोर्नञ्वदुत्तरपदभूम्नी'-त्यन्तोदात्तत्वं प्राप्नोतीति पूर्वपदप्रकृतिस्वरो न सिध्यति । नैष दोषः । भक्षणं भक्षः, बहुषु भक्षोऽस्येत्येव व्यधिकरणपदो बहुव्रीहिः करिष्यते । तत्रोत्तरपदभूमाऽभावा'द्बहुव्रीहौ प्रकृत्ये'ति स्वरो भविष्यति । काण्डानि लावोऽस्येति । लावयतेरच् । भवति बहुव्रीहिरपीति । तेन ज्ञापनस्य प्रयोजनाऽभावादण्बाधनार्थमेवेदं वक्तव्यमित्यर्थः । न त्वम्भोभिगमेति । तेनाऽत्रानभिधानाद्बहुव्रीहिर्न भवतीति

उ०—अनभिधानादणभावं मन्यते । लावयतेरच्प्रत्यय इति । निवृत्तप्रेषणप्राकृतार्थणिजन्तादच्प्रत्यय इत्यर्थः । अन्यथा 'काण्डानि लुनाती'त्यनेन समानार्थत्वं न स्यात् 'काण्डानि लाव इत्यत्र 'लाव' इति जातावेकवचनं बोध्यम् । अण्बाधनार्थमेवेति : अनभिधानेन प्रत्याख्यानन्तु न चमत्कारीति भावः ।

भाष्ये—न त्वम्भोऽभिगमेति । अम्भोऽभिगमा तु नेष्यते, तस्मादनभिधानमेव तदर्थमाश्रयणीयम्, नत्वेकप्रयोजनार्थं सामान्यज्ञापकाश्रयणमिति भावः । लूयत इति लव इति । न च निवृत्तप्रेषणादिति प्रागुक्तरीत्या तदर्थो लावशब्दोऽप्यस्तीति वाच्यं, सा हि कल्पना क्वचिदिष्टप्रयोगसिद्धयें न त्वनिष्टायेति

× टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४ । १ । १५ + एरच् ३ । ३ । ५६

1 क्वचिन्न 2—इदं क्वचिन्न ।

## अन्नादायेति च कृतां व्यत्ययश्छन्दसि ॥ ६ ॥

अन्नादायेति* च कृतां व्यत्ययश्छन्दसि द्रष्टव्यः । अन्नादायाऽन्नपतये । यं-आहुतिमन्नादीं कृत्वा ॥ १ ॥

## आतोऽनुपसर्गे कः ॥ ३ । २ । ३ ॥

### कविधौ सर्वत्र प्रसारणिभ्यो डः ॥ १ ॥

कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः । ब्रह्मज्य इति । किमुच्यते सर्वत्रेति ? अन्यत्रापि नावश्यमिहैव । काऽन्यत्र ? आह्वः प्रह्व इति* ।

### के हि संप्रसारणप्रसङ्गः ॥ २ ॥

के हि सति संप्रसारणं प्रसज्येत । संप्रसारणे कृते संप्रसारणपरपूर्वत्वे[२] चोवङा-देश 'आहुव' इत्येतद्रूपं[३] प्रसज्येत‡ ।

स तर्हि वक्तव्यः ? न वक्तव्यः । अस्त्वत्र संप्रसारणम् । संप्रसारणे कृते आकार लोपः×। तस्य स्थानिवद्भावादुवङादेशो न भविष्यति ॥ पूर्वत्वे कृते प्राप्नोति ।

प्र०—नैषोस्तीति । काण्डानि लुनातीति प्रकृत्यर्थविवक्षायामभावाण्णिचः । लूयत इति लवः, काण्डानि लवोऽस्येति विग्रहेण भाव्यमिति भावः । अन्नादायेति । अन्नमत्तीत्यणः प्रसङ्गेऽच्प्रत्ययः क्रियते । तेनात्र अदायेत्येवमवग्रह उपपद्यते ॥ १ ॥

आतोऽनुपस । ब्रह्मज्य इति । ब्रह्म जिनातीति डप्रत्ययः । 'वार्णादाङ्गंबलीय' इत्युक्ते यो ब्रूयात्‘समानाश्रयाङ्गवार्णविषयमेत'दिति, तं प्रत्याह—एवं तर्हीति । नित्यमिति । संप्रसारणे

उ०—भावः । चतुर्थ्यन्तप्रयोगे एव व्यत्ययोक्तेस्तत्राऽविशेषोऽणाचोरत आह—अवग्रह इति । 'न लक्षणेन पदकारा अनुवर्त्या' इत्यादि भाष्येणाऽवग्रहार्थताया लक्षणस्य दूषितत्वादिदं व्यर्थमित्यनेन सूचितम् ॥ १ ॥

आतोऽनुपसर्गे । प्रसारणिनः—संप्रसारणभाजः । ब्रह्मज्य इति । के हि सम्प्रसारणे इयङ् स्यादिति भावः । भाष्ये—किमुच्यते सर्वत्रेति । सर्वत्रेत्यस्य 'क'मात्रे इत्यर्थः । तमाह—अन्यत्राऽपीति । 'आतश्चोपसर्गे' इत्यत्राऽपीत्यर्थः । एवन्तर्हि वार्णादिति । 'इयाये'त्यादिसिद्धयेऽस्या विभिन्ननिमित्तकेऽपि

* नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४

१—इति क्वचिन्न । २—'संप्रसारणस्य पूर्वत्वे' पा० । ३—'स्यात्' पा० ।

‡ वचिस्वपियजादीनां किति; संप्रसारणाच्च ६ । १ । १५; १०८; अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ × आतो लोप इटि च ६ । ४ । ६४

एवं तर्हीदमिह सम्प्रधार्यम्, आकारलोपः क्रियतां पूर्वत्वमिति+ किमत्र कर्तव्यम् ? परत्वादाकारलोपः । न सिध्यति । अन्तरङ्गत्वात्पूर्वत्वं प्राप्नोति । एवं तर्हि वार्णादाङ्गं बलीयो भवतीत्याकारलोपो भविष्यति ।

एवं तर्हीदमिह संप्रधार्यम्, आकारलोपः क्रियतां संप्रसारणमिति* किमत्र कर्तव्यम् ? परत्वादाकारलोपः । नित्यं संप्रसारणम् । कृतेऽप्याकारलोपे प्राप्नोत्यकृतेऽपि प्राप्नोति । आकारलोपोऽपि नित्यः । कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति । अनित्य आकारलोपः, न हि कृते संप्रसारणे प्राप्नोति । अन्तरङ्गं हि पूर्वत्वं बाधते । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवाकारलोपस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादाकारलोपः । आकारलोपे कृते संप्रसारणम् । संप्रसारणे कृते यणादेशेन सिद्धं रूपम्—आह्वः प्रह्व इति ।

एवमपि न सिध्यति । योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भाव।† आदिष्टाच्चैषोऽचः पूर्वो भवति । एवं तर्हि—आकारलोपस्याऽसिद्धत्वादुवङादेशो न भविष्यति† ।

प्र०—कृते पूर्वत्वेन भाव्यमित्याकारलोपस्याऽनित्यत्वं मन्यते । अन्तरङ्गमिति 'वार्णादाङ्गं बलीय' इत्येतत्तु समानाश्रयविषयमेवेत्युक्तम् । एवमपि न सिध्यतीति । 'आह्व इत्यादिरूप'मिति शेषः । योऽनादिष्टादिति । उकारश्चानादिष्टादचः पूर्वो न भवति । नन्वनादिष्टादचः पूर्वो वकार इति तदादेशस्यापि स्थानिवद्भावादनादिष्टादचः पूर्वत्वं भविष्यति । नैतदस्ति । शास्त्रीयकार्यसिद्धये स्थानिवद्भावो विधीयते न त्वनादिष्टादचः पूर्वत्वे लौकिके । आकारलोपस्यासिद्धत्वादिति ।

उ०—प्रवृत्तिरावश्यकीति भावः । समानाश्रयेति । 'तदनाश्रयणेऽप्याहे'ति वक्तुमुचितम् । एवञ्च 'एवन्तर्हीं'ति किञ्चेत्यर्थकमिति भावः । भाष्ये—अन्तरङ्गं पूर्वत्वमिति । यद्यपि वार्णपरिभाषयाऽपि आल्लोपस्य नित्यत्वं वक्तुं शक्यन्तथापि तदनाश्रयणेनाऽस्य ग्रन्थस्य प्रवृत्तेर्न दोषः । प्रकारान्तरेण तदुपपादयितुमाह—यस्येति । नन्वनादिष्टादच इति । अत एव 'न पदान्त'सूत्रस्थ'सवर्ण'ग्रहणं भगवता प्रत्याख्यातम् । 'नधातु'सूत्रस्थं भाष्यन्तु तत्रैव योजितमिति न तद्विरोध इति बोध्यम् । समाधानान्तरस्य सम्भवादनित्यमिदं नाश्रितमिति तत्त्वम् । 'ह्वु'-धातुना सिद्धमिदं रूपमत आह—ह्वेन इति । 'वार्णादाङ्गं बलीय' इति पूर्वरूपं बाधित्वा लोप इति पक्षेऽ-

+ आतो लोप इटि च; संप्रसारणाच्च ६ । ४ । ६४; ६ । १ । १०८

* आतो लोप इटि च ६ । ४ । ६४; वचिस्वपियजादीनां किति ६ । १ । १५

†† १ । १ । ५७ वा १ † असिद्धवदत्राभात् ६ । ४ । २२

इहापि तर्ह्याकारलोपस्याऽसिद्धत्वादुवङादेशो न स्याद् जुहुवतुः जुहुवुरिति‡ । अस्त्यत्र विशेषः । अकृतेऽत्राऽऽत्वे × पूर्वत्वं भवति ।

इदमिह संप्रधार्यम्, आत्वं क्रियतां पूर्वत्वमिति+ किमत्र कर्तव्यम् ? परत्वात्पूर्वत्वम् । न सिध्यति । अन्तरङ्गत्वादात्वं प्राप्नोति ।

एवं तर्हीदमिह संप्रधार्यम्, आत्वं क्रियतां संप्रसारणमिति*, किमत्र कर्तव्यम् । परत्वादात्वम् । नित्यं संप्रसारणम् । कृतेप्यात्वे प्राप्नोत्यकृतेऽपि । आत्वमपि नित्यम् । कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति । अनित्यमात्वम् । नहि संप्रसारणे कृते प्राप्नोति । परत्वात्पूर्वत्वेन भवितव्यम् । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादात्वम्, आत्वे कृते सम्प्रसारणम् ।

प्र०—'असिद्धवदत्राऽभा'दित्यनेनेति भावः । जुहुवतुरिति । ह्वेञो लिटि 'ह्वः संप्रसारणमभ्यस्तस्य चे'ति संप्रसारणे रूपम् । परत्वादात्वमिति । 'अशिती'ति पर्युदासाश्रयेणैतदुक्तम् । प्रसज्यप्रतिषेधे त्वनैमित्तिकत्वादात्वमन्तरङ्गं, न चाऽन्तरङ्गबहिरङ्गयोर्युक्तो विप्रतिषेधः । एवं तर्हीति । 'एङः पदान्तादती'त्ययं योगो विभज्यते 'एङ' इति । तेनात्वं बाध्यते पूर्वत्वविधानेन । आकारान्तलक्षण इति । 'अशिती'ति पर्युदासाश्रयेऽपि 'ह्वावामश्चे'ति ज्ञापकादाकारान्तलक्षणे कप्रत्यये कर्तव्ये पूर्वमेवात्वं भवति, ततस्तन्निमित्तः प्रत्यय इति भावः ।

उ०—व्यस्याऽसिद्धिर्बोध्या । भाष्ये—अन्तरङ्गत्वादात्वमिति । एवञ्चाऽऽत्वे पूर्वरूपलोपयोः प्राप्तयोर्वार्णादिति न्यायेन लोपे तस्य स्थानिवत्त्वादुवङ् स्यादिति भावः । एवन्तर्हीति प्राग्वदेव किञ्चेत्यर्थे । प्रसज्यप्रतिषेधे त्विति । 'वञ्चिस्वपी'त्यत्र कितीत्यपि यदि विषयसप्तमी तदा भाष्यं सम्यगेव । भाष्ये—आत्वे कृते सम्प्रसारणमिति । आत्वे कृते लोपे कृते सम्प्रसारणे कृते प्राप्तोवङि स्थानिवत्त्वाभावेऽप्यसिद्धत्वादुवङोऽसिद्धिरिति भावः । समाधत्ते—एवन्तर्हीति । योगविभागसामर्थ्यादन्तरङ्गमप्यात्वं बाधित्वा पूर्वं सम्प्रसारणं पूर्वत्वञ्चेत्युवङ्सिद्धो 'जुहुवतु'रित्यादाविति भावः ।

पर्युदासाश्रयेऽपीति । अन्यथाऽन्योन्याश्रयः स्यादिति भावः । आभीयाऽसिद्धाऽनित्यत्वेनाऽपि 'जुहुवतु'रिति सिध्यति । ह्वः के कृते आल्लोपात्पूर्वं सम्प्रसारणं, यतो नित्यम् । नित्यत्वं दर्शयति—कृतेति ।

‡ ह्वः सम्प्रसारणमभ्यस्तस्य च ६ । १ । ३२—३३

× आदेच उपदेशेऽशिति ६ । १ । ४५ + आदेच उपदेशेऽशिति; संप्रसारणाच्च ६ । १ । ४५; १०८ * आदेच उपदेशेऽशिति; ह्वः सम्प्रसारणमभ्यस्तस्य च ६ । १ । ४५; ३२—३३

एवं तर्हि पूर्वत्वे* योगविभागः करिष्यते। संप्रसारणात्परः पूर्वो भवति। तत 'एङः'। एङश्च संप्रसारणात्पूर्वो भवति। किमर्थमिदम्? अकृत आत्वे पूर्वत्वं यथा स्यात्। ततः 'पदान्तादति'। 'एङ' इत्येव।

इहापि तर्ह्यकृत आत्वे पूर्वत्वं स्यात्—आह्वः प्रह्व इति। अस्त्यत्र विशेषः। आकारान्तलक्षणः कविधिः, तेनाऽनेनाऽवश्यमात्वं प्रतीक्ष्यम्। लिट् पुनरविशेषेण धातुमात्राद्विधीयते।

नित्यं प्रसारणं ह्वो यणवार्णादाङ्गं न पूर्वत्वम्।
योऽनादिष्टादचः पूर्वस्तत्कार्ये स्थानिवत्त्वं हि ॥ १ ॥

प्रोवाच भगवान्कात्यस्तेनाऽसिद्धिर्यणस्तु ते।
आतः को लिण्नैङः पूर्वः सिद्ध आह्वस्तथा सति ॥ २ ॥

प्र०—उक्तार्थसङ्ग्रहश्लोकौ–नित्यं प्रसारणमिति। कृताऽकृतप्रसङ्गित्वादिति भावः। तत्र कृते पूर्वत्वं क्रियतामाकारलोप इति वार्णादाङ्गमिति वचनादाकारलोपो भवति न तु पूर्वत्वं, तत्राकारलोपस्य स्थानिवत्त्वादुवङ्नास्तीति ह्वो यण्प्रवर्तत इत्यर्थः। इतर आह—योऽनादिष्टादिति। तेनासिद्धिरिति। 'असिद्धवदत्राभा'दित्याकारलोपस्येत्यर्थः। तस्याऽसिद्धत्वाद्यणादेशो भवत्वित्यर्थः। जुहुवतुरित्यत्रापि तथैव यण्स्यादित्याह—एङः पूर्व इति। 'आह्व' इत्यत्रापि तथैव पूर्वत्वं स्यादित्याह—आतः क इति। लिण्नेति। लिड् धातुमात्राद्विधीयते न त्वाकारान्तादेवेत्यर्थः॥ ३ ॥

उ०—एवञ्च ह्वो यण्फलतीत्यर्थः। वार्णादित्यादि व्याचष्टे—तत्र कृते इति। 'यतोऽनादिष्टादचः पूर्वत्वे स्थानिवत्त्वमतो भगवान् कात्यः प्रसारणिभ्यो डं प्रोवाचे' त्यन्वयः। प्रत्याख्यानवाद्याह–तेनाऽसिद्धिर्यणस्तु त इति। तेन—'आभा'दिति सूत्रेण, यतोऽसिद्धिरतो यणस्त्वित्यर्थः। 'प्रोवाच भगवान् कात्य' इत्युक्त्या 'ड'विधानस्य 'आह्व'सिध्यर्थमावश्यकता ध्वनिता। तथा चेदमेव ज्ञापकमीदृशे विषये आभीयाऽसिद्धत्वाऽभावस्य, वार्णादाङ्गमित्येतदभावस्य चेति जुहुवतुरित्यादिसिद्धिः। योगविभागस्य तवाऽपि कर्तव्यत्वेन गौरवस्य तदवस्थत्वादिति च ध्वनितम्। एवञ्च 'तेनाऽसिद्धि'रित्युक्तिरेकदेशिनः प्रौढ्येति च ध्वनितम् ॥ ३ ॥

* एङः पदान्तादति ६। १। १०९

# सुपि स्थः ॥ ३ । १ । ४ ॥

## सुपि स्थो भावे च ॥ १ ॥

सुपि स्थ इत्यत्र भावे चेति वक्तव्यम् । इहापि यथा स्यात्—आखूत्थो वर्तते । श्येनोत्थः । शलभोत्थः ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

## योगविभागात्सिद्धम् ॥ २ ॥

योगविभागः करिष्यते । आतोनुपसर्गे को भवति । ततः 'सुपि' । सुपि चाऽऽतः को भवति । कच्छेन पिबति कच्छपः । कटाहेन पिबति कटाहपः । द्वाभ्यां पिबति द्विपः । ततः'स्थः' । स्थश्च को भवति सुपीति । किमर्थमिदम् ? भावे यथा स्यात् । कुतो नु खल्वेतद्भावे भविष्यति न पुनः कर्मादिष्वपि कारकेष्विति ? योगविभागादयं कर्तुरपकृष्यते, न चान्यस्मिन्नर्थे आदिश्यते, 'अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ती'ति स्वार्थे भविष्यति । तद्यथा—'गुप्तिज्किद्भ्यः सन्' [ ३ । १ । ५ ] 'यावादिभ्यः कन्' [ ५ । ४ । २९ ] । सोऽसौ स्वार्थे भवन्भावे भविष्यति ॥ ४ ॥

प्र०—सुपि स्थः । कच्छेन पिबतीति । अत्र केचिदाहुः—कच्छं पिबतीत्येवमसन्तमप्यवयवार्थमाश्रित्य कर्मोपपदः को विधास्यते किं योगविभागेन । नैतत्साधूच्यते । कच्छेन पिबति द्वाभ्यां पिबतीत्येतस्मिन् सत्येवार्थेऽसदर्थाश्रयेण रूढिशब्दानामपि व्युत्पत्तेरयुक्तत्वात् । यत्र तु सर्वात्मनाऽर्थानुगमो नास्ति यथा 'तैलपायिके'ति तत्रैवाऽसदर्थाश्रया व्युत्पत्तिः क्रियते । भावे यथा स्यादिति । अत्राप्याहुः—'घञर्थे कविधान'मिति कः सिद्ध इति । एवं तर्हि नित्यसमासार्थं 'स्थ'इत्यनेन उपपदाश्रयः को विधीयते । अन्यथा पाक्षिकः षष्ठीसमासः स्यात् । अनिर्दिष्टार्था इति । प्रत्यासन्नत्वात्तस्यार्थस्येति भावः । यद्येवं 'स्थ' इत्यनेन भावे विधीयमानः कः कर्तारं बाधेत । तथा च 'समस्थ' इति कर्तरि न स्यात् । नैष दोषः । यद्यत्र साक्षाद्भावशब्दोपादानेन भावे को विधीयेत तदा भावः कर्तारं तक्रकौण्डिन्यन्यायेन बाधेत । सामर्थ्यात्त्वयं भावे व्यवतिष्ठते इति भावेन न बाध्यते कर्ता ॥ ४ ॥

उ०—सुपि स्थः । भाष्ये—भावे चेति । चात्कर्तरि । कच्छेन पिबतीति । अकर्मण्युपपदे प्रत्ययार्थं सुपीति योगविभाग इति भावः । सत्येवार्थे इति । 'एव'शब्दो वाक्यालङ्कारे । संभवति योग्येऽर्थेऽसदर्थाश्रयेण व्युत्पादनमयुक्तमित्यर्थः । नित्यसमासेति । 'उपपदमति'ङित्यनेनेति भावः । 'घञर्थे कविधान'मित्येतदुदाहरणपरे 'स्थास्नापाव्यधिहनियुध्यर्थं'मित्यत्र 'स्था' ग्रहणन्तु कर्माद्यर्थमिति बोध्यम् । प्रत्यासन्नत्वादिति । अत एवाऽस्य नित्यमेकत्वमेव न तु घञादिवाच्यवद्द्वित्वादियोगोऽपीति भावः । तक्रकौण्डिन्येति । विधेयविषय एव स न्यासो नाऽनुवादविषय इत्यन्ये ॥ ४ ॥

## तुन्दशोकयोः परिमृजापनुदोः ॥ ३ । २ । ५ ॥

### तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः ॥ १ ॥

तुन्दशोकयोः परिमृजापनुदोरित्यत्रालस्यसुखाहरणयोरिति वक्तव्यम् । तुन्दपरिमृजोऽलसः । शोकापनुदः पुत्रो जातः । यो हि तुन्दं परिमार्ष्टि तुन्दपरिमार्जः स भवति । यश्च शोकमपनुदति शोकापनोदः स भवति ।

### कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् ॥ २ ॥

कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् कर्त्तव्यम् । मूलविभुजो रथः । नखमुचानि धनूंषि । काकगुहास्तिलाः । सरसीरुहं कुमुदम् ॥ ५ ॥

## गापोष्टक् ॥ ३ । २ । ८ ॥

### सुरांशीध्वोः पिबतेः ॥ १ ॥

सुरांशीध्वोः पिबतेरिति वक्तव्यम् । इह मा भूत्—क्षीरपा† ब्राह्मणीति । पिबतेरिति किमर्थम् ? या हि सुरां पाति सुरापा† सा भवति ।

### बहुलं तणि ॥ २ ॥

बहुलं तणीति वक्तव्यम् । किमिदं 'तणी'ति ? संज्ञाछन्दसोर्ग्रहणम् । या

---

प्र०—तुन्द । आलस्यसुखाहरणयोरिति । आलस्ये गम्यमाने सुखोत्पादने च प्रत्ययो भवतीत्यर्थः । तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाऽऽहर्तरि प्रत्ययो भवतीत्युक्तं भवति । शोकापनोद इति । यः संसारानित्यतोद्भावनादिना शोकमेव निवर्तयति न तु सुखमुत्पादयति स शोकापनोदः ॥ ५ ॥

---

उ०—तुन्दशोकयोः । तत्र सामर्थ्यादिति । एवं सति ते गम्ये भवत इत्यर्थः । तुन्दपरिमृजे 'क्ङिति चे'ति पक्षे वृद्धिः प्राप्नोति, सा भवत्येव सत्यमिधाने । यत्तु 'अची'त्येव वक्तव्ये अजादावित्युक्तेरादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिरिति, तन्न; तत्र तदभावात्, 'यस्मिन्विधि'रिति परिभाषालभ्याऽऽदिग्रहणस्यैव तत्राऽनुवादाच्च । अत्रत्यमाष्यस्वरसात्तत्र 'क्ङित्'पदेनातिदेशिकक्ङित्तोरेव ग्रहणम् । व्याकरणान्तरे—'सङ्क्रम'-पदेन तयोरेव ग्रहणाच्चेति परे । 'मूलविभुजादिभ्य' इति तु तादर्थ्ये चतुर्थी । काकगुहा इति । काकेभ्यो गूहितव्या इत्यर्थः । 'घञर्थे कविधान'मित्यनेनाऽत्रापि सिध्यत्येतत् । सरसि सरस्यां वा रोहति । कौ मोदत इत्यर्थः ॥ ५ ॥

गापोष्टक् । बहुलं तणीति । पक्षे 'आतोऽनुपसर्गे' इति कः । या ब्राह्मणी सुरापेति । सुरां

---

१ 'सीध्वोः' । † आतोऽनुपसर्गे कः ३ । २ । ३

ब्राह्मणी सुरापी भवति । नैनां देवाः पतिलोकं नयन्ति या ब्राह्मणी सुरापा† भवति नैनां देवाः पतिलोकं नयन्ति ॥ ८ ॥

## हरतेरनुद्यमनेऽच् ॥ ३ । २ । ९ ॥

### अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसङ्ख्यानम् ॥ १ ॥

अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसङ्ख्यानं कर्तव्यम् । शक्तिग्रहः । शक्ति ॥ लाङ्गल—लाङ्गलग्रहः । लाङ्गल ॥ अङ्कुश—अङ्कुशग्रहः । अङ्कुश ॥ यष्टि—यष्टिग्रहः । यष्टि ॥ तोमर—तोमरग्रहः । तोमर ॥ घट—घटग्रहः । घट ॥ घटी—घटीग्रहः । घटी ॥ धनुस्—धनुर्ग्रहः ।

### सूत्रे च धार्यर्थे ॥ २ ॥

सूत्रे च धार्यर्थे ग्रहेरुपसङ्ख्यानम् । सूत्रग्रहः । धार्यर्थ इति किमर्थम् ? यो हि सूत्रं गृह्णाति सूत्रग्राहः स भवति ॥ ९ ॥

## स्तम्बकर्णयो रमिजपोः ॥ ३ । २ । १३ ॥

### स्तम्बकर्णयोर्हस्तिसूचकयोः ॥ १ ॥

स्तम्बकर्णयोरित्यत्र हस्तिसूचकयोरिति वक्तव्यम् । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । स्तम्बे रन्ता कर्णे जपितेत्येवान्यत्र ॥ १३ ॥

## शमि धातोः संज्ञायाम् ॥ ३ । २ । १४ ॥

धातुग्रहणं किमर्थम् ?

---

प्र०—गापोष्टक् । पिबतेरिति । लुग्विकरणपरिभाषालभ्यार्थकथनम् ॥ ८ ॥

हरतेरनु । अच्प्रकरणे इति । घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थम् ॥ ९ ॥

शमि धातोः । शङ्करेति । पृषोदरादित्वात्संज्ञायां गकारस्य ककारव्यत्ययेन शङ्कराशब्दस्य

---

उ०—पिबतीत्यर्थे एवाऽयं प्रयोग इति बाहुलकाश्रयणम् ॥ ८ ॥

हरतेरनु । लिङ्गेति । तत्फलन्तु 'देवदत्तसखी'त्यादौ टजभावः । भाष्ये—धार्यर्थे इति । ग्रहणपूर्वकधारणे लाक्षणिकाद्ग्रहेरित्यर्थः ॥ ९ ॥

शमि धातोः । ककारव्यत्ययेनेति । 'नैषा शङ्करे'ति भाष्यविरोधाचिन्त्यमेतत् । धातुग्रहणं न

---

† आतोऽनुपसर्गे कः ३ । २ । ३

**शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् ॥ १ ॥**

शमि संज्ञायां धातुग्रहणं क्रियते कृञो हेत्वादिषु टो† मा भूदिति । शमि संज्ञायां धातोरज्भवतीत्यस्यावकाशः—शंवदः शंभवः । टस्यावकाशः—श्राद्धकरः पिण्डकरः । शङ्करा नाम परिव्राजिका, शङ्करा शकुनिका तच्छीला च, तस्यामुभयं प्राप्नोति । परत्वाट्टः स्यात् । धातुग्रहणसामर्थ्यादजेव भवति ।

कुणरवाडवस्त्वाह—नैषा शङ्करा । शङ्गरैषा । गृणातिः शब्दकर्मा तस्यैष प्रयोगः ॥ १४ ॥

## अधिकरणे शेतेः ॥ ३ । २ । १५ ॥

**अधिकरणे शेतेः पार्श्वादिषूपसङ्ख्यानम् ॥ १ ॥**

अधिकरणे शेतेः पार्श्वादिषूपसङ्ख्यानं कर्तव्यम् । पार्श्वशयः पृष्ठशयः उदरशयः ।

---

प्र०—सिद्धत्वात्तदर्थं धातुग्रहणं न कर्तव्यमित्यर्थः ॥ १४ ॥

अधिकर । दिग्धसहपूर्वाच्चेति । 'दिग्धसह'शब्दस्य समुदायस्य पूर्वत्वमाश्रीयते न तु प्रत्येकम् । तत्र दिग्धेन सह शेत इत्यचि कृते मयूरव्यंसकादित्वात् समासः । तद्धितो वेति । यो गिरौ शेते गिरिरस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः । अन्ये त्वाहुः—गिरौ गिरौ शेत इति 'सङ्ख्यैकवचना'दिति सप्तम्यन्ताच्छस् प्रत्ययः । व्युत्पत्तिर्हि यथाकथंचित्कर्तव्या, उपाया-

---

उ०—कर्तव्यमिति । 'ट'बाधनार्थं न कर्त्तव्यमित्यर्थः । क्विपो बाधनार्थन्तु तदावश्यकमिति 'स्थः क चे'ति सूत्रे भाष्ये स्पष्टम् ॥ १४ ॥

अधिकरणे । मयूरव्यंसकेति । दिग्धसहपूर्वता प्रायोगिकी बोध्या, पृथग् 'दिग्धसह'शब्दस्य सिद्ध्यभावात् । 'गिरौ शेते' इत्यर्थे तद्धितस्याऽविधानादाह—यो गिराविति । अन्ये त्वाहुरिति । अत्राऽरुचिस्त्वदन्तशब्दाऽसिद्धिः, अव्ययत्वापत्तिः, शसः स्वार्थिकत्वेन 'गिरौ गिरौ शेते' इति विग्रहाऽसङ्गतिश्च । वैरेति । वीरस्येदं वीराया वा वीरादागतं तत्र भवमिति । वसिष्ठस्येदं तेन कृतं प्रोक्तं वा । गिरौ शेते गिरिं

---

† कृञो हेतुताच्छील्यानुलोम्येषु ३ । २ । २०

१—कुणरवाडवः कश्चिन्नैरुक्तः प्रतीयते । नैरुक्तसम्प्रदाये 'कर्म'शब्दोऽर्थपर्यायत्वेन प्रसिद्धः । तथा चाह यास्काचार्यः—'यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात् स कर्मोपसङ्ग्रहः ।' ( निरुक्ते १ । ४ । ५ ) । इह कर्मोपसङ्ग्रहोऽर्थोपसङ्ग्रहोऽभिप्रेतो 'यस्यागमादर्थपृथक्त्वमह विज्ञायते' इति वचनात् । यास्कीयनिघण्टौ तु स्पष्टमेव पठ्यते—'इत्येकादश ज्वलतिकर्माणः' 'इत्यष्टादशकान्तिकर्माणः' 'इति द्वाविंशशतं गतिकर्माणः' इत्यादि ।

## दिग्धसहपूर्वाच्च ॥ २ ॥

दिग्धसहपूर्वाच्चेति वक्तव्यम् । दिग्धसहशयः ।

## उत्तानादिषु कर्तृषु ॥ ३ ॥

उत्तानादिषु कर्तृष्विति वक्तव्यम् । उत्तानशयः अवमूर्धशयः ।

## गिरौ डश्छन्दसि ॥ ४ ॥

गिरावुपपदे छन्दसि डो वक्तव्यः । गिरौ शेते गिरिशः ।

## तद्धितो वा ॥ ५ ॥

तद्धितो वा पुनरेष भविष्यति । गिरौ शेते [ गिरिरस्यास्तीति ] गिरिश इति† ॥ १५ ॥

## चरेष्टः ॥ ३ । २ । १६ ॥

इह कस्मान्न भवति,—कुरूंश्चरति पञ्चालांश्चरतीति ? अधिकरण* इति वर्तते । ननु च कर्मणीत्यपि‡ वर्तते, तत्र कुत एतदधिकरणे भविष्यति न पुनः कर्मणीति ।

## चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ॥ १ ॥

यदयं 'भिक्षासेनादायेषु च' [ ३ । २ । १७ ] इति चरेर्भिक्षाग्रहणं करोति तज्ज्ञापयत्याचार्यो—'न भवति कर्मणी'ति[२] ॥ १६ ॥

---

प्र०—नामनियमात् । तदुक्तं हरिणा—

'वैखासिष्ठगिरिशास्तथैकागारिकादयः ।
कैश्चित्कथंचिदाख्याता निमित्तावधिसङ्करैः' ॥ इति ।

'छन्दसी'ति वचनाद्भाषायां गिरिशशब्दस्याऽसाधुत्वमाहुः ॥ १५ ॥

चरेष्टः । कुरूंश्चरतीति । यस्य कुरव एव प्राप्याः स कुरूंश्चरतीत्युच्यते । यश्च कुरुषु

---

उ०—श्यति वा गिरिशः । निमित्तम्,—अर्थः, अवधिः-प्रत्ययानाम्प्रकृतिः, तत्सङ्करैरित्यर्थः ॥ १५ ॥

चरेष्टः । कुरूंश्चरतीति । तान् गच्छतीत्यर्थः । यद्यर्थभेदो न स्यात्तर्हि द्वितीयान्तात्प्रत्ययाऽनुत्पत्तिप्रतिपादनं व्यर्थं स्यादत आह—यश्चेति । भिक्षाचरे । चरितश्चरणकरणकाऽर्जने लाक्षणिको, भिक्षार्थो

---

१ इदं क्वचिन्न पठ्यते । प्रदीपे दर्शनाद् भाष्यपाठः प्रतीयते ।

† लोमादिपामादिपिच्छादिभ्यः शनेलचः ५ । २ । १०० * अधिकरणे शेते ३ । २ । १५

‡ कर्मण्यण् ३ । २ । १

२—यदि 'चरेष्टः' इत्यत्र 'कर्मणी' त्यस्य सम्बन्धः स्यात्तदा तेनैव भिक्षां चरतीति 'भिक्षाचरः' इत्यस्य सिद्धावुत्तरसूत्रे 'भिक्षा'ग्रहणं व्यर्थं स्यादित्यभिप्रायः ।

## दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ॥ ३ । २ । २१ ॥

### किंयत्तद्बहुषु कृञोऽज्विधानम् ॥ १ ॥

किंतत्तद्बहुषु कृञोऽज्विधानं कर्तव्यम् । किंकरा । किम् ॥ यत्—यत्करा । यत् ॥ तत्—तत्करा । तत् ॥ बहु—बहुकरा ॥ २१ ॥

## स्तम्बशकृतोरिन् ॥ ३ । २ । २४ ॥

### स्तम्बशकृतोर्व्रीहिवत्सयोः ॥ १ ॥

[ स्तम्बशकृतोः ] व्रीहिवत्सयोरिति वक्तव्यम् । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः ॥ २४ ॥

## फलेग्रहिरात्मम्भरिश्च ॥ ३ । २ । २६ ॥

आत्मंभरिरिति किं निपात्यते ? आत्मनो मुम्भृञश्चेन्प्रत्ययः ॥ अत्यल्पमिदमुच्यते[3] ।

प्र०—भ्रमति स कुरुषु चरतीत्युच्यते ॥ १६ ॥

दिवाविभा । किं यदिति । वार्तिकेन सूत्रस्य बाधितत्वाट्टस्याऽभावे किङ्करीत्यसाधुरित्याहुः ॥ २१ ॥

उ०—वा, तत्रैव चाऽयं प्रयोग इष्यते, भाष्यप्रामाण्यात् । एतेन 'भिक्षया हेतुना चरती'त्यर्थक-'भिक्षाचर'-प्रयोगसाधकेन तत्सूत्रेण विपरीतं 'कर्मणी'त्यस्य संबन्ध एव ज्ञाप्यतेति परास्तम् । सेनाग्रहणस्य ज्ञापकत्वं तु नोक्तं, सेनां चरति सेनायां चेत्यर्थद्वये अपीष्टेः । एवञ्च 'अधिकरण' इति 'कर्मणी'ति चोभयोरग्रेऽधिकारो यथायोगञ्च संबन्ध इति ध्वनितम् ॥ १६ ॥

दिवाविभा । इत्याहुरिति । अत्रारुचिबीजन्तु वार्तिकस्य हेत्वादौ 'ट'बाधनेन चरितार्थतया सूत्रस्थकिमादिग्रहणस्य भाष्येऽप्रत्याख्यानेन वा हेत्वादौ सूत्रे किमादिग्रहणसामर्थ्याट्टो भवत्येवेति । न च विपरीतमेवाऽस्तु, सूत्रस्थकिमादिग्रहणस्य सार्थक्याऽनुपपादनात् ॥ २१ ॥

फलेग्रहि । भाष्ये—आत्मनो मुमिति । समासे कृते नलोपे च कृते ततः प्राग्वा मुन्निपात्य-

१—किंकरा यत्करा तत्करा बहुकरा' इति पाठः क्वचित् ।

२—क्वचिन्न । ३—अतोऽग्रे 'आत्मन इति' इत्यधिकं निर्णयसागरीयसंस्करणे ।

## भृञः कुक्ष्यात्मनोर्मुम् च ॥ १ ॥

भृञः कुक्ष्यात्मनोर्मुम् चेति वक्तव्यम् । कुक्षिम्भरिः ।
'आत्मम्भरिश्चरति यूथमसेवमानः' ॥ २६ ॥

## एजेः खश् ॥ ३ । २ । २८ ॥

### खश्प्रकरणे वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः ॥ १ ॥

खश्प्रकरणे वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्य इति वक्तव्यम् । वातमजाः मृगाः । वात ॥ शुनी—शुनिंधयः । शुनी ॥ तिल—तिलंतुदः । तिल ॥ शर्द्ध—शर्द्धंजहा माषाः ॥ २८ ॥

## नासिकास्तनयोर्ध्माधेटोः ॥ ३ । २ । २९ ॥

### स्तने धेटः ॥ १ ॥

स्तने धेट इति वक्तव्यम् । स्तनन्धयः ॥ ततो

### मुष्टौ ध्मश्च ॥ २ ॥

मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम् । मुष्टिन्धमः मुष्टिन्धयः ।[1]

अत्यल्पमिदमुच्यते । नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम् । नासिकन्धमः[3] नासिकन्धयः । नासिका ॥ नाडी—नाडिंधमः[4] नाडिंधयः । नाडी ॥ मुष्टि—मुष्टिन्धमः

प्र०—नासिका । स्तने धेट इति । यथासङ्ख्याऽभावार्थ एतावान्योगः कर्तव्य इत्यर्थः ।

उ०—इत्यर्थः ॥ २६ ॥

नासिका । एतावान्योग इति । एतदन्वाख्यापकं वार्तिकमित्यर्थः । वार्तिकस्याऽपीति । अपिना 'नाडीमुष्ट्योश्चे'ति सूत्रस्याऽपि । 'मुष्टौ ध्मश्चे'ति वार्तिकं 'नाडीमुष्ट्योश्चे'ति पठितसूत्रस्य व्यवस्थापकमेव । नैतावता तत्सूत्रमप्रामाणिकमिति भ्रमः कार्यः, 'यथासङ्ख्य'सूत्रस्थभाष्ये स्पष्टन्तत्सूत्रोपादानात् । यद्यपि नाडीमुष्टिविषये तत्सूत्रे यथासङ्ख्यमुक्तन्तथाप्येतद्भाष्यवार्तिकविरोधात्तद्भाष्यं प्रौढिवाद इति बोध्यम् ।

१—नासिकायां ध्मश्च धेटश्च ॥

नासिकायां ध्मश्च धेटश्चेति वक्तव्यम् । नासिकन्धमः । नासिकन्धयः । इत्यधिकमिह केचित् पठन्ति ।

२—'खरी' इति पाठभेदः । वै० सि० कौमुद्यां तूभयमपि पठ्यते—'घटीखारीखरीषूपसङ्ख्यान'मिति ।

३—नासिकन्धमः स उच्यते शयनवेलायां यस्य नासिका शब्दायते ।

४—'नाडिन्धमः स्वर्णकारः' इत्यमरः ।

मुष्टिन्धयः । मुष्टि ।। घटी—घटिन्धमः घटिंधयः । घटी ।। खारी—खारिन्धमः खारिन्धयः ।। २६ ।।

## प्रियवशे वदः खच् ।। ३ । २ । ३८ ।।

### खच्प्रकरणे गमेः सुप्युपसङ्ख्यानम्।। १ ।।

खच्प्रकरणे गमेः सुप्युपसङ्ख्यानं कर्तव्यम् । मितङ्गमो हस्ती[1], मितङ्गमा हस्तिनी ।

### विहायसो विह च ।। २ ।।

विहायसो विह इत्ययमादेशो वक्तव्यः खच्च । विहङ्गमः ।

### खच्च डिद्वा ।। ३ ।।

खच्च डिद्वा वक्तव्यः† । विहङ्गः ।

### डे च ।। ४ ।।

डे च विहायसो 'विह' इत्ययमादेशो वक्तव्यः । विहगः‡ ।। ३८ ।।

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।। ३ । २ । ४८ ।।

### डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानम् ।। १ ।।

डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानं कर्तव्यम् । सर्वत्रगः, पन्नगः ।

### उरसो लोपश्च ।। २ ।।

उरसो लोपश्च वक्तव्यः । उरगः ।

प्र०—वार्तिकस्याप्यव्याप्तिमुद्भावयन् भाष्यकार आह—अत्यल्पमिति ।। २६ ।।

प्रियवशे । डे चेति । विहायःशब्दपूर्वाद्गमेरन्येष्वपि दृश्यत इति डप्रत्यये सति विहादेशः ।। ३८ ।।

उ०—एवञ्चाऽत्र 'नाडी'शब्देन 'धम' एव सम्बन्धो, 'मुष्टि'शब्देनोभयोरिति बोध्यम् । पूर्ववार्तिकदूषणेन नाडीशब्दसम्बन्धोऽप्युभयोरित्याह—नासिकानाडीत्यादि । अत्र 'ध्मश्च धेटश्चे'ति वर्तते ।। २६ ।।

१—'हस्ती'ति क्वचिन्न दृश्यते । † दे: ६ । ४ । १४३ ‡ अन्येष्वपि दृश्यते ३ । २ । १०१

## सुदुरोरधिकरणे ॥ ३ ॥

सुदुरोरधिकरणे डो वक्तव्यः । सुगः दुर्गः ।

## निसो देशे ॥ ४ ॥

निसो देशे डो वक्तव्यः । निर्गो देश[1]ः ।

अपर आह—डप्रकरणेऽन्येष्वपि दृश्यते ॥ डप्रकरणेऽन्येष्वपि डो भवतीति[2] वक्तव्यम् । तत[3]ः स्त्र्यगारगोऽश्नुते । यावदन्नाय ग्रामगः । ध्वंसते गुरुतल्पगः ॥ ४८ ॥

## आशिषि हनः ॥ ३ । २ । ४९ ॥

## दारावाहनोऽणन्त्यस्य च टः संज्ञायाम् ॥ १ ॥

दारावुपपद आङ्पूर्वाद्धन्तेरणवक्तव्योऽन्त्यस्य च टो वक्तव्यः । दा[4]र्वाघाटस्ते वनस्पतीनाम्* ।

## चारौ वा ॥ २ ॥

चारावुपपद आङ्पूर्वाद्धन्तेरणवक्तव्योऽन्त्यस्य च टो वा वक्तव्यः । चार्वाघाटः चार्वाघातः ।

## कर्मणि समि च ॥ ३ ॥

कर्मण्युपपदे सम्पूर्वाद्धन्तेरणवक्तव्योऽन्त्यस्य च टो वा वक्तव्यः । वर्णसङ्घाटः वर्णसङ्घातः । पदसङ्घाटः पदसङ्घातः ॥ ४६ ॥

## लक्षणे जायापत्योष्टक् । ३ । २ । ५२ ॥

कथमिदं विज्ञायते—लक्षणे कर्तरीति, आहोस्विल्लक्षणवति कर्तरीति । किं चातः ? यदि विज्ञायते 'लक्षणे कर्तरी'ति, सिद्धं जायाघ्नस्तिलकालकः पतिघ्नी

---

१—'देशः' इति क्वचिन्न ।　　२—'दृश्यते' पा० ।

३—'ततः स्त्र्यागारगः । अश्नुते यावदन्नाय ग्रामगः ।' इति कीलहार्न पाठः ।　　* यजुर्वेदे २४ । ३५

४—दार्वाघाटः पक्षिविशेषः, स चञ्च्वा दारूण्याहन्ति ।, 'काठ-ठोकरा' 'लकड़ फोड़' इति भाषायाम् । "शतपत्रको दार्वाघाटः" इत्यमरः ।

पाणिरेखेति, जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति न सिध्यति । अथ विज्ञायते— लक्षणवति कर्तरीति, सिद्धं जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति, जायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखेति न सिध्यति ।

अस्तु लक्षणे कर्तरीति । कथं जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति ? अकारो-मत्वर्थीयः† । जायाघ्नोऽस्मिन्नस्तीति सोऽयं जायाघ्नः । पतिघ्नी वृषलीति न सिध्यति ।

अस्तु तर्हि 'लक्षणवति कर्तरी'ति । कथं जायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखेति ? अमनुष्यकर्तृक इत्येवं भविष्यति‡ ॥ ५२ ॥

## अमनुष्यकर्तृके च ॥ ३ । २ । ५३ ॥

अप्राणिकर्तृक इति वक्तव्यम् । इह मा भूत्—नगरघातो हस्ती ।

यद्यप्राणिकर्तृक इत्युच्यते शशघ्नी शकुनीति न सिध्यति । अस्तु तर्हि— 'अमनुष्यकर्तृक' इत्येव । कथं नगरघातो हस्ती ? 'कृत्यल्युटो बहुलम्' [ ३ । ३ । ११३ ] इत्येवमत्राऽभविष्यति ॥ ५३ ॥

## पाणिघताडघौ शिल्पिनि ॥ ३ । २ । ५५ ॥

### राजघ उपसङ्ख्यानम् ॥ १ ॥

राजघ उपसङ्ख्यानं कर्तव्यम् । राजघः ॥ ५५ ॥

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ३ । २ । ५६ ॥

### ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनोरविशेषात् ॥ १ ॥

ख्युनि च्विप्रतिषेधोऽनर्थकः । किं कारणम् ? 'ल्युट्ख्युनोरविशेषात्' ।

प्र०—आढ्य । उत्तरार्थमिति । उत्तरत्र च्विप्रतिषेधस्य चरितार्थत्वादाढ्यीकरणमिति ल्युटा भाव्यम् । तत्र यदन्यैरुक्तं—'प्रतिषेधसामर्थ्यात्ख्युन्यसति ल्युडपि न भवतीति ल्युटोऽप्ययमर्थतः प्रतिषेध' इति । तदयुक्तम् । रूढिशब्दप्रकारा इति । यथा रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थ-

उ०—आढ्यसुभग । ख्युनभावे करणे ल्युटोऽवश्यं सत्त्वेनाऽच्वाविति व्यर्थमित्याह भाष्ये—ख्युना मुक्त इति । भाष्ये—स एव स्वरः । लित्स्वरनित्स्वराभ्याम् । ल्युटा भाव्यमिति । अवश्यभाव्यमित्यर्थः ।

१—'पाणिलेखेति' पा० । † अर्श आदिभ्योऽच् ५ । २ । १२७

‡ अमनुष्यकर्तृके च ३ । २ । ५३ २—'शकुनिरिति' कीलहार्नपाठः ।

ख्युना मुक्ते ल्युटा भवितव्यं* न चैवाऽस्ति विशेषश्च्व्यन्त उपपदे ख्युनो वा ल्युटो वा¹ । तदेव रूपं स एव च स्वरः† ।

अयमस्ति विशेषः—ल्युटि सतीकारेण भवितव्यं‡ ख्युनि सति न भवितव्यम् । ख्युन्यपि सति [ ईकारेण² ] भवितव्यम् । एवं हि सौनागाः पठन्ति—'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यान'मिति × ।

अयं तर्हि विशेषः—ख्युनि सति नित्यसमासेन भवितव्यम्, उपपदसमासो हि नित्यसमास इति+ । ल्युटि सति न भवितव्यम् । ल्युटचपि भवितव्यम् । गतिसमासोऽपि हि नित्यसमासः, च्व्यन्तं च गतिसंज्ञं भवति§ ॥ मुमर्थं तर्हि प्रतिषेधो वक्तव्यः । ख्युनि सति मुमा भवितव्यं ल्युटि सति न भवितव्यम् ।

मुमर्थमिति चेन्नाऽव्ययत्वात् ॥ २ ॥

मुमर्थमिति चेत्तन्न । किं कारणम् ? 'अव्ययत्वात्' । अनव्ययस्य मुमुच्यते, च्व्यन्तं चाऽव्ययसंज्ञं [ भवति ]¶ ।

---

प्र०—माश्रीयते गच्छतीति गौरिति । तेन गमनक्रियारहितोऽपि गौर्भवति । गोपिण्डाच्चाऽन्योऽर्थो गमनविशिष्टोऽपि गौर्न भवति । तथा ताच्छीलिका अपि क्रियाविषयं ताच्छील्यमुपादाय क्रियावेशाऽभावेपि प्रयुज्यन्ते, केचिदेव तु गतिना संबध्यन्ते,—आगामुकः प्रवर्षुक इति । न तु सर्वे । यथा कामुक इति । न च भवति 'प्रकामुक' इति । अत एव प्रकारग्रहणं सादृश्यार्थम् । रूढिशब्दानां न केषांचिद्गतिसंबन्धो भवति । ताच्छीलिकानां तु भवति केषांचित्, न सर्वेषामिति प्रतिपादयति । द्रव्योपलक्षणाय क्रियायाः प्रवृत्तत्वादात्मातिशयं प्रति आकाङ्क्षाया अभावात्तदतिशयद्योतनार्थं गतिसंबन्धाभावस्ताच्छीलिकेष्वित्यर्थः । प्रदेवदत्त इति । प्रकर्षेण देवनक्रिया न

---

उ०—तद्युक्तमिति । भाष्यविरोधादित्यर्थः । उत्तरार्थत्वं वदता इहार्थत्वाऽभावस्य भाष्यकृता बोधितत्वादिति भावः । केचिदेवेति । स्पष्टं प्रतीयमानक्रियावेशा इति भावः । द्रव्योपलक्षणायेति । अवस्थाविशेषविशिष्टस्योपलक्षणायेत्यर्थः । न तु क्रियाप्रकारको बोध इति तात्पर्यम् । वस्तुतस्त्वभिधानस्वाभाव्यात्केषाञ्चिदेव क्लृप्तप्रयोगाणां गतिसम्बन्धो न सर्वेषामिति भाष्यतात्पर्यम् । भाष्ये—इष्णुजिति । 'भुवश्चे'त्यनेन । 'प्रदेवदत्त' इत्यत्र 'प्र'शब्दस्य देवनक्रियायां दानक्रियायां वाऽन्वयः । नाद्य इत्याह—देवशब्दस्येति । नान्त्य इत्याह—तदवयवस्य चेति । 'तदवयवस्ये'ति बहुव्रीहिः । व्याघ्रादौ तर्हि संज्ञाशब्दे कथं गतिसंबन्धोऽत-

---

* करणाधिकरणयोश्च ३ । ३ । ११७

१—'ल्युटः ख्युनो वा' पा० ।

† लिति; ञ्नित्यादिर्नित्यम् ६ । १ । १९३; १९७

‡ टिड्ढाणञ्द्वयसज् ४ । १ । १५

२—क्वचिन्न ।

× ४ । १ । १५ वा० ६ व्याख्यायाम्, ४ । १ । ८७ सूत्रव्याख्यायां च ।

\+ उपपदमतिङ् २ । २ । १९

§ ऊर्यादिच्विडाचश्च १ । ४ । ६१; कुगतिप्रादयः २ । २ । १८

¶ अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६७; ऊर्यादिच्विडाचश्च; प्राग्रीश्वरान्निपाताः ६१; ५६; स्वरादिनिपातमव्ययम् १ । १ । ३७

उत्तरार्थं तु ॥ ३ ॥

उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः । 'कर्तरि भुवः खिष्णुच्खुकञौ' [ ३ । २ । ५७ ] 'अच्वा'वित्येव । आढ्यीभविता ।

अथेदानीमनेन मुक्ते ताच्छीलिक इष्णुज्विधीयते* सोऽत्र कस्मान्न भवति ? रूढिशब्दप्रकारास्ताच्छीलिकाः, न च रूढिशब्दा गतिभिर्विशेष्यन्ते । न हि भवति देवदत्तः प्रदेवदत्त इति ॥ ५६ ॥

## कर्तरि भुवः खिष्णुच्खुकञौ ॥ ३ । २ । ५७ ॥

किमर्थं खिष्णुजिकारादिः क्रियते न क्स्नु[1]रित्येवोच्येत । तत्रायमप्यर्थः स्वरार्थश्चकारो† न कर्तव्यो भवति ॥ केनेदानीमिकारादित्वं क्रियते ?

इष्णुच इकारादित्वमुदात्तत्वात्कृतं भुवः ।

भवतेरुदात्तत्वादिकारादित्वं[2] भविष्यति‡ ॥ इदं तर्हि प्रयोजनम् । खिदयं क्रियते, तत्र चर्त्वे कृते× सन्देहः स्यात् किद्वा खिद्वेति । सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति, खिदिति व्याख्यास्यामः ।

प्र०—विशेष्यते, देवशब्दस्य रूढिशब्दत्वात्, तदवयवस्य च देवदत्तशब्दस्येत्यर्थः । व्याघ्रादयस्तु सोपसर्गा एव रूढिशब्दा इति तद्व्यतिरिक्तगत्यन्तरयोगस्तेषां नास्ति ॥ ५६ ॥

कर्तरि । नञ इति पञ्चमी । नञ उत्तरस्य स्वरसिद्धर्थमित्यर्थः । अयमपीति । क्स्नुच्प्र-

उ०—आह—व्याघ्रादयस्त्विति ॥ ५६ ॥

कर्तरि भुवः । भाष्ये—'न च क्ष्णु'रिति पाठः । उदात्तत्वादिति । तेन 'एकाच उपदेश' इत्यस्याऽप्रवृत्तिरिति भावः । ननु 'कृत्योकेष्णु'जिति सूत्रेण नञः स्वराऽभावादाह—नञ उत्तरस्येति । अन्तोदात्तविधायकमिदम्पूर्वपदप्रकृतिस्वरापवादः । ननु 'तदनुबन्धक'परिभाषया इष्णुच एव ग्रहणं भविष्यति न खिष्णुच इत्यत आह—इकारोच्चारणेति । चकारोच्चारणेनैव द्वयोर्ग्रहणे लक्षणप्रतिपदोक्तपरिभाषातदनुबन्ध-

* भुवश्च ३ । २ । १३८

१—'क्स्नु'रिति पा० । 'न च क्ष्णु'रिति नागेशाऽभिमतः पाठः । क्वचित्तु 'न च क्ष्णु'रिति पाठो दृश्यते चकारादिः । स नैवोचितः 'स्वरार्थश्चकारो न कर्तव्यो भवती'ति भाष्यविरोधात् । तथा च चकारादित्वे खकारस्येत्सञ्ज्ञाऽपि न प्राप्नोति । † चितः ६ । १ । १६३; आद्युदात्तश्च ३ । १ । ३

२—'भवतिरुदात्तस्तस्योदात्तत्वादिड् भविष्यति' पा० ।

‡ आर्धधातुकस्येड् वलादेः ७ । २ । ३५ × खरि च ८ । ४ । ५५

नन्त्वस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥ १ ॥

इदं तर्हि प्रयोजनं 'कृत्योकेष्णुच्चार्वादयश्च' [ ३ । २ । १६० ] इत्येष स्वरो यथा स्यात् ॥ एतदपि नास्ति प्रयोजनम् । अयमपीटि कृते षत्वे* [ णत्वे ] चेष्णुजेव भविष्यति ॥ न सिध्यति 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति । अथवाऽसिद्धं खल्वपि षत्वं, तस्याऽसिद्धत्वादिस्नुजेव भवति ।

इष्णुच इकारादित्वमुदात्तत्वात्कृतं भुवः ।
नन्त्वस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥ १ ॥

## स्पृशोऽनुदके क्विन् ॥ ३ । २ । ५८ ॥

किमर्थो नकारः ? स्वरार्थः । 'ञ्नित्ती'त्याद्युदात्तत्वं यथा स्यात्† ॥ नैतदस्ति प्रयोजनम् । एकाचोऽयं विधीयते, तत्र नाऽर्थः स्वरार्थेन नकारेणाऽनुबन्धेन । धातुस्वरेणैव सिद्धम्‡ ॥ यस्तर्ह्यनेकाज्दधृगिति ? वक्ष्यत्येतत्,—'धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यत' इति × ।

विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः ? 'क्विन्प्रत्ययस्य कुः' [ ८ । २ । ६२ ] इति । 'क्विप्रत्ययस्य कु'रित्युच्यमाने सन्देहः स्यात् क्विबेष प्रत्ययः क्विब्वेति । सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि

प्र०—त्ययः क्रियते, चकारः सामान्यग्रहणार्थ इति मन्यते । खिष्णुचि तु कृते इकारोच्चारणसामर्थ्यात्तदनुबन्धकपरिभाषा नाश्रीयते ॥ ५७ ॥

स्पृशोनु । संदेहः स्यादिति । किमेकपकारको निर्देश उत द्विपकारक इत्यर्थः ।

उ० —कपरिभाषापाये च खिष्णुचः करणेन षत्वणत्वयोरसिद्धत्वाऽभावे च सिद्धे इकारोच्चारणं व्यर्थमिति 'अयमपीटि' इति भाष्यतात्पर्यम् । न सिध्यतीत्यादि त्वेकदेश्युक्तिरिति बोध्यम् ॥ ५७ ॥

स्पृशोऽनु । एकाचोऽयमिति भाष्ये । यङ्लुगन्तात्त्वयं न क्विन्, अनभिधानादिति भावः । ननु 'क्विग्रहणे क्विपोऽपि ग्रहणं स्यादत आह—तदनुबन्धेति । अत्र सूत्रे 'कर्मणी'ति सम्बध्यत एव । 'मन्त्रस्पृ'गित्यादि

* आदेशप्रत्यययोः ८ । ३ । ५६　　१—क्वचिन्न ।
२—'षत्वस्याऽ' इति कीलहार्नपाठः ।　　३—'भविष्यति' पा० ।
† ञ्नित्यादिर्नित्यम् ६ । १ । १६७　　‡ धातोः ६ । १ । १६२
× ३ । २ । ५६ वा० १

सन्देहादलक्षण'मिति, क्वि'प्रत्ययस्येति व्याख्यास्यामः ॥ ५८ ॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ३ । २ । ५९ ॥

दधृगिति किं निपात्यते ?

### धृषेर्द्विर्वचनमन्तोदात्तत्वं च ॥ १ ॥

धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते ॥ ५९ ॥

## त्यदादिषु दृशोऽनालोचने कञ्च ॥ ३ । २ । ६० ॥

किमर्थो ञकारः ? स्वरार्थः । ञ्नितीत्याद्युदात्तत्वं यथा स्यात्* । नैतदस्ति प्रयोजनम् । नकारेणाऽप्येष स्वरः सिद्धः ।

विशेषणार्थस्तर्हि भविष्यति । क्व विशेषणार्थेनार्थः ? 'कन्कर'विति† । कन्करविति ह्युच्यमाने याचितिकाः‡ अत्रापि प्रसज्येत ।

### दृशेः समानान्ययोश्चोपसङ्ख्यानम्[३] ॥ १ ॥

दृशेः समानाऽन्ययोश्चोपसङ्ख्यानं कर्तव्यम् । सदृक् सदृशः × । अन्यादृक् अन्यादृशः+ ।

---

प्र०—व्याख्यानत इति । तदनुबन्धकपरिभाषया च क्विपो ग्रहणाऽभावः ॥ ५८ ॥

त्यदादिषु । ञकारस्य कार्यद्वयं प्रति युक्तत्वं प्रश्नद्वारेण प्रदर्श्यते—किमर्थ इति । कृदर्थानुपपत्तिस्त्विवति । यः कृतोऽर्थः स तादृशादिशब्दवाच्यो न भवति । तादृशादयो हि

---

उ०—तु क्विपा सिद्धम् । 'क्विन्प्रत्ययस्ये'ति बहुव्रीह्याश्रयणात्कुत्वमपि सिद्धम् ॥ ५८ ॥

ऋत्विग्द । अन्तोदात्तत्वञ्चेति । इदञ्च क्विनो नकारसत्त्वे उक्तम् । स्नुगुष्णिहोर्निपात्यमानवस्तुनः स्पष्टत्वात्तन्नोक्तम् । 'क्रुञ्चा'मिति निपातनान्नलोपाऽभाव इति 'परेश्चे'ति सूत्रे भाष्ये स्पष्टम् ॥ ५९ ॥

त्यदादिषु । ञकारः केवलस्वरार्थ उताऽन्यार्थोऽपीति विचारतात्पर्यमाह—ञकारस्येति । भाष्ये—[२]याविका अत्राऽपीति । न च द्व्यनुबन्धकत्वादस्य कनो ग्रहणं न स्यादिति वाच्यं, येनाऽनुबन्धेन द्व्यनुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः । यः कृतोऽर्थं इति । प्रकृते दृशेः कर्तेत्यर्थः । भाष्ये—इवाऽर्थेऽयं तद्धित इति ।

---

१—'क्विन्प्रत्ययस्य' पा० । * ञ्नित्यादिर्नित्यम् । ६ । १ । १९७ † टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४ । १ । १५ २—'याविका' इति पाठभेदः । स एव चोद्द्योतसम्मतः । ‡ अपमित्ययाचिताभ्यां कक्कनौ ४ । ४ । २१ ३—'उपसङ्ख्यान'मिति क्वचित्कम् । × दृग्दृशवतुषु ६ । ३ । ८९ + आ सर्वनाम्नः ६ । ३ । ९१

**कृदर्थानुपपत्तिस्तु ॥ २ ॥**

कृदर्थस्तु नोपपद्यते । दृशेः कर्तरि प्राप्नोति†† ।

**इवार्थे तु तद्धितः ॥ ३ ॥**

इवार्थे त्वयं तद्धितो द्रष्टव्यः । स इवायं तादृक् तादृशः । अन्य इवायमन्यादृक् अन्यादृश इति ।

अथवा युक्त एवात्र[3] कृदर्थः । कर्मकर्ताऽयम् । तमिवेमं पश्यन्ति जनाः, सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यति—तादृक् । अन्यमिवेमं पश्यन्ति जनाः, सोऽयमन्य इव दृश्यमानोऽन्यमिवात्मानं पश्यति—अन्यादृगिति ॥ ६० ॥

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥ ३ । २ । ६१ ॥

**सदादिषु सुब्ग्रहणम् ॥ १ ॥**

सदादिषु सुब्ग्रहणं कर्तव्यम् । 'होता वेदिषत्'† । 'अतिथिर्दुरोणसत्'† ।

प्र०—सदृशलक्षणमर्थमाचक्षते न तु दर्शनक्रियायां कर्तारमित्यर्थः । कर्मकर्तेति । कर्मण एव सौकर्यात्कर्तृत्वविवक्षायां कर्तर्येव प्रत्ययः क्रियत इत्यर्थः ॥ ६० ॥

सत्सूद्विष । सदादीनां केषांचित्सकर्मकत्वात्कर्मण्येवोपपदं प्राप्नोतीति मत्वाह—सदादिष्विति । वेदिषदिति । वेद्यां सीदतीति क्विप् । पूर्वपदादिति षत्वम् । दुरोणे सीदतीति दुरोण-

उ०—अयं भावः—यथा 'दृग्दृशवतुष्वि'ति सूत्रे 'दृक्षे' इति वार्तिकबलादनुक्तोऽपि क्सः कल्प्यते, तथा इवाऽधिकारे तद्धिते त्यदादिभ्यो दृग्दृशट्दृक्षा प्रत्ययाः कल्प्याः । दृशटष्टित्त्वाच्च ङीपपि सिद्ध इति 'टिड्ढे'तिसूत्रे कञ्ग्रहणमपि न कार्यमिति लाघवमिति । भाष्ये—तमिवात्मानं पश्यतीति । प्रेरणावृद्धावप्यन्तर्भावितण्यर्थत्वान्न णिच् । तमिवात्मानं जनान्दर्शयतीत्यर्थः । अत्र प्रेरणावृद्धथाऽधिकार्यत्वेनाऽज्ञानार्थत्वम् । कर्मण्युपपदे एवाऽयम्, तेन निवृत्तप्रेषणतया 'स इव पश्यती'ति विग्रहोऽनुचितः, 'सत्सूद्विषे'ति सूत्रे एव'कर्मणी' त्यस्य निवृत्तेः'सत्सू' इति सूत्रे भाष्ये ध्वनितत्वेनाऽत्राऽनुवृत्तेः सत्त्वात् । ननु 'कर्मकर्त्ते'ति व्यवहारोऽनुपपन्नः, कर्मत्वाऽभावात्कर्मवद्भावाऽभावाच्चेत्यत आह—कर्मण एवेति ॥ ६० ॥

सत्सू । कर्मण्येवोपपदमिति । 'कर्मणी'त्यधिकारादिति भावः । सुब्ग्रहणन्तु तन्निवृत्तिद्योतनायेति बोध्यम् । वस्तुतः सुब्ग्रहणमेवाऽत्राऽनुवर्त्तते, 'कर्मणीति निवृत्तमित्यन्वाख्यानमेवैतत् । अत्र सूत्रे 'उपसर्गेऽपि'

†† कर्त्तरि कृत् ३ । ४ । ६७ १—'तु' क्वचिन्न ।
२—क्वाचित्कम् । ३—'एवाऽयं' पा० ।

† हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । (ऋ. सं ४ । ४० । ५) 'दुरोणे' इति निघण्टौ गृहनामसु पठितम् ( ३ । ४ ) । निरुक्तेऽपि ८ अ० ५खण्डे 'दुरोणे=गृहे' इतिं व्याख्यातम् ।

न तर्हीदानीमुपसर्गेऽपीति वक्तव्यम् ? वक्तव्यं च । किं प्रयोजनम् ? 'ज्ञापकार्थम्' । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यो'ऽन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? वदः सुप्यनुपसर्गग्रहणं चोदितं* तन्न वक्तव्यं भवति ॥ ६१ ॥

## अदोऽनन्ने ॥ ३ । २ । ६८ ॥ क्रव्ये च ॥ ३ । २ । ६९ ॥

किमर्थमिदमुच्यते, नाऽदोऽनन्न इत्येव सिद्धम् ? न सिध्यति । छन्दसीत्येतदनुवर्तते‡ भाषार्थोऽयमारम्भः । पूर्वस्मिन्नेव योगे× छन्दोग्रहणं निवृत्तम् । तच्चावश्यं निवर्त्यम्, आमादित्येवमर्थम्¹ ॥ अत उत्तरं पठति—

**अदोऽनन्ने क्रव्येग्रहणं² वासरूपनिवृत्त्यर्थम् ॥ १ ॥**

अदोनन्ने क्रव्येग्रहणं क्रियते वासरूपो+ मा भूदिति ॥ ६८ ॥ ६९ ॥

प्र०—सत् । दुरोणं गृहम् । तन्न वक्तव्यमिति । अनुपसर्गग्रहणानुवृत्तिमन्तरेणैवोपसर्गनिवृत्तेः सिद्धत्वादनुवृत्तिप्रदर्शनमपि न युज्यते । यत्र चानुपसर्गग्रहणानुवृत्तिर्न संभाव्यते,—'स्पृशोऽनुदके क्वि'न्नित्येतदपि ज्ञापनस्य प्रयोजनम् । तेनोपस्पृशतीत्यादौ क्विन्न भवतीति ॥ ६१ ॥

क्रव्ये च । वासरूपो मा भूदिति । तेन 'क्रव्याद' इत्यण्न भवतीत्यर्थः ॥ ६८ ॥ ६९ ॥

उ०—ग्रहणम् 'अनुसर्गे' इत्यस्य 'आतो नुपसर्गे' इति सूत्रादनुवर्त्तमानस्याऽग्रे निवृत्तिद्योतनाय । भाष्यकार एतज्ज्ञापकेनैव सुब्ग्रहणस्योपसर्गेतरसुप्परत्वं व्याख्याय 'अनुपसर्गे' इत्यस्याऽनधिकारं द्योतयति । तत्फलं ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेन 'प्रष्ठ' इत्यादिसिद्धिः । ननु 'वदः सुपी'त्यत्र 'गदमदे'त्यतोऽनुपर्गग्रहणाऽनुवृत्तिप्रदर्शनपरं वार्तिकं नाऽपूर्वकरणपरमत आह—अनुपसर्गेति । यत्र चेति । यत्र 'स्पृशोऽनुदके इत्यादावनुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते एतदपि ज्ञापनस्य प्रयोजनमित्यन्वयः । इदञ्चिन्त्यम् । अत्रापि 'आतोनुपसर्गे इत्यतोऽनुवृत्तिसम्भवात् ॥ ६१ ॥

अदोऽनन्ने । भाष्ये—आमादित्येवमर्थमिति । लोके एतत्सिद्ध्यर्थमित्यर्थः । क्रव्याद इत्यणेनेति । आममांसभक्षणकर्त्त्रर्थे इति भावः । पक्वमांसशब्दे उपपदेऽदेरण्, उपपदस्य क्रव्यादेशः । पृषोदरात्वादित्यत्र तु न भाष्यानुग्रहः, क्रव्यशब्देन तदबोधाच्च । एवञ्च 'क्रव्याद' इत्यसाध्वेवेति बहवः ॥ ६८ ॥ ६९ ॥

---

* ३ । १ । १०६ वा० १ ‡ छन्दसि सह ३ । २ । ६३
× अदोऽनन्ने ३ । २ । ६८ १—'आमात्सस्यादित्येवमर्थ'मिति पा० ।
२—'क्रव्यग्रहणं' पा० । + कर्मण्यण् ३ । २ । १

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ३ । २ । ७१ ॥

### श्वेतवहादीनां डस् ॥ १ ॥

श्वेतवहादीनां डसक्तव्यः । श्वेतवा इन्द्रः ।

### पदस्य च ॥ २ ॥

पदस्येति च वक्तव्यम् । इह मा भूत् । श्वेतवाहौ श्वेतवाह इति । किं प्रयोजनम् ?

### वैर्थम् ॥ ३ ॥

रुर्यथा स्यात्* ॥ क्रियते वैर्थं निपातनम्, 'अवयाः श्वेतवाः पुरोडाश्च [ ८ । २ । ६७ ] इति । आतश्च वैर्थम्, उक्थशस्शब्दस्य सामान्येन* रुः सिद्धो न तस्य निपातनं क्रियते । तन्न वक्तव्यम् ।

अवश्यं तद्वक्तव्यं दीर्घार्थम् । नैतदस्ति प्रयोजनम् । सिद्धमत्र दीर्घत्वम् 'अत्वसन्तस्य चाधातोः' [ ६ । ४ । १४ ]इति । यत्र तेन न सिध्यति तदर्थम् । क्व च तेन न

प्र०—मन्त्रे । डस्वक्तव्य इति । ण्विन्प्रत्ययबाधनार्थ इति भावः । पदस्येति । भाविपदाश्रयेणेदमुच्यते । यत्र तु डसन्तस्य पदत्वं भविष्यति तत्र डस्प्रत्ययोऽन्यत्र ण्विन्नेत्यर्थः । तन्न वक्तव्यमिति । डसैव सिद्धत्वान्निपातनं न कर्तव्यमित्यर्थः ।

वक्तव्यश्चेति । अवया इत्यादीनि प्रथमान्तान्येव निपात्यन्त इति 'श्वेतवोभ्या'मित्यादिरूपमन्यथा न स्यात् । अथापि पदमात्रविषयं निपातनमाश्रीयते, तथाप्यत उत्त्वं विधीयमानमाकारान्न स्यात् । तस्मात्संबुद्ध्यर्थं निपातनमपि कर्तव्यम् । डसप्युत्त्वार्थो वक्तव्य । 'उक्थशा'इत्ये-

उ०—मन्त्रे श्वेत । भाष्ये—श्वेतवहादीनामिति । अनन्तरयोगे षष्ठी । पदस्येत्यस्य तदन्ते पदत्वस्य सम्भावनायामित्यर्थः । केचित्तु तत्संबन्धिनो ण्विनः स्थाने डस्वक्तव्य इत्यर्थ इत्याहुः । ननु डसुत्पत्तिवेलायां कथम्पदत्वमत आह—भावीति । भाष्ये—क्रियते वैर्थमिति ! तेन हकारादीनामेव रुत्वमिति भावः । भाष्ये—उक्थशस्शब्दस्येति । तत्प्रकृतिकस्येत्यर्थः । तन्न वक्तव्यमिति । ननु 'वासरूप'न्यायेन डस्विषये ण्विनोऽपि सत्त्वेन तदर्थं निपातनमावश्यकमिति चेन्न; एतद्भाष्यप्रामाण्येनाऽऽदेशपक्षस्यैवौचित्यात् । कैयटे 'डस्प्रत्यय'इति व्यवहारः स्थानिवद्भावलब्धप्रत्ययत्वेनेति बोध्यम् । अवश्यं तद्वक्तव्यमिति । डसारम्भेऽपीत्यर्थः । न तर्हीदानीमिति । हादीनामेव रुत्वं विधेयम्, दीर्घस्तु ण्विनि वृद्ध्यैव सिद्ध इति भावः । अन्यथा—डसभावे । इत्येतदपि संबुद्ध्यर्थमिति । पदन्ते डसन्तत्वादिति भावः ।

१—क्वचिन्न । २—केचित्तु 'पदस्य च वैर्थं'मित्येकमेव वार्तिकं पठन्ति ।

* ससजुषोरुः ८ । २ । ६६

सिध्यति ? संबुद्धौ । हे श्वेतवा इति ॥ न तर्हीदानीं ङस्वक्तव्यः ? वक्तव्यश्च । किं प्रयोजनम् ? उत्वार्थम्† । श्वेतवोभ्याम् श्वेतवोभिः ॥ ७१ ॥

## स्थः क च ॥ ३ । २ । ७७ ॥

किमर्थं स्थः कक्विपावुच्येते न क्विप्सिद्धो 'ऽन्येभ्योपि दृश्यते' [ ३ । २ । १७८ ] इति, कश्च 'आतोऽनुपसर्गे कः' [ ३ । २ । ३ ] इति ? न सिध्यति । विशेषविहितः कः सामान्यविहितं क्विपं बाधते । वासरूपेण क्विबपि भविष्यति ।

इदं तर्हि—शंस्थः शंस्थाः । उक्तमेतत् 'शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थ'मिति‡ । स यथैवाऽच् टं बाधत एवं कक्विपावपि बाधेत ॥ ७७ ॥

प्र०—तदपि संबुद्ध्यर्थं निपातनं कर्तव्यम् । 'उक्थशोभ्या'मित्यादिसिद्धये ङसपि कर्तव्यः । ण्विनि हि नलोपे निपात्यमाने वृद्धौ सत्यामुत्वं न स्याद्यदि मन्त्रे दर्शनमस्ति ॥ ७१ ॥

स्थः क च । शंस्था इति । 'ईत्वमवकारादा'विति वचनाद्भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाऽभावः ॥ ७७ ॥

उ०—ननु ङसेव मास्तु, तत्राऽऽह—उक्थशोभ्यामिति । यदि मन्त्रे इति । 'उक्थशस्शब्दस्ये'ति भाष्याच्छंसेर्नलोपोपधावृद्ध्यभावयोर्निपातनाच्छासेर्वोपधाह्रस्वनिपातनाद्वृद्ध्यभावे 'उक्थशोभ्या'मित्यस्य सिद्धेः, शासेर्विचि संबुद्धौ 'उक्थशा' इत्यस्यापि सिद्धेर्द्वयमपि न कार्यमित्यन्ये ॥ ७१ ॥

स्थः क च । सप्तमीनिर्देशादेव तदादिविधौ लब्धे पुनर्वकारादाविति वचनं मुख्यवकारादिप्रतिपत्त्यर्थमिति वदन्तम्प्रत्याह—भाष्यकारवचनेति । यद्वा पावान इति प्रयोगस्य वनिपा सिद्धिमाश्रित्य तत्प्रत्याख्यानादाह—भाष्येति । अत एव 'ध्यायतेः सम्प्रसारण'मिति वार्तिके 'दधातेर्वा धी'रिति भाष्ये क्विप्यपीत्त्वं कृतम् । वस्तुतो भाष्ये क्विप्पदेन सादृश्याद्विजुच्यते इतीत्वाऽप्रसक्तिरेवाऽत्रेति बोध्यम् । भाष्ये—कक्विपाविति । 'आतोऽनुपसर्गे'इति 'क्विप्चे'ति विहितौ । तत्र कस्य बाधे 'शंस्थ' इति न सिध्येत्तदर्थं स्थः को विधेयः । कस्य चाऽन्बाधकत्वेन क्विनपवादत्वाऽभावात्परत्वेन क्विपो नित्यबाधवारणाय क्विनपि विधेय इति भावः । न चाऽत्रैव 'शंस्था' इत्यस्य सिद्धत्वेन क्विपो बाधे फलाऽभावः । शंस्थाशब्दाच्छसि आतो लोपानापत्तेः । 'कृदति'ङिति सूत्रस्थभाष्योक्तरीत्यैकादेशस्य स्थानिवत्त्वात् । 'पुरस्ता'दिति न्यायेन टस्यैव तेन बाध इति तु न शङ्क्यं, 'येन नाऽप्राप्ति'न्यायेन क्विप एव बाध इत्यस्याऽपि वक्तुं शक्यत्वात् । तस्माद्बाध्यसामान्यचिन्तयोभयोरपि स बाधकः स्यादिति तात्पर्यम् ॥ ७७ ॥

---

† हश च ६ । १ । ११४ १—'बाधेत' पा० ।
‡ ३ । २ । १४ वा० १

## सुप्यजातौ णिनिस्ताच्छील्ये ॥ ३ । २ । ७८ ॥

सुपीति× वर्तमाने पुनः सुब्ग्रहणं किमर्थम् ? अनुपसर्ग इत्येवं तदभूत्, इदं सुब्मात्रे यथा स्यात्,—प्रत्यासारिण्यः उदासारिण्यः ।

### णिन्विधौ साधुकारिण्युपसङ्ख्यानम् ॥ १ ॥

णिन्विधौ साधुकारिण्युपसङ्ख्यानं कर्तव्यम् । साधुकारी साधुदायी ।

### ब्रह्मणि वदः ॥ २ ॥

ब्रह्मणि वद उपसङ्ख्यानं कर्तव्यम् । ब्रह्मवादिनो वदन्ति ॥ ७८ ॥

## व्रते ॥ ३ । २ । ८० ॥

किमुदाहरणम् ? अश्राद्धभोजी । किं योऽश्राद्धं भुङ्क्ते सोऽश्राद्धभोजी । किं चातः ? यदाऽसावश्राद्धं न भुङ्क्ते तदाऽस्य व्रतलोपः स्यात् । तद्यथा—स्थायी[1] यदा न तिष्ठति तदास्य व्रतलोपो भवति ।

प्र०—सुप्य । णिन्विधाविति । अताच्छील्यार्थमिदम् । एवं–'ब्रह्मणि वद'इति ॥ ७८ ॥

व्रते । उदाहरणे विचार्यमस्तीति प्रश्नः—किमिति । यदाऽसाविति । ननु बुभुक्षाप्रयुक्तं श्राद्धाऽश्राद्धभोजनं प्रसक्तम्, तत्राऽश्राद्धं भुङ्क्त इत्यनेन श्राद्धभोजनं निषिध्यते । यथा 'पञ्च पञ्चनखा भक्ष्या' इति शशादिव्यतिरिक्तपञ्चनखभक्षणं निवर्त्यते । तत्र कथं व्रतलोपः स्यात् । 'स्थायी'त्यत्र तु स्थानविपरीतगमनाचरणे युक्तो व्रतलोपः । उच्यते । 'अश्राद्धं मया भोक्तव्य'मिति येन संकल्पः कृतः स यदा बुभुक्षायां सत्यां यस्मिन्नहन्यश्राद्धं न भुङ्क्ते तदा तस्य स्यादेव व्रतलोपः ।

उ०—सुप्यजातौ । भाष्ये—अनुपसर्ग इत्येवमिति । 'उपसर्गेऽपी'ति ग्रहणाज्ज्ञापकादित्यर्थः । एतेन 'सुब्ग्रहणमुपसर्गनिवृत्त्यर्थ'मिति वृत्तिकारोक्तमपास्तम् ॥ ७८ ॥

व्रते । स्थायीत्यत्रेति । नन्वत्र कथं णिनिः सुप उपपदस्याऽभावादिति चेन्न, उत्तरसूत्राद्बहुलग्रहणमपकृष्य केवलादपि विधानेनाऽदोषात् । 'उत्थित एवाऽद्य भविष्यामि न तूपवेक्ष्यामी'त्येवं संकल्परूपं व्रतमेतत् । 'तिष्ठन् मूत्रयत' इत्यादिवदुत्थाने स्थाधातुरत्रेति परे । ग्रह्यादिणिन्यन्तस्यैव वा प्रकरणाद्व्रतपरत्वम् । परिसङ्ख्यया पूर्वपक्षः, विधिमाश्रित्य परिहारः । यस्मिन्नहनीति । एकादश्यादौ । भाष्ये—तद्यथा स्थायीति ।

× सुपि स्थः ३ । २ । ४

१—'स्थण्डिलस्थायी यदा स्थण्डिले न तिष्ठति तदा' पा० । प्रदीप उद्द्योते च दर्शनात् 'स्थायी' इत्येव पाठ उचितः ।

एवं तर्हि णिन्यन्तेन समासो भविष्यति—न श्राद्धभोजी अश्राद्धभोजीति। नैवं शक्यम्। स्वरे हि दोषः स्यात्। अश्राद्धभोजीत्येवं+ स्वरः प्रसज्येत, अश्राद्धभोजीति* चेष्यते।

एवं तर्हि नञ एवाऽयं भुजिप्रतिषेधवाचिनः श्राद्धशब्देनाऽसमर्थसमासो,—न भोजी श्राद्धस्येति। स तर्ह्यसमर्थसमासो वक्तव्यः ? यद्यपि वक्तव्योऽथवैतर्हि बहूनि प्रयोजनानि। कानि ? असूर्यंपश्यानि मुखानि। अपुनर्गेयाः श्लोकाः। अश्राद्धभोजी ब्राह्मणः। सुंडनपुंसकस्य [ १। १। ४३ ] इति॥ ८०॥

## आत्ममाने खश्च॥ ३। २। ८३॥

आत्मग्रहणं किमर्थम् ? परमाने मा भूदिति[2]। क्रियमाणेऽप्यात्मग्रहणे परमाने

प्र०—न श्राद्धभोजीति। समासार्थं प्रक्रियावाक्यमिदं न तु लौकिकम्। न हि केवलः श्राद्धभोजिशब्दो व्रतविषय उपपद्यते। अश्राद्धभोजिशब्दस्यैव व्रतविषयत्वात्। एवं स्वर इति। अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तं पदं स्यात्। कृदुत्तरपदप्रकृतिस्वरत्वेनाऽन्तोदात्तत्वं चेष्यत इत्यर्थः। ननु च 'णिनी'त्यनेन पूर्वपदाद्युदात्तत्वेनैव भाव्यमिति नास्ति स्वरभेदः ! अत्राहुः—यदा णिनीत्यत्र संज्ञायामित्यनुवर्तते तदाऽसंज्ञायामस्ति स्वरभेदः। अथ नानुवर्तते स्वरभेदाऽभावः। भोजीति। एतदपि भुजिना संबन्धं नञः प्रदर्शयितुं प्रक्रियावाक्यमुपात्तम्। न हि केवलस्य भोजिशब्दस्य प्रयोगः, सुप्युपपदे प्रत्ययविधानात्। तदेतदुक्तं भवति,—न श्राद्धं भुङ्क्त इति वाक्यं कृत्वा नञः श्राद्धशब्देनाऽसमर्थसमासं विधायाऽश्राद्धशब्द उपपदे णिनिः कर्तव्यः। णिनीत्यत्र संज्ञानुवृत्तौ सत्यामत्र कृत्स्वरः॥ ८०॥

आत्ममाने। आत्मशब्दः प्रत्यगात्मवचनः परव्यावृत्तिं करोति। कर्मकर्तरीति। यदा

उ०—'स्थायी' त्यत्रोपपत्तिरुक्ता। 'आस्थायी'ति पदमन्ये। 'स्थण्डिलस्थायी'ति पाठ इति केचित्, तदुभयमपि भाष्यकैयटविरुद्धम्। व्रतविषय इति। न हि तादृशव्रतसम्भवः, व्रते णिनेः प्रकृतत्वाच्च। प्रागुक्तसंकल्पस्त्वप्रसिद्ध एवेति भावः। अथ नाऽनुवर्त्त इति। 'उपमानं शब्दार्थ' इति सूत्रस्थषाष्ठभाष्येऽयमपि पक्षो दृश्यत इति भावः। अत्र पक्षे स्वरभेदोक्तिरेकदेश्युक्तिरिति बोध्यम्। षाष्ठभाष्यं चैकदेश्युक्तिः। भाष्ये भुजिप्रतिषेधवाचिन इति। तदर्थबोधकस्य नञ इत्यर्थः। सुप्युपपद इति। बहुलग्रहणात्तु क्वचिदिष्टसिद्धय इति भावः॥ ८०॥

आत्ममाने। पूर्वं कर्मण इदानीं कर्तृत्वाऽभावेन युगपदेकस्य कर्मकर्तृत्वविरोधेन चेदमसङ्गतमत

+ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६। २। २

* गतिकारकोपपदात् कृत् ६। २। १३९

१—असमर्थसमासं सूत्रकारोऽपि करोतीति न तत्राप्रामाणिकतेति दर्शयितुमाह–'सुडनपुंसकस्ये'ति।

२—इति क्वाचित्कः।

प्राप्नोति । किं कारणम् ? 'आत्मन' इतीयं कर्तरि षष्ठी, 'मान' इत्यकारो भावे† । स यद्येवात्मानं मन्यतेऽथापि परमात्मन एवाऽसौ मानो भवति । नैष दोषः । आत्मन इति कर्मणि षष्ठीयम् । कथम् ? 'कर्तृकर्मणोः कृति' [ २ । ३ । ६५ ] इति । ननु च कर्तर्यपि वा एतेनैव विधीयते तत्र कुत एतत् कर्मणि भविष्यति न पुनः कर्तरीति ? ।

एवं तर्हि—

## कर्मकर्तरि च ॥ १ ॥

कर्मकर्तरि चेति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । आत्मन इति कर्मणि षष्ठी । कथम् ? 'कर्तृकर्मणोः कृती'ति । ननु चोक्तं 'कर्तर्यपि वा एतेनैव विधीयते, तत्र कुत एतत्कर्मणि भविष्यति न पुनः कर्तरी'ति । आत्मग्रहणसामर्थ्यात्कर्मणि विज्ञास्यते ।

एवमपि कर्मकर्तृग्रहणं कर्तव्यं कर्मापदिष्टो‡ यग्यथा स्यात्, श्यन्माभूदिति । कश्चात्र विशेषो यको वा श्यनो वा ? यकि सत्यन्तोदात्तत्वेन भवितव्यं× श्यनि सत्याद्युदात्तत्वेन+ ॥ श्यन्यपि सत्यन्तोदात्तत्वेनैव भवितव्यम् । कथम् ? खशः स्वरः श्यनः स्वरं बाधिष्यते । सति शिष्टत्वाच्छ्यनः स्वरः प्राप्नोति । आचार्यप्रवृत्तिर्ज्ञापयति—'सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधत' इति यदयं तासेः परस्य लसार्वधातुकस्याऽनुदात्तत्वं शास्ति* । लसार्वधातुक एवैतज्ज्ञापकं

प्र०—प्रत्ययार्थः कर्ता, आत्मानमेव पाण्डित्यादियुक्तं मन्यते तदाऽसौ कर्मकर्ता भवति । तत्र यदि कर्तरि षष्ठी स्यात्तदात्मग्रहणमनर्थकं स्यात् । कर्तृसम्बन्धाऽव्यभिचारान्मननक्रियायाः । कर्मापदिष्ट इति । लान्तस्य कर्ता कर्मवदित्यनपेक्ष्योक्तं, श्यनैव सिद्धेर्वक्ष्यमाणत्वात्, यकः सिद्धान्तत्वाऽ-

उ०—आह—यदेति । केवलविशिष्टभेदेन शब्दभेदेन वा न कर्तृकर्मविरोध इति भावः । आत्मग्रहणमनर्थकमिति । यद्यपि 'उभयप्राप्ता'विति नियमादपि न कर्त्तरीति वक्तुं शक्यं, तथाऽपि उभयोः प्रयोगाऽभावादत्र-तदप्राप्तिः । किञ्च तेन षष्ठ्यां समासाऽप्राप्तिः, 'कर्मणि चे'ति निषेधादित्याशयमाहुः । तद्वक्ष्यति भाष्यकृत्—'आत्मग्रहणसामर्थ्यात्कर्मणी'ति । लान्तस्येति । इदमुपलक्षणं कर्मस्थया क्रियया तुल्यक्रियत्वस्याऽपि । वस्तुतः 'कर्मकर्तृग्रहण'मिति भाष्यस्य कर्मवद्भावो वक्तव्य इत्यर्थः । यथाऽस्याऽपि कर्मकर्तृत्वेन ग्रहणं व्यवहारो भवति तथा वक्तव्यमित्यक्षरार्थः । श्यनैव तत्फलसिद्ध्या तत्प्रत्याख्यानम् । भाष्ये—यदयं तासेरिति ।

† भावे ३ । ३ । १८　　१—'कर्मकर्त्तरि खश्चे'ति' पा० ।　　‡ सार्वधातुके यक् ३ । १ । ६७

× आद्युदात्तश्च ३ । १ । ३　　+ ञ्नित्यादिर्नित्यम् ६ । १ । १९७

* तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ६ । १ । १८६

स्यात् । 'ने'त्याह । अविशेषेण ज्ञापकम् ॥ ८३ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

## भूते ॥ ३ । २ । ८४ ॥

भूत इत्युच्यते कस्मिन् भूते ? काले । न वै कालाधिकारोऽस्ति ।

एवं तर्हि 'धातोः' [ ३ । १ । ९१ ] इति वर्तते । धातौ भूते । धातुर्वै शब्दो न च शब्दस्य भूतभविष्यद्वर्तमानतायां[1] संभवोऽस्ति । शब्देऽसंभवादर्थे कार्यं विज्ञास्यते । कः पुनर्धात्वर्थः ? क्रिया । क्रियायां भूतायाम् ॥ यद्येवं—

प्र०—भावादुपेक्षणीयत्वात् । अविशेषेणेति । सार्वधातुकमात्र इत्यर्थः ॥ ८३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याऽध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

भूते । यस्य स्वसत्ता व्यपवृक्ता तत्सर्वं भूतशब्दोनोच्यते । तत्र विशेषज्ञानाय पृच्छति—कस्मिन्निति । इतर आह—काल इति । तस्यैव भूतादिशब्दवाच्यत्वेन सुप्रसिद्धत्वादिति भावः । तत्र केचिन्नित्यं कालं पदार्थानामनुज्ञाप्रतिबन्धार्थाभ्यां स्थित्युत्पत्तिप्रलहेतुमाचक्षते । तत्र संसर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो भूतादिव्यपदेशश्च । अन्ये तु प्रसिद्धपरिमाणक्रिया

उ०—लावस्थायां स्यतास्योरुत्पत्तौ तु वाचनिकमेवेदमिति बोध्यम् ॥ ८३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते तृतीयास्याध्यायस्य
द्वितीये पादे प्रथममान्हिकम् ।

भूते । यस्य स्वसत्ता व्यपवृक्तेति । अतीतेत्यर्थः । तस्यैवेति । अन्यत्र तत्कालवृत्तित्वेन भूतशब्दप्रयोगो गौण इति भावः । एतदाशयाऽनभिज्ञस्य 'न वै' इत्यादिग्रन्थ इति तात्पर्यम् । अभ्यनुज्ञाप्रतिबन्धार्थाभ्यामिति । तद्रूपाभ्यामर्थाभ्यामित्यर्थः । तत्राऽभ्यनुज्ञया—स्थित्युत्पत्तिहेतुः । प्रतिबन्धेन प्रलयहेतुः । ईश्वराऽधिष्ठितत्वेन च तदुपपत्तिः । ननु नित्ये काले तत्सत्ताया व्यपवृक्तत्वाऽभावात्कथं भूतत्वव्यवहार इत्यत आह—तत्र संसर्गीति । तत्क्रिययोपाधिभूतया यो भेद उपधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थः । अन्ये त्विति । तथा च तस्या अनित्यत्वात्सिद्ध एव भूतादिव्यवहार इत्यर्थः । आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्यत्वम् । उत्तरदेशसंयोगाऽवच्छिन्नक्रियेति चेत्तस्या विशेष्यविशेषणसंबन्धरूपत्वे त्रयाणामपि स्थिरत्वात्क्षणव्यवहारनियामकत्वाऽभावः । अतिरिक्तत्वे सिद्धोऽतिरिक्तः क्षणपदार्थ इति तत्प्रचयैरेव कलामुहूर्त्तादिव्यवहारोपपत्तौ किमखण्डेन तेन । स्पष्टञ्चेदं 'कालाः परिमाणिने'त्यत्र भाष्ये इति निरूपितं तत्रैव । ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहारः श्रुत्यादिष्विति बोध्यम् । अन्ये त्विति मतेऽप्येष दोषोऽस्त्येव ।

१—'तायाः' पा० ।

## निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ॥ १ ॥

निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् । केतरेतराश्रयता ? भूतकालेनाऽयं शब्देन निर्देशः क्रियते, निर्देशोत्तरकालं च भूतकालता*, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि [ कार्याणि ] च न प्रकल्पन्ते ।

## अव्ययनिर्देशात्सिद्धम् ॥ २ ॥

अव्ययवता शब्देन निर्देशः करिष्यते । अवर्तमानेऽभविष्यतीति ।

स तर्ह्य[१]व्ययवता शब्देन निर्देशः कर्तव्यः ? न कर्तव्यः । अव्ययमेष 'भूते'-शब्दो नैषा भवतेर्निष्ठा । कथमव्ययत्वम् ? [ 'उप[२]सर्ग]विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति† निपातसंज्ञा । निपातोऽव्ययमित्यव्ययसंज्ञा‡ ।

प्र०—सूर्यादिकर्तृका अप्रसिद्धपरिमाणायाः क्रियायाः परिच्छेदायोपात्ता अहरादिव्यपदेश्या काल इत्याहुः । न वै कालाधिकार इति । ततश्च सामान्यशब्दस्य विशेषेऽवस्थानं न लभ्यत इत्यर्थः । न च शब्द स्येति । शब्दस्याऽर्थे गुणभावाद्गुणस्य विशेषणसंबन्धाऽयोग्यत्वान्नित्यत्वाद्वा शब्दस्यानित्यत्वेऽपि भूतात्प्रत्ययविधानासंभवादुच्चरितत्वलक्षणभूतत्वाश्रये च विशेषणवैयर्थ्यादिति भावः । भूतकालेनेति । भवतेर्निष्ठाप्रत्ययो भूतक्रियावाचिनो विधातव्यः, न च भूताधिकारमन्तरेण निष्ठाप्रत्ययस्य भूतक्रियाविषयत्वं लभ्यते । न च भूतक्रियाविषयनिष्ठाविधानमन्तरेण भूताधिकार उपपद्यते । ततश्चाधिकाराश्रयो निष्ठाप्रत्ययस्तदाश्रयश्चाधिकार इतीतरेतराश्रयत्वमित्यर्थः । एवमपीति । न

उ०—किञ्च 'प्रसिद्धपरिमाणे'त्युक्तिरसङ्गता, तस्या अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति दिक् । शब्दस्येति । स्वाऽभिधेयप्रतिपादने व्यग्रतया विशेषणसंबन्धाऽयोग्यत्वादिति भावः । तदाह—गुणस्येति । नित्यत्वाद्वेत्यनेन भूतादिव्यवहाराऽयोग्यत्वं दर्शयति । वैयर्थ्यादिति । अनुच्चारितात्प्रत्ययविधेरसम्भवादिति भावः । न च शब्दस्येति—भाष्ये । तस्य नित्यत्वेन भूतादिविशेष्यतायां सम्भवो नेत्यर्थः । अनित्यत्वपक्षेऽपि यथा वर्त्तमानशब्दस्य प्रकृतित्वसम्भवो न तथा भूतभविष्यतोः शब्दयोः प्रकृतित्वसम्भव इति योजना बोध्या । क्रियायाम्भूतायामिति । तस्याम्भूतत्वञ्च वर्त्तमानध्वंसप्रतियोगिकालवृत्तित्वम् । भूतकालेनेति । भूतकालक्रियावाचकेनेत्यर्थः । अव्ययनिर्देशादिति । वार्त्तिकेऽव्ययपदमर्श आद्यजन्तं, न्यासान्तरपरञ्चेत्याशयेनाह—अव्ययवतेति । अव्ययमेष इति । अव्ययस्य भूतेशब्दस्य निर्देशादिति वार्त्तिकार्थ इति भावः । नित्येनाऽर्थेनेति । साधुत्वज्ञानं न शाब्दे कारणं नाऽप्यसाधुत्वज्ञानं प्रतिबन्धकमित्यर्थः । परमतेऽपि शिष्टोच्चारित्वेन साधुत्वाऽनुमानाद्बोधः । शास्त्रजं तत्प्रत्ययन्तु पश्चाद्भविष्यतीत्यदोषः । यदि तु शास्त्रेणैव निष्पाद्यः स्यात्स्यादयं दोष इति भावः । भाष्ये—न व्येतीति । विविधमर्थं न प्राप्नोतीत्यक्षरार्थः । शास्त्राऽभावेऽपि तदर्थक

१—क्वचिन्न * निष्ठा ३ । २ । १०२ । २—असार्वत्रिकम् ।

† १ । ४ । ५७ गणसूत्रम् । ‡ स्वरादिनिपातमव्ययम् १ । १ । ३७

अथापि भवतेर्निष्ठा । एवमप्यव्ययमेव । कथम् ? न व्येतीत्यव्ययमिति । क्व पुनर्न व्येति ? एतौ कालविशेषौ भविष्यद्वर्तमानौ । स्वभावतो भूत एव वर्तते ।

यदि तर्हि न व्येतीत्यव्ययम्—

**न वा तद्विधानस्याऽन्यत्राऽभावात् ॥ ३ ॥**

न वा भूताधिकारेणाऽर्थः । किं कारणम् ? 'तद्विधानस्यान्यत्राऽभावात्' । येऽपि ह्येत इत उत्तरं प्रत्ययाः शिष्यन्त एतेऽप्येतौ कालविशेषौ न वियन्ति भविष्यद्वर्तमानौ । स्वभावत एव ते भूत एव वर्तन्ते ॥ अत उत्तरं पठति—

**भूताधिकारस्य प्रयोजनं कुमारघाती शीर्षघाती आखुहा बिडालः सुत्वानः सुन्वन्तः सुषुपुषः अनेहाः अग्निमादधानस्य ॥ ४ ॥**

कुमारघाती शीर्षघातीति भविष्यद्वर्तमानार्थो भूतनिवृत्त्यर्थः* ॥ आखुहा बिडाल

प्र०—शास्त्रीयमव्ययत्वमभिमतं किं तर्हि नित्यत्वमित्यर्थः । ततो नित्यो भूतशब्दोतिक्रान्तार्थवाची नित्येनार्थेन भविष्यद्वर्तमानप्रतिद्वन्द्विना संबद्धोऽधिक्रियत इत्यर्थः । कुमारघातीति । यदीह भूताधिकारो न क्रियते तदा 'कर्मणि हन' इति णिनिः सामान्येन विधीयते । 'कुमारशीर्षयोर्णिनि'-

उ०—एवाऽयमिति भावः । तदुक्तं कैयटेन—नित्यत्वमित्यर्थ इति । क्व पुनर्न व्येतीति । क्वेति विषयसप्तमी । कस्मिन्विषये विविधमर्थं न प्राप्नोति किं रूपं विविधमर्थं न प्राप्नोतीत्यर्थः । तत्रोत्तरमाह भाष्ये—एतौ कालविशेषाविति । तद्विधानस्येति । तस्मिन्विधानं यस्येत्यर्थः । भूतशब्दवत् तेऽपि स्वभावत एव भूतमात्रवाचका भवन्ति, किमधिकारेणेति भावः । सामान्येनेति । कालसामान्येनेत्यर्थः । 'सामान्ये' इति सप्तम्यन्तपाठस्तु युक्त एव । ननु वृत्तौ 'कर्मणी'ति सूत्रे 'कुत्सित'ग्रहणं कृतमिति अकुत्सितार्थन्तदिति चेन्न; 'कुत्सित'ग्रहणस्य भाष्येऽभावात् । शब्दशक्तिस्वभावसिद्धञ्चेत्तत्राऽपीति भाष्याशयः । ननु तेनैव सिद्धे 'कुमारे'त्यादि व्यर्थमिति चेत्तत्राह—पुनर्विधानं त्विति । 'कुमारहन्ते'त्यादिव्यावृत्त्य इत्यर्थः । विशेषविहितः—उपपदविशेषे विहितः । इत्ययम्भूतेऽपीति । इत्ययमपि भूते प्रसज्येतेत्यन्वयः । तक्रकौण्डिन्येति । कुमारशीर्षयोर्विशेषविहितो णिनिः 'कर्मणि हन' इत्येतं बाधते, तत्र तेनाऽपि णिनैरेव विधानेन णिनेर्बाधस्य वक्तुमशक्यतया तत्सहचरितभूतकालो बाध्यत इति वर्त्तमानभविष्यतोरेव 'कुमारे'त्यादिणिनिर्भवति । एवञ्च तद्बाधनेन चरितार्थं शास्त्रमिति 'वासरूप'न्यायबाधे मानाऽभावेन 'कुमारहन्ते'त्याद्यपि सिद्ध्यतीति भावः । 'कुमारघाती'त्यादौ विधीयमानः 'कुमारे'त्यादिणिनिर्भविष्यद्वर्त्तमानयोर्यथा स्यात्तस्य भूतार्थे निवृत्तिश्च यथा स्यादिति भूताधिकार इति भाष्याक्षरार्थः । इदञ्चिन्त्यं, तक्रकौण्डिन्यन्यायस्य विधेयविषयत्वात् । तस्माद्भूताऽधिकारसामर्थ्यात् 'कर्मणि हन' इत्यत्राऽयमेव णिनिः, 'भूत' इति नियमादन्यस्य णिनेर्भूते निवृत्तिरिति भाष्यार्थः । यथाऽस्य णिनेरधिकाराऽभावेऽपि स्वभावत एव भूते वृत्तिस्तथा 'कुमारे'त्यस्य स्वभावत एव भूते निवृत्ति-

१—'वर्तमानभविष्यन्तौ' इति कीलहार्नपाठः ।

२—अतोऽग्रे—'भूतकालनिवृत्त्यर्थं भविष्यद्वर्तमानकालसंप्रत्ययार्थ'मित्यधिकं क्वचिद् दृश्यते ।

* कुमारशीर्षयोर्णिनिः; कर्मणि हनः ३ । २ । ५१; ८६

इति भविष्यद्वर्त्तमानार्थः। इतरथा हि ब्रह्मादिषु नियमस्त्रिषु कालेषु निवर्तकः स्यात्†॥ सुत्वानः सुन्वन्तः, यज्ञसंयोगे ङ्वनिपस्त्रिषु कालेषु शताऽपवादो मा भूत्‡॥ सुषुपुषः, नजिङ् सर्वकालापवादो मा भूत्×॥ अनेहा इति वर्तमानकाल

प्र०—रित्ययमपि णिनिः तथैव कालसामान्ये। पुनर्विधानं तु वासरूपनिवृत्त्यर्थं स्यात्। ततश्च विशेषविहितः कुमारशीर्षयोर्णिनिरित्ययं भूतेऽपि प्रसज्येत। सति तु भूताधिकारे तक्रकौण्डिन्यन्यायेन कुमारशीर्षयोरित्यनेन भूतणिनिं बाधित्वा भविष्यद्वर्तमानयोरेव णिनिर्विधीयते।

आखुहेति। सति भूताधिकारे ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवतीति नियमेन भूत एवोपपदान्तरे क्विन्निवर्त्यते न तु कालान्तर इत्याखुहेति भविष्यद्वर्तमानयोः प्रयोग उपपन्नो भवति। सुन्वन्त इति। 'सुञो यज्ञसंयोग' इति शतृप्रत्ययः। तत्र यदि भूताधिकारो वर्तमानाधिकारश्च न क्रियते तदा यज्ञसंयोगे विशेषे विधीयमानः शता कालत्रयेऽपि ङ्वनिपं बाधेत। ततश्च भूते यज्ञसंयोगे सुत्वेति न स्यात्। अथ 'वासरूप' इति ङ्वनिब्विधीयते तथापि सुत्वा सुन्वन्निति कालभेदो न स्यात्। सति त्वधिकारे कालभेदेन तयोरवस्थानं भवति। सुषुपुष इति। असति भूतवर्त्तमानाधिकारे विशेषविहितेन नजिङा लिटो बाधनं स्यात्। ताच्छीलिकेषु च वासरूपविधिर्नास्ति। सति त्वधिकारे भूते लिड्वर्तमाने नजिङिति बाध्यबाधकभावाऽभावः। अनेहा इति। 'नञ्याहन एह् चे'ति असिप्रत्ययोऽसत्यधिकारे सर्वस्मिन्काले तृचं बाधेत। सति त्वधिकारे वर्तमानकाल

उ०—र्भविष्यतीत्युच्चैः प्रयोजनान्तरमाह भाष्ये—आखुहेति। यज्ञसंयोग इति। यज्ञसंयोगविषये शता ङ्वनिपस्त्रिषु कालेष्वपवादो माभूदित्यन्वयः। प्रसङ्गाद्वर्त्तमानाऽधिकारस्यापि प्रयोजनप्रदर्शनम्। वार्तिके 'भूताऽधिकारस्ये'त्युपलक्षणम्। तत्र ङ्वनिब्भूताऽधिकारे, शता वर्त्तमानाऽधिकारे। ङ्वनिप्—'सुयजोर्ङ्वनि-ब्'इति विहितः। कालभेदो न स्यादिति। वाऽसरूपेण वर्त्तमानेऽपि ङ्वनिब्प्राप्नोतीति भावः। नजिङेति। 'स्वपितृषोर्नजिङ्'। अयं वर्त्तमानाऽधिकारे, लिट्—भूताऽधिकारे। लिटः—'छन्दसि लिट्' 'लिटः कानज्वा' 'क्वसुश्चे'त्यस्य। भाष्ये—सर्वकालाऽपवाद इत्यस्य सर्वकालद्योतकप्रत्ययाऽपवाद इत्यर्थः। भूतकाललिटोऽपीति यावत्। असत्यधिकार इति। 'वर्त्तमान' इत्यधिकारेऽसतीत्यर्थः। सति त्विति। 'वर्त्तमान' इत्यधिकारे सति 'उणादय' इत्यस्य तदधिकारस्थत्वादसिर्वर्त्तमानकाल इति भावः। रूढिशब्दत्वादेवोणादिषु वाऽसरूपविधिर्नास्तीति तात्पर्यम्। एतत्प्रयोजनोक्तिरेकदेशिनः, उणादीनामव्युत्पन्नत्वेऽसम्भवात्। ण्वुल्तृचोरपि वर्त्तमानकाल एव साधुत्वस्य तत्सूत्रे भाष्य उक्तत्वेन 'अन्यत्र अनाहन्ता' इत्यस्याऽसङ्गतेश्च। असत्यधिकार इति। भूतवर्त्तमानयोरधिकारयोरसतोरित्यर्थः। कानच इति। क्वसोरप्युपलक्षणमिदम्। यद्वा कानजुपलक्षितस्य लिट इत्यर्थः। लसार्वधातुक इति। तत्र चानशः सार्वधातुकत्वेऽपि लादेशत्वाऽभावः। कानचो लादेशत्वेऽपि आर्द्धधातुकत्वमित्युभयत्राऽप्यन्तोदात्तत्वमेवेति भावः। कर्त्रभि-

---

† क्विप् च; ब्रह्मभ्रूणवृत्रेषु क्विप् ३। २। ७६; ८७

‡ सुयजोर्ङ्वनिप्; सुञो यज्ञसंयोगे ३। २। १०३; १३२

× स्वपितृषोर्नजिङ्; क्वसुश्च ३। २। १७२; १०७

एव । अन्यत्र—'अनाहन्ता'+ ॥ आदधानस्य । कानचश्चानश् ताच्छील्यादिषु सर्वकालापवादो मा भूत् । अग्निमादधानस्य । आदधानस्येत्येवान्यत्र* ॥ ८४ ॥

## ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ३ । २ । ८७ ॥

किमर्थं ब्रह्मादिषु हन्तेः क्विब्विधीयते न क्विप्चान्येभ्योऽपि दृश्यत इत्येव सिद्धम्† ?

### ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् ॥ १ ॥

नियमार्थोऽयमारम्भः । [ ब्रह्मादिष्वेव हन्तेर्भूते क्विब्यथा स्यात् । ] किमविशेषेण ? 'ने'त्याह । उपपदविशेषे, एतस्मिंश्च विशेषे ॥ अथ ब्रह्मादिषु हन्तेर्णिनिना‡

प्र०—एवौणादिकस्तृचं बाधते । चानशिति । असत्यधिकारे कानचश्चानशबाधकः स्यात् । कः पुनरनयोर्भेदो यावताऽभ्यस्तानामादिरिति लसार्वधातुके विधीयते न सार्वधातुकमात्रे। एवं तर्ह्युपग्रहकृतो भेदः । कानजात्मनेपदत्वात्कर्त्रभिप्राय एव भवति, चानश्पुनरविशेषेण। सति त्वधिकारे भूते कानज्वर्तमाने चानशिति बाध्यबाधकभावाऽभावः ॥ ८४ ॥

ब्रह्मभ्रूण। किमविशेषेणेति । किं धातूपपदकालप्रत्ययाश्चत्वारोऽपि नियम्यन्ते अथ किंचिदेव नियम्यत इति प्रश्नः । उपपदविशेष इति । अनेन धातुनियमं दर्शयति, 'ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति नोपपदान्तरे' । तेन पुरुषं हतवानित्यत्र क्विन्न भवति । अथेति । 'कर्मणि

उ०—प्राय एवेति । अतस्मिंस्तु क्वसुरिति भावः । भाष्ये 'चानशताच्छील्यादिषु सर्वकालाऽपवादो माभू'दित्युत्तरम्—'अग्निमादधानस्ये'त्येव पाठः । 'सुषुपुषोऽनेहा भि'मित्यपपाठः । आदधानस्येत्येवाऽन्यत्रेति । भूतार्थोऽतिरिक्तवर्त्तमानत्वविवक्षायामकर्त्रभिप्राये कर्त्रभिप्राये च 'आदधानस्ये'त्येव । भूते तु कर्त्रभिप्राये एव तथा, अकर्त्रभिप्राये तु क्वसुरेवेत्यर्थः ॥ ८४ ॥

ब्रह्मभ्रूण । किं धातूपपदेति । भाष्ये—'नियमार्थोऽयमारम्भः किमविशेषेणे'त्येव पाठः । 'ब्रह्मादिष्वेवे'त्यादिनियमाकारलेखस्तु लेखकप्रमादात्, अन्यथा तदाकारप्रदर्शनेनैव नियमान्तरतिरस्कारात्पुनः प्रश्नाऽनुपपत्तेः । उपपदविशेष इति । नियमस्य सजातीयापेक्षत्वात् 'हन्तेः क्विबुपपदविशेष एवे'त्यर्थः । एतस्मिंश्च

+ उणादयो बहुलम् ३ । ३ । १; ण्वुलतृचौ ३ । १ । १३३

१—'अग्निमादधानस्येत्येवान्यत्र' इति केचित् पठन्ति । तत्प्रामादिकम् । द्रष्टव्योऽत्रोद्द्योतः ।

* लिटः कानज् वा; ताच्छील्यवयोवचनशक्तिषु चानश् ३ । २ । १०६; १२९

† क्विप् च ३ । २ । ७६ एवं भाष्यपाठेन पाणिनिना 'आतो मनिन् क्वनिब्वनिपश्च । क्विप् च । अन्येभ्योऽपि दृश्यते ।' इत्येवं सूत्रक्रम आश्रित इति केषाञ्चिद्विचारोऽनुचितः, कुत्वं कस्मान्न भवति—'चोः कुः पदस्य' इति भाष्ये प्रकृतसूत्रस्याऽन्तेऽनुवृत्तसूत्रयोजनात् । ततश्च प्रचरिताष्टाध्यायीसूत्रपाठे न भाष्यविरोध इति बोध्यम् । २—अयं कोष्ठान्तर्गतः पाठो 'लेखकप्रमादा'दित्युद्द्योते नागेशः ।

‡ कर्मणि हनः ३ । २ । ८६

भवितव्यम् ? न भवितव्यम् । किं कारणम् ? 'उभयतो नियमात्' । उभयतो नियमोऽयम् । 'ब्रह्मादिष्वेव हन्तेर्भूते' क्विब्भवति', 'क्विबेव च [हन्तेर्भूते] ब्रह्मादि'ष्विति ।

तथा चोत्तरस्य वचनार्थः ॥ २ ॥

एवं च कृत्वोत्तरस्य योगस्य वचनार्थ उपपन्नो भवति । 'बहुलं छन्दसि' [ ८८ ] इति । यो मातृहा पितृहा भ्रातृहा । न च भवति—'अमित्रघातः'‡ ॥८७॥

कर्मणीनिर्विक्रियः ॥ ३ । २ । ९३ ॥

कर्मणि कुत्सिते ॥ १ ॥

कर्मणि कुत्सित इति वक्तव्यम् । इह मा भूत्—धान्यविक्रायः‡ ॥ ९३ ॥

प्र०—हन्' इत्यनेनेति भावः । क्विबेवेति । 'ब्रह्मादिषु हन्तेर्भूते क्विबेव भवति न प्रत्ययान्तर'मिति क्विपि भूतकालो नियम्यत इति कालनियमोऽयं भवति । एतदेव नियमद्वयं भाष्यकारेणाश्रितम् । 'ब्रह्मादिषु हन्तेरेवभूते क्विब्भवति' 'ब्रह्मादिषु हन्तेः क्विब्भूत एवे'त्येतत्तु नियमद्वयं नाभ्युपगतम् । अन्यैस्त्वाहोपुरुषिकया चतुर्विधो नियमो व्याख्यातः, स भाष्यविरोधान्नादरणीयः । तथा चेति । यस्माद्ब्रह्मादिष्वेवेति नियमोऽनेन क्रियते तस्मादुत्तरस्य योगस्य वचने प्रयोजनमस्ति—उपपदान्तरेऽपि हन्तेश्छन्दसि क्विब्यथा स्यादिति ॥ ८७ ॥

कर्मणि । कर्मणि कुत्सित इति । यस्य सोमघृतादेः शास्त्रेण विक्रयः प्रतिषिद्धस्तत्कर्म विक्रये कुत्सितम् ॥ ९३ ॥

उ०—विशेष इति । भूत इत्यर्थः । तेन 'भूते हन्तेः क्विब्ब्रह्मादिष्वेवे'ति नियम इति भावः । तदाह—अनेनेति । धातोर्ब्रह्माद्यतिरिक्ते उपपदे भूतकालाऽवच्छिन्नेऽर्थे वर्त्तमानात् क्विपोऽसंबन्धबोधकत्वादिति भावः । भाष्ये—अथेति । एतन्मात्रनियमाऽङ्गीकारे इत्यर्थः । कालनियम इति । भूतकालाऽवच्छिन्नाऽर्थाद्धातोः क्विबतिरिक्ताऽसंबन्धबोधकत्वादिति भावः । तत्र केवलधातोः प्रत्ययान्तरसंम्बन्धस्याऽवारणात्तात्पर्यतः कालनियमोऽयमिति बोध्यम् । नियमद्वयमिति । 'ब्रह्मादिष्वेव' 'क्विन्नेते'ति च कल्प्यमानस्यैवकारस्य श्रुत्युपस्थापितेऽन्वयो न्याय्यः । स च भाष्यप्रामाण्यादुभयत्राऽपीति तत्त्वम् । उत्तरस्य वचनार्थं इति । सापेक्षत्वेऽपि गमकत्वात्समासः । धातुनियमस्येदं मानमिति दर्शयति—यस्मादिति । नन्वेतदर्थं 'छन्दसि' इत्येवास्तु, सामर्थ्यादुपपदान्तरे भविष्यति किं बहुलग्रहणेनेत्यत आह—न च भवति अमित्रेति । तावन्मात्रोक्तौ 'क्विबेवे'ति नियमान्न स्यात्स भवत्वित्येतदर्थं बहुलपदमिति भावः ॥ ८७ ॥

कर्मणीनि । ननु कर्मणः कथं कुत्सितत्वमत आह—यस्य सोमेति ॥ ९३ ॥

---

१—'भूते' इति क्वचिन्न । २—क्वचिन्न ।
३—क्विब् न भवतीति भावः । ‡ कर्मण्यण् ३ । २ । १
४—'कर्मणीनि विक्रियः' पा० ।

## अन्येष्वपि[3] दृश्यते ॥ ३ । २ । १०१ ॥

### अन्येभ्योऽपि दृश्यते ॥ १ ॥

अन्येभ्योऽपि दृश्यत इति वक्तव्यम् । इहापि यथा स्यात्–आखा उत्खा[2] परिखा ॥ १०१ ॥

## निष्ठा ॥ ३ । २ । १०२ ॥

### निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ॥ १ ॥

निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् । केतरेतराश्रयता ? सतोः क्तक्तवत्वोः संज्ञया* भवितव्यं, संज्ञया च क्तक्तवतू भाव्येते, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च [ कार्याणि ] न प्रकल्पन्ते ।

### द्विर्वा क्तक्तवतुग्रहणम् ॥ २ ॥

द्विर्वा क्तक्तवतुग्रहणं कर्तव्यं भवति । 'क्तक्तवतू भूते' । 'क्तक्तवतू निष्ठे'ति ।

यदि पुनरिहैव निष्ठासंज्ञाप्युच्येत । 'क्तक्तवतू भूते' । ततो 'निष्ठा' । निष्ठासंज्ञौ च क्तक्तवतू भवत इति । किं कृतं भवति ? द्विःक्तक्तवतुग्रहणं न कर्तव्यं भवति ॥ एवमपि 'ता'विति वक्तव्यं स्यात् । वक्ष्यति ह्येतत् 'तौ सदिति वचनम-

प्र०—अन्येष्वपि[3] । अन्येष्विति सप्तमीनिर्देशादुपपदान्तरमेवाश्रितं न तु धात्वन्तरमित्याह—अन्येभ्योपीति ॥ १०१ ॥

निष्ठा । यदि पुनरिति । यौ लौकिके प्रयोगे न दृष्टौ नापीह शास्त्रे श्रुतौ तौ क्तक्तवतू निर्दिश्य संज्ञा विधीयते । एतदुक्तं भवति,—इहैव प्रकरणे 'क्तक्तवतू निष्ठे'ति सूत्रं कर्तव्यम् । यौ

उ०—निष्ठा । 'तौ सदिति वचन' मित्यादि वार्तिकं 'तौस'दिति सूत्रे तेन समानन्यायमिदमित्याह भाष्ये—असत्संक्तयोरिति । तावित्युक्ते हि अगृहीतविशेषस्वरूपमात्रपरामर्शान्न दोष इति भावः । 'भिन्न' इत्यादौ 'ञीतः क्त' इति वर्तमाने क्तः । यदि पुनरिति भाष्यमपूर्वोक्तेन पुनरुक्तमित्याशङ्क्याह—यौ लौकिके इति । दृष्टाविति । अनुबन्धविशिष्टौ न दृष्टावित्यर्थः । कथमश्रुतत्वमत आह —एतदुक्तम्भवतीति । भाष्ये—दृष्टश्रुत-

१—क्वाचित्कम् । २—'उखा' इति पा० ।

३—'अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि भवति कारकान्तरेऽपि ।' इति जयादित्यभट्टोजिदीक्षितादीनां व्याख्यानमश्रद्धेयं भाष्यविरोधात् प्रदीपविरोधाच्च । तथा चाह कैय्यटः—"अन्येष्विति सप्तमीनिर्देशादुपपदान्तरमेवाश्रितं न तु धात्वन्तरमित्याह—अन्येभ्योऽपीति ।

* क्तक्तवतू निष्ठा १ । १ । २६

संसर्गार्थ'मिति† । असंसक्तयोर्भूतकाले[1]न क्तक्तवत्वोर्[2]निष्ठासंज्ञा यथा स्यात् । ञिमिदा—मिन्नः । ञिक्ष्विदा—क्ष्विण्णः‡ ।

यदि पुनरदृष्टश्रुतावेव क्तक्तवतू गृहीत्वा निष्ठासंज्ञोच्येत । नैवं शक्यम् । दृष्टश्रुतयोर्न स्यात् । ञिमिदा—मिन्नः । [ञिक्ष्विदा क्ष्विण्ण इति । ] तस्मान्नैवं शक्यम् । न चेदेवं द्विःक्तक्तवतुग्रहणं कर्तव्यं [ भवति[3] ] इतरेतराश्रयं वा भवति ।

नैष दोषः । इतरेतराश्रयमात्रमेतद्भवति, सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि 'सिद्धं तु नित्यशब्दत्वा'दिति × । नेदं तुल्यमन्यैरितरेतराश्रयैः । न हि संज्ञा नित्या ।। एवं तर्हि भाविनी संज्ञा विज्ञास्यते । तद्यथा—कश्चित्कंचित्तन्तुवायमाह—'ऽस्य सूत्रस्य शाटकं वये'ति । स पश्यति 'यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी खल्वस्य संज्ञाऽभिप्रेता । 'स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवती'ति । एवमिहापि तौ भूते काले भवतो ययोरभिनिर्वृत्तयोर्निष्ठेत्येषा संज्ञा भविष्यति ।

प्र०—भूते क्तक्तवतू तौ निष्ठासंज्ञौ भवतः । तत्र संज्ञाविधानाऽन्यथानुपपत्त्या तयोर्भूते विधानमनुमास्यते, इतरेतराश्रयदोषश्च न भविष्यतीति । दृष्टश्रुतयोरिति । यद्यपि क्तवतुरन्यो नास्ति तथापि संज्ञाविधाने द्वयोः सह निर्देशादत्रापि द्विवचनेन निर्देशो न तु द्वित्वं विवक्षितम् । एकत्वनेति । सामान्येनेत्यर्थः । न हि संज्ञा नित्येति । वृद्ध्यादिका संज्ञा विषयनियतत्वान्नित्या । आकारादयो हि प्रयोगे विद्यन्ते तत्र 'मृजेर्वृद्धि'रित्यादिना साधुत्वमात्रमन्वाख्यायते—मृजेर्वृद्धिः साधुर्भवति । क्तक्तवतू तु सानुबन्धकौ प्रयोगे न विद्येते इति नित्यत्वाऽभावं संज्ञिनोऽभिप्रेत्यैतदुक्तम् । भाविनी संज्ञेति । संज्ञिनो भावित्वात्संज्ञा भाविनीति । तथा हि निष्ठेत्युक्ते संज्ञावाक्यं 'क्तक्तवतू निष्ठे'ति

उ०—योरिति । 'ञीतः क्त' इत्यादौ । अत्र शास्त्रज्ञानां तत्त्वप्रत्यभिज्ञानात्प्रयोगेऽनुबन्धविगमेऽपि दृष्टत्वं बोध्यम् । भाष्ये—द्विःक्तेति । तद्बोधकग्रहणमित्यर्थः । 'क्तक्तवतू भूते'तौ निष्ठेति । सामान्येनेति । एकत्वपदेन तदाश्रयो लक्ष्यते । साधारणपर्यायश्च 'एक'शब्द इत्यन्ये । ननु वृद्ध्यादिसंज्ञाऽपि कृत्रिमत्वादनित्यैव, तत्कथं तत्राऽयं समाधिर्नेहेत्यत आह—वृद्ध्यादिकेति । विषयनियतत्वादिति । संज्ञाविषयस्य शास्त्रे प्रयोगे चैकरूपत्वेन संज्ञिनो नित्यत्वात्संज्ञा नित्या, साधुत्वाऽन्वाख्यानस्य च सम्भवो नैवम्प्रकृते इति भावः । ननु संज्ञायाः स्वतो भावित्वमनुपपन्नमत आह—संज्ञिन इति । सामर्थ्यादिति । अन्यस्योत्पन्नस्य निष्ठासंज्ञाया अभावादिति भावः । आदिकर्मणीति । 'कर्म'शब्दः क्रियावाची । एकफलोद्देशप्रवृत्तसमूहरूपा च क्रिया । तत्र वार्त्तिकफलं दर्शयति—आद्येष्विति । सम्पूर्णसमूहस्य व्यपवृक्तत्वे हि भूतव्यवहार इति भावः ।

---

† ३ । २ । १२७ वा० १

[1]–'भूतेन कालेन' पा० ।

[2]–'क्तक्तवत्वोः' इति क्वचिन्न ।

‡ ञीतः क्तः ३ । २ । १८७

[3]–कोष्ठगतः पाठो न सार्वत्रिकः ।

× १ । १ । १ वा० ६

आदिकर्मणि निष्ठा ॥ ३ ॥

आदिकर्मणि निष्ठा वक्तव्या । प्रकृतः कटं देवदत्त इति । किं पुनः कारणं न सिध्यति ?

यद्वा भवन्त्यर्थे ॥ ४ ॥

यद्वा भवन्त्या अर्थे भाष्यते । प्रकृतः कटं देवदत्तः । प्रकरोति कटं देवदत्त इति ।

न्याय्या त्वाद्यपवर्गात् ॥ ५ ॥

न्याय्या त्वेषा भूतकालता । कुतः ? 'आद्यपवर्गात्' । आदिरत्राऽपवृक्तः । एष च नाम न्याय्यो भूतकालो यत्र किंचिदपवृक्तं दृश्यते ।

वा चाऽद्यतन्याम् ॥ ६ ॥

वा चाऽद्यतन्यां भाष्यते । प्रकृतः कटं देवदत्तः । प्राकार्षीत्कटं देवदत्त इति ।

प्र०—स्मर्यते । तत्र सामर्थ्यात् क्तक्तवतुविधानं संपद्यते । आदिकर्मणीति । आद्येषु क्रियाक्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाऽभावान्निष्ठा न प्राप्नोतीति वचनम् । न चा'दिकर्मणि क्तः कर्तरि च' इत्येतदर्थादिशनमादिकर्मणि निष्ठाया ज्ञापकम् । 'ञीतः क्त' इत्यादिना वर्तमानकालविषयस्य क्तस्य संभवात्तस्यैवैतदर्थादिशनं स्यात् । यद्वा भवन्त्यर्थ इति । यस्माल्लटोऽर्थे विकल्पेन भाष्यते निष्ठा तस्माद्वक्तव्येत्यर्थः । न्याय्येति । आदिभूत एवावयवे समूहरूपस्य समाप्तत्वादस्ति भूतत्वोपपत्तिरित्यर्थः । तदुक्तं हरिणा—

'समूहः स तथाभूतः प्रतिभेदं समूहिषु ।
समाप्यते ततोऽभेदे कालभेदस्य संभवः' ॥ इति ।

वा चाद्यतन्यामिति । यदुक्तं 'भवन्त्यर्थे भाष्यत' इति, तस्य व्यभिचारः । लुङोऽपि विषये निष्ठाया अयं प्रयोगस्तस्मादवश्यमाद्यपवर्गाद्भूततैष्टव्या । अन्यथा लुङः प्रयोगो न स्यादि-

उ०—क्रियाक्षणेष्विति । अत्र 'क्षण'शब्दः सूक्ष्मग्राह्यकालोपलक्षणम्, अन्यथा क्षणरूपत्वे क्रियायास्तद्वदेव सूक्ष्मकालाऽवच्छिन्नत्वात्प्रत्यक्षत्वाऽनापत्त्या 'पश्य मृगो धावती'त्यादेर्लोपापत्तिरिति बोध्यम् । वस्तुतः क्रिया प्रत्यक्षैव फलाऽनुमेया च । तद्वक्ष्यति भाष्ये—अत्यन्ताऽपरिदृष्टेति । अवयवरूपेण समुदायरूपेण चाऽप्रत्यक्षेत्यर्थः । 'पश्य मृगो धावती'त्यादिप्रयोगस्तत्फलसंयोगदर्शनाऽभिप्रायेण, दृशेर्वा ज्ञानसामान्ये लक्षणा । निरूपयिष्यते चेदं 'वर्त्तमाने ल'डिति सूत्रे । 'आद्येषु क्रिया लक्षणे'ष्विति क्वचित्पाठः । तत्राद्येषु क्रियाऽवयवेष्वित्यर्थः । 'ञीतः क्त' इति । यदि तद्विषयमेव स्याद्वर्त्तमानग्रहणमेव कुर्यादिति चिन्त्यमिदमिति हरदत्तः । तेन क्ताऽनुमानेऽपि क्तवत्वर्थं वचनमावश्यकमित्यपरे । यस्माल्लट इति । धात्वर्थस्य वर्त्तमानत्व एव यतो लोके विकल्पेन प्रयुज्यतेऽतो वक्तव्येत्यर्थः । 'यद्भवन्त्यर्थे वा भाष्यत' इति भाष्येऽन्वयः । भाष्ये—आदिरत्रेति । आद्यक्रियाक्षण इत्यर्थः । ननु तस्य भूतत्वेऽपि धात्वर्थस्य किमायातमत आह—

किं शक्यन्त एते शब्दाः प्रयोक्तुमित्यतो न्याय्यैषा भूतकालता ? नावश्यं प्रयोगादेव । क्रिया नामेयमत्यन्ताऽपरिदृष्टा[1]ऽनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुं यथा गर्भो निर्लुठितः । साऽसौ येन येन शब्देनाऽभिसंबध्यते तावति तावति परिसमाप्यते । तद्यथा—कश्चित्पाटलिपुत्रं जिगमिषुरेकमहर्गत्वाऽऽह—'इदमद्य गत'मिति । न च तावताऽस्य[2] व्रजिक्रिया परिसमाप्ता भवति । यत्तु गतं तदभिसमीक्ष्यैतत् प्रयुज्यत 'इदमद्य गत'मिति । एवमिहापि यत्कृतं तदभिसमीक्ष्यैतत् प्रयुज्यते 'प्रकृतः कटं देवदत्त' इति । यदा हि वेणिकान्तः कटोऽभिसमीक्षितो भवति 'प्रकरोति कट'मित्येव तदा भवति[3] ॥ १०२ ॥

प्र०—त्यर्थः । किं शक्यन्त इति । यावदभिमतफलप्रयोजनसकलक्रियापरिसमाप्तिर्न भवति तावद्वर्तमानत्वमेव क्रियाया न तु भूतत्वम् । ततश्च वस्तुशून्या एवाऽमी शब्दाः प्रयुज्यन्त इति भावः । अत्यन्ताऽपरदृष्टेति । परं—प्रधानं प्रमाणं प्रत्यक्षम् । अनुमानस्य तत्पूर्वकत्वात् तेन क्रिया न दृश्यते । अवयवसमूहस्य युगपदनुत्पादादनवस्थानाच्च । तदुक्तम्—

'क्रमात्सदसतां तेषामात्मानो न समूहिनाम् ।
सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिः' ॥ इति ।

येन येनेति । शब्देन प्रत्याय्यमाना येन येनावयवेन संबध्यते समूहरूपा क्रिया तस्मिन्नेवावयवे समाप्यते । तत्रावयवानां कालत्रययोगात् क्रियाया अपि कालत्रययोगः ॥ १०२ ॥

उ०—आदिभूत एवेति । समाप्तत्वात्—आरोपितत्वात् । प्रतिभेदं—प्रत्यवयवम् । समूहिषु—अवयवेषु । समाप्यते—आरोप्यत इत्यर्थः । अभेदे—अवयवे समूहाऽभेदे । तेन क्रिया न दृश्यत इति । अत्यन्तमवयवशः समूहशश्च न दृश्यत इत्यर्थः । अनवस्थानाच्चेति । अनेनाऽवयवस्याऽप्यप्रत्यक्षत्वं क्षणिकत्वेनाऽनवस्थानादित्यर्थः । क्रमात्सदसतामिति । भूयोऽवयवसन्निकर्षः समूहप्रत्यक्षे कारणमिति भावः । चक्षुरादिभिरसंबन्धे हेतुः—सद्वस्तुविषयैरिति । येन शब्देनेति । सामानाधिकरण्ये तच्छब्देनाऽपि तस्यैव परामर्शात् शब्दे परिसमाप्तिरुक्ता स्यात्, न च सा युक्तिमती, अतो वैयधिकरण्येन व्याचष्टे—येनाऽवयवेनेति । संबध्यते—यत्र यत्राऽवयवे आरोप्यत इत्यर्थः । यो योऽवयवः फलाऽनुकूलत्वेन विवक्ष्यते तत्रैव समाप्यते । तत्रावयवे समाप्ते समूह एव समाप्यतेऽतीतो भवतीत्यर्थः । वेणिका—कटचरमाऽवयवः । तदन्तः 'कट इत्यस्य तदन्तकटनिर्वर्त्तकः क्रियासमूह इत्यर्थः ॥ १०२ ॥

१—'परदृष्टा' पा० । प्रकरणमिदं १ । ३ । १ वा० २ व्याख्योभाष्येऽपि शक्यं द्रष्टुम् ।
२—'तस्य' पा० । ३—'भवितव्यम्' पा० ।

## लिटः कानज्वा ॥३।२।१०६॥ क्वसुश्च ॥ ३ । २ । १०७॥

किमर्थं कानच्क्वंस्वोर्वावचनं क्रियते ?

**कानच्क्वंस्वोर्वावचनं छन्दसि तिङो दर्शनात् ॥ १ ॥**

कानच्क्वंस्वोर्वावचनं[1] क्रियते 'छन्दसि तिङो दर्शनात्' । छन्दसि तिङपि दृश्यते । अहं सूर्यमुभयतो ददर्श । अहं द्यावापृथिवी आततान ।

**न वाऽनेन विहितस्यादेशवचनात् ॥ २ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? 'अनेन† विहितस्यादेशवचनात्' । अस्त्वनेन विहितस्यादेशः केनेदानीं छन्दसि विहितस्य लिटः[2] श्रवणं भविष्यति ? 'छन्दसि लुङ्लङ्लिटः' [ ३ । ४ । ६ ] इत्यनेन ।

तदेतद्वावचनं तिष्ठतु तावत् सांन्यासिकम्[3] ।

अथ कित्करणं किमर्थं नाऽसंयोगाल्लिट्कित् [ १ । २ । ५ ] इत्येव सिद्धम् ।

**कित्करणं संयोगान्तार्थम् ॥ ३ ॥**

कित्करणं क्रियते 'संयोगान्तार्थम्' । संयोगान्ताः प्रयोजयन्ति । बॅन्धेः—

प्र०—लिटः कानच् । छन्दसि तिङो दर्शनादिति । वासरूपविधिश्च लादेशेषु नास्तीत्युक्तम् । अनेनेति । 'छन्दसि लि'डित्यनेनेत्यर्थः । तस्यैव लिट इहाऽनुकृतत्वादानन्तर्यादिति भावः । तदेतदिति । उत्तरत्रोपयोक्ष्यत इति भावः । बद्धधानस्येति । 'बन्ध बन्धने' । छान्दसत्वादभ्या-

उ०—लिटः कानज्वा । क्वसुश्च । वाऽसरूपविधिरिति । ननु 'हशश्वतोर्लङ् चे'ति ज्ञापकादादेशगतवैरूप्यमादाय 'ल विधौ वाऽसरूपो नास्तीत्युक्तम्, एवञ्च प्रकृते स्यादेव, न च प्रत्ययविधिविषयस्याऽऽदेशेष्वभावः, आदेशविधावपि 'प्रत्यय' इत्यस्योपस्थितेः 'आद्युदात्तश्चे'ति सूत्रभाष्यसम्मतत्वादिति चेन्न, एतद्वाग्रहणादादेशरूपप्रत्ययविधौ तदनुपस्थितिकल्पनात् । तत्फलं सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव न पक्षे तिङ इति भावः । उत्तरत्रेति । केचित्तु 'तस्य धातुसम्बन्धे विधानेनाऽधातुसम्बन्धे पक्षे भूतसामान्ये लिट्स्थानिकतिङ्श्रवणार्थमिदमावश्यकमित्याशयो भाष्यस्ये'त्याहुः । यत्तु वृत्तौ 'लिडि'त्यनुवर्त्य विभक्तिविपरिणामेन सिद्धे लिङ्ग्रहणेन लिण्मात्रस्यादेशो ज्ञाप्यते इति वा वचनमावश्यकमेवेत्युक्तं, तन्न,

१–'कानच्क्वसोः' पा० ।
† छन्दसि लिट् ३ । २ । १०५
२–'लिटः तिङः' पा० ।
३–संन्यसनं संस्थापनं तदेवास्य प्रयोजनमिति तदतिरिक्तप्रयोजनाऽभावं सूचयति । एवं च सूत्रे वाग्रहणं स्पष्टप्रतिपत्त्यर्थं ज्ञेयम् ।
४–क्वाचित्कम् ।

वृत्रस्य यद्बद्बधानस्य रोदसी । त्वमर्णवान् बद्बधानाँ अरम्णाः । अञ्जेः—आजिवानिति* ।

छान्दसौ कानच्क्वसू । लिट् च च्छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपिन्ङि [ द्व ] द्भवतीति† ङित्त्वादुपधालोपो भविष्यति* ।

**ॠकारान्तगुणप्रतिषेधार्थं वा ॥ ४ ॥**

ॠकारान्तानां[1] गुणप्रतिषेधार्थं तर्हि कित्त्वं वक्तव्यम् । अयं [ हि[2] ] लिटि ॠकारान्तानां प्रतिषेधविषये गुण आरभ्यते‡ । स यथैवेह प्रतिषेधं बाधित्वा गुणो भवति तेरतुः तेरुरिति[2], एवमिहापि स्यात्—तितीर्वान् तितिराण इति । पुनः कित्करणात्प्रतिषिध्यते । [ तस्मात्कित्त्वं कर्तव्यम् ] ॥ १०६ ॥ १०७ ॥

## भाषायां सद्वसश्रुवः ॥ ३ । २ । १०८ ॥

**भाषायां सदादिभ्यो वा लिट् ॥ १ ॥**

भाषायां सदादिभ्यो वा लिड्वक्तव्यः । किं प्रयोजनम् ?

---

प्र०—सधकारस्य हलादिशेषेण निवृत्त्यभावे झलां जश्झशीति जश्त्वं दकारः ॥ १०६ ॥ १०७ ॥

भाषायां स । इह क्स्वादेशविधानाद्भूतसामान्ये लिट् सदादिभ्योऽनुमीयते स विशेषविषयत्वाल्लुङो बाधकः प्राप्नोतीति मत्वाह—भाषायामिति । अपवादविप्रतिषेधादिति । लुङोऽपवाद एतत्सूत्रानुमितो लिट्, तथाऽनद्यतने लङ् परोक्षे लिडिति च, तत्राऽस्य लिटो लङ्लिटोश्च विप्रतिषेधे परत्वाल्लङ्लिटौ स्यातामित्यर्थः । अस्य तु भूतसामान्यमवकाशः । एतदादेशविधानानुमितस्यैवलिटः सदादिभ्यः क्वसुर्न तु परोक्षे लिडित्यनेन विहितस्य, तस्याऽप्रकृत-

---

उ०—प्रकृतभाष्यविरोधादित्याहुः । भाष्ये—पुनः कित्करणादिति । 'आरिवा'नित्यादौ गुणस्तु 'ऋच्छत्यॄता'मित्यत्र ऋकारान्तरप्रश्लेषेण 'ऋ'धातोः पुनर्विधानाद्बोध्य इति दिक् ॥ १०६ ॥ १०७ ॥

भाषायां सद । इति मत्वाहेति । एवञ्च विकल्पमात्रविधानेऽस्य तात्पर्यमिति भावः । 'अनद्यतनपरोक्षयो'रिति वचनस्य तयोरपि क्वसुर्विधेयः, तेन च तद्विषयो लिडनुमातव्यः, स च वेत्यर्थः । ननु

---

* अनिदितां हल उपधायाः क्ङिति ६ । ४ । २४ † सार्वधातुकमपित् १ । २ । ४

१—'ॠकारान्तगुणप्रतिषेधार्थं तर्हि कित्करणं कर्तव्य'मिति कीलहार्नपाठः । २—क्वचिन्न ।

‡ ऋच्छत्यॄताम् ७ । ४ । ११

तद्विषये लुङोऽनिवृत्त्यर्थम् ॥ २ ॥

तस्य लिटो विषये लुङोऽनिवृत्तिर्यथा स्यात् × । उपसेदिवान् कौत्सः[1] पाणिनिम् । उपासदत् ।

अनद्यतनपरोक्षयोश्च ॥ ३ ॥

अनद्यतनपरोक्षयोश्च वा लिङ्वक्तव्यः । उपसेदिवान् कौत्सः पाणिनिम् । उपासीदत् । उपससाद ।

अपवादविप्रतिषेधाद्धि तयोर्भावः ॥ ४ ॥

अपवादविप्रतिषेधाद्धि तौ स्याताम् । कौ ? लङ्लिटौ+ ।

तस्य क्वसुरपरोक्षे नित्यम् ॥ ५ ॥

तस्य लिटो भाषायां क्वसुरपरोक्षे नित्यमिति वक्तव्यम् ।

अपरोक्षग्रहणेन नार्थः । 'तस्य क्वसुर्नित्य'मित्येव । केनेदानीं लिटः परोक्षे श्रवणं भविष्यति ? 'परोक्षे लिट्' [ ३ । २ । ११५ ] इत्यनेन ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अनुवृत्तिः करिष्यते । भाषायां सदादिभ्यो वा लिड्भवति, लिटश्च क्वसुर्भवति । ततो 'लुङ्' [ ११० ] । लुङ् भवति भूते काले, भाषायां सदादिभ्यो वा लिड्भवति, लिटश्च क्वसुर्भवति । ततो'ऽनद्यतने लङ्' [ १११ ] । अनद्यतने भूते काले लङ् भवति, भाषायां सदादिभ्यो वा लिड् भवति,

प्र०—त्वात् । तस्येति । नित्यग्रहणं वेति प्रकृतस्य विकल्पस्य निवृत्त्यर्थम्, अपरोक्षग्रहणं 'परोक्षे लि'डित्यनेन विहितस्य लिटस्तिङां श्रवणार्थम् । अपरोक्षग्रहणेनेति । 'अनद्यतनपरोक्षयोश्चे'ति वचनेन वा लिडयं विधीयते, तत्र यस्मिन् पक्षेऽयं लिण्न भवति तत्र लङ्लिटौ भवतः । ततश्च 'परोक्षे लि'डिति विहितस्य लिटः सूत्रान्तरविहितत्वात् क्वस्वभावात्तिङो भवन्ति । भाषायां सदादिभ्यो वा लिडिति । 'लिटः कानज्वे'त्यतो 'वे'त्यनुवर्तते । तच्च न क्वसुना संबध्यते, किं तर्हि, लिटा ।

उ०—भूतसामान्येऽनुमितस्य विशेषपरताऽपि भविष्यति किमनेनेत्यत आह—भाष्ये—अपवादेति । तद्व्याचष्टे—लुङोऽपवाद इति । नन्वनद्यतनादौ लिड्वैकल्पिकस्तस्य नित्यं क्वसुरिति 'उपससादे'ति न स्यादत आह—एतदादेशेति । 'अनद्यतने'त्यादिवचनेन तयोरप्यनेन लिडनुमानान्न दोषः । ननु 'वा'ग्रहणाऽनुवृत्तौ

× लुङ् ३ । २ । ११० + अनद्यतने लङ्; परोक्षे लिट् ३ । २ । १११; ११५

१—"उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपदे वरतन्तुशिष्यः । इति रघुवंशे ( ५ । १ ) कौत्सस्य वरतन्तोः शिष्यत्वमिह तु पाणिनेः ।

लिटश्च क्वसुर्भवति । [ ततः ] 'परोक्षे लिट्' [ ११५ ] । परोक्षे लिड्भवति, भाषायां सदादिभ्यो वा लिड्भवति, लिटश्च क्वसुर्भवति ॥ तत्रायमप्यर्थः—'तस्य क्वसुरपरोक्षे नित्य'मित्येतन्न वक्तव्यं भवति ॥ १०८ ॥

## उपेयिवाननाश्वाननूचानश्च ॥ ३ । २ । १०९ ॥

किमर्थमुपेयिवानिति निपातनं क्रियते ? 'उपेयुषि निपातनमिडर्थम्' । उपेयुषि निपातनं क्रियत 'इडर्थम्' । इड्यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । सिद्धोऽत्रेड् 'वस्वेकाजाद्घसाम्' [ ७ । २ । ६७ ] इति । द्विर्वचने† कृते ऽनेकाच्त्वान्न प्राप्नोति । इदमिह संप्रधार्य—द्विर्वचनं क्रियतामिडिति, किमत्र कर्तव्यम् । परत्वादिडागमः । नित्यं द्विर्वचनम् । कृतेऽपीटि प्राप्नोत्यकृतेऽपि प्राप्नोति । इडपि नित्यः । कृतेऽपि द्विर्वचन एकादेशे‡ च प्राप्नोत्यकृतेऽपि प्राप्नोति । नात्रैकादेशः प्राप्नोति । किं कारणम् ? 'दीर्घ इणः किति' [ ७ । ४ । ६९ ] इति दीर्घत्वेन बाध्यते । तदेतदुपेयुषि निपातनमिडर्थं क्रियते ।

प्र०—तत्र वावचनात्पक्षे लुङ्भावः सिध्यति । ततो'ऽनद्यतने लङ्' 'परोक्षे लि'डित्यत्रास्य सूत्रस्यानुवर्तनादनद्यतनपरोक्षयोरपि सदादिभ्यो वा लिड्भवतीत्यर्थः ॥ १०८ ॥

उपेयिवान् । [3]उपसर्गस्याऽतन्त्रत्वादीयिवान् समीयिवान् इत्याद्यपि भवति । उपेयुषीति । इणो लिट् । क्वसुः । तत्रेडागमात्पूर्वं नित्यत्वाद्द्विर्वचनं, 'दीर्घ इणः कितीत्यभ्यासस्य दीर्घत्वम् । तत्सामर्थ्यादेकादेशो न प्रवर्तते । न च दीर्घस्यावकाश ईयतुरित्यादिः, तत्रापि पूर्वपरविधेः पूर्वविधित्वात्तत्र कर्तव्ये यणादेशस्य स्थानिवत्त्वादेकादेशप्रसङ्गात् । तत्रानेकाच्त्वादिडप्राप्तौ निपात्यत इत्यर्थः । अजादावतिप्रसङ्ग इति । यदाऽपूर्वं इण्निपात्यते तदा विशेषानुपादानादजादावपि प्राप्नोति । यथा स्यसिच्सीयुडित्यत्रोक्तं 'नित्यश्चायं वल्निमित्तो विघाती'ति । यदि.

उ०—क्वसोर्विकल्पः स्यादत आह—तच्च नेति । व्याख्यानादिति भावः ॥ १०८ ॥

उपेयिवान । इडागमादिति । 'वस्वेकाजाद्घसा'मित्येकाज्ग्रहणादित्यर्थः । द्वित्वे कृतेऽनेकाच्त्वात्तदप्राप्तेरनित्यत्वमिट इति भावः । नन्वेकादेशे कृते एकाच्त्वात्तत्प्राप्तिरिति सोऽपि नित्य इत्यत आह—तत्सामर्थ्यादिति । न चेति । तत्र द्वित्वे सवर्णदीर्घं बाधित्वेणो यणि निमित्ताऽभावादेकादेशाऽप्राप्तौ दीर्घः साऽवकाश इति भावः । विशेषेति । बलादिस्वरूपेत्यर्थः । तदाऽजादाविति । प्राप्तविषय एव प्रतिप्रसव-

१—'ततः' इति क्वचिन्न । कीलहार्न संस्करणे तु 'ततः परोक्षे लिट्' इति न दृश्यते ।

२—इदं वार्तिकमिति केचित् । † लिटि धातोरनभ्यासस्य ६ । १ । ८

‡ अकः सवर्णे दीर्घः ६ । १ । १०१

३—"उपेत्यविवक्षितम्, व्याख्यानात् । "ईयिवांसमति स्रिधः" [ ऋ० ३ । ९ । ४ ] इति दर्शनाच्च" इत्यत्र शब्दकौस्तुभे भट्टोजीदीक्षितः ।

**उपेयुषि निपातनमिडर्थमिति चेदजादावतिप्रसङ्गः ॥ १ ॥**

उपेयुषि निपातनमिडर्थमिति चेदजादाविटोऽतिप्रसङ्गो भवति । उपेयुषा उपेयुषे उपेयुषः उपेयुषीति ।

**एकादिष्टस्येय्भावार्थं तु ॥ २ ॥**

एकादिष्टस्येय्भावार्थं तु निपातनं क्रियते । एकादिष्टस्य 'ईय्' इत्येतद्रूपं निपात्यते । ननु चोक्तं 'नात्रैकादेशः प्राप्नोति । किं कारणम् ? दीर्घं इणः कितीति दीर्घत्वेन बाध्यत' इति । तद्धि न सुष्ठूच्यते । न हि दीर्घत्वमेकादेशं बाधते । कस्तर्हि बाधते ? यणादेशः× । स चापि क्व बाधते ? यत्रास्य निमित्तमस्ति । यत्र हि निमित्तं नास्ति निष्प्रतिद्वन्द्वस्तत्रैकादेशः ।

**व्यञ्जने यणादेशार्थं वा ॥ ३ ॥**

अथवा व्यञ्जन एव यणादेशो निपात्यते । यणादेशे कृत 'एकाच'* इतीट्सिद्धो भवति ॥ अपर आह—

प्र०—त्वनेन निपातनेन क्रादिनियमप्राप्तस्य 'वस्वेकाजाद्घसा'मित्यनेन नियमेन निवारितस्य प्रतिप्रसवमात्रमिट् क्रियते न त्वपूर्वो विधिस्तदाऽजादावतिप्रसङ्गाऽभावः । इदानीमजादावतिप्रसङ्गपरिहाराय प्रकारान्तरमाश्रयति—एकादिष्टस्येति । द्विर्वचने कृतेऽभ्यासस्य दीर्घत्वे चैकादेशस्तस्येयादेशो निपात्यते । यद्यप्युपेयिवानित्येतदियादेशनिपातनेन सिध्यति तथापि समीयिवानित्यादि न सिध्यतीति तदर्थमीयादेशो निपात्यते । क्वचित्तु भाष्ये 'इय्' इति पाठः, स उपेयिवानित्येतद्रूपसिद्ध्यपेक्षया द्रष्टव्यः । कस्तर्हीति । 'इणो य'णित्यनेनाऽजादौ विधीयमान इत्यर्थः । ननु चोक्त'मीयतुरित्यत्राप्यभ्यासदीर्घत्वे कृते एकादेशात् पूर्वं 'वार्णादाङ्गंबलीय' इति यणि कृते स्थानिवत्त्वादेकादेशः प्राप्नोति ततश्चाऽवश्यमभ्यासदीर्घत्वेनैकादेशो बाध्यः । नैष दोषः । नहि स्थानिव-

उ०—सम्भवादिति भावः । किञ्च पूर्वस्यैव विधौ स्थानिवत्त्वं, न पूर्वपरयोरिति सिद्धान्तादीयतुरित्यादौ तदप्रवृत्त्या सवर्णदीर्घाऽप्राप्तेरभ्यासदीर्घस्य नैकादेशबाधकत्वमितीट् सिद्ध एवेति न तन्निपातनफलमित्यपि बोध्यम् । ईयादेश इति । अन्यथेटि कृते इणो यणिति स्यादिति भावः । तदर्थमिति । ईयादेशे दीर्घोच्चारणमसन्ध्युच्चारणञ्च उपेत्यस्याऽविवक्षायां बीजं द्रष्टव्यम् । भाष्ये 'इ'यिति ह्रस्वपाठे 'ईयिवा'नित्यादौ छान्दसो वर्णव्यत्ययो बोध्यः । लोके तु—'उपेयिवा'नित्येव साधु, 'उपे'त्यविवक्षायां मानाऽभावादित्यन्ये । भाष्ये—न हि दीर्घत्वमिति । 'ईयतु'रित्यादौ प्रागुक्तरीत्या चारितार्थ्यादिति भावः । न हीति । किन्तु शास्त्राऽतिदेश इति भावः । रूपाश्रयश्चेति । अगच्पदाभ्यां तत्तद्रूपेणोपस्थितयोरेव दीर्घ इति भावः । ननु कार्याऽतिदेशे

× इणो यण् ६ । ४ । ८१ * वस्वेकाजाद्घसाम् ७ । २ । ६७

नोपेयिवान्निपात्यो द्विर्वचनादिड्भविष्यति परत्वात् ।

द्विर्वचनं क्रियतामिडि[1]तीड्भविष्यति विप्रतिषेधेन ॥ इहापि तर्हि द्विर्वचनादिट् स्यात्—बिभिद्वान् चिच्छिद्वानिति ।

अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ॥ १ ॥

अन्येषामेकाचां नित्यं द्विर्वचनम् । कृतेऽपीटि प्राप्नोत्यकृतेऽपि प्राप्नोति ।

अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य ।

अस्य पुनरिट्चैव[2] नित्यो द्विर्वचनं च ।

द्विर्वचने चैकाच्त्वात्

द्विर्वचने च कृते[3] एकाज्भवति । कथम् ? एकादेशे कृते ।

तस्मादिड्बाधते द्वित्वम् ॥ २ ॥

तस्मादिड् द्विर्वचनं बाधते ।

प्र०—द्भावेन रूपमतिदिश्यते । रूपाश्रयश्च पूर्वपरयोरेकादेशो न यकारस्य भवितुमर्हति । अथवा यणादेशेन वार्णादाङ्गमिति वचनेन बाधितस्यैकादेशस्य पुनः स्थानिवद्भावाद्बाधितत्वादेव प्रवृत्त्यभावात् । व्यञ्जन इति । अभ्यासदीर्घत्वे कृतेऽजादौ विधीयमान 'इणो य'णिति यणादेशो हलादौ न प्राप्नोतीति निपात्यते । ततश्चैकाच्त्वाद्वस्वेकाजाद्घसामित्यनेनैवेड्भवतीत्यजादौ न भवति । नोपेयिवानिति । इणो भाषायां केवलं भूतमात्रे वा लिड्विधेयस्तस्य च नित्यं क्वसुरादेशः, कार्यान्तरं तु सिध्यत्येवेत्यर्थः । अन्येषामिति । भिदादीनां द्विर्वचने कृतेऽनेकाच्त्वादिटोऽ-

उ०—दोषस्तदवस्थ इत्यरुचेराह—अथवेति । वस्तुतः पूर्वस्यैव विधौ स्थानिवत्त्वमिति नाऽत्र स्थानिवत्त्वमिति बोध्यम् । भाष्ये—निष्प्रतिद्वन्द्व इति । एकादेशात्पूर्वमिटोऽभावेन यण्प्राप्तेरिति भावः । यणादेशो निपात्यत इति । एकादेशबाधकतयेति भावः । इणो भाषायामिति । पूर्वसूत्र एवेण्ग्रहणं कार्यमिति भावः । भाष्ये—अस्य पुनरिट्चेति । द्वित्वे कृते एकादेशे तत्प्राप्तेरिति भावः । न विहन्यते ह्यस्येति । अस्य इटो निमित्तं द्विर्वचनेन न विहन्यते यत इत्यर्थः । लकाराणां भावकर्मणोरपि सत्त्वेन तत्राऽप्यनूचानः

१—'मिडिति परत्वादिड् भविष्यति' पा० । २—'अस्य पुनरिट् चैवं नित्योऽस्य हि द्विर्वचनं च न विहन्यते' इति पाठः क्वचित् । ३—'द्विर्वचने कृत एकादेशे च' पा० ।

अनूचानः कर्तरि ॥ ४ ॥

अनूचानः कर्तरीति वक्तव्यम् । अनूक्तवाननूचानः[1] । अनूक्तमित्येवान्यत्र ।

नोपेयिवान्निपात्यो द्विर्वचनादिड् भविष्यति परत्वात् ।
अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ॥ १ ॥
अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य ।
द्विर्वचने चैकाच्त्वात्तस्मादिड्बाधते द्वित्वम् ॥ २ ॥

लुङ् ॥ ३ । २ । ११० ॥

लुङ्लृटोरपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात् ॥ १ ॥

लुङ्लृटोरपवादः प्राप्नोति । अगमाम घोषान्[2], अपाम पयः, अशयिष्महि

प्र०—प्रसङ्गादनित्यत्वम् ।। १०९ ।।

लुङ् । लुङ्लृटोरिति । कालविशेषसद्भावाश्रयेण चोद्यम् । सामान्यविवक्षाश्रयेण प्रतिसमाधानम्—न वेति । यत्रैतदिति । विशेषनिश्चयाऽभावात्सामान्यस्यैव युक्ता विवक्षेति भावः । असतश्चेति । विवक्षोपारूढ एवाऽर्थः शब्दप्रयोगनिमित्तमित्येतदनेन द्रढयति । इह तु

उ०—स्यादतो भाष्ये—कर्त्तरीति ।। १०६ ||

लुङ् । भाष्ये—लुङ्लृटोरिति । तुल्यन्यायत्वाल्लृटोऽप्युपन्यासः । कालविशेषेति । 'अगमाम' इत्याद्युदाहरणेषु अनद्यतनरूपेत्यर्थः । सतोऽप्यविवक्षयेति[3] । सतामेव लोम्नां सत्त्वेनाऽविवक्षया नञ्घटित-प्रयोग इति भावः । नन्वसतो विवक्षानिरूपणस्य प्रकृते नोपयोगोऽत आह—विवक्षोपेति । भाष्ये—न्याय्ये

१–'अनूचानो विनीते स्यात् साङ्गवेदविचक्षणे' इति मेदिनी । 'अनूचानः प्रवचने साङ्गे' इत्यमरः ।
"न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥"
इति मनुस्मृतौ [ २ । १५४ ]

२—घोषो गवादिपशुपालकानां निवास उच्यते । "घोष आभीरपल्ली स्या"दित्यमरः । "घोषन्ति शब्दायन्ते गावो यस्मिन् 'घुषिर् विशब्दने' 'हलश्च' ३ । ३ । १२१ इति घञ्" इति शब्दकल्पद्रुमः ।
भाष्ये नानास्थलेषु प्रयुक्तो घोषशब्दः पुष्णात्येनमर्थं, तद् यथा—
"कः पुन आर्यनिवासः ? ग्रामो घोषो नगरं संवाह इति ।" २ । ४ । १०
"तत्सामीप्यात्—गङ्गायां घोषः ।" ४ । १ । ४८
"गोयूथमेकदण्डप्रघट्टितं सर्वं समं घोषं गच्छति ।" ४ । २ । ७०
"गार्गो घोषः । वात्सो घोषः ।" ४ । ३ । १२७
"उदश्वित्वान् घोषः ।" ६ । १ । २२३
"संख्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह इति ।" ७ । ३ । १४
"घोषो—गोमहिष्यादिनिवासः" इति कैयटः ( २ । ४ । १० )

पूतीकतृणेषु । गमिष्यामो घोषान्, पास्यामः पयः, शयिष्यामहे पूतीकतृणेषु । किं कारणम् ? 'भूतभविष्यतोरविशेषवचनात्' । भूतभविष्यतोरविशेषेणैतौ विधीयेते लुङ्लृटौ†, तयोर्विशेषविहितौ लङ्लुटावपवादौ प्राप्नुतः‡ ।

**न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम् ॥ २ ॥**

न वैष दोषः । किं कारणम् ? 'अपवादस्य निमित्ताभावात्' । नात्राऽपवादस्य निमित्तमस्ति । किं कारणम् ? 'अनद्यतने हि तयोर्विधानम्' । 'अनद्यतने हि तौ विधीयेते लङ्लुटौ, न चात्रानद्यतनः कालो विवक्षितः । किं तर्हि ? भूतकालसामान्यं भविष्यत्कालसामान्यं च ।

यद्यपि तावदत्रैतच्छक्यते वक्तुं—गमिष्यामो घोषान्, पास्यामः पयः, शयिष्यामहे पूतीकतृणेष्विति, यत्रैतन्न ज्ञायते । किम् ? कदेति । इह तु कथम्—अगमाम घोषान्, अपाम पयः, अशयिष्महि पूतीकतृणेष्विति, यत्रैतन्निर्ज्ञातं भवति—अमुष्मिन्नहनि गतमिति । अत्रापि 'न वापवादस्य निमित्ताऽभावादनद्यतने हि तयोर्विधान'-मित्येव । कथं पुनः सतो नामाऽविवक्षा स्यात् ? सतोऽप्यविवक्षा भवति । तद्यथा—अलोमिकैडका, अनुदरा कन्येति । असतश्च विवक्षा भवति । तद्यथा—समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति ।

प्र०—सदेव विशेषेषु सामान्यमाश्रित्य लुङादिप्रयोग उपपद्यत एव । विशेषविवक्षायां तु लङादिप्रयोग इति न कश्चिद्दोषः । वसेर्लुङिति । रात्रेश्चतुर्थे यामे प्रबुद्धो यदा वाक्यं प्रयुङ्क्ते 'अमुत्रावात्स'-मिति तदा तत्राऽतिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ्प्रसङ्गे लुङ् वक्तव्यः । एकस्या

उ०—प्रत्युत्थाने इति । प्रत्युत्थानं जागरणं, तत्समये प्रत्युत्थितं प्रबुद्धमित्यर्थः । 'प्रत्युपस्थित'मिति पाठेऽप्ययमेवार्थः । 'प्रस्थित'मिति क्वचित्पाठः । तत्रापि प्रत्युत्थाय प्रस्थितमित्यर्थः । स च रात्रेश्चतुर्थयाम एव, तत्र

१—पूतीकं तृणविशेषस्य संज्ञा । अस्य प्रयोगो भाष्ये द्वयोः स्थानयोर्दृश्यते । इह (३ । २ । ११० सूत्रे) पूतीकतृणेषु शयनविषयकोऽन्यत्र (१ । १ । ५६ वा० १३) च सोमस्य स्थानेऽभिषवणविषयकः ।

† लुङ् ३ । २ । ११०; लृट् शेषे च ३ । ३ । १३

‡ अनद्यतने लङ् ३ । २ । १११; अनद्यतने लुट् ३ । ३ । १५

३—'सतोऽप्यविवक्षा' इति प्रथमान्तपाठो भाष्यपुस्तकेषूपलभ्यते, उद्द्योते तु तृतीयान्तपाठ इति चिन्त्यमेतत् ।

४—भोक्तुः समक्षे भोजनाय समुपस्थापितस्योदनस्येयं संज्ञा । उपहासार्थं तस्योच्छ्रायो विन्ध्यपर्वतेनोपमीयते । "वर्धितकशब्देन मूले स्थूलमग्रे सूक्ष्मं विशिष्टसंस्थानयुक्तं भक्तमुच्यते ।" इति कैय्यटः (२ । ३ । ५० ) ।

भाष्यकारोऽप्याह—"एकश्च तण्डुलः क्षुत्प्रतिघातेऽसमर्थस्तत्समुदायश्च वर्धितकं समर्थम्" (१ । २ । ४५ वा० ११ ) इति ।

## वसेर्लुङ् रात्रिशेषे ॥ ३ ॥

वसेर्लुङ् रात्रिशेषे वक्तव्यः । न्याय्ये[1] प्रत्युत्थाने प्रत्युत्थितं कश्चित्कंचित्पृच्छति 'क भवानुषित' इति । स आह । 'अमुत्राऽवात्स'मिति । 'अमुत्राऽवस'मिति प्राप्नोति ।

## जागरणसन्ततौ ॥ ४ ॥

जागरणसन्तताविति वक्तव्यम् । यो हि मुहूर्तमात्रमपि स्वपिति तत्राऽमुत्राऽवसमित्येव भवितव्यम् ॥ ११० ॥

## अनद्यतने लङ् ॥ ३ । २ । १११ ॥

## अनद्यतन इति बहुव्रीहिनिर्देशोऽद्य ह्योऽभुक्ष्महीति ॥ १ ॥

अनद्यतन इति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाऽद्यतनेऽनद्यतन इति । किं प्रयोजनम् ? 'अद्य ह्योऽभुक्ष्महीति' । अद्य च ह्यश्चाऽभुक्ष्महीति व्यामिश्रे लुङेव* यथा स्यात् ॥ यद्येवमद्यतनेऽपि लङ् प्राप्नोति, न ह्यद्यतनेऽद्यतनो विद्यते । अद्यतनेऽप्यद्यतनो विद्यते । कथम् ? व्यपदेशिवद्भावेन ।

प्र०—रात्रेश्चतुर्थो यामो, दिवसश्च सर्वो, द्वितीयायाश्च रात्रेः प्रथमोऽद्यतन इत्याहुः । जागरणसन्तताविति । यदा प्रयोक्ता सकलमतिक्रान्तरात्रिप्रहरत्रयं जागरितवांस्तदा लुङ्प्रयोगः । यदा तु सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः ॥ ११० ॥

अनद्यतने । व्यपदेशिवद्भावेनेति । यथा मुख्ये भेद आधाराधेयभावो भवति 'तटे तिष्ठती'ति, तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतनेऽवयवा अद्यतनाः सन्तीत्यनद्यतनो

उ०—स्मृत्वा[1] प्रबोधस्योक्तेः । तदाह—रात्रेरिति । अतिक्रान्तरात्रिप्रहरत्रयं जागरितवानिति । एवं हि पूर्वतनस्य 'प्रत्युत्थितं कश्चित्पृच्छती'ति ग्रन्थस्याऽसङ्गतिः, स्वापं विना प्रत्युत्थानाऽसम्भवात् । तस्माच्चतुर्थे यामे यदा जागरणसन्ततिरिति भाष्यार्थः । तत्र मुहूर्त्तमपि स्वापे लङेवेत्यर्थ इति केचित् ॥ ११० ॥

अनद्यतने लङ् । अनद्यतन इति । यदि तत्पुरुषः पर्युदासश्च तर्हि व्यामिश्रे दोषः । प्रसज्यप्रतिषेधेऽसमर्थसमासो भूतसामान्ये च स्यादत आह भाष्ये—बहुव्रीहिनिर्देश इति । तथा चाऽविद्यमानाऽद्यतनभूतकालार्थवृत्तेर्धातोर्लङित्यर्थः । एवञ्च व्यामिश्रे न, भूतसामान्येऽपि नेत्यर्थः । गौणाधारत्वाश्रयणे

१—न्याय्यः प्रत्युत्थानकालो रात्रेः पश्चिमो यामो ब्राह्ममुहूर्ताख्यः । तथा चाह मनुः—
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् । कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥ ( मनुस्मृतिः ४ । ९२ )

* लुङ् ३ । २ । ११०

## परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये ॥ २ ॥

परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ्वक्तव्यः । अरुणद्यवनः साकेतम्[1] । अरुणद्यवनो मध्यमिकाम्[2] ।

परोक्ष इति किमर्थम् ? उदगादादित्यः । लोकविज्ञात इति किमर्थम् ? चकार कटं देवदत्तः । प्रयोक्तुर्दर्शनविषय इति किमर्थम् ?

'जघान कंसं किल वासुदेवः' ॥ १११ ॥

## विभाषा साकाङ्क्षे ॥ ३ । २ । ११४ ॥

किमुदाहरणम् ? अभिजानासि देवदत्त ! कश्मीरान् गमिष्यामस्तत्र सक्तून् पास्यामः । अभिजानासि देवदत्त ! कश्मीरानगच्छाम तत्र सक्तूनपिवाम ।

भवेत्पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात्, परं तु कथं साकाङ्क्षम् ? परमपि साकाङ्क्षम् । कथम् ? अस्त्यस्मिन्नाकाङ्क्षेत्यतः साकाङ्क्षम् ।

---

प्र०—न भवतीत्युच्यते । ननु तत्त्वतोऽवयवव्यतिरिक्तोऽत्र समुदाय आधारोऽस्ति । तदुक्तं हरिणा—

'कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ।
न च निर्देशमात्रेण व्यतिरेकोनुगम्यते ॥' इति ।

परोक्षे चेति । अननुभूतत्वात्परोक्षोऽपि प्रत्यक्षयोग्यतामात्राश्रयेण दर्शनविषय इति विरोधाऽभावः ॥ १११ ॥

विभाषा सा । भवेत्पूर्वमिति । यदतिप्रसिद्धं वासगमनादि तल्लक्षणं, तच्च परार्थमुपादीयमानं यत्तत्स्मार्यमाणत्वाल्लक्ष्यं भोजनादि प्रति भवतु साकाङ्क्षं, लक्ष्यन्तु प्रधानमपरोपकारि कथं

---

उ०—बीजमाह—न तु तत्त्वत इति । कालस्याऽपीति । यथा दिने 'मुहूर्त' इति । न च तावता मुहूर्तसमुदायाऽतिरिक्तं दिनमस्तीत्यर्थः । अनुगम्यते—प्रमाविषयो भवति । भाष्ये—जघानेति । कंसवधो हि नेदानीन्तनप्रयोक्तुर्दर्शनयोग्योऽपीत्यर्थः । 'अरुण'दित्युदाहरणे तु तुल्यकालः प्रवक्तेति बोध्यम् ॥ १११ ॥

विभाषा सा । साकाङ्क्षेऽर्थे वर्तमानाद्धातोरित्यर्थः । तत्रैकस्य साकाङ्क्षत्वेऽप्युभयत्र कथं लृडिति शङ्कते—भवेत्पूर्वमिति । तद्व्याचष्टे—यदतीति । वासगमनादेर्लक्षणत्वे हेतुमाह तच्चेति । यत्परबोधनार्थमुपादीयते तदेव लक्षणमित्यर्थः । यत्तत्स्मार्यमाणत्वाल्लक्ष्यं भोजनादि, तत्प्रति भवतु लक्षणं साकाङ्क्षमित्य-

---

१—'साकेतः स्यादयोध्यायां कोसलानन्दिनी तथा' इति यादवः ।

रघुवंशे ( १३ । ७९ ) ( १४ । १३ ) साकेतस्य वर्णनं राज्ञो दशरथस्य राजधानीत्वेन कृतम् ।

२—चित्तौडगढतो नातिदूरमेतन्नाम्ना प्रसिद्धा नगरी । क्वचित् 'माध्यमिकाम्' 'माध्यमिकान्' इत्यपि पाठौ दृश्येते ।

## विभाषा साकाङ्क्षे सर्वत्र ॥ १ ॥

विभाषा साकाङ्क्षे सर्वत्रेति वक्तव्यम् । क्व सर्वत्र ? यदि चाऽयदि च* । यदि तावत्,—अभिजानासि देवदत्त ! यत्कश्मीरान् गमिष्यामः । यत्कश्मीरानगच्छाम । यत्तत्रौदनं भोक्ष्यामहे । यत्तत्रौदनमभुञ्ज्महि । अयदि,—अभिजानासि देवदत्त ! कश्मीरान् गमिष्यामः । कश्मीरानगच्छाम । तत्रौदनं भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ॥ ११४ ॥

## परोक्षे लिट् ॥ ३ । २ । ११५ ॥

परोक्ष इत्युच्यते किं परोक्षं नाम ? परमक्ष्णः परोक्षम् । अक्षि पुनः किम् ? अश्नोतेरयमौणादिकः करणसाधनः सिप्रत्ययः । अश्नुतेऽनेनेत्यक्षि ।

यद्येवं 'पराक्ष'मिति प्राप्नोति । नैष दोषः ।

## परोभावः परस्याक्षे पराक्षे लिटि दृश्यताम् ।

परशब्दस्याऽक्षशब्दे उत्तपरद परोभावो वक्तव्यः ।

प्र०—साकाङ्क्षमित्यर्थः । अस्त्यस्मिन्निति । सहशब्दो विद्यमानार्थवृत्तिः । तेन विद्यमानाकाङ्क्षः साकाङ्क्षोऽर्थ उच्यते । लक्ष्यलक्षणयोश्च परस्परापेक्षत्वाद्द्वयोरपि साकाङ्क्षत्वमित्यर्थः । सर्वत्रेति । 'यदी'ति नानुवर्तते, तेनोभयत्र विभाषेयमितिभावः ॥ ११४ ॥

परोक्षे लिट् । किं परोक्षमिति । यद्यपीन्द्रियाऽविषयोऽर्थः परोक्षशब्दवाच्य इति जानाति तथापि सर्वस्याः क्रियायाः परोक्षत्वाद्विशेषणानर्थक्यमिति पृच्छति ।

परमक्ष्ण इति । मयूरव्यंसकादित्वात्समासः । 'अच्प्रत्यन्ववपूर्वे'त्यत्राऽजिति योगविभागादत एव वा निपातनादच्समासान्तः । यद्वा 'प्रतिपरसमनुभ्योऽक्ष्णः' इति टच्समासान्तः । स

उ०—न्वयः । यद्यपि पुरुषगताकाङ्क्षयैवाऽर्थानां साकाङ्क्षत्वव्यवहारः, आकाङ्क्षायाश्चेतनधर्मत्वात् , तथाऽपि तस्यापि'गमनेन सक्तुपानं बोधयिष्यामी'त्येवाकाङ्क्षा न तु विपरीतेति भावः । द्वयोरपीति । उक्ताऽऽकाङ्क्षायां द्वयोरपि विषयत्वादिति भावः । परस्पराऽपेक्षत्वादिति । चिन्त्यं, लक्ष्यस्य लक्षणाऽनपेक्षाया भाष्ये दर्शितत्वात् ॥ ११४ ॥

परोक्षे लिट् । इन्द्रियाऽविषय इति । इन्द्रियजन्यज्ञानाऽविषय इत्यर्थः । तथाऽपीति । यस्य क्रियायां व्यभिचारस्तत्पारोक्ष्यं किमिति प्रश्नार्थ इति भावः । इन्द्रियाऽगोचरत्वमेव पारोक्ष्यम् । तच्च साधनद्वारा क्रियायामित्याशयेनोत्तरयति—परमित्यादि । मयूरेति । तत एव परशब्दस्य पूर्वनिपातइति

* न यदि; अभिज्ञावचने लृट् ३ । २ । ११३; ११२

उत्वं वाऽक्ष्णः परादक्ष्णः

अथवा परशब्दादुत्तरस्याऽक्षिशब्दस्योत्वं वक्तव्यम् ।

सिद्धं वाऽस्मान्निपातनात् ॥

अथवा निपातनादेव सिद्धं 'परोक्षे लि'डिति ।

कस्मिन्पुनः परोक्षे [ लिड्भवति ] ? काले । न वै कालाधिकारोऽस्ति । एवं तर्हि 'धातोः' [ ३ । १ । ९१ ] इति वर्तते, धातौ परोक्षे । धातुर्वै शब्दो न च शब्दस्य प्रत्यक्षपरोक्षतायां संभवोऽस्ति । शब्देऽसंभवादर्थे कार्यं विज्ञास्यते,—परोक्षे धातौ परोक्षे धात्वर्थ इति । कः पुनर्धात्वर्थः ? क्रिया । क्रियायां परोक्षायामिति[2] ।

प्र०—च यद्यप्यव्ययीभावे विधीयते तथापि परशब्दस्याऽक्षिशब्देनाव्ययीभावाऽसंभवात्समासान्तरे विज्ञायते । वृत्तिविषये चाऽक्षिशब्दः सर्वेन्द्रियवाची न तु चक्षुर्मात्रपर्यायः । अन्यथेन्द्रियाऽन्तर-विज्ञातं वस्तु परोक्षशब्दवाच्यं स्यात् । अत एवान्ये दर्शनपर्यायोऽयमक्षिशब्दो न भवतीति 'अक्ष्णोदर्शना'त्येवमच्समासान्तं कुर्वन्ति । ततो यदिन्द्रियात्परमिन्द्रियगोचरतामनापन्नं वस्तु तत्परोक्षमित्यर्थः । अक्षिपुनरिति । किं चक्षुरेवाऽक्षिशब्देनोच्यते अथ सर्वमिति प्रश्नः । अश्नोतेरिति । व्युत्पत्तिद्वारेण विषयव्यापनात्सर्वमिन्द्रियं वृत्तिविषयेऽक्षिशब्दो वक्तीत्यर्थः । सिद्धं वेति । निर्भागः समुदाय एवेन्द्रियाऽगोचरार्थवाची निपात्यत इत्यर्थः । काल इति । यथा कालस्य नित्यपक्ष उपाधिभेदाद्भूतादिव्यपदेशस्तथा परोक्षत्वमपि । अनित्यक्रियारूपकालपक्षे तु स्वत एव परोक्षत्वम् । न च शब्दस्येति । प्रत्ययप्रकृतेः शब्दस्योच्चार्यमाणस्याऽनुभूतत्वात्प-रोक्षत्वाऽसंभवः । ततो यथा प्रत्यक्षत्वमव्यभिचाराच्छब्दस्य विशेषणं न संभवति, एवं परोक्ष-

उ०—बोध्यम् । योगविभागस्य भाष्येऽदर्शनादाह—अत एव वेति† ।

प्रतिपरेति । शरदाद्यन्तर्गणसूत्रम् । इन्द्रियाऽजन्यं ज्ञानं परोक्षम् । अत एव परोक्षं ज्ञानमित्युपपद्यते । अर्श आद्यचा तद्विषयोऽपि तथा । अत एव 'क्रियायाम्परोक्षाया'मिति भाष्यप्रयोग उपपन्नः । निर्भाग इति । सभागनिपातनस्य गुरुत्वादिति भावः, अवयवाऽर्थाऽप्रतीतेश्च । इन्द्रियाऽगोचरार्थवाचीति । तद्विषयक-ज्ञानवाचीत्यपि बोध्यम् । ननु कालः सर्वस्याऽपि 'इदानी'मित्यादिव्यवहारेणाऽपरोक्ष एवेत्यत आह—यथेति । नित्यपक्ष इति । नित्यत्वपक्ष इत्यर्थः । भाष्ये—प्रत्यक्षपरोक्षतायामिति । प्रत्यक्षत्वपरोक्षत्वयोर्वि-शेषतायामित्यर्थः । तत्र प्रत्यक्षत्वेन विशेषणस्य क्वाऽप्यभावात्तदुपादानमसङ्गतमत आह—यथा प्रत्यक्षत्व-

१—नेदं सार्वत्रिकम् । २—'इति' क्वाचित्कः ।

† क्वचिदिहाधस्तनः प्रक्षिप्तः पाठोऽपि मुद्रितो दृश्यते—

"वृत्तिविषयस्त्वक्षिशब्दः सर्वेन्द्रियवचनो न चक्षुःपर्यायः । अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्ष-मापद्येत । एवं च कृत्वादर्शनपर्यायोऽप्यक्षिशब्दो न भवतीति—'अक्ष्णोऽदर्शनात्' इत्येवाच् समासान्त इति तत्त्वम् ।" इति ।

यद्येवं ह्योऽपचदित्यत्रापि लिट् प्राप्नोति । किं कारणम् ? क्रिया नामेयमत्यन्ताऽपरिदृष्टाऽनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुम्, यथा गर्भो निर्लुठितः । एवं तर्हि साधनेषु परोक्षेषु ।

साधनेषु च [ परोक्षेषु[2] ] भवतः कः संप्रत्ययः ? यदि तावद्गुणसमुदायः साधनं, साधनमप्यनुमानगम्यम् । अथाऽन्यद्गुणेभ्यः साधनं, भवति प्रत्यक्षपरोक्षतायां संभवः ।

अथ यदाऽनेन रथ्यायां तण्डुलोदकं दृष्टं कथं तत्र भवितव्यम् ? यदि तावत्साधनेषु परोक्षेषु, पपाचेति भवितव्यम् । भवन्ति हि तस्य साधनानि परोक्षाणि । अथ य एते क्रियाकृता विशेषास्सीत्कारा[3]ः फूत्कारश्चेति तेषु परोक्षेषु । एवमपि पपाचेति भवितव्यम् ।

प्र०—त्वमप्यसंभवादविशेषणमित्यर्थः । कः पुनरिति । यद्येकैकः क्षणो धात्वर्थस्तदा तस्य प्रत्यक्षत्वपरोक्षत्वसंभवाद्युक्तं विशेषणम् । अथ समूहस्तस्य युगपदसंनिधानादप्रत्यक्षत्वाऽव्यभिचारात्परोक्षत्वमविशेषणमिति मत्वा प्रश्नः । क्रियेति । समूहरूपेति भावः । साधनेष्विति । शक्तिशक्तिमतोरभेदविवक्षया साधनशब्देन शक्तिमन्ति द्रव्याण्युच्यन्ते । इतरो यथोक्तमभिप्रायमप्रतिपद्य पृच्छति—साधनेष्विति । गुणसमुदाय इति । शक्तीनां समुदाय इत्यर्थः । समुदायग्रहणं सर्वासां करणादिशक्तीनां क्रियासिद्धौ निमित्तत्वाऽविशेषात्साधनत्वप्रतिपादनार्थम् । तेन यावदुक्तं 'सर्वाः शक्तयः साधन'मिति, तावद् 'गुणसमुदायः साधन'मिति । साधनमपीति । शक्तीनां नित्यानुमेयत्वात् । अथान्यदिति । शक्तिव्यतिरिक्तं शक्तिमद्द्रव्यमित्यर्थः । तत्र द्रव्यप्रत्यक्षत्वे लोकस्य क्रियाप्रत्यक्षत्वाभिमानः, तत्परोक्षत्वे क्रियापरोक्षत्वमित्यर्थः । यदि तावदिति । दृष्ट्वापि तण्डु-

उ०—मिति । युगपदसन्निधानादिति । अतः सद्वस्तुविषयैरिन्द्रियैर्न गृह्यते इत्यप्रत्यक्षैवेत्यर्थः । एवञ्चैकैकस्य प्रत्यक्षत्वेऽपि समूहरूपो धात्वर्थः परोक्ष एव । अत एव 'पिण्डीभूता निदर्शयितुमशक्ये'त्युक्तमिति भावः । वस्तुतोऽवयवशोऽप्यप्रत्यक्षत्वमेवेत्युक्तं प्राक् । किञ्चाऽवयवशः प्रत्यक्षत्वे एकैकत्राऽवयवे समुदायरूपारोपेण भूतत्वादिवत् प्रत्यक्षत्वस्याऽपि सम्भवे न तद्व्यावृत्त्यर्थं 'परोक्ष'इति विशेषणोपपत्तौ साधनादिप्रत्यक्षत्वेन तत्प्रत्यक्षत्वोपपादनं भाष्योक्तमसङ्गतं स्यात् । अत एव 'अत्यन्ताऽपरदृष्टे'ति 'अत्यन्त'पदं चरितार्थम् । नन्ववयवानां सौक्ष्म्यादप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वं स्यादत आह—अशक्येति । पिण्डीभूताऽपि निदर्शयितुमशक्या, अवयवानां क्षणिकत्वेन पिण्डीभावस्यैवाऽभावादिति भाव इति बोध्यम् । साधनेषु चेति भाष्ये साधनपदेन किं भवान्मन्यत इत्यर्थः ।

१—'अपरदृष्टा' पा० । २—नेदं सार्वत्रिकम् ।
३—'सीत्काराः' इति नागेशसम्मतः पाठः । कीलहार्नप्रभृतीनां तु 'चीत्काराः' इति पाठः ।

कथंजातीयकं पुनः परोक्षं नाम ? केचित्तावदाहुः—'वर्षशतवृत्तं परोक्ष'मिति। [ अपर आहुः—'वर्षसहस्रवृत्तं परोक्ष'मिति । ] अपर आहुः—'[ कुड्य ] कटान्तरितं परोक्ष'मिति । अपर आहुः—'द्व्यहवृत्तं त्र्यहवृत्तं चे'ति ॥ सर्वथोत्तमो न सिध्यति।

[ सुप्तमत्तयोरुत्तमः ॥ ]

सुप्तमत्तयोरुत्तम इति वक्तव्यम् । सुप्तोऽहं किल विललाप । मत्तोऽहं किल विललाप । सुप्तो न्वहं किल विललाप । मत्तो न्वहं किल विललाप ।

अथवा भवति वै कश्चिज्जाग्रदपि वर्तमानंकालं नोपलभते । तद्यथा—वैयाकरणानां शाकटायनो रथमार्ग आसीनः शकटसार्थं यान्तं नोपलेभे । किं पुनः कारणं जाग्रदपि वर्तमानकालं नोपलभते ? मनसा संयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति, मनसोऽसांनिध्यात् ।

प्र०—लोदकं यदा न निश्चितवान्–किमेते तण्डुलाः पच्यन्तेऽथ हूयन्तेऽथ कुट्यन्ते इति, प्रमाणाऽन्तरेण यदा कालान्तरे प्रयोक्ता पाकमवगम्य वाक्यं प्रयुङ्क्ते तदा साधनत्वस्य संरम्भरूपस्य परोक्षत्वात्पपाचेति युक्तम् । अथेति । क्रियाकृतविशेषप्रत्यक्षत्वेऽपि लोकस्य क्रियाप्रत्यक्षत्वाऽभिमानः । तत्परोक्षत्वे तु पपाचेत्येव भाव्यमित्यर्थः ।

कथं जातीयकमिति । यस्मिन् भूतानद्यतनपरोक्षे लिटा भाव्यं तत्परिज्ञानाय प्रश्नः । केचिदिति । मतभेदप्रदर्शनायाऽनेकदर्शनोपन्यासः । इन्द्रियाऽगोचरसाधनसाधितानद्यतनक्रियावाचिनस्तु धातोर्लिट् प्रत्यय इति निर्णयः । तथा 'ह्यःपपाचे'त्याद्यपि भवति । सर्वथेति । आत्मसाध्यायाः क्रियायाः प्रत्यक्षत्वाभिमान इति भावः । सुप्तमत्तयोरिति । सुप्तमत्तग्रहणं चित्तव्याक्षेपनिमित्तोपलक्षणम् । असान्निध्यादिति । विषयान्तरेणाकृष्टत्वान्मदाद्यभिभवाद्वेति भावः । अत्यन्तापह्नवे चेति । न केवलं तद्देशस्य भोजनादेरपह्नवो यावत्तद्देशगमनादेरपि यदि भवतीत्यर्थः।

उ०—नन्वेकैकस्या अपि शक्तेरप्रत्यक्षत्वात्समुदायग्रहणं व्यर्थमत आह—समुदायेति । नित्याऽनुमेयत्वादिति । तत्त्वञ्चाऽतीन्द्रियत्वाद्बोध्यम् । ननु तण्डुलोदकदर्शनकाले पाकस्य भूतत्वाऽभावात्कथंलिट्प्रयोगोऽत आह—दृष्ट्वाऽपीति । साधनस्य—तच्छक्त्याश्रयस्य । संरम्भरूपस्येति संरम्भः शक्तिस्तदाविष्टरूपस्येत्यर्थः । 'संरम्भ'शब्दोऽर्श आद्यजन्तः । 'पपाचेति युक्त'मिति पाठः । भाष्ये—'सीत्काराः फूत्काराश्चे'ति पाठः । क्रियाकृतविशेषप्रत्यक्षत्वेऽपीति । अपिना साधनप्रत्यक्षत्वेऽपीत्यर्थः । इन्द्रियाऽगोचरसाधनेति । तत्र क्रियाकृतविशेषरूपसीत्कारादिविशिष्टस्य संरब्धरूपस्य चेन्द्रियाऽगोचरत्वं बोध्यम् । अचित्तव्याक्षेपस्थले उत्तमाऽसिद्धाविष्टापत्तिं सूचयन् चित्तव्याक्षेपे तदुदाहरणमाह भाष्ये—सुप्तेति । जागरेऽमत्तत्वेऽपि पारोक्ष्यं दर्शयति—अथवेति । 'वैयाकरणानां शाकटायन'इत्यनेन तस्याऽमत्ततोक्ताऽन्यचित्तता च भाष्ये—वर्त्तमानकालमिति । वर्त्तमानकालं वस्त्वित्यर्थः । भाष्ये मनस इति । यद्यपि पातञ्जलानामन्तः

१—कोष्ठान्तर्गतः पाठोऽसार्वत्रिकः । २—'वर्त्तमानं कालं' ।
३—'कश्चिजाग्र' । ४—'प्रयुक्तानि' ।

५—"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" ( न्यायदर्शने १ । १ । १६ ) "मनः संयोगानपेक्षस्य हीन्द्रियार्थसंनिकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ।" इति भाष्ये वात्स्यायनः ।

## परोक्षे लिडत्यन्तापह्नवे च ॥ १ ॥

'परोक्षे लि'डित्यत्रा'ऽत्यन्तापह्नवे चे'ति वक्तव्यम् । नो खण्डिकान्[1] जगाम । नो कलिङ्गा[2]ञ्जगाम । न कारिसोमं प्रपपावग्ने !, न दार्वेजस्य[3] प्रतिजग्राह । को मे मनुष्यः प्रहरेद्वधाय ।

परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम् ।
उत्वं वाऽऽदेः परादक्ष्णः सिद्धं वाऽस्मान्निपातनात् ॥

## लट् स्मे ॥ ३ । २ । ११८ ॥

प्र०—खण्डिका[1] नाम जनपदः । त्वया अयाज्यो याजित इत्युक्तः कश्चिदाह—न कारिसोममिति । कारी—याजक ऋत्विगुच्यते । तस्य सोमं नाहं पपौ । ऋत्विग्भूत्वा सोमं न पीतवान् । अपि तु यजमान एव भूत्वेत्यर्थः । ऋत्विक्त्वमेवाऽपह्नुते । तथा प्रतिग्रहस्त्वयाऽयोग्याद्गृहीत इत्युक्त आह—न दार्वेजस्येति । दार्वो[3] नाम जनपदविशेषः । तत्र जातस्याहं न प्रतिजग्राहेति सर्वथा प्रतिगृहीतृत्वमपह्नुते । को मे मनुष्य इति । को मनुष्यो वधाय ममाऽसत्यारोपणेन प्रहरेदित्यर्थः ॥ ११५ ॥

लट् स्मे । इत आरभ्य पञ्चसूत्र्यां कालविभागप्रतिपादनाय वार्तिकद्वयम्—'समपुराभू-

उ०—करणं व्यापकं, तथापि तत्परिणामविशेषो मनश्चिरस्थायि मध्यमपरिमाणं संकोचविकासशालि ज्ञानकारणमिति भावः । अत एव सदा न ज्ञानयौगपद्यं कदाचित्तद्यौगपद्यमपीति दिक् । जनपद इति । 'कलिङ्गखण्डिकादिषु त्वया भुक्त'मिति पृष्टे तत्कारणीभूतगमनप्रतिषेधादत्यन्ताऽपह्नवोऽत्रेति बोध्यम् । तस्य सोममिति । तदंशभूतं सोममित्यर्थः । फलितमाह—ऋत्विग्भूत्वेति । त्वयाऽयोग्यादिति । 'दार्वदेशीया'दिति शेषः । को मनुष्य इति । 'यतोऽहं न प्रतिजग्राह अत' इत्यादिः । परे तु 'मरुत्तस्त्वयि प्रहरिष्यती'त्यग्निनोक्ते इन्द्रस्येदं वाक्यम्—खण्डिकादिषु भोजनवतोऽयाज्यऋत्विक्कर्मकृतवतोऽसतो दार्वजातप्रतिग्रहीतुर्वा मनुष्यप्रहारो न मम, तद्देशगमनस्यैवाऽभावात्, ऋत्विक्त्वस्यैवाऽकरणाद्दार्वजतः प्रतिग्रहस्यैवाऽग्रहणान्मयि तस्य न प्रहारे सामर्थ्यमित्याहुः ॥ ११५ ॥

लट् स्मे । प्रथमे वार्त्तिके इति । यद्यपि उपसङ्ख्यातविरोधाद्द्वितीयवार्तिके लक्षणा युक्ता, तथाऽपि लक्ष्याऽनुरोधादग्रिमभाष्याच्चाऽत्रैव लक्षणेति भावः । तत्र लक्षणाश्रयणे बीजमाह—तत्र स्मेति । भूत-

१—खण्डिका-'खण्डवा' 'भुसावल' इति प्रसिद्धो जनपदो मध्यप्रदेशे ।

२—भारतस्य प्रसिद्धः प्राचीनो दाक्षिणात्यो जनपदः, महानदीगोदावर्योर्मध्यप्रदेशे स्थितः । साम्प्रतं 'उड़ीसाप्रान्त'त्वेन विख्यातः । महाभारते वनपर्वणि वर्णनं द्रष्टव्यम्—"एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी ।" ( अध्यायः ११४ । ४ ) कलिङ्गगमने वैश्वानरेष्टिः प्रायश्चित्तम् ( बौ० ध० १।२।१६ )

३—"दार्व, एक देश जो······आधुनिक कश्मीर के अन्तर्गत पड़ता था ।" इति हिन्दीविश्वकोषः ।

स्म पुराभूतमात्रे ॥ १ ॥ न स्मपुराद्यतने ॥ २ ॥

'स्मपुराभूतमात्रे' 'न स्मपुराद्यतन' इति वक्तव्यम् । किमयं स्मादिविधिः पुरान्तो*ऽविशेषेण भूतमात्रे भवति, तत्र वक्तव्यं 'स्मलक्षणः† पुरालक्षणश्चाद्यतने न भवत' इति । आहोस्वित् स्मलक्षणः पुरालक्षणश्चाऽविशेषेण भूतमात्रे भवत इति, तत्र स्माद्यर्थं 'न स्मपुराद्यतन' इति वक्तव्यम् । किं चातः ?

स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति ।
न स्मपुराद्यतन इति ब्रुवता कात्यायनेनेह ॥ १ ॥

प्र०—तमात्रे' 'न स्म पुराद्यतन' इति । तस्याऽयमर्थः,-प्रथमे वार्तिके स्मपुराशब्दाभ्यामाद्यन्ताभ्यां पञ्चसूत्री* लक्ष्यते । तत्र भूतमात्रे प्रत्ययो भवति । स्मपुरालक्षणस्तु प्रत्ययोऽद्यतने न भवति । एतदुक्तं भवति—'लट् स्मे' 'अपरोक्षे च' 'पुरि लुङ् चास्मे' इति सूत्रत्रयेणाऽनद्यतने भूतविशेषे प्रत्ययो भवति । 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषे'त्येताभ्यां तु भूतमात्रे प्रत्ययः । तत्र स्मपुरेति वार्तिकद्वये विधिप्रतिषेधयोरुपादानाद्भूतमात्रस्य विधानात्तस्यैव चाद्यतननिषेधद्वारेणानद्यतनलक्षणविशेषप्रतिपादनेन निषेधादेकस्मिन्विषय एकस्य विधिप्रतिषेधयोरत्यन्तविरोधात् पूर्वोक्तो विषयविभाग आश्रीयते । किमयमिति । 'स्मपुराभूतमात्र' इत्यत्र वार्तिके स्मपुराशब्दाभ्यां यदि [ इयं ] पञ्चसूत्री लक्ष्यते तदा मध्यमौ योगौ भूतमात्रे भवतः, न स्मपुराद्यतन इति वचनाच्च स्मपुरालक्षणो विधिरनद्यतन एव । अथ स्मपुराभूतमात्र इत्यनेन स्मपुरालक्षणस्यैव विधेर्भूतमात्रं निर्दिश्यते, न स्मपुराद्यतन इत्यत्र वार्तिके स्मपुराशब्दाभ्यां मध्यमौ योगौ लक्ष्येते तदा'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषे'त्येताभ्यां योगाभ्यामनद्यतन एव विधिना भवितव्यमिति प्रश्नः । किं चात इति । एकतरस्मिन् वार्तिके स्मपुराशब्दावुपलक्षणत्वेनाश्रयणीयौ । तत्र पूर्वस्मिन् परस्मिन् वा विशेषमपश्यन् पृच्छति । इतरो वार्तिकप्रत्याख्यानाय मया विकल्पितमेतदित्याह—

उ०—मात्रस्य विधानादिति । आद्ये वार्तिके इति भावः । निषेधादिति । अनद्यतनलक्षणविशेषप्रतिपादने निषेधतात्पर्यादित्यन्वयः । एकस्मिन्विषये—'लट्स्मे' 'अपरोक्षे च' 'पुरि लुङ्' इति सूत्रत्रयविषये । भूतमात्रविध्यद्यतननिषेधयोर्विरोधः । पूर्वोक्त इति । आद्ये पञ्चसूत्रीलक्षणरूपः । मध्यमौ योगौ लक्ष्येते इति । आद्यन्ताभ्यां पञ्चसूत्रीग्रहणेऽपि सूत्रत्रये 'भूतमात्रे' इति विशेषोक्तेर्मध्यमयोरेवैतत्फलमित्याशयेनेदमुक्तम् । ननाविति नन्वोरिति च मध्यमौ योगौ । इति प्रश्न इति । तत्र विनिगमकाऽभावादिति भावः ।

---

१—कीलहार्नप्रभृतयः सर्वमिदमेकमेव वार्तिकं पठन्ति । कैय्यटनागेशव्याख्यानुरोधात्तु द्वे वार्तिके कृत इति विज्ञेयम् ।

* 'लट् स्मे' ३ । २ । ११८ इत्यारभ्य 'पुरि लुङ् चास्मे' ३ । २ । १२२ इत्यन्तः । इयमेव कैय्यटोक्ता पञ्चसूत्री । † लट् स्मे; अपरोक्षे च; पुरि लुङ् चास्मे ३ । २ । ११८; ११९; १२२

स्मादिविधिः पुरान्तो यद्यविशेषेण भवति, किं वार्तिककारः प्रतिषेधेन करोति—'न स्मपुराद्यतन' इति ।

अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नाऽस्ति नञ्कार्यम् ।

लट् स्म इत्यत्रानद्यतन‡ इत्येतदनुवर्तिष्यते ।

अपरोक्षानद्यतनौ ननौ च नन्वोश्च§ विनिवृत्तौ ॥ २ ॥

न पुराऽद्यतन इति भवेदेतद्वाच्यं

तत्रैतावद्वक्तव्यं स्यान्न पुराद्यतन इति ।

तत्र चापिलुङ्ग्रहणम् ।

तत्र चापिलुङ्ग्रहणं¶ ज्ञापकं 'न पुरालक्षणोऽद्यतने भवती'ति ।

अथ बुद्धिरविशेषात्स्मपुरा हेतू

अथ बुद्धिरियमविशेषेण स्मपुराहेतू इति ।

तत्र चापि शृणु भूयः ॥ ३ ॥

प्र०—स्मादिविधिरिति । 'लट्स्मे', 'अपरोक्षे च', 'पुरि लुङ् चास्मे' इत्येतेषु योगेष्वनद्यतनग्रहणानुवृत्त्येष्टस्यार्थस्य सिद्धत्वा'न्न स्म पुराद्यतन' इति वार्तिकं न कर्तव्यमित्यर्थः । यदि 'लट् स्म'-इत्यत्राऽनद्यतनग्रहणमनुवर्त्तते तदा 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषे'त्यनयोरप्यनुवर्त्तेतेत्यत आह—अपरोक्षानद्यतनाविति । तेन भूतमात्रे एताभ्यां योगाभ्यां विधिरित्यर्थः । 'पुरि लुङ् चास्मे'इत्यत्राप्यनद्यतनग्रहणनिवृत्तौ भूतमात्रे विधिः प्राप्नोतीत्याह—न पुरेति । तत्रेति । 'पुरि लुङ् चास्मे'इत्यत्रानद्यतनग्रहणमनुवर्तन इत्येतल्लुङ्ग्रहणेन ज्ञाप्यते । यदि तु भूतमात्रेऽयं विधिः स्यात्तदा 'नन्वोर्विभाषे'त्यतो विभाषाग्रहणानुवृत्त्या विकल्पेन लटो विधानात् पक्षे लुङ् भविष्यति किं लुङ्ग्रहणेन । अनद्यतनानुवृत्तौ तु लुङ्ग्रहणमन्तरेण पक्षे लुङ्न लभ्यते, लङा बाधितत्वादिति

उ०—भाष्ये-स्माद्यर्थमिति । अतद्गुणसंविज्ञानो बहुव्रीहिरिति बोध्यम् । विशेषमपश्यन्निति । अक्षरलाघवगौरवरूपं विनिगमकमित्यर्थः । अन्यथा फलविशेषस्य स्पष्टतया तदसङ्गतिः स्पष्टैव । अपरोक्षाऽनद्यतनाविति । 'अपरोक्षे चे'ति सूत्रस्थमपरोक्षग्रहणमिति बोध्यम् । एवञ्च तन्निवृत्तिरिव 'अनद्यतन' इत्यस्याऽपि निवृत्तिर्भविष्यतीति निषेधवार्त्तिकं व्यर्थमित्याशयः । तन्निवृत्तौ यत्फलितं तदाह—तेनेति । इत्यत्राऽनद्यतनेनेति । मण्डूकप्लुत्येति भावः । ज्ञापकमुपपादयति—यदि त्विति । द्वितीयपक्षेऽपि वैयर्थ्यमुपपादयति भाष्ये—अथ

‡ अनद्यतने लङ् ३ । २ । १११ इत्यतः ।

§ ननौ पृष्टप्रतिवचने; नन्वोर्विभाषा ३ । २ । १२०; १२१

¶ पुरि लुङ् चास्मे ३ । २ । ११२

अपरोक्षे चेत्येष† प्राक् पुरिसंशब्दनादविनिवृत्तः ।
सर्वत्रानद्यतनस्तथा सति नञा किमिह कार्यम् ॥ ४ ॥

स्मादावपरोक्षे चेत्यकार्यमिति शक्यमेतदपि विद्धि ।
शक्यं हि निवर्तयितुं परोक्ष इति‡ लट् स्म इत्यत्र ॥५॥

स्यादेषा तव बुद्धिः स्मलक्षणेऽप्येवमेव सिद्धमिति ।
लट् स्म इति भवेन्नार्थस्तस्मात्कार्यं परार्थं तु* ॥ ६ ॥

प्र०—भावः । अथ बुद्धिरिति । 'लट्स्मे' 'पुरि लुङ् चास्मे' इत्येतावाद्यन्तौ योगौ यदि भूतमात्रे भवत इत्यर्थः । स्मपुराहेतू इति । स्मपुराशब्दो प्रत्ययोत्पत्तेर्निमित्ते इत्यर्थः । तत्र चापीति । अयमर्थः । न स्म पुराद्यतन इत्ययं निषेधो यद्याद्यन्तोपलक्षितमध्यमयोगविषयस्तदा न कर्तव्य एव । अपरोक्षग्रहणं 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषे'त्यत्रानुवर्तिष्यते, तदनुवृत्त्याऽनद्यतनग्रहणानुवृत्तिरनुमास्यते । यस्मात्परोक्षानद्यतनयोः प्रकृतत्वेऽन्यतरनिवृत्तिर्यत्नेन क्रियमाणा द्वितीयस्याऽनुवृत्तिमनुमापयति । अपरोक्षग्रहणेन हि परोक्षाधिकारो निवर्त्यते । यथाऽद्वन्द्वग्रहणं द्वन्द्वाधिकारग्रहणनिवृत्त्यर्थमित्युक्तम् ।

इदानीमपरोक्षे चेत्येतत् सूत्रं प्रत्याख्यातुमाह—स्मादाविति । स्मादिग्रहणेन स्मादिविधिः पुरान्त इत्येष पक्षो लक्ष्यते । 'लट् स्म' इत्यादिसूत्रेषु परोक्षग्रहणस्य निवृत्तत्वादपरोक्षे चेत्येतत्सूत्रं न कर्तव्यमित्यर्थः । इदानीमाचार्यः सूत्रं समर्थयितुमाह—स्यादेषेति । यदि त्वं मन्यसे 'लट् स्म' इत्यत्र परोक्षग्रहणनिवृत्तौ सत्यां परोक्षे चापरोक्षे च लङ् भविष्यतीति नार्थोऽपरोक्षे चेत्येतत्सूत्रेणेति । तन्न । यस्मादपरोक्षग्रहणमनद्यतनानुवृत्तिज्ञापनार्थं कर्तव्यम् । 'लट्स्म' इत्ययं योगः परोक्षाऽनद्यतने वर्तते । यदि ह्यत्र परोक्षग्रहणं निवर्तेत तदा तत्संबद्धमनद्यतनग्रहणमपि निवर्तेत । तस्मादपरोक्षे चेतिसूत्रारम्भा'ल्लट्स्मे' इत्ययं योगः परोक्षानद्यतनविषयः, 'अपरोक्षे चे'त्ययमपरोक्षानद्यतनविषयः, 'पुरि लुङ् चास्मे' इत्ययं तु लुङ्ग्रहणादनद्यतनविषयः, मध्यमौ तु भूतमात्रविषयाविति सूत्रेणैव व्यवस्थायाः सिद्धत्वान्नाऽर्थो

उ०—बुद्धिरिति । भूतमात्रे लटः 'स्म''पुरा'शब्दौ हेतू इत्यर्थः । निवर्त्यत इति । 'लट् स्मे' इत्यत्र परोक्षाऽनद्यतनयोर्निवृत्त्या स भूतमात्रे सिद्धः । एवञ्च 'अपरोक्षे' इत्यस्याऽयमर्थः,—उत्तरसूत्रद्वये 'परोक्षे' इति निवृत्तमिति । तेन तत्र अनद्यतनाऽनुवृत्तिर्भवतीत्युत्तरवार्त्तिकं व्यर्थमेवेति भावः । प्रत्याख्यातुमाहेति । 'प्रथमपक्ष' इति शेषः । प्रथमपक्षे लाघवेन स एव पक्षः परिग्राह्य इति बोधयितुमिति भावः । इदानीमिति । तत्पक्षस्यैव ज्ञापकतया सूत्रं समर्थयितुमित्यर्थः । मध्यमौ स्विति । 'परोक्ष'ग्रहणस्याऽपरोक्षग्रहणस्य च

† अपरोक्षे च ३ । २ । ११९ ‡ परोक्षे लिट् ३ । २ । ११५

* निर्णयसागरीयसंस्करणे स्विमानिश्लोकवार्तिकानि वार्तिकत्वेन व्याख्याभाष्यत्वेन च मुद्रितानि दृश्यन्ते, तदवद्यम् ।

एवं तर्हि ज्ञापयत्याचार्यः 'स्मलक्षणः पुरालक्षणश्चानद्यतने भवत' इति ॥११८॥

## ननौ पृष्टप्रतिवचने ॥ ३ । २ । १२० ॥

**ननौ पृष्टप्रतिवचन इत्यशिष्यं क्रियाऽसमाप्तेर्विवक्षितत्वात् ॥ १ ॥**

'ननौ पृष्टप्रतिवचन' इत्यशिष्यो लट् । किं कारणम् ? 'क्रियाऽसमाप्तेर्विवक्षितत्वात्' । क्रियाया अत्राऽसमाप्तिर्विवक्षिता । एष नाम न्याय्यो वर्तमानः कालो यत्र क्रियाया असमाप्तिर्भवति, तत्र 'वर्तमाने लट्' [ ३ । २ । १२३ ] इत्येव सिद्धम् ।

यदि 'वर्तमाने ल'डित्येव लड्भवति शतृशानचौ[2] प्राप्नुतः† । इष्येते शतृशानचौ । ननु मां कुर्वन्तं पश्य । ननु मां कुर्वाणं पश्येति ॥ १२० ॥

## पुरि लुङ् चास्मे ॥ ३ । २ । १२२ ॥

**ह्यशश्वद्भ्यां पुरा ॥ १ ॥**

ह्यशश्वल्लक्षणात्पुरालक्षणो भवति विप्रतिषेधेन । ह्यशश्वल्लक्षणस्यावकाशः‡—इति हाऽकरोत्, इति ह चकार । शश्वदकरोत्, शश्वच्चकार । पुरालक्षणस्यावकाशः—

---

प्र०—वार्तिकारम्भेणेत्यर्थः । 'ननौ पृष्टप्रतिवचन' इत्ययं च योगो येन नाप्राप्तिन्यायेन लुङो बाधकः, परत्वेन लङ्लिटोः ॥ ११८ ॥

ननौ पृष्ट । असमाप्तिरिति । निवृत्तायामपि पाकादिक्रियायां तत्कृतस्य श्रमादेरनुवर्तनात्तस्या एवाऽसमाप्तिविवक्षायां लट्सिद्ध इत्यर्थः । 'इष्येते' इत्यनेन प्रत्याख्यानं द्रढयति । यदि हि भूताश्रयो लट् क्रियेत तदा वर्तमानाधिकाराद्वर्तमाने विहितस्य लटो विधीयमानौ शतृशानचावस्य लटो न स्याताम् । अथ पृष्टग्रहणं किमर्थं यावता प्रश्नपूर्वकमेव प्रतिवचनं भवति । नैतदस्ति । विरुद्धमपि वचनं, वचनाभिमुख्यमपि तथा । वचनं वचनं प्रति प्रतिवचनमित्यनेकार्थसंभवात्पृष्टग्रहणं कर्तव्यम् ॥ १२० ॥

---

उ०—निवृत्त्या तत्सहचरिताऽनद्यतनग्रहणस्याऽपि निवृत्तेरिति भावः । भाष्ये—एवन्तर्हि ज्ञापयत्याचार्यः स्मलक्षणः पुरालक्षणश्चाऽनद्यतने इति । तत्र स्मलक्षण इदं ज्ञापकम्, पुरालक्षणे तु लुङ्ग्रहणमिति विवेको बोध्यः । नन्वेवं 'ननु'योगेऽनद्यतने लङ्लिटौ स्याताम्, ताभ्यां येन नाप्राप्त्यभावेन तद्बाधाऽयोगादत आह—ननाविति ॥ ११८ ॥

ननौ पृष्ट । असमाप्तिविवक्षायां हेतुमाह—तत्कृतस्य श्रमादेरिति । प्रत्याख्यानमिति । सूत्राऽऽरम्भे इष्टाऽसिद्धये ति भावः । 'ननु'शब्दयोगे लुङ्लङ्लिटामनभिधानमाश्रयणीयमिति तात्पर्यम् ॥ १२० ॥

पुरि लुङ् । पूर्वविप्रतिषेधेनेति । 'पुरि लुङ्चाऽस्मे' इत्यतः स्मे लडित्यतः पूर्वं इति भावः ।

---

१—'एष एव' । २—'चौ च' । † लटः शतृशानचावप्रथमासमानाधिकरणे ३ । २ । १२४
‡ ह्यशश्वतोर्लङ् च ३ । २ । ११६

रथेनायं पुरा याति । रथेनायं पुराऽयासीत् । इहोभयं प्राप्नोति—रथेन ह शश्वत्पुरा याति । रथेन ह शश्वत्पुराऽयासीत् । पुरालक्षणो भवति विप्रतिषेधेन ।

## स्मः सर्वेभ्यो विप्रतिषेधेन ॥ २ ॥

स्मलक्षणः+ सर्वेभ्यो भवति विप्रतिषेधेन । हशश्वल्लक्षणात्पुरालक्षणाच्च । हशश्वल्लक्षणस्यावकाशः—इति हाकरोत्, इति ह चकार । शश्वदकरोत्, शश्वच्चकार । पुरालक्षणस्यावकाशः—रथेनायं पुरा याति । रथेनायं पुराऽयासीत् । स्मलक्षणस्यावकाशः—धर्मेण स्म कुरवो युध्यन्ते । इह सर्वं प्राप्नोति—न ह स्म वै पुरा शश्वदग्निरपरशुवृक्णं दहति । स्मलक्षणो लड्भवति विप्रतिषेधेन ॥ १२२ ॥

# वर्तमाने लट् ॥ ३ । २ । १२३ ॥

## प्रवृत्तस्याऽविरामे शिष्या भवन्त्यवर्तमानत्वात् ॥ १ ॥

प्रवृत्तस्याऽविरामे शासितव्या भवन्ती[1] । इहाधीमहे । इह वसामः । इह पुष्यमित्रं याजयामः । किं पुनः कारणं न सिध्यति ? 'अवर्तमानत्वात्' ।

---

प्र०—पुरि लुङ् । स्मः सर्वेभ्य इति । परविप्रतिषेधेन पूर्वविप्रतिषेधेन च । ततश्च 'पुरिलुङ् चाऽस्मे' इत्यत्र 'अस्मे' इति न वक्तव्यं भवतीति भावः ॥ १२३ ॥

वर्तमाने । प्रवृत्तस्येति । इहाधीमह इत्यध्ययनं प्रवृत्तं प्रारब्धं, न च तद्विरतम् । यदा च भोजनादिकां क्रियां कुर्वन्तो नाधीयते तदाऽधीमह इति प्रयोगो न प्राप्नोतीति वचनम् । भवन्तीति—लटः पूर्वाचार्यसंज्ञा । नित्यप्रवृत्ते चेति । 'पर्वतास्तिष्ठन्ती'त्यादौ स्थानादेः सर्वदा

---

उ०—ननु 'अस्मे' इत्युक्ते स्मयोगे 'पुरि लुङ्' इत्यस्याऽप्राप्तेः कथं विप्रतिषेधोऽत आह—ततश्चेति ॥ १२२ ॥

वर्तमाने । ननु प्रवृत्तं न च विरतमथ च न वर्तमानमिति विरुद्धमत आह—इहेत्यादि । न च तद्विरतमिति । सर्वथा न समाप्तमित्यर्थः । क्रियारूपत्वाऽभावादिति । भूतभविष्यद्वर्तमानव्यवहारविषय-

---

+ लट् स्मे; अपरोक्षे च ३ । २ । ११८; ११९

१—लटः पूर्वाचार्य संज्ञा । अन्यत्राऽप्युक्तं भाष्यकारेण—"अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते ।" ( २ । ३ । १ वा० ११ )

"अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः ।......"कथं पुनर्ज्ञायते भवन्त्या एषोऽर्थ इति ? कर्त्तुर्विद्यमानत्वात् ।" ( ३ । ३ । २ वा० ५ )

### नित्यप्रवृत्ते च कालाऽविभागात् ॥ २ ॥

नित्यप्रवृत्ते च शासितव्या भवन्ती । तिष्ठन्ति पर्वताः । स्रवन्ति नद्य इति । किं पुनः कारणं न सिध्यति ? 'कालाऽविभागात्' । इह भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानः काल:, न चात्र भूतभविष्यन्तौ कालौ स्तः ।

### न्याय्या त्वारम्भानपवर्गात् ॥ ३ ॥

न्याय्या त्वेषा वर्तमानकालता । कुतः ? 'आरम्भानपवर्गात्' । आरम्भोऽत्राऽनपवृक्तः । एष नाम न्याय्यो वर्तमानः कालो यत्रारम्भोऽनपवृक्तः । अनपवृक्त = समाप्त

### अस्ति च मुक्तसंशये विरामः ॥ ४ ॥

यं खल्वपि भवान्मुक्तसंशयं वर्तमानकालं न्याय्यं मन्यते 'भुङ्क्ते देवदत्त' इति, तेनैतत्तुल्यम् । सोऽपि ह्यवश्यं भुञ्जानो हसति वा जल्पति वा पानीयं वा पिबति । यद्यत्र युक्ता वर्तमानकालता दृश्यते, इहापि युक्ता दृश्यताम् ।

प्र०—सद्भावात्साध्यत्वाभावात्क्रियारूपत्वाभावात्तद्धर्मस्य वर्तमानत्वस्याप्यभाव इति भावः । भूतेति । साध्यस्यार्थस्याऽनित्यत्वादवश्यं भविष्यत्त्वेन भाव्यम् । उत्पन्नस्यापि नाशाद्भूतत्वेनेति भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानो धात्वर्थः, नित्यप्रवृत्तस्य भूतभविष्यत्त्वाऽभावाद्वर्तमानत्वाऽभावः, क्रियारूपत्वाऽभावश्चेत्यर्थः । न्याय्यात्विति । अध्ययनं यदा प्रवृत्तं न चोपरतं तदा तस्य भोजनादिक्रियानान्तरीयकत्वादव्यवधायिका । अथवाऽध्ययनस्यैवावयवक्रियेति भावः । तदुक्तं

उ०—स्वस्वभावत्वात्तस्या इति भावः । त्रिविधव्यवहारविषय एव हि साध्यत्वमित्यभिमानः । ननु विद्यमानकालसंबन्धित्वरूपं वर्त्तमानत्वमसाध्यस्यापि संभवतीत्यतो भाष्ये—भूतेत्यादि । तद्व्याचष्टे—साध्यस्येति । अनित्यत्वात्—वर्त्तमानप्रागभावप्रतियोगित्वात् । उत्पन्नस्याऽपीति । 'भावस्ये'ति शेषः । तेन ध्वंसव्यावृत्तिरिति केचित् । वस्तुतो ध्वंसस्याऽपि प्रलयेऽदर्शनरूपो नाशोऽस्त्येव, न ह्यभावनाशः प्रतियोगिरूप एवेति नियमः, अधिकरणरूपत्वादिति परे । प्रतिद्वन्द्व इति । प्रतियोगिसत्ताकाले तयोरसम्भवात्तद्विरोधि वर्त्तमानत्वमिति भावः । वर्त्तमानत्वाऽभाव इति । भूताऽऽदिविरोधिवर्त्तमानत्वाऽभाव इत्यर्थः । तादृशमेव वर्त्तमानत्वं सूत्रे विवक्षितम्, पूर्वं 'भूते' इत्युक्तेः, अग्रे च 'भविष्यती'ति वक्ष्यमाणत्वादिति भावः । क्रियारूपत्वाऽभावश्चेति । यतो भूतभविष्यद्विरोधिवर्त्तमानत्वाऽभावोऽतः क्रियात्वाऽभाव इत्यर्थः । तदुक्तम्—

'क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका' । इति ।

१—कालस्य लक्षणं त्वेवमाह पतञ्जलिः—"येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमाहुः । तस्य हि कयाचित् क्रियया युक्तस्याहरिति च भवति रात्रिरिति च । कया क्रियया ? आदित्यगत्या । तयैवाऽसकृदावृत्तया मास इति भवति संवत्सर इति च ।" ( महाभाष्ये २ । २ । ५ वा० २ )

२—'एष एव च नाम' पा० ।

## सन्ति च कालविभागाः ॥ ५ ॥

सन्ति [ च¹ ] खल्वपि कालविभागाः । तिष्ठन्ति पर्वताः, स्थास्यन्ति पर्वताः, तस्थुः पर्वता इति । किं शक्ष्यन्त एते शब्दाः प्रयोक्तुमित्यतः सन्ति कालविभागाः ? नावश्यं प्रयोगादेव । इह [ हि¹ ] भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्तास्तिष्ठतेरधिकरणम् । इह तावत्तिष्ठन्ति पर्वता इति,—संप्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु । स्थास्यन्ति पर्वता इति,—इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु । तस्थुः पर्वता इति,—इह हि ये राजानो बभूवुस्तेषां याः क्रियास्तासु भूतासु² ।

प्र०—हरिणा—

व्यवधानमिवोपैति निवृत्त इव दृश्यते ।<br>
क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः ॥<br>
न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते ।<br>
सर्वैव हि क्रियाऽन्येन संकीर्णेवोपलभ्यते ॥

तदन्तरालदृष्टा वा सर्वैवावयवक्रिया ।<br>
सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते ॥' इति ।

'नित्यप्रवृत्तस्य चे'त्यस्योत्तरं सन्तीति । इहेति । प्रसिद्धपरिमाणा क्रियैव क्रियान्तरपरिच्छेदात्काल इत्युक्तम् । तत्र राज्ञां स्थितिर्भूतादिभेदेन भिन्ना पर्वतादिस्थित्यादेर्भेदिकेति

उ०—भाष्ये-आरम्भोऽत्रेति । कर्मणि घञ् । आरब्ध इत्यर्थः । अथवाऽध्ययनस्यैवेति । भोजनादिकं विना तदनिर्वाहात्तदवयवत्वेनैव तस्या ग्रह इति भावः । व्यवधानमिवेति । अव्यवधायकोऽपि व्यवधानमिव प्राप्नोति, अनिवृत्तोऽपि निवृत्त इव दृश्यत इत्यर्थः । अन्तरालप्रवृत्तिभिः—हासादिभिः । अविरामात्—फलनिवृत्त्या विरामाऽभावात् । विच्छिन्नरूपोऽपि—विच्छिन्न इव भासमानोऽपि, फलानिर्वृत्तेर्न निवर्त्तते—सर्वथा न निवर्त्तत इत्यर्थः । सर्वैवेति । तथा च नान्तरीयकत्वात्तासां न व्यवधायकत्वमिति भावः । पक्षान्तरमाह—तदिति । तन्मध्यदृष्टा सर्वा तदवयक्रियैवेत्यन्वयः । एवञ्च स्वाऽवयवक्रिया यथा स्वस्या न व्यवधायिकास्तथेमा अपीत्यर्थः । एवाञ्चाऽत्र पक्षे भोजनाद्यप्यध्ययनशब्दार्थत्वेनाश्रितमिति तात्पर्यम् । ननु कथं तदवयवत्वेन ग्रहोऽत आह—सादृश्यादिति । तत्फलनिर्वाहकत्वेनेत्यर्थः । सतिभेदे त्विति । तुरप्यर्थे । अत्यन्तभिन्नाया अपि क्रियाया मध्यपातितया तदङ्गत्वेन ग्रहात्स्वाङ्गं न व्यवधायकमिति भावः ।

भाष्ये—नाऽवश्यमिति । किन्त्वर्थसत्त्वादपीत्यर्थः । ननु कालः क्रियाऽधिकरणं, न तु क्रियाऽत आह—प्रसिद्धेति । वस्तुतोऽनवस्थापत्त्या चिन्त्यमिदम् । भाष्ये 'क्रिया'पदेन तदधिकरणकालो लक्ष्यत इति वक्तुं युक्तम् । तिष्ठतेरिति । तत्तत्क्रियाविशिष्टतिष्ठतेरित्यर्थः । क्रियारूपत्वमिति । तत्तद्राजक्रियासमाना-

१—इदं क्वचिन्न । २'—स्वतिक्रान्तासु' पा० ।

अपर आह,—नास्ति वर्तमानः काल इति । अपि चात्र श्लोकानुदाहरन्ति ।

न वर्त्तते चक्रमिषुर्न पात्यते न स्यन्दन्ते सरितः सागराय ।

कूटस्थोऽयं लोको न विचेष्टिताऽस्ति यो ह्येवं पश्यति सोऽप्यनन्धः ॥१॥

प्र०—क्रियारूपत्वं कालत्रययोगश्चोपपन्न इत्यर्थः । उक्तश्च हरिणा—

'परतो भिद्यते सर्वमात्मा तु न विकल्पते ।
पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते ॥

प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः ।
साहचर्येण भिद्यन्ते सरूपावयवक्रियाः ॥' इति ।

ता इति । तासामेव कालरूपत्वात्कालस्य च क्रियाधिकरणत्वादिति भावः । नास्तीति । निष्पन्नस्याऽर्थस्य भूतत्वादनिष्पन्नस्यार्थस्य भावित्वान्निष्पन्नाऽनिष्पन्नव्यतिरेकेण रूपान्तरस्याऽभावः ।

न वर्तत इति । परिवर्तनक्रियाया वर्तमानाया अभावादिति भावः । कूटस्थ इति । स्वरूपस्थो न तु वर्तमानक्रियाविशिष्ट इत्यर्थः । अत एवाह—न विचेष्टितेति । व्यापारस्य न कर्तेत्यर्थः । एवं यो वेत्ति सोऽप्यनन्धः—किं पुनर्योऽनुष्ठाता योगीत्यर्थः । स ह्यविकृतमात्मतत्त्वं

उ०—ऽधिकरणपर्वतादिस्थित्यादेरित्यर्थः । यतः कालत्रययोगोऽतः क्रियारूपत्वमित्यर्थः । आत्मा—द्रव्यम् । न विकल्पत इति । न स्वरूपेण भिन्न इत्यर्थः । विरूपाऽवयवक्रियाः व्यापाराः प्रसिद्धभेदा न तु साध्यभेदा इत्यर्थः । स्वरूपाऽवयवक्रियास्तु गिरिस्थित्यादयो राजक्रियादेः साहचर्येण भिद्यन्त इत्यर्थः । साहचर्यमत्र कालघटितं बोध्यम् । तासामेवेति । अत्र यद्वक्तव्यं तदुक्तम् । क्रियाकारणत्वादिति । आधारतयेति भावः । 'क्वचित्क्रियाऽधिकरणत्वा'दित्येव पाठः ।

इदानीं क्षणभङ्गवादी सूत्रमाक्षिपतीत्याह—अपर आह नास्तीति । वर्त्तमानकालक्रिया नास्तीत्यर्थः । एवञ्च क्षणभङ्गुरे पदार्थमात्रे क्रियाश्रयत्वाऽसम्भवात्क्रियायां भूतभविष्यत्प्रतिद्वन्द्विवर्त्तमानत्वाऽभावेन कालविभागाऽनवगतेः 'वर्त्तमाने ल'डिति सूत्रमसङ्गतमिति भावः । तद्ध्वनयन्व्याचष्टे—निष्पन्नस्येति । रूपान्तरस्याऽभाव इति । प्रतिक्षणनश्वरत्वाद्वर्त्तमानक्रियाश्रयस्याऽभावेन सर्वथा वर्त्तमानत्वाऽभाव इति भावः । अतीताऽनागतानां तत्त्वादेव न वर्त्तमानत्वेन व्यवहारप्रयोजकता, क्रियां प्रति द्रव्यस्य समवायिकारणतयोत्तरलक्षणे क्रिया वाच्या, तत्तु न, उत्तरक्षणेऽन्यस्यैव भावादिति तात्पर्यम् । तदुपपादयति भाष्ये—अपि चाऽत्रेत्यादिना । 'वर्त्तते चक्र'मित्यादिवर्त्तमानप्रयोगो निरालम्ब इत्यर्थः । तदाह—परिवर्त्तनेति । अत्र 'विचेष्टिता लोको नास्ती'त्यनेन दृश्यस्य क्षणभङ्गुरता सूचिता । यद्यप्ययं श्लोकः—'क्रियाश्रयो नात्मा, यतोऽयं कूटस्थोऽपरिणामीत्यर्थः, नाऽपि लोको दृश्यः पदार्थः, यतो दृश्यश्चेष्टाश्रयः स्थिरो नास्ति,

मीमांसको मन्यमानो युवा मेधाविसंमतः ।
काकं स्मेहाऽनुपृच्छति 'किं ते पतितलक्षणम्' ॥ २ ॥

अनागते न पतसि अतिक्रान्ते च काक ने[१] ।
यदि संप्रति पतसि सर्वो लोकः पतत्ययम् ॥ ३ ॥

हिमवानपि गच्छति ।

अनागतमतिक्रान्तं वर्तमानमिति त्रयम् ।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते ॥ ४ ॥

प्र०—भावयन्प्रत्यक्षीकरोति । तथा चोक्तं भगवता—

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥' इति ।

**मीमांसक इति** । विचारकः । **युवेत्यनेन** प्रज्ञायां पाटवं दर्शयति । **मेधाविसंमत इति** । मेधावी चासौ सम्मतश्चेति विशेषणसमासः । षष्ठीसमासस्य तु 'क्तेन च पूजाया'मिति निषेधात् । **पतितलक्षणमिति** । पातः पतितं तस्य किं रूपं, नास्त्येव पतनक्रियेत्यर्थः । **अनागत इति** । अनागतत्वादेवाऽसत्त्वात् पातक्रियायाः 'पतसी'ति व्यपदेशोऽनुपपन्न इत्यर्थः । **अतिक्रान्त इति** । तथैव क्रियाया असत्त्वात् । **सर्वो लोक इति** । क्रियाया वर्तमानत्वाभावेऽपि यदि

उ०—प्रतिक्षणपरिणामित्वात्पदार्थानामिति संसाराऽनित्यत्वाऽतिशयबोधकः, तथापि आपातार्थमादाय क्षणभङ्गवादिना स्वसाधकत्वेनोपन्यस्तः । **एवं यो वेत्तीति** । यथाकथञ्चिज्जानातीत्यर्थः । 'अपि'द्योत्यमर्थमाह—**किम्पुनरिति** । सर्वथा तथाभावनावानित्यर्थः । एवञ्च चक्रादेः क्रियाराहित्यज्ञानवानपि योगितुल्यः, अत्यन्ताऽस्थिरत्वस्य दृश्येषु ग्रहात्, आत्मन्यपरिणामित्वस्थिरत्वग्रहाच्चेत्युक्तं भवति । **अविकृतमात्मतत्त्वम्**—अपरिणाम्यात्मतत्त्वम् । स हि यथा जडं भावयन् तत्कारणतयाऽविकृतमात्मतत्त्वं प्रत्यक्षीकरोतीत्यन्वयः । अत्रैवाऽर्थे सम्मतिमाह—**तथाचेति** । प्रकृतिपुरुषविवेकादेव हि तथा साक्षात्कार इति योगसाङ्ख्ययोः सिद्धान्तः । अथ पदार्थानां स्थिरत्वेऽपि वर्त्तमानकालाऽभावमुपपादयति भाष्ये—**मीमांसक इति** । **मन्यमानः**—आत्मानं विचारकं मन्यमान इत्यर्थः । **संमतश्चेतीति** । अर्थान्मेधाविनामेवेति गम्यते । **पृच्छति स्म**—पप्रच्छ । 'लट्स्मे' इति लट् । भाष्ये'ऽतिक्रान्ते च न पतसी'त्यन्वयः । का'कपर्याय'काकन'शब्दस्य 'काकने'ति संबोधनम् । **सम्प्रति**—प्रयोगकाले । **वर्तमानत्वाऽभावेऽपीति** । क्रियाया वर्त्तमानत्वाऽभावेऽपि यदि 'पतसी'ति व्यवहारस्तदाऽयं सर्वो लोकः पततीति व्यवहारविषयः स्यादित्यर्थः । तदाह—**हिमवान-**

१—'काक'पर्यायस्य 'काकन'शब्दस्य 'काकने'ति सम्बोधनमिति नागेशः, तच्च चिन्त्यम्; 'न क्रोधो न च मात्सर्यं न लोभो नाऽशुभा मतिः ।' इत्यत्रेव नञ एव पुनरुक्तत्वात् ।

**क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् ।**

**तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन् ॥ ५ ॥**

**प्र०**—'पतसी'ति व्यपदेशस्तदा विशेषाऽभावात् पर्वतादावपि 'पतसी'ति व्यपदेशप्रसङ्ग इत्यर्थः । **अनागतमिति** । एक एव क्षण उपलभ्यते, नातीतो नाप्यनागतो, न चैकस्य क्षणस्य गमनादिक्रियावेशः सम्भवतीति भावः । **सर्वत्रेति** । कालवृत्तित्वाऽविवक्षायां दाप्रत्ययो न कृतः । **क्रियाप्रवृत्ताविति**—परिहारः । हेतुः प्रयोजनं, गमनस्य देशान्तरप्राप्तिः तदर्थं फलार्थमित्यर्थः । इह प्रत्यभिज्ञानात् क्षणभङ्गनिरासे देवदत्तस्य देशान्तरप्राप्तिर्निर्हेतुका न संभवतीति गमनक्रियैव तस्या निमित्तम् । तदालम्बनश्च गच्छतीतिप्रत्ययोऽबाधित उपपद्यत इति सत्त्वं तावदवगम्यते क्रियायाः । वर्तमानत्वाऽभावे च भूतभविष्यतोरप्यभावप्रसङ्गः, वर्तमानो हि भूतत्वं भविष्यत्त्वञ्च प्रतिपद्यते । तत्राऽनेकक्षणसमूहात्मकं क्रियाप्रबन्धरूपं बुद्ध्या सङ्कलय्य गच्छतीत्यादिप्रयुज्यत इत्यर्थः । **अविचारयन्निति** । कुविकल्पकलङ्करहितमित्यर्थः ।

**उ०**—**पीत्यादि** । भाष्यस्य 'व्यवहारः स्या'दिति शेषः । अयं भावः,—त्रिक्षणस्थायिन्या अपि क्रियाया अतिसूक्ष्मकालावच्छिन्नत्वरूपदोषवशाज्ज्ञानाऽसम्भवेनाऽज्ञातेन च व्यवहाराऽसम्भवो, ज्ञातेन च व्यवहारेऽतिप्रसङ्ग इति । उक्तमेवाऽर्थं दार्ढ्यायाह—**अनागतमिति** । **एक एव क्षण उपलभ्यत इति** । उपलम्भयोग्यो भवितुमर्हतीत्यर्थः । **न चैकस्येति** । एकक्षणवर्ती पदार्थगतः क्रियावेशो ज्ञानयोग्यः सम्भवतीत्यर्थः । ननु कालवाचकत्वात् 'सदे'ति भाव्यमत आह—**कालेति** । भाष्ये 'सर्वत्रे'त्यस्य 'काले' इति शेषः । **सर्वत्र गतिर्नास्तीत्यस्योपलब्धियोग्या नास्तीत्यर्थः** । अनुपलब्धिप्रमाणाच्च तदभावनिश्चय इति भावः । क्षणभङ्गवाद्येवाऽत्र वक्तेति तु न युक्तं, तस्य 'मेधाविसंमत' इति विशेषणाऽनुपपत्तेः । 'यदि सम्प्रती'त्यादेस्तन्मते उक्तिसम्भवाऽभावाच्च । इदानीं सिद्धान्तमाह—**क्रियाप्रवृत्ताविति** भाष्ये । क्रियाऽऽरम्भे यो हेतुः प्रयोजकः, फलं, तदर्थं-यद्विचेष्टितं क्रियासमूहस्तदनुकूलत्वेन समीक्ष्य-बुद्धिविषयीकृत्य बौद्धसमूहस्य बौद्धवर्त्तमानत्वमादाय 'गच्छती'ति प्रयोगोपपत्तिरित्यर्थः । क्षणभङ्गवादेबुद्धेरप्येकस्या अभावादाह—**इहेति** । कदाऽप्यवर्त्तमानस्य शशविषाणादितुल्यस्य भूतभविष्यत्त्वे अपि त्वत्सम्मते न सम्भवत इति 'गच्छती'त्यबाधितप्रत्ययस्तत्सत्तायां मानमिति भावः । **गच्छतीति प्रत्ययोऽबाधित उत्पद्यत इति सत्त्वं तावदवगम्यत इति** । एतेनाऽवयवशोऽपि अप्रत्यक्षत्वं सूचितम् । अन्यथा 'अवयवगतस्य समूहे आरोप' इत्येव वदेत् । ननु अवयवानामभावे समूहोऽसम्भवी, तत्राह—**तत्राऽनेकेति** । बौद्धो वैकल्पिक एवाऽयं समूह इत्यर्थः, 'शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्प' इति पातञ्जलोक्तेः । समूहस्य वर्त्तमानत्वं तु प्रारब्धाऽपरिसमाप्तत्वमुक्तमेव । तदपि बौद्धमेव । **तस्याऽनेकक्षणसमूहात्मकः**—तदात्मकत्वेन प्रसिद्धं क्रियाप्रबन्धरूपं तत्त्वेन च प्रसिद्धमविचारितरमणीयमेव बुध्या विषयीकृत्येत्यर्थः । अन्यथा पूर्वं सर्वथा वर्त्तमानकालाऽभावस्योक्तत्वेन तमसाध्यैवेदशोक्तेरसङ्गत्यापत्तेः ।

एवं वास्तववर्त्तमानक्रियाऽभावमङ्गीकृत्याऽनुमितबौद्धसमूहरूपक्रियां तद्वर्त्तमानत्वञ्च बौद्धमाश्रित्य प्रयोगानुपपाद्येदानीं वास्तववर्त्तमानक्रियां तत्तत्क्षणवर्त्तिनीं योगिप्रत्यक्षप्रमाणिकामाश्रित्य समाधत्ते—**अपर आह अस्ति वर्त्तमानः काल इति** । क्रियाणां त्रिक्षणाऽवस्थायित्वादिति भावः । **आदित्यगतिवन्नोपलभ्यते** । 'प्रत्यक्षेणे'ति शेषः । क्रियाप्रत्यक्षत्वाऽभिमानिनो यथाऽतिदूरत्ववशात्तद्गतिरनुमेया तथाऽतिसूक्ष्म-

अपर आह—अस्ति वर्तमानः काल इति । आदित्यगतिवन्नोपलभ्यते । अपि चात्र श्लोकमुदाहरन्ति,—

विसस्य[1] वाला इव दह्यमाना, न लक्ष्यते विकृतिः सन्निपाते ।

अस्तीति तां वेदयन्ते त्रिभावाः, सूक्ष्मो हि भावोऽनुमितेन गम्यः ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ।

प्र०—विसस्येति । विसस्य वाला विसे दह्यमाने दह्यमाना अपि न प्रत्यक्षं दह्यमानत्वेनावसीयन्ते । किं तर्ह्यनुमानेन विसान्तर्गतत्वात्तद्ग्रहे तेषामपि दाहः प्रतीयते । तथा कारकसंनिपात एकैकक्षणग्रहणे क्रियावेशलक्षणा विकृतिः प्रत्यक्षेण न लक्ष्यते । तां तु त्रिभावा 'अस्ती'ति निश्चिन्वन्ति । त्रिषु कालेषु भावो भावना येषां ते त्रिभावाः—योगिनः, ये भावनावशेन त्रीनपि कालान् योगिप्रत्यक्षेण विदन्ति । सूक्ष्म इति । अनेकक्षणसमूहात्मकस्य धातुवाच्यस्य अर्थस्य क्रियारूपस्य युगपदसंनिधानादनुमीयत इत्यर्थः ॥ १२३ ॥

इत्युपाध्यायजैय्यटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ।

उ०—कालाऽवच्छिन्नत्वादेकैकक्षणाऽवच्छिन्ना क्रियाऽप्यनुमेयैवेति भावः । ननु कार्येणोत्तरदेशसंयोगादिना एकैकक्षणवर्त्यतिसूक्ष्मवर्त्तमानक्रियायाः कथमनुमानमत आह भाष्ये—अपि चेति । विसदाहे वालदाहवत्कारकसन्निपाते विकृतिः । एकैका क्रिया यद्यपि न लक्ष्यते तथापि त्रिभावा योगिनस्तामस्तीति वेदयन्त इत्यर्थः । अनेन योगिप्रत्यक्षं प्रमाणं दर्शितम् । नन्वस्मदादिव्यवहारः कथमत आह—सूक्ष्मो हीति । समूहान्यथाऽनुपपत्तिः, 'वर्त्तमाने ल'डिति शास्त्रञ्च तदनुमापकमिति भावः । एकैकक्षणग्रहणे, एकैकक्षणस्य वर्त्तमानग्रहणेन ग्रहणे, तत्क्षणाऽवच्छेदेन क्रियाविशेषलक्षणा विकृतिः प्रत्यक्षेण न लक्ष्यत इत्यक्षरार्थः । नन्वेकैकक्षणस्य सूक्ष्मत्वेऽपि समूहः प्रत्यक्षः स्यादत आह—अनेकेति । एवञ्चाऽवयवरूपा समुदायरूपा च क्रियाऽनुमानगम्यैवेति तात्पर्यम् । अत्र पक्षेऽनुमितैकैकक्षणवृत्तिक्रियायां धात्वर्थसमूहरूपाऽऽरोपेण वर्त्तमानप्रयोग इत्याशय इति दिक् ॥ १२३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्योते
तृतीयस्याऽध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् ।

१—'बिसस्य बाला' पा० । 'मृणालं बिस'मित्यमरः । 'कमलपुष्प डण्डी' इति भाषायाम् ।

## लटः शतृशानचावप्रथमासमानाधिकरणे ॥ ३ । २ । १२४ ॥

**लस्याऽप्रथमासमानाधिकरणेनाऽयोगादादेशानुपपत्तिर्यथाऽन्यत्र ॥१॥**

लस्याऽप्रथमासमानाधिकरणेनाऽयोगादेशयोरनुपपत्तिर्यथाऽन्यत्र । तद्यथा—अन्यत्रापि लस्याऽप्रथमासमानाधिकरणेन योगो न भवति । क्वान्यत्र ? लङि—अपचदोदनं देवदत्त इति ।

**योग इति चेदन्यत्रापि योगः स्यात् ॥ २ ॥**

अथ मतमेतद् 'भवति योग' इति अन्यत्रापि योगः स्यात् । क्वान्यत्र ? लङि—अपचदोदनं देवदत्त इति ।

न क्वचिद्योग इति कृत्वाऽतः सर्वत्र योगेन भवितव्यम्, क्वचिद्वाऽयोग इति कृत्वा सर्वत्राऽयोगेन । तद्यथा—समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न । न चेदानीं कश्चिदर्थवानित्यतः सर्वैरर्थवद्भिः शक्यं भवितुं, कश्चिद्वाऽनर्थक इति सर्वैरन-

प्र०—लटः शतृ । लस्येति । इहायं लकारो 'लः कर्मणि च भावे चे'त्यनेन कर्तृकर्मणोर्विधीयमानो गुणभूते क्रियां प्रति कर्तृकर्मणी प्रतिपादयति । तथा च 'पचत्योदनं देवदत्तः' 'ओदनः पच्यते देवदत्तेने'ति क्रियाप्रधानत्वात् क्रियान्तरयोगाऽभावाच्छक्त्यन्तरावेशाऽभावः । अन्ये तु कृतः प्राधान्येन कर्त्रादीनि प्रतिपादयन्ति । तथा च क्रियान्तरयोगे शक्त्यन्तरावेशो भवति,—पाचकं पश्य, पक्वेन तृप्त इति । ततश्च लङादिवल्लटोऽपि क्रियान्तरयोगाऽभावाद्द्वितीयाद्यनुत्पत्तावप्रथमान्तेन सामानाधिकरण्यं नोपपद्यत इत्यर्थः । अपचदिति । तथा चाऽपचदोदनं देवदत्तं पश्येत्यादि प्रसज्येतेत्यर्थः । न क्वचिदिति । तिङ्भाविनो लकारस्य गुणभूतकर्त्राद्यभिधानम् । शत्रादिविषयस्य तु क्रियोपसर्जनकर्त्राद्यभिधानम् । तथा च क्रियान्तरनिमित्तद्वितीयादिसामाना-

उ०—लटः शतृ । भाष्ये—लस्येत्यादि । समानाऽधिकरणेनाऽप्रथमान्तेन लवाच्यस्य कारकस्याऽयोगादित्यर्थः । ननु 'पचन्तं देवदत्तं पश्ये'त्यादौ तत्सामानाऽधिकरण्यमस्त्येवेत्यत आह—इहेति । गुणभूते इति । 'क्रियाप्रधानमाख्यात'मिति सिद्धान्तादिति भावः । इति क्रियेति । इत्यस्य क्रियाप्रधानत्वादित्यर्थः । क्रियान्तरयोगाऽभावादिति । एकत्र विशेषणत्वेनान्वितस्य कारकस्याऽन्यत्र तथाऽन्वयाऽयोगात्कर्तृत्वाद्यतिरिक्ताऽनभिहितशक्त्यन्तराऽऽवेशाऽभावेन नियमेन प्रथमान्तेनैव सामानाऽधिकरण्यादिति भावः । प्राधान्येनेति । 'सत्त्वप्रधानानि नामानी'त्युक्तेः । लङादिवदिति । लङादिवाच्यकारकसमानाऽधिकरणवल्लड्वाच्यकारकसमानाऽधिकरणस्येत्यर्थः । अप्रथमान्तेन—तदर्थेन । इत्यादि प्रसज्येतेति । शतरीव लङ्यपि लकाराऽर्थकर्तुः प्राधान्यं स्यादिति भावः । यद्यप्यन्तरङ्गा प्रथमा तथाऽपि प्रधानाऽनुरोधित्वेन बलवती द्वितीयैव स्यादित्यर्थः । कर्त्राद्यभिधानमिति । तदभिधानशक्तिरित्यर्थः । द्वितीयादीति । द्वितीयाद्यन्तार्थेत्यर्थः ।

१—इदमेवोदाहरणं 'हयवरट्'सूत्रभाष्ये १०५ पृष्ठेऽपि शक्यं द्रष्टुम् ।

र्थकैः । तत्र किमस्माभिः शक्यं कर्तुं—यल्लटोऽप्रथमासमानाधिकरणेन योगो भवति, लङो न [ भवति[1] ], स्वाभाविकमेतत् ।

अथवाऽऽदेशे[2] सामानाधिकरण्यं दृष्ट्वाऽनुमानाद्गन्तव्यं 'प्रकृतेरपि सामानाधिकरण्यं भवती'ति । तद्यथा—धूमं दृष्ट्वाऽग्निरत्रेति गम्यते, त्रिविष्टब्धकं[3] दृष्ट्वा परिव्राजक इति ।

विषम उपन्यासः । प्रत्यक्षस्तेनाऽग्निधूमयोरभिसंबन्धः कृतो भवति, त्रिविष्टब्धकपरिव्राजकयोश्च । स तद्विदेशस्थमपि दृष्ट्वा जानात्यग्निरत्र, परिव्राजकोऽत्रेति ।

प्र०—धिकरण्योपपत्तिरित्यर्थः । शक्यं कर्त्तुमिति । प्रतिपत्तुमित्यर्थः । अथवेति । सिद्धानां शब्दानामिदमन्वख्यानं प्रवृत्तम् । तत्र 'पचन्तं देवदत्तं पश्ये' त्यादिप्रयोगदर्शनात् स्थानिनोऽपि लटः प्रक्रियार्थं विहितस्याऽप्रथमासामानाधिकरण्यमनुमीयत इत्यर्थः । विषम इति । अग्निधूमयोर्हि प्रत्यक्षेण सम्बन्धो गृह्यते । लकारस्य तु प्रयोगाऽभावादप्रथमासामानाधिकरण्यं न क्वचिदुपलब्धमिति भावः । भवतीति । यद्यपि लटोऽप्रयोगादप्रथमासामानाधिकरण्याऽभावः प्रत्यक्षेण निश्चीयते तथापि प्रत्यक्षस्याऽन्यथासिद्धत्वाल्लकाराऽप्रयोगनिमित्तत्वादभावग्राहिणो बाध्यत्वम्, अनन्यथासिद्धेन तु सामान्यतोदृष्टेनाऽनुमानेन लटोऽप्रथमासामानाधिकरण्यावगमः, न

उ०—प्रतिपत्तुमित्यर्थ इति । लङ्वाच्यस्याऽप्रथमान्तसामानाऽधिकरण्यं न भवति, लङ्वाच्यस्य भवति यत्तत्र किं कारणं प्रतिपत्तुं शक्यं स्वभावाऽतिरिक्तं, न किमपीति भाष्यार्थ इति भावः । ततश्च शत्रादिविषयलटोऽस्त्येव शतृविधायकशास्त्रबललब्धस्वभावादप्रथमासामानाधिकरण्यमिति न दोष इति तात्पर्यम् । ननु लस्य क्वाऽपि प्रयोगाऽभावेन कथमीदृशस्वभावाऽवगतिरतः पक्षान्तरमाह भाष्ये—अथवेति । ननु यावदप्रथमासामानाऽधिकरण्यं न निर्णीतं तावदादेश एव न, आदेशेन चाऽनुमानमित्यन्योऽन्याश्रयग्रस्तमत आह—सिद्धानामिति । नित्यानामित्यर्थः । प्रक्रियाऽर्थं विहितस्येति । अनेन प्रक्रियार्थं कल्पितानामबोधकत्वं दर्शयति । विषम उपन्यास इति । वदन्प्रष्टव्यः,—किम्प्रत्यक्षेण बाधनिश्चयादनुमानं न, उत व्याप्तिग्रहणाऽभावादिति ? तत्राद्ये आह—यद्यपीति । 'प्रत्यक्षस्तेनाऽग्नी'त्यादिग्रन्थेनापि भाष्ये तत्र बाधनिश्चयाऽभावः प्रतिपाद्यत इति बोध्यम् । प्रत्यक्षेण तत्राऽभिसंबन्ध एव पुरुषेण कृतो गृहीतो न तु विपरीतमित्यर्थात् । लकाराऽप्रयोगनिमित्तकत्वेनाऽन्यथासिद्धत्वादभावग्राहिणः प्रत्यक्षस्य बाध्यत्वमित्यन्वयः । सामान्यतो दृष्टेन—कार्यकारणभिन्नलिङ्गकेन । न ह्यन्यथेति । एवञ्च शतृशास्त्रवैयर्थ्यरूपाऽनुकूलतर्कसहितमनुमानमन्यथासिद्धप्रत्यक्षाद्प्रबलमिति भावः । रूपसहचारिणस्त्विति । शुक्लभास्वररूपव्यापकस्येत्यर्थः । तमस्तु न तद्रूपवत् ।

१—क्वचिन्न । २—'अथवाऽऽदेशेन पा'० ।
३—त्रिविष्टब्धकं=परिव्राजकपरिचायको दण्डविशेषः । 'त्रयो दण्डा विष्टब्धा इतरेतराश्रयेण विधृता यत्रे'ति व्युत्पत्त्या योगरूढ्याश्रयणेन रज्ज्वा कीलकेन वा बद्धानां त्रयाणां काष्ठानां सञ्ज्ञा । तथा चाह भाष्यकारः—"यथा तर्हि—त्रिविष्टब्धकम् । तत्राऽप्यन्ततः सूत्रकं भवती"ति । ( १ । १ । १ वा० ८, पृष्ठसङ्ख्या १३४ )

भवति वै प्रत्यक्षादप्यनुमानबलीयस्त्वम् । तद्यथा अलातचक्रं प्रत्यक्षं दृश्यतेऽनुमानाच्च गम्यते नैतदस्तीति ।

कस्यचित्खल्वपि सकृत्कृतोऽभिसंबन्धोऽत्यन्ताय कृतो भवति । तद्यथा—वृक्षपर्णयोरयं वृक्ष इदं पर्णमिति । तद्विदेशस्थमपि दृष्ट्वा जानाति 'वृक्षस्येदं पर्ण'मिति ।

किं पुनरयं पर्युदासो 'यदन्यत्प्रथमासमानाधिकरणा'दिति, आहस्वित्प्रसज्यप्रतिषेधः 'प्रथमासमानाधिकरणे ने'ति ? कश्चात्र विशेषः ?

**लटः शतृशानचावप्रथमासमानाधिकरण इति चेत्प्रत्ययोत्तरपदयोरुपसङ्ख्यानम् ॥ ३ ॥**

लटः शतृशानचावप्रथमासमानाधिकरण इति चेत्प्रत्ययोत्तरपदयोरुपसङ्ख्यानं कर्तव्यम् । कौर्वतः पाचतः* । कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिरिति†[1] ।

अस्तु तर्हि प्रसज्यप्रतिषेधः 'प्रथमासमानाधिकरणे ने'ति ।

ह्यन्यथादेशस्य तदनुपपद्यते इति भावः । तद्यथेति । आशुसञ्चाराच्चक्रभ्रान्तिरुत्पद्यते । रूपसहचारिणस्तु स्पर्शस्याऽनेकदिक्कस्य युगपदग्रहणादनन्यथासिद्धानुमानेन प्रत्यक्षाभासो बाध्यते । तदुक्तं हरिणा—

'स्पर्शप्रबन्धो हस्ते न तथा चक्रस्य सन्ततः ।
न तथाऽलातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् ॥ इति ।

कस्यचिदिति । न भूयोदर्शनेन संम्बन्धग्रहणमपि तु सकृद्दर्शनेनापीत्यर्थः । वृक्षपर्णयोरिति भाष्यकारवचनप्रामाण्या'ज्जातिरप्राणिना'मित्येकवद्भावो न कृतः । किं पुनरिति । यद्यपि प्रसज्यप्रतिषेधे वाक्यभेदाद्गौरवप्रसङ्गस्तथापि लक्ष्यसिद्धये शास्त्रे क्वचिदसावङ्गीकृत इति

उ० – स्पर्शस्य—उद्भूतस्येति द्रष्टव्यम् । तेन दीपप्रभायां स्पर्शाऽग्रहेऽपि अनेकदिक्करूपस्य युगपद्ग्रहणेऽपि न दोषः । व्याप्तिग्रहणाऽभावं समाधत्ते भाष्ये—कस्यचिदिति । तद्व्याचष्टे—न भूय इति । ननु—'लट् अप्रथमान्तसामानाऽधिकरण्यवान्, तदनुवादेन विहिताऽऽदेशस्थानित्वा'दित्यनुमानम्, तत्र दृष्टान्ताऽभावेन कथं व्याप्तिग्रह इति चेन्न; 'यः स्थानी स आदेशसमानधर्मे'ति सामान्यतो व्याप्त्यैव सहकारिविशेषबलाद्विशेषाऽनुमितिः । अत्राऽपि शतृविधायकशास्त्रमेवाऽनुकूलस्तर्क इत्याहुः । वृक्षपर्णयोर्जातित्वादेकवद्भावः स्यादत आह—भाष्यकारेति । व्यक्तिप्राधान्यविवक्षणादिति भावः । भाष्ये—यदन्यत्प्रथमासमानाधिकरणादिति । तत्राऽवध्यवधिमतोः साजात्यादन्यत्किञ्चित्समानाऽधिकरणमेव गृह्यते । तेन अप्रथमान्तेन समानाऽधिकरणस्य लट इति फलति । यथाश्रुते तु 'कौर्वत'

१—'अङ्गारोऽलातमुल्क'मित्यमरः । उभयोरग्रयोरग्निविशिष्टो दण्ड इहाऽलातशब्देनाभिधीयते । "अलातचक्रवत् तदुपलब्धिराशुसंचारात् ।" ( ३ । २ । ६० ) इति न्यायदर्शने गौतमः । "आशुसंचारादलातचक्रस्य भ्रमतो विद्यमानः क्रमो न गृह्यते । क्रमस्याऽग्रहणादविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवती"ति तद्भाष्ये वात्स्यायनः ।

* तस्यापत्यम् । ४ । १ । ९२ १—इति क्वचिन्न । † षष्ठी २ । २ । ८

प्रथमाप्रतिषेध उत्तरपद आदेशानुपपत्तिः ॥ ४ ॥

प्रथमाप्रतिषेध उत्तरपद आदेशयोरनुपपत्तिः । कुर्वती चासौ भक्तिश्च कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिरितिः पचमानभक्तिरिति ।

ये चाप्येते समानाधिकरणवृत्तयस्तद्धितास्तत्र च शतृशानचौ न प्राप्नुतः,— कुर्वत्तरः पचत्तरः, कुर्वाणतरः पचमानतरः । कुर्वद्रूपः पचद्रूपः, कुर्वाणरूपः पचमानरूपः । कुर्वत्कल्पः पचत्कल्पः, कुर्वाणकल्पः पचमानकल्प इति ।

सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् ॥ ५ ॥

सिद्धमेतत् । कथम् ? प्रत्ययोत्तरपदयोश्च शतृशानचौ भवत इति वक्तव्यम् ।

तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः ॥ ६ ॥

तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः । आदेशनिमित्तः प्रत्ययः, प्रत्ययनिमित्तश्चादेशः, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।

उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः ॥ ७ ॥

उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः । उत्तरपदनिमित्तः सुप्, सुबन्तनिमित्तं चोत्तरपदम्, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।

प्र०—विचार्यते । कौर्वत इति । कुर्वतो देवदत्तस्याऽपत्यमित्यत्र सापेक्षत्वात्तद्धितो नोत्पद्यते । पदान्तरनिरपेक्षत्वे च पदान्तरेण सामानाधिकरण्याभावादादेशाऽप्रसङ्ग इति भावः । कुर्वद्भक्तिरिति । षष्ठीसमासः । समानाधिकरणसमासे तु प्रसज्यप्रतिषेधेऽपि दोषः । स च वक्ष्यत एव कुर्वत्तर इति । अत्र देवदत्तादिना पदान्तरेण सामानाधिकरण्यादादेशाऽप्रसङ्गः । पूर्वस्मिन्नपि पक्षे एष दोषः । सिद्धं त्विति । लक्षणशेषः कर्तव्य इत्यर्थः । पृथगुत्तरपदग्रहणमन्तरङ्गानपि

उ०—इत्यादौ दोषाऽऽपादनाऽसङ्गतिः स्पष्टैव । नन्वत्रापि 'कुर्वतो देवदत्तस्ये'त्यादिपदान्तरसामानाऽधिकरण्यमस्त्येवेत्यत आह—कुर्वत इति । वृत्तिघटकाऽतिरिक्तविशेष्याऽपेक्षमपि सापेक्षमिति भावः । पदान्तरेति । देवदत्तस्येत्यादीत्यर्थः । देवदत्तादिना पदान्तरेणेति । 'प्रथमाऽन्तेने'ति शेषः । पूर्वस्मिन्नपीति । समानाऽधिकरणसमासरूपे । 'कुर्वद्भक्ति'रित्यादिः, कुर्वत्तर इत्यादिश्च । कुर्वद्भक्तौ 'पुंवत्कर्मधारय' इति पुंवत् । ननु लक्षणान्तरे 'अपचत्कल्पं देवदत्त' इत्यादौ स्यादत आह—लक्षणशेष इति । अन्तर्वर्तिसुपा प्रत्ययपर-

१—'तेषु' पा० ।

न वा लकारस्य कृत्त्वात् प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् ॥८॥

न वैष दोषः । किं कारणम् ? 'लकारस्य कृत्त्वात्प्रातिपदिकत्वम्' । लकारः कृत्, 'कृत्प्रातिपदिक'मिति प्रातिपदिकसंज्ञा । 'तदाश्रयं प्रत्ययविधानम्' । प्रातिपदिकाश्रया स्वाद्युत्पत्तिर्भविष्यति‡ ।

तिङादेशात्सुबुत्पत्तिः ॥ ९ ॥

तिङादेशः क्रियतां सुबुत्पत्तिरिति, परत्वात्सुबुत्पत्तिर्भविष्यति* ।

तस्मादुत्तरपदप्रसिद्धिः ॥ १० ॥

तस्मादुत्तरपदं प्रसिद्धम्, उत्तरपदे प्रसिद्ध 'उत्तरपद' इति शतृशानचौ भविष्यतः ॥ इहापि तर्हि तिङादेशात्सुबुत्पत्तिः स्यात्—'पचति पठती'ति । अस्त्यत्र विशेषः । नित्योऽत्र तिङादेशः । उत्पन्नेऽपि सुपि प्राप्नोत्यनुत्पन्नेऽपि प्राप्नोति । नित्यत्वात्तिङादेशे कृते सुबुत्पत्तिर्न भविष्यति ।

इहापि तर्हि नित्यत्वात्तिङादेशः स्यात्,—कुर्वद्भक्तिः पचद्भक्तिः [ कुर्वाणभक्तिः ] पचमानभक्तिरिति । अस्त्यत्र विशेषः । शतृशानचौ तिङपवादौ, तौ चात्र निमित्तवन्तौ, न चाऽपवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वाऽपवादविषयं तत उत्सर्गोऽभिनिविशते । न तावदत्र कदाचित्तिङ् भवति । अपवादौ शतृशानचौ प्रतीक्षते ।

तदेतत्क सिद्धं भवति ? यत्र सामान्यादुत्पत्तिः । यत्र हि विशेषाद्—'अत

प्र०—विधीन्बहिरङ्गो लुग्बाधत इति लुकि कृते प्रत्ययलक्षणप्रतिषेधादप्रत्ययपरत्वार्थम् । उत्तरपदनिमित्त इति । सत्युत्तरपदे शतृशानचौ भवतः । तयोश्च कृत्त्वात्सुबुत्पत्तिः, सुब्निमित्तः समासः, समासनिमित्तं चोत्तरपदमित्यर्थः । न वेति । लस्य कृत्त्वात्सुबुत्पत्तौ सत्यामणादिषु तरबादिषु चोत्पन्नेष्वादेशविधानमिति नास्तीतरेतराश्रयदोष इत्यर्थः । उत्तरपदे इतरेतराश्रयं परिहरति—तिङा-

उ०—स्वेनैव सिद्धे किमुत्तरपदग्रहणेनेत्यत आह—पृथगिति । भाष्ये—आदेशनिमित्त इति । तस्मिन् हि प्रातिपदिकत्वे सुबन्तत्वे च तद्धितोत्पत्तेरिति भावः । सुप उत्तरपदनिमित्तत्वमुत्तरपदस्य च सुबन्तनिमित्तत्वं दर्शयति—सत्युत्तरपदे इति । तिङादेशादिति । तिङ्रूपादादेशादित्यर्थः । एवञ्च पच्—ल् इत्यत्र तिङो बाधित्वा सुपि

‡ कृदतिङ् ३ । १ । ९३; कृत्तद्धितसमासाश्च १।२।४६; स्वौजसमौट्......ङ्योस्सुप् ४।१।२
* तिप्तस्झि......वहिमहिङ् ३ । ४ । ७८; स्वौजसमौट्......ङ्योस्सुप् ४ । १ । २
१—क्वचिन्न ।

इञ्' [ ४ । १ । ६५ ] इतीतरेतराश्रयमेव तत्र भवति,—वीक्षमाणस्यापत्यं वैक्षमाणिरिति ॥ इह च शतृशानचौ प्राप्नुतः,—पचतितराम् जल्पतितराम् पचतिरूपम् जल्पतिरूपम् पचतिकल्पम् जल्पतिकल्पम् पचति पठतीति ।

तदेतत्कथं कृत्वा सिद्धं भवति ?

**शतृशानचौ यदि लटो वा ॥**

यदि लटः शतृशानचौ वा भवतो व्यवस्थितविभाषा च । तेनेह च भविष्यतः—कौर्वतः पाचतः, कुर्वद्भक्तिः पचद्भक्तिः, [ कुर्वाणभक्तिः ] पचमानभक्तिः, कुर्वत्तरः पचत्तरः, [ कुर्वाणतरः ] पचमानतरः, कुर्वद्रूपः, पचद्रूपः, [ कुर्वाणरूपः ] पचमानरूपः, कुर्वत्कल्पः पचत्कल्पः, [ कुर्वाणकल्पः ] पचमानकल्पः, पचन् पठन्निति च लटः शतृशानचौ । इह च न भविष्यतः,—पचतितराम् जल्पतितराम्, पचतिरूपम् जल्पतिरूपम् पचतिकल्पम्, जल्पतिकल्पम्, पचति पठतीति च लटः शतृशानचौ ।

तत्तर्हि वावचनं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'नन्वोर्विभाषा' [ ३ । २ । १२१ ] इति । यदि तदनुवर्तते 'वर्त्तमाने लट्' [१२३] इति लडपि विभाषा प्राप्नोति । सम्बन्धमनुवर्तिष्यते । नन्वोर्विभाषा । 'पुरि लुङ्चास्मे' [ १२२ ] विभाषा । 'वर्तमाने लट्' 'पुरि लङ् चास्मे' विभाषा । लटः शतृशानचौ विभाषा । 'पुरि लुङ्चास्म' इति निवृत्तम् ।

न तर्हीदानीमप्रथमासमानाधिकरण इति वक्तव्यम् ? वक्तव्यं च । किं प्रयोजनम् ? 'नित्यार्थम्' । अप्रथमासमानाधिकरणे नित्यौ [ शतृशानचौ ] यथा स्यातामिति ।

प्र०—देशादिति । वीक्ष्यमाणस्येति । अत्राऽकृते शानच्यकारान्तत्वाभावादिञोऽप्रसङ्ग इत्यर्थः । पचतितरामिति । 'तिङश्चे' त्येतत्तु लकारान्तरार्थं स्यात्—अपचत्तरामिति । पचतीति । अत्रापि लस्यकृत्त्वात् सुप्युत्पन्ने प्रत्यये विधीयमान आदेशः स्यादित्यर्थ । तिङां तु लिडादयोऽवकाशाः । लस्य तदेतदिति । व्यवस्थितविभाषाविज्ञानाच्च यथेष्टं प्रयोगसिद्धिः । न तर्हीति । व्यवस्थितविभाषयैव सिद्धत्वान्नित्ययोरादेशयोरिति भावः । नित्यार्थमिति । 'लटः शतृशानचा'-वित्येको योगः क्रियते । तत्र च विभाषेति वर्तते । ततो'ऽप्रथमासमानाधिकरण' इति द्वितीयो

उ०—समास उत्तरपदे शत्रादि तिङां बाधकमिति भावः । भाष्ये–निमित्तवन्ताविति । 'उत्तरपद'रूपनिमित्तस्य सम्पन्नत्वादपवादत्वेन शतृशानचावेवेति भावः । ननु 'पचती'त्यादौ प्रत्ययोत्तरपदत्वाऽभावात्कथमादेशप्रसक्ति-

१—क्वचिन्न ।

क्व तर्हीदानीं विभाषा ? प्रथमासमानाधिकरणे । पचन् पचति । पचमानः पचत इति ॥ १२४ ॥

## लक्षणहेत्वोः क्रियायाः ॥ ३ । २ । १२६ ॥

### लक्षणहेत्वोः क्रियाया गुण उपसङ्ख्यानम् ॥ १ ॥

लक्षणहेत्वोः क्रियाया गुण उपसङ्ख्यानं कर्तव्यम् । तिष्ठन्मूत्रयति । गच्छन्भक्षयतीति ।

### कर्तुश्च लक्षणयोः पर्यायेणाऽचयोगे ॥ २ ॥

कर्तुश्च लक्षणयोः पर्यायेणाऽचयोग उपसङ्ख्यानं कर्तव्यम् । योऽधीयान आस्ते स देवदत्तः । य आसीनोऽधीते स देवदत्तः [ इति ] ।

अ'च'योग इति किमर्थम् ? य आस्ते चाधीते च स चैत्रः ।

### तत्त्वाऽन्वाख्याने च ॥ ३ ॥

तत्त्वान्वाख्याने चोपसङ्ख्यानं कर्तव्यम् । शयाना वर्धते दूर्वा । आसीनं वर्धते विसमिति ।

प्र०—योगो नित्यार्थः । व्यवस्थितविभाषाश्रयेण तु विस्पष्टा प्रतिपत्तिर्न स्यादिति तदर्थो द्वितीयो योगः ॥ १२४ ॥

लक्षण । गुण इति । गुणशब्देनाऽत्र साधनमुच्यते । 'तिष्ठन् मूत्रयती'त्यादौ यदा स्थानादिना मूत्रादिक्रिया लक्ष्यते तदा सूत्रेणैवादेशसिद्धिः । यदा तु कारकं लक्ष्यते तदर्थमिदं वचनम् । 'बहुषु मूत्रयत्सु को देवदत्त' इत्युक्ते 'यस्तिष्ठन्मूत्रयती'ति प्रतिवचनेन देवदत्तो लक्ष्यते । अथवा अशौचादिगुणो गृह्यते । कर्तुश्चेति । यदा पूर्ववाक्ये गुणः साधनं गृह्यते तदा तेनैव सिद्धे पर्यायार्थः । यदा त्वशौचादेर्गुणस्य तत्र ग्रहणं तदा विध्यर्थम् । तत्त्वाख्यान इति ।

उ०—एत आह—अत्राऽपीति । सुबेव प्रत्यय इति भावः ॥ १२४ ॥

लक्षणहेत्वोः । भाष्ये—क्रियाया गुणे इति । क्रियायाः कारके इत्यर्थः । कारकनिरूपितं यदा लक्षणत्वं धात्वर्थस्य तदर्थमिदं, तदाह—गुणशब्देनेति । यदा स्थानादिनेति । 'कथमयं मूत्रयती'त्यादिप्रश्ने यदेदमुत्तरं तदा तया सा लक्ष्या भवतीति बोध्यम् । यदा त्विति । यदा क्रियया कारकं लक्ष्यते तदा तदर्थमिदमित्यर्थः । देवदत्तो लक्ष्यत इति । मूत्रणसमानकालिकस्थानक्रिययेत्यर्थः । गृह्यत इति । गुणशब्देनेत्यर्थः । अत्र पक्षेऽशुचित्वादिगुणस्येदं लक्षणं न तु क्रियाया इति भावः । अत्र पक्षे 'लक्षणहेत्वोः क्रियाया' इति सूत्रे गुणे लक्ष्ये उपङ्ख्यानं कार्यमित्यर्थः । भाष्ये—कर्तुश्चेति । कर्तृलक्षणभूतयोः क्रिययो-

१—क्वाचित्कम् । २—'तत्त्वाख्याने च' पा० ।

## सदादयश्च बहुलम् ॥ ४ ॥

सदादयश्च बहुलमिति वक्तव्यम् । सन्ब्राह्मणः, अस्ति ब्राह्मणः । विद्यते ब्राह्मणः, विद्यमानो ब्राह्मण इति ।

## इङ्जुहोत्योर्वावचनम् ॥ ५ ॥

इङ्जुहोत्योर्वेति वक्तव्यम् । अधीते, अधीयानः । जुहोति, जुह्वत्[१] ।

## माङ्याक्रोशे ॥ ६ ॥

माङ्याक्रोश इति वक्तव्यम् । मा पचन् । मा पचमानः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'लक्षणहेत्वोः क्रियाया' इत्येव सिद्धम् ॥ इह तावत्तिष्ठन्मूत्रयतीति तिष्ठतिक्रिया मूत्रयतिक्रियाया लक्षणम् । गच्छन्भक्षयतीति गच्छतिक्रिया भक्षयतिक्रियाया लक्षणम् ॥ योऽधीयान आस्ते स देवदत्त इति, अध्ययनक्रियाऽऽसनक्रियाया लक्षणम् । य आसीनोऽधीते स देवदत्त इति, आसिक्रियाऽध्ययनक्रियाया लक्षणम् । इदं तर्हि प्रयोजनम्—'अक्षयोग इति वक्ष्यामी'ति, इह मा भूत्—य आस्ते चाऽधीते च स चैत्र इति । एतदपि नास्ति प्रयोजनम् । नैतत्क्रियाया लक्षणम् । किं तर्हि ? कर्तृलक्षणमेतत् ॥ शयाना वर्धते दूर्वेति

प्र०—स्वभावाख्याने विनापि लक्ष्यलक्षणभावेनेत्यर्थः । नह्यासनं वृद्धेर्लक्षणं, किं तर्हि, स्वभावमात्रकथनम्—आसीनं विसमिति । सदादयश्चेति । वाग्रहणस्याऽयं प्रपञ्चः । सच्छब्दो विद्यमानवाचीति तत्सदृशाः सदादिशब्देनोपात्ता नान्ये इत्याह—इङ्जुहोत्योर्वेति । माङ्याक्रोश इति । लुङि प्राप्तेऽस्मादेवादेशविधानाल्लडनुमीयते । तिष्ठतिक्रियेति । स्थितिक्रियालक्षिता तु मूत्रणक्रिया 'यस्तिष्ठन्मूत्रयति स देवदत्त' इति सर्वनामपरामर्शे देवदत्तस्य लक्षणं, तद्गतस्य वाऽशौचादेरिति भावः । नैतदिति । समुच्चीयमानं क्रियाद्वयं परस्परस्याऽलक्षणं, कर्तृविशेषस्य लक्षणमित्यर्थः । शेतिक्रियेति । तत्त्वाख्यानमपि लक्षणं भवति । यथा चैतन्यलक्षणः पुरुष

उ०—वाचकाम्यापर्यायेणेत्यर्थः । सदादयश्चेति । प्रथमासमानाऽधिकरणार्थमिदम् । वाग्रहणस्याऽयमिति । 'लटः शतृशानचा'विति विभक्तसूत्रेऽनुवर्तमानवाग्रहणस्य 'सदादयश्चे'त्यादिवचनसमुदाय इत्यर्थः ।

ननु क्रिययोरेव लक्ष्यलक्षणभावे 'को देवदत्त' इति प्रश्ने इदमुत्तरं न स्यादत आह—स्थितिक्रियेति । सर्वनामपरामर्शे इति । यत्तद्रूपसर्वनामपरामृष्टदेवदत्तस्य लक्षणमिति फलितम् । अन्यथा वचनान्तरारम्भेऽपि तिष्ठतेः शत्रनापत्तिः । न हि तद्वाच्या क्रिया देवदत्तस्य लक्षणं, किन्तु तदुपलक्षितमूत्रणक्रियेति बोध्यम् । समुच्चीयमानमिति । परस्परलक्षणतामनापन्नं समुच्चीयमानं सत्कर्तृविशेषस्य लक्षणमित्यन्वयः ।

१—'जुहुवत्' पा० ।

शेतिक्रिया वृद्धिक्रियाया लक्षणम् । आसीनं वर्धते बिसमिति, आसिक्रिया वृद्धिक्रियाया लक्षणमिति ।

'सदादयश्च बहुलम्' 'इङ्जुहोत्योर्वा' 'माङ्याक्रोश' इति वक्तव्यमेव ॥१२६॥

## तौ सत् ॥ ३ । २ । १२७ ॥

'तौ'ग्रहणं किमर्थम् ? शतृशानचौ प्रतिनिर्दिश्येते । [ नैतदस्ति प्रयोजनम् । ] प्रकृतौ शतृशानचावनुवर्तिष्येते । क्व प्रकृतौ ? 'लटः शतृशानचावप्रथमासमानाधिकरणे' [ ३ । २ । १२४ ] इति ॥ अत उत्तरं पठति—

### तौ सदिति वचनमसंसर्गार्थम् ॥ १ ॥

'तौ'ग्रहणं क्रियते, 'असंसर्गार्थम्' । 'असंसक्तयोरेतैर्विशेषैः शतृशानचोः सत्संज्ञा यथा स्या'दिति[1] ॥ ननु चैते विशेषा निवर्तेरन्[2] । यद्यप्येते विशेषा निवर्तन्तेऽयं तु खलु वर्तमानः कालोऽवश्यमुत्तरार्थोऽनुवर्त्यः । तस्मिन्ननुवर्तमाने वर्तमानकालविहितयोरेव शतृशानचोः सत्संज्ञा स्याद्भूतभविष्यत्कालविहितयोर्न स्यात्* । किं पुनर्भूतभविष्य-

प्र०—इति भावः ॥ १२६ ॥

तौ सत् । तौग्रहणमिति । शतृशानचोरनुवर्तनादेव संज्ञा भविष्यतीति प्रश्नः । शतृशानचाविति । असति 'तौ'ग्रहणे प्रत्ययविधिरयं स्यान्न तु संज्ञाविधिरिति भावः । तौ सदिति । तच्छब्देन शतृशानचो रूपमात्रं परामृश्यत इति लट्स्थानिकत्वादिधर्माऽसंबद्धयोरपि संज्ञा भवतीत्यर्थः । ननु चेति । अस्वरितत्वादनपेक्षणाच्चेति भावः । भूतेति । 'वर्तमानसामीप्ये

उ०—यथा चैतन्येति । तत्स्वरूपत्वात्पुरुषस्य यथा तत्र लक्षणत्वाऽऽरोपेण शब्दप्रयोगस्तथाऽत्रापि तदारोपेण प्रत्यय इति भावः । भाष्ये—इति वक्तव्यमेवेति । 'लक्षणहेत्वो'रित्यनेनाऽसिद्धेः, यथास्थितसूत्रन्यासे सूत्रे 'वा'ग्रहणाऽनुवृत्तेरभावाच्चेत्यभिमानः ॥ १२६ ॥

तौ सत् । प्रत्ययविधिरिति । 'स'दित्यस्य प्रत्ययस्य विधिरित्यर्थः । भाष्ये—प्रकृताविति । एवञ्च प्रत्ययविधौ शतृशानचावित्यस्याऽनन्वयाऽऽपत्त्या संज्ञाविधिरेवेति भावः । धर्माऽसंबद्धयोरपीति । 'लृटः सद्वे'त्यादिविहितयोरित्यर्थः । ननु भूते शतृशानचोर्विध्यदर्शनादाह—वर्तमानसामीप्ये इति । अतिदेशादिति । तेन प्रत्ययवत्संज्ञाऽप्यतिदेशेनैव सिद्धा, तस्या अपि वर्त्तमानाऽधिकारे विहितत्वात् । 'लृटः सद्वे'ति वचनादेव भविष्यदर्थयोरपि सा सिद्धेत्यर्थः । शतृशानचावित्यस्य 'सत्संज्ञा'विति शेषः । ननूक्तरीत्या

१—क्वचिन्न । २—'निवर्तन्ते' पा० ।

* वर्तमानसामीप्ये वर्तमानवद्वा; लृटः सद्वा ३ । ३ । १३१; १४

त्कालविहितयोः सत्संज्ञावचने प्रयोजनम् ? [ प्रयोजनं ] पूरणगुणसुहितार्थसत् [ २ । २ । ११ ] इति । ब्राह्मणस्य पचन् । ब्राह्मणस्य पचमानः ।

अथ क्रियमाणेऽपि 'तौ'ग्रहणे कथमेवाऽसंसक्तयोरेतैर्विशेषैः सत्संज्ञा लभ्या ? 'लभ्ये'त्याह । कथम् ? ताविति शब्दतः । सदिति योगे क्रियमाणे तौग्रहणं योगाऽङ्गं जायते, सति च योगाऽङ्गे योगविभागः करिष्यते । 'तौ' । तावेतौ शतृशानचौ धातुमात्रात्परस्य प्रत्ययस्य भवतः । ततः 'सत्' । सत्संज्ञौ भवतः शतृशानचाविति[3] ॥ इहापि तर्हि प्राप्नुतः—कारक हारक इति† ।

प्र०—वर्तमानवद्वे'ति वचनाद्भूतेपि शतृशानचौ भवतः । किं पुनरिति । अतिदेशाद्भूते शतृशानचौ भविष्यतः । 'लृटः सद्वे'ति वचनाद्भविष्यत्यपीति प्रश्नः । पूरणेति । 'वर्तमानव'दित्यतिदेशाद्विधानमेव भूते शतृशानचोः स्यान्न तु संज्ञा । प्रत्ययाधिकाराद्धि प्रत्यय एवातिदिश्यते न तु संज्ञा । तथा 'लृटः सद्वे'ति सत्संज्ञकप्रतिरूपकविधानं स्यात् । यथा 'पिष्टपिण्डाः सिंहाः क्रियन्ता'मिति तदाकाराः क्रियन्ते । विहितयोस्तु तयोः सत्संज्ञानिबन्धनकार्याऽप्रसङ्गः । अथेति । सन्निहितस्यैव वस्तुनः सर्वनाम्ना परामर्शादिति प्रश्नः । यद्यप्यनुवृत्त्या प्रकृतयोः संज्ञासिद्धौ प्रयोजनसम्पादनाय'तौ'ग्रहणं क्रियते तथापि न प्रयोजनानुवर्ति प्रमाणमपि तु प्रमाणानुवर्ति प्रयोजनमिति क्रियमाणमपि 'तौ'ग्रहणं प्रयोजनसंपादनाय नाऽलमिति भावः । ताविति शब्दत इति । शब्देनैवाऽभिमतोऽर्थः सति योगविभागे लभ्यत इत्यर्थः । तावेताविति । पूर्वसूत्रे तयोरादेशत्वादिहाप्यादेशयोरेव विधानमिति भावः । कारक इति । तृजादीनां विधानसामर्थ्याच्छतृशानचौ न भविष्यतः, क्विबादीनामपि लोपविधानसामर्थ्यादिति यः प्रत्यय आदेशेन निवर्त्यते

उ०—सत्संज्ञासिद्धिरत आह—वर्त्तमानवदित्यादि । न तु संज्ञेति । अनधिकारादिति भावः । ननु 'लृटः सद्वे'त्यनेन सच्छब्देन विधानात्तद्विहितयोः सा सिद्धेत्यत आह–तथा लृट इति । भाष्ये–ब्राह्मणस्य पचन्निति । यद्यपि 'पूरणे'ति सूत्रे 'अत्राऽसामर्थ्यात्समासो ने'ति भाष्ये उक्तं, तथापि तत्रत्यसिद्धान्तोदाहरणस्य 'ब्राह्मणस्य द्विदय'न्नित्यस्योपलक्षणमिदम् । सन्निहितस्यैवेति । सन्निहितगुणविशिष्टस्यैवेत्यर्थः । तादृशस्यैव तत्र बुद्धिस्थत्वादिति भावः । नाऽलमिति । वाच्यवृत्त्या तदर्थाऽप्रतीतेरिति तात्पर्यम् । शब्देनैवेति । योगविभागबोधनद्वारा बोध्यत इत्यर्थः । शब्दत इति भाष्ये आद्यादित्वात्तृतीयान्तात्तसिरिति भावः । भाष्ये—सदिति योगे इति । 'स'दित्येव सूत्रे इत्यर्थः । योगाऽङ्गमिति । योगः—सूत्रसमुदायरूपाऽष्टाऽध्यायी, तदङ्गं सूत्रत्वेन, तच्च योगविभागे सतीत्यर्थः । ननु स्थानिनिर्देशाऽभावात्प्रत्ययाऽधिकाराच्चाऽऽदेशत्वं कथं, प्रत्ययस्येति च कथं लब्धमित्यत आह—पूर्वसूत्रे इति । प्रत्ययप्रकरणाच्च 'प्रत्ययस्ये'ति लब्धमिति भावः । अनुवर्त्तमानप्रत्ययपदं षष्ठ्या विपरिणम्यत इति बोध्यम् । ननु 'धातो'रित्यधिकारात्तृतीयधात्वधिकारविहितानामादेशेऽपि तव्यादीनामपि प्रसङ्गः कस्मान्नोक्तोऽत आह—तृजादीनामिति । 'लोपविधानसामर्थ्यान्न भविष्यत' इत्यनुषङ्गः ।

१—इदं क्वचिन्न । २–इदं वार्त्तिकमित्यन्ये ।
३—इतिः क्वचिन्न । † ण्वुल्तृचौ ३ । १ । १३३

## अवधारणं लृटि विधानम् ।

'लृटः सद्वा' [ ३ । ३ । १४ ] इत्येतन्नियमार्थं भविष्यति—लृट एव धातुमात्रात्परस्य नान्यस्ये'ति ॥ कैमर्थक्यान्नियमो भवति ? विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् ? नित्यौ शतृशानचौ प्राप्तौ तौ विभाषा विधेयौ । तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति[1] न नियमः ।

## योगविभागतश्च विहितं सत् ।

एवं तर्हि योगविभागः करिष्यते—'लृटः सत्' । लृटः सत्संज्ञकौ[2] भवतः । किमर्थमिदम् ? नियमार्थम्—'लृट एव धातुमात्रात्परस्य नान्यस्ये'ति । ततो 'वा' । वा च लृटः शतृशानचौ सत्संज्ञौ भवतः । तत्रायमप्यर्थः—'सद्विधिर्नित्यमप्रथमासमानाधिकरणे' इति वक्ष्यति‡ तन्न वक्तव्यं भवति ।

अथ यावेतावुत्तरौ शत्रानौ× किमेतौ लादेशावाहोस्विदलादेशौ ? कश्चात्र विशेषः ?

प्र०—तस्य तदादेशापवादौ शतृशानचौ प्राप्नुत इत्यभिप्रायेण ण्वुलुदाहृतः । एवं च नन्दनाद्यप्युदाहार्यम् । 'युवोरनाका'वित्यस्य तु तद्धितोऽवकाशः । तन्न वक्तव्यमिति । कथमिति चेदुच्यते । ताविन्यत्र योगेऽप्रथमासमानाधिकरणादीन् विशेषाननुवर्त्यशतृशानचौ विधीयेते, तावेव च 'लृटः स'दित्यनेन नियम्येते । 'वे'त्यनेन तु प्रथमासमानाधिकरणादौ लट इव विकल्पेन विधीयेते । शत्रानाविति । 'इङ्धार्योः शत्रकृच्छ्रिणि' 'पूङ्यजोः शानन्' 'ताच्छील्यवयोवचनशक्तिषु चान'शिति प्रत्यायानां ग्रहणं, तत्र लटोनुवृत्त्यननुवृत्तिभ्यां पक्षद्वयसंभवः । उत्तरयोरिति । लादेशेषु वासरूपविधिर्नास्तीत्युक्तत्वादिति भावः । साधनाभिधानं चेति । तदाऽनिष्टस्याऽपि साधनस्या-

उ०—ण्वुल्विधानन्त्वादेशप्रवृत्तये एव स्यात्, न हि स क्वचित्प्रयोगे श्रूयत इत्यभिमानः । नियमं साधयति भाष्ये—योगविभागतश्चे ति । ताविति योगविभागेन यतः सत्सञ्ज्ञकं विहितमतः लृटः सदिति योगविभागेन नियम उपपद्यत इत्यर्थः । तद्व्याचष्टे–एवन्तर्हीत्यादि । तावेवेति । 'ता'वित्यनेन पुनर्विहितौ 'स'दित्यनेन च प्रक्रान्तत्वाऽविशेषात्सर्वेषामपि संज्ञा । नन्वेवमपि 'द्विषोऽमित्रे' इत्यादिविहितशतुः संज्ञा न स्यादिति चेन्न, 'लृटः सद्वे'ति ज्ञापकात्तच्छब्देन शतृत्वशानच्त्वाभ्यामेव परामर्शो न तु लट्स्थानिकत्वादिविशेषस्याऽप्याश्रयणमित्याशयात् । लट इवेति । पूर्वविहितशतृशानज्मात्राऽनुवादेन विकल्पोऽनेन विधीयत इत्यर्थः । एवञ्च लट्लृटोरुभयोरपि प्रथमासामानाऽधिकरण्ये आदेशविकल्पसिद्धिरिति भावः । एवञ्च यथान्यासेऽप्ययं

---

१—'विधिः स्यान्न' पा० ।  २—'संज्ञौ' पा० ।  ‡ ३ । ३ । १४ वा० १

× पूङ्यजोः शानन्; ताच्छील्यवयोवचनशक्तिषु चानश्; इङ्धार्योः शत्रकृच्छ्रिणि ३ । २ । १२८–१३०

## उत्तरयोर्लादेशे वावचनम् ॥ २ ॥

उत्तरयोर्लादेशे वेति वक्तव्यम्[१] । पवमानः[२] यजमानः । पवते[३] यजत इत्यपि यथा स्यात् ।

## साधनाभिधानं [ च[४] ] ॥ ३ ॥

साधनाऽभिधानं च प्राप्नोति । 'लः कर्मणि च भावे चाकर्मकेभ्यः' [ ३ । ४ । ६९ ] इति[४] भावकर्मणोरपि प्राप्नुतः ।

## स्वरः ॥ ४ ॥

स्वरश्च साध्यः । कतीह पवमाना[५]: । 'अदुपदेशाल्लसार्वधातुकमनुदात्तं भवती'त्येष स्वरः+ प्राप्नोति ।

## उपग्रहप्रतिषेधश्च ॥ ५ ॥

उपग्रहस्य च प्रतिषेधो वक्तव्यः । कतीह निघ्नानाः । 'तङानावात्मनेपदम्' [ ४ । १ । १०० ] इत्यात्मनेपदसंज्ञा प्राप्नोति ॥ स्तां तर्हि अलादेशौ ।

## अलादेशे षष्ठीप्रतिषेधः ॥ ६ ॥

अलादेशे षष्ठीप्रतिषेधो वक्तव्यः । सोमं पवमानः । नडमाघ्नानः । अधीयन्पारायणम् । 'लप्रयोगे ने'ति प्रतिषेधो* न प्राप्नोति ।

मा भूदेवं 'तृ'न्नित्येवं* भविष्यति । कथम् ? तृन्निति नेदं प्रत्ययग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क्व संनिविष्टानां प्रत्याहारः ? 'लटः श'त्रित्यत आरभ्याऽऽतृनो नकारात्† ।

यदि प्रत्याहारग्रहणं चौरस्य द्विषन् वृषलस्य द्विषन् अत्रापि प्राप्नोति‡ ।

## द्विषः शतुर्वावचनम् ॥ ७ ॥

द्विषः शतुर्वेति वक्तव्यम् । तच्चावश्यं वक्तव्यं प्रत्ययग्रहणे सति प्रतिषेधार्थम् । तदेव प्रत्याहारग्रहणे सति विध्यर्थं भविष्यतीति[४] ॥ १२७ ॥

प्र०—ऽभिधानं प्राप्नोति, कर्तु रेव चेष्यते । स्वर इति । चित्करणन्तु 'निघ्नाना' इत्यादौ सावकाशम् । उपग्रहस्येति । आत्मनेपदसंज्ञाया इत्यर्थः । अन्यथा परस्मैपदिभ्यश्चानश् न स्यात् ॥१२७॥

उ०—विकल्पः प्रथमासामानाधिकरण्यविषय एवेति ध्वनितम् । लादेशेष्विति । 'वाऽसरूप'न्यायस्य अनादेशप्रत्ययविषयत्वादिति भावः । साधनाऽभिधानस्येष्टत्वादाह—अनिष्टस्याऽपीति । निघ्नाना इत्यादाविति । अदुपदेशात्परत्वाऽभावादिति भावः ॥ १२७ ॥

१—'कर्त्तव्यम्' पा० । २—'पचमानः' पा० । ३—'पचते' पा० । ४—क्वचित्कम् ।
५—'पचमानाः पा० । + तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ६ । १ । १८६
* न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९ † 'लटः शतृशानचौ' ३ । २ । १२४ इत्यारभ्य 'तृन्' ३ । २ । १३५ पर्यन्तम् । ‡ द्विषोऽमित्रे ३ । २ । १३१

३८ *

## तृन् ॥ ३ । २ । १३५ ॥

### तृन्विधावृत्विक्षु चानुपसर्गस्य ॥ १ ॥

तृन्विधावृत्विक्षु चाऽनुपसर्गस्येति वक्तव्यम् । होता पोता । अनुपसर्गस्येति किमर्थम् ? प्रशास्ता प्रतिहर्ता ।

### नयतेः षुक् च ॥ २ ॥

नयतेः षुग्वक्तव्यः, तृंश्च प्रत्ययो वक्तव्यः । नेष्टा ।

### न वा धात्वन्यत्वात् ॥ ३ ॥

न वा वक्तव्यम्[1] । किं कारणम् ? 'धात्वन्यत्वात्' । धात्वन्तरं नेषतिः ।

कथं ज्ञायते ?

### नेषतु नेष्टादिति दर्शनात् ॥ ४ ॥

नेषतु नेष्टादिति [ हि[2] ] प्रयोगो दृश्यते । इन्द्रो वस्तेन[3] नेषतु । गावो नेष्टात् ।

### त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च ॥ ५ ॥

त्विषेर्देवतायां तृन्वक्तव्योऽकारश्चोपधाया अनिट्त्वं च [ वक्तव्यम् ] । त्वष्टा । किं पुनरिदं त्विषेरेवाऽनिट्त्वम् ? 'ने'त्याह । यच्चानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैष शेषोऽनिट्त्वं चेति ।

### क्षदेश्च युक्ते ॥ ६ ॥

क्षदेश्च[4] युक्ते तृन्वक्तव्यः । क्षत्ता ।

प्र०—तृन् । तृन्विधाविति । अताच्छील्यार्थमिदम् । प्रशास्तेति । तृजेव भवति 'तृंस्तृचौ शास्तिक्षदादिभ्यः संज्ञायां चानिटा'वित्यनेन । स्वरे च विशेषः । तृनि 'तादौ च निति कृत्यता'विति गतेः प्रकृतिस्वरो भवति । तृचि कृत्स्वरः । नवेति । नयतेस्तु षुकि गुणो न स्यात् । नेषतेस्तु ऋत्विजि तृनि वक्ष्यमाणादनिड्वचनात् सर्वोपसङ्ख्यानशेषादिडभावः । नेत्याहेति ।

उ०—तृन् । अताच्छील्यार्थमिति । अनुपसर्गस्येति विशेषं वक्तुमित्यन्ये । तृनभावे कथम्प्रशास्तेत्यत आह—तृजेवेति । नन्वेवं 'प्रशासिते'ति स्यादत आह—तृंस्तृचाविति । 'शंसिक्षदादिभ्य' इति हरदत्तोक्तपाठे तु वृद्धिनलोपौ दुर्लभौ । नन्वत्र गतिसमासे उभयथाऽप्यव्ययपूर्वपदप्रकृतिस्वर एवेति कथं स्वरे विशेषोऽत आह—तादौ चेत्यादि । षुकि 'ति'प्रत्ययसन्नियोगशिष्टतयाऽन्तरङ्गत्वाद्गुणात्पूर्वमेव षुक् स्यादिति

१—'वक्तव्यः' पा० । २—क्वाचित्कः ।

३—'नस्तेन' इति कीलहार्नपाठः । ४—दिरयं वार्तिके सौत्रो धातुः ।

## छन्दसि तृच ॥ ७ ॥

छन्दसि तृच तृंश्च वक्तव्यः । क्षत्तृभ्यः सङ्ग्रहीतृभ्यः* । क्षत्तृभ्यः सङ्ग्रहीतृभ्यः ॥ १३५ ॥

## ग्लाजिस्थश्च क्स्नुः ॥ ३ । २ । १३९ ॥

### स्नोः कित्त्वे स्थ ईकारप्रतिषेधः ॥ १ ॥

स्नोः कित्त्वे स्थ ईकारस्य प्रतिषेधो वक्तव्यः । स्थास्नुरिति । 'घुमास्थागापाजहातिसां हलि' [ ६ । ४ । ६६ ] इतीत्वं प्राप्नोति ॥ एवं तर्ह्यकित्[1] करिष्यते ।

### अकिति गुणप्रतिषेधः ॥ २ ॥

यद्यकित्क्रियते[2] गुणप्रतिषेधो वक्तव्यः । जिष्णुरिति† ।

### भुव इट्प्रतिषेधश्च ॥ ३ ॥

भुव इट्प्रतिषेधश्च वक्तव्यः‡ । किं चान्यत् ? गुणप्रतिषेधश्च । भूष्णुरिति । अस्तु तर्हि कित् । ननु चोक्तं 'स्नोः कित्त्वे स्थ ईकारप्रतिषेध' इति । नैष दोषः ।

### स्थादंशिभ्यां स्नुश्छन्दसि ॥ ४ ॥

स्थादंशिभ्यां स्नुश्छन्दसि वक्तव्यः । स्थास्नु जङ्गमम् । दङ्क्ष्णवः पशव इति । स इदानीं स्थः[3] स्नुरविशेषेण विधास्यते । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं 'स्नोः कित्त्वे स्थ ईकारप्रतिषेध' इति । एवं तर्हि गित्करिष्यते ।

---

प्र०—त्विषेः स्वत एवाऽनिट्त्वादिति भावः ॥ १३५ ॥

ग्लाजि । 'क्स्नु'रिति श्रवणात् कित्त्वं निश्चित्याह—क्स्नोः कित्त्व इति । एवं तर्हीति ।

---

उ०—भावः । ननु नेषनेरिड् दुर्वारोऽत आह—नेषतेस्त्विति । त्विषेरिति । तथा च तत्राऽनुपयोगात्सर्वशेष इति भावः । भाष्ये—क्षत्तेति । द्वाराऽधिकृतो रथसूतश्चेत्याहुः ॥ १३५ ॥

ग्लाजि । ननु न कद्वयमुपलभ्यतेऽत आह—लक्ष्येति । तेनेति । निर्देशेनाऽसिद्धत्वं बाध्यत

---

* यजु० १६ । २६ तृन्प्रत्ययान्तस्य स्थलं छन्दसि मृग्यम् । १—'न कित्' इति कीलहार्नं पाठः ।
२—क्वाचित्कः । † सार्वधातुकार्धधातुकयोः ७ । ३ । ८४; क्ङिति च १ । १ । ५
‡ श्र्युकः किति ७ । २ । ११ ३—'स्थोऽविशेषेण' पा० ।

## स्नोर्गित्वान्न स्थ ईकारः

स्नोर्गित्वात्स्थ ईकारो न भविष्यति। किं कारणम्?

## [1]क्ङितोरीत्त्वशासनात्।

[1]क्ङितोरीत्त्वं शिष्यते॥ इह तर्हि जिष्णुरिति गुणः प्राप्नोति।

## गुणाऽभावस्त्रिषु स्मार्यः

गुणाभावस्त्रिषु स्मर्तव्यः×। गिति क्ङिति ङिति [2]चेति। तद्गकारग्रहणं कर्तव्यम्? न कर्तव्यम्। क्रियते न्यास एव। ककारे गकारश्चर्त्वभूतो+ निर्दिश्यते—'क्क्ङिति चे'ति॥ इह तर्हि भूष्णुरिति 'श्र्युकःकिति' [७।२।११] इतीट्प्रतिषेधो न प्राप्नोति।

## श्र्युकोऽनिट्त्वं गकोरितोः॥

श्र्युकोऽनिट्त्वं गकारककारयोरिति वक्तव्यम्। तद्गकारग्रहणं कर्तव्यम्? न कर्तव्यम्। क्रियते न्यास एव। ककारे गकारश्चर्त्वभूतो निर्दिश्यते—'श्र्युकः किती'ति। यद्येवं चर्त्वस्याऽसिद्धत्वाद्धशि चेत्युत्वं प्राप्नोति*। सौत्रो निर्देशः।

अथवाऽसंहितया निर्देशः करिष्यते—श्र्युकः—कितीति।

स्नोर्गित्त्वान्न स्थ ईकारः [1]क्ङितोरीत्त्वशासनात्।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः॥

प्र०—गकारस्य चर्त्वेन निर्देशो व्याख्यास्यत इत्यर्थः। ककार इति। परभूत इत्यर्थः। एतच्च लक्ष्यमूलाद्व्याख्यानाल्लभ्यते। सौत्र इति। तेनाऽसिद्धत्वाऽभावादुत्वाऽभावे विसर्जनीयो भवतीत्यर्थः। अथवेति। संहितायामुत्वविधानात् इह तु तदभावादवसानविषयत्वाद्विसर्जनीयो भवति॥ १३९॥

उ०—इत्यर्थः। तदभावादिति। असंहिताकृताऽर्धमात्राकालेन विच्छेदादवसानविषयत्वमिति भावः। ननु संहिताया अविवक्षायां विसर्गोऽपि कथं, तत्राऽपि संहिताऽधिकारादिति स्पष्टमष्टमे भाष्ये इति चेन्न, पूर्वेण संहितायां एवाऽवसानकार्यनिमित्तत्वादिति भावः॥ १३६॥

१—'क्ङितोः' पा० × क्ङिति च १।१।५ २—'च'क्वचिन्न।
+ खरि च ८।४।५५ * हशि च ६।१।११४

## शमित्यष्टाभ्यो घिनुण् ॥ ३ । २ । १४१ ॥

घिनणयं वक्तव्यः । घिनुणि हि सति शमिनौ शमिनः तमिनौ तमिनः 'उगिदचां सर्वनामस्थानेऽधातोः' [ ७ । १ । ७० ] इति नुम्प्रसज्येत । नैष दोषः । झल्ग्रहणं तत्र चोदयिष्यति† ॥ इह तर्हि शमिनितरा शमिनीतरा तमिनितरा तमिनीतरा 'उगितो घादिषु नद्या अन्यतरस्यां ह्रस्वो भवती'त्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत‡ । [ तस्माद्घिनणयं वक्तव्यः । ] इष्यत एव ह्रस्वत्वम् ।

### घिनुणकर्मकाणाम् ॥ १ ॥

घिनुणकर्मकाणामिति वक्तव्यम् । इह मा भूत्—'संपृणक्ति × शाक'मिति ।

### उक्तं वा ॥ २ ॥

किमुक्तम् ? 'अनभिधाना'दिति+ ॥ १४१ ॥

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ॥ ३ । २ । १४६ ॥

किमर्थं निन्दादिभ्यो वुञ्विधीयते न ण्वुलैव‡‡ सिद्धम् । नह्यस्ति विशेषो निन्दादिभ्यो ण्वुलो वा वुञो वा । तदेव रूपं स एव स्वरः* ।

---

प्र०—शमित्य । घिनणयमिति । उकारे हि सति कार्यार्थत्वसंभवात्तस्योच्चारणार्थत्वं न स्यादिति भावः । इष्यत इति । विकल्पेनैव ह्रस्वत्वमिष्यते न तु नित्यमित्युकार उगित्कार्यार्थ इति स्थितम् ॥ १४१ ॥

निन्द । वुञमनेकाच इति । जातौ बहुवचनम्, असूयशब्दस्यैकस्यैव प्रयोजकत्वात् ।

---

उ०—शमित्य । उच्चारणार्थत्वमिति । केवलोच्चारणार्थत्वमित्यर्थः । शमिनीतरेति । ननु ह्रस्वाऽभावे 'तसिलादिषु'इति पुंवत्त्वं युक्तमिति कथं दीर्घप्रयोग इति चेन्न; ताच्छीलिकानाम्प्रायेण रूढितुल्यताया भगवतोक्तत्वेन संज्ञात्वात् 'संज्ञापूरण्योश्चे'ति निषेधादित्याहुः ॥ १४१ ॥

निन्दहिंस । जातौ बहुवचनमिति । तत्र बहुवचनस्य भगवता प्रत्याख्यानादेकव्यक्तिविषये

---

† नुम्विधौ झल्ग्रहणम् ७ । १ । १ वा० ११

‡ उगितश्च ६ । ३ । ४५

१–अयं पाठः क्वाचित्कः ।

× शमित्यष्टाभ्यो घिनुण् ३ । २ । १४१

+ ३ । २ । १ वा० ५

‡‡ ण्वुल्तृचौ ३ । १ । १३३

* लिति; ञ्नित्यादिर्नित्यम् ६ । १ । १९३, १९७

वुञमनेकाचः ॥ १ ॥

वुञमनेकाचः प्रयोजयन्ति । अस्रूयकः ॥ अथ येऽत्रैकाचः पठ्यन्ते तेषां ग्रहणं किमर्थम्, न तेषां ण्वुलैव सिद्धम् ? न सिध्यति । अयं तच्छीलादिष्वर्थेषु तृन्विधीयते* स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत । वासरूपेण न्यायेन† ण्वुलपि भविष्यति ॥ अत उत्तरं पठति—

निन्दादिभ्यो वुञ्वचनमन्येभ्यो ण्वुलः प्रतिषेधार्थम् ॥ २ ॥

निन्दादिभ्यो वुञ्वचनं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यः 'तच्छीलादिषु वासरूपन्यायेनाऽन्येभ्यो ण्वुल्न भवती'ति ।

तृजादिप्रतिषेधार्थं वैके ॥ ३ ॥

अथवा [ एके मन्यन्ते ] एतज्ज्ञापयत्याचार्यः 'ताच्छीलिकेष सर्व एव तृजादयो वासरूपेण न भवन्ती'ति ॥ १४६ ॥

जुचङ्क्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदः ॥३।२।१५०॥

पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात् ॥ १ ॥

पदिग्रहणमनर्थकम् । किं कारणम् ? 'अनुदात्तेतश्च हलादेरिति सिद्धत्वात्' । 'अनुदात्तेतश्च हलादेः' [ १४९ ] इत्येवात्र युच् सिद्धः ॥ न सिध्यति । अयं पदेरुकञ् विधीयते 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' [ १५४ ] इति । स विशेषविहितः सामान्यविहितं युचं बाधेत ॥ वासरूपन्यायेन युजपि भविष्यति ।

असरूपनिवृत्त्यर्थं तु ॥ २ ॥

असरूपनिवृत्त्यर्थं तर्हि पदिग्रहणं क्रियते । एतज्ज्ञापयत्याचार्यः 'ताच्छीलिकेषु ताच्छीलिका वासरूपेण न भवन्ती'ति ॥ यद्येतज्ज्ञाप्यते 'सूददीपदीक्षश्च' [ १५३ ]

प्र०—तृजादिप्रषेधार्थं वेति । प्रत्ययसामान्यापेक्षं च ज्ञापकमाश्रीयते, न तु ण्वुलभावार्थमेव ॥ १४६ ॥

जुचङ्क्रम्य । पदिग्रहणमिति । न च सकर्मकार्थं पदिग्रहणम्, अनभिधानादनेन

उ०—जात्याश्रयणे फलाऽभावाच्चेदश्चिन्त्यम् । 'प्रयोगबहुत्वाश्रयं बहुवचन'मिति परे ॥ १४६ ॥

जुचङ्क्रम्य । सकर्मकार्थमिति । 'अनुदात्तेतश्चे'ति सूत्रे 'चलनशब्दार्था'दित्यतोऽकर्मकादित्य-

* तृन् ३ । २ । १३५ † वाऽसरूपोऽस्त्रियाम् ३ । १ । ९४ १—अयं पाठः क्वाचित्कः ।

इति दीपिग्रहणमनर्थकम् । अयं दीपे रो विधीयते 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' [ १६७ ] इति । स विशेषविहितः सामान्यविहितं युचं बाधिष्यते । एवं तर्हि सिद्धे सति यद्दीपिग्रहणं करोति तज्ज्ञापयत्याचार्यो 'भवति युचो रेण समावेश' इति । किमेतस्य ज्ञापने प्रयोजनम् ? कम्रा कन्या, कमना कन्येत्येतसिद्धं भवति† ॥ १५० ॥

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥३।२।१५८॥

किमर्थमालुजुच्यते[2] न लुशेवोच्येत । का रूपसिद्धिः—स्पृहयालुः गृहयालुः [ दयालुः[3] ] । शपि कृते‡ 'अतो दीर्घो यञि' [ ७ । ३ । १०१ ] इति दीर्घत्वं भविष्यति । एवं तर्हि सिद्धे सति यदालुचं शास्ति तज्ज्ञापयत्याचार्यो'ऽन्येभ्योऽप्ययं भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? आलुचि शीङ्ग्रहणं चोदयिष्यति × तन्न कर्तव्यं भवति ।

प्र०—सकर्मकादविधानात् ॥ १५० ॥

स्पृहि । शपि कृत इति । 'तुरुस्तुशम्यम' इत्यतस्तत्र सार्वधातुकग्रहणमनुवर्तते न तु तिङ्ग्रहणमिति भावः । एवं तर्हीति । ननु लुशि सति लकारस्येत्संज्ञा प्राप्नोति, श्रद्धालुश्च न सिध्यति श्रद्धुरिति प्राप्नोतीत्याहुः । नैष दोषः । यादित्वादित्संज्ञा न भविष्यति । यकारश्च लुप्तनिर्दिष्टः । प्रयोजनाऽभावाद्वा । नह्यत्र लित्स्वरप्रत्ययस्वरयोर्विशेषोऽस्ति, उभयत्रै'कादेश उदात्तेनोदात्त' इत्युदात्तत्वस्य भावात् । 'श्रद्धालु'शब्दस्याप्यनेकार्थत्वाद्धातूनामत्र विषये

उ०—नुवर्त्तते । तत्त्वञ्च सोपसर्गत्वेनाऽन्तर्भावितण्यर्थत्वेन वेति बोध्यम् । 'सूददीपे'ति युज्निषेधकम् ॥ १०५ ॥

स्पृहिगृहि । ननु 'अतो दीर्घ' इत्यत्र 'तिङी'त्यनुवृत्त्या कथमत्र दीर्घ इत्यत आह—तुरुस्तु इति । अत एव 'ज्ञाजनोर्जे'ति दीर्घविधानस्याऽङ्गवृत्तपरिभाषाज्ञापकत्वं सङ्गच्छते । प्रयोजनाऽभावाद्वेति । 'नेत्संज्ञे'ति शेषः । उभयत्रैकादेश इति । लित्स्वरे प्रत्ययस्वरे वा कृते उकारेण गुणरूपे एकादेशे इत्यर्थः । एवञ्चेत्त्वे लकारोच्चारणवैयर्थ्येन सामर्थ्यान्नेत्त्वमिति भावः । नन्वेवमपि 'श्रद्धालु'रिति स्यादत आह—श्रद्धालुशब्दस्याऽपीति । 'सिद्धि'रिति शेषः । धेट इति—करणस्य शेषत्वविवक्षायां षष्ठी । तस्य च मौवादिकत्वात् श्लोरभावेन द्वित्वाऽभाव इति भावः । शिदाश्रय इति । शत्राश्रय इति भावः । अथवेति । संज्ञापूर्वकतया श्लोरभावेन

१—'युवतिः' पा० ।

† 'नमिकम्पिस्म्यजसकमहिंसदीपो रः; अनुदात्तेतश्च हलादेः ३ । २ । १६७; १४९

२—'विधीयते' पा० । ३—क्वाचित्कम् ।

‡ तिङ्शित् सार्वधातुकम् ३ । ४ । ११३; कर्तरिशप् ३ । १ । ६८

× ३ । २ । १५८ वा० १

## आलुचि शीङ्ग्रहणम् ॥ १ ॥

आलुचि शीङ्ग्रहणं कर्तव्यम् । शयालुः ॥ १५८ ॥

## आदृगमहनजनः किकिनौ लिट् च ॥ ३ । २ । १७१ ॥

किमर्थं किकिनोः कित्त्वं[1] क्रियते न 'असंयोगाल्लिट्कित्' [ १ । २ । ५ ] इत्येव सिद्धम् ?

### किकिनोः कित्वमृकारगुणप्रतिषेधार्थम् ॥ १ ॥

किकिनोः कित्करणं क्रियत 'ॠकारगुणप्रतिषेधार्थम्' । अयमृकारान्तानां लिटि गुणः प्रतिषेधविषये आरभ्यत 'ऋच्छत्यृताम्' [ ७ । ४ । ११ ] इति । स यथेह भवति—आतस्तरतुः आतस्तरुरिति, एवमिहापि प्रसज्येत—'मित्रावरुणौ ततुरिः', 'दूरे ह्यध्वा जगुरि'रिति+ । स पुनः कित्त्वेन बाध्यते ।

### उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् ॥ २ ॥

उत्सर्गश्छन्दसि किकिनौ वक्तव्यौ । किं प्रयोजनम् ? 'सदादिभ्यो दर्शनात्' । सदादिभ्यो हि किकिनौ दृश्येते । सदिमनिरमिनमिविचीनां—सेदिः[2] मेनिः[3] रेमिः[4] । 'नेमिश्चक्रमिवाभवत्'[5] । विविंचिं रत्नधातमम्[6] ।

प्र०—दधात्यर्थे वर्तमानस्य धेटो भविष्यति । ननु शिदाश्रयोऽशितीत्यात्वप्रतिषेधः प्राप्नोति । एवं तर्हि श्रद्धा आश्रद्धेत्याकारप्रश्लेषादात्वं भविष्यति । अथवा दधातेरेव 'संज्ञापूर्वको विधिरनित्य' इति द्विर्वचनं न प्रवर्तिष्यते ॥ १५८ ॥

आदृग । दकारो मुखसुखार्थोऽसन्देहार्थो वा । तकारे तु सति तादपि परस्तपर इत्यृकारस्य तपरत्वाद्दृकारग्रहणं न स्यात् । ॠकारगुणनिषेधार्थाच्च किकिनोः कित्वाद्दृकारनिर्देशाऽ-

उ०—द्वित्वं नेत्यर्थः । द्वित्वं तु न संज्ञापूर्वकम्, विधेयकोटौ संज्ञापूर्वकस्यैव तेनाऽनित्यत्वबोधनादित्याहुः । भाष्याऽनुक्तत्वेन 'संज्ञापूर्वक' इत्यस्याऽप्रामाणिकत्वे तु इदश्चिन्त्यम् । परे त्वजसव्यथिभ्यामिवाऽत्राऽपि 'श्रद्धे'ति समुदायात्प्रत्यय इति न काचिच्छङ्केत्याहुः । दधेर्यङ्लुक् नास्त्यनभिधानादिति बोध्यम् ॥ १५८ ॥

आदृगम । ॠकारगुणनिषेधार्थादिति । 'ॠ'धातोः किकिनोर्गुणनिषेधाऽनिषेधयोः फले विशेषाऽभावः । 'आरि'रिति रूपमेव गुणे, तन्निषेधेऽपि 'अत आदे'रिति दीर्घे यणि च तदेवेति भावः । ॠकार-

१—'उच्यते' पा० ।
\+ ऋ० १० । १०८ । १
२—शतपथे ७ । ३ । १ । २३
३—अथर्व० २ । ११ । १
४—अनुपलब्धमूलमिदम् ।
५—ऋ० २ । ५ । ३
६ ऋ० ५ । ८ । ३

## भाषायां धाञ्कृसृजनिनमिभ्यः ॥ ३ ॥

भाषायां धाञ्कृसृजनिनमिभ्यः किकिनौ वक्तव्यौ ॥ धाञ्—दधिः । धाञ् ॥ कृ—चक्रिः । कृ ॥ सृ—सस्रिः । सृ ॥ जनि—जज्ञिः । जनि ॥ नमि—नेमिः ।

## सासहिवावहिचाचलिपापतीनां निपातनम् ॥ ४ ॥

सासहिवावहिचाचलिपापतीनां निपातनं कर्तव्यम् । वृषा सहमानं सासहिः । वावहिः । चाचलिः । पापतिः ।

अपर आह—'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ ।' एतान्येवोदाहरणानि ॥ १७१ ॥

## भियः क्रुक्लुकनौ ॥ ३ । २ । १७४ ॥

### [ भियः क्रुकन्नपि[1] ॥ ]

भियः क्रुकन्नपि वक्तव्यः । भीरुकः ॥ १७४ ॥

## अन्येभ्योपि दृश्यते ॥ ३ । २ । १७८ ॥

किमर्थमिदमुच्यते न क्विप्चान्येभ्योपि दृश्यत इत्येव* सिद्धम् ।

प्र०—वसायः । सासहीति । पापतीति निपातनाद्यङि नीगभावः । विधौ तु भाष्यकारवचनप्रामाण्यात् । तेनाप्युक्तं—तान्येवोदाहरणानीति । अथ लिड्वद्भावे किकिनोः परस्मैपदसंज्ञा कस्मान्न भवति । तथा चात्मनेपदिभ्यो देङ्दृङादिभ्यो न प्राप्नुतः । नैष दोषः । लादेशानां परस्मैपदसंज्ञा न तु लकारस्य । भावकर्मकर्तृषु तर्हि लिड्वत्किकिनौ प्राप्नुतः । एषोऽप्यदोषः । उत्पन्नयोः कार्यातिदेशात्, उत्पत्तिश्च 'कर्तरि कृ'दित्यनेनास्यैकवाक्यत्वात्कर्तरि तयोर्भवति । वर्तमानाधिकाराच्च वर्तमान इति । भूतकालतापि विरोधान्नाऽतिदिश्यते । स्वरूपाऽबावेन च कार्याण्यतिदिश्यन्त इति कसुकानचावपि किकिनोर्न भवतः ॥ १७१ ॥

अन्येभ्योऽपि । क्विब्विधिरिति । 'क्विप् चे'त्यत्र सुप्युपसर्गेपीति च वर्तत इति भावः ।

उ०—निर्देशेति । दीर्घग्रहणेत्यर्थः । 'जमुरि'रित्यादौ कित्वाद्गुणाऽभावे ओष्ठ्यपूर्वत्वाऽभावेऽपि छान्दसत्वादुत्वम् । भाष्यकारवचनेति । भ्रंसादिबहुसहचरितस्यैव पतेस्तत्र ग्रहणमित्यन्यविकरणस्य तदभावः । यद्वा प्रसिद्धस्य पतेर्ग्रहणं, न दैवादिकस्य, तस्य चेदं रूपम् ॥ १७१ ॥

अन्येभ्योऽपि । प्रावस्तु इति । दिद्युतोऽप्युपलक्षणम् । तत्र कृते इति । प्रत्ययसन्नियोगशिष्टतयाऽ-

---

१—इदं वार्तिकं क्वचिदेव दृश्यते । * क्विप् च ३ । २ । ७६

## क्विब्विधिरनुपपदार्थः ॥ १ ॥

अनुपपदार्थोऽयमारम्भः । पचेः—पक् । भिदेः—भित् । छिदेः—छित् ।

अथ योऽत्र सोपपदस्तस्य† ग्रहणं किमर्थम् । न तेनैव सिद्धम् । न सिध्यति । इह केचिदाक्केरिति सूत्रं‡ पठन्ति, केचित्प्राक् क्वेरिति । तत्र य 'आ क्वे'रिति पठन्ति तैः क्विबप्याक्षिप्तो भवति, तत्र तच्छीलादिष्वर्थेषु क्विब्यथा स्यात् ।

नैतदस्ति प्रयोजनम् । य एवासावविशेषविहितः स तच्छीलादिषु भविष्यत्यन्यत्र च ॥ न सिध्यति । अयं तच्छीलादिष्वर्थेषु तृन्विधीयते × स विशेषविहितः सामान्यविहितं क्विपं बाधेत ॥ वासरूपेण क्विबपि भविष्यति ॥ न सिध्यति । इदानीमेव ह्युक्तं—'तच्छीलादिष्वर्थेषु वासरूपेण तृजादयो न भवन्ती'ति+ क्विप्चापि तृजादिः ।

## वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च ॥ २ ॥

वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घत्वं च वक्तव्यम्, क्विप् च । वचि-वाक् । वचि ॥ प्रच्छि—शब्दप्राट् । प्रच्छि ॥ आयतस्तु—आयतस्तूः । आयतस्तु ॥ कटप्रु—कटप्रूः । कटप्रु ॥ जु—जूः । [ जु ॥ ] श्रि—श्रीः ।

अपर आह—'वचिप्रच्छ्योरसम्प्रसारणं चेति वक्तव्यम्' ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । दीर्घवचनसामर्थ्यात्प्रसारणं[१] न भविष्यति । इदमिह सम्प्रधार्यम् । दीर्घत्वं क्रियतां सम्प्रसारणमिति* किमत्र कर्तव्यम् ? परत्वात्सम्प्रसारणम् । अन्तरङ्ग

प्र०—अथेति । पूर्वसूत्रे ग्रावस्तुशब्द इत्यर्थः । आक्वेरिति । अभिविधावाकारः । दीर्घवचनसामर्थ्यादिति । दीर्घश्रुत्याऽच्परिभाषोपस्थानाद्वचिप्रच्छ्योरचोर्दीर्घत्वेन भाव्यं, तत्र कृते संप्रसारणे

उ०—न्तरङ्गत्वाद्दीर्घत्वे कृते इत्यर्थः । ननु दीर्घत्वं न स्यादित्ययुक्तम्, अस्यानुवादत्वेन विधिलिङोऽसम्भवादत आह—सम्भावने इति । दीर्घत्वं सम्भवेदिति नेत्यर्थः । यद्यपि दीर्घवचनसामर्थ्याल्लक्ष्ये लक्षणस्येति न्यायबाधेन पुनर्दीर्घप्रवृत्तिरेव वक्तुं युक्ता, तथापीष्टाऽनुरोधात्सम्प्रसारणाऽभाव एव भाष्यकृतोक्तः । भाष्ये कार्यकृतत्वादिति । विकारकृतलक्ष्यभेदस्तु नाऽत्र न्याये आश्रीयते, एतद्भाष्यप्रामाण्यात् । वचिप्रच्छ्योर्ह्यत्र वार्तिके सूत्रेणैव क्विपि सिद्धे दीर्घत्वार्थमेव ग्रहणमिति बोध्यम् । चेन दीर्घसमुच्चये दिद्युदादेरपि स्यात्,

† भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३ । २ । १७७

‡ आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३ । २ । १३४

× तृन् ३ । २ । १३५ + ३ । २ । १४६ वा० ३

१—'संप्रसारणं' पा० । * वचिस्वपियजादीनां किति; ग्रहिज्या······भृज्जतीनां ङिति च ६ । १ । १५; १६

दीर्घत्वम् । काऽन्तरङ्गता ? प्रत्ययोत्पत्तिसन्नियोगेन दीर्घत्वमुच्यते, उत्पन्ने प्रत्यये सम्प्रसारणम् । तत्राऽन्तरङ्गत्वाद्दीर्घत्वे कृते सम्प्रसारणम्, प्रसारणपरपूर्वत्वे कृते कार्यकृतत्वात्पुनर्दीर्घत्वं न स्यात् । तस्मात्सुष्ठूच्यते—'दीर्घवचनसामर्थ्यात्प्रसारणं न भविष्यती'ति ।

**द्युतिगमिजुहोतीनां द्वे च ॥ ३ ॥**

द्यु तिगमिजुहोतीनां द्वे चेति वक्तव्यम् । द्यु ति—दिद्यु त् । द्यु ति ॥ गमि—जगत् । गमि ॥ जुहोति—जुहोतेर्दीर्घश्च । जुहूः ।

**'दृणातेर्ह्रस्वश्च द्वे च क्विप् च ॥'**[1]

दृणातेर्ह्रस्वश्च द्वे च क्विप्चेति वक्तव्यम् । ददृत् ॥ जुहूर्जुहोतेर्ह्वयतेर्वा ॥ ददृत्—दृणातेर्दीर्यतेर्वा ॥ जूः—ज्वरतेर्जीर्यतेर्वा ।

**ध्यायतेः सम्प्रसारणं च ॥ ४ ॥**

ध्यायतेः सम्प्रसारणं च क्विप् च वक्तव्यः ॥ धीः—ध्यायतेर्दधातेर्वा ॥१७८॥

## विप्रसंभ्यो ड्वसंज्ञायाम् ॥ ३ । २ । १८० ॥

**डुप्रकरणे मितद्र्वादिभ्य उपसङ्ख्यानं धातुविधितुक्प्रतिषेधार्थम् ॥ १ ॥**

डुप्रकरणे मितद्र्वादिभ्य उपसङ्ख्यानं कर्तव्यम् । किं प्रयोजनम् ? 'धातुविधि-

प्र०—पूर्वैकादेशे च दीर्घविधानमनर्थकं स्यादिति भावः । न स्यादिति । संभावने लिङ् । पूर्वमेव प्रवृत्तत्वात् पुनर्दीर्घो न प्रवर्तेत इत्यर्थः । दिद्युदिति । 'द्युतिस्वाप्यो'रित्यभ्यासस्य संप्रसारणम् । जगदिति । 'गमः क्वा'विति मलोपः । जुहूरिति । दीर्घे समुच्चीयमाने दीर्घश्रुत्याऽच्परिभाषोपस्थानादचा च तदन्तविध्याश्रयणाज्जुहोतेरेवाऽजन्तत्वसंभवाद्भवति ॥ १७८ ॥

विप्रसम्भ्यो ड्वसं । किं प्रयोजनमिति । क्विपा सिद्धिं मन्यमानस्य प्रश्नः ॥ १८० ॥

उ०—असमुच्चये जुहूर्न सिद्ध्येदत आह—दीर्घे इति । द्युतिगमिभ्यामन्वये वैयधिकरण्यापत्तिभिया ताभ्यामसम्बन्धो दीर्घस्येत्यर्थः । भाष्ये—दीर्यतेर्वेति । एतद्भाष्यप्रामाण्यादेव 'दृ'धातुर्दिवादावपि बोध्यः । जीर्यतेर्वेति । अत्र पक्षे उत्वं चेन विधेयम् । दधातेर्वेति । 'घुमास्थे'तीत्वम् । 'ईत्वमवकारादा'विति वचनन्तु भगवता प्रत्याख्यास्यते । वस्तुतोऽस्मात् 'क्विबेव ने'तीदमेकदेश्युक्तिरिति बोध्यमिति केचित् । वस्तुतो दृशिसमुच्चेयमपूर्वमीत्वम्भगवदभिमतम्पूर्वत्र पक्षेऽपूर्वोत्वत्वदिति बोध्यम् ॥ १७८ ॥

१—अयं पाठः क्वचिदेव दृश्यते ।

तुक्प्रतिषेधार्थम्' । धातुविधेस्तुकश्च प्रतिषेधो यथा स्यात् । मितद्रुः मितद्रू मितद्रवः। 'अचिश्नुधातुभ्रुवाम्' [ ६ । ४ । ७७ ] इत्युवङादेशो मा भूत् । इह च मितद्र्वा मितद्र्वे 'नोङ्धात्वोः' [ ६ । १ । १७५ ] इति प्रतिषेधो मा भूत् ॥ तुग्विधिः— मितद्रुः । 'ह्रस्वस्य पिति कृति तुग् भवती'ति† तुग् मा भूदिति ॥ १८० ॥

## मतिबुद्धिपूजार्थेभ्यश्च ॥ ३ । २ । १८८ ॥

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ १ ॥
हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥ २ ॥

न म्रियन्ते अमृताः ॥ १८८ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य
द्वितीये पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

प्र०—मतिबुद्धि· । क्तस्य मत्याद्यर्थेभ्यः परस्य भूतविषयताऽपि वर्तमानविषयतया तक्रकौण्डिन्यन्यायेन बाध्यते । ज्ञातमित्येतत्त भूतेऽपि भवति । तेनेत्यधिकारात्तृतीयान्तादुपज्ञातेऽर्थेऽण्प्रत्ययविधानात् । वर्तमाने हि 'क्तस्य च वर्तमान' इति षष्ठ्या भवितव्यम् ॥ १८८ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य द्वितीये पादे
तृतीयमाह्निकम् । पादश्चायं द्वितीयः समाप्तः ।

उ०—मतिबुद्धि । प्रत्ययविधानादिति । तेन हि विधेयविषयेऽयं न्यायो नाऽनुवाद्यविषय इति शाप्यते । कालस्त्वनुवाद्य इति भावः । तेन 'पूजितो यः सुराऽसुरै'रित्यपि सिद्धम् । भाष्ये–शीलित इत्यादि । अनुक्तसमुच्चयार्थेन चेनैतेषां सङ्ग्रह इति भावः । कष्टम्भविष्यतीति । कषिष्यतीत्यर्थे 'कष्ट'शब्द इत्यर्थः । पूर्ववत्,—शीलिताद्युद्यतान्तवद्वर्त्तमाने इत्यर्थः । तदाह—न म्रियन्त इति ॥ १८८ ॥

इति श्रीकालोपनामकनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयाऽध्यायस्य
द्वितीये पादे तृतीयमाह्निकम् । पादश्चाऽयं द्वितीयः समाप्तः ।

१—'भवति' क्वचिन्न ।
२—'कान्तः' पा० ।
† ह्रस्वस्य पिति कृति तुक् ६ । १ । ७१

# उणादयो बहुलम् ॥ ३ । ३ । १ ॥

**बहुलवचनं किमर्थम् ?**

**बाहुलकं प्रकृतेस्तनुदृष्टेः**

**तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यो दृश्यन्ते ।**

**प्रायसमुच्चयनादपि तेषाम् ।**

**प्रायेण खल्वपि ते समुच्चिता, न सर्वे समुच्चिताः ।**

---

प्र०—उणादयो बहुलम् । बहुलवचनमिति । 'उणादय' इत्येव सूत्रमुणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थमस्त्विति भावः । बाहुलकमिति । 'प्रकृते'रिति जातावेकवचनम् । तनुशब्दोऽत्र वृत्तिविषये गुणमात्रवचनः । प्रकृतीनां तानवं दृष्ट्वा बाहुलकं बहुल-

---

उ०—उणादयो । शास्त्रान्तरेति । व्याकरणान्तरेत्यर्थः । साधुत्वेति । वर्त्तमानकाले तत्त्वार्थमिति भावः । 'प्रकृते'रित्यस्य तन्वीभ्य इति व्याख्यानमननुगुणमत आह—जाताविति । ननु 'तनु'शब्दस्य प्रकृतेरिति विशेषणतया कथं समासोऽत आह—तनुशब्द इति । तथा च गमकत्वात्समास इति भावः ।

---

१—"कृवापाजिमिस्वदिसाध्यशूभ्य उण्" इत्यारभ्य "मज्जेरलच्" इत्यलजन्ताः पञ्चपाद्यन्तर्गताः पाणिनिप्रोक्ता उणादय इह ग्राह्याः । तत्र च वृत्तिरेका स्वल्पाक्षराऽप्यतिमहत्त्वपूर्णा महर्षिदयानन्दकृता 'उणादिकोष'नाम्ना मुद्रितोपलभ्यते ।

उणादयो व्युत्पन्नानि ( यौगिकानि ) अव्युत्पन्नानि ( रूढानि ) च प्रातिपदिकानीति भाष्यसिद्धान्तः । उभयथा च वृत्तौ महर्षिणा व्याख्यातानि । तद्यथा—'वाति गच्छति जानाति वेति वायुः पवनः परमेश्वरो वा ।' ( उणा० १ । १ ) अत एव वृत्तिरियं श्रेष्ठा ।

उणादिविषयकानि कानिचिद्वचनानि भाष्यकारस्येहोपस्थाप्यन्ते ।

"एवमपि शाला माला मल्ल इत्यत्र प्राप्नोति । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।......अथाप्युणादयो व्युत्पाद्यन्त एवमपि न दोषः । क्रियते विशिष्टग्रहणं लस्येति ।" ( ३ । ४ । ७७ वा० ३ )

"उणादीनां तावत्—कण्ठः वण्ठः शण्ठः । उणादीनां तावन्न वक्तव्यः । परिहृतमेतदुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति । .....अथाप्युणादयो व्युत्पाद्यन्त एवमपि न दोषः । क्रियते न्यास एव विशिष्टग्रहणं ठस्येति ।" ( ७ । ३ । ५० वा० २; ३ ) ।

"न वा एतत् षत्वे शक्यं विज्ञातुमुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति । इह हि न स्यात्—सर्पिषः यजुष इति ।" ( ८ । ३ । ५६ वा० १ )

"जिन्निप्रतिषेधश्च न वक्तव्यः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।" ( ८ । २ । ७८ वा० २ )

"इहापि तर्हि प्राप्नोति—हंसः वत्स इति । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।" ( ६ । १ । १६२ वा० ५ )

( १ । १ । ६१ वा० ४ ) ।	( ४ । १ । १ वा० २ ) ।	( ७ । २ । ८ वा १ ) ।

( ७ । ४ । १३ ) सूत्रभाष्यं चापि द्रष्टव्यम् ।

**कार्यसशेषविधेश्च तदुक्तं ।**

कार्याणि खल्वपि सशेषाणि कृतानि, न सर्वाणि लक्षणेन परिसमाप्तानि ॥ किं पुनः कारणं तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यो दृश्यन्ते । किं च कारणं प्रायेण समुच्चिता न सर्वे समुच्चिताः । किं च कारणं कार्याणि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि ।

**नैगमरूढिभवं हि सुसाधु ॥ १ ॥**

**नैगमाश्च रूढिभवाश्चौणादिकाः सुसाधवः कथं स्युः ।**

**नाम च धातुजमाह निरुक्ते[1]**

नाम खल्वपि धातुजम् । एवमाहुर्नैरुक्ताः ।

प्र०—शब्दप्रवृत्तिनिमित्तं बह्वर्थादानमुक्तम् । तेनाऽपठिताभ्योऽपि प्रकृतिभ्य उणादयो भवन्ति । यथा हृषेरुलच्शकेरपि भवति शङ्कुलेति । तथा तेषामुणादीनां प्रायेण समुच्चयनं कृतं न तु साकल्येनेति बहुलवचनादविहिता अपि भवन्ति । तेनाऽर्तेः फिडफिड्डौ भवतः[2], ऋफिड ऋपिडड इति । सशेषाणि च कार्याणि उणादिषु विहितानि न तु निःशेषाणि । बहुलवचनात्त्वविहितान्यपि भवन्ति । तेन 'षण्ड'इत्यत्र सत्वाऽभावः । सकारस्य वा षत्वं भवति । किं पुनरिति । यावत्यः प्रकृतयः यावन्तश्च प्रत्ययाः यावन्ति च कार्याणि तावन्त्येव भवन्त्विति प्रश्नः । नैगमेति ।

उ०—तानवमिति । व्याकरणान्तरे तासामल्पत्वं दृष्ट्वेत्यर्थः । बाहुलकमिति । 'बहूनर्थान् लाती'त्यर्थक-बहुलशब्दाद्भावे वुञा सिद्धमिति बोध्यम् । बहवोऽर्थाश्च [3]प्रवृत्तिनिवृत्त्यादयो वृद्धैरुक्ताः । बह्वर्थादानमिति । बह्वर्थग्रहणरूपं प्रवृत्तिनिमित्तमित्यर्थः । तेनाऽपठिताभ्य इति । व्याकरणाऽन्तरेऽपठिताभ्य इत्यर्थः । भाष्ये—उणादयो दृश्यन्त इत्यादेर्व्याकरणाऽन्तर इति शेषः । तदाह—हृषेरुलजित्यादि । प्रायेण समुच्चयनमिति । व्याकरणाऽन्तर इत्यर्थः । ननु स्वतन्त्राणामृषीणामेवं न्यूनं शास्त्रं कृतमिति पर्यनुयोगोऽयुक्तोऽत आह—तावन्त्येव भवन्त्विति प्रश्न इति । ननु 'प्रकृतीनां निर्देशोऽत्रे'त्यादि त्वया केन मानेन ज्ञातमिति भाष्याक्षराऽर्थः । तदिति । नैगमरुढिभवमित्यर्थः । जातावेकवचनमिति । 'साधव' इत्यनेन नाऽन्वयः । ते सुष्ठ्विति पाठस्तु सम्यगेव । तस्य चाऽशेषेण सङ्ग्रहोऽशक्यः, तस्य साधुत्वञ्च सर्वसम्मतम्, अतो

१—"तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ।" ( यास्कीयनिरुक्ते १ अ० ४ पा० १२ खं० )

२—आह च भाष्यकृत्—"अर्तिप्रवृत्तिश्चैव हि लोके लक्ष्यते, फिडफिड्डावौणादिकौ प्रत्ययौ ।" ( ऋलृक्सूत्रे ७३ पृष्ठे )

३—'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति' ॥ इति प्राञ्चः ।

व्याकरणे शकटस्य च तोकम् ।

वैयाकरणानां च शाकटायन आह—'धातुजं नामे'ति ॥ अथ यस्य विशेषपदार्थो न समुत्थितः कथं तत्र भवितव्यम् ?

**यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ २ ॥**

प्रकृतिं दृष्ट्वा प्रत्यय ऊहितव्यः । प्रत्ययं च दृष्ट्वा प्रकृतिरूहितव्या ।

प्र०—निगमश्छन्दस्तत्र भव इत्य'णृगयनादिभ्य' इत्यण् । रूढिः—प्रसिद्धिः, तत्र भवाः संज्ञाशब्दा इत्यर्थः । ते सुष्ठु साधवो यथा स्युरित्येवमर्थमपरिपूर्णत्वं प्रकृत्यादीनामुच्यते । अपरिपूर्णानां हि पूर्णत्वं बहुलग्रहणेन क्रियत इति नैगमरूढिभवानां व्याकरणेऽस्मिन्व्युत्पादनादसंदिग्धं साधुत्वमवगम्यत इत्यर्थः । अन्यैरप्याचार्यैः शब्दानां प्रकृत्यादिविभागेन व्युत्पादनमभ्युपगतमित्याह—नामेति । तोकमिति । अपत्यमित्यर्थः । यन्नेति । पदमर्थः प्रयोजनं यस्य व्युत्पाद्यत्वेन स पदार्थः प्रकृत्यादिः विशेषश्चासौ पदार्थस्तस्माद्यन्न समुत्थितं विशिष्टप्रकृतिप्रत्ययोत्पादनेन व्युत्पादितमित्यर्थः । प्रकृतिमिति । प्रसिद्धाम्—अर्त्यादिकामित्यर्थः । प्रत्यय इति । फिडादिकः । प्रत्ययं चेति । प्रत्ययत्वेन प्रसिद्धमित्यर्थः । तेन 'हृषेरुल'जिति प्रत्ययं दृष्ट्वा'शकि' प्रकृतिरूह्यते, तेन

उ०—ज्ञायते 'प्रकृतेस्तनुदृष्टे'रित्यादीति भाष्यार्थः । सुसाधवः कथं स्युरिति भाष्यस्य 'अतो बाहुलक'मिति शेषः । ते पाणिनिना बोधितसाधुत्वकाः कथं स्युरित्यर्थः । पाणिनिना बोधितसाधुत्वमेव सुसाधुत्वं, सम्प्रति प्रयोगार्हत्वात्, तदाह—अपरिपूर्णानामिति । सर्वाभ्यः प्रकृतिभ्यः सर्वप्रत्ययानां तत्तद्रूपेण विधानन्तु ब्रह्मणाऽपि दुरुपपादमिति भावः । ननु तेषामेवं व्युत्पादनं कैर्वैयाकरणैः कृतमित्याशङ्क्याह भाष्ये—नाम चेत्यादि । तद्व्याचष्टे—नाम खल्वपीति । 'नाम धातुज'मित्येवमाहुर्नैरुक्ता इत्युत्तरार्थः । तदाह—अन्यैरित्यादिना । पाणिनेस्तु तानि अव्युत्पन्नान्येवेति भावः । इदञ्च 'आयनेयीनी'ति सूत्रे भाष्ये स्पष्टम् । एवञ्च 'कृवापे'त्याद्युणादिसूत्राणि 'शाटकायनस्येति सूचितम् । 'धातुजं नामे'ति निरुक्ते आह निरुक्तकारः, शाकटायनश्च स्वकृते व्याकरणे आह 'धातुजं नामे'ति भाष्येऽन्वयः । 'पदार्थ' इत्यत्र 'अर्थ' शब्दः प्रयोजनवाचीत्याह—अर्थः प्रयोजनमिति । विशेषश्चाऽसाविति । उक्तप्रकृतिप्रत्ययादेर्यन्न समुत्थितम्, विशिष्टाया उक्तायाः

१—भ्रान्तिरियं नागेशभट्टप्रभृतीनाम् । भ्रान्तौ कारणं तु 'व्याकरणे शकटस्य च तोकम् ।' 'वैयाकरणानां च शाकटायन आह धातुजं नामेति ।' इत्यादिभाष्यमेव वर्तते । परन्त्वनेन भाष्येण पूर्वोदाहृतनिरुक्तवाक्येन च नैरुक्तमते शाकटायनमते च नाम्नामाख्यातजत्वमेव सिद्ध्यति न तु 'कृवापा' प्रभृत्युणादिसूत्राणां शाकटायनप्रोक्तत्वम् ।

दाश्वान्साह्वान्मीढ्वांश्च ६ । १ । १२ सूत्रभाष्यस्थ 'ययु' शब्दव्याख्याने "यो द्वे चे'त्यत्र 'द्वे चे'ति न वक्तव्यं भवतीति भावः ।" इति कैयटवचनमुणादीनां पाणिनीयत्वं साध्नोति । 'यो द्वे च' १ । २१ इत्युणादिसूत्रम् । तच्च यद्यपाणिनीयमभविष्यत्तर्हि तत्र लाघवं नावक्ष्यत् ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥

## भविष्यति गम्यादयः ॥ ३ । ३ । ३ ॥

### भविष्यतीत्यनद्यतन उपसङ्ख्यानम् ॥ १ ॥

भविष्यतीत्यनद्यतन उपसङ्ख्यानं कर्तव्यम् । श्वो ग्रामं गमी । किं पुनः कारणं न सिध्यति ? लृटाऽयं निर्देशः क्रियते लृट् चाऽनद्यतने लुटा बाध्यते* । तेन लृट एव विषय एते प्रत्ययाः स्युर्लुटो विषये न स्युः ।

### इतरेतराश्रयं च ॥ २ ॥

इतरेतराश्रयं च भवति । केतरेतराश्रयता ? भविष्यत्कालेनाऽयं निर्देशः क्रियते, निर्देशोत्तरकाला च भविष्यत्कालता, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।

### उक्तं वा ॥ ३ ॥

किमुक्तम् ? एकं तावदुक्तं 'नवाऽपवादस्य निमित्ताभावादनद्यतने हि तयोर्विधान'मिति† ॥ अपरमप्युक्तम्—'अव्ययनिर्देशात्सिद्ध'मिति‡ । अव्ययवता शब्देन निर्देशः कर्तव्यः । अवर्तमानेऽभूत इति ।

प्र०—सिद्धं 'शङ्कुले'ति । न सर्वत्र ऊहः कर्तव्यः । किं तर्हि ? साधुत्वेनाभिमतासु संज्ञास्विति प्रदर्शयति—संज्ञास्विति ॥ १ ॥

भविष्यति । अनद्यतन इति । भविष्यच्छब्दो भविष्यन्मात्रे वर्तते न तु तद्विशेषेऽनद्यतने, तस्य लुड्विषयत्वात् । ततश्च गम्यादयो भविष्यच्छब्दार्थेऽन्वाख्यायमाना अनद्यतने न

उ०—प्रकृतेरुक्तप्रत्ययोत्पादनेन न व्युत्पादितमित्यर्थः । 'संज्ञासु धातुरूपाणी'त्यवतारयति—न सर्वत्रेत्यादि । संज्ञासु—प्रसिद्धसंज्ञाशब्देषु ॥ १ ॥

भविष्यति । विशेष इति । सत्यपि वास्तवे विशेषे तस्याऽविवक्षितत्वात्सामान्यस्यैव विवक्षामाश्रित्य तदाश्रयो णिनिः । अनद्यतनाख्यस्तु विशेषः पश्चात् 'श्वः'शब्दमहिम्ना गम्यत इति भावः । विशेषविवक्षायामिति । प्रथमत एव विशेषविवक्षायामित्यर्थः । अपवादेति । लृटो हि द्वावपवादौ णिनिर्लुट् च । नन्वेवं

१—'अनूबन्धम्' पा० ।

* लृट् शेषे च; अनद्यतने लुट् ३ । ३ । १३; १५ † ३ । २ । ११० वा० २
‡ ३ । २ । ८४ वा० २

स तर्हि तथा निर्देशः कर्तव्यः ? न कर्त्तव्यः। अव्ययमेष भविष्यतिशब्दो नैषं भवतेर्लृट्[1]। कथमव्ययसंज्ञा ? 'विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति निपातसंज्ञा, 'निपातोऽव्यय'मित्यव्ययसंज्ञा+।

अथापि भवतेर्लृट्, एवमप्यव्ययमेव। कथम् ? न व्येतीत्यव्ययमिति। क्व पुनर्न व्येति ? एतौ कालविशेषौ भूतवर्तमानौ। स्वभावतो भविष्यत्येव वर्तते॥ यदि तर्हि न व्येतीत्यव्ययमिति,[2] 'न वा तद्विधानस्यान्यत्राभावात्'। न वा भविष्यदधिकारेणाऽर्थः। किं कारणम् ? 'तद्विधानस्यान्यत्राऽभावात्'। येऽपि ह्येत इत उत्तरं प्रत्ययाः शिष्यन्त एतेऽप्येतौ कालविशेषौ न वियन्ति भूतवर्तमानौ, स्वभावतो भविष्यत्येव वर्तन्ते।

अत उत्तरं पठति—

**भविष्यदधिकारस्य प्रयोजनं यावत्पचति पुरापचतीत्यनपशब्दत्वार्थं[3]×॥४॥**

प्र०—सिध्यन्तीति वार्तिकारम्भः। इतरेतराश्रयं चेति। एतद्भूते इत्यत्र व्याख्यातं, तत एवावधारणीयम्। न वेति। विशेषे यत्सामान्यमस्ति तदाश्रयेण गम्यादयः प्रयुज्यन्ते इत्यर्थः। विशेषविवक्षायां चाऽपवादविप्रतिषेधाल्लुडेव भवति—'श्वो गन्ता ग्राम'मिति। वासरूप इतिवचनाल्लृडपि भवति। तेन गमिष्यति भविष्यतीत्यादयः प्रयोगा उपपद्यन्ते। यावत्पचतीति। सति भविष्यदधिकारे भविष्यत्येव यावत्पुराशब्दयोगे लटः साधुत्वं भवति, भविष्यत्कालेन वर्तमानकालस्य बाधनात्, असति भविष्यदधिकारे भूतेऽपि साधुत्वं लटः स्यात्। शब्दोपात्तकालविशेषविधानाऽभावे वर्तमानकालस्य बाधो न स्यात्॥ ३॥

उ०—'श्वो गमिष्यती'त्यादिप्रयोगाऽनापत्तिर्णिनिना बाधादत आह—वाऽसरूपेति। सामान्यविवक्षायामिति भावः। भाष्ये—पुरा पचतीत्यनपशब्दत्वायेति। भविष्यत्येवाऽनपशब्दत्वं यथा स्याद्भूते तु नेत्येतदर्थस्तदाह—सतीति। भविष्यद्भूतयोरसाधुत्वप्राप्तौ भविष्यत्येवाऽनेन साधुत्वं क्रियते न तु भूते। वर्त्तमानकाले साधुत्वाऽभावे तु न मानम्, भाष्यादलाभात्, कालस्याऽनुवाद्यतया तक्रकौण्डिन्यन्यायाऽप्राप्तेश्च। 'भविष्यत्कालेन वर्त्तमानकालस्य बाधना'दिति कैयटश्चिन्त्यः। भूतेऽपीति। भविष्यत्पदाऽभावे 'याव'दिति सूत्रे यत्र विहितो लट् ततोऽन्यत्रापि यथा स्यादित्यर्थं स्यात्, एवञ्च भूतेऽपि साधुत्वं स्यादिति भावः। दूषणान्तरमाह—शब्दोपात्तेति। अनुवाद्यविषये 'तक्रकौण्डिन्य'न्यायाऽभावादिदं चिन्त्यम्॥ ३॥

---

१—'नैषा' पा०। + १।४।५७ गणसूत्रम्।
२—इतिः क्वचिन्न ३—अस्य वार्तिकस्य व्याख्याभाष्यं लुप्तं प्रतीयते।
× यावत्पुरानिपातयोर्लट् ३।३।४

## यावत्पुरानिपातयोर्लट् ॥ ३ । ३ । ४ ॥

### यावत्पुरादिषु लड्विधिर्लुटः पूर्वविप्रतिषिद्धम् ॥ १ ॥

यावत्पुरादिषु लड्विधिर्भवति लुटः पूर्वविप्रतिषेधेन । यावत्पुरानिपातयोर्लड्भवतीत्यस्यावकाशः—यावद्भुङ्क्ते पुराभुङ्क्ते । लुटोऽवकाशः—श्वः कर्ता, श्वोऽध्येता* । इहोभयं प्राप्नोति—यावत् श्वो भुङ्क्ते, पुरा श्वो भुङ्क्ते । लड्भवति पूर्वविप्रतिषेधेन ॥ स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । 'अनद्यतने लुट्' [ १५ ] इत्यत्र 'यावत्पुरानिपातयोर्ल'डित्येतदनुवर्तिष्यते ॥ ४ ॥

## लिप्स्यमानसिद्धौ च ॥ ३ । ३ । ७ ॥

किमर्थमिदमुच्यते न लिप्स्यमानसिद्धिरपि लिप्सैव, तत्र 'किंवृत्ते लिप्सायाम्' [ ६ ] इत्येव सिद्धम् । अकिंवृत्तार्थोऽयमारम्भः । यो भवतामोदनं ददाति स स्वर्गं लोकं गच्छति । यो भवतामोदनं दास्यति स स्वर्गं लोकं गमिष्यति[1] ॥ ७ ॥

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ ३ । ३ । १० ॥

किमर्थं क्रियायामुपपदे क्रियार्थायां ण्वुलिन्विधीयते, नाऽविशेषेण विहितो ण्वुल्†

प्र०—लिप्स्यमान । अकिंवृत्तार्थ इति । पूर्वत्र तु किंवृत्तग्रहणं लिप्स्यमानसिद्धिरहितायां लिप्सायामकिंवृत्ते लड्निवृत्त्यर्थम् ॥ ७ ॥

तुमुन् । अकेनोरिति । सति भविष्यत्काले ण्वुल्विधौ तदनुवादेन षष्ठीनिषेधो विधातुं

उ०—याव·पुरा । यावत्पुरादिष्विति भाष्ये—'आदिना इत आरभ्य तुमुन्सूत्रपर्यन्तसूत्रसन्दर्भसङ्ग्रहः । लडित्येतदनुवर्त्तिष्यत इति । इत्यादिसूत्रसन्दर्भोपलक्षणमिदम् ॥ ४ ॥

लिप्स्यमान । भाष्ये—न लिप्स्यमानसिद्धिरपि लिप्सैवेति । लिप्साव्याप्यैवेत्यर्थः । एवञ्च लिप्सायास्तत्रापि गम्यमानत्वमस्त्येवेत्याशयः । सिद्धिरहितायामिति । 'भवानद्य ब्राह्मणानामन्त्रयिष्यती'त्यादौ । सिद्धिविषयोदाहरणन्तु 'यो भक्तं ददाति स स्वर्गं गच्छती'त्यादौ ॥ ७ ॥

तुमुन्ण्वुलौ । भाष्ये—इत्यत्र षष्ठ्या इति । अत्र सूत्रे, 'अकस्य भविष्यती'त्यन्वाख्यानवार्त्तिके

* अनद्यतने लुट् ३ । ३ । १५

१–'यो धर्ममाचरति स स्वर्गं लोकं गच्छति । यो धर्ममाचरिष्यत्याचरिता वा स स्वर्गं लोकं गमिष्यति गन्ता वा'' इत्यष्टाध्यायीभाष्ये महर्षिदयानन्दकृत उदाहरणानि ।

† ण्वुल्तृचौ ३ । १ । १३३

स क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यति । ण्वुलि सकर्मकग्रहणं चोदितम्, अकर्मकार्थोऽयमारम्भः । आसको व्रजति, शायको व्रजतीति । प्रत्याख्यातं तत् 'न वा धातुमात्राद्दर्शनाण्ण्वुल' इति‡ ।

एवं तर्हि तृजादिषु वर्तमानकालोपादानं चोदितम्, अवर्तमानकालार्थोऽयमारम्भः । तदपि प्रत्याख्यातं 'न वा कालमात्रे दर्शनादन्येषा'मिति× ।

इदं तर्हि प्रयोजनम्,—'अकेनोर्भविष्यदाधमर्ण्ययोः' [ २ । ३ । ७० ] इत्यत्र षष्ठ्याः प्रतिषेध उक्तः स यथा स्यात् । एतदपि नास्ति प्रयोजनम् । य एवासावविशेषविहितः स यदा भविष्यति भविष्यति तदाऽस्य प्रतिषेधो भविष्यति ।

एवं तर्हि भविष्यदधिकारविहितस्य प्रतिषेधो यथा स्यादिह माभूत्,—'अङ्ग ! यजतां लप्स्यन्तेऽस्य याजकाः । य एनं याजयिष्यन्ती'ति । नैष भविष्यत्कालः । कस्तर्हि ? भूतकालः । कथं तर्हि भविष्यत्कालता गम्यते ? 'धातुसंबन्धे प्रत्ययाः' [ ३ । ४ । १ ] इति ॥ यस्तर्हि न धातुसंबन्धः—'इमेऽस्य याजकाः', 'इमेऽस्य लावका' इति । एषोऽपि भूतकालः । कथं तर्हि भविष्यत्कालता गम्यते ? संबन्धात् । स च तावत्तैरयाजितो भवति, तस्य च तावत्तैर्यवा अलूना भवन्ति, उच्यते च ।

प्र०—शक्यते नान्यथेति भावः । लप्स्यन्तेऽस्येति । याजकशब्दो भविष्यति वर्तते, यस्मात्ते तं याजयिष्यन्ति न तु ते याजितवन्तः । तत्र भविष्यदधिकारविधानाऽभावादस्येति षष्ठी न प्रतिषिध्यते । अस्य याजका इति । एतद्व्याचष्टे—य एनमिति । कस्तर्हि भूतकाल इति । शब्दशक्तिस्वाभाव्याद्याजकशब्दस्य भूतकालविषयत्वमिति भावः । धातुसम्बन्ध इति । याजकत्वस्यैव भविष्यत्त्वं प्रतीयत इत्यर्थः । सम्बन्धादिति । भावियाजकत्वादिकमारोप्य तथाऽ-

उ०—चेत्यर्थः । ननु सामान्यण्वुल्येवाऽयं निषेधोऽस्त्वत आह—सतीति । तदनुवादेन विहितो तदर्थको भवतीत्यर्थः । भाष्ये—य एवाऽसाविति । भविष्यत्क्रियावाचकप्रकृतिकत्वमेव ण्वुलि भविष्यत्त्वमिति भावः । धातुसम्बन्ध इति । लप्स्यन्त इति धात्वर्थसम्बन्धोऽत्रेति भावः । न च 'धातुसंबन्ध' इत्यनेनाऽपि कालाऽन्तरे प्रत्यया विधीयन्त इत्यस्यापि भविष्यत्कालत्वमस्त्येवेति वाच्यम् । 'धातुसंबन्ध' इत्यादिना तत्प्रत्याख्यानप्रकारस्मारणेनाऽदोषात् । 'याजका' इत्यस्य तथा व्यवहरिष्यमाणा इत्यर्थात् । तदाह—याजकत्वस्यैवेति । तद्व्यवहारस्यैवेत्यर्थः । भाष्ये—यस्तर्हीति । तत्र लक्षणायां न प्रमाणमिति तत्र शब्दार्थ एव भविष्यत्त्वमिति भावः । तत्राऽपि 'प्रकरणाल्लक्षणे'त्युत्तरम् । संबन्धशब्देन प्रकरणमुच्यत इत्याह—

‡ ३ । १ । १३३ वा० २ × ३ । १ । १३३ वा० ४

इदं तर्हि प्रयोजनम् । अयं क्रियायामुपपदे क्रियार्थायां तुमुन्विधीयते स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत । एतदपि नास्ति प्रयोजनम् । भावे तुमुन्विधीयते कर्त्तरि ण्वुल्, तत्र कः प्रसङ्गो यद्भावे विहितस्तुमुन्कर्तरि विहितं ण्वुलं बाधेत ॥ लृट् तर्हि बाधेत+ । वासरूपेण ण्वुलपि भविष्यति ॥ अत उत्तरं पठति—

ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं तृजादिप्रतिषेधार्थम् ॥ १ ॥

ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यः—'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो* न भवन्ती'ति । ण्वुलपि तृजादिः ॥ १० ॥

## भाववचनाश्च ॥ ३ । ३ । ११ ॥

किमर्थमिदमुच्यते नाऽविशेषेण भावे† प्रत्यया ये विहितास्ते क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यन्ति ॥ [ अत उत्तरं पठति—]

भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम् ॥ १ ॥

भाववचनानां [ च ] यथाविहितानां प्रतिपदविध्यर्थोऽयमारम्भः । इदानीमेव‡ ह्युक्तं, 'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ती'ति, भाववचनाश्चापि तृजादयः ॥ अस्ति प्रयोजनमेतत् । किं तर्हीति ।

---

प्र०—भिधानादित्यर्थः । तृजादिप्रतिषेधार्थमिति । तेन कर्ता व्रजति विक्षिपो व्रजतीत्यादि न प्रयुज्यत इत्यर्थः ॥ १० ॥

भावव । प्रतिपदविध्यर्थमिति । ज्ञापकेन निराकृतानां पुनः प्रतिपदं—साक्षाद्विधानार्थो योग इत्यर्थः । यथा विहिता इति । येन प्रकारेण विहिता यथा विहिता इत्यसमस्तं पदद्वयम् ।

---

उ०—स च तावदिति । भावियाजकत्वादिकमारोप्येति । तद्व्यवहारमित्यर्थः । 'ओदनं भोजको व्रजती'त्यादौ च भविष्यत्त्वेनैव धात्वर्थप्रतीतेर्निषेधसिद्धिरिति भावः । कर्त्ता व्रजतीति । करिष्यामीति व्रजतीत्यर्थः ॥१०॥

भाववचनाश्च । ज्ञापकेनेति । यद्यपि तुमुन्लृडर्थो भावोऽसत्त्वभूतो, घञादिवाच्यस्तु सत्त्वभूत इति 'तुमर्थेसेसेन्' इति सूत्रे भाष्यकैयटयोरुक्तत्वेन तेषां कथं तुमा लृटा वा बाधः । तथाऽप्यवान्तरविशेषाऽ-

---

+ लृट् शेषे च ३ । ३ । १३ * ण्वुलतृचौ ३ । १ । १३३ † भावे ३ । ३ । १८

१—क्वचिन्न । ‡ ३ । ३ । १० वा० १ व्याख्याभाष्ये ।

यथाविहिता इति तु वक्तव्यम् । किं प्रयोजनम् ? इह याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषेण क्रियायामुपपदे क्रियार्थायां यथा स्युर्व्यतिकरो मा भूदिति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इह भावे प्रत्यया भवन्तीतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत्प्रयोजनं 'वाचका यथा स्यु'रिति । यदि च याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषेण क्रियायामुपपदे क्रियार्थायाम् [ अपि ] भवन्ति ततोऽमी वाचकाः कृताः स्युः । अथ हि प्रकृतिमात्राद्वा स्युः, प्रत्ययमात्रं वा स्यान्नाऽमी वाचकाः कृताः स्युः ॥ ११ ॥

## अण्कर्मणि च ॥ ३ । ३ । १२ ॥

किमर्थमिदमुच्यते नाऽविशेषेण 'कर्मण्य'णित्यणिवहितः× स क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यति ।

### अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम् ॥ १ ॥

अणः पुनर्वचनं क्रियते, अपवादविषयेऽनिवृत्तिर्यथा स्यात् । गोदायो व्रजति, कम्बलदायो व्रजतीति* ॥ किमुच्यत अपवादविषयेऽनिवृत्तिर्यथा स्यादिति, न पुनरुत्सर्गविषये प्रतिपदविध्यर्थं स्यात् । इदानीमेव† ह्युक्तं 'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ती'ति, अणचापि तृजादिः ।

प्र०—अथवा यथा विहितं विधानं येषां ते 'यथाविहिता' इति बहुव्रीहिः । अव्ययीभावे तु 'यथाविहित'मिति स्यात् । वचनग्रहणमिति । वचनग्रहणेन लोकप्रसिद्धं वाचकत्वमवगम्यत इत्यसामञ्जस्यं न भवति ॥ ११ ॥

अण्कर्म । कथं पुनरिति । अपूर्वविधानात्प्रतिप्रसवस्य लाघवादुत्सर्गविषय एव ण्वुलं बाधित्वाऽण्स्यात्, काण्डलावो व्रजतीति । तथा चाऽपवादविषये न स्यादिति प्रश्नः । वचनग्रहणम-

उ०—विवक्षया भाष्यं बोध्यम् । एकदेशयुक्तिर्वेदम्भाष्यम् । यथा विहिता इति । सादृश्यद्योतकत्वान्नाऽव्ययीभावः । लोकप्रसिद्धमिति । यथाविधानं विहितानामेव तथा वाचकत्वमिति भावः ॥ ११ ॥

अणकर्मणि च । प्रतिप्रसवस्य लाघवादिति । काण्डलावादौ वाऽसरूपेण ण्वुला बाधितस्याऽण्णः प्राप्त्या तृजादयो वाऽसरूपेण न भवन्तीति निषेधनिवृत्तिमात्रेण प्रतिप्रसवत्वं, सिद्धाऽनुवादेन च तन्निषेधनिवृत्तिः । अत एवाऽपूर्वविध्यपेक्षया लाघवम् । अपवादकादिविषये तु परत्वाण्ण्वुलेव स्यान्नत्वण् । न च

१—क्वचिन्न । × कर्मण्यण् ३ । २ । १ * आतोऽनुपसर्गे कः ३ । २ । ३
† ३ । ३ । १० वा० १ व्याख्याभाष्ये ।

एवं तर्ह्युभयमनेन क्रियते, अपवादविषये चाऽनिवृत्तिरुत्सर्गविषये च प्रतिपद-विधिः'। कथं पुनरेकेन यत्नेनोभयं लभ्यम्? 'लभ्य'मित्याह। कथम्? कर्मग्रहण-सामर्थ्यात्। कथं पुनरन्तरेण कर्मग्रहणं कर्मण्यण् लभ्यः? वचनग्रहणमपि प्रकृत-मनुवर्तते‡॥ अस्ति प्रयोजनमेतत्। किं तर्हीति।

अपर्यायेणेति तु वक्तव्यम्। कदाचिद्धि कर्मणि स्यात्कदाचित्क्रियायामुपपदे क्रियार्थायामिति॥ तत्तर्हि वक्तव्यम्? न वक्तव्यम्। चेन संनियोगः करिष्यते— 'अण्कर्मणि च'। किं चाऽन्यत्? क्रियायाञ्चोपपदे क्रियार्थायामिति। एवमपि प्रत्येक-मुपपदसंज्ञा न प्राप्नोति। चेनैव संनियोगः करिष्यते, प्रत्येकं च वाक्यपरिसमाप्ति-र्दृष्टेति प्रत्येकमुपपदसंज्ञा भविष्यति॥ १२॥

## लृट् शेषे च॥ ३। ३। १३॥

शेषवचनं किमर्थम्?

प्र०—पीति। ततश्च वचनग्रहणात्कर्मण्येवोपपदेऽणि सिद्धे पुनः कर्मग्रहणं कर्ममात्रपरिग्रहार्थमित्य-पवादविषयेऽप्यण्सिद्धोभवतीत्यर्थः। कदाचिदिति। वचनं तु भविष्यति कालेऽपवादबाधनार्थं स्यादिति भावः। एवमपीति। ततश्च 'काण्डलावो व्रजती'ति केवलस्य कर्मण उपपदसंज्ञाया अभावात्समासो न प्राप्नोतीति भावः। प्रत्येकं चेति। 'कर्मणि' 'क्रियाया'मिति पृथक्सप्तमी-निर्देशात्प्रत्येकमुपपदसंज्ञा भवति, निमित्तसद्भावादित्यर्थः॥ १२॥

लृट्शेषे च। शेषग्रहणमिति। 'क्रियायां क्रियार्थाया'मिति निर्वर्तिष्यत इति भावः। लृटीति। अयं भावः—'लृ'डित्येतावत्युच्यमाने करिष्यतीत्यादावेव स्यात् 'करिष्यामीति

उ०—परत्वादण् कादीनामपि बाधकः, अपूर्वविधित्वापत्तेरिति भावः। ततश्चेति। अण्वचनो वाचको भवतीत्यर्थे कर्मण्युपपदे एव तस्य वाचकत्वमिति भावः। कर्ममात्रेति। एवञ्च तत्सामर्थ्यात्परत्वेनाऽपवाद-कादिविषयेऽपि प्रतिप्रसवविधित्वमस्येति भावः।

ननु क्रियार्थोपपदे विधानाऽर्थमणित्येवाऽस्तु 'कर्म'ग्रहणं व्यर्थं, केवलकर्मोपपदे सामान्यसूत्रेण 'कर्मण्य'णित्यनेनैव सिद्धेरत आह—वचनन्त्विति। कर्मग्रहणन्त्वित्यर्थः। भविष्यति काले क्रियार्थोपपदेऽसत्यपि 'कम्बलदाय' इत्यादौ कादिबाधनार्थमेव स्यादिति भावः। भाष्ये—चेनैवेति। उपपदसंज्ञयोरपि समुच्चय इति भावः। युक्त्यन्तरमाह—प्रत्येकञ्चेति। तद्व्याचष्टे—कर्मणीति॥ १२॥

लृट् शेषे च। क्रियायामिति। तन्निवृत्त्यैवोभयत्र सिद्धिरिति भावः। ण्वुला बाधितत्वादिति। वाऽसरूपन्यायाऽभावस्य ज्ञापनात्। 'वाऽसरूपन्यायेन लृ'डिति हरदत्तस्तु चिन्त्य एव। शेषग्रहणादिति।

१—'विधानम्' पा०। ‡ भाववचनाश्च ३। ३। ११

**लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम् ॥ १ ॥**

लृटि शेषवचनं क्रियते 'क्रियायां प्रतिपदविध्यर्थम्' । [ क्रियायां ] प्रतिपदविधिर्यथा स्यात् ।

**अविशेषेण विधाने लृटोऽभावः प्रतिषिद्धत्वात् ॥ २ ॥**

अविशेषेण हि विधाने सति लृटोऽभावः स्यात् । करिष्यामीति व्रजति, हरिष्यामीति व्रजतीति । किं कारणम् ? 'प्रतिषिद्धत्वात्' । इदानीमेव × ह्युक्तम्— 'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ती'ति, लृट्चापि तृजादिः ।

अस्ति प्रयोजनमेतत् । किं तर्हीति ।

साधीयस्तु खलु शेषग्रहणेन क्रियार्थोपपदात्लृण्निर्भज्यते । किं कारणम् ? 'अक्रियार्थोपपदत्वात्' । शेष इत्युच्यते, शेषश्च कः ? यदन्यत्क्रियायाः क्रियार्थायाः ।

एवं तर्हि 'लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम्' । लृटि शेषवचनं क्रियते क्रियायां प्रतिपदविधिर्यथा स्यात् । 'लृट्शेषे च' । करिष्यति हरिष्यतीति । क्व 'च' ? क्रियायामुपपदे क्रियार्थायामिति ॥ स तर्हि चकारः कर्तव्यः ? न कर्तव्यः । इह लृड्भवतीतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यच्छेषग्रहणं करोति तस्यैतत्प्रयोजनं योगाङ्गं यथोपजायेत । सति च योगाङ्गे योगविभागः करिष्यते । [ 'लृट्'[2] । ] लृड्भवति क्रियायामुपपदे क्रियार्थायामिति । ततः 'शेषे' । शेषे च लृड्भवतीति ॥ १३ ॥

प्र०—व्रजती'त्यादौ ण्वुला बाधितत्वान्न स्यात् । शेषग्रहणात्तु क्रियायां क्रियार्थायामित्यस्य संनिधिरनुमीयते इति तत्रापि लृट्सिध्यति, शेषे च विषये । साधीयस्त्विति । विपर्ययसाधनं प्रत्युत शेषग्रहणमिति भावः । एवं तर्हीति । 'च'शब्दसहिताच्छेषग्रहणात्क्रियायामप्युपपदे लृट्सिध्यतीति वार्तिककारस्याशय इत्यर्थः । इदानीं योगविभागाश्रयणेन चकारं प्रत्याख्यातुमाह—स तर्हीति ॥ १३ ॥

उ०—तत्सामर्थ्याद्योगविभाग इति भावः । सूत्रपाठस्तु 'च'रहित इति तात्पर्यम् । अन्यथा 'शेषवचनं क्रियार्थक्रियायां प्रतिपदविध्यर्थ'मिति भाष्याऽसङ्गतिः । चकारसत्त्वे हि तस्याऽयमर्थो, न 'शेष'ग्रहणस्येति स्पष्टमेव । ननु तत्सामर्थ्यात्क्रियोपपदे नेत्येव कल्पना स्यादिति मत्वा शङ्कते—साधीयस्त्वित्यादि । भाष्ये—निर्भज्यते । विभज्यत इत्यर्थः । अक्रियाऽर्थोपपदत्वादिति । क्रियाऽर्थोपपदार्थकत्वादित्यर्थः । स्वाशयम्प्रकटयति—एवंतर्हीति । 'च'घटितः पाठः कर्तव्य इति भावः । वार्त्तिककारस्येति । तेन वार्त्तिककृत्कृतोऽयं 'च'शब्दघटितो न्यास इति सूचितम् । चकारं—वार्त्तिककृदुक्तम् ॥ १३ ॥

१—क्वचिन्न । × ३ । ३ । १० वा० १ व्याख्याभाष्ये । २—क्वाचित्कम् ।

## लृटः सद्वा ॥ ३ । ३ । १४ ॥

### सद्विधिर्नित्यमप्रथमासमानाधिकरणे ॥ १ ॥

सद्विधिरप्रथमासमानाधिकरणे नित्यमिति वक्तव्यम् । पक्ष्यन्तं पश्य, पक्ष्यमाणं पश्य ॥ क्व तर्हीदानीं विभाषा ? प्रथमासमानाधिकरणे । पक्ष्यन् पक्ष्यति । पक्ष्यमाणः पक्ष्यते ॥ १४ ॥

## अनद्यतने लुट् ॥ ३ । ३ । १५ ॥

योगविभागः कर्तव्यः । 'अनद्यतने' लृटः सत्संज्ञौ भवतः । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । ततो 'लुट्' । लुट् च भवत्यनद्यतने । श्वः कर्ता । श्वोऽध्येता । केन विहितस्यानद्यतने लृटः सत्संज्ञावुच्येते ? एतदेव ज्ञापयति 'भवत्यनद्यतने लृ'डिति, यदयमनद्यतने लृटः सत्संज्ञौ शास्ति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं—'भविष्यतीत्यनद्यतन उपसङ्ख्यान'मिति* ।

### परिदेवने श्वस्तनी भविष्यन्त्यर्थे ॥ १ ॥

परिदेवने[1] श्वस्तनी भविष्यन्त्या अर्थ इति वक्तव्यम् । इयं नु कदा गन्ता यैवं पादौ निदधाति । अयं नु कदाऽध्येता य एवमनभियुक्त इति ।

प्र०—लृटः सद्वा । सद्विधिरिति । अप्रथमासमानाधिकरणग्रहणमुपलक्षणं सूत्रोपात्तानामर्थानामिति संबोधनं लक्षणं हेतुश्च क्रियाया गृह्यते ॥ १४ ॥

अनद्य । एवं चेति । भविष्यच्छब्दस्याऽनद्यतनेपि वर्तनात्तन्त्रेण, एकशेषेण वा द्वयोर्भविष्यच्छब्दयोर्निर्देशादिति भावः । भविष्यन्त्यर्थे इति । 'भविष्यन्ती'शब्देन पूर्वाचार्यसंज्ञया

उ०—लृटः स । सूत्रोपात्तानामिति । इदञ्च वृत्त्यादिव्यवहारात्प्रयोगबलाच्चाऽवसेयम् ॥ १४ ॥

अनद्यतने लुट् । अनद्यतनेऽपीति । 'लृट् शेष' इति सूत्रेण केवलं भविष्यति, ज्ञापकेन अनद्यतने भविष्यतीत्यर्थः । तत्राऽन्यतरनिर्देशेऽन्यतरस्मिन्न स्यादत आह—तन्त्रेणेति । एकशेषेणेति । विभक्त्यन्तैकशेषेणेत्यर्थः । एतच्च ज्ञापकं सद्विषयलृट एवेति तिङ्विषयलृटोऽनद्यतनेऽसाधुत्वमेवेति केचित् । सामान्यत एव ज्ञापकमित्यन्ये । भाष्ये—परिदेवनम्—अनुशोचनम् । श्वस्तनीति लुटः संज्ञा । भविष्यन्त्यर्थे-लृडर्थे

* ३ । ३ । ३ वा० १

[1]—'विलापः परिदेवन'मित्यमरः । उपदिष्टं च गीतायाम्—अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ( २ । २८ )

कालप्रकर्षात्तूपमानम् ॥ २ ॥

कालप्रकर्षात्तूपमानं भविष्यति । गन्तेवेयं गन्ता । नेयं गमिष्यति । अध्येतेवाऽयमध्येता । नाऽयेमध्येष्यते ॥ न वै तिङन्तेनोपमानमस्ति । एवं तर्ह्यनद्यतन इवानद्यतन इति ॥ १५ ॥

## पदरुजविशस्पृशो घञ् ॥ ३ । ३ । १६ ॥

स्पृश उपतापे ॥ १ ॥

स्पृश उपताप इति वक्तव्यम् । इह मा भूत्—कम्बलस्पर्श इति† ॥ १६ ॥

## सृ स्थिरे ॥ ३ । ३ । १७ ॥

व्याधिमत्स्यबलेष्विति वक्तव्यम् । अतीसारो[1] व्याधिः[2] । विसारो मत्स्यः । बले—शालसारः खदिरसारः ॥ १७ ॥

प्र० —लुड्उच्यते । अनद्यतन इति । प्रयोगदर्शनवशाच्च गौणेऽप्यनद्यतने प्रत्ययो भवति ॥ १५ ॥

पदरुज । स्पृश उपताप इति । उपतापो रोगः । स्पर्शो नाम व्याधिविशेषः । अन्यत्र पचाद्यज्भवति । स्वरे विशेषः ॥ १६ ॥

सृ स्थिरे । स्थिरः कालान्तरस्य प्रापकोऽर्थ उच्यते । व्याधीति । अस्थिरार्थं वचनम् ॥१७॥

उ० —भविष्यत्सामान्य इत्यर्थः । यैवमिति । विलम्बितम् । अनभियुक्तः—अभ्यासहीनः । अनद्यतनविषयमेतत्प्रयोगद्वयम् ॥ १५ ॥

पदरुज । स्पर्शो नामेत्युदाहरणम् । अन्यत्र—व्याध्यतिरिक्ते ॥ १६ ॥

सृ स्थिरे । कालान्तरस्य प्रापक इति । प्राप्तिमानित्यर्थः । कालान्तरस्थायीति यावत् । अस्थिराऽर्थमिति । 'विसारो मत्स्य' इत्यत्रैकदेशस्थस्य कालान्तराऽप्राप्त्याऽस्थिरत्वम् । बले—दृढोंऽशः । सारो बलमित्यपि शरीरे दृढशुक्रांऽशस्यैव बलपदार्थत्वादुपपन्नम् । न्याय्यस्याऽपि दृढत्वादेव तत्राऽपि सारशब्दः सिद्धः । एवं श्रेष्ठेऽपि । खदिरसारादौ कैयटोक्तस्थिरत्वाऽभावश्चिन्त्यः । तस्मात् सूत्रस्यैव विषयपरिगणनमिदम् । त्रिष्वेकरूपाऽस्थिरत्वस्य कैयटोक्तस्थिरत्वप्रतिद्वन्द्विनो निरूपयितुमशक्यत्वाच्चेत्यन्ये ॥ १७ ॥

† नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४

१—'उपसर्गस्य घञ्यमनुष्ये बहुलम्' ६ । ३ । १२२ इत्युपसर्गदीर्घत्वस्य बहुलवचनात् 'अतीसारः' 'अतिसारः' इत्युभयथाऽपि भवति ।

२—"पृषध्रयज्ञेऽतीसारः पूर्वमुत्पन्न" इत्याख्यानं चरकसंहितायां चिकित्सास्थाने ( १६ । ३ ) द्रष्टव्यम् । अतीसारलक्षणं तु सुश्रुतसंहितायामुत्तरतन्त्रे ( ४० । ४ ) इत्थं वर्तते—

"संशम्यापां धातुरन्तः कृशानुं, वर्चोमिश्रो मारुतेन प्रणुन्नः ।
"वृद्धोऽतीवाधः सरत्येष यस्माद्, व्याधिं घोरं तं त्वतीसारमाहुः ॥"

# भावे ॥ ३ । ३ । १८ ॥

## भावे सर्वलिङ्गो निर्देशः ॥ १ ॥

भावे सर्वलिङ्गो निर्देशः कर्तव्यः । भूतौ भवने भाव इति । किं प्रयोजनम् ? सर्वलिङ्गे भाव एते प्रत्यया यथा स्युरिति । किं पुनः कारणं न सिध्यति ? पुँल्लिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च । तेन पुँल्लिङ्ग एव भाव एकवचने चैते प्रत्ययाः स्युः स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोश्च‡ न स्युः ।

नाऽत्र निर्देशस्तन्त्रम् । कथं पुनस्तेनैव च नाम निर्देशः क्रियते, तच्चाऽतन्त्रं स्यात् । तत्कारी च भवांस्तद्द्वेषी च । नान्तरीयकत्वादत्र पुँल्लिङ्गेन निर्देशः क्रियत एकवचनेन च । अवश्यं कयाचिद्विभक्त्या केनचिच्च लिङ्गेन निर्देशः

प्र०—भावे । सर्वलिङ्ग इति । लिङ्गस्योपलक्षणार्थत्वात्सर्वसङ्ख्य इत्यपि बोद्धव्यम् । पुँल्लिङ्गेनेति । ततश्च शब्देन योऽर्थः प्रतिपाद्यते यल्लिङ्गसङ्ख्यायुक्तस्तस्यैवाभिधायकेन भाव्यमिति स्त्रियां भाव इति सामानाधिकरण्येन संबन्धस्याऽसंभवात् स्त्रियामकर्तरि कारके क्तिन्प्रत्ययः स्यात् । भावे तु पुंसि । एवं 'नपुंसके भावे क्त' इत्यत्राऽकर्तरि च कारके इत्यस्य निवृत्तत्वान्नपुंसके कर्तरि क्तः स्यात् । भावे तु पुंसि । द्वित्वबहुत्वयोश्च पाकौ पाका इत्यादौ प्रत्यया न स्युरित्यर्थः । नात्रेति । सत्त्वभूतोऽर्थो विना लिङ्गं सङ्ख्यां च न निर्देष्टुं शक्यत इति तयोः शब्देनोपादानम् । शब्दसंस्कारमात्रमेव तु तदुपादाने प्रयोजनमित्यर्थः । नान्तरीयकत्वादिति । अन्तरशब्दो गहादिषु पठ्यते, स च विनार्थे वर्तते । अन्तरे भवम् अन्तरीयम् । तत्र नञ्समासे कृते पृषोदरादित्वाद्भाष्यकारवचनप्रामाण्याद्वा नलोपाऽभावः । ततः स्वार्थे कन्प्रत्ययः । तुषपलाला-

उ०—भावे । ततश्च शब्देनेति । 'भाव' इति शब्देनेत्यर्थः । योऽर्थः—सिद्धाऽवस्थः । नन्वेवं 'स्त्रियां क्ति'निति सूत्राऽसङ्गतिरत आह—स्त्रियां भाव इति । नन्वेवमपि 'नपुंसके भावे' इत्यसङ्गतं स्यात्, तत्राऽर्थान्तराऽनुवृत्त्यभावादत आह—एवमिति । कर्त्तरीति । 'कर्त्तरि क्त'दित्यनेन लब्धे इत्यर्थः । लिङ्गसङ्ख्ययोर्नान्तरीयकत्वमुपपादयति—सत्त्वेति । प्रातिपदिकमात्रं निर्दिश्यतामिति वदन्तम्प्रत्याह- शब्देति । 'न केवला प्रकृति'रिति निषेधादिति भावः । भाष्ये—कयाचिद्विभक्त्येति । सङ्ख्ययेत्यर्थः । विनार्थे इति । एवञ्च यद्विना यन्न भवति तत्राऽन्तरीयकमित्यर्थः । भाष्यकारवचनप्रामाण्याद्वेति । 'वा' शब्दो हेतौ, ततो हेतोः पृषोदरादित्वमित्यर्थः । नलोपाऽभाव इति । निषेधाऽर्थकोऽननुबन्धको 'न'शब्दो नास्त्येवेति भावः । ननु कण्टकस्य पुंस्त्वात्कण्टकानीत्यनुपपन्नमत आह—कण्टशब्दश्चेति । अर्द्धर्चादित्वादिति भावः । प्रयोगमूलत्वादिति । अनुवाद्यगतत्वादविवक्षेति तत्त्वम् । न ह्यत्रेति भाष्यस्य—अत्राऽनुवादे इत्यर्थः ।

‡ स्त्रियां क्तिन्, नपुंसके भावे क्तः ३ । ३ । ९४, ११४

कर्तव्यः । तद्यथा, कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान्सशकलान्सकण्टकानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वात्पुँल्लिङ्गे न निर्देशः क्रियत एकवचनान्तेन च । न ह्यत्रनिर्देशस्तन्त्रम् । कयाचिद्विभक्त्या केनचिच्च लिङ्गेन निर्देशः कर्त्तव्यः ।

अथवा कृभ्वस्तयः क्रियासामान्यवाचिनः, क्रियाविशेषवाचिनः पचादयः । यच्चाऽत्र पचतेर्भवतिर्भवति न तद्भवतेः पचतिर्भवति । यच्च भवतेः पचतिर्भवति न

प्र०—नीति । तुषसहितानि पलालानीत्युत्तरपदलोपी समासः । द्वन्द्वे तु 'जातिरप्राणिना'मित्येकवद्भावप्रसङ्गः । एवं शकलकण्टकानीति बोद्धव्यम् । कण्टकशब्दश्चोभयलिङ्गः । एवमिहापीति । प्रयोगमूलत्वाद्व्याकरणस्मृतेः, प्रयोगे च सर्वलिङ्गसङ्ख्ये भावे प्रत्ययानां दर्शनादिह च लिङ्गसङ्ख्ययोरविवक्षेत्यर्थः । अथवेति । पाकादिपु क्रियाविशेषेपु भिन्नलिङ्गसङ्ख्यानुगतेष्वपि भावशब्दवाच्यं सामान्यं–शावलेयादिष्विव गोत्वं–विद्यते, तच्चैकं पुंस्त्वानुगतं चेति तदाश्रित्य प्रत्यया विधास्यन्त इत्यर्थः । यच्चात्रेति । भावः सामान्यमेव, पचादयो विशेषा एवेत्यर्थः । भूतिर्भवन-

उ०—किञ्चिदधिकं वक्तुं विवक्षायामपि न दोष इत्याह—अथवेति । भाष्ये कृस्त्योर्दृष्टान्तार्थं ग्रहणम् । घञ्समभिव्याहारे साध्यत्वेन भासमानं भुवोऽर्थ इति तस्य सामान्यवाचित्वम् । भिन्नलिङ्गेति । पाकः पक्तिः पचनमित्येवमिति भावः । भिन्नलिङ्गसङ्ख्यानुगतेषु—तद्विशिष्टेषु । सामान्यं–सत्त्वभावरूपसिद्धत्वाऽऽख्यम् । तच्चैकं पुंस्त्वाऽनुगतञ्चेति । अतएव 'पक्तिर्भाव' इत्याद्युपपद्यते । धर्मपरस्याऽपि धर्मधर्मिणोरभेदात्सामानाऽधिकरण्यम् । तदाश्रित्येति । एवञ्च लिङ्गसङ्ख्ययोर्विवक्षायामपि न दोषः । न चैवं 'पक्ति'रित्यादौ पुंस्त्वापत्तिः, तादृशविशेषगतसामान्यस्य भावशब्दवाच्यस्य सिद्धत्वरूपस्य पुंस्त्वैकत्वयोः सत्त्वेऽपि तदाश्रयविशेषस्य नानालिङ्गत्वात्स्त्रीत्वाद्युपपत्तिरिति भावः । सामान्यमिति । तद्गतसिद्धत्वाख्यो धर्म इत्यर्थः । विशेषा इति । तदाश्रया व्यक्तय इत्यर्थः । ताश्च भावविहितक्तप्रकृत्ययान्तवाच्या अनेकलिङ्गा इति भावः । कर्त्रादिभेदादिति । स्त्र्यादिभेदादित्यपि बोध्यम् । क्वचित्तु कैयटे तथैव पाठः । सामान्यानुगत इति । सिद्धत्वरूपसामान्या-

१–व्रीहिभेदः, कलमादिधान्यं षष्टिकादिधान्यं च । कलापः समूहः । ( यथा भागवते ४।२४।६२। "क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये" ) इति शब्दकल्पद्रुमः ।

२–'तुषस्तु धान्यत्वचि विभीतके' इति हेमचन्द्रः ।

३–"पल्यते प्राप्यतेऽसौ 'पलालः' निष्फलानि व्रीहितृणानि वा 'प्यार' इति प्रसिद्धम्" इत्युणादिवृत्तौ ( १ । ११८ ) महर्षिदयानन्दः । 'प्रोक्षणात्तृणकाष्ठं च पलालं चैव शुद्ध्यति । इति मनुः (५।१२२)

४–"कण्टकं मत्स्याचस्थि" इति शब्दकल्पद्रुमो वाचस्पत्यं च ।

तत्पचतेर्भवतिर्भवति । किं च पचतेर्भवतिर्भवति ? सामान्यम् । किं च भवतेः पचतिर्भवति ? विशेषः । तद्यथा, उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाह,—'उपाध्यायं भवानभिवादयता'मिति । स गत्वा मातुलमभिवादयते । तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यं गत्वाह—'मातुलं भवानभिवादयता'मिति । स गत्वोपाध्यायमभिवादयते । एवमिहापि पचतेर्भवतौ यत्तन्निर्दिश्यते ॥ १८ ॥

प्र०—मित्यपि पाकादिवत्कर्त्रादिभेदाद्भावविशेष एव भावसामान्यानुगत इति द्रष्टव्यः। तद्यथेति। यथैकस्मिन्वस्तुनि मातुलत्वमुपाध्यायत्वं च भिन्नसंबन्ध्याश्रयं परस्परमबाधेन व्यवस्थितं, तथा पाकादिषु विशेषरूपता भावशब्दस्य वाच्यश्च सामान्यम् । तदुक्तं हरिणा—

'आचार्यो मातुलश्चेति यथैको व्यपदिश्यते ।
संबन्धिभेदादर्थात्मा स विधिः पक्तिभावयोः' ॥ इति ।

भवतौ यदिति । भवतौ धातौ वाच्यत्वेनावस्थितं यत्सामान्यं पचादिधातुवाच्यविशेषसमवेतं तत्प्रत्ययार्थत्वेन निर्दिश्यत इत्यर्थः । तत्र पाक इत्यादौ प्रकृतिभागः साध्यरूपमर्थमाह, प्रत्ययभागस्तु सत्त्वरूपताम् । तदुक्तं हरिणा—

'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥' इति ॥ १८ ॥

उ०—ऽनुगत इत्यर्थः । स विधिरिति । प्रकार इत्यर्थः । यथैकस्यैवाचार्यत्वं मातुलत्वं संबन्धिभेदात्, तथैकस्मिन्नेव पाकादिषु साध्यत्वविशिष्टतत्तत्क्रियात्वरूपविशेषरूपता, भावशब्दवाच्यं सामान्यञ्चेत्यर्थः । तच्च तत्र यथा निरूपकभेदाद्भिन्नम्, एवम्प्रकृतेऽपि वाचकभेदात् कारकनिरूपितं साध्यत्वं, क्रियान्तरनिरूपितञ्च सिद्धत्वमिति बोध्यम् । वाच्यत्वेनेति । अनेकार्थत्वाद्धातूनां सिद्धत्वमपि घञन्तभूधातोरर्थ इति भावः । यत्सामान्यमिति । साध्यत्वविशिष्टतत्तत्क्रियात्वरूपविशेषसत्त्वेऽपि यत्सिद्धत्वाख्यं सामान्यं पचाद्यर्थगतं घञन्तभवतिवाच्यं तत्प्रत्ययार्थत्वेन निर्दिश्यत इत्यर्थः । न च तस्यैकत्वात्पुंस्त्वाच्च 'चिकीर्षे'त्यादौ टाबादि न स्यादिति वाच्यं, तस्य भावस्य सिद्धत्वरूपस्यैकत्वपुंस्त्वविशिष्टस्य विशेषणत्वेन लिङ्गाद्यनियामकत्वात् । विशेषणत्वेन भासमानेनाऽपि तेन स्वाश्रयस्य लिङ्गाद्ययोग्यताऽपनीयत इति न दोषः ।

सत्त्वरूपतामिति । एवञ्च सिद्धत्वसाध्यत्वरूपोभयधर्मविशिष्टो धात्वर्थः पाकादिपदार्थ इति भावः । आख्यातशब्दे-पचतीत्यादौ । भागाभ्यां-प्रकृतिप्रत्ययाभ्याम् । साध्यसाधने-क्रियाकारके बोध्येते इत्यर्थः ॥ १८ ॥

## अकर्तरि च कारके संज्ञायाम् ॥ ३ । ३ । १९ ॥

कारकग्रहणं किमर्थम् ?

कारकग्रहणमनादेशे स्वार्थविज्ञानात् ॥ १ ॥

कारकग्रहणं क्रियते 'अनादेशे स्वार्थविज्ञानात्' । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति । तद्यथा, 'गुप्तिज्किद्भ्यः सन्' [ ३ । १ । ५ ] 'यावादिभ्यः कन्' [ ५ । ४ । २९ ] इति । एवमिमेऽपि प्रत्ययाः स्वार्थे स्युः । स्वार्थे मा भूवन् कारके यथा स्युरित्येवमर्थमिदमुच्यते ।

नैतदस्ति प्रयोजनम् । विहितः प्रत्ययः स्वार्थे—'भावे घ'ञिति* ॥ तेनाऽतिप्रसक्तमिति कृत्वा नियमोऽयं विज्ञायेत—'अकर्तरि संज्ञायामेवे'ति । अस्ति चेदानीं कश्चित्संज्ञाभूतो भावो यदर्थो विधिः स्यात् ? 'अस्ती'त्याह । आवाहः विवाह इति ।

कैमर्थक्यान्नियमो भवति ? विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् ? अकर्तरि च कारके संज्ञायां घञ्विधेयः । तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः ।

प्र०—अकर्तरि । कारकग्रहणं किमर्थमिति । अकर्तरीति पर्युदासपक्षे कर्तृसदृशस्य कारकस्य ग्रहणं विज्ञास्यते । प्रसज्यप्रतिषेधेऽपि वाक्यभेदेन संज्ञायां घञ्भवति कर्तरि न भवतीति विधिप्रतिषेधयोर्विधानाद्धात्रे च पूर्वसूत्रेण विहितत्वात्संज्ञायां घञ्धात्वर्थसंबन्धिनि कारके एव सामर्थ्याद्विज्ञास्यत इति प्रश्न । स्वार्थ इति । साध्यमानरूपः स्वार्थ इत्यर्थः । विहित इति । भावभेदमबुध्यमान आह । आवाह इति । कन्याया आनयनमुच्यते । विवाहस्तु नयनम् । तत्राऽपूर्व इति । अन्यथा भावे संज्ञायामित्येकमेव योगं कुर्यात् । योगविभागात्तु विध्यर्थत्वमस्य

उ०—अकर्तरि च । विधिप्रतिषेधयोरिति । एकविषयत्वे विकल्पाऽऽपत्तेस्तदितरकारकविषयता विधेरिति भावः । ननु भावविषयत्वमेव स्यादत आह—भावे चेति । ननु स्वार्थेऽस्य विधानमपि 'भावे'इत्येव सिद्धमत आह—साध्यमानेति । 'अकर्त्तरी'ति तु सामान्यप्राप्तकर्त्रर्थाऽसंबन्धार्थं स्यादिति भावः । भाष्ये—विहित इति । एवञ्च सामर्थ्यात्कारक एव भविष्यतीति भावः । इतर आह—तेनेति । 'अकर्त्तरि संज्ञायामेवे'ति सामान्यतः 'कर्त्तरि कृ'दिति सूत्रप्राप्तकर्त्तरि न, किन्तु भावे, तत्र च संज्ञायामेवेत्यर्थः । संज्ञाभूत इति । संज्ञात्वम्प्राप्त इत्यर्थः । भावः—भावप्रत्ययान्त इत्यर्थः । यदर्थो विधिरिति । नियमविधि-

१—'अनादेशे अनादिष्टार्थाः' इति पा० ।
२—'विज्ञायते' पा० ।

* भावे ३ । ३ । १८

तदेव तर्हि प्रयोजनं 'स्वार्थे मा भूव'न्निति । ननु चोक्तं 'विहितः प्रत्ययः स्वार्थे—भावे घञिती'ति । अन्यः स भावो बाह्यः प्रकृत्यर्थात् । अनेनेदानीमाभ्यन्तरे भावे स्यात् । कः पुनरेतयोर्भावयोर्विशेषः ? उक्तो भावभेदो भाष्ये† ।

एतदपि नास्ति प्रयोजनम् । 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।' नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते । तद्यथा, 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्टमानीय कृती भवति । एवमिहापि—'अकर्तरी'ति कर्तृप्रतिषेधादन्यस्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते । किं चान्यदकर्तृ कर्तृसदृशम् ? कारकम् ।

उत्तरार्थं तर्हि कारकग्रहणं कर्तव्यम् । 'परिमाणाख्यायां सर्वेभ्यः' [२०] कारके यथा स्यात्, इह मा भूत्,—'एका तिलोच्छ्रितिः', 'द्वे सृती' इति‡ । 'घञनुक्रमणमजब्विषये, अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञान'मिति वक्ष्यति × तन्न वक्तव्यं भवति ॥ एतदपि नास्ति प्रयोजनम् । अत्राप्यकर्तरीत्येवानुवर्तिष्यते ।

## संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात् ॥ २ ॥

संज्ञाग्रहणं चानर्थकम् । किं कारणम् ? 'सर्वत्र घञो दर्शनात्' । असंज्ञायामपि हि घञ्दृश्यते । को भवता दायो दत्तः । को भवता लाभो लब्ध इति ॥ यदि संज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति । 'कृतः कट' इत्यत्र 'कारः कट' इति प्राप्नोति ।

प्र०—योगस्येत्यर्थः । अन्य इति । सत्त्वभावमापन्न इत्यर्थः । अनेनेति । साध्यमानरूपो धातुवाच्य आभ्यन्तरः । उक्त इति । 'सार्वधातुके य'गित्यत्र भावभेदः प्रतिपादितः । उत्तरार्थमिति । तेन 'परिमाणाख्यायां सर्वेभ्य' इत्यनेन घञ्कारके भवति न तु भाव इति एका तिलोच्छ्रितिः, द्वे'

उ० – रित्यर्थः । योगविभागात्त्विति । 'अकर्त्तरि'ग्रहणाच्चेत्यपि बोध्यम्, नियमपक्षे तस्यापि वैयर्थ्यादित्याहुः । उक्तो भावभेदो भाष्ये इति, शङ्कित्रतिरिक्तस्य छात्रस्य वाक्यमित्येके । भगवत एवेत्यन्ये । भाष्ये—नञिवयुक्तमिति । प्रसज्यप्रतिषेधात्पर्युदासो न्याय्य इति भावः । घञनुक्रमणमित्यादीति । 'परिमाणाख्यायामित्यादि घञ्विधानमजपोरेव बाधकं न तु स्त्रीप्रत्ययाना'मित्यर्थकं हि तद्वार्त्तिकमिति भावः । ननु 'परिमाणाख्याया'मित्यत्र

† सार्वधातुके यक् ३ । १ । ६७ सूत्रभाष्ये १४४—१४५ पृष्ठयोः ।

१—'द्वेश्रुती' इति पा० । 'द्वे सृती' पाठ एव समीचीनतरः । 'सृतिः=मार्गः' इति मेदिनी । तथा च दृश्यते गीतायाम्—

नैते सृती पार्थ जानन् योगी मुह्यति कश्चनः । तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥८।२७॥

‡ स्त्रियां क्तिन् ३ । ३ । ९४ × ३ । ३ । २० वा० २; ३

**अतिप्रसङ्ग इति चेदभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम् ॥ ३ ॥**

अतिप्रसङ्ग इति चेत्तन्न । किं कारणम् ? 'अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्' । अभिधानलक्षणाः कृत्तद्धितसमासाः । अनभिधानान्न भविष्यन्ति ॥ १९ ॥

## परिमाणाख्यायां सर्वेभ्यः ॥ ३ । ३ । २० ॥

सर्वग्रहणं किमर्थम् ? 'सर्वेभ्यो धातुभ्यो घञ्यथा स्यादजपोरपि विषये+ । एकस्तण्डुलनिश्चायः* । द्वौ शूर्पनिष्पावौ† ।

**सर्वग्रहणमनर्थकं परिमाणाख्यायामिति सिद्धत्वात् ॥ १ ॥**

सर्वग्रहणमनर्थकम् । किं कारणम् ? 'परिमाणाख्यायामिति सिद्धत्वात्' । 'परिमाणाख्याया'मित्येव घञ्सिद्धोऽजपोरपि विषये, नार्थः सर्वग्रहणेन ।

प्र०—स्तृती इत्यत्र भावे घञोऽप्रसङ्गादेतदर्थं 'घञनुक्रमण'मित्यादि न वक्तव्यं भवति ॥ १९ ॥

परिमाण । अजपोरपीति । अन्यथा 'पुरस्तादपवादा' इति न्यायेनाऽचमेव घञ्बाधेत नाऽपमिति भावः । द्वौ शूर्पनिष्पावाविति । यद्यप्यत्र'निरभ्योः पूल्वो'रिति घञ्सिध्यति तथापि सर्वापवादार्थं सर्वग्रहणोपादानादनेनैव भवितुमर्हतीत्युपन्यासः । सर्वग्रहणमिति । बाध्यमात्रा-

उ०—'कारके' इत्यनुवृत्तावपि कर्मणि क्तिनं बाधित्वा घञ्मा भूदित्यर्थं तदावश्यकमिति चेन्न, परिमाणाख्यायां भाव एव क्तिनं मन्यतेऽभिधानस्वाभाव्यादिति न दोषः ॥ १९ ॥

परिमाण । परिमाणं—परिच्छित्तिः, तस्या आख्यानं—कथनं तत्रेत्यर्थः । परिच्छित्तिश्च प्रत्ययार्थस्येति भावः । सा चैकादिशब्दैरुदाहरणेषु स्पष्टैव । पुनर्विधानादेवाऽजब्विषये भवतीत्यत आह—अन्यथेति । उपादानादनेनैवेति । 'परिमाणाख्याया'मित्यनेनैवेत्यर्थः । 'निरभ्योः पूल्वो'रिति च न कार्यमिति भावः । निश्चायनिष्पावौ कर्मणि घञन्तौ । 'तण्डुल'शब्देन 'शूर्प'शब्देन च तत्पुरुषः । निश्चीयतेः स भावसाधनो वा । निश्चायो—राशिः । अत्र राशेरेकत्वेन परिच्छेदः । निष्पूयते तुषाद्यपनयनेन स निष्पावस्तडुलराशिः । अत्राऽपि संख्यया परिच्छेदः । निश्चाये 'ग्रहवृद्रि'त्यप्राप्तिः । बाध्यमात्राऽपेक्षायामिति । सामान्यचिन्तायामिदम् । बाध्यविशेषचिन्तायामपि प्रकारविशेषमाह—समुदायाऽपेक्षायां वेति ।

---

+ एरच्; ॠदोरप् ३ । ३ । ५६; ५७ १—'निचायः' पा० ।

* ग्रहवृदनिश्चिगमश्च ३ । ३ । ५८

† निरभ्योः पूल्वोः ३ । ३ । २८ । निष्पूयते तुषाद्यपनयनेन इति निष्पावः ।

"धान्यादिनिस्तुषीकार्यबहुलीकरणादिषु । तथा च पूतीकरणे निष्पावः पवनं पवः ॥"

इति शब्दरत्नावली ।

"निष्पावो राजशिम्बी स्याद्वल्लकः श्वेतशिम्बिकः ।" इति भावप्रकाशः ।

अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ? एकः पाकः द्वौ पाकौ त्रयः पाका इति । पूर्वेणाप्येतत्सिद्धम्‡ । न सिध्यति । 'संज्ञाया'मिति पूर्वो योगो न चैषा संज्ञा । प्रत्याख्यायते संज्ञाग्रहणम् । अथापि क्रियते, एवमपि न दोषः । अजपावपि संज्ञायामेव । यथाजातीयक उत्सर्गस्तथाजातीयकेनाऽपवादेनापि भवितव्यम् ।

उत्तरार्थं तर्हि । 'इङश्च' [ २१ ] सर्वेभ्योपि यथा स्यात् । ननु चायमिङ् एक एव, वण्ठरण्डाकल्पः सर्वेषु साधनेषु यथा स्यात् । उपेत्याऽधीयते तस्मादुपाधायायः । अधीयते तस्मिन्नध्यायः । 'अध्यायन्यायोद्यावसंहाराधारावायाश्च' [ ३।३।१२२ ] इत्येतन्निपातनं न कर्तव्यं भवति । एतदपि नास्ति प्रयोजनम् । क्रियते न्यास एव ।

प्र०—पेक्षायां वा पुरस्तादपवादन्यायो नास्तीति भावः । एकः पाक इति । कर्मण्यपि घञ् भवतीति भावः । सर्वेष्विति । सर्वेभ्य इति तादर्थ्ये चतुर्थी, तेनायमर्थो गृह्यत इति भावः । तेनाधिकरणे घं बाधित्वा घञ् भवति । प्रकृत्याश्रय इति । 'सर्वेभ्य' इति पञ्चमीनिर्देशादयमर्थो लभ्यत इति भावः । अर्थाश्रय इति । 'स्त्रिया'मित्यर्थं निर्दिश्य क्तिनो विधानादर्थाश्रयत्वम् । एकेति । ननु

उ०—ननु 'भावे' इत्यनेनैव सिद्धमत आह—कर्मण्यपीति । परिमाणज्ञापनार्थं भाष्ये एकादिपदोपादानम् । भाष्ये—अथाऽपीति । एवञ्च पाकादिशब्दानामसंज्ञात्वादकर्त्तरि चेत्यनेन न सिद्धमित्यर्थः । एवञ्चाऽसंज्ञार्थं 'परिमाणाऽऽख्याया'मित्यस्य चारितार्थ्यादजपोर्विषये घञर्थं 'सर्व'ग्रहणमावश्यकमिति भावः । समाधत्ते—अजपावपीति । एवञ्च 'तण्डुलनिश्चाय' इत्यादावप्यसंज्ञात्वादपोऽप्राप्तौ 'परिमाणाख्याया'-मित्येव घञ्सिद्ध इति नार्थः सर्वग्रहणेनेत्यर्थः । अजपोः संज्ञाविषयत्वे युक्तिमाह—यथाजातीयक इति । अन्यथाऽसंज्ञायां तयोश्चारितार्थ्येन घञ्प्रवादत्वमेव न स्यादिति भावः । वण्ठो—मृतभार्यः । ननु धातुविशेषणात् 'सर्वेभ्य' इपि पञ्चम्यन्तात् सर्वेष्विति कथं लभ्यतेऽत आह—सर्वेभ्य इति । तादर्थ्ये इति । नन्वपादानेऽकर्त्तरि च कारके इत्युक्तेः सिद्धमत आह—तेनाऽधिकरणेति । अपादानन्तु दृष्टान्तार्थमिति भावः । तदुदाहरणम्—अधीयते तस्मिन्नित्यध्याय इति । स्वाध्यायकाल इत्यर्थः । भाष्ये—ण्विस्त्रियामिति सर्वेभ्य इति । 'व्यावचोरी'त्यादौ युजादिविषयेऽपीत्यर्थः । भाष्ये—कर्मव्यतिहारे इत्यादि । 'तत्र ण्विधायके सूत्रे 'स्त्री'ग्रहणं 'व्यतिपाको वर्त्तते', इत्यत्र णजभावाऽर्थम्, स्त्रियां क्तिन्नित्यतः पृथग्ग्रहणन्तु 'व्यावचोरी'त्यादौ 'ण्यासे'ति युजादीनां बाधकानां बाधनार्थम्, न च व्यतीक्षादिषु 'गुरोश्च हल' इत्यस्याऽपि

‡ अकर्तरि च कारके संज्ञायाम् ३ । ३ । १९

१—'एकदेशमुपाध्यायः' ( याज्ञवल्क्यस्मृतिः १ । २ । ३५ ) 'वेदस्यैकदेशं मन्त्रब्राह्मणयोरेकं अङ्गानि वा योऽध्यापयति स उपाध्यायः ।' इति चात्र मिताक्षरायां विज्ञानेश्वरः ।

"एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥"

( इति मनुः २ । १४१ )

उत्तरार्थमेव तर्हि वक्तव्यम् । 'कर्मव्यतिहारे णच्स्त्रियाम्' [ ४३ ] इति सर्वेभ्यो यथा स्यात् । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—"कर्मव्यतिहारे स्त्रीग्रहणं व्यतिगाकार्थम् । पृथग्ग्रहणं बाधकबाधनार्थम् । व्याचोरी व्यावचर्च्यर्थम् । तत्र व्यतीचादिषु दोषः । सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिञ्ग्रहणं चे"ति × ।

उत्तरार्थमेव तर्हि । 'अभिविधौ भाव इनुण्' [ ४४ ] सर्वेभ्यो यथा स्यात् । सांराविणम् । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—"अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् । पृथग्ग्रहणं बाधकबाधनार्थम् । न तु ल्युट" इति+ ।

इदं तर्हि प्रयोजनम्—प्रकृत्याश्रयो योऽपवादस्तस्य बाधनं यथा स्यादर्थाश्रयो योऽपवादस्तस्य बाधनं मा भूदिति । एका तिलोच्छ्रितिः । द्वे सृती[1] इति* ।"घञनुक्रमणमजब्विषये । अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञान"मिति चोदयिष्यति तन्न वक्तव्यं भवति ।

घञनुक्रमणमजब्विषये ॥ २ ॥

घञनुक्रमणमजब्विषय इति वक्तव्यम्† ।

अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम् ॥ ३ ॥

अनुच्यमाने ह्येतस्मिन्स्त्रीप्रत्ययानामप्यपवादोऽयं विज्ञायेत । एका तिलोच्छ्रितिः, द्वे सृती इति* ।

प्र०—कारकानुवृत्त्याऽत्र भावे घञ् न भविष्यति । नैतदस्ति । उभयाधिकारात् । दारजाराविति । णिलोपे सति तस्य स्थानिवत्त्वाद्घञाश्रया वृद्धिर्न स्यादिति णिलुग्विधीयते । तस्य हि अपर-

उ०—बाधप्रसङ्गः, 'स्त्रियां क्ति'न्नित्यधिकारे एव 'कर्मव्यतिहारे णच्', ततो 'णिच'इति 'न्यासेन सिद्धे'रिति तद्वार्त्तिकार्थः । इनुण्ऽन्येभ्य इति । 'सांराविण'मित्यादौ भावक्तादिविषयेऽपीत्यर्थः । अभिविधाविति । 'शब्दशक्तिस्वभावाद्भावे एवेनुणिसद्धो 'भाव'ग्रहणं 'वाऽसरूप'न्यायेन पक्षप्राप्तक्तादिनिवृत्त्यर्थम् । 'नपुंसके भावे' इत्यनन्तरमेव वक्तव्ये पृथग्ग्रहणन्तु क्तस्य बाधकानां खलर्थानामपि बाधनार्थम्पूर्वविप्रतिषेधेनेति भावः । क्तवल्ल्युटो बाधस्तु नेष्यत इत्यत आह–'न तु ल्युट इती'त्येतद्वार्त्तिकार्थः । उभयाऽधिकारादिति । परिमाणाख्यायां भावेऽपीष्टेरिति भावः । उदाहरणयोर्भावे क्तिन्, पूर्वसूत्रस्थभाष्यस्वरसात् । घञाश्रयेति । णयाश्रयायान्तु 'जनीजॄष्क्नसु'ति मित्त्वेन 'जार'शब्दे ह्रस्वापत्तिरिति भावः । ननु जॄणातिरपि क्र्यादौ पठ्यते, अत एव तद्व्यावृत्तये 'जनीजॄ'षिति गणसूत्रे षकारोच्चारणम् । एवञ्च तस्याऽमित्त्वेन तस्माद्घञि

× ३ । ३ । ४३ वा० १—५ + ३ । ३ । ४४ वा० १—३

* स्त्रियां क्तिन् ३ । ३ । ९४ † एरच्; ऋदोरप् ३ । ३ । ५६;५७

१–'द्वे श्रुती' 'द्वे प्रसृती' पा० । 'द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।' इति यजुर्वेदे वा० मा० शु० १९ । ४७ ऋग्वेदे ( १० । ८८ । १५ ) तु 'द्वे स्रुती' इ पठ्यते ।

## दारजारौ कर्तरि णिलुक् च ॥ ४ ॥

दारजारौ कर्तरि वक्तव्यौ, णिलुक् च वक्तव्यः । दारयन्तीति दाराः । जरयन्तीति जाराः ।

## करणे वा ॥ ५ ॥

करणे वा वक्तव्यौ । दीर्यन्ते तैर्दाराः । जीर्यन्ति तैर्जाराः ॥ २० ॥

## इङश्च ॥ ३ । ३ । २१ ॥

## इङश्चेत्यपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष् ॥ १ ॥

इङश्चेत्यत्रापादाने स्त्रियामुपसङ्ख्यानं कर्तव्यं, तदन्ताच्च वा ङीष्वक्तव्यः । उपेत्याऽधीयते तस्याः उपाध्यायी उपाध्याया ।

## वायुवर्णनिवृत्तेषु ॥ २ ॥

'शॄ' इत्येतस्माद्वायुवर्णनिवृत्तेषु घञ्वक्तव्यः । शारो वायुः । शारो वर्णः । 'गौरिवाऽकृतनीशारः प्रायेण शिशिरे कृशः' ॥ २१ ॥

---

प्र०—निमित्तकत्वात्, किलुगुपधात्वेति प्रतिषेधाद्वा स्थानिवत्त्वाऽभावाज्जारशब्दः सिध्यति । करणे वेति । अण्यन्तयोरेव दृणातिजीर्यत्योः करणे घे प्राप्ते घञेवोच्यत इत्यर्थः ॥ २० ॥

इङश्च । प्रकृत्याश्रयस्यैवाऽचो घञा बाधकेन भाव्यम्, न त्वर्थाश्रयस्यापि क्तिन इति मत्वाह—इङश्चेति । शॄ वाय्विति । 'ऋदोर'बिति प्राप्ते वचनम् । शार इति कर्मणि घञ् । अकृतनीशार इति । अकृताच्छादन इत्यर्थः ॥ २१ ॥

---

उ०—णिलोपेनाऽपि सिद्धं जार इतीति चेन्न, मितो 'जर' इति रूपव्यावृत्त्यर्थत्वात् । दारयतेर्यद्यपि पचाद्यचा सिद्धं तथापि 'अच्कावशक्ता'विति स्वरव्यावृत्तय इदम् । करणे घे इति । 'पुंसि संज्ञायां घ' इत्यनेन । इदमुपलक्षणं ल्युटोऽपि ॥ २० ॥

इङश्च । ननु सूत्रेणैव सिद्धमत आह—प्रकृत्येति । सजातीयत्वादित्यर्थः । तथा च स्त्रियां क्तिनो बाधार्थमिति भावः । कर्मणीति । हरदत्तस्तु 'करणे'इत्याह, निश्रियतेऽनेनेइति निवृतम्—आच्छादनम् । बाहुलकात्करणे कः । तदाह—अकृताच्छादनं इति ॥ २१ ॥

---

१—'जारयन्तीति' पा० । २—'अस्या' पा० ।

३—नीशारः–शीतनिवारणाच्छादनम् । निःशेषेण नितरां वा शीर्यन्ते हिमवाय्वादयोऽनेन, अस्माद्वा । 'नीशारः स्यात् प्रावरणे हिमानिलनिवारणे' इत्यमरः ।

## समि मुष्टौ ॥ ३ । ३ । ३६ ॥

**समि मुष्टावित्यनर्थकं वचनं परिमाणाख्यायामिति सिद्धत्वात् ॥ १ ॥**

समि मुष्टाविति वचनमनर्थकम् । किं कारणम् ? 'परिमाणाख्यायामिति* सिद्धत्वात्' । 'परिमाणाख्याया'मित्येवात्र घञ्सिद्धः ।

**अपरिमाणार्थं तु ॥ २ ॥**

अपरिमाणार्थोऽयमारम्भः । मल्लस्य सङ्ग्राहः । मुष्टिकस्य सङ्ग्राह इति ।

**उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोः ॥ ३ ॥**

उद्ग्राभः निग्राभ इतीमौ शब्दौ छन्दसि वक्तव्यौ, स्रुगुद्यमननिपातनयोरर्थयोः । 'उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्† ॥ ३६ ॥

## कर्मव्यतिहारे णच्स्त्रियाम् ॥ ४ । ३ । ४३ ॥

स्त्रीग्रहणं किमर्थम् ?

**कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम् ॥ १ ॥**

कर्मव्यतिहारे स्त्रीग्रहणं क्रियते 'व्यतिपाकार्थम्' । इह मा भूत्,—व्यतिपाको‡ वर्तते ॥ अथ किमर्थं पृथग्ग्रहणम् ?

---

प्र०—समि मुष्टौ । परिमाणवाचिमुष्टिशब्दाश्रयेण पूर्वः पक्षः । अङ्गुलिसंनिवेशवाच्याश्रयणेन तु परिहारः ॥ ३६ ॥

कर्म । पृथग्ग्रहणमिति । प्रकरणोत्कर्षात् क्तिनो बाधकानामप्यनेन बाधनमिति भावः ।

---

उ०—समि मुष्टौ । अङ्गुलीति । दृढमुष्टिताऽनेनाऽन्वाख्यायते । मुष्टिकस्येति भाष्ये । 'मुष्टौ कुशल' इत्यर्थे आकर्षादित्वात्कन् । निपातनम्—अधः पातनम् ॥ ३६ ॥

कर्मव्य । भाष्ये—व्यतिपाकार्थमिति । पुँल्लिङ्गे भावे मा भूदित्यर्थमित्यर्थः । अकर्तृकारके तु नाऽनभिधानादिति भावः । प्रकरणोत्कर्षादिति । 'स्त्रियां क्तिन्'स्येतदपेक्षयेति भावः । बाधकानामिति । 'व्यावचोरी'त्यादौ 'ण्यासे'ति युजादीनामित्यर्थः । अत्रेदं बोध्यम्—क्तिनोऽयमपवादः, अत एव पक्षे वासरूपविधिना सोऽपि । अन्येषां तदपवादानान्तु पृथक् पाठेन पूर्वविप्रतिषेधकल्पनया बाधकः । अत एव व्यतीक्षाया असिद्धिः शङ्किता भाष्ये, विप्रतिषेधविषये वाऽसरूपाऽप्रवृत्तेः । णिज्ग्रहणाच्चेति । इदं 'व्यावचोरी'त्यादौ

---

१—'वित्येतद्वचनम्' पा० ।
२—'मित्येव सिद्धम्' पा० ।
† यजुर्वेदसंहितायाम् १७ । ६४
* परिमाणाख्यायां सर्वेभ्यः ३ । ३ । २० ।
३—'अर्थयोः' इत्यधिकं क्वचित् ।
‡ भावे ३ । ३ । १८

पृथग्ग्रहणं बाधकबाधनार्थम् ॥ २ ॥

पृथग्ग्रहणं क्रियते 'बाधकबाधनार्थम् । ये तस्य× बाधकास्तद्बाधनार्थम् ॥ किं प्रयोजनम् ?

व्यावचोरीव्यावचर्च्यर्थम् ॥ ३ ॥

[ व्यावचोरीव्यावचर्च्यर्थम् । ] व्यावचोरी वर्तते । व्यावचर्ची वर्तते+ ।

तत्र व्यतीक्षादिषु दोषः ॥ ४ ॥

तत्र व्यतीक्षादिषु दोषो भवति । व्यतीक्षा वर्तते । व्यतीहा वर्तते † ।

सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं च ॥ ५ ॥

सिद्धमेतत् । कथम् ? प्रकृत एव स्त्रीग्रहणेऽयं योगः कर्तव्यः । 'स्त्रियां क्तिन्' । ततः 'कर्मव्यतिहारे णच्' । ततो 'णिचः' ॥ ४३ ॥

## अभिविधौ भाव इनुण् ॥ ३ । ३ । ४४ ॥

भावग्रहणं किमर्थम् ?

प्र०—व्यतीक्षादिष्विति । 'अप्रत्ययात्' 'गुरोश्च हलः' इत्यकारस्यापि बाधप्रसङ्गादित्यर्थः । सिद्धं त्विति । यद्येवं व्यावक्रुष्टिरिति क्तिन्न प्राप्नोति । व्यात्युक्षी च न सिध्यति । नैष दोषः । 'कृत्यल्युटो बहुल'मिति बहुलवचनाद्यथेष्टलाभप्रयोजनात् ॥ ४३ ॥

अभिविधौ । भावे कारक इति द्वयेऽपि प्रकृते शब्दशक्तिस्वाभाव्याद्भाव एवेनुण्भविष्यतीति मत्वाह—भावग्रहणमिति । नपुंसक इति । 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते'

उ०—बाधकबाधनार्थम् । व्यावक्रुष्टिरिति । स्पष्टश्चायं प्रयोगो वाऽसरूपसूत्रे । 'व्यात्युक्षी'ति च माघकाव्ये । क्तिन्नेति । स्त्र्यधिकारे वाऽसरूपविधेरभावाद्व्यात्युक्ष्यामपवादविप्रतिषेधेन 'गुरोश्च'त्यप्रत्ययप्रसङ्गादिति भावः । एवञ्च 'वाऽसरूप'सूत्रस्थप्रयोगाऽनुष्ठानरूपभाष्यविरोधात् सिद्धन्त्वित्याद्येतत्सूत्रस्थवार्त्तिकमेकदेश्युक्तिरिति भावः । व्यावचोरीव्यतीक्षे बहुलग्रहणसाध्ये इति तात्पर्यम् । उत्तरन्तु—स्त्रियामित्यकरणप्रयुक्तलाघवाद्बहुलकस्य तत्राऽप्यावश्यकत्वाच्च वार्त्तिकोक्तमेव युक्तमिति ॥ ४३ ॥

अभिविधौ । द्वये अपि प्रकृते इति । प्रकरणे इत्यर्थः । 'द्वयोरपि प्रकृ' ' इति पाठान्तरम् । भाव एवेति । णज्वदिति भावः । मध्येऽपवादा इति । बाध्यसामान्यचिन्तयेदं सिद्धमिति 'वाऽसरूप'न्यायेन पक्षे

× स्त्रियां क्तिन् ३ । ३ । ९४

१–क्वचित्त्वेकमेव वार्तिकं पठ्यते—'पृथग्ग्रहणं बाधकबाधनार्थं व्यावचोरी व्यावचर्च्यर्थ मिति ।

२–क्वाचित्कम् । + ण्यासश्रन्थो युच् ३ । ३ । १०७ † गुरोश्च हलः ३ । ३ । १०३

## अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् ॥ १ ॥

अभिविधौ भावग्रहणं क्रियते 'नपुंसके क्तादिनिवृत्त्यर्थम्'। नपुंसकलिङ्गे भावे क्तादयो* मा भूवन्निति ॥ अथ किमर्थं पृथग्ग्रहणं [ क्रियते ] ?

## पृथग्ग्रहणं बाधकबाधनार्थम् ॥ २ ॥

पृथग्ग्रहणं क्रियते 'बाधकबाधनार्थम्'। ये तस्य* बाधकास्तद्बाधनार्थम्।

## न तु ल्युटः ॥ ३ ॥

ल्युटो बाधनं नेष्यते, सङ्कूटनमित्येव भवति† ॥ ४४ ॥

# एरच् ॥ ३ । ३ । ५६ ॥

## अज्विधौ भयस्योपसङ्ख्यानम् ॥ १ ॥

अज्विधौ भयस्योपसङ्ख्यानं कर्तव्यम्। भयम् ॥ अत्यल्पमिदमुच्यते 'भयस्ये'ति। भयादीनामिति वक्तव्यम्। इहापि यथा स्यात्—भयम् वर्षम्।

किं प्रयोजनम् ?

प्र०—इति इनुण् घञमेव बाधेत न तु क्तादीन्। भावग्रहणात्त्वधिकविधानार्थात्तानपि बाधत इति भावः। अथेति। 'नपुंसके भाव' इत्यस्यानन्तरमिदं वक्तव्यमिति भावः। पृथग्ग्रहणमिति। 'वासरूपोऽस्त्रिया'मिति वचनात्पक्षे क्तादयः स्युरिति प्रकरणोत्कर्षेण वासरूपविधिर्बाध्यत इत्यर्थः ॥ ४४ ॥

एरच्। वर्षमिति। वर्षणमित्यपि भवति। 'वृषभो वर्षणा'दिति भाष्यकारवचनात्। कल्प इति। ण्यन्तेभ्योऽचि प्रतिषिद्धे घञेव भवति। 'एरजण्यन्ताना'मिति तु वचनमनार्षम्।

उ०—प्राप्तयोरपि तयोर्बाधनार्थं भावग्रहणमिति भाष्याऽभिप्रायवर्णनमुचितम्। वाऽसरूप इति। स्त्र्यधिकारे एव 'वाऽसरूप'विधिः इति प्राक् प्रतिपादनादिति भावः। भाष्ये ये तस्येति। क्तस्य बाधकाः खलर्था इत्यर्थ उचितः। कैयटोक्तार्थे नाऽक्षरस्वारस्यं, भावग्रहणफलादविशेषश्च। अत्राऽनन्तरं करणात्पूर्वविप्रतिषेधकल्पनेति तात्पर्यम्। सङ्कूटनमित्येवेति। सङ्कूटनमिति भवत्येवेत्यन्वयः। अत एव 'पुंयोगा'दिति सूत्रस्थः 'साकूटिन'मिति भाष्यप्रयोगः सङ्गच्छते ॥ ४४ ॥

एरच्। भाष्यकारवचनादिति। ततो बाहुकाल्ल्युडपीति भावः। स्वरे इति। अपि आद्युदात्तम्,

* नपुंसके भावे क्तः ३।३।११४ १—क्वचिन्न। † ल्युट् च ३।३।११५

**नपुंसके क्तादिनिवृत्त्यर्थम् ॥ २ ॥**

नपुंसकलिङ्गे भावे क्तादयो* मा भूवन्निति ।

**कल्पादिभ्यश्च प्रतिषेधः ॥ ३ ॥**

कल्पादिभ्यः प्रतिषेधो वक्तव्यः । कल्पः अर्थः मन्त्रः† ।

**जवसवौ छन्दसि ॥ ४ ॥**

जवसवौ छन्दसि वक्तव्यौ‡ । ऊर्वोरस्तु मे जवः । अयं मे पञ्चौदनः सवः ॥ ५६ ॥

## ग्रहवृदनिश्चिगमश्च ॥ ३ । ३ । ५८ ॥

किमर्थं निष्पूर्वाच्चिनोतेरब्विधीयते नाऽचैव× सिद्धम् । न ह्यस्ति विशेषो निष्पूर्वाच्चिनोतेरपो वा, अचो वा, तदेव रूपं स एव स्वरः+ ॥ न सिध्यति । हस्तादाने चेर्घञ्प्राप्तस्तद्बाधनार्थम्†† ॥ अत उत्तरं पठति—

**अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात् ॥ १ ॥**

अब्विधौ निश्चिग्रहणमनर्थकम् । किं कारणम् ? 'स्तेयस्य घञ्विधौ प्रतिषेधात्' । स्तेयस्य घञ्विधौ प्रतिषेध उच्यते, निष्पूर्वश्चिनोतिः स्तेये वर्तते ।

अस्तेयार्थं तर्हीदं वक्तव्यं निष्पूर्वाच्चिनोतेरस्तेयेऽन्यथा स्यात्[२] ।

प्र०—जवसवाविति । अपि प्राप्तेऽज्विधिः । स्वरे विशेषः ॥ ५६ ॥

ग्रहवृ । एष स्वर इति । मध्योदात्तत्वं कृत्स्वरेण भवति । वशिरण्योरिति । घञि प्राप्ते

उ०—अध्यन्तोदात्तमित्यर्थः ॥ ५६ ॥

ग्रहवृ । भाष्ये स एव स्वर इति । 'थाऽथघञ्' इति सूत्रेणेति भावः । भाष्ये—स्तेये वर्त्तते इति । हस्तादानविषये इति भावः । किन्तर्हि घञेवेति । हस्ताऽऽदानविषये इत्यर्थः । प्रकृतसूत्रे 'निश्चिग्रहणं स्तेयार्थञ्चेदजोऽप्राप्तेरचैव सिद्धम् । अस्तेयार्थं चेत्तन्न, निःपूर्वच्चिनोतेः पूर्वविप्रतिषेधेन घञ एवेष्टेरिति

* नपुंसके भावे क्तः ३ । ३ । ११४ १—'कल्प्यादिभ्यः प्रतिषेधः' पा० ।
† भावे ३ । ३ । १८ ‡ ऋदोरप् ३ । ३ । ५७ × एरच् ३ । ३ । ५६
\+ थाथघञ्क्ताजबित्रकाणाम् ६ । २ । १४४ †† हस्तादाने चेरस्तेये ३ । ३ । ४०
२—'अस्तेये यथा स्यात्' पा० ।

**अस्तेयार्थमिति चेन्नाऽनिष्टत्वात् ॥ २ ॥**

अस्तेयार्थमिति चेत्तन्न । किं कारणम् ? 'अनिष्टत्वात्' । नहि निष्पूर्वाच्चिनोतेरस्तेयेऽविष्यते । किं तर्हि ? घञेवेष्यते ॥ एवं तर्हि सिद्धे सति यन्निष्पूर्वाच्चिनोतेरपं शास्ति तज्ज्ञापयत्याचार्यो यत्तत्—'अन्तस्थाथघञ्क्ताजवित्रकाणाम्' [ ६ । २ । १४३; १४४ ] इति तन्निष्पूर्वाच्चिनोतेर्न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? निश्चयः । एष स्वरः* सिद्धो भवति ।

**वशिरण्योश्चोपसङ्ख्यानम् ॥ ३ ॥**

वशिरण्योश्चोपसङ्ख्यानं कर्तव्यम् । सवशं सैन्धवम् । 'घनंजयो रणे रणे'† ।

**घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ॥ ४ ॥**

घञर्थे को विधेयः । किं प्रयोजनम् ? 'स्थास्नापाव्यधिहनियुध्यर्थम् ॥ स्था—प्रतिष्ठन्तेऽस्मिन्धान्यानीति प्रस्थः । 'प्रस्थे हिमवतः शृङ्गे' । स्थ ॥ स्ना—प्रस्नान्ति तस्मिन्निति प्रस्नः । स्ना ॥ पा—प्रपिबन्त्यस्यामिति प्रपा‡ । पा ॥ व्यधि-आविध्यन्ति तेनाऽऽविधम् × । व्यधि ॥ हनि—विघ्नन्ति तस्मिन्मनांसि विघ्नः+ । हनि ॥ युधि—आयुध्यन्ते तेनाऽऽयुधम् ॥ ५८ ॥

प्र०—वचनम् । वशनं वशः । रणन्त्यस्मिन्निति रणः । घञर्थ इति । भावः कर्तृवर्जितं च कारकं घञर्थः ॥ ५८ ॥

उ०—भाष्यार्थः । घञ् चेति पाठे 'च'शब्द एवार्थो द्रष्टव्यः । कृत्स्वरेणेति । 'गतिकारकोपपदा'दिति विहितेन ॥ ५८ ॥

* गतिकारकोपपदात् कृत् ६ । २ । १३९ १—'स वशं सैन्धवम्' पा० ।

† ऋग्वेदे १ । ७४ । ३ २—प्रस्थः परिमाणविशेषः । चतुः कुडवरूप इत्यमरमतौ । आढकचतुर्थांश इति लीलावती । द्विशरावपरिमाणमिति वैद्यकपरिभाषायाम् ।

"बलिनो बहुदोषस्य वयःस्थस्य शरीरिणः । परं प्रमाणमिच्छन्ति प्रस्थं शोणितमोक्षणे ॥"

( इति सुश्रुते शारीरस्थाने ८ । १६ ) अन्यच्च—

वमने च विरेके च तथा शोणितमोक्षणे । सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ इति ।

अद्रेरेकदेशोऽपि प्रस्थमुच्यते । यथा 'प्रस्थे हिमवतः शृङ्गे' इति । तथा च कुमारसम्भवे १ । ५४ 'प्रस्थं हिमाद्रेर्मृगनाभिगन्धि' इति ।

३—'प्रस्नान्त्यस्मिन्निति' पा० । ‡ आतो लोप इटि च ६ । ४ । ६४

× ग्रहिज्यावयिव्यधि········६ । १ । १६ 'आविधः' इति पाठभेदः ।

+ गमहनजनखनघसां लोपः क्ङित्यनङि ६ । ४ । ९८; हो हन्तेर्ञ्णिन्नेषु ७ । ३ । ५४

क्ङिति च १ । १ । ५

## स्तम्बे क च ॥ ३ । ३ । ८३ ॥

कस्मादयं को विधीयते ? 'हन्ते'रित्याह । तद्धन्तिग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'हनश्च वधः' [ ७६ ] इति । तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् । नैतानि निपातनानि । हन्तेरेत आदेशाः । यद्यादेशा घनस्वरो न सिध्यति । घनः¶ ।

सन्तु तर्हि निपातनानि । ननु चोक्तं 'तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितु'मिति । संबन्धमनुवर्तिष्यते ॥ अथवा पुनः सन्त्वादेशाः । ननु चोक्तं 'स्वरो न सिध्यती'ति । नैष दोषः । अकारान्ता आदेशाः† ।

अथ यदेषीकया स्तम्बो हन्यते कथं तत्र भवितव्यम् । केचित्तावदाहुः-'स्तम्बघ्ने'ति भवितव्यम् ॥ अपर आहुः-'स्तम्बहेति'रिति भवितव्यम्, ऊतियूतिजूतिसातिहेतिकीर्तयश्च' [३ । ३ । ९७] इति निपातनांमिति ॥ अपर आहुः—'स्तम्बहननी'ति भवितव्यमिति । वक्ष्यत्येतत्—'अजब्भ्यां स्त्रीखलनाः' 'स्त्रियाः खलनौ विप्रतिषेधेने'ति* ॥ ८३ ॥

## यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ३ । ३ । ९० ॥

### यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधः ॥ १ ॥

प्र०—स्तम्बे क च । घनस्वर इति । अन्तोदात्तत्वं न सिध्यति, अप्स्वरेणाद्युदात्तत्वप्रसङ्गादित्यर्थः । अकारान्त इति । तत्राऽतो लोपे कृते उदात्तनिवृत्तिस्वरेणाप उदात्तत्वं भवतीति भावः । स्तम्बघ्नेति कप्रत्यये रूपं, तस्य सर्वापवादत्वादिति भावः । स्तम्बहेतिरिति । निपातनस्य सर्वापवादत्वादिति भावः ॥ ८३ ॥

उ०—स्तम्बे क च । अनेकेनेति । घनाऽन्तर्घनप्रघणप्रघाणोद्घनाऽपघनरूपेणेत्यर्थः । अप्स्वरेणाद्युदात्तेति । निपातने तु निपातनात् 'फिषोऽन्त' इति सिद्धिरिति भावः । तत्राऽतो लोप इति । प्रत्ययसन्नियोगशिष्टतया विधानादार्द्धधातुक इति लोप इति भावः । आदेशाश्च स्थानिस्वरेणान्तरतम्यादन्तोदात्ता इति तात्पर्यम् । तस्य सर्वोऽपवादत्वादिति । यद्यपि पुंस्ययं चरितार्थस्तथापि 'बहुल'ग्रहणादिति भावः । भाष्ये—अजब्भ्यामिति । 'हेति'रिति निपातनमप्करणे चरितार्थमिति भावः । निपातितहेतिशब्दः शस्त्रे रूढ इत्यन्ये ॥ ८३ ॥

¶ मूर्तौ घनः ३ । ३ । ७७

† अतो लोपः ६ । ४ । ४८; अनुदात्तस्य च यत्रोदात्तलोपः ६ । १ । १६१

१—'निपातनादिति' पा० । * ३ । ३ । १२६ वा० १; २

यजादिभ्यो नस्य ङित्त्वे संप्रसारणस्य† प्रतिषेधो वक्तव्यः । प्रश्न इति ।
एवं तर्ह्यङित्करिष्यते ।

### अङिति गुणप्रतिषेधः ॥ २ ॥

यद्यङिद्गुणस्य‡ प्रतिषेधो वक्तव्यः । विश्न इति । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेध' इति । नैष दोषः । निपातनादेतत्सिद्धम् । किं निपातनम् ? प्रश्ने चासन्नकाले [ ३ । २ । ११७ ] इति ॥ ६० ॥

## स्त्रियां क्तिन् ॥ ३ । ३ । ६४ ॥

### स्त्रियां क्तिनाबादिभ्यश्च ॥ १ ॥

स्त्रियां क्तिनित्यत्राबादिभ्यश्चेति वक्तव्यम् । आप्तिः राद्धिः दीप्तिः× ।

### निष्ठायां वा सेटोऽकारवचनात् सिद्धम् ॥ २ ॥

अथवा निष्ठायां सेटोऽकारो भवतीति वक्तव्यम् ॥ यदि निष्ठायां सेटोऽकारो भवतीत्युच्यते स्रंसा ध्वंसेति न सिध्यति, स्रस्तिः ध्वस्तिरिति प्राप्नोति । किं पुनरिदं परिगणनं त्रय एवाबादय आहोस्विदुदाहरणमात्रम् । किं चातः ? यदि परिगणनं भेदो भवति । अथोदाहरणमात्रं नास्ति भेदः । स्रस्तिः ध्वस्तिरित्येव भवितव्यम् ॥ ६४ ॥

प्र०—स्त्रियां क्तिन् । स्रस्तिरिति । स्रंसा ध्वंसेति नैव भवतीति भावः ॥ ९४ ॥

उ०—स्त्रियां क्तिन् । क्तिन्नाबादिभ्य इति वचनं 'गुरोश्च हल' इत्येतत्प्राप्तियोग्यविषयं, 'निष्ठायां वा सेटोऽकारवचना'दित्यनेन समानयोगक्षेमत्वादित्याहुः । एवञ्च निष्ठायामनिटस्तत्सूत्रप्राप्तिविषया आबादय इति फलितम् ॥ ६४ ॥

† ग्रहिज्यावयिव्यधि······६ । १ । १६ ‡ पुगन्तलघूपधस्य च ७ । ३ । ८६

× गुरोश्च हलः ३ । ३ । १०३ इति 'अ'प्रत्ययः प्राप्तस्तस्य बाधनार्थं वार्तिकमिदम् । उदाहरणमात्रमेतन्न तु परिगणनमिति दिक् ।

## स्थागामापचो भावे ॥ ३ । ३ । ९५ ॥

### स्थादिभ्यः सर्वापवादप्रसङ्गः ॥ १ ॥

स्थादिभ्यः सर्वापवादः क्तिन्—प्राप्नोति । स यथैवाऽङं बाधत एवं ण्वुलिञावपि बाधेत+ । कां त्वं स्थायिकामस्थाः कां त्वं स्थायिम् ।

### सिद्धं त्वङ्विधाने स्थादिप्रतिषेधात् ॥ २ ॥

सिद्धमेतत् । कथम् ? अङ्विधान एव स्थादीनां प्रतिषेधो वक्तव्यः । प्रतिषिद्धे तस्मिन् क्तिनेव भविष्यति । सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'स्थादिभ्यः सर्वापवादप्रसङ्ग' इति नैष दोषः । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त' इत्येवमयं स्त्रियां क्तिनङं बाधिष्यते, ण्वुलिञौ न बाधिष्यते ।

### श्रुयजिषिस्तुभ्यः करणे ॥ ३ ॥

श्रुयजिषिस्तुभ्यः करणे क्तिन्वक्तव्यः × । श्रूयतेऽनयेति श्रुतिः । इज्यतेऽनयेति इष्टिः । इष्यतेऽनयेति इष्टिः । स्तूयतेऽनयेति स्तुतिः ।

### ग्लाम्लाज्याहाभ्यो निः ॥ ४ ॥

ग्लाम्लाज्याहाभ्यो निर्वक्तव्यः । ग्लानिः म्लानिः ज्यानिः हानिः ॥ ९५ ॥

प्र०—स्थागामा । स्थादिभ्य इति । बाध्यमात्रापेक्षायां, बाध्यसमुदायापेक्षायां वा पुरस्तादपवादन्यायो नास्तीति भावः । ण्वुलिञाविति । 'विभाषाख्यानपरिप्रश्नयो'रित्यनेन विहितौ । पुरस्तादिति । अनन्तरबाधने लब्धावकाशो विचिः परत्वादुत्तरेण बाध्यत इत्यर्थः । श्रुयजीति । ल्युड्बाधनार्थं वचनम् ॥ ९५ ॥

उ०—स्थागामा । बाध्यमात्रेति । बाध्यसामान्यचिन्तेयम् । बाध्यसमुदायेति । विशेषचिन्तायामपि प्रकारविशेषः ॥ ९५ ॥

+ षिद्भिदादिभ्योऽङ्; आतश्चोपसर्गे; विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च ३ । ३ । १०४; १०६; ११०

× करणाधिकरणयोश्च ३ । ३ । ११७ इति प्राप्तल्युटो बाधनार्थं वचनम् ।

१—कीलहार्नसंस्करणे 'म्ला' इति न पठ्यते । २—अयं पाठः क्वाचित्कः ।

## व्रजयजोर्भावे क्यप् ॥ ३ । ३ । ९८ ॥

### क्यब्विधिरधिकरणे च ॥ १ ॥

क्यब्विधिरधिकरणे चेति वक्तव्यम् । समजन्ति तस्यां समज्या* ॥ ९८ ॥

## कृञः श च ॥ ३ । ३ । १०० ॥

### कृञः श चेति वावचनं क्तिन्नर्थम् ॥ १ ॥

कृञः श चेति वावचनं कर्तव्यम् । [ किं प्रयोजनम् ? 'क्तिन्नर्थम् । ] क्तिन्नपि यथा स्यात् । कृतिः ॥ १०० ॥

## इच्छा ॥ ३ । ३ । १०१ ॥

किं निपात्यते ? इषेः शे यगभावः† ॥ अत्यल्पमिदमुच्यत इच्छेति । इच्छा-परिचर्यापरिसर्यामृगयाऽटाट्यानां निपातनं कर्तव्यम् ।

जागर्तेरकारो वा । जागर्या जागरा‡ ॥ १०१ ॥

प्र०—व्रजयजो । क्यब्विधिरिति । उत्तरसूत्रे इति भावः ॥ ९८ ॥

कृञः श च । चकारेणानन्तरस्य क्यप एव समुच्चयो न तु व्यवहितस्य क्तिन इति मत्वाह—वावचनमिति । तेन क्रिया कृत्या कृतिरिति रूपत्रयसिद्धिः ॥ १०० ॥

उ०—व्रजयजो । उत्तरेति । भाष्ये तद्विषयोदाहरणदानादिति भावः ॥ ९८ ॥

कृञः श च । वा वचनमिति । इदमेव ज्ञापयति 'वर्णगौरवादपि योगविभागो गरीया'निति भावः ॥ १०० ॥

इच्छा । शे यगभाव इति । भावार्थकत्वाद्यकः प्राप्तिः ॥ १०१ ॥

* संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ३ । ३ । ९९

१—'क्तिनर्थम्' इति वार्तिके पाठः क्वाचित्कः । २—अयं पाठोऽपि क्वाचित्क एव ।

† तिङ्शित् सार्वधातुकम् ३ । ४ । ११३; सार्वधातुके यक् ३ । १ । ६७

३—अस्मात्पूर्वं क्वचिद् वार्तिकं पठ्यते—"इच्छापरिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यान"मिति ।

४—'उपसंख्यान' पा० । ५—'जागर्तेरकारो वे'ति वार्तिकत्वेन केचित् पठन्ति ।

‡ जाग्रोऽविचिण्णल्ङित्सु ७ । ३ । ८५

## षिद्भिदादिभ्योऽङ् ॥ ३ । ३ । १०४ ॥

**भिदा[1] विदारणे ॥ १ ॥**

भिदा विदारण इति वक्तव्यम् । भित्तिरन्या ।

**छिदा[1] द्वैधीकरणे ॥ २ ॥**

छिदा द्वैधीकरण इति वक्तव्यम् । छित्तिरन्या ।

**आरा[1] शस्त्र्याम् ॥ ३ ॥**

आरा शस्त्र्यामिति वक्तव्यम् । आर्तिरन्या ।

**धारा[1] प्रपाते ॥ ४ ॥**

धारा प्रपात इति वक्तव्यम् । धृतिरन्या ।

**गुहा[1] गिर्योषध्योः ॥ ५ ॥**

गुहा गिर्योषध्योरिति वक्तव्यम् । गूढिरन्या ॥ १०४ ॥

## ण्यासश्रन्थो युच् ॥ ३ । ३ । १०७ ॥

किमर्थश्चकारः ? स्वरार्थः । 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात्† ॥ नैतदस्ति प्रयोजनम् । 'उदात्त' इति वर्तते 'भूवीरा उदात्तः' [ ३ । ३ । ९६ ] इति । यद्युदात्त इति वर्तते 'व्रजयजोर्भावे क्यप्' [ ९८ ] किमर्थः पकारः‡ । तुगर्थः । 'ह्रस्वस्य पिति कृति' [ ६ । १ । ७१ ] इति । उदात्त इति वर्तते । एवमपि कुत एतत्तदन्तस्योदात्तत्वं भविष्यति न पुनरादेरिति । उदात्त इत्यनुवर्तनसामर्थ्याद्यस्याऽप्राप्तः स्वरस्तस्य भवति । कस्य चाऽप्राप्तः ? अन्त्यस्य × ।

प्र०—षिद्भिदादि । आर्तिरिति । आङोऽर्तेश्च 'उपसर्गादृति धाता'विति वृद्धिरेकादेशः । गुहा गिर्योषध्योरिति । गिरिशब्दोऽत्र गिर्यवयवे वर्तते ॥ १०४ ॥

ण्यासश्रन्थो । युवोरिति । अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यान्नतु ल्युडादीना-

उ०—षिद्भिदा । ननु गुहा न गिरिरत आह—गिरिशब्द इति ॥ १०४ ॥

ण्यास । भाष्ये न पुनरादेरिति । एवञ्च पाद्रिकाऽनिष्टप्रसङ्ग इति भावः । यत्तु प्रथमाऽतिक्रमे कारणाऽभावादादेरेव स्यादिति तन्न; तन्न्यायस्याऽत्र शास्त्रेऽनङ्गीकारात् । अत एव 'आद्युदात्तश्चे'ति

१—क्वचिदिमानि वार्तिकानि न पठ्यन्ते ।
† चितः ६ । १ । १६३
‡ अनुदात्तौ सुप्पितौ ३ । १ । ४
× आद्युदात्तश्च ३ । १ । ३

सामान्यग्रहणाऽविघाताऽर्थस्तर्हि । क्व सामान्यग्रहणाविघातार्थेनार्थः ? 'युवोरनाकौ' [ ७ । १ । १ ] इति । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—'सिद्धं तु युवोरनुनासिकवचना'दिति* ।

युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसङ्ख्यानम् ॥ १ ॥

युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसङ्ख्यानं कर्तव्यम् । घट्टना वन्दना वेदना ।

इषेरनिच्छार्थस्य ॥ २ ॥

इषेरनिच्छार्थस्येति[1] वक्तव्यम् । अन्विष्यते अन्वेषणा ।

परेर्वा ॥ ३ ॥

परेर्वेति वक्तव्यम् । अन्यां परीष्टिं चर । अन्यां पर्येषणां चर ॥ १०७ ॥

रोगाख्यायां ण्वुल्बहुलम् ॥ ३ । ३ । १०८ ॥

धात्वर्थनिर्देशे ण्वुल् ॥ १ ॥

धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । का नामाऽऽसिकाऽन्येष्वीहमानेषु । का नाम शायिकाऽन्येष्वधीयानेषु ।

इक्श्तिपौ धातुनिर्देशे ॥ २ ॥

इक्श्तिपावित्येतौ प्रत्ययौ धातुनिर्देशे वक्तव्यौ[2] । पचेर्ब्रूहि पचतेर्ब्रूहि ।

---

प्र०—मिति भावः । अनुनासिकवचनादिति । तत्र ल्युडादीनामपि अनुनासिकत्वप्रतिज्ञानसामर्थ्याद्ग्रहणं भविष्यतीत्यर्थः ॥ १०७ ॥

रोगाख्या । धात्वर्थनिर्देश इति । क्रियानिर्देश इत्यर्थः । इक्श्तिपाविति । बहुल-

---

उ०—सार्थकम् । अत एव 'तित्स्वरित'मिति तव्यादावन्तस्वरितसिद्धिरिति बोध्यम् । अन्त्यस्येति । आदेस्तु 'आद्युदात्तश्चे'त्यनेन सिद्ध इति भावः । प्रतिज्ञानसामर्थ्यादिति । इदं च चित्त्वेऽपि तदनुबन्धकपरिभाषया ल्युटोऽग्रहणशङ्कावारणायाऽऽवश्यकमिति भावः ॥ १०७ ॥

रोगाख्यायां । धातुकृतोऽर्थः साधनमिति भ्रमं वारयति—क्रियेति । मात्राधिकारेऽपि कारकनिवृ-

---

* 'सिद्धं तु युवोरनुनासिकत्वात्' ७ । १ । १ वा० २२

१—इषेरिच्छार्थादपि युच् दृश्यते —"पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति, या ह्येव पुत्रैषणा सा वित्तैषणा, या वित्तैषणा सा लोकैषणा" इति । ( शतपथब्राह्मणे १४ । ५ । १ ) ( बृ० उपनिषदि ३ । ५ । १ ) । छान्दसत्वात् "कृतो बहुलम्" ( ३ । ३ । ११३ ) इति भाष्यवचनाद्वाऽस्य साधुत्वं विज्ञेयम् ।

२—तथा चाचार्याचारः—'इन्धिभवतिभ्यां च १ । २ । ६; दधातेर्हिः; जहातेश्च क्त्वि; अश्नोतेश्च; भवतेरः ७ । ४ । ४२; ४३; ७२; ७३ तृषिमृषिकृशेः १ । २ । २५

वर्णात्कारः ॥ ३ ॥

वर्णात्कारप्रत्ययो वक्तव्यः । अकारः इकारः ।

रादिफः ॥ ४ ॥

रादिफो वक्तव्यः । रेफः[1] ।

मत्वर्थाच्छः ॥ ५ ॥

मत्वर्थाच्छो वक्तव्यः । मत्वर्थीयः ।

इण्जादिभ्यः ॥ ६ ॥

इण्जादिभ्यो वक्तव्यः । आजिः आतिः आदिः ।

इञ्वपादिभ्यः ॥ ७ ॥

इञ्वपादिभ्यो वक्तव्यः । वापिः वासिः वादिः ।

प्र०—वचनात्तु क्वचिन्न भवति, श्तिपः शित्करणादकर्तृवाचिन्यपि तस्मिन् शबादयो भवन्ति । यद्यपि क्वचिद्भवति, यथा–'विभाषा लीयते'रिति । अत्र हि लीलीङोर्यका श्तिपि निर्देशः कृतः । श्यनि तु लीङ एव ग्रहणं स्यान्नु तु लीनातेः । वर्णादिति । वर्णवाचिनो वर्णानुकरणादित्यर्थः । बहुलवचनात् क्वचिन्न भवति,–'अस्य च्वा'विति यथा । तथा क्वचिद्वर्णसमुदायानुकरणादपि–एवकार इति । कारप्रत्ययस्य ककारस्येत्संज्ञा प्रयोजनाऽभावान्न भवति । ननु करणं कारः, अस्य कारः अकार इत्येवं सिध्यति । नैतदस्ति । एवं विज्ञायमाने'ऽकारकरण'मित्यादि न सिध्येत् । कारप्रत्ययस्य 'कृदति'ङित्यधिकाराद्धात्वविहितत्वेऽपि कृत्संज्ञा । ततस्तदन्तस्य प्रातिपदिकत्वा-

उ०—त्यर्थमिदम् । इक्श्तिपौ । क्वचिन्नेति । 'भुवो वु'गित्यादौ । शित्करणादिति । शित्करणस्य पित्राद्यादेश-विधानेन चारितार्थ्योदिदञ्चिन्त्यम् । तस्मान्निर्देशैरेव विकरणः साध्यः । भाष्ये—पचेः पचतेरिति,—कर्मणः शेषत्वविवक्षायां षष्ठी । 'प्रयोगा'निति शेषो वा । धात्वर्थनिर्देशेऽप्येतौ बाहुलकात् । अत एव 'ईक्षतेर्नाऽ-शब्दम्', 'आहौ प्रभूतादिभ्यः' 'गच्छतौ परदारादिभ्य' इति प्रयोगाः सङ्गच्छन्ते । कृत्संज्ञेति । बाहुलका-दित्यन्ये । एवं मत्वर्थीय इति । 'प्रातिपदिकत्वाद्विभक्त्युत्पत्ति'रित्यनुषङ्गः । आर्द्धधातुकत्वाऽभावादतो लोपाऽप्राप्तेः स्वादित्वाऽभावेनाऽभत्वा'यस्ये'ति लोपाऽप्राप्तेश्चाह—भाष्यकारेति । बहुलग्रहणादिति

१—क्वचिद्रेफात् 'कार'प्रत्ययोऽपि दृश्यते 'रकारादीनि नामानि रामत्रस्तस्य रावण' ( वा० रा० अरण्यकाण्डे ३६ । १७ ) इति । स तु वाऽसरूपविधिना, 'क्वचिदपवादेऽप्युत्सर्गः प्रवर्तते' इति न्यायेन वा साधुः ।

बहुलवचनात् क्वचिन्न भवति, तद्यथा—'रेण' तुल्यं सुधीवनि'......ङीप्संनियोगेन 'र' उच्य-मानोऽसति ङीपि न भवति ।' ( भाष्ये १ । २ । १८ पृ० २६ ) सूत्रेष्वपि—'रदाभ्याम्' ८ । २ । ४२; 'रषाभ्याम्' ८ । ४ । १; 'उरण् रपरः' १ । १ । ५१ इति ।

इक्कृष्यादिभ्यः ॥ ८ ॥

इक्कृष्यादिभ्यो वक्तव्यः । कृषिः किरिः गिरिः ।

संपदादिभ्यः क्विप् ॥ ९ ॥

संपदादिभ्यः क्विब्वक्तव्यः । संपत् विपत् प्रतिपत् आपत् परिषत् ॥१०८॥

## कृत्यल्युटो बहुलम् ॥ ३ । ३ । ११३ ॥

कृतो बहुलमिति वक्तव्यं पादहारकाद्यर्थम् । पादाभ्यां ह्रियते पादहारकः† । गले चोप्यते गलेचोपकः‡ । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन× ॥ ११३ ॥

## गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ३ । ३ । ११९ ॥

गोचरादीनामग्रहणं प्रायवचनाद्यथा कषो निकष इति ॥ १ ॥

गोचरादीनां ग्रहणं शक्यमकर्तुम् । घञ्कस्मान्न भवति+ ? प्रायवचनात्* । यथा कषः निकष इति प्रायवचनाद् घञ् न भवति ॥ ११९ ॥

---

प्र०—द्विभक्त्युत्पत्तिः । एवं 'मत्वर्थीय' इति । अकारलोपस्त्वत्राऽभत्वेऽपि भाष्यकारवचनाद्बहुलग्रहणाद्वा । संपदादिभ्य इति । क्तिन्नपि बहुलवचनाद्भवति—संपत्तिरिति ॥ १०८ ॥

कृत्य । कृल्ल्युट इति । कृत्यग्रहमपनीय कृद्ग्रहणं व्यापकत्वात्कर्तव्यम् । तस्मिंश्च कृते ल्युड्ग्रहणं न कर्तव्यं, तस्यापि कृत्त्वात् । श्वोऽग्नीनिति । अनद्यतनेपि लृड्भवति ॥ ११३ ॥

गोचरसंचर । प्रायवचनादिति । 'हलश्चे'त्यत्र प्रायग्रहणानुवर्तनाद्घञः कचिदभावाद्घ एव भवतीत्यर्थः ॥ ११९ ॥

---

उ०—सारम् । तदाश्रयणे भाष्यकारवचनं हेतुः । बहुव्रीहिः स्वार्थिकोऽयं छः । षष्ठीतत्पुरुषाद्गहादित्वाच्छेन कश्चित्साधयति ॥ १०८ ॥

---

१–'॥ कृल्ल्युटः ॥ कृल्ल्युट इति वक्तव्यम् ॥ कृतो बहुलमिति वा ॥' इति गुरुप्रसादसंस्करणेऽधिकः पाठः । निर्णयसागरमुद्रिते तु 'कृतो बहुलं पादहारकाद्यर्थम्' इति वार्तिकं पठ्यते ।

† साधनं कृतेति वा पादहारकाद्यर्थम् २ । १ । ३२ वा० २ इति समासः ।

‡ अमूर्द्धमस्तकात् स्वाङ्गादकामे ६ । ३ । १२ इति सप्तम्यलुक् । 'हलदन्तात्' [ ९ ] इति, तत्पुरुषे कृति [ १४ ] इति, अमूर्धमस्तकात् [ १२ ] इति वाऽलुक्'' इति नागेश उद्द्योते (२।१।३२)।

× अनद्यतने लुट् ३ । ३ । १५ योगविभागेनाऽनद्यतने लृटः सत्संज्ञौ विहितो भाष्ये ।

+ हलश्च ३ । ३ । १२१ * पुंसि संज्ञायां घः प्रायेण; हलश्च ३ । ३ । ११८; १२१

## हलश्च ॥ ३ । ३ । १२१ ॥

**घञ्विधाववहाराधारावायानामुपसङ्ख्यानम् ॥ १ ॥**

घञ्विधाववहाराधारावायानामुपसङ्ख्यानं कर्तव्यम् । अवह्रियन्तेऽस्मिन्नवहारः[1] । आध्रियन्तेऽस्मिन्नाधारः[2] । एत्यैतस्मिन्वयन्त्यावायः[3] ॥ १२१ ॥

## उदङ्कोऽनुदके ॥ ३ । ३ । १२३ ॥

किमर्थमिदमुच्यते न 'हलश्च' [ १२१ ] इत्येव सिद्धम् ? अनुदक इति वक्ष्यामीति । इह मा भूत् । उदकोदञ्चनः* ।

**उदङ्कोऽनुदकग्रहणानर्थक्यं च प्रायवचनाद्यथा गोदोहनः प्रसाधन इति ॥ १ ॥**

उदङ्कोऽनुदकग्रहणं चानर्थकम् । घञ्कस्मान्न भवति ? प्रायवचनाद् घञ् न भवति† । यथा गोदोहनः प्रसाधन इति ॥ १२३ ॥

## खनो घ च ॥ ३ । ३ । १२५ ॥

**खनो डडरेकेकवकाः[4] ॥ १ ॥**

डो वक्तव्यः । आखः ॥ डरो वक्तव्यः । आखरः ॥ इको वक्तव्यः । आखनिकः ॥ इकवको वक्तव्यः । आखनिकवकः ॥ १२५ ॥

प्र०—हलश्च । अध्यायसूत्रे आधारावायशब्दौ वार्तिके दर्शनादभियुक्तैः प्रक्षिप्तौ ॥१२१॥ उदङ्को । प्रायवचनादिति । घञ्वद्घोपि न भवतीति ल्युडेव भवति ॥ १२३ ॥

उ०—हलश्च । भाष्ये—एत्येति । आङोऽर्थप्रदर्शनमिदम् । वेञ आत्वे 'आतो युगि'ति युक् ॥१२१॥ उदङ्को । घञ्वद्घोऽपीति । सति सूत्रे 'अनुदक' इति प्रतिषेधसामर्थ्यात्प्रत्याख्याने प्रायग्रहणादिति भावः ॥ १२३ ॥

१–'अवहारः पुमान् चौरे द्यूतयुद्धादिविभ्रमे' इति मेदिनी ।

२–'आधारश्चाधिकरणेऽप्यालवालेऽम्बुधारणे' इति मेदिनी ।

३–आवायः=तन्तुवायस्थानम् ।

* करणाधिकरणयोश्च ३ । ३ । ११७

† पुंसि संज्ञायां घः प्रायेण; हलश्च ३ । ३ । ११८; १२१

४–इदं वार्तिकं काचित्कम् ।

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ ३ । ३ । १२६ ॥

### अजब्भ्यां स्त्रीखलनाः ॥ १ ॥

अजब्भ्यां स्त्रीखलना भवन्ति विप्रतिषेधेन । अजपोरवकाशः—चयः लवः‡ । स्त्रीप्रत्ययानामवकाशः—कृतिः हृतिः × । इहोभयं प्राप्नोति—चितिः स्तुतिः ॥ खलोऽवकाशः—ईषद्भेदः सुभेदः । अजपोः स एव । इहोभयं प्राप्नोति—ईषच्चयः सुचयः । ईषल्लवः सुलवः ॥ अनस्याऽवकाशः—इध्मप्रव्रश्चनः* । अजपोः स एव । इहोभयं प्राप्नोति—पलाशचयनः अविलवनः ॥ स्त्रीखलना भवन्ति विप्रतिषेधेन ।

### स्त्रियाः खलनौ विप्रतिषेधेन ॥ २ ॥

स्त्रियाः खलनौ भवतो विप्रतिषेधेन । स्त्रीप्रत्ययानामवकाशः—कृतिः हृतिः । खलोऽवकाशः—ईषद्भेदः सुभेदः । इहोभयं प्राप्नोति—ईषद्भेदा सुभेदा ॥ अनस्यावकाशः—इध्मप्रव्रश्चनः । स्त्रीप्रत्ययानां स एव । इहोभयं प्राप्नोति—सक्तुधानी तिलपीडनी । खलनौ भवतो विप्रतिषेधेन ॥ १२६ ॥

## कर्तृकर्मणोश्च भूकृञोः ॥ ३ । ३ । १२७ ॥

### खल्कर्तृकर्मणोश्च्व्यर्थयोः ॥ १ ॥

खल्कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम् । अनाढ्येन भवता ईषदाढ्येन शक्यं भवितुम्—ईषदाढ्यंभवं भवता । दुराढ्यंभवम् । स्वाढ्यंभवम् ।

### कर्तृकर्मग्रहणं चोपपदसंज्ञार्थम् ॥ २ ॥

कर्तृकर्मग्रहणं चोपपदसंज्ञार्थं द्रष्टव्यम्+ । तद्द्रष्टव्यं विजानीयादभिधेययो-

---

प्र०—कर्तृ । च्व्यर्थयोरिति । तेनाऽभूततद्भाव दन्यत्र खल्न भवति. आढ्येन सुभूयत इति । अत्र गतित्वात्सुशब्दस्य धातोः प्राक्प्रयोगः । 'स्वाढ्यं भवं भवते'त्यदौ खलः खित्करणसामर्थ्याद्धातोरनन्तरं कर्तृकर्मणी प्रयुज्येते । तदाचार्य इति । एतच्च खित्करणादनव्ययस्य मुमर्थं लभ्यते ।

---

उ०—कर्तृकर्मणो । खल् न भवतीत्यस्योदाहरणमाह—आढ्येन सुभूयत इति । खित्करणसामर्थ्यादिति । न च 'कूलमुद्रुज' इत्यादिवद्व्यवहितेऽपि कृद्ग्रहणपरिभाषया मुम्प्रवर्त्तकत्वेन तच्चरितार्थमिति वाच्यं, भाष्यप्रयोगैरेव व्यवस्थाकल्पनादिति तत्त्वम् । बहुलग्रहणेनेत्यन्ये । दुःसवोऽप्युपपदानीति । समासस्तु

---

‡ एरच्; ॠदोरप् ३ । ३ । ५६; ५७　　× स्त्रियां क्तिन् ३ । ३ । ९४

* करणाधिकरणयोश्च ३ । ३ । ११७　　+ तत्रोपपदं सप्तमीस्थम् ३ । १ । ९२

रिति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे—'कर्तृकर्मग्रहणं चोपपदसंज्ञार्थ'मिति ॥१२७॥

## अन्येभ्योऽपि दृश्यते ॥ ३ । ३ । १३० ॥

## भाषायां शासियुधिदृशिधृषिभ्यो युच् ॥ १ ॥

भाषायां शासियुधिदृशिभ्यो युज्वक्तव्यः । दुःशासनः दुर्योधनः दुर्दर्शनः दुर्धर्षणः ॥ मृषेश्चेति वक्तव्यम् । दुर्मर्षणः ॥ १३० ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

## वर्तमानसामीप्ये वर्तमानवद्वा ॥ ३ । ३ । १३१ ॥

वत्करणं किमर्थम् ? 'वर्तमानसामीप्ये वर्तमाने वे'तीयत्युच्यमाने वर्तमाने ये

---

प्र०—चकारस्य सन्नियोगार्थत्वादीषद्दुस्सवोऽप्युपपदान्याश्रीयन्ते ॥ १२७ ॥

अन्येभ्यो । भाषायामिति । छन्दसीत्यधिकाराद्भाषायां न प्राप्नोतीति वचनम् ॥१३०॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

वर्तमान सा । समीपमेव सामीप्यमिति स्वार्थे ष्यञं वर्णयन्ति । अन्ये समीपस्य भावः सामीप्यं, वर्तमानस्य सामीप्यं वर्तमानसामीप्यमिति व्याचक्षते । ननु भूतभविष्यतोरनेन प्रत्ययानामतिदेशात्तयोरेव सामीप्यसंबन्धो न वर्तमानस्येति समासाऽप्रसङ्गः । नैष दोषः । पारंपर्येण संबन्धसद्भावात् । अथाऽस्मिन् पक्षे 'गुणेन ने'ति षष्ठीसमासप्रतिषेधः कस्मान्न भवति । अत्र केचिदाहुः—शौक्ल्यादीनां रूपादिविशेषाणां समासप्रतिषेध इति । अन्ये त्वाहुः,—अयमेव

---

उ०—पर्यायेणेति बोध्यम् ॥ १२७ ॥

अन्येभ्यो । छन्दसीत्यधिकारादिति । 'छन्दसि गत्यर्थेभ्य' इत्यतः ॥ १३० ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योते तृतीयाध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

वर्तमान । समीपमेवेति । कालप्रकरणात् कालेन सामानाऽधिकरण्यार्थमिति भावः । अत्राऽपि पक्षे षष्ठीसमास एव । समासाऽप्रसङ्ग इति । भूतभविष्यन्निरूपितं वर्त्तमानस्य यत्सामीप्यं तत्र वर्त्तमानवत्प्रत्ययाऽतिदेशोऽनर्थकः । ये हि वर्त्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् सिद्धा एव, अतो वर्त्तमाननिरूपितं भूतभविष्यतोर्यत्सामीप्यं तत्रेत्यर्थः स्वीकार्यः । तथा च वर्त्तमानपदेन समासाऽप्रसङ्ग इति भावः । सामीप्यसंबन्ध इति तृतीयातत्पुरुषः । सामीप्यनिरूपितः सम्बन्ध इत्यर्थः । सामीप्येनाऽऽश्रयतारूपः

प्रत्यया विहितास्ते* वर्तमानसामीप्ये धातुमात्रात्स्युः । वत्करणे पुनः क्रियमाणे न दोषो भवति । यदि च याभ्यः प्रकृतिभ्यो येन विशेषेण[1] वर्तमाने प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषेण वर्तमानसामीप्ये भवन्ति ततोऽमी वर्तमानवत्कृताः स्युः । अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यान्नाऽमी वर्त्तमानवत्कृता स्युः ।

इह वर्तमानसामीप्ये वर्तमानवद्वेत्युक्त्वा लडेवोदाह्रियते । यदि पुनर्वा लड्भवतीत्येवोच्येत ॥ अत उत्तरं पठति—

**वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् ॥ १ ॥**

वर्तमानसामीप्ये वर्तमानवद्वचनं क्रियते 'शत्राद्यर्थम्' । शत्राद्यर्थोऽयमारम्भः । एषोऽस्मि पचन् । एषोऽस्मि पचमान इति† ।

**नैतदस्ति प्रयोजनम् । लडादेशौ शतृशानचौ, तत्र 'वा लड्भवती'त्येव सिद्धम् ।**

प्र०—निर्देशो ज्ञापयति 'अनित्यः समासप्रतिषेध' इति । अपरे ब्रुवते,—गुणशब्दस्य संबन्धिशब्दत्वाद्गुणाच्चिप्तस्य गुणिन एव समासप्रतिषेधः, न च वर्तमानः सामीप्यस्य गुणी, भूतभविष्यतोस्तद्गुणत्वात् । वत्करणमिति । 'वर्तमान' इत्येतावतैव वर्तमानसहचरितानां प्रत्ययानां सिद्धत्वादिति प्रश्नः । धातुमात्रादिति । वर्तमानग्रहणेन साहचर्यात्प्रत्ययानां रूपमात्रमेव लक्ष्येत, ततश्च सङ्करोपि स्यात् । यस्माद्धातोर्वर्तमाने यः प्रत्ययो विहितः स विशेषानुपादानाद्धात्वन्तरादपि स्यादित्यर्थः । लडेवेति । वृत्तिष्विति भावः । शत्राद्यर्थमिति । 'लटः शतृशानचा'वित्यनेन वर्तमानाधिकाराद्वर्तमानकालविहितस्यैव लटः शतृशानचौ भवतः, न तु कालान्तरविहितस्येति भावः । लडादेशाविति । लण्मात्रादेशौ । वर्तमानग्रहणस्य तत्रानपेक्षणादिति भावः । यौ तर्हीति । 'पूङ्यजोः शानन्' 'ताच्छील्यवयोवचनशक्तिषु चानश्' इङ्धार्यादिभ्यः शतृप्रत्यय इत्यर्थः ।

उ०—साक्षात्सम्बन्धस्तयोरेवेत्यर्थः । पारम्पर्येणेति । तत्र समीपद्वारा सामीप्येन सम्बन्ध इति भावः । प्रतियोगितासम्बन्धेनाऽन्वयः । वर्त्तमानकालप्रतियोगिकसामीप्ये सतीत्यर्थ इत्यन्ये । 'भूतादौ वर्त्तमानसामीप्ये सति वर्त्तमानवत्प्रत्यया' इति वाच्योऽर्थः । एवञ्च तत्समीपे भूतादौ फलतीति बोध्यम् । तद्गुणित्वात् । सामीप्यगुणित्वादित्यर्थः । 'तद्गुणत्वा'दिति पाठे बहुव्रीहिः । अयमेव युक्तः पाठः । 'वर्त्तमान' इति प्रथमान्तेन 'वर्त्तमाने ये प्रत्यया' इत्यर्थः कथं लभ्यतेऽत आह—सहचरितानामिति । लक्षणयेति भावः । रूपमात्रमिति । न तूपाधिविशिष्टमित्यर्थः । वत्करणे तु 'वर्त्तमानेऽर्थे यथा भवन्ति तथा सामीप्येऽपि भवन्ती'त्यर्थान्न दोष इति भावः । लण्मात्रेति । मात्रशब्दः कार्त्स्न्ये । भाष्ये—यौ तर्हीति । शत्रानावित्यर्थः । नन्वयमपि वर्त्तमानसमीपभूतभविष्यतोर्विधीयमानः कथमविशेषविहित इत्यत आह—वर्त्तमानलक्षणादिति ।

* वर्तमाने लट् ३ । २ । १२३; उणादयो बहुलम् ३ । ३ । १

† लटः शतृशानचावप्रथमासमानाधिकरणे ३ । २ । १२४

[1] १—'विशेषणेन पा० ।

यौ तर्ह्यलडादेशौ, एषोऽस्मि पचमानः एषोऽस्मि यजमान इति‡ । यौ चापि लडादेशौ तावपि प्रयोजयतः । वर्तमानविहितस्य लटः शतृशानचावुच्येते, अविशेषविहितश्चाऽयं योगः । शत्राद्यर्थमिति खल्वप्युच्यते, बहवश्च शत्रादयः । एषोऽस्म्यलङ्करिष्णुः । एषोऽस्मि प्रजनिष्णुः × ॥ १३१ ॥

## आशंसायां भूतवच्च ॥ ३ । ३ । १३२ ॥

आशंसा नाम भविष्यत्काला ।

**आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः ॥ १ ॥**

आशंसायां भूतवदतिदेशे लङ्लिटोः+ प्रतिषेधो वक्तव्यः ।

**न वाऽपवादस्य निमित्ताऽभावादनद्यतने हि तयोर्विधानम् ॥ २ ॥**

न वा वक्तव्यः । किं कारणम् ? 'अपवादस्य निमित्ताऽभावात्' । नात्राऽपवादस्य निमित्तमस्ति । कथम् ? अनद्यतने हि तयोर्विधानम् । अनद्यतने हि तौ विधीयेते लङ्लिटौ । न चाऽत्राऽनद्यतनः कालो विवक्षितः । कस्तर्हि ? भूतकालसामान्यम् ।

---

प्र०—वर्तमानविहितस्येति । 'लटस्मे'इत्यादिविहितलणिवृत्त्यर्थमवश्यं तत्र वर्तमानग्रहणमपेक्षणीयमिति भावः । अविशेषविहित इति । वर्तमानलक्षणाद्विशेषादन्यस्मिन्विशेषे विहित इत्यर्थः ॥ १३१ ॥

आशंसायाम् । आशंसेति । आशंसा—अभिमतार्थवाञ्छा, सा वर्तमानापि विषयस्य भविष्यत्त्वाद्भविष्यत्कालेत्युच्यते । इह चाशंसातिदेशस्य विषयभावेनोपात्ता । 'आशंसायां विषय आशंस्यमानक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया भवन्ती'त्यर्थः संपद्यते । नवेति । अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते न तु तद्विशेषोऽनद्यतनस्तत्र सामान्यातिदेशे विशेषानतिदेश

---

उ०—भाष्ये—अयं योग इति । एतद्योगविहित इत्यर्थः । प्रयोजनान्तरमप्याह भाष्ये—शत्राद्यर्थमिति । इष्णुजादयोऽपि वर्तमान एव विधीयन्त इति भावः । सुञः शतुर्नेञश्चानशश्च सर्वकालत्वमुक्तं 'भूते' इति सूत्रे भाष्य इति चानशुक्तिः कैयटे चिन्त्या ॥ १३१ ॥

आशंसायां । सूत्रप्रयोजनं दर्शयति भाष्ये—आशंसा नामेति । आशंसाया भविष्यत्कालत्वं कथमत आह—आशंसेति । ननु भविष्यन्त्यामाशंसायामेव प्रत्ययः कस्मान्नेत्यत आह—इह चेति । एवञ्च कालस्य सर्वत्र लकारप्रकृत्यर्थं एवाऽन्वयस्य क्लृप्तत्वान्नाऽऽशंसायां तदन्वय इति भावः । अपवादस्येति भाष्यस्य,—अपवादस्य निमित्तमुपादायाऽतिदेशाऽभावादित्यर्थः । तदाह—नाऽत्राऽपवादस्येति । निमित्त-

---

‡ पूङ्यजोः शानन् ३ । २ । १२८ × अलंकृञ्निराकृञ्......सहचर इष्णुच् ३ । २ । १३६
\+ अनद्यतने लङ्; परोक्षे लिट् ३ । २ । १११; ११५

## आशंसासंभावनयोरविशेषात्तद्विधानस्याऽप्राप्तिः ॥ ३ ॥

'आशंसा' 'संभावन'मित्यविशिष्टावेतावर्थौ । 'आशंसासंभावनयोरविशेषात्तद्विधानस्याप्राप्तिः' । आशंसायां ये विधीयन्ते ते संभावनेऽपि प्राप्नुवन्ति, ये च संभावने विधीयन्ते त आशंसायामपि प्राप्नुवन्ति । किं तर्ह्युच्यते 'अप्राप्ति'रिति, न साधीयः प्राप्तिर्भवति । इष्टा व्यवस्था न प्रकल्पेत । न सर्वे सर्वत्रेष्यन्ते ।

## न वा संभावनावयवत्वादाशंसायाः ॥ ४ ॥

न वैष दोषः । किं कारणम् ? 'संभावनावयवत्वादाशंसायाः' । संभावनवयवात्मिकाऽऽशंसा । आशंसा नाम प्रधारितोऽर्थोऽभिनीतश्चाऽनभिनीतश्च । संभावनं नाम प्रधारितोऽर्थोभिनीत एव ।

## अर्थाऽसन्देहो वाऽलमर्थत्वात्संभावनस्य ॥ ५ ॥

अथवाऽर्थाऽसन्देह एव पुनरस्य । किं कारणम् ? 'अलमर्थत्वात्संभावनस्य' । संभावन आलमर्थ्यं गम्यते, आशंसायां पुनरनालमर्थ्यम् ।

प्र०—इति न्यायाल्लङ्लिटौ न भवत इत्यर्थः । आशंसासंभावनयोरिति । यद्यविशेषः कथं द्वन्द्वनिर्देश इति चेत्, शब्दस्वरूपाभिधायित्वाददोषः । आशंसासंभावनयोरर्थभेदाऽभावादविशेष इत्यर्थः । आशंसा—अनागतवस्तुवाञ्छा । संभावनमपि भाविवस्तूत्प्रेक्षणमिति भावः । नवेति । अवयवशब्दः पृथग्भाववाची । संभावनात् पृथगेवाशंसेत्यर्थः । प्रधारितोऽर्थ इति । 'इदं मे भूया'दिति मनसा विषयीकृतोऽर्थः—आशंसाविषयत्वादाशंसाशब्देनाऽत्र उक्तः । अभिनीत इति । कारणयोग्यतावशाच्छक्यप्राप्तिरित्यर्थः । ततोन्योऽनभिनीत इत्यर्थः । अन्ये त्वप्रधारित इति पठन्ति ।

उ०—मुपात्तमस्तीत्यर्थः । ततः किमत आह—अत्रेति । कथं द्वन्द्वेति । 'विरूपाणामपि समानार्थाना'मित्येकशेषारम्भादिति भावः । शब्देति । तस्य भिन्नत्वाद्भिन्नार्थत्वमिति भावः । उत्प्रेक्षणमिति । तदपीच्छाविशेष एवेत्यभिमानः । नन्वाशंसायाः सम्भावनाऽवयवत्वं बाधितमत आह—अवयवशब्द इति । प्राप्यत्वेन निश्चयविषयत्वरूपप्रधारितत्वस्याऽऽशंसाविषयेऽसम्भवादाह—मनसेति । सङ्कल्पात्मकेनेत्यर्थः । अनेनेच्छारूपता आशंसाया उक्ता । आशंसायाः प्रधारितार्थत्वाऽसम्भवादाह—आशंसाविषयत्वादिति । अनिश्चित इति । अत एवेच्छाविषयः । अनेनेच्छारूपता तस्या उक्ता । विधुरप्रत्ययो—विपरीतकारणम् । तेन सम्भावितस्यार्थस्य शक्यप्राप्तित्वं सूचितम् । 'सम्भावनं नामाऽप्रधारित' इति पाठे एककोटयंशे उत्कटत्वेऽप्यन्यांशेऽनुत्कटज्ञानसत्त्वादनिश्चयरूपज्ञानविषयः । तेन ज्ञानरूपतोक्ता । 'प्रधारितोऽर्थ' इति पाठे अंशेऽवश्यभावित्वेन निश्चित इत्यर्थः । अभिनीत एवेति । शक्यप्राप्तिरित्यर्थः । ज्ञानमिति । ज्ञानेच्छयोश्च भेदः स्पष्ट

आचार्यप्रवृत्तिर्ज्ञापयति 'संभावनेऽप्यनालमर्थ्यं गम्यत' इति यदयं 'संभावनेऽल'मित्याह* । तस्मात्सुष्ठूच्यते 'न वा संभावनावयवत्वादाशंसाया'इति ॥ १३२ ॥

## क्षिप्रवचने लृट् ॥ ३ । ३ । १३३ ॥

### क्षिप्रवचने लृट आशंसावचने लिङ्विप्रतिषेधेन ॥ १ ॥

क्षिप्रवचने लृट आशंसावचने लिङ्भवति† विप्रतिषेधेन । क्षिप्रवचने लृड्भवतीत्यस्याऽवकाशः—उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे । आशंसावचने लिङ् भवतीत्यस्यावकाशः—उपाध्यायश्चेदागत आशंसे युक्तोऽधीयीय । इहोभयं प्राप्नोति—उपाध्यायश्चेदागत आशंसे क्षिप्रमधीयीय । लिङ्भवति विप्रतिषेधेन ।

### अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात् ॥ २ ॥

अनिष्पन्ने निष्पन्नशब्दः शिष्यः—शासितव्यः । किं कारणम् ? 'अनिष्पन्नत्वात्' । देवश्चेद्वृष्टो निष्पन्नाः शालयः । तत्र भवितव्यं 'संपत्स्यन्ते शालय' इति ।

---

प्र०—अनिर्धारितोऽवश्यंभावितया अनिश्चित इत्यर्थः । संभावनं चा'ऽसति विधुरप्रत्ययोपनिपाते भवितव्यमनेनार्थेनेति ज्ञान'मित्यनयोर्भेदः । यदयमिति । यदि संभावने नियमेनालमर्थो गम्येत तदा व्यभिचाराभावादलमिति विशेषणं नोपाददीतेत्यर्थः ॥ १३२ ॥

क्षिप्रवच । अनिष्पन्न इति । अनाशंसार्थमिदम् । 'वृष्टश्चे'दित्यादि वस्तुस्वरूपकथनम् । सिद्धं त्विति । अप्शालिबीजसंयोग एव निष्पत्तिः । शालीनां तत्रैव निष्पत्तेर्वर्तनादिति भाव. । हेतुभूत कालसंप्रेक्षितत्वाद्वेति । कारणसम्बन्धी कालः कार्यस्य व्यवस्थाप्यते कारणान्तरोपेक्षाभावप्रतिपादनायेत्यर्थः । हेतुभूतस्य वर्षादेर्यः कालः स एव कार्ये संप्रेक्षितः, कारणस्यैव कार्यरूपतया

---

उ०—एवेत्यर्थः । तयोर्भेदे एकदेशयुक्तं युक्त्यन्तरमाह भाष्ये—अर्थोऽसन्देहो वेति । तयोरर्थोऽविशेषेऽप्यालमर्थ्योऽनालमर्थ्यंकृतो भेद इति भावः । तद्दूषयति—आचार्येति । नाऽऽलमर्थ्यमिति । नियमेनाऽऽलमर्थ्यं न गम्यत इत्यर्थः ॥ १३२ ॥

क्षिप्रव । भाष्ये—निष्पन्ने इति । भविष्यति भूतप्रत्ययो वक्तव्य इत्यर्थः । अनाशंसार्थमिति । आशंसायां पूर्वेण भूतवदतिदेशाद्भविष्यत्यपि क्तः सिद्ध इति भावः । आशंसाऽभावं दर्शयति भाष्ये—देवश्चेद्वृष्ट इति । तदेवाह—वस्तुस्वरूपेति । न त्वस्याऽऽशंसाविषयतेति भावः । वृष्टौ जातायामेवं वादो लोकस्य । भाष्ये—यल्लोक इति । यल्लोको भविष्यत्प्रयोगं न मृष्यति तस्मान्न मुख्या निष्पत्तिर्निष्पदेरर्थः, किन्त्वन्य एवेत्यर्थः । तमेवाह—अप्शालीति । अयमेव निष्पत्तिपदार्थोऽभिमतस्तस्येति भावः । शालीना-

---

* संभावनेऽलमिति चेत् सिद्धाऽप्रयोगे ३ । ३ । १५४

† आशंसावचने लिङ् ३ । ३ । १३४

## सिद्धं तु भविष्यत्प्रतिषेधात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'भविष्यत्प्रतिषेधात्' । यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति । कश्चिदाह—'देवश्चेद्वृष्टः संपत्स्यन्ते शालय' इति। स उच्यते—'मैवं वोचः, संपन्नाः शालय इत्येवं ब्रूहि' ।

## हेतुभूतकालसंप्रेक्षितत्वाद्वा ॥ ४ ॥

हेतुभूतकालसंप्रेक्षितत्वाद्वा पुनः सिद्धमेतत् । हेतुभूतकालं वर्षं, वर्षकाला च क्रिया ॥ यदि तर्हि निष्पन्नोऽर्थः किं निष्पन्नकार्याणि न क्रियन्ते ? कानि ? भोजनादीनि । अन्यदिदानीमेतदुच्यते—'किं निष्पन्नकार्याणि न क्रियन्त' इति, यत्त तन्निष्पन्नोऽर्थो न निष्पन्न इति स निष्पन्नोऽर्थः । अवश्यं खल्वपि कोष्ठगतेष्वपि शालिष्ववहननादीनि[2] प्रतीक्ष्याणि । एवमिहापि निष्पन्नोर्थोऽवश्यं तु जननादीनि प्रतीक्ष्याणि ।

प्र०—विवक्षितत्वात् । कार्यकारणयोरभेदाध्यवसायादित्यर्थः । भाष्यकारस्त्वेतदेव च वस्त्वन्यथा व्याचष्टे—हेतुभूतकालं वर्षमिति । हेतुभूतस्य हेतुत्वं प्राप्तस्य मेघादेर्यः कालः स एव वर्षस्य । वर्षस्य च यः कालः स एव निष्पत्तिक्रियाया इत्यर्थः । जननादीनीति । जननम्—अभिव्यक्तिः । एतदुक्तं भवति—विद्यमानोप्यर्थोऽनभिव्यक्तोर्थक्रियां न करोति । न चैतावता तस्याऽसत्त्वम् ।

उ०—मिति—पूर्वोऽन्वयि । तत्रैवेति । अप्शालिबीजसंयोगरूपनिष्पत्तावेवाऽत्र प्रायो निःपूर्वकपदेर्वर्त्तमानत्वात्तद्वाचकत्वादित्यर्थः । निष्पदेरित्युपलक्षणं सम्पदेरपि । 'निष्पत्ते' रिति पाठेऽप्ययमेवार्थः श्तिपा निर्देशात् । श्यन् तु कर्त्रर्थकत्वाऽभावान्न कृतः । यद्वा सत्कार्यवादे तत्रैव निष्पत्तेर्वर्तमानत्वम् । आद्यं व्याख्यानमेव युक्तम् । भाष्ये—हेतुभूतेति । हेतुभूतस्य कारणत्वं प्राप्तस्य कारणस्य कालं कार्ये आरोप्य प्रयोग इत्यर्थः । तदारोपफलमाह—कारणान्तरेति । तेन चाऽवश्यभावित्वं फलति । कारणस्यैवेति । अपामप्युपादानकारणत्वादिति भावः ।

अन्यथेति । वृष्टेः प्रागपि मेघोत्पत्त्यनन्तरमीदृशप्रयोगस्य दर्शनात्तत्र च वृष्टेरपि वास्तवभूतत्वाऽभावात्तदुपपत्तिमपि दर्शयितुमिति भावः । मेघादेरिति । मेघाद्युत्पत्तेरित्यर्थः । तत्राद्यपक्षे शङ्कते—भाष्ये—यदि तर्हीति । अभिव्यक्तिरिति । स्थूलरूपेणाऽभिव्यक्तिरित्यर्थः । निष्पत्तिस्त्वत्राऽप्शालिबीजसंयोग एव, तत्राऽपि कार्यसत्त्वादिति भावः । तद्दर्शयति—एतदिति । कारणसामग्र्येति । ननु कार्यसमधिगम्यं सामग्रीत्वं, तथा च कार्याऽनुमाने इतरेतराश्रय इति चेन्न, वृद्धपरम्परया सामग्रीत्वग्रहात् । तेनाऽवश्यभावित्वेन

१—'प्रत्युच्यते लोकेने'त्यर्थः ।

२—उलूखलेधान्यं पातयित्वा पवनार्थं मुसलेन किञ्चित्ताडनमवहननमुच्यते । तथा च भाष्यम्—"रन्धनाय स्थाली अवहननायोलूखलमिति ।" [ २ । १ । ३६ वा० १ ]

## अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात् ॥ ५ ॥

अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः। कूपोऽस्ति, कूपो भविष्यति, कूपो भविता, कूपोऽभूत्, कूप आसीत्, कूपो बभूवेति। कथं पुनर्ज्ञायते भवन्त्या एषोऽर्थ इति? 'कर्तुर्विद्यमानत्वात्'। कर्ताऽत्र विद्यते। कथं पुनर्ज्ञायते कर्ताऽत्र विद्यत इति? कूपोऽनेन कदाचिद्दृष्टो न चास्य कंचिदप्यपायं पश्यति। स तु तत्र बुद्ध्या नित्यां सत्तामध्यवस्यति "कूपोऽस्ती"ति[1]।

## सिद्धं तु यथास्वं कालसमुच्चारणात् ॥ ६ ॥

सिद्धमेतत्। कथम्? [ 'यथास्वं[2] कालसमुच्चारणात्'। ][3] यथास्वमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति॥ कथं पुनर्ज्ञायते यथास्वमेता[4] विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति।

## अवात्वात् ॥ ७ ॥

यन्न वा भाष्यन्ते।

प्र०—कारणसामग्र्या कार्योत्पादानुमानात्। स्थूलेन तु रूपेणाभिव्यक्तोऽर्थक्रियां संपादयति। अस्त्यर्थानामिति। सत्तावाचिनामित्यर्थः। 'भवन्ती'शब्दो लटः पूर्वाचार्यसंज्ञा। कर्तुर्विद्यमानत्वादिति। ततश्च सत्ताया वर्तमानत्वं न तु भूतभविष्यद्रूपत्वमित्यर्थः। अवात्वादिति। अविकल्पितत्वादित्यर्थः। एतदेवाह—यन्न वा भाष्यन्त इति। एतदुक्तं भवति,—यदि वचनेन वर्तमाने लडादयो विधीयेरन् तदा लोके विकल्पेन प्रयुज्येरन्। 'कूपोऽभू'दिति प्रयोक्तव्ये 'कूपोभविष्यती'त्यपि प्रयुज्येत। तदेव दर्शयति—असिद्धविपर्यासश्चेति। इह किंचिदिति। इन्द्रियव्यापारकालस्य

उ०—कार्योत्पत्तावनुमितायां तत्र कारणकालारोपेण भूतप्रयोगेऽपि स्थूलरूपेणाऽभिव्यक्तिरूपमुख्यजननोत्तरमेव क्रियाकारित्वमिति भावः।

नन्वस्त्यर्थानामित्ययुक्तं, न ह्यस्तिः केषाञ्चिद्धातूनामर्थोऽत आह—सत्तेति। अस्तेरर्थोऽर्थो येषामित्यर्थ इति भावः। कर्तुर्विद्यमानत्वेऽपि क्रियायाः कालत्रययोगदर्शनादाह—ततश्च सत्ताया इति। कर्तृसत्तयोः समनियतत्वादिति भावः। अविकल्पितत्वादिति। प्रयोगे इत्यर्थः। यन्न वेति। 'प्रयोगे' इति शेषः। वचनेन—'अस्त्यर्थाना'मिति वार्त्तिकेन। असिद्धविपर्यास इति भाष्येऽपि,—'लोके' इति शेषः। चो हेतौ। यतः शिष्टलोकानामसिद्धो विपर्यासो विपरीतः प्रयोगोऽतो न विकल्पेन प्रयुज्यन्तेऽन्यैरतोऽत्र यथाकालमेव प्रत्यया इत्यर्थः। किं पुनः कारणमिति। किं पुनः कारणं वा न भाष्यन्ते, किञ्च कारणं शिष्टानां विपर्यासाऽसिद्धिरिति भावः। वास्तवकालभेदस्याऽभावाद्वचनेनैव साधने प्राप्नोत्येव विपर्यासादिक-

१—'कूपोऽत्रास्तीति' पा०। २—'यथास्वकालं समु'।
३—इदं लुप्तम्। ४—'यथा स्वकालमेता'।

असिद्धविपर्यासश्च ॥ ८ ॥

असिद्धश्च विपर्यासः । न हीह कश्चित्कूपोऽस्तीति प्रयोक्तव्ये 'कूपोऽभू'दिति प्रयुङ्क्ते ॥ किं पुनः कारणं 'न वा भाष्यन्ते' 'असिद्धश्च विपर्यासः' ? इह [ हि¹ ] किंचिदिन्द्रियकर्म, किंचिद्बुद्धिकर्म । इन्द्रियकर्म समासादनं, बुद्धिकर्म व्यवसायः । एवं हि कश्चित्पाटलिपुत्रं जिगमिषुराह—'योऽयमध्वा गन्तव्य आ पाटलिपुत्रादेतस्मिन्कूपो भविष्यति' । अनद्यतने'कूपो भविते'ति । समासाद्य 'कूपोऽस्ती'ति । समासाद्यातिक्रम्य 'कूपोऽभू'दिति । समासाद्यातिक्रम्योषित्वा 'कूप आसी'दिति । समासाद्यातिक्रम्योषित्वा विस्मृत्य 'कूपो बभूवे'ति । तद्यदेन्द्रियकर्म तदैता विभक्तयो यदा हि बुद्धिकर्म तदा वर्तमाना² भविष्यति ॥ १३३ ॥

## नाऽनद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ ३ । ३ । १३५॥

किमर्थमिमौ द्वौ प्रतिषेधावुच्येते नाऽद्यतनवदित्येवोच्येत ?

नाऽनद्यतनवत्प्रतिषेधे लङ्लुटोः प्रतिषेधः ॥ १ ॥

नानद्यतनवत्प्रतिषेधे लङ्लुटोः† प्रतिषेधो द्रष्टव्यः ।

प्र०—कूपसत्त्वं प्रति भेदकत्वेनाश्रयणात्तस्यापि तत्कालत्वमित्यर्थः । तदुक्तं हरिणा—

'सतामिन्द्रियसंबन्धात्सैव सत्ता विशिष्यते ।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥
अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते ।
यः समासादनाद्भेदः स तत्र न विवक्षितः ॥' इति ।

नानद्यतन । तत्र लङ्विधिप्रसङ्ग इति । अपूर्वविधानेऽद्यतने लटो दृष्टत्वाद्भूतभविष्यदनद्यतने प्रसङ्गः । लुङ्लृटोश्चेति । ननु वत्करणात्सादृश्यार्थात्संकरो न भविष्यति । नैतदस्ति ।

उ०—मिति भावः । इन्द्रियव्यापारः—तत्प्राप्तिः । इन्द्रियपदेनाऽत्र कर्मेन्द्रियम् । सतां वस्तूनामिन्द्रियसम्बन्धात्—तत्कृतप्राप्तिसंबन्धादेकैव सत्ता कालभेदमापद्यते । वस्त्वन्तरम् । इन्द्रियव्यापारः । तदेवाह—यः समासादनादिति । तत्र—बुद्धिकर्मव्यवसायविषये । वर्त्तमानेति । वर्त्तमानार्थिकेत्यर्थः ॥ १३३ ॥

नाऽनद्यतन । अपूर्वेति । अनद्यतनशब्दोपादानेन कस्याऽपि विध्यभावात्तत्र दृष्टत्वमात्रेणाऽतिदेशो वाच्यः । तथा च भूतादिरूपेऽद्यतने लङपि स्यादिति भावः । भाष्ये—लुङ्लृटोरिति । भविष्यत्यद्यतने

१—'इदं क्वचिन्न' । २—वर्तमाना=अद्यतनी इत्यर्थः ।

† अनद्यतने लङ् ३ । २ । १११; अनद्यतने लुट् ३ । ३ । १५

**अद्यतनवद्वचने हि विधानम् ॥ २ ॥**

अद्यतनवद्वचने हि सति विधिरयं विज्ञायेत ॥ तत्र को दोषः ?

**तत्र लड्विधिप्रसङ्गः ॥ ३ ॥**

तत्र लड्विधिः प्रसज्येत ।

**लुङ्लृटोश्चाऽयथाकालम् ॥ ४ ॥**

लुङ्लृटोश्चाऽयथाकालं प्रयोगः प्रसज्येत । लुङोऽपि विषये लृट् स्यात्, लृटश्च विषये लुङ् स्यात् ॥ अद्य पुनरयं द्वौ प्रतिषेधावुक्त्वा तूष्णीमास्ते यथाप्राप्तमेवाद्यतने भविष्यतीति‡ ॥ १३५ ॥

## भविष्यति मर्यादावचनेऽवरस्मिन् ॥ ३ । ३ । १३६ ॥

किमर्थमिदमुच्यते न 'नानद्यतनव'दित्येव× सिद्धम् ?

**भविष्यतिमर्यादावचनेऽवरस्मिन्नित्यक्रियाप्रबन्धार्थम् ॥ १ ॥**

अक्रियाप्रबन्धार्थोऽयमारम्भः ॥ किमुच्यतेऽक्रियाप्रबन्धार्थ इति, न पुनः क्रियाप्रबन्धार्थोऽपि स्यात् ।

प्र०—अप्राप्तप्रापणार्थत्वादतिदेशस्य भूतभविष्यच्छब्दोपादानेन लुङ्लृटोर्विधानेऽप्यद्यतने दृष्टत्वमात्रेणाऽयथाकालमपि प्रसङ्ग उच्यते । वत्करणं तु तदाविस्पष्टार्थमेव स्यात् । प्रतिषेधोपादाने तु वत्करणमनद्यतनविशेषविहितानामपि प्रतिषेधार्थम् । अन्यथा वत्करणमनर्थकं स्यात्, नानद्यतन इत्येव ब्रूयात् । तेन 'परोक्षे लिट्' 'हशश्वतोर्लङ् च' 'लट् स्मे' 'पुरि लुङ् चास्मे' इत्येतत्सूत्रविहिता अपि प्रत्ययाः प्रतिषिध्यन्ते ॥ १३५ ॥

भविष्यति । अक्रियाप्रबन्धार्थमिति । एतच्चोपलक्षणं, तेन असामीप्यार्थं चेति द्रष्टव्यम् ।

उ०—लुङ्, भूताद्यतने लृट् स्यादिति भावः । अप्राप्तेति । लुङ्लृटौ भूतभविष्यतोरद्यतने दृष्टौ, तत्राऽद्यतनवदित्युच्यमाने तस्मिन्नेवाऽद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदंशस्त्याज्यः । तत्राऽद्यतनांऽशत्यागेनाऽतिदेशे भूताऽनद्यतने लङ्, भविष्यति तत्र लृडिति प्रयोगसिद्धावपि'अद्यतनव'दिति विरुध्येत । तस्माद्भूतांशपरित्यागेनाऽतिदेशे आश्रीयमाणे यथाकालप्रसङ्ग इति भावः । भाष्ये—यथाप्राप्तमेवेति । स्वैरेव विधायकैः स्वेषु स्वेषु कालेषु भवन्तीति न संकरप्रसङ्ग इत्यर्थः । तेन परोक्षे इति । परन्त्वत्र मानं चिन्त्यम्, भाष्ये लुङ्लुटोरेवोपक्रमे उक्तेरिति दिक् ॥ १३५ ॥

भविष्यति । उत्तरसूत्रे सप्रयोजनमेतदिति पाठः । भाष्ये त्रिंशद्रात्र इति । 'संख्यापूर्वं रात्रं क्लीब'

‡ लुङ् ३ । २ । ११०; लृट् शेषे च ३ । ३ । १३

× नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ३ । ३ । १३५

**क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्यम् ॥ २ ॥**

क्रियाप्रबन्धार्थमिति चेद् वचनमनर्थकम् । सिद्धं क्रियाप्रबन्धे पूर्वेणैव ।

इदं तर्हि प्रयोजनम्—'अनहोरात्राणा'मिति वक्ष्यामीति+ । इह मा भूत्—'योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरः पञ्चदशरात्र' इति ।

**अहोरात्रप्रतिषेधार्थमिति चेन्नाऽनिष्टत्वात् ॥ ३ ॥**

अहोरात्रप्रतिषेधार्थमिति चेतन्न । किं कारणम् ? 'अनिष्टत्वात्' । अत्रापि-नानद्यतनव'दित्येवेष्यते ।

इदं तर्हि प्रयोजनम्–भविष्यतीति वक्ष्यामीति । इह मा भूत्,—'योऽयमध्वा गत आ पाटलिपुत्रात्तस्य यदवरं साकेता'दिति । 'नानिष्टत्वात्' । अत्रापि 'नानद्यतन-व'दित्येवेष्यते ॥ इदं तर्हि प्रयोजनम्–मर्यादावचन इति वक्ष्यामीति । इह मा भूत्–'योयमध्वाऽपरिमाणो गन्तव्यस्तस्य यदवरं साकेता'दिति । 'नानिष्टत्वात्' । अत्रापि नानद्यतनवदित्येवेष्यते ॥ इदं तर्हि प्रयोजनम्—अवरस्मिन्निति वक्ष्यामीति । इह मा भूत्,—'योऽयमध्वाऽऽपाटलिपुत्राद्गन्तव्यस्तस्य यत्परं साकेता'दिति । 'नानिष्ट-त्वात्' । अत्रापि नानद्यतनवदित्येवेष्यते ॥ तस्मात्सुष्ठूच्यते 'भविष्यति मर्यादावचनेऽ-वरस्मिन्नित्यक्रियाप्रबन्धार्थं, क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्य'मिति ॥ १३६ ॥

प्र०—वचनसामर्थ्याच्च क्रियाप्रबन्धसामीप्ययोरिति निवृत्तम् । अनहोरात्राणामिति । उत्तरसूत्रस्य प्रयोजनमेतत्स्यादिति भावः । अनिष्टत्वादिति । क्रियाप्रबन्धसामीप्ययोरहोरात्रविभागेऽप्यनद्यतने प्रतिषेध इष्यत इत्यर्थः । मर्यादावचन इति । नियमार्थमेतत् स्यान्मर्यादावचन एवेति भावः । अत्रापीति । विधिनियमसंभवे विधेर्ज्यायस्त्वात् ॥ १३६ ॥

उ०—मिति स्वस्मादेव भाष्यप्रयोगात्, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'त्युक्तेश्चाऽनित्यमिति भावः । भाष्ये—योऽयमध्वापरिमाण इति । 'अपरिमाण' इति च्छेदः । नियमार्थमिति । क्रियाप्रबन्धविषय इति भावः । विधीति । अक्रियाप्रबन्धादाविति भावः ॥ १३६ ॥

+ कालविभागे चानहोरात्राणाम् ३ । ३ । १३७     १—'साकेतमयोध्याया'मिति यादवः ।

## कालविभागे चाऽनहोरात्राणाम् ॥ ३ । ३ । १३७ ॥

### अनहोरात्राणामिति तद्विभागे प्रतिषेधः ॥ १ ॥

अनहोत्राणामिति तद्विभागे प्रतिषेधो वक्तव्यः[1]। योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरोऽर्धमास' इति ।

### तैश्च विभागे ॥ २ ॥

तैश्च विभागे[2] इति वक्तव्यम् । 'योयं मास आगामी तस्य योऽवरः पञ्चदशरात्र' इति ॥ द्वेष्यं[3] विजानीयात्,—'अहोरात्राणामेवाहोरात्रैर्विभागे प्रतिषेधो भवती'ति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे 'अनहोरात्राणामिति तेषां विभागे तैश्च विभाग' इति ॥ १३७ ॥

## परस्मिन्विभाषा ॥ ३ । ३ । १३८ ॥

कस्मिन्परस्मिन् ? कालविभागे । कुत एतत् ? योगविभागकरणसामर्थ्यात्† ॥ १३८ ॥

प्र०—कालविभागे । तद्विभाग इति । अनहोरात्राणामिति संबन्धसामान्ये षष्ठी, न कर्मणि, नापि कर्तरि । तेन यदाऽहोरात्राणामन्येन कालेन विभागोऽन्यस्य वा अहोरात्रैरहोरात्राणां वाऽहोरात्रैः सर्वथा प्रतिषेध इत्यर्थः ॥ १३७ ॥

परस्मिन् । योगविभागकरणसामर्थ्यादिति । इह 'भविष्यति मर्यादावचनेऽवरस्मिन्ननहोरात्राणा'मित्येकयोगे कर्तव्ये पृथग्योगकरणं 'परस्मिन्विभाषे'त्यत्र कालविभागग्रहणसंबन्धार्थमेवेत्यर्थः ॥ १३८ ॥

उ०—कालविभागे चा । 'द्वन्द्वश्च प्राणी'त्यादिवदहोरात्राणामहोरात्रैर्विभागे एव स्यादतो वार्तिकमनहोरात्राणामिति । तद्व्याचष्टे—संबन्धसामान्ये इति ॥ १३७ ॥

परस्मिन्विभाषा । एकयोगेति । सामर्थ्यात्कालविभागविषय एव निषेधः, नहि देशविभागस्याऽहोरात्रैः सम्बन्धोऽस्तीति भावः । पृथग्योगेति । कालविभागग्रहणसामर्थ्याच्चेत्यपि बोध्यम् ॥ १३८ ॥

१—'चेत् तद्' पा० । २—'विभागे प्रतिषेधो वक्तव्यः' पा० ।
३—'तद् द्वेष्यं' पा० ।
† भविष्यति मर्यादावचनेऽवरस्मिन्; कालविभागे चाऽनहोरात्राणाम् ३ । ३ । १३६; १३७

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ ३ । ३ । १३६ ॥

साधनातिपत्तावित्यपि वक्तव्यम् । इहापि यथा स्यात्,—अभोक्ष्यत भवान् मांसेन यदि मत्समीप आसिष्यते'ति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नाऽन्तरेण साधनं क्रियायाः प्रवृत्तिरस्तीति साधनातिपत्तिश्चेत्क्रियातिपत्तिरपि भवति, तत्र 'क्रियातिपत्ता'वित्येव सिद्धम् ॥१३६॥

## भूते च ॥ ३ । ३ । १४० ॥

### भूते लृङुताप्यादिषु ॥ १ ॥

भूते लृङुताप्यादिषु‡ द्रष्टव्यः । उताध्यैष्यत । अप्यध्यैष्यत ॥ १४० ॥

## वोताप्योः ॥ ३ । ३ । १४१ ॥

### विभाषा गर्हाप्रभृतौ प्रागुताऽपिभ्याम् ॥ १ ॥

विभाषा गर्हाप्रभृतौ प्रागुतापिभ्यामिति × वक्तव्यम् ।

प्र०—लिङ्निमित्ते । साधनातिपत्ताविति । साधनं–मांसादि । तस्याऽतिपत्तौ क्रियानिष्पत्तावपि लृङ्भवतीति भावः । अभोक्ष्यतेति । मांसस्यात्राऽनिष्पत्तिः । भोजनक्रियायास्तु निष्पत्तिरेव । साधनातिपत्तिश्चेदिति । करणभेदाद्भिन्नैव भोजनक्रिया । तेन मांसातिपत्तौ मांसभोजनक्रियाऽतिपत्तिरेवेत्यर्थः ॥ १३६ ॥

भूते च । भूत इति । वक्ष्यमाणसूत्रार्थपर्यालोचनलभ्यं चैतत् । 'उताप्यो'रित्यारभ्य यल्लिङ्निमित्तं तत्र भूते क्रियातिपत्तावनेन लृङ्प्रत्ययः, प्राक् ततो विकल्प इत्यर्थः ॥ १४० ॥

वोताप्योः । विभाषेति । 'गर्हायां लडपिजात्वो' रित्यनेन लड्विधानाल्लिङ्निमित्ताऽभावा- 'द्विभाषा कथमि लिङ् चे'त्यतः प्रभृति प्रा'गुताप्योः समर्थयो'रित्यतः सूत्राद्यल्लिङ्निमित्तं तत्र

उ०—लिङ्निमित्ते । कुतश्चिन्निमित्तात् क्रियाया अनिष्पत्तिः–क्रियाऽतिपत्तिः । साधनाऽतिपत्तिः–साधनविशेषविशिष्टक्रियाऽतिपत्तिरित्यर्थः ॥ १३६ ॥

भूते च । उताप्योः प्राग् 'वा'इत्यस्याऽधिकार इत्युक्त्याऽन्यस्य तदुत्तरमप्यधिकार इति लभ्यते, तदन्वाचष्टे इत्याह—वक्ष्यमाणेति । तत्रेति । तत्रापीत्यर्थः । लृङ्प्रत्यय इति । 'नित्य'मिति शेषः ॥१४०॥

वोताप्योः । भाष्ये विभाषा गर्हाप्रभृताविति । गर्हाविशिष्टप्रकृत्यर्थविषयविभाषापदघटित—

१–"साधनातिपत्तावपि" इति वार्तिकं निर्णयसागरीयसंस्करणे वर्तते ।

‡ उताप्योः समर्थयोर्लिङ् ३ । ३ । १५२

× विभाषा कथमि लिङ् च, शेषे लृडयदौ ३ । ३ । १४३—१५१

वोताप्यो'रिति ह्युच्यमाने सन्देहः स्यात्, प्राग्वोताऽपिभ्यां, सह वेति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे 'विभाषा गर्हाप्रभृतौ प्रागुताऽपिभ्या'मिति ॥ १४१ ॥

## गर्हायां लडपिजात्वोः ॥ ३ । ३ । १४२ ॥

### गर्हायां लड्विधानानर्थक्यं क्रियाऽसमाप्तिविवक्षितत्वात् ॥ १ ॥

गर्हायां लड्विधिरनर्थकः । किं कारणम् ? 'क्रियाऽसमाप्तिविवक्षितत्वात्' । क्रियाया अत्राऽसमाप्तिर्गम्यते[3] । एष च नाम न्याय्यो वर्तमानः कालो यत्र क्रियाऽपरिसमाप्ता भवति तत्र 'वर्तमाने लट्' [ ३ । २ । १२३ ] इत्येव सिद्धम् ।

यदि 'वर्तमाने ल'डित्येवमत्र लड्भवति शतृशानचावपि तर्हि प्राप्नुतः* । इष्येते च शतृशानचौ । अपि मां याजयन्तं पश्य । अपि मां याजयमानं पश्य ॥ १४२ ॥

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ ३ । ३ । १४५ ॥

### किंवृत्तस्यानधिकारादुत्तरत्राऽकिंवृत्तग्रहणानर्थक्यम् ॥ १ ॥

किंवृत्तस्यानधिकारादुत्तरत्राऽकिंवृत्तग्रहणमनर्थकम् । निवृत्तं 'किंवृत्ते'† इति, तस्मिन्निवृत्तेऽविशेषेण किंवृत्ते चाऽकिंवृत्ते च भविष्यति ।

प्र०—लृङ्विकल्पः । मर्यादायां ह्यत्राङ्, नाभिविधावित्यर्थः । गर्हाप्रभृताविति । गर्हादिविशिष्टे प्रकृत्यर्थ इत्यर्थः ॥ १४१ ॥

गर्हायाम् । इष्येते इति । तौ च सूत्रारम्भे सत्यवर्तमानकालविहितत्वाल्लटो न प्राप्नुत इति दोषवानेव सूत्रारम्भ इत्यर्थः ॥ १४२ ॥

अनव । इदं तर्हीति । 'अकिंवृत्त'शब्देन किंवृत्तादन्यत्पदं पर्युदासाश्रयणेन गृह्यते । तस्योपपदसंज्ञार्थमकिंवृत्तग्रहणं, तेन किंवृत्ताऽकिंवृत्तयोरुपपदसंज्ञा सिध्यतीति भावः । अतिङिति

उ०—'विभाषा कथमि लिङ् चे'ति सूत्रप्रभृतिष्वित्यर्थः । अनन्तरसूत्रत्यागे बीजमाह—गर्हायां लडपीति ॥ १४१ ॥

गर्हायां ल । अपि मां याजयन्त्वमिति । ताच्छील्यप्रतिपादनेन गर्हा । यदनेन क्रियते तत्सर्वं याजनार्थमिति सर्वदा याजयन्नेवाऽसाविति क्रियायाः समाप्तिरविवक्षितेति भावः ॥ १४२ ॥

अनवक्लृ । ननु किंवृत्ते नेत्यर्थात्कथमुपपदत्वमत आह—अकिंवृत्तेति । उपपदसंज्ञाया अन्यदाऽपि

१–'क्रियाऽसमाप्तेर्वि' पा० । २–'लड्विधानमनर्थकम्' पा० ।
३–'विवक्षिता' पा० । ४–'अपि तर्हि' क्वचिन्न ।
* लटः शतृशानचावप्रथमासमानाधिकरणे ३ । २ । १२४
† किंवृत्ते लिङ्लृटौ ३ । ३ । १४४

इदं तर्हि प्रयोजनम्,—उपपदसंज्ञां वक्ष्यामीति‡ । उपपदसंज्ञावचने किं प्रयोजनम् ? 'उपपदमतिङ्' [ २ । २ । १९ ] इति समासो यथा स्यात् । 'अति'ङिति प्रतिषेधः प्राप्नोति । यदा तर्हि लृटः सत्संज्ञौ तदोपपदसंज्ञा भविष्यति । भविष्यदधिकारविहितस्य लृटः सत्संज्ञावुच्येते ×, अविशेषविहितश्चायम् ॥ १४५ ॥

## जातुयदोर्लिङ् ॥ ३ । ३ । १४७ ॥

### जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानम् ॥ १ ॥

जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानं कर्तव्यम् । यदा भवद्विधः क्षत्रियं याजयेत् । यदि भवद्विधः क्षत्रियं याजयेत् ॥ १४७ ॥

## शेषे लृडयदौ ॥ ३ । ३ । १५१ ॥

### चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थाऽन्यत्वात् ॥ १ ॥

चित्रीकरणे यदि प्रतिषेधोऽनर्थकः । किं कारणम् ? 'अर्थान्यत्वात्' । नहि

प्र०—प्रतिषेध इति । न विद्यते तिङस्मिन् समासे सोऽतिङिति बहुव्रीहिसमासाश्रयणादिति भावः । उपपदसंज्ञेति । उपपदसंज्ञाकार्यं समास इत्यर्थः । भविष्यदधिकारविहितस्येति । 'लृटः सद्वे'-त्यत्र भविष्यतीत्यधिकाराद्भविष्यतीत्येवं विहितस्य 'लृट्शेषे चे'त्यस्य लृट आनन्तर्याद्वा शतृशानचौ । अविशेषेति । कालमात्रे विधानादयं लृड् यद्यपि भविष्यति भवति, तथापि भविष्यदधिकारविहितो न भवतीति शतृशानचावस्य न भवतः ॥ १४५ ॥

शेषे लृ । नहि यदाविति । 'आश्चर्यं यदि स भुञ्जीते'त्यत्र संभावनं तात्पर्येण प्रतीयत इति तन्निमित्त एव लिङ् भविष्यति । 'संभावनेऽलमिति चे'दित्यनेनेत्यर्थः । संभावने हि यदि-

उ०—भावात्तदा'भविष्यती'त्यनुपपन्नमत आह—उपपदसंज्ञाकार्यमिति ॥ १४५ ॥

शेषे लृड । सम्भावनं तात्पर्येणेति । 'यदि'शब्दस्य सम्भवनार्थत्वेन सम्भावनम्प्रतीयत इत्यर्थः । तदेवाह—सम्भावने हि यदिशब्द इति । भाष्ये—न हि यदाविति । चित्रीकरणन्त्वाश्चर्यपदगम्यम्, न

‡ तत्रोपपदं सप्तमीस्थम् ३ । १ । ९२ × लृटः सद्वा ३ । ३ । १४

यदावुपपदे चित्रीकरणं[1] गम्यते । किं तर्हि ? संभावनम्[2]+ ॥ १५१ ॥

## हेतुहेतुमतोर्लिङ् ॥ ३ । ३ । १५६ ॥

### हेतुहेतुमतोर्लिङ्वा ॥ १ ॥

हेतुहेतुमतोर्लिङ्वेति वक्तव्यम् । अनेन[3] चेद्यायान्न शकटं पर्याभवेत् । अनेन चेद्यास्यति न शकटं पर्याभविष्यति ।

### भविष्यदधिकारे ॥ २ ॥

भविष्यदधिकार इति वक्तव्यम् । इह मा भूत् । वर्षतीति धावति । हन्तीति पलायत इति[4] ॥ अथेदानीं शतृशानचावत्र कस्मान्न भवतः ?

देवत्रातो* गलो† ग्राह‡ इतियोगे च सद्विधिः§ ।
मिथस्ते न विभाष्यन्ते गवाक्षः× संशितव्रतः+ ॥ १५६ ॥

प्र०—शब्दः प्रयुज्यते ॥ १५१ ॥

हेतु । देवत्रात इति । व्यवस्थितविभाषाश्रयणादिति भावः । तेन देवत्रात इति संज्ञायां भवति, न तु देवत्राण इति । गलशब्दः प्राण्यङ्गे भवति न तु गर इति । विषे तु गर इति, न तु गल इति । जलचरे ग्राह एव, ज्योतिषि ग्रह एव । इतिशब्दप्रयोगे च सत्संज्ञो न प्रवर्तते । गवाक्ष इति । वातायने नित्यमेवावङ् भवति । संशितव्रत इति । व्रतविषये श्यतेर्नित्यमित्वं भवति । मिथ इति । परस्परेण देवत्राणादिभिरेकस्मिन्विषये न विकल्पन्त इत्यर्थः । एषु च 'नुदविदोन्दत्रे'ति वा नत्वम्, 'अचि विभाषे'ति लत्वं, 'विभाषाग्रह' इति णप्रत्ययः, 'लक्षणहेत्वोः क्रियाया' इति शतृशानचौ 'नन्वोर्विभाषे'त्यतो विभाषानुवर्तनाद्विकल्पितौ, 'अवङ्स्फोटायनस्ये'ति विभाषाऽवङ्, 'शाच्छोरन्यतरस्या'मित्येते विधयः ॥ १५६ ॥

उ०—स्कन्धो नाम पर्वतमारोढ्यतीत्यादावुदाहरण इव तत्समभिव्याहारं विनाऽपि गम्यमिति भावः ॥ १५१ ॥

हेतुहेतुमतोः । लक्षणहेत्वोरिति । क्रियाया लक्षणे हेतौ च कर्त्तमानाद्धातोः कर्त्तरि शत्रानावित्यर्थः सूत्रस्य । किञ्च लक्षणत्वादेस्तद्द्योत्यत्वेऽपि द्योतकसमुच्चयस्य दृष्टत्वादितिशब्देन तद्द्योतनेऽपिशत्रादिप्राप्तिरिति भावः ॥ १५६ ॥

---

१—'चित्रीकरणमाश्चर्यमद्भुतं विस्मयनीय'मिति काशिकावृत्तिः ३ । ३ । १५०

२—'संभावनं–क्रियासु योग्यताध्यवसानम्, शक्तिश्रद्धान'मिति काशिकावृत्ति ३ । ३ । १५४

"योग्यता सामर्थ्यम् ।.........ज्ञानं सम्भावनमुच्यते । तमेवार्थं पर्यायान्तरेण विस्पष्टीकर्तुमाह शक्तिश्रद्धानमिति । शक्तिः सामर्थ्यम् ।" इति न्यासकारः ।

+ संभावनेऽलमिति चेत् सिद्धाप्रयोगे ३ । ३ । १५४

३—'दक्षिणेन' पा० ।

४—'इति' क्वाचित्कः ।

* नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ८ । २ । ५६

† अचिविभाषा ८ । २ । २१

‡ विभाषा ग्रहः ३ । १ । १४३

§ लक्षणहेत्वोः क्रियायाः ३ । २ । १२६

× अवङ् स्फोटायनस्य ६ । १ । १२३

\+ शाच्छोरन्यतरस्याम् ७ । ४ । ४१

## इच्छार्थेषु लिङ्लिटौ ॥ ३ । ३ । १५७ ॥

### कामप्रवेदनं चेत् ॥ १ ॥

कामप्रवेदनं चेद्गम्यत इति वक्तव्यम् । इह मा भूत्,—इच्छन्कटं करोतीति[2] ॥ १५७ ॥

## विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥३।३।१६१॥

विध्यधीष्टयोः को विशेषः ? विधिर्नाम प्रेषणम् । अधीष्टं नाम सत्कारपूर्विका व्यापारणा ।

अथ निमन्त्रणामन्त्रणयोः को विशेषः ? संनिहितेन निमन्त्रणं भवत्यसंनिहितेनामन्त्रणम् । नैषोऽस्ति विशेषः । असंनिहितेनाऽपि निमन्त्रणं भवति, संनिहितेन चामन्त्रणम् । एवं तर्हि यन्नियोगतः कर्तव्यं तन्निमन्त्रणम् । किं पुनस्तत् ? हव्यं कव्यं वा । ब्राह्मणेन सिद्धं भुज्यतामित्युक्तेऽधर्मः प्रत्याख्यातुः । आमन्त्रणे कामचारः ।

प्र०—विधिनिमन्त्रणा । विध्यधीष्टयोरिति । उभयोरपि नियोगरूपत्वादिति प्रश्नः । प्रेषणमिति । भृत्यादेः कस्याश्चित् क्रियायां नियोजनमित्यर्थः । अधीष्टं नामेति । गुर्वादिस्तु पूज्यस्य व्यापारणमधीष्टमित्यर्थः । प्रपञ्चार्थं न्यायव्युत्पादनार्थं वाऽर्थभेदमाश्रित्य भेदेनोपादानं विधिनिमन्त्रणादीनां कृतम् । विधिरूपता हि सर्वत्रान्वयिनी विद्यते । संनिहितेनेति । धात्वर्थेनाऽऽसनादिना । यथेह भवानासीतेति सन्निहितमासनं, तदनुपरमार्थं च निमन्त्र्यते । असन्निहितेति । यथेह भवान् भुञ्जीतेति भोजनमसन्निहितं तदर्थमामन्त्र्यते । यन्नियोगत इति ।

उ०—इच्छार्थेषु । कामप्रवेदनमिति । प्रणोक्तुः स्वोऽभिप्रायाऽऽविष्करणमित्यर्थः ॥ १५७ ॥

विधिनि । नियोगेति । नियोगः—प्रवर्त्तना, प्रवर्त्तकनिष्ठः प्रवृत्त्यनुकूलो व्यापारः । एतदेव-प्रेषणम् । भाष्ये—व्यापारणेति । प्रवर्त्तनेत्यर्थः । एतेन नियोग इष्टसाधनताज्ञानमिति परास्तम् । 'हेतुमति चे'तिसूत्रस्थलिङादिणिचोः पर्यायत्वशङ्कापरभाष्यविरोधापत्तेश्चेत्याहुः । न्यायेति । शब्दशक्तिविषयेत्यर्थः । अयं भावः—निमन्त्रणादिशब्दानां प्रयोजकनिष्ठव्यापारवाचकत्वस्य सर्वसम्मततया विधिशब्दस्याऽपि प्रयोजकनिष्ठव्यापारवाचित्वं न त्विष्टसाधनत्वादिबोधकत्वमिति । स चाऽत्र प्रयुज्यमानलिङादिरूपः । स च प्रेरणात्वेन लिङ्शक्यः । प्रेरणात्वञ्चाऽखण्डोपाधिः । एकस्यैव रूपभेदेन वाच्यवाचकत्वे उपपद्येते । स च लोके पुरुषनिष्ठो. वेदे ईश्वरनिष्ठः । वेदस्याऽकर्तृकत्ववादिनां मते—शब्दनिष्ठः । शब्दरूपत्वाच्च स 'शाब्दी भावने'त्युच्यत इति मञ्जूषायां विस्तरः । विधिरूपतेति । प्रेरणेत्यर्थः । यन्नियोगतः कर्तव्यं श्राद्धादि, तस्य निमन्त्रणत्वाऽभावादाह—निमन्त्रणाविषयत्वादिति । भाष्ये—ब्राह्मणेनेति । 'सिद्धं हव्यं कव्यं वा

१—"इच्छार्थेषु लिङ्लोटौ कामप्रवेदनं चेत्" इति वार्तिकं क्वचित् । २—इति क्वचिन्न ।

कथं पुनरिदं विज्ञायते,—निमन्त्रणादीनामर्थ इति, आहोस्विन्निमन्त्रणादिषु गम्यमानेष्विति । कश्चात्र विशेषः ?

**निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वात् ॥ १ ॥**

'निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः'[1] । किं कारणम् ? 'प्रकृत्यभिहितत्वात्' । प्रकृत्याऽभिहितः सोऽर्थ इति कृत्वा प्रत्ययो न प्राप्नोति ।

**द्विवचनबहुवचनाऽप्रसिद्धिश्चैकार्थत्वात् ॥ २ ॥**

द्विवचनबहुवचनयोश्चाऽप्रसिद्धिः । किं कारणम् ? 'एकार्थत्वात्' । एकोऽयमर्थो निमन्त्रणं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति ।

प्र०—अवश्यकर्तव्यं नित्यं नैमित्तकं च । तन्निमन्त्रणमिति । निमन्त्रणविषयत्वात्तदेव निमन्त्रणम् । अधर्म इति । यदाऽन्यो ब्राह्मणो भोक्ता न लभ्यते तदा दौहित्रादिर्भोजयितव्यः, तस्य च प्रत्याख्यानेऽधर्म इति स्मार्तः समाचारः । आमन्त्रण इति । काम्यकर्मणि कामनया प्रवृत्तिर्नाऽन्यथा । कथमिति । किमिह विध्यादयः प्रत्ययस्याभिधेयत्वेन निर्दिष्टाः, उत विषयभावेनेति प्रश्नः । निमन्त्रणादीनामिति । आदिशब्दस्य प्रकारार्थत्वाद्विधिरपि गृह्यते । प्रकृत्यभिहितत्वादिति । प्रकृत्या योऽर्थो नाभिधीयते तत्रैव प्रत्ययेन भाव्यं, न तु प्रकृत्यभिहितेऽर्थे, 'उक्तार्थानामप्रयोग' इति न्यायात् । विषयपक्षाश्रये तु प्रकृत्यभिहितेष्वपि विध्यादिषु तत्सत्तामात्राश्रयः प्रत्ययः सिध्यति । द्विवचनेति । नाऽप्राप्तेषु कर्त्रादिषु विध्यादयोऽर्था निर्दिश्यमानास्तेषां बाधकाः प्रसज-

उ०—भुज्यता'मिति ब्राह्मणेनोक्ते अर्थाद्ब्राह्मणं प्रति, तत्र प्रत्याख्यातुर्ब्राह्मणस्याऽधर्म इत्यर्थः । 'ब्राह्मणेने'-त्युक्तेरन्यदीयनिमन्त्रणप्रत्याख्याने ब्राह्मणकृतेऽपि हव्यकव्याऽतिरिक्तविषयाऽऽमन्त्रणे प्रत्याख्याते नाऽधर्म इति लभ्यते । 'यदाऽन्य' इत्यादिव्याख्याने कैयटकृते बीजं, भाष्याऽनुग्रहश्च चिन्त्यः । सामान्यत एव ब्राह्मणस्य श्राद्धादिनिमन्त्रणप्रत्याख्यानेऽधर्मः स्मृतिष्वपि स्मर्यत इति बोध्यम् । काम्यकर्मणीति । यत्र भोजनाद्यननुष्ठानेऽपि न प्रत्यवायस्तद्विषया प्रवर्तना—आमन्त्रणमिति तात्पर्यम् । उत विषयेति । लिङादयस्तु द्योतका इति भावः । विध्यादीनामर्थे इति वक्तमुचितमत आह—आदिशब्दस्येति । 'प्रेरयै भवन्त'मित्यादि तदुदाहरणं बोध्यम् । निमन्त्रणादीनामिति भाष्यस्य,—निमन्त्रणादिपदानामित्यर्थः । भाष्ये—निमन्त्रयै इत्याद्युपलक्षणं,—'निमन्त्रये'दित्यादेरपि । ननु निमन्त्रणस्यैकत्वेऽपि कर्त्रादिसङ्ख्याश्रये दिवचनबहुवचने भविष्यत इत्यत आह—नाऽप्राप्तेष्विति । एवञ्च कर्त्राद्यप्रतीत्यापत्तिरपि दूषणान्तरं बोध्यम् । कर्त्रादिगतायाः

१—'प्रत्ययो नोपपद्यते' पा०

अस्तु तर्हि 'निमन्त्रणादिषु गम्यमाने'ष्विति । इहापि तर्हि प्राप्नोति—'देवदत्तो भवन्तमामन्त्रयते,' 'देवदत्तो भवन्तं निमन्त्रयत' इति ।

**सिद्धं तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? द्वितीयाकाङ्क्षस्य धातोः प्रकृते प्रत्ययार्थे प्रत्ययो भवतीति वक्तव्यम् । के च[1] प्रकृता अर्थाः ? भावकर्मकर्तारः† ।

[ एवमपि[2] ] भवेत्सिद्धं—'प्राप्नोतु भवानामन्त्रणम्,' 'अनुभवतु भवानामन्त्रण'मिति यत्र द्वितीय आकाङ्क्ष्यते । इदं तु न सिध्यति—'आमन्त्रयै निमन्त्रया'

प्र०—न्तीति कर्त्रादिगतायाः संख्याया अभिधानं न प्राप्नोतीति भावः। सिद्धंत्विति। द्वितीयं विध्यादिकमर्थं यदा धात्वर्थ आकाङ्क्षति तदा लिङ प्रत्ययः । यदा च धात्वर्थे संपाद्ये नियोज्यो नियुज्यते तदा द्वितीयाकाङ्क्षित्वम् । इह तु 'देवदत्तो भवन्तमामन्त्रयते' इति नास्ति धात्वर्थस्य द्वितीयाकाङ्क्षित्वमिति लिङ् न भवति । प्राप्नोत्विति । धात्वर्थस्य प्राप्त्यादेर्भिन्नमामन्त्रणं प्रत्याकाङ्क्षा विद्यत इति भावः । आमन्त्रयै इति । आमन्त्रणस्य धात्वर्थत्वात्तस्य चैकत्वाद्भेदपूर्विकाया

उ०—सङ्ख्याया इति । 'क्रियायामारोपिताया' इति शेषः । वस्तुतः प्रवर्त्तकनिष्ठप्रेरणायाः प्रयोज्यकर्तृकत्वाऽभावात्तद्गतसङ्ख्याऽऽरोपे न मानं, वाच्यत्वे च तस्या एव विशेष्यत्वं, सा चैकैवेति द्विवचनाद्यनापत्तिः । धात्वर्थस्य कर्तृद्वित्वादिना द्वित्वादावपि तस्य विशेषणत्वान्न द्विवचनादिनियामकता । कर्त्रादिबाधस्तु न युक्त इत्यग्रे स्फुटं भविष्यति । अत एव भाष्ये द्विवचनाद्यसिद्धावेकार्थत्वादित्येव हेतुरुक्तः । विवृतञ्चैकोऽयमर्थो निमन्त्रणं नाम तस्यैकत्वादिति । अनेकविषयकमपि निमन्त्रणमेकमेवेति तदर्थः । एतेन विशेष्यगतसङ्ख्यैकवचनादिबोध्येति सूचितम् । अत एवाऽत्र पक्षे भावकर्त्रादीनां बोधाऽनापत्तिरिति दूषणं नोक्तम् । भाष्ये—इहाऽपि प्राप्नोतीति । लडादयस्तेभ्यो न स्युः, अनेन लिङा बाधितत्वादिति भावः । द्योतकतापक्षीयं दूषणमुद्धर्त्तुमाह—सिद्धन्त्विति । द्वितीयाकाङ्क्षधातोः प्रकृते प्रत्ययार्थे कर्त्रादौ लिङित्यर्थः । कर्त्रादीनामपि द्योत्यत्वमितिपक्षे 'प्रत्ययार्थे' इत्यस्य प्रत्ययद्योत्ये इत्यर्थः । नन्वेवं 'पश्य मृगो धावती'त्यादावपि लिङ् स्यादत आह—द्वितीयं विध्यादिकमिति । द्वितीयशब्देन विध्यादिरेव गृह्यत इति भावः । नियोज्यः—प्रेर्यः । नियुज्यते—प्रेर्यते । प्रेरणाविषयधात्वर्थे यदा धातोर्लक्षणा तदा प्रकृतेऽर्थे प्रत्यय इति भावः । प्रकृते प्रत्ययार्थं इत्यनेनाऽऽमन्त्रणादीनामर्थे इति पक्षेऽपि तदत्यागः सूचितः, विरोधाऽभावात् । 'कर्त्रादयो द्योत्या' इति पक्षस्य 'स्नुक्रमोः'इति सूत्रस्थभाष्यसम्मततया बाधे मानाऽभावाच्च । अत एव वाचकत्वपक्षे द्विवचनाद्यसिद्धिवत्तिबाद्यसिद्धिर्नोक्ता । भावकर्मकर्त्रर्थकलस्यैवात्मनेपदपरस्मैपदविभागेन तद्विधानात् । युष्मदस्मच्छ्लेषसामानाधिकरण्याऽभावेन प्रथमपुरुषाद्यसिद्धिर्नोक्ता, अनियमश्च नोक्त इति दिक् । भिन्नमामन्त्रणम्प्रतीति । धात्वर्थाऽतिरिक्तं प्रेरणारूपव्यापारं प्रतीत्यर्थः । 'प्राप्नोतु भवा'नित्यादेः—अङ्गीकरोतु भवान् । आमन्त्रणाऽङ्गीकारविषया प्रेरणेत्यर्थः । ननु 'पाकं पचतीतिवत् प्रवर्त्तनाविशेषरूपाऽऽमन्त्रणस्यापि तद्विशेषामन्त्र-

1—'के पुनः प्रकृता' पा० ।

† लः कर्मणि च भावे चाऽकर्मकेभ्यः ३ । ४ । ६९

2—क्वचिन्न ।

इति । अत्रापि द्वितीय आकाङ्क्ष्यते । कः ? निमन्त्रिरेव । आमन्त्रयै आमन्त्रणम् निमन्त्रयै निमन्त्रणमिति । कथं पुनर्निमन्त्रिर्नाम निमन्त्रणमाकाङ्क्षेत् ? दृष्टश्च भावेन भावयोगः । तद्यथा, इषिरिषिणा युज्यते स्त्रीत्वं च स्त्रीत्वेन ।

यावता [ चा ]ऽत्रापि द्वितीय आकाङ्क्ष्यतेऽस्तु तर्हि निमन्त्रणादीनामर्थ इति । ननु चोक्तं 'निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुनुपपत्तिः प्रकृत्यभिहितत्वा'दिति । नैष दोषः । योऽसौ द्वितीय आकाङ्क्ष्यते स एव मम प्रत्ययार्थो भविष्यति ।

अयं तर्हि दोषो 'द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वा'दिति । नैष दोषः[1] ।

प्र०—आकाङ्क्षाया आमन्त्रणं प्रत्यभाव इति भावः । निमन्त्रयै निमन्त्रणमिति । प्रकृतिवाच्यं निमन्त्रणं विशिष्टकर्मकमन्यत्, तद्विषयं त्ववश्यकर्तव्यतालक्षणं निमन्त्रणमन्यदिति भिन्नत्वादस्त्येव द्वितीयाकाङ्क्षित्वम् । तदयमर्थः,—त्वत्कर्मकं भोजनादिषु निमन्त्रणं ममानुष्ठेयम्, ततो भोजनादिषु त्वां निमन्त्रयै इति । अत्र चामन्त्रयै आमन्त्रणं निमन्त्रयै निमन्त्रणमिति, प्रकृत्यर्थव्यतिरिक्तामन्त्रणसद्भावप्रदर्शनायाऽऽमन्त्रणनिमन्त्रणशब्दौ प्रयुक्तौ, नत्वयं लौकिकः प्रयोगः, लोटैव प्रकृत्यर्थव्यतिरिक्तस्यामन्त्रणादेर्गमितत्वात् । तदयमर्थः,—आमन्त्रयै आमन्त्रणमिति,–आमन्त्रयै इत्यत्र लोटि प्रयुज्यमाने आमन्त्रणं धात्वर्थविषयमाकाङ्क्ष्यमाणमस्ति । इषिरिति । एषितुमिच्छतीति कालसाधनभेदादिच्छयोर्भेदाश्रयो योगः । स्त्रीत्वमिति । 'कुमारी'त्यादौ स्त्रीत्वं द्रव्यस्य

उ०—णान्तरविषयाऽऽकाङ्क्षेत्यत आह–भेदपूर्विकाया इति । तत्र सामान्यविशेषतयाऽभेदान्वयो न तु तथा प्रकृते इति भावः । आमन्त्रणम्प्रतीति । धात्वर्थव्यापाराऽतिरेकेण प्रेरणाम्प्रतीत्यर्थः । अत्रेदं तत्त्वं—स्वविषया प्रेरणा तु नाऽत्र प्रत्ययार्थः, स्वेच्छयैव तत्प्रवृत्तिसिद्धेः । प्रवृत्तेः स्वप्रवृत्तेः स्वप्रेरणाऽनपेक्षत्वेन तस्यास्तदर्थत्वाऽभावात् । इदमेवाऽभिप्रेत्य—'उत्तमपुरुषो विधिशक्तिप्रतिबन्धक' इतिन्यायविदः । अत एव भगवतोत्तमपुरुषविषये एव शङ्कितम् । विशिष्टकर्मकमिति । संबोध्यकर्मकमित्यर्थः । अवश्यकर्तव्यतालक्षणम्—अवश्यानुष्ठेयत्वलक्षणम् । ततो भोजनादिष्विति । तद्बोधनार्थं च 'निमन्त्रयै' इत्यादिप्रयोग इति भावः । नन्वेवं 'निमन्त्रयै निमन्त्रण'मित्यादौ निमन्त्रणादिपदप्रयोगोऽयुक्तः, लोटैव तदर्थप्रत्यायनादत आह—नत्वयं लौकिक इत्यादि । धातूनामनेकार्थत्वात्—निमन्त्रणामन्त्रणशब्दावर्हत्वार्थकौ । अर्हत्वञ्चाऽवश्यकर्त्तव्यतालक्षणं कैयटोक्तम् । एवञ्च 'अर्हे कृत्यतृचश्च'त्यनेन लिङ्लोटावुत्तमपुरुषविषये इत्युक्तं भवतीति बोध्यम् । भाष्ये—कथं पुनरिति । धर्मिणो हि धर्माऽऽकाङ्क्षा न तु धर्मस्येति प्रश्नः । स्त्रीत्वञ्च स्त्रीत्वेनेत्यस्य स्त्रीताशब्द उदाहरणम् । प्रवर्तनाविषय एककर्तृकः पाक इति बोधः । 'अहं पाचयेय'मित्यादौ पाकप्रवर्त्तनाऽवश्याऽनुष्ठेयेति बोधः । भाष्ये—यावता चाऽत्रेति । यद्यत्रेत्यर्थः । बहुवचनेति । अत एव सर्वलकारान्ते 'लः कर्मणी'त्यकारि । इदञ्चिन्त्यम् । 'एतावांश्च ल' इति तत्सूत्रस्थभाष्यस्वग्रन्थाभ्यां 'ल'

१—'एषोऽप्यदोषः' पा० ।

**सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम् ।**

सुपां सङ्ख्या चैवार्थः कर्मादयश्च ।

**प्रसिद्धो नियमस्तत्र**

प्रसिद्धस्तत्र नियमः ।

**नियमः प्रकृतेषु वा ॥**

अथवा प्रकृतानर्थानपेक्ष्य नियमः । के च प्रकृताः ? एकत्वादयः । 'एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु' । 'द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु' । 'बहुष्वेव बहुवचनं नैकस्मिन्न द्वयो'रिति ॥ १६१ ॥

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ ३ । ३ । १६३ ॥

किमर्थं प्रैषादिष्वर्थेषु कृत्या विधीयन्ते, नाऽविशेषेण विहिताः† कृत्यास्ते प्रैषादिषु भविष्यन्त्यन्यत्र च ? प्रैषादिषु कृत्यानां वचनं नियमार्थम् । नियमार्थोऽयमारम्भः । 'प्रैषादिष्वेव कृत्या यथा स्यु'रिति ।

**प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टम् ॥ १ ॥**

---

प्र०—विशेषणं, यदा तु तदेव प्राधान्येनाश्रीयते तदा तस्य स्त्रीत्वादिना योगः,—स्त्रीत्वं स्त्रीतेति । स एव ममेति । 'निमन्त्रये भवन्त'मित्यवश्यकर्तव्यं भवतो भोजनादिषु मया निमन्त्रणमिति निमन्त्रणस्यावश्यकर्तव्यतालक्षणं निमन्त्रणमिति प्रकृतिप्रत्ययार्थयोर्भेद इत्यर्थः । सुपामिति । विध्यादिभिर्विरोधाऽभावा'ल्लः कर्मणि चे'त्यत्र बहुवचननिर्देशात्सर्वलकारसङ्ग्रहार्थाद्वा उभयानुग्रहाच्च कर्त्रादयो न बाध्यन्त इति कर्तृकर्मगतद्वित्वबहुत्वनिबन्धनानि द्विवचनबहुवचनानि भवन्तीत्यर्थः ॥ १६१ ॥

प्रैषाति । बुसोपेन्ध्यमिति । अग्निस्तोकं बुसेन ज्वलनीयमिति वस्तुस्वरूपकथनं, न तु

---

उ०—इत्यस्यैकवचनान्तताया एव लाभात् । 'सुपां कर्मादय' इत्यस्याऽयम्भावः—धात्वर्थक्रियाया इव प्रेरणायाः स्वत एकत्वेऽपि प्रेर्यगतसङ्ख्यायाः स्वनिष्ठधात्वर्थे इव स्वविषयकप्रेरणायामप्यारोपाद्द्विवचनादीति । वस्तुतो 'यावता चाऽन्ने'त्यादिग्रन्थ एकदेशिनः । एतेन 'प्रत्ययार्थे व्यापारे सङ्ख्यान्वयेऽपि प्रत्ययानाम् प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिभङ्ग' इत्यपास्तम्, एकदेशयुक्तित्वेनाऽसत्तेः । नन्वेवमपि नियमेन न स्यादधिकार्थस्याऽपि मानादत आह—प्रसिद्ध इत्यादि । तत्र—अर्थे । अत्र द्योतकतापक्षो युक्तः, उक्तयुक्तेः 'पचे'त्यादावपि तत्प्रतीतेश्च, सङ्ख्याकालकारकाणामिवाऽस्या अपि द्योत्यताया एवौचित्याच्च । एवञ्च 'प्रवर्तनाविषयः पाकः' इत्येव बोध इति बोध्यम् ॥ १६१ ॥

---

† तयोरेव कृत्यक्तखलर्थाः ३ । ४ । ७०　　१–'विधान' पा० ।

२–क्वचिदिदं वार्तिकत्वेन पठ्यते ।

प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टं प्राप्नोति । न हि प्रैषादिष्वेवं कृत्या इष्यन्ते । किं तर्हि ? अविशेषेणेष्यन्ते । बुसोपेन्ध्यम् तृणोपेन्ध्यम् घनघात्यम् ।

**विध्यर्थं तु स्त्रियाः प्रागिति वचनात् ॥ २ ॥**

विध्यर्थं तु कृत्यानां वचनम् । अयं प्रैषादिष्वर्थेषु लोँड् विधीयते स विशेषविहितः सामान्यविहितान्कृत्यान्बाधते । वासरूपेण कृत्या अपि भविष्यन्ति‡ । न स्युः । किं कारणम् ? 'स्त्रियाः प्रागिति वचनात्' । प्राक्स्त्रिया वाऽसरूपः × ॥ १६३ ॥

## कालसमयवेलासु तुमुन् ॥ ३ । ३ । १६७ ॥

प्रथमान्तेष्विति वक्तव्यम् । किं प्रयोजनम् ? इह मा भूत्,—काले भुङ्क्ते । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । प्रैषादिष्विति† वर्तते । तच्चावश्यं प्रैषादिग्रहणमनुवर्त्यम् । प्रथमान्तेष्विति ह्यु‌च्यमान इहाऽपि प्रसज्येत—

'कालः पचति भूतानि कालः संहरति प्रजाः'+ ॥ १३७ ॥

इति श्रीभगवत्पतञ्जलि विरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च तृतीयः समाप्तः ।

प्र०—प्रैषादिप्रतिपत्तिः । घनघात्यमिति । घनेन लोहादिना घात्यमिति, कठिनत्वादित्यर्थः ॥ १६३ ॥

इति श्रीमन्महामहोपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याऽध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च तृतीयः समाप्तः ।

उ०—प्रैषाऽति । भाष्ये—स्त्रियाः प्रागिति । इदमपि ज्ञापकं—'स्त्र्यधिकारादूर्ध्वं क्वचिद्वाऽसरूपविध्यभावस्येत्यर्थः ॥ १६३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते महाभाष्यप्रदीपोद्द्योते तृतीयाऽध्यायस्य तृतीयपादे द्वितीयमाह्निकम् । पादश्च तृतीयः समाप्तः ।

१—'प्रैषादिष्वर्थेष्वेव' पा० । ‡ वाऽसरूपोऽस्त्रियाम् ३ । १ । ९४

× स्त्रियांक्तिन् ३ । ३ । ९४ † प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३ । ३ । १६३

+ 'कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः' ॥

इत्यस्योत्तरार्धंभागो ब्रह्माण्डपुराणे ३२ अध्याये द्रष्टव्यः ।

# धातुसम्बन्धे प्रत्ययाः ॥ ३ । ४ । १ ॥

प्रत्यय* इति वर्तमाने पुनः प्रत्ययग्रहणं किमर्थम् ? अधातुप्रत्ययानामपि धातुसंबन्धे साधुत्वं यथा स्यात् । गोमानासीत् गोमान्भवितेति† ।

इह पश्यामो—भूतकालो भविष्यत्कालेनाभिसंबध्यमानो भविष्यत्कालः संपद्यते । कस्मान्न भविष्यत्कालो भूतकालेनाऽभिसंबध्यमानो भूतकालः संपद्यते ?

प्र०—धातुसंबन्धे प्रत्ययाः । संबन्धस्य अनेकाधिष्ठानत्वात्सामर्थ्याद्वृत्तावपि सङ्ख्याविशेषो द्वित्वमवगम्यते । धात्वोः संबन्धो—धातुसंबन्धः । धात्वर्थश्चात्रोपचाराद्धातुशब्देनोच्यते । न हि स्वार्थे गुणीभूतयोर्धात्वोः परस्परेण संबन्ध उपपद्यते । धात्वर्थयोस्तु विशेषणविशेष्यभावलक्ष-संबन्धोपपत्तिः । तत्र धातुसंबन्धे कालान्तरविहितानां प्रत्ययानामन्यस्मिन् काले साधुत्वाभ्यनुज्ञानार्थमिदं सूत्रम् ।

प्रत्यय इति वर्तमान इति । यद्यपि स्वरूपपदार्थकः प्रत्ययशब्दः प्रकृतस्तथापीह संज्ञिनिर्देशाऽभावात्संज्ञिपदार्थको विज्ञास्यत इति भावः । अधातुप्रत्ययानामपीति । अन्यथा प्रकृतानामेव धातुप्रत्ययानां ग्रहणं स्यात् । प्रत्ययग्रहणात्तु सर्वप्रत्ययपरिग्रहार्थात्तद्धितानामपि कालभेदे साधुत्वं भवति । गोमानासीदिति । तदस्याऽस्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तेऽर्थे विहितः । धातुसंबन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्वेऽपि साधुर्भवति । इह पश्याम इति । 'अग्निष्टोमयाज्यस्य पुत्रो जनिते'ति कालभेदे साधुत्वाभ्यनुज्ञानाय सूत्रम् । तत्र विशेषानुपादानाद्यथा भूतकालपरित्यागेन जनितेत्येतत्संबन्धाण्णिनिर्भविष्यति काले भवति तथा जनितेति लुट्प्रत्ययो भविष्यत्कालत्यागेनाग्निष्टोमयाजीत्येतत्संबन्धाद्भूते कस्मान्न भवतीति प्रश्नः । यथा-

उ०—धातुसंबन्धे । धातोः सबन्ध इत्यर्थः । अव्यावर्त्तकमेतत्, धातोः कारकसंबन्धस्य कारकाणां वा धातुसंबन्धस्य सार्वत्रिकत्वात् । धात्वोः सबन्ध इत्यर्थे तु समासो दुरुपपादो, वृत्तौ सङ्ख्याविशेषस्याऽभावादत आह—संबन्धस्येति । द्वित्वमवगम्यत इति । वस्तुतो द्वित्वाऽबोधेऽपि धातुत्वेनैव धातुद्वयबोध इति बोध्यम् । गुणीभूतयोरिति । स्वार्थप्रतिपादनव्यग्रयोरित्यर्थः । नन्वर्थद्वारकसंबन्धो धात्वोरेवाश्रीयतां कर्मत्वसमानकर्तृकत्वादिवदिति चेन्न, 'गोमानासी'दित्यादौ प्रवृत्त्यनापत्तेः । न ह्यप्रयुज्यमानयोरर्थद्वारकोऽपि संबन्धो वक्तुं शक्य इति भावः । अर्थयोश्च कः संबन्ध इत्यत आह—विशेषणेति । स च प्रत्ययार्थद्वारको वाक्यार्थ इति बोध्यम् ।

अन्यस्मिन्काल इति । उपपदोपाधिप्रकृत्यर्थानान्तु न बाधः, 'वर्त्तमानसामीप्य' इत्यारभ्य कालाऽन्यत्वस्यैव प्रतिपादनादिति भावः । प्रकृतानामिति । प्रकरणादिति भावः । वर्त्तमानसत्तेति । न च 'तदस्याऽस्ती'त्यत्र सङ्ख्यावद्वर्त्तमानकालोऽप्यविवक्षित इति वाच्यं, 'दण्डिनमानये'त्युक्तेऽतीतदण्डस्याप्यानयनापत्तेः । इदञ्च तत्रैव भाष्येऽत्र च स्पष्टम् । भाष्ये—'भूतकाल' इत्यादयो बहुव्रीहयः । भाविव्यपदेशेति । भाविव्यवहारेत्यर्थः । अग्निष्टोमयाजीत्युत्तरम्—इति 'व्यवहरिष्यमाण' इति शेष इति भावः । यद्येतीति ।

* प्रत्ययः ३ । १ । १ † तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ९४

## धातुसबंन्धे प्रत्ययस्य यथाकालविधानात्सिद्धम् ॥ १ ॥

यथाकालविहिता एवैते प्रत्ययाः स्वेषु स्वेषु कालेषु प्रयुज्यन्ते ।

कथं तर्हि कालाऽन्यत्वं गम्यते ?

## उपपदस्य तु कालान्यत्वम् ॥ २ ॥

उपपदस्यैतत्कालान्यत्वम् ॥ कुतो नु खल्वेतत्,—अग्निष्टोमयाजीत्येतदुपपदं भविष्यति, न पुनर्जनितेति । एवं तर्हि—अस्त्यादिभिर्योगे । अस्त्यादिविषयाः प्रत्ययाः साधव इति वक्ष्यामि । के पुनरस्त्यादयः ? अस्तिभूजनयः ।

प्र०—कालविधानादिति । सूत्रप्रत्याख्यानेनोत्तरम् । 'अग्निष्टोमयाजी'ति भूत एव णिनिर्विधीयते 'जनिते'त्येतत्संबन्धात्तु भाविव्यपदेशप्रतिपत्तिः, यथास्य सूत्रस्य शाटकं वयेतीत्यर्थः । इतरोऽगृहीताभिप्राय आह—कथं तर्हीति । 'पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टे'त्यत्र यदि भूते णिनिर्विधीयते तदा यागस्य भविष्यत्ताऽवगमो न प्राप्नोतीति प्रश्नः । उपपदस्येति । भाविव्यपदेशविज्ञानाद्विशेषणस्य कालान्यत्वं वाक्यार्थवशादसत्यपि सूत्रारम्भे प्रतीयत इत्यर्थः । विशेष्याया आख्यातादिपदवाच्यायाः क्रियायाः प्राधान्यात् स्वकाल एवावस्थानं, विशेषणभूतायास्तु क्रियाया उपलक्षणभावेनोपादानाद्भाविभूतव्यपदेशविषयताप्रतिपादनात्कालान्यत्वागम इत्यर्थः । इतरो यथोक्तमभिप्रायमबुद्ध्वा समीपे श्रूयमाणमुपपदमित्यवगम्य चोदयति—कुत इति । ततश्चाग्निष्टोमयाज्यस्य पुत्रो जात इत्ययमपि वाक्यार्थः कस्मान्न भवतीति प्रश्नः । आचार्यदेशीय आह—एवं तर्हीति । धात्वधिकाराद्धातुग्रहणे सिद्धे धातुसंबन्ध इति पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थं, तेनास्तिभूजनिसंबन्ध एव प्रत्ययानां कालान्तरे साधुत्वमन्वाख्यायत इति सूत्रारम्भे सति विपर्ययो

उ०—'इत्यर्थः प्रतीयत' इति शेषः । भाविव्यपदेशादिति । भाविव्यवहारविषयादग्निष्टोमयाज्यादिपदादित्यर्थः । वाक्यार्थवशादिति । 'जनिते'त्येतत्समभिव्याहारात्तत्प्रतीतेस्तस्य वाक्यार्थत्वमित्यर्थः । व्यवहारस्य भविष्यत्त्वं विषयभविष्यत्त्वकृतमिति भावः । वैपरीत्यनिवारणाय मूलयुक्तिं दर्शयति—विशेष्याया इति । भाष्ये—'उपपदस्ये'त्यस्य गुणभूतस्येत्यर्थः । सूत्रारम्भे तु नाऽयं न्यायः । न्यायेन वचनसङ्कोचे मानाऽभावात् । धात्वोः संबन्धे ताभ्यां धातुभ्यां ये प्रत्ययास्तेऽन्यत्रापि काले भवन्तीति वाक्यार्थादित्याशयः ।

सूत्रारम्भे इति । तथा च सूत्रस्य 'धातोरस्त्यादेः संबन्धे सति धातोः प्रत्ययाः कालान्तरे' इत्यर्थ इति भावः । नन्वस्त्यादिप्रकृतिकत्वाऽभावात्कथं तद्विषयत्वमत आह—अस्त्यादिविशेषणायेति । पूर्वोक्ते नेति । गुणप्रधानभावरूपन्यायाश्रयणाऽभिप्रायेणेत्यर्थः । भाविशब्दस्येति । यदि यत्कालं भावितया व्यवहृतं तदासीदिति हि तदर्थ उचितः । न तु अतीतमासीदिति । तथा सति पर्यायत्वापत्तिरिति भावः । भाष्ये—इत्येतत्तस्मिन्निति । इत्येतत्पदं तस्मिन् भवितेत्यर्थः । एवं प्रत्याख्याते सूत्रे 'वसन्ददर्शे'त्यादौ वर्त्तमानत्व-

१—इदं वार्त्तिकमित्यन्ये ।

एवमपि यदाऽस्त्यादीनामेवाऽस्त्यादिभिर्योगस्तदा न ज्ञायते कः कस्य कालमनुवर्तत इति । भावि कृत्यमासीत् । पुत्रो जनिष्यमाण आसीत् ।

एवं तर्हि वाक्यमेवैतदेवंजातीयकं प्रयुज्यते । अग्निष्टोमयाजीत्येतत्तस्मिन्भविता । कस्मिन् ? योऽस्य पुत्रो जनिता । कदा ? यदाऽनेनाग्निष्टोमेनेष्टं भवति ॥ १ ॥

## क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः ॥ ३ । ४ । २ ॥

### हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थम् ॥ १ ॥

हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्, हिः परस्मैपदानां यथा स्यात्, स्व आत्मनेपदानामिति । किं प्रयोजनम् ? 'लादेशप्रतिषेधार्थम्' । लादेशौ हिस्वौ मा भूतामिति । किं च स्याद्यदि लादेशौ हिस्वौ स्याताम् ? 'तिङन्तं पद'मिति* पदसंज्ञा न स्यात् ॥ मा भूदेवम् । 'सुबन्तं पद'मिति पदसंज्ञा भविष्यति । कथं स्वाद्युत्पत्तिः ?

प्र०—न भवतीत्यर्थः । अस्त्यादिविषया इति । अस्त्यादिविशेषणाय प्रयुक्ता इत्यर्थः । आचार्यः पूर्वोक्तेनाभिप्रायेण सूत्रप्रत्याख्यानेनैव वाक्यार्थं स्थापयति—एवं तर्हीति । अवश्यं च स्वकाल एव प्रत्ययविधिरेष्टव्य । 'भावि कृत्यमासीदि'त्यत्र भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद्युगपत्प्रयोगो न स्यात् ॥ १ ॥

क्रियासम । हिस्वयोरिति । सामान्यविहितानां तिङां शतृशानज्भ्यामिव हिस्वाभ्यां बाधः प्राप्नोतीति स्थानिनिर्देशार्थं परस्मैपदात्मनेपदग्रहणं कर्तव्यमित्यर्थः । लकारः कृदिति । तत्र स्थानिवद्भावाद्धिस्वयोरपि कृत्त्वे तदन्तस्य प्रातिपदिकत्वात् स्वाद्युत्पत्तिर्भवतीत्यर्थः ।

उ०—मारोप्य शता । तत्फलं तु तत्समानकालत्वस्य दर्शने लाभः, शतृस्थले क्रिययोः समानकालत्वप्रतीतेः । यद्वा दर्शनकालिकं वासस्य वर्त्तमानत्वमाश्रित्य प्रत्ययः । एवमेव 'ननु चोत्पततैवं वचनलोपं चोदिताः स्म' इति सरूपसूत्रस्थभाष्यप्रयोगोपपत्तिः । 'गोमानासी'दित्यत्र देवदत्तस्य विद्यमानत्वेऽपि गोमत्त्वस्याऽतीतत्वाद्भूते प्रत्ययः । तत्राऽर्थाद्द्वामप्यतीतत्वप्रतीतिरिति दिक् ॥ १ ॥

क्रियासमभि । भाष्ये—हिस्वयोरिति । तद्विधायके इत्यर्थः । ननु परत्वात्तिङ्षु कृतेषु तेषामेवैतौ भविष्यत इत्यत आह—सामान्येति । लस्य कृत्त्वेऽपि हिस्वयोः किमायातमित्यत आह—तत्रेति । अव्ययत्वमिति । तदन्तस्य विभक्त्यन्तप्रतिरूपकत्वादव्ययत्वमिति भावः । 'हिस्वयो'रित्यस्य हिस्वान्तयोरित्यर्थः ।

१—'एवंविषयं' पा० । * सुप्तिङन्तं पदम् १ । ४ । १४

'लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम्' । लकारः कृत्, तस्य कृत्त्वात् 'कृत्प्रातिपदिक'मिति प्रातिपदिकसंज्ञा, तदाश्रया—प्रातिपदिकाश्रया स्वाद्युत्पत्तिरपि भविष्यति† ।

यदि स्वाद्युत्पत्तिः सुपां श्रवणं प्राप्नोति । 'अव्यया'दिति‡ सुब्लुग्भविष्यति । कथमव्ययत्वम् ? 'विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति+ निपातसंज्ञा, निपातोऽव्ययमित्यव्ययसंज्ञा ×॥ इह तर्हि 'स भवाँल्लुनीहि लुनीहीत्येवायं लुनाति 'तिङतिङः' [ ८ । १ । २८ ] इति निघातो न प्राप्नोति ।

**समसङ्ख्यार्थं च ॥ २ ॥**

समसङ्ख्यार्थं च हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्* । हिः परस्मैपदानां यथा स्यात्, स्व आत्मनेपदानाम्, व्यतिकरो मा भूदिति ।

**न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य ॥ ३ ॥**

न वा हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम् । किं कारणम् ? 'तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य' । यदयं 'वा च तध्वमो'रित्याह तज्ज्ञापयत्याचार्यः—'पदादेशौ हिस्वा'विति ।

प्र०—विभक्तीति । विभक्तिसंज्ञकहिस्वसदृशत्वादनयोर्हिस्वयोरव्ययत्वमित्यर्थः । व्यतिकरो मा भूदिति । यदि लकारस्यैव स्थाने हिस्वौ विधीयेयातां तदा 'लः परस्मैपद'मिति द्वयोरपि परस्मैपदसंज्ञा स्यात्, ततश्च द्वावपि परस्मैपदिभ्य एव स्यातामित्ययं व्यतिकरः स्यादित्यर्थः । न वेति । यदि लस्यैव हिस्वौ स्यातां तध्वमयोर्लोट्स्थानिकयोरभावा'द्वा च तध्वमो'रिति स्थानित्वेनोपादानमनुपपन्नं स्यादिति तध्वमोः स्थानित्वेनोपादानाल्लोट्शब्देन लोडादेशानां परस्मैपदात्मनेपदानां स्थानित्वमवसीयतइत्यर्थः । पदादेशस्येति । पदशब्देन पदसंज्ञानिमित्तानि तिङ उच्यन्ते । अथवा 'सर्वे सर्वपदादेशा' इति न्यायात्तिङन्तस्य हिस्वान्तादेशप्रवृत्तिः । पित्त्वस्येति । तिप्सिब्मिपां स्थाने

उ०—ननु 'व्यतिकरो नामाऽऽत्मनेपदिभ्योऽपि हिः, परस्मैपदिभ्योऽपि स्व' इत्याकारः, स चाऽनुपपन्नः, आत्मनेपदसंज्ञाऽभावेन लादेशत्वेन परस्मैपदसंज्ञासत्त्वेन चात्मनेपदिभ्यो विधानाऽनुपपत्तेरत आह—यदीति । ननु तिङो हिस्वौ, न च तावन्मात्रम्पदं, तदन्तस्य पदत्वादिति 'पदादेशस्ये'त्ययुक्तमत आह—पदशब्देनेति । निमित्तानीति । निमित्तशब्दो नित्यनपुंसक इति भावः । केचित्तु नामैकदेशग्रहणेन परस्मैपदात्मनेपदे 'पद'शब्देन भाष्ये उच्येते इत्याहुः । स्थानिवद्भावादिति । न च 'सार्वधातुकमपिदि'त्यतिदेशान्ङित्त्वं स्यात्पर-

१–इदं वार्तिकमिति केचित् ।

† कृदतिङ् ३ । १ । ९३; कृत्तद्धितसमासाश्च १ । २ । ४६; स्वौजसमौट्···ङ्योस्सुप् ४ । १ । २

‡ अव्ययादाप्सुपः २ । ४ । ८२ + १ । ४ । ५७ गणसूत्रम् ।

× स्वरादिनिपातमव्ययम् १ । १ । ३७ * यथासंख्यमनुदेशः समानाम् १ । ३ । १०

## तत्र पदादेशे पित्त्वाटोः प्रतिषेधः ॥ ४ ॥

तत्र पदादेशे पित्त्वस्याटश्च प्रतिषेधो वक्तव्यः । पित्त्वस्य तावत्—स भवाँल्लुनीहि* लुनीहीत्येवायं लुनाति । आटः खल्वपि—'सोऽहं लुनीहि† लुनीहीत्येव लुनानि ॥ पित्त्वस्य तावन्न वक्तव्यः । पित्प्रतिषेधे‡ योगविभागः करिष्यते । इह [ 'सेर्हिः'[1] ] सेर्हिर्भवति । ततः 'अपिच्च' । 'अपिच्च भवति यावान् हिर्नामे'ति' ।

आटश्चापि न[2] वक्तव्यः । आटि कृते साट्कस्यादेशो भविष्यति । इदमिह संप्रधार्यम्,—आट्क्रियतामादेश इति किमत्र कर्तव्यम् । परत्वादाडागमः । नित्य आदेशः । कृतेऽप्याटि प्राप्नोत्यकृतेऽपि प्राप्नोति । आडपि नित्यः । कृतेप्यादेशे प्राप्नोत्यकृतेपि प्राप्नोति । अनित्य आट् । अन्यस्य कृतेऽप्यादेशे प्राप्नोत्यन्यस्याऽकृतेपि प्राप्नोति, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । आदेशोप्यनित्यः । अन्यस्य कृत आटि प्राप्नोति,अन्यस्याऽकृते [ प्राप्नोति ], शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययोः परत्वादाडागमः । आटि कृते साट्कस्यादेशो भविष्यति ।

प्र०—विधीयमानो हिः स्थानिवद्भावात्पित्स्यात्, ततश्च ङित्त्वाऽभावाल्लुनीहि लुनीहीतीत्वं न स्यात् । अनुदात्तत्वं च हेः प्रसज्येत 'लुनीहि लुनीहि स भवा'नित्यादौ परस्य तु लुनीहिशब्दस्य 'तस्य परमाम्रेडितमनुदात्तं'च'त्यनुदात्तत्वं भवति । यावानिति । योगविभागकरणसामर्थ्यादानन्तर्यं नाऽपेक्ष्यत इत्यर्थः । भुङ्क्ष्व भुङ्क्ष्वेति । परत्वादाटि कृते उत्तमस्य पित्त्वे च स्वादेशः स्थानिवद्भावात्पित्स्यादिति ङित्त्वाऽभावाल्लोपाऽप्रसङ्गः । समसङ्ख्यार्थत्वमिति । सर्वेषां तिङां द्वावपि पर्यायेण स्यातामित्यर्थः । एतद्वेवेति । 'वृद्धकुमारीवर'न्यायेन क्रियासमभिहारविषयो लोडनुमीयत इत्यर्थः ।

उ०—स्वादिति वाच्यम्, एतद्विषयेऽपि स्थानिवद्भावप्रवृत्त्याऽऽतिदेशिकपित्त्वमादायाऽपिदिति निषेधप्रवृत्तेः, अन्यथा 'एतु''अकरव'मित्यादौ गुणाऽनापत्तिरिति दिक् । स भवानित्यादाविति । 'आदिखण्डे' इति शेषः । तद्भवनयन्नाह—परस्येति । न'न्वनन्तरस्ये'ति न्यायाद्यावानित्यसङ्गतमत आह—योगविभागेति । भाष्ये—'भुङ्क्ष्वे'त्यस्याऽनुप्रयोगे 'भुनजै' इति पाठः । 'पित्त्वेन स्वादेश' इति पाठः कैयटे । सर्वेषां तिङामिति । तिङादेशत्वे ज्ञापितेऽप्ययं दोष इत्यर्थः । वृद्धकुमारीति । एतद्भाष्यवार्त्तिकस्वरसात् 'क्रियासमभिहार' इति वार्त्तिकं लोडन्तविषयकमेव द्रष्टव्यम्, अन्यथा तस्येतो भिन्नवचनत्वे गौरवं स्यादित्याहुः । दोषान्तरमप्याह भाष्ये—लोण्मध्यमेति । ननु सर्वेषां स्थाने इत्यर्थेऽसम्भवः परस्मैपदादिग्रहणाऽभावादत

* सार्वधातुकमपित् १ । २ । ४; ई हल्यघोः ६ । ४ । ११३; ( अनुदात्तौ सुप्पितौ ३ । १ । ४ )

† आडुत्तमस्य पिच्च ३ । ४ । ९२          ‡ सेर्ह्यपिच्च ३ । ४ । ८७

१—क्वाचित्कः ।          २—'प्रतिषेधो न' पा० ।

इदं तर्हि—सोऽहं सुत्त्व सुङ्घ्वेत्येवं सुनजा इति 'श्नसोरल्लोपः' [ ६ । ४ । १११ ] इत्यकारलोपो न प्राप्नोति ॥ समसङ्ख्यार्थत्वं चाप्यपरिहृतमेव ।

**सिद्धं तु लोएमध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनात् ॥ ५ ॥**

सिद्धमेतत् । कथम् ? लोएमध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवत इति वक्तव्यम् ॥ केन विहितस्य क्रियासमभिहारे लोएमध्यमपुरुषैकवचनस्य द्विर्वचनमुच्यते ?

एतदेव ज्ञापयत्याचार्यो 'भवति क्रियासमभिहारे लो'डिति, यदयं क्रियासमभिहारे लोएमध्यमपुरुषैकवचनस्य द्विर्वचनं शास्ति । कुतो नु खल्वेतज्ज्ञापकादत्र लोड्भविष्यति न पुनर्य एवासावविशेषविहितः स यदा क्रियासमभिहारे भवति तदाऽस्य द्विर्वचनं भवतीति ? लोएमध्यमपुरुषैकवचन एव खल्वपि सिद्धं स्यादिमौ चान्यौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां वचनानामिष्येते । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थं, समसङ्ख्यार्थं चे'ति । नैष दोषः ।

**योगविभागात्सिद्धम् ॥ ६ ॥**

योगविभागः करिष्यते । 'क्रियासमभिहारे [ लोट्,' क्रियासमभिहारे ] लोड्भवति । ततो [ 'लोटो हिस्वौ' । ] लोटो हिस्वौ भवतः । लोडित्येवानुवर्तते लोटो यौ हिस्वाविति । कथं 'वा च तध्वमो'रिति ? 'वा च तध्वंभाविनो लोट'

प्र०—कुतो न्विति ज्ञापकं विघटयति । विध्यादिविषयस्य लोटो विद्यमानत्वात् क्रियासमभिहारविषये तस्यैवादेशयोर्द्विवचनार्थं ग्रहणं स्यादित्यर्थः । सर्वेषामिति । 'प्रसङ्ग'इति शेषः । लोटो याविति । लोडादेशौ यौ हिस्वौ दृष्टौ तत्तुल्यावनेन हिस्वौ भवत इत्यर्थः । तेन तदीयकार्यातिदेशात्परस्मैपदात्मनेपदसंज्ञे हिस्वयोर्भवतः । तेन परस्मैपदिभ्यो हिरात्मनेपदिभ्यस्तु स्वो भवति । हिशब्दस्य कर्ता वाच्यः, स्वशब्दस्य भावकर्मकर्तारः । तिङ्त्वं च भवतीति 'तिङ्ङतिङ'-इत्यादिकार्यं भवति । पुरुषैकवचनसंज्ञे तु सामर्थ्यान्न भवतः । यदि हि ते अपि स्यातां हिस्वयोरनेन विधानमनर्थकं स्यात्, वचनान्तरेण तयोः सिद्धत्वात् । तध्वंभाविन इति । मुख्यार्थाऽ-

उ०—आह-प्रसङ्ग इति शेष इति । दोषान्तरमभ्याह भाष्ये-सूत्रञ्चेति । लोडादेशाविति । 'लो'डित्यस्य च लोड्वदित्यर्थः । स्थानिवत्त्वेनैव लोड्धर्मोऽतिदेशस्य सिद्धेः पुनर्लोड्वदिति वचनं लोट्स्थानिकहिस्ववदतिदेशार्थमिति भावः । अतिदेशफलमाह—तेनेति । वचनान्तरेणेति । पुरुषादिसंज्ञायां युष्मत्सामानाधिकरण्ये

१—'तस्य' पा० । १. २—क्वाचित्कः पाठः ।

इत्येवमेतद्विज्ञायते ॥ २ ॥

## यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ३ । ४ । ४ ॥

किमर्थमिदमुच्यते ? अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् । ह्रिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ।

इदं तर्हि प्रयोजनं—'यथाविधीति वक्ष्यामी'ति एतदपि नास्ति प्रयोजनम् । 'समुच्चये सामान्यवचनस्य' [ ३ । ४ । ५ ] इति वक्ष्यति, तत्रान्तरेण वचनं यथाविध्यनुप्रयोगो भविष्यति ॥ ४ ॥

## समुच्चये सामान्यवचनस्य ॥ ३ । ४ । ५ ॥

किमर्थमिदमुच्यते ? अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् । ह्रिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ।

---

प्र०—संभवे गौणी कल्पनाश्रीयते, ततश्च तध्वंभावित्वाल्लोडेव 'तध्वं'शब्दाभ्यामुच्यत इति भावः ॥ २ ॥

यथावि । ह्रिस्वान्तमिति । संख्याकालपुरुषाणामनभिव्यक्तत्वात् । एतदपीति । 'समुच्चय एव धात्वन्तरस्याऽनुप्रयोग'इति नियमात् क्रियासमभिहारे यथाविध्यनुप्रयोगो भविष्यति । ननु 'समुच्चये सामान्यवचनस्यैवे'ति नियमः स्यात्, ततश्च धात्वन्तरस्यापि लोट्प्रकृतिसमानार्थस्य क्रियासमभिहारेऽनुप्रयोगः स्यात् । नैतदस्ति । 'नह्येकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्याश्च तृतीयस्याश्च भवती'ति न्यायाल्लोट्प्रकृतिरेवानुप्रयोक्ष्यते । पूर्वव्यवहितप्रयोगनिवृत्तिरपि नेष्टा, यतस्तदर्थो योगः स्यात् ॥ ४ ॥

समुच्चये । लघुत्वादिति । एतच्च-लाघवं क्वचिदेव विषये शिष्टप्रयोगदर्शनादाद्रियते न

---

उ०—एकत्वे च भाव्यम् । तत्र च व्यर्थस्तयोर्विधिरिति भावः ॥ २ ॥

यथाविध्य । ननु क्रियारूपाऽर्थप्रतीतेः कमथनभिव्यक्तपदार्थकत्वमत आह—सङ्ख्येति । न ह्येकस्या इति । एतेन 'समुच्चये एव सामान्यवचनस्ये'ति नियमेऽपि प्रकृते न पर्यायव्यावृत्तिरित्यपास्तम् । समुच्चयविषये सामान्यवचनस्येति वचनान्न्यायबाधेऽपि प्रकृतविषये तन्न्यायबाधे मानाऽभावाद्विनाऽपि वचनं सिद्धमिति भाष्याऽऽशयार्थः । नेष्टेति । अत एव 'लुनीहि लुनीहीत्येवाऽयं लुनाती'ति भाष्ये व्यवहितप्रयोगः सङ्गच्छते । तेनाऽनुप्रयोगशब्दार्थव्यभिचार उक्तः । पूर्वप्रयोगस्तु यदि नेष्टस्तदाऽनभिधानाद्वारणीयः । यद्वेष्ट एव स इत्याहुः ॥ ४ ॥

समुच्चये सा । भाष्ये—लघुत्वादिति । सर्वविशेषाऽनुगतैकसामान्यवाचकाऽनुप्रयोगे सामान्यस्य सन्निहितविशेषपर्यवसानात्सर्वेषां कालाद्यभिव्यक्तौ सिद्धायां विशेषवाचकनानाधातुप्रयोगे गौरवादिति भावः ।

इदं तर्हि प्रयोजनं—'सामान्यवचनस्येति वक्ष्यामी'ति। एतदपि नास्ति प्रयोजनम्। सामान्यवचनस्याऽनुप्रयोगोऽस्तु विशेषवचनस्येति, सामान्यवचनस्यैवा-नुप्रयोगो भविष्यति, लघुत्वात् ॥ ५ ॥

## उपसंवादाशङ्कयोश्च ॥ ३ । ४ । ८ ॥

### उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात् ॥ १ ॥

उपसंवादाशङ्कयोर्वचनमनर्थकम्। किं कारणम्? 'लिङर्थत्वात्'। 'लिङर्थे लेट्' [ ३ । ४ । ७ ] इत्येव सिद्धम् ॥ कः पुनर्लिङर्थः? केचित्तावदाहुः—'हेतुहेतु-मतोर्लिङ्' [ ३ । ३ १५६ ] इति। अपर आहुः—वक्तव्य एवैतस्मिन्विशेषे लिङ्। प्रयुज्यते हि लोके—'यदि मे भवानिदं कुर्यादहमपि त इदं दद्या'मिति' ॥ ८ ॥

प्र०—सर्वत्र, अन्यथा तरुद्रुमादीनामेव प्रयोगः स्यान्न वनस्पत्यादिशब्दानाम् ॥ ५ ॥

उपसंवा। उपसंवादेति। नित्यार्थमिदमिति चेच्छन्दसि नित्योऽत्र लेड् दृश्यत इत्यत्र प्रमाणाऽभावः। व्यवस्थितविभाषया वा नित्यं लेड्भविष्यति। हेतुहेतुमतोरिति। उपसंवादः—कर्तव्ये पणबन्धः, 'यदि मे भवानिदं कुर्यादहमपि ते इदं दद्या'मिति। तत्र करणं हेतुर्दानं हेतुमत्। आशङ्कापि कारणात्कार्योत्प्रेक्षेति हेतुहेतुमद्भावः। अपर इति। करणमवधिर्दानमव-धिमदित्यवध्यवधिमद्भाव उपसंवादे प्रतीयते न तु हेतुहेतुमद्भावः। आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीति भावः। लिङ्प्रयोगसिद्धये अवश्यवक्तव्यो लिङ्, न तु सूत्रप्रत्याख्या-नायैव ॥ ८ ॥

उ०—क्वचिदेवेति। अपर्यायविषये इत्यर्थः। एवञ्च तरुद्रुमवनस्पत्यादिषु पर्यायेषु लाघवगौरवाऽनादरान्न दोषः। इह त्वपर्यायत्वं स्पष्टमेवेत्याहुः ॥ ५ ॥

उपसंवादा। इदं नित्यं लेड्विधानार्थं, तदाह—नित्यार्थमिति। पूर्वसूत्रे हि 'लिङर्थे ले'डित्य-त्राऽन्यतरस्यांग्रहणमनुवर्त्तत इति भावः। व्यवस्थितेति। वेदे आपाद्यरूपाऽभावात्सर्वविधीनां छन्दसि वैकल्पिकत्वाददोष इत्यन्ये। करणं हेतुरिति। तदुत्तरकालत्वाद्दानस्येति भावः। करणमवधिरिति। तद्वस्तुदानस्य तत्करणाऽभावेपि बहुशो दृष्टत्वात्तत्करणे सत्यपि बहुशस्तद्दानाऽभावाच्च व्यक्तिविशेषयोः सत्यपि पूर्ववर्तित्वोत्तरवर्तित्वे नियमघटितकारणत्वस्य नैतच्छब्दतो भानं, किन्त्ववध्यवधिमद्भावस्यैवेति भावः। भाष्ये—इदमेवाशङ्काया अप्युदाहरणम्। सम्भावनापरत्वेन तद्व्याख्यानस्य सम्भवात्सम्भावनैव चाऽत्राऽऽ-शङ्का, तदाह—आशङ्कायामपीति। अकारणादकार्योत्प्रेक्षाया अपि दर्शनादित्यपि बोध्यम्। लिङ्प्रयोगेति। लोकेऽपीत्यर्थः। एवञ्चाऽनयोरपि लिङर्थत्वा'ल्लिङर्थे ले'डित्येव सिद्धे इदं न कार्यमिति भावः ॥ ८ ॥

१—इतिः क्वचिन्न।

## तुमर्थे सेसेनसेअसेन्कसेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यै-शध्यैन्तवैतवेङ्तवेनः ॥ ३ । ४ । ९ ॥

तुमर्थ इत्युच्यते कस्तुमर्थः [ नाम ] ? कर्ता* [ तुमर्थः ] । यद्येवं नार्थस्तु-मर्थग्रहणेन । येनैव खल्वपि हेतुना कर्तरि तुमुन्भवति तेनैव हेतुना सयादयोपि भविष्यन्ति ।

एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्योऽ'स्त्यन्यः कर्तुस्तुमुनोऽर्थ' इति । कः पुनरसौ ? भावः । कुतो नु खल्वेतद्भावे तुमुन्भविष्यति न पुनः कर्मादिषु कारकेष्विति[2] । ज्ञापका [ त्तांव ] दयं कर्तुरपकृष्यते । न चान्य-स्मिन्नर्थ आदिश्यते, 'अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ती'ति स्वार्थे भविष्यति । तद्यथा,—'गुप्तिज्किद्भ्यः सन्' [ ३ । १ । ५ ], 'यावादिभ्यः कन्' [ ५ । ४ । २९ ] इति । सोऽसौ स्वार्थे भवन्भावे भविष्यति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? 'अव्य-यकृतो भावे भवन्ती'त्येतन्न वक्तव्यं भवति† ॥ ९ ॥

## उदीचां माङो व्यतीहारे ॥ ३ । ४ । १९ ॥

किमर्थं मेङः सानुबन्धकस्याऽऽत्वभूतस्य‡ ग्रहणं क्रियते, नोदीचां मेङ इत्येवो-च्येत ? तत्रायमप्यर्थः—'उदीचां मेङ' इति व्यतीहारग्रहणं न कर्तव्यं भवति । किं कारणम् ? 'तद्विषयो हि सः' । व्यतीहारविषय एव हि मयतिः ।

---

प्र०—तुमर्थे सेसे । कुतो न्विति । क्रियया कर्मादीनामाक्षेपात्तेष्वेव तुमुन् स्यादिति भावः । न वक्तव्यमिति । तुमर्थग्रहणानुवृत्त्या क्त्वादीनां भावे सिद्धत्वात् । साध्यमानरूपश्च भावः क्त्वादीनामर्थः । स एव च धात्वर्थः । घञादीनान्तु धात्वर्थव्यतिरिक्तः सिद्धरूपो वाच्यः ॥ ९ ॥

उदीचाम् । नानुबन्धकृतमिति । एतच्च ज्ञापनमनुबन्धानामेकान्तत्वे उपयुज्यते ।

---

उ०—तुमर्थे से । ननु कर्मादिपदाऽनुपादानात्कथं तेषु प्रसक्तिरत आह–क्रिययेति । नन्वव्ययकृतो भाव इत्येतत्सत्त्वे घञादिवत्सिद्धे भावे तुमुनादयः स्युः, स्वार्थे विधाने तु साध्ये भावे इति विशेषोऽत आह–साध्यमानेति । वार्त्तिकेऽपि 'भाव'शब्देन साध्यभावस्यैव ग्रहणमिति भावः । तुमर्थ इत्यनुवादाच्च तुमोऽपि भावे सिद्धिरिति बोध्यम् ॥ ९ ॥

उदीचामा । नाऽनुबन्धेति । तेनाऽनुबन्धविशिष्टस्याप्यात्वमिति भावः । एकान्तत्वे इति । अयमेव

---

१–इदं क्वचिन्न ।

२–'कारकेषु स्यादिति' पा० ।

‡ आदेच उपदेशेऽशितिति ६ । १ । ४५

* कर्तरि कृत् ३ । ४ । ६७

† ३ । ४ । २६ सूत्रभाष्ये ।

एवं तर्हि सिद्धे सति यन्मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं करोति तज्ज्ञापयत्याचार्यो 'नानुबन्धकृतमनेजन्तत्वं भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? तत्रा'ऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वा'दित्युक्तं* तन्न वक्तव्यं भवति ।

किमर्थं पुनरिदमुच्यते, 'न समानकर्तृकयोः पूर्वकाले [ ३ । ४ । २१ ] इत्येव सिद्धम् ? अपूर्वकालार्थोऽयमारम्भः । पूर्वं ह्यसौ याचते, पश्चादपमयते ॥ १६ ॥

## समानकर्तृकयोः पूर्वकाले ॥ ३ । ४ । २१ ॥

इह कस्मान्न भवति—पूर्वं भुङ्क्ते पश्चाद्व्रजतीति ? स्वशब्देनोक्तत्वान्न भवति । न तर्हीदानीमिदं भवति 'पूर्वं भुक्त्वा ततो व्रजती'ति । नैतत्क्रियापौर्वकाल्यम् । किं तर्हि ? कर्तृपौर्वकाल्यमेतत् । पूर्वं ह्यसौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततः पश्चाद्व्रजत्यन्येभ्यो व्रजितृभ्यः ।

प्र०—अनेकान्तत्वे स्वत एव एजन्तत्वाज्ज्ञापनप्रयोजनाऽभावः । 'पृथक्त्वनिर्देशो नाकारान्तत्वा'दित्येतद्दाप्प्रतिषेधग्रहणेनैव संबध्यते । 'दाधाघ्वदाबित्यत्र दैपोऽपि पृथक् प्रतिषेधो वक्तव्यः, अनाकारान्तत्वाद्दाप्रूपत्वाऽभावादित्यर्थः । अपमयत इति । वस्त्रादिकं परिवर्तयतीत्यर्थ ॥ १९ ॥

समान । 'समान'शब्द एकवाची, शक्तिशक्तिमतोश्चाऽभेदेन विवक्षायां क्रिययोरेककर्तृकत्वम् । स्वशब्देनेति । पौर्वकाल्ये द्योत्ये क्त्वादिर्विधीयते न तु विषय इति भावः । पूर्वशब्दस्याऽत्र क्रियापौर्वकाल्यवाचित्वादग्रादिसूत्रेणापि न भवति, अग्रादीनां साधनपौर्वकाल्यविषयाणां तत्र ग्रहणात् । नैतदिति । द्विविधाऽत्र भुजेः पूर्वकालता, व्रजिक्रियापेक्षा, तस्यां क्त्वाप्रत्ययः,

उ०—पक्षो न्याय्य इति 'तस्य लोप' इति सूत्रे भाष्ये ॥ १६ ॥

समानकर्तृकयोः । ननु कर्तृशब्देन शक्तेरभिधानात्तस्याश्च क्रियाद्वयविषयाया भेदान्नैककर्तृत्वं युक्तं क्रिययोरत आह—शक्तीति । शक्तिमद्वतैकत्वस्य शक्त्योरारोपेणैककर्तृकत्वोपपत्तिरिति भावः । भाष्ये—स्वशब्देनेति । नाऽत्र धातोः पूर्वकालविशिष्टक्रियावृत्तिता, किन्तु स्वार्थमात्रवृत्तितेति भावः । पूर्वकालश्च क्त्वाद्योत्यस्तदाह—पौर्वकाल्ये द्योत्य इति । न तु 'उक्तार्थाना'मिति न्यायस्य विषयोऽयं, द्योतकस्थले प्रायशस्तदप्रवृत्तेः । तद्ध्वनयन्वक्ष्यति—'इह कस्मान्न भवति आस्यते भोक्तुमिति । अन्यथा तत्र तुमुनाऽऽसिक्रियानिष्ठपूर्वकालस्य द्योतितत्वात्तदसङ्गतिः स्पष्टैवेति दिक् । भाष्ये—स्वशब्देनेति । पूर्वशब्देनेत्यर्थः । नन्वत्र 'विभाषाऽग्रे' इति सूत्रेण भवत्येव क्त्वाऽत आह—पूर्वशब्दस्येति । तत्र ग्रहणादिति । अत्र चेदमेव भाष्यं मानम् । भोक्त्रन्तरेति । 'कर्तृपौर्वकाल्य'मित्यस्य कर्त्रन्तरसाध्यस्वजातीयक्रियापेक्षपौर्वकाल्यमित्यर्थ इति भावः । तद्ध्वनयन्नाह—कर्तृपौर्वेति ।

* १ । ३ । ६ वा० १०

इह कस्मान्न भवति—आस्यते भोक्तुमिति ? कुतः कस्मान्न भवति, किमासेराहोस्विद्भुजेः । भुजेः कस्मान्न भवति ? अपूर्वकालत्वात् । आसेस्तर्हि कस्मान्न भवति ? यस्मादत्र लड्भवति । एतदत्र प्रष्टव्यं—लडत्र कथं भवतीति ? लट्चात्र वाऽसरूपेण* भविष्यति ।

समानकर्तृकयोरिति बहुष्वप्राप्तिः [ [1]द्विवचननिर्देशात् ] ॥ १ ॥

समानकर्तृकयोरिति बहुषु क्त्वा न प्राप्नोति । स्नात्वा भुक्त्वा पीत्वा व्रजतीति । किं पुनः कारणं न सिध्यति ? 'द्विवचननिर्देशात्' । द्विवचनेनाऽयं निर्देशः क्रियते, तेन द्वयोरेव पौर्वकाल्ये स्याद्बहूनां न स्यात् ।

सिद्धं तु क्रियाप्रधानत्वात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'क्रियाप्रधानत्वात्' । क्रियाप्रधानोऽयं निर्देशः । नात्र निर्देशस्तन्त्रम् । कथं पुनस्तेनैव नाम निर्देशः क्रियते, तच्चाऽतन्त्रं स्यात् ? तत्कारी

प्र०—भोक्त्रन्तरसाध्यभुजिक्रियापेक्षा च, तां पूर्वशब्द उपादत्ते । ततश्चाऽऽदिसूत्रेणाऽत्र क्त्वाणमुलौ भवत इति भावः । कर्तृपौर्वकाल्यं च क्रियाद्वारकमेव बोद्धव्यम्, क्रियाविषयत्वात् कालव्यवहारस्य । आस्यत इति । आसेः पूर्वकालत्वाद्भावस्य च प्रतिपाद्यत्वात्, 'आसित्वा भोक्तु'मिति प्राप्नोतीति भावः । लट्चात्रेति । 'वासरूपोऽस्त्रियाम्'मित्यत्र 'स्त्रियाः प्रा'गिति पक्षो नाश्रितः, किन्तर्हि, स्त्र्यधिकारे वासरूपविधिर्नेति । यदा त्वासेः क्त्वा भवति तदा भुजेः तुमुन्न भवति, अनभिधानात्, न ह्यासित्वा भोक्तुमित्याद्यभिधानमस्ति । तस्माल्लडादय एव भुजेर्भवन्ति—'आसित्वा भुङ्क्ते' इति । क्रियाप्रधानत्वादिति । समानकर्तृकक्रियान्तरापेक्षपौर्वकाल्यक्रिया-

उ०—पूर्वकालत्वादिति । तत्र भोजनफलकं पूर्वकालमासनमिति बोध इति भावः । तुमुन्समभिव्याहारे समभिव्याहृतक्रियायां पूर्वकालत्वं तुमुन्द्योत्यं प्रतीयते । एवञ्च तत्र क्त्वा, स्यादिति तात्पर्यम् । एवञ्च यत्र धातोः पूर्वकालविशिष्टक्रियावाचकत्वं तत्र क्त्वा, तदाह भाष्ये—लट्चाऽत्र वाऽसरूपेणेति । अन्यथाऽस्य पूर्वकालाऽर्थत्वाऽभावेन कथं वाऽसरूपेण सः, समानार्थत्वे हि तत्प्रवृत्तेः । एवञ्च 'भुक्त्वा व्रजती'त्यादौ पूर्वकालभोजनकर्तृकं व्रजनमिति बोधः । ननु स्त्र्यधिकारात्परतोऽपि वाऽसरूपविधेरभावात्कथमत्र तेन लडित्यत आह—वाऽसरूप इति । तदूर्ध्वं वाऽसरूपविध्यभावस्तु क्वाचित्क इति भावः । ननु वाऽसरूपेण लटः सिद्धावपि कदाचित्तुमुनपि स्यादत आह—यदा त्विति । न हीति । तुमुनन्तार्थस्य स्वार्थफलकक्रियां प्रति विशेषणत्वनियमात्, क्त्वान्तार्थस्य च स्वोत्तरकालक्रियां प्रति विशेषणत्वनियमात् । न चैतदुभयं युगपत्सम्भवतीति भावः ।

* वाऽसरूपोऽस्त्रियाम् ३ । १ । ९४

१—अयं पाठः क्वाचित्कः ।

च भवाँस्तद्द्वेषी च । नान्तरीयकत्वादत्र द्विवचनेन निर्देशः क्रियते । अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः । तद्यथा,—कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान्सशकलान् सकण्टकानाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वाद्द्विवचनेन निर्देशः क्रियते । न ह्यत्र निर्देशस्तन्त्रम् ॥ एवमपि—

लोकविज्ञानान्न सिध्यति[२] ॥ ३ ॥

तद्यथा,—लोके 'ब्राह्मणानां पूर्व आनीयता'मित्युक्ते सर्वपूर्व आनीयते, एवमिहापि सर्वपूर्वायाः क्रियायाः प्राप्नोति ।

अनन्त्यवचनात्तु सिद्धम् ॥ ४ ॥

समानकर्तृकयोरनन्त्यस्येति वक्तव्यम्[३] । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'समानकर्तृकयोरिति बहुष्वप्राप्ति'रिति । परिहृतमेतत् 'सिद्धं तु क्रियाप्रधानत्वा'दिति । ननु चोक्तमेवमपि—'लोकविज्ञानान्न सिध्यती'ति । नैष दोषः । सर्वेषामत्र व्रजिक्रियां प्रति पौर्वकाल्यम् । स्नात्वा व्रजति, भुक्त्वा व्रजति, पीत्वा व्रजतीति । एवं च कृत्वा प्रयोगोऽनियतो भवति । स्नात्वा भुक्त्वा पीत्वा व्रजति । पीत्वा स्नात्वा भुक्त्वा व्रजतीति ।

प्र०—प्रतिपादनपरत्वान्निर्देशस्य नान्तरीयकत्वादुपात्तं द्वित्वमत्राऽविवक्षितमित्यर्थः । लोकविज्ञानादिति । 'अमीषां ब्राह्मणानां पूर्वमानये'त्युक्ते पङ्क्तौ यः सर्वेषामादिः स एवानीयते तथेहापि 'स्नात्वा भुक्त्वा पीत्वा व्रजती'ति स्नानस्यैव पूर्वत्वात्स्नातेरेव प्रत्ययेन भाव्यं न तु भुजिपिबतिभ्यामित्यर्थः । सर्वेषामिति । आख्यातवाच्याया क्रियाया विशेष्यत्वात्प्राधान्यात्तां प्रति सर्वासां विशेषणत्वात्परस्परेणाऽसम्बन्धः । यथोक्तम्—'गुणानाञ्च परार्थत्वादसंबन्धः समत्वा'दिति ।

उ०—समानकर्तृकेति । समानकर्तृकक्रियान्तराऽपेक्षं पौर्वकाल्यं यस्यास्तत्प्रतिपादनपरत्वादित्यर्थः । निर्धारणे षष्ठी । तत्र द्विवचनबहुवचनाऽन्यतराऽऽवश्यकत्वेनैकतरोपादानेऽन्यत्र न स्यादिति साधुत्वार्थमेव तत्, नतु विवक्षितमिति तात्पर्यम् । 'इमौ चेद्व्याधितौ स्यातां देयं स्यादिदमौषध'मित्यादौ लोके द्वित्वस्याप्यविवक्षादर्शनात् । गुणानाञ्चेति । प्रधानक्रियाऽन्वये सम्भवति गुणभूतक्रियाऽन्वयोऽनुचित इति

१—इदमुदाहरणं भाष्ये १ । २ । ३६; ३ । ३ । १८; ४ । १ । ९२ वा० १ स्थानेष्वपि द्रष्टुं शक्यम् । २—इदं भाष्यमित्यन्ये ।
३–'पूर्वकाले' इत्यपहाय तत्स्थाने 'अनन्त्यस्य' इति वक्तव्यमित्यर्थः ।

## व्यादाय स्वपितीत्युपसङ्ख्यानमपूर्वकालत्वात् ॥ ५ ॥

व्यादाय स्वपितीत्युपसङ्ख्यानं कर्तव्यम् । किं पुनः कारणं न सिध्यति ? 'अपूर्वकालत्वात्' । पूर्वं ह्यसौ स्वपिति पश्चाद्व्याददाति ।

## न वा स्वप्नस्याऽवरकालत्वात् ॥ ६ ॥

न वा वक्तव्यम् । किं कारणम् ? 'स्वप्नस्याऽवरकालत्वात्' । अवरकालः स्वप्नः । अवश्यमसौ व्यादाय मुहूर्तमपि स्वपिति ॥ २१ ॥

## विभाषाऽग्रेप्रथमपूर्वेषु ॥ ३ । ४ । २४ ॥

किमयं प्राप्ते विभाषाऽऽहोस्विदप्राप्ते ? कथं च प्राप्ते कथं वाऽप्राप्ते ? आभीक्ष्ण्य* इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते । किञ्चातः ? यदि प्राप्ते,—आभीक्ष्ण्येऽनिष्टा विभाषा प्राप्नोत्यन्यत्र चेष्टा न सिध्यति ॥ अथाऽप्राप्ते,—

प्र०—अवरकाल इति । यद्यपि स्वप्नक्षणानां व्यादानात्पूर्वकालता तथापि व्यादानानन्तरभाविस्वप्नक्रियापेक्षं व्यादानस्य पूर्वकालत्वमस्तीत्यर्थः ॥ २१ ॥

विभाषाऽग्रे । इहाऽग्रादयः साधनपौर्वकाल्यविषया गृह्यन्ते न तु क्रियापौर्वकाल्यविषयाः । तेषां हि क्रियापौर्वकाल्यविषयत्वे तैरेव पौर्वकाल्यस्योक्तत्वात् क्त्वाणमुलोर्गतार्थत्वादुत्पत्त्या न भाव्यम् । न चैतत्सूत्रारम्भादुक्तेऽपि पौर्वकाल्ये तयोरुत्पत्तिरिति शक्यते वक्तुम् । अस्य साधनपौर्वकाल्यविषयाऽग्राद्युपपदत्वे चरितार्थत्वात् । भाष्यकारेण च समानादिसूत्रे पूर्वशब्देन क्रियापौर्वकाल्ये उक्ते क्त्वाप्रत्ययस्यानुत्पत्तेः प्रतिपादितत्वात् । यदि चाऽत्र अग्रादयः क्रियापौर्वकाल्यविषया गृह्येरन् तदा अप्राप्तविभाषैव निःसन्देहा स्यादिति 'किमियं प्राप्ते विभाषे'ति संशयो नैवोपपद्येत ।

उ०—भावः । प्रत्येकानन्तर्यविवक्षायामिष्टाऽसिद्धिमप्याह भाष्ये—एवञ्च कृत्वेति । तेन प्रत्येकाऽऽनन्तर्यविवक्षायां क्त्वा न साधुरित्याहुः ॥ २१ ॥

विभाषाऽग्रे । साधनेति । साधनाऽन्तरजन्यस्वजातीयक्रियाऽपेक्षपौर्वकाल्यविषया इत्यर्थः । न तु क्रियेति । एककर्तृकभिन्नक्रियानिरूपितपौर्वकाल्यविषया इत्यर्थः । साधनपौर्वकाल्यविषयाणामेव ग्रहणे प्रमाणमाह—तेषां हीति । पूर्वादीनामित्यर्थः । मानान्तरमप्याह—भाष्यकारेण चेति । प्रकृतसूत्रभाष्यपर्यालोचनयाऽप्येवमेवेत्याह—यदि चेति । नि सन्देहा । सन्देहान्निष्क्रान्तेति समासः । संशयाऽनुपपत्तिं दर्शयति—यस्मादिति । तदाभीक्ष्ण्येति । उक्तार्थत्वेन क्त्वाणमुलोरप्राप्तेरिति भावः । ननु पौर्वकाल्योक्त्यावच्याभीक्ष्ण्यप्रतिपादनाय

१—'अपर' पा० । २—'चाऽप्राप्ते' पा० ।

* आभीक्ष्ण्ये णमुल् च ३ । ४ । २२

## अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः ॥ १ ॥

अग्रादिष्वप्राप्तविधेः समासस्य प्रतिषेधो वक्तव्यः† ।

स तर्हि [ प्रतिषेधो ] वक्तव्यः ? न वक्तव्यः । उक्तमेतत्, 'अमैवाव्ययेन [ २ । २ । २० ] इत्यत्रैवकारकरणस्य प्रयोजनम्—'अमैवाव्ययेन यत्तुल्यविधान-

प्र०—यस्मा'दाभीक्ष्ण्ये णमुल्चे'ति क्त्वाणमुलौ क्रियापौर्वकाल्ये एव विधीयेते । तच्चेदग्रादिभिरुच्यते तदाऽऽभीक्ष्ण्यग्रहणानुवृत्तावप्यप्राप्तविभाषैव स्यात् । आभीक्ष्ण्यञ्च द्विर्वचनमन्तरेण क्त्वाणमुल्भ्यां न द्योत्यत इति तद्द्योतनायाऽपि तयोर्विधानं नोपपद्यते । तस्मात्साधनपौर्वकाल्यविषया इहाऽग्रादय इति स्थितम् । यद्यपि देशविशेषवचनोऽग्रशब्दोऽस्ति—'प्रभोरग्रे भुङ्क्ते' इति, तथापि पूर्वप्रथमसाहचर्यात्कालविशेषवृत्तिरेव गृह्यते । अनिष्टा विभाषेति । आभीक्ष्ण्ये नित्यौ क्त्वाणमुलौ इष्येते,—अग्रे भुक्त्वा भुक्त्वा व्रजतीति । लडादयस्तु नैवेष्यन्ते,—अग्रे भुङ्क्ते भुङ्क्ते ततो व्रजतीति भावः । अन्यत्र चेति । आभीक्ष्ण्यग्रहणानुवृत्तौ सत्यामनाभीक्ष्ण्ये क्त्वामुलौ न स्यातामित्यर्थः । अप्राप्तविधेरिति । विभाषायामग्रादीनां प्रत्ययोत्पत्तिं प्रति निमित्तत्वान्निमित्तस्य चोपपदसंज्ञाविधानादुपपदसमासः प्रतिषेध्यः । प्राप्तविभाषायां त्वग्रादीनां पक्षे प्रत्ययनिवृत्तौ निमित्तत्वं न तु प्रत्ययोत्पत्तौ, प्रत्यययो'राभीक्ष्ण्ये णमुल्चे'त्यनेनाऽविशेषेण विहितत्वादिति भावः । न वक्तव्य इति । अप्राप्तविभाषात्वमनेन द्रढयति । पूर्वविप्रतिषेधाच्चाग्रादिष्वाभीक्ष्ण्ये नित्याभ्यां क्त्वाणमुल्भ्यां भाव्यमित्युभयत्र विभाषा चेयं न भवति । ननु च णमुल्यप्राप्ते, क्त्वाप्रत्यये तु समानादिसूत्रेण प्राप्ते सत्यारम्भादुभयत्र विभाषेयं युक्ता । नैतदस्ति । समानादिसूत्रविहितं क्त्वां प्रति विभाषाग्रहणमनर्थकमेव, वासरूप इत्यनेनैव पक्षे लडादीनां सिद्धत्वात् । कः पुनरस्य क्त्वः समानादिसूत्रविहिताद्विशेष इति चेत्, णमुल्सहितत्वमेव विशेषः । णमु-

उ०—तयोः प्राप्तिरत आह—आभीक्ष्ण्यञ्चेति । एवञ्चावश्यकद्विर्वचनेनैव तद्द्योतनसम्भवेनाऽस्य तत्राऽप्यप्राप्तिरिति भावः । तयोर्विधानं—तयोः प्राप्तिः । पूर्वप्रथमेति । यद्यपि पूर्वशब्दो देशवाच्यपि तथापि प्रथमसाहचर्यं नियामकमिति बोध्यम् । निमित्तस्य चेति । 'उपपद'मिति महासंज्ञया प्रत्ययनिमित्तस्योपपदत्वं, न ह्यभावस्योपपदमिति वक्तुं शक्यमिति भावः । भाष्ये—न वक्तव्य इत्युक्ते अवचने हेतुमाह—उक्तञ्चेति । चो हेतौ । यत उक्तमतो न वक्तव्य इत्यर्थः । उक्तं वेति पाठेऽपि 'वा' शब्दोऽत्र चाऽर्थ एव बोध्यः, अवचने वैकल्पिकहेत्वन्तराऽनुक्तेः । नन्वननुवृत्तावन्याभीक्ष्ण्ये परत्वादिदमेवोचितमित्युभयत्रविभाषात्वमुचितमित्यत आह—पूर्वविप्रतिषेधादिति । ननु चेति । साधनपौर्वकाल्यविषये क्रियापौर्वकाल्यस्यापि सत्त्वादिति भावः । वाऽसरूपेण लडादीनां सिद्धत्वाद्विभाषाग्रहणं किमर्थमिति शङ्कायामपि 'ज्ञापकार्थ'मित्युत्तरं बोध्यम् । वाऽसरूपन्यायेन लडादिसिद्धेर्व्यर्थमेतदिति शङ्कते—कः पुनरिति । वक्ष्यमाणरीत्या ज्ञापकार्थेत्युत्तरम् ।

† उपपदमतिङ् २ । २ । १९ १—क्वाचित्कः पाठः ।
२—इतः प्राक् 'उक्तं वा' इति वार्तिकं क्वचिद् दृश्यते ।

सुपपदं तत्र‡ समासो यथा स्यादमा चान्येन च यत्तु ल्यविधानमुपपदं तत्र मा भू'दिति ॥ २४ ॥

## स्वादुमि णमुल् ॥ ३ । ४ । २६ ॥

किमर्थं स्वादुमि मकारान्तत्वं निपात्यते, न खमुञ्प्रकृतः सोऽनुवर्तिष्यते* ?

### स्वादुमि मान्तनिपातनमीकाराऽभावार्थम् ॥ १ ॥

स्वादुमि मान्तनिपातनं क्रियत 'ईकाराभावार्थम्' । ईकारो† मा भूदिति । स्वाद्वीं कृत्वा यवागूं भुङ्क्ते, स्वादुङ्कारं यवागूं भुङ्क्ते ।

### च्व्यन्तस्य च मकारान्तार्थम् ॥ २ ॥

च्व्यन्तस्य च मकारान्तत्वं निपात्यते । अस्वादु स्वादु कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते ।

---

प्र०—ल्सहितक्त्वाविधौ विभाषाश्रुतिरिहोपादीयमाना ज्ञापकाऽर्था संपद्यते । 'क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्न भवती'ति । तेनाऽऽभीक्ष्ण्ये पौर्वकाल्ये लडादयो न भवन्ति । तत्र यदि केवलो णमुल्विधीयेत विभाषाश्रुतिरभिमतमर्थं ज्ञापयितुं न क्षमेतेति क्त्वोऽप्यनुवादः कर्तव्यः ॥ २४ ॥

स्वादुमि । ईकाराभावार्थमिति । मान्तत्वे भाविप्रत्ययविषये निपात्यमाने विहतनिमित्तत्वा'द्वोतो गुणवचना'दिति ङीष् न भवतीत्यर्थः । च्व्यन्तस्य चेति । खमुञ्यपि सर्वत्र मुम् न सिध्यति, 'अनव्ययस्ये'त्यधिकारादिति भावः । यद्येवं मान्तत्वमेव निपात्यतां प्रत्ययस्तु खमु-

---

उ०—एवञ्च प्रकृतसूत्रविषये लडादिसिध्यर्थं विभाषाग्रहणम् । ज्ञापनफलन्तु पूर्वसूत्रे । यदि तु णमुल्विषये वाऽसरूपो नाऽस्तीत्येव ज्ञाप्यते तदोत्तरसूत्रविषयेऽपि क्त्वालडादयो न स्युः । तद्ध्वनयन्नाह—तत्र यदीति । आभीक्ष्ण्य इति सूत्रे इत्यर्थः । अभिमतमर्थम् । यत्र सह विधीयत इत्येवं रूपमित्यर्थः ॥ २४ ॥

स्वादुमि । भाविप्रत्ययविषये इति । णमुल्विषये इत्यर्थः । 'स्वादुमी'त्यनूद्य प्रत्ययविधानात्प्रत्यये भाविनि सति पूर्वमेव निपात्यत इति भावः । भावप्रत्ययविषय इति पाठेऽप्ययमेवाऽर्थः । यस्त्वेवं पाठं दृष्ट्वा भावप्रत्ययमात्रविषयं निपातनं, तेन क्त्वा योगेऽपीति । तन्न । स्वाद्वीं कृत्वा यवागूं भुङ्क्ते अस्वादु स्वादु कृत्वा भुङ्क्ते इति भाष्यप्रयोगविरोधात् । स्वाद्वीं कृत्वेतिवत् स्वादुङ्कारमित्यत्राऽपीकारः स्यात्तदभावाय निपातनमित्यर्थो भाष्यस्य । विहतेति । उकारान्तत्वाऽभावादित्यर्थः । अव्ययार्थमेवेति । अपूर्वविधानात्प्रति-

---

‡ स्वादुमि णमुल् ३ । ४ । २६ १—'मकारान्तनिपातनं क्रियते' पा० ।
* कर्मण्याक्रोशे कृञः खमुञ् ३ । ४ । २५, अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६७
† वोतो गुणवचनात् ४ । १ । ४४ २—'मकारान्तत्वं यथा स्याद्' ।

## आ च तुमुनः समानाधिकरणे ॥ ३ ॥

आ च तुमुनः‡ प्रत्ययाः समानाधिकरणे वक्तव्याः । केन ? अनुप्रयोगेण । किं प्रयोजनम् ? 'स्वादुङ्कारं यवागूर्भुज्यते देवदत्तेने'ति देवदत्ते तृतीया यथा स्यात् । किं च कारणं न स्यात् ? णमुलाभिहितः कर्तेति × । ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया । यदि सत्यभिधाने चाऽनभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति[1] तृतीया, यवाग्वां द्वितीया प्राप्नोति । किं कारणम् ? णमुलाऽनभिहितं कर्मेति ।

यदि पुनरयं[2] कर्मणि विज्ञायेत । नैवं शक्यम् । इह हि 'स्वादुङ्कारं यवागूं भुङ्क्ते देवदत्त' इति यवाग्वां द्वितीया न स्यात् । किं कारणं न स्यात् ? णमुलाभिहितं कर्मेति । ननु च भुजिप्रत्ययेनाऽनभिहितं कर्मेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया । यदि सत्यभिधाने चाऽनभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया, देवदत्ते तृतीया प्राप्नोति । किं कारणम् ? णमुलाऽनभिहितः कर्तेति ।

अथाऽनेन क्त्वायामर्थः—'पक्त्वौदनो भुज्यते देवदत्तेनेति ? बाढमर्थः । देवदत्ते तृतीया यथा स्यात् । किं च कारणं न स्यात् ? क्त्वयाऽभिहितः कर्तेति । ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया । यदि सत्यभिधाने चानभिधाने च कुतश्चिदभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया, ओदने द्वितीया प्राप्नोति । किं कारणम् ? क्त्वयानभिहितं कर्मेति ।

---

प्र०—ङेव विधेयः । नैतदस्ति । अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीष् स्यादेव । णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकाराभावार्थं च्व्यन्तस्य च मकारान्तार्थं विज्ञायते । अवश्यं चोत्तरार्थो णमुल् विधेय इति लाघवादिहैव विहितः । आ च तुमुन इति । पूर्वोक्तवाक्यार्थापेक्षया समुच्चय-

---

उ०—प्रसवस्य लघुत्वादिति भावः । 'आ च तुमुन' इत्यत्र चकारः किमपेक्ष इत्यत आह—पूर्वोक्तेति । मान्तनिपातन'मित्यस्य 'वक्तव्य'मिति शेषः । अभिविधौ चेति । एवञ्च तुमुनन्तधातुसंबन्धाऽधिकारविहिता अव्ययकृत इत्यर्थः । तुमुन्त्वसामान्यात् 'तुमुण्ण्वुला'वित्यस्याऽपि ग्रहणं बोध्यम् । अत एवाऽग्रे 'भोक्तुमोदनः पच्यते'

---

‡ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३ । ४ । ६५

× कर्तरि कृत् ३ । ४ । ६७ १—'भवति' पा० ।

२—णमुलित्यर्थः । एवं च णमुलाऽभिहितं कर्मेति द्वितीया न प्राप्नोति ।

यदि पुनरयं कर्मणि विज्ञायेत[1] ? नैवं शक्यम् । इह हि 'पक्त्वौदनं भुङ्क्ते देवदत्त' इत्योदने द्वितीया न स्यात् । किं च कारणं न स्यात् ? क्त्वयाऽभिहितं कर्मेति । ननु च भुजिप्रत्ययेनाऽनभिहितं कर्मेति कृत्वाऽनभिहिताश्रयो विधि[2]र्भविष्यति द्वितीया । यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया, देवदत्ते तृतीया प्राप्नोति । किं कारणम् ? क्त्वयानभिहितः कर्तेति ।

अथानेन तुमुन्यर्थः—भोक्तुमोदनः पच्यते देवदत्तेनेति ? बाढमर्थः । देवदत्ते तृतीया यथा स्यात् । किं च कारणं न स्यात् ? तुमुनाऽभिहितः कर्तेति । ननु च पचिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया । यदि सत्यभिधाने चाऽनभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया, ओदने द्वितीया प्राप्नोति । किं कारणम् ? तुमुनाऽनभिहितं कर्मेति [ कृ[3]त्वा ] ।

यदि पुनरयं कर्मणि विज्ञायेत[1] ? नैवं शक्यम् । इह हि भोक्तुमोदनं पचति देवदत्त इत्योदने द्वितीया न स्यात् । किं च कारणं न स्यात् ? तुमुनाभिहितं कर्मेति । ननु च पचिप्रत्ययेनानभिहितं कर्मेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया ।

प्र०—प्रतिपादनार्थश्चशब्दः । न केवलं स्वादुमि मान्तनिपातनमपि तु इदमपि वक्तव्यमित्यर्थः । शकधृषादिसूत्रविहितस्तुमुन् गृह्यते । अभिविधौ चाऽयमाकारः । णमुलेति । असत्यस्मिन्वचने 'कर्तरि कृ'दिति णमुला कर्तरि भाव्यमिति भावः । अनभिहिताश्रय इति । 'अनभिहिते' इति पर्युदास आश्रीयते न तु प्रसज्यप्रतिषेध इति भावः । यदि पुनरिति । 'अव्ययकृतः कर्मणी'ति वचनं

उ०—इत्युदाहरणं सङ्गच्छते । भाष्ये—समानाऽधिकरणे इति । स्वाऽन्वयिसमभिव्याहृताख्यातवाच्यकारके इत्यर्थः । भाष्ये—अनुप्रयोगशब्देनेदमेवोच्यते । समानाऽधिकरणे कारके वर्त्तमानाद्धातोरित्यर्थः । तेन तस्य धात्वर्थं प्रति विशेषणत्वमेवेति न बोधे वैषम्यम् । ननु सत्यन्यस्मिन्कारके कर्त्तैव कस्मादभिधीयतेऽत आह,—असत्यन्यस्मिन्निति । नन्वभिहिते प्रतिषेधात्कथमनभिहिताऽऽश्रयो विधिरत आह—पर्युदास इति । भिन्नधात्वर्थेति । पाके ओदनः, गमने ग्राम इत्यर्थः । 'अस्य वचनस्य प्रयोजनं दर्शयितु'मित्यन्वयः । भाष्ये—स इह दोषो न जायत इति । नन्वनभिहिताश्रया तृतीया सिद्धा, द्वितीयाप्राप्तिरूपो दोषश्च न, तत्किमत्र प्रयोजनमिति 'प्रयोजनं दर्शयितुमुपन्यास' इति कैयटाऽसङ्गतिरिति चेत्, अत्र वदन्ति—

१-'अव्ययकृतो भावे' इत्यस्य स्थाने 'अव्ययकृतः कर्मणि'इत्यङ्गीक्रियेतेति भावः ।
२—'ताश्रया विभक्तिर्भविष्यति' पा० । ३—क्वाचित्कः ।

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया, देवदत्ते तृतीया प्राप्नोति। किं कारणम्? तुमुनाऽनभिहितः कर्तेति।

अथाऽनेनेहार्थः—पक्त्वौदनं ग्रामो गम्यते देवदत्तेनेति? बाढमर्थः। देवदत्ते तृतीया यथा स्यात्। किंच कारणं न स्यात्? क्त्वयाभिहितः कर्तेति। ननु च गमिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया, यदुक्त'मोदने द्वितीया प्राप्नोती'ति स इह दोषो न जायते।

प्र०—यदि क्रियत इति भावः। अथानेनेति। 'आ च तुमुन' इत्यनेन वचनेनेत्यर्थः। अनेकप्रयोजनत्वमस्य वचनस्य प्रश्नद्वारेण दर्शयति। पक्त्वौदनमिति। भिन्नधात्वर्थविषयकर्मभेदेऽपि वचनस्याऽस्य दर्शयितुं प्रयोजनमुपन्यासः। अव्ययकृत इति। यद्येवं 'पक्त्वौदनं भुङ्क्ते देवदत्तः' 'पक्त्वौदनो भुज्यते देवदत्तेने'ति क्त्वाप्रत्ययेन कर्तृकर्मणोरनभिधानात्पाकापेक्षया तृतीयाद्वितीये कस्मान्न भवतः? उच्यते। आख्यातादिपदवाच्या क्रिया विशेष्यत्वात् प्रधानम्। विशेषणभूता त्वप्रधानम्। तत्क्रियासावन्त्योरपि शक्त्योस्तद्द्वारको गुणप्रधानभावः। तत्र 'प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत्प्रकाशते। प्रधानानुरोधाद्गुणानां तन्मुखप्रेक्षित्वात् प्रथक्त्वाद्विरुद्ध-

उ०—'दर्शयितु'मिति कैयटस्य,—विचारयितुमित्यर्थः। स दोष इह न जायते तस्मान्नार्थ एतदुदाहरणविषये इति भाष्यार्थः। यदि प्रवर्त्तेत तदैतत्प्रयोगाऽभावरूपमनिष्टञ्च स्यात्। तस्मात्समानशब्द एकपर्याय इति तात्पर्यम्। आख्यातादिपदवाच्येति। अत्रेदं तत्त्वम्, उपात्तकारकाणामप्रधानाऽन्वये सम्भवति न गुणे शाब्दाऽन्वयः, अर्थत एव तदीयकारकाकाङ्क्षाशान्तौ तत्राऽन्वये मानाऽभावात्। तद्द्वारक इति। क्रियाद्वारकः। गुणक्रियानिरूपिता शक्तिरपि गुणीभूतेति भावः। नन्वार्थाऽन्वयेऽपि तत्क्रियानिरूपिता शक्तिस्तत्राऽस्त्येव, अन्यथा 'ग्रामायाऽद्य गन्तुमिच्छती'त्यादि न स्यात्। एवञ्च द्वितीयादिकं स्यादेवाऽत आह—तत्र 'प्रधानेति। अत्र 'प्रधान'शब्देन सर्वतः प्रधानमाख्यातवाच्यक्रियैव, तच्छक्तेरेव वस्तुस्वभावमाहात्म्येन स्वसमानाऽधिकरणेतरशक्त्यभिभावकत्वात्। अत एव 'क्षुधम्प्रतिहन्तुं शक्य'मित्यपि भवतीति पस्पशायां कैयटेनोक्तं सङ्गच्छते। तत्र 'शक्य'मित्यस्याऽपि नामत्वेनेतरक्रियाम्प्रति गुणत्वेन स्वसमानाऽधिकरणेतरशक्त्यभिभवे सामर्थ्याऽभावादिति दिक्। अन्ये तु समानाऽधिकरणे इत्यस्याऽनुप्रयोग इत्येव व्याख्यानादयमपि प्रयोगश्चिन्त्य एव। तद्वचनवादिमतेऽसिद्धेः। न च तदाऽऽख्याताऽन्ताऽनुप्रयोगविषयं, 'क्षुदुपहन्तुं शक्य'मिति भाष्यप्रयोगाऽसिद्ध्यापत्तेः, तुमुना कर्मणोऽनभिधानाद्द्वितीयापत्तेरित्याहुः। पृथक्त्वा-

१—"प्रधानेतरेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥"
"प्रधानविषया शक्तिःप्रत्ययेनाभिधीयते। यदा, गुणे तदा तद्वदनुक्तापि प्रतीयते॥"
इति कारिके अत्र स्मरणीये।

तर्हि वक्तव्यम्—'आ च तुमुनः समानाधिकरणे' इति ? न वक्तव्यम् । 'अव्ययकृतो भावे भवन्ती'ति भावे भविष्यन्ति । किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते ? तुमर्थ इति वर्तते* ॥ तुमर्थश्च कः ? भावः ॥ २६ ॥

## वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३ । ४ । ३२ ॥

ऊलोपश्चास्यान्यतरस्यांग्रहणं शक्यमकर्तुम् । कथं गोष्पदप्रं वृष्टो देव इति ? प्रातिः पूरणकर्मा[1] तस्मादेष कः† । यदि को विभक्तीनां श्रवणं प्राप्नोति । श्रूयन्त एवात्र विभक्तयः । तद्यथा, एकेन गोष्पदप्रेणेति[2] ॥ ३२ ॥

प्र०—स्वकार्यारम्भाऽभावात् ॥ २६ ॥

वर्षे । तस्मादेष क इति । गोष्पदं प्राती'त्यातोऽनुपसर्गे क' इति कप्रत्ययः । क्रियाविशेषणत्वाच्च कर्मत्वनपुंसकत्वे । 'गोष्पदप्रकल्पं गोष्पदप्रन्तरा'मित्यादिप्रयोगसिध्यर्थमूलोपो न विधेयः । एषां प्रयोगाणां भाष्यकारेणानभ्युपगमात् । अनभ्युपगमस्तु ऊलोपप्रत्याख्यानान्यथानुपपत्त्या विज्ञायते । 'गोष्पदपूर'मित्यादेरपि घञा सिद्धत्वाण्णमुल् कस्मान्न प्रत्याख्यायते । स्वरे दोषप्रसङ्गात् । तथा हि–यदि करणे घञं विधाय षष्ठीतत्पुरुषः क्रियते तदा थाथादिसूत्रेणान्तोदात्तत्वं भवति । भावे तु घञि बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । णमुलि तु लित्स्वरेणोकार उदात्तः । गोष्पदपूरंतरामित्यादि च सिध्यति । 'गोष्पदप्र'मित्यत्र तु नास्ति स्वरभेदः । कप्रत्यये थाथादिस्वरेणान्तोदात्तत्वाण्णमुलि ऊलोपे कृते पूर्वस्योदात्तभाजोऽभावात् कृत्स्वरेणाऽन्तोदात्तत्वात् ॥ ३२ ॥

उ०—दिति । भिन्नत्वाद्विरुद्धं यत्स्वकार्यं तदारम्भकत्वाऽभावादित्यर्थः । एतेन 'यदा यत्र शाब्दोऽन्वयस्तदा तद्विभक्तेः साधुत्वम्, ओदनं पक्त्वा भुज्यते, पक्त्वौदनो भुज्यत इत्युभयमपि साध्विति परास्तम् । प्रकृतसूत्रस्थभाष्यवार्त्तिकयोरनुक्तिसम्भवग्रस्तत्वाऽऽपत्ते'रित्यलम् । यत्तु हरदत्तेन 'वयं तु ब्रूमः—सकृच्छ्रुतस्य युगपदुभाभ्यां सम्बन्धाऽभावादेकेनैव प्रधानेन शाब्दोऽन्वयः, इतरेण तु सन्निधानादार्थ इति गुणनिरूपिता शक्तिस्तत्र नाऽस्त्येवे'त्युक्तं, तन्न, ग्रामाय गन्तुमिच्छतीति सन्सूत्रस्थभाष्यप्रयोगविरोधाऽऽपत्तेः, ग्रामस्य गतिकर्मत्वाऽभावेन चतुर्थ्यप्राप्तेः । मम तु शाब्दाऽन्वयाऽभावेऽपि तन्निरूपितकर्मत्वस्य सत्त्वेन परत्वाद्'गत्यर्थकर्मणी'त्यस्य प्रवृत्त्या न दोषः । एवं 'ग्रामाय गत्वा द्रक्ष्यती'त्यपि साध्विति दिक् ॥ २६ ॥

वर्षप्रमाणे । गोष्पदं प्रातीति । पूरयतीत्यर्थः । नन्वस्मात्कल्पपि वृत्तौ 'प्र'मित्यनुस्वारश्रवणं न स्यात्, णमुलन्तात्तु भवतीत्यत आह—गोष्पदप्रमिति । करण इति । तथा सति वृष्धात्वर्थेन सामानाऽधिकरण्यं भवति । बहुव्रीहाविति । गोष्पदस्य पूरः पूरणं यत्र क्रियायामित्यर्थः । लित्स्वरेणोकार इति । तत उपपदसमासे कृदुत्तरपदप्रकृतिस्वरः । कृत्स्वरेणेति । प्रत्ययस्वरेण प्रत्ययस्योदात्तत्वे कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः ॥ ३२ ॥

* तुमर्थे सेसेन·········तवैतवेङ्तवेनः ३ । ४ । ६

१–'कर्म'शब्दोऽर्थपर्यायः ३ । २ । १४ सूत्रभाष्ये २३२ तमे पृष्ठे विमर्शटिप्पणी द्रष्टव्या ।

† आतोऽनुपसर्गे कः ३ । २ । ३ २–इतिः क्वचिन्न ।

## करणे हनः ॥ ३ । ४ । ३७ ॥

### हनः करणेऽनर्थकं वचनं हिंसार्थेभ्यो णमुल्विधानात् ॥ १ ॥

हनः करणेऽनर्थकं वचनम् । किं कारणम् ? 'हिंसार्थेभ्यो णमुल्विधानात्' । हिंसार्थेभ्यो णमुल्विधीयते‡ तेनैव सिद्धम् ।

### अर्थवत्त्वहिंसार्थस्य विधानात् ॥ २ ॥

अर्थवत्तु हन्तेर्णमुल्वचनम् । कोऽर्थः ? 'अहिंसार्थस्य विधानात्' । अहिंसार्था-णमुल्[1] यथा स्यात् । अस्ति पुनरयं क्वचिद्धन्तिरहिंसार्थो यदर्थो विधिः स्यात् ? अस्तीत्याह । पाण्युपघातं वेदिं हन्ति ।

### नित्यसमासार्थं च ॥ ३ ॥

नित्यसमासार्थश्च हिंसार्थादपि हन्तेरनेन विधिरेषितव्यः × ॥ कथं पुनरिच्छतापि हिंसार्थाद्धन्तेरनेन विधिर्लभ्यः । अनेनाऽस्तु तेन वेति तेन स्याद्विप्रतिषेधेन ।

### 'हन्तेः पूर्वविप्रतिषेधो वार्त्तिकेनैव ज्ञापितः' ।

यदयं 'नित्यसमासार्थं चे'त्याह, तज्ज्ञापयत्याचार्यो 'हिंसार्थादपि हन्तेरनेन विधिर्भवती'ति ॥ ३७ ॥

प्र०—करणे । बाहुल्येन हन्तिर्हिंसार्थो दृश्यत इति मत्वाह–हन इति । हन्तेः पूर्वविप्रतिषेध इति । यद्येवं हिंसार्थानामित्यत्र 'दण्डोपघातं गाः कालयती'त्युदाहरणं नोपपद्यते । नैष दोषः । यत्रैक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेष्यभावमनुभवति सोऽस्य विषयः । 'कषादिषु यथाविध्यनुप्रयोग' इति वचनात्, अन्यत्र भिन्नधात्वर्थसंबन्धे तु हिंसार्थानामित्यनेनैव णमुल् भवति ॥ ३७ ॥

उ०—करणे हनः । बाहुल्येनेति । अन्ये तु हन्तिर्हिंसार्थ एव, पद्धत्यादौ हिंसारोप इत्याहुः । भाष्ये—पाण्युपघातमिति । पाणिना वेदिं हन्तीत्यर्थः । हिंसा च प्राणिविषयेति भावः । सामान्येति । यत्राऽनुप्रयोगणमुलन्तयोः सामान्यविशेषभावेनाऽन्वयस्तत्रेदमेव, यत्र तु भेदसंबन्धेनाऽन्वयस्तत्र तेनैवेति भावः । हिंसार्थानामिति णमुलि 'तृतीयाप्रभृतीन्यन्यतरस्या'मिति वैकल्पिकः समासः ॥ ३७ ॥

‡ हिंसार्थानां च समानकर्मकाणाम् ३ । ४ । ४८

[1]—'अहिंसार्थस्य हन्तेर्णमुल्' पा० ।

× हिंसार्थानां च समानकर्मकाणाम् ३ । ४ । ४८; तृतीयाप्रभृतीन्यन्यतरस्याम् २ । २ । २१

## अधिकरणे बन्धः ॥ ३ । ४ । ४१ ॥

इह कस्मान्न भवति—ग्रामे बन्ध इति? एवं वक्ष्यामि—'अधिकरणे बन्धः संज्ञायाम् । [ ३ । ४ । ४१-४२ ] ततः—'कर्त्रोर्जीवपुरुषयोर्नशिवहोः' [ ४३ ] इति । कथमट्टालिकाबन्धं बद्धः, चण्डालिकाबन्धं बद्धः? 'उपमाने कर्मणि च' [ ४५ ] इत्येवं भविष्यति ॥ ४१ ॥

## तिर्यच्यपवर्गे ॥ ३ । ४ । ६० ॥

अयुक्तोऽयं निर्देशः । तिरश्चीति भवितव्यम् । सौत्रोऽयं निर्देशः[3] ॥ ६० ॥

## नाधार्थप्रत्यये च्व्यर्थे ॥ ३ । ४ । ६२ ॥

अर्थग्रहणं किमर्थम्? 'नाधाप्रत्यय' इतीयत्युच्यमान इहैव स्यात्—द्विधाकृत्य । इह च न स्यात्—द्वैधंकृत्य* । अर्थग्रहणे पुनः क्रियमाणे न दोषो भवति । नाधाप्रत्यये च सिद्धं भवति, यश्चान्यस्तेन समानार्थः ।

---

प्र०—अधिक । ग्रामे बन्ध इति । णमुलि सति 'ग्रामबन्धं बद्ध' इति प्राप्नोति ॥ ४१ ॥

तिर्य । सौत्रो निर्देश इति । अनुक्रियमाणरूपविनाशप्रसङ्गस्तु न परिहारो, न हि प्रयोजनानुवर्ति प्रमाणम् ॥ ६० ॥

नाधा । द्वैधं कृत्येति । यदा 'द्वित्र्योश्च धमु'ञित्यादौ प्रत्ययपक्षस्तदेतदर्थं ग्रहणस्य प्रयोजनम् ।

---

उ०—अधिकरणे । ग्रामे बन्ध इतीति । यद्यपीदं वाऽसरूपन्यायेन घञा सिद्धं, तथाऽप्यनिष्टमपि प्राप्नोतीत्याह—ग्रामबन्धमित्यादिना । 'ग्रामे बद्ध' इति त्वपपाठः, कर्मणि क्तस्य विषये भावविषयणमुलोऽप्राप्तेः । यद्यप्ययं साध्यो भावः, स च सिद्धस्वभावस्तथापि सिद्धत्वस्याऽऽधिक्येऽपि तस्याऽक्षतेः । भाष्ये—एवं वक्ष्यामीति । 'संज्ञाया'मित्यनेनैकवाक्यतापन्नम् । कथमिति । संज्ञात्वाऽभावात्प्रश्नः । उपमान इति । एवमनधिकरणविषयेऽपि तेनैव साध्यमिति भावः ॥ ४१ ॥

तिर्यच्य । तिर्यक्शब्दोऽनृजुवाची, अपवर्गः—समाप्तिस्तद्वाची च । न हीति । सौत्रत्वेन शास्त्राऽप्रवृत्तौ तु तद्विनाशप्रसङ्गो बीजमित्यन्यदिति भावः ॥ ६० ॥

नाधाऽर्थप्रत्यये । तथा चेति । तदा चेत्यर्थः । द्वैधंकृत्येति । डान्तेन समासे विभक्तिलोपः ।

---

१–'बद्ध' इति पा० । 'ग्रामे बद्ध' इति त्वपपाठः, कर्मणि क्तस्य विषये भावविषयणमुलोऽप्राप्तेः' इति नागेशः ।

२—'बन्धविशेषाणां नामधेयान्येतानी'ति काशिकावृत्तिः ( ३ । ४ । ४२ )

३–'सौत्रो निर्देशः' इति पा० ।

* संख्याया विधार्थे धा; द्वित्र्योश्च धमुञ् ५।३।४२; ४५

अथ प्रत्ययग्रहणं किमर्थम् ? इह मा भूत्,—हिरुक्कृत्वा पृथक्कृत्वा ॥६२॥

अन्वच्यानुलोम्ये ॥ ३ । ४ । ६४ ॥

अयुक्तोऽयं निर्देशः । अनूचीति भवितव्यम् । सौत्रोऽयं निर्देशः ॥ ६४ ॥

कर्तरि कृत् ॥ ३ । ४ । ६७ ॥

किमर्थमिदमुच्यते ?

कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् ॥ १ ॥

कर्तरि कृतो भवन्तीत्युच्यते [ किं प्रयोजनम् ? ] 'अनादेशे स्वार्थविज्ञानात्' । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति । तद्यथा,—'गुप्तिज्किद्भ्यः सन्' [३।१।५] 'यावादिभ्यः कन्' [ ५ । ४ । २९ ] इति । एवमिमे प्रत्ययाः कृतः स्वार्थे स्युः । स्वार्थे मा भूवन् कर्तरि यथा स्युरित्येवमर्थमिदमुच्यते ।

नैतदस्ति प्रयोजनम् । यमिच्छति स्वार्थे, आह तम्—'भावे घञ्भवती'ति† । कर्मणि तर्हि मा भूवन्निति । कर्मण्यपि यमिच्छत्याह तम्—'घः कर्मणि ष्ट्रन्'

प्र०—आदेशपक्षे तु स्थानिवद्भावाद्धाग्रहणेन ग्रहणात्सिध्यति । तथा च 'धमुञन्तात्स्वार्थे डदर्शन'-मिति डप्रत्यय उदाहार्यो 'द्वैधकृत्ये'ति । 'ना'ऽर्थमप्यर्थग्रहणं कर्तव्यमन्यथा निरनुबन्धकपरिभाषया नाऽत्रो ग्रहणं न स्यात् ॥ ६२ ॥

कर्तरि । किमर्थमिति । वक्ष्यमाणोऽभिप्रायः । अनादेश इति । यत्र वचनेनाऽर्थो नादिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थ एव प्रत्ययो भवति । यमिच्छतीति । असत्यस्मिन् सूत्रे 'घ'ञित्येतावत्सूत्रं कर्तव्यम् । धातोर्घञ्भवतीति । तत्रानिर्दिष्टत्वाद्भावे घञ् भविष्यति । ततः 'पदरुजविशस्पृश' इति द्वितीयं सूत्रं कर्तव्यं, ततश्च भाव इति न कर्तव्यम् । क्रियमाणं तु निय-

उ०—एतद्भाष्यस्वरसात्प्रत्ययपक्ष एव तत्र न्याय्य इति तत्त्वम् । नाऽर्थमपीति । निरनुबन्धकमादाय रूपाणां सिद्धेरनिष्टाऽभावाच्च तदर्थत्वं चिन्त्यम् । 'हिरु'गिति । नाऽर्थत्वाभ्राप्तिः ॥ ६२ ॥

कर्त्तरि कृत् । ननु 'भाव' इति सूत्रं धातुमात्राद्घञ्विषये आवश्यकमत आह—घञित्येतावदिति । भावपदोपादानं क्तिनाऽप्यन्यप्रत्ययवत्स्वार्थे विधानेनैव भावे सिद्धमिति भावः । ततः पदरुजेति । कर्त्रर्थ-मिदम् । ष्ट्रन्प्राप्नोतीति । 'घः ष्ट्र'न्नित्येकं वाक्यं विध्यर्थम्, ततः 'कर्मणी'ति नियमार्थमिति भावः । परिहरति—एकमिदं वाक्यमिति । कथं कारकान्तरे इति । एकवाक्येऽपि विशेषणोपादानं नियमफल-

१—क्वचिदेव ।

† भावे ३ । ३ । १८

[ ३ । २ । १८१ ] इति ॥ करणाधिकरणयोस्तर्हि मा भूवन्निति । करणाधिकरणयोरपि यमिच्छत्याह तम्—'ल्युट्करणाधिकरणयोर्भवती'ति‡ ॥ सम्प्रदानापादानयोस्तर्हि मा भूवन्निति । संप्रदानापादानयोरपि यमिच्छत्याह तम्—'दाशगोघ्नौ संप्रदाने' [ ३ । ४ । ७३ ] 'भीमादयोपादाने' [ ७४ ] इति ॥ य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेण वचनं कर्तर्येव भविष्यति ।

तदेव तर्हि प्रयोजनम्—'स्वार्थे मा भूव'न्निति । ननु चोक्तं 'यमिच्छति स्वार्थे आह तम्—'भावे घञ्भवती'ति । अन्यः स भावो बाह्यः प्रकृत्यर्थात् । अनेनेदानीमाभ्यन्तरे भावे स्युः, तत्र मा भूवन्निति कर्तृग्रहणम् । कः पुनरेतयोर्भावयोर्विशेषः ? उक्तो भावभेदो भाष्ये × ॥ अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

तत्र ख्युनादिप्रतिषेधो नानावाक्यत्वात् ॥ २ ॥

तत्र ख्युनादीनां प्रतिषेधो वक्तव्यः । ख्युनादयः+ कर्तरि मा भूवन्निति ।

प्र०—मार्थं भविष्यति—'घञेव भावे नान्य' इति । ततो धात्वर्थाक्षिप्ते कर्तरि कृद्भविष्यति नार्थः सूत्रेणेत्यर्थः । कर्मणीति । तस्यापि धात्वर्थेनाक्षेपादिति भावः । धः कर्मणि ष्ट्रन्निति । 'ष्ट्रन्नेव कर्मणि नान्य' इति नियमो विज्ञास्यते । यद्येवं कर्मणो नियमात्प्रत्ययो न नियत इति कारकान्तरेपि ष्ट्रन् प्राप्नोति । नैष दोषः । एकमिदं वाक्यं 'धः कर्मणि ष्ट्र'न्निति । तेन च कर्मणि विधीयमानः कथं कारकान्तरे स्यात् । अथवा द्वितीयो नियमः करिष्यते 'कर्मण्येव ष्ट्र'न्निति । य इदानीमिति । ननु 'कर्तरि भुवः खिष्णुच्खुकञौ' 'कर्तरि चर्षिदेवतयो'रिति कर्तुरपि नियमः प्राप्नोति । नैष दोषः । उभयत्र करणनिवृत्त्या कर्तृश्रुतिर्विध्यर्थैव न नियमार्था । उक्त इति । 'सार्वधातुके य'गित्यत्र बाह्याभ्यन्तरयोर्भावयोर्विशेषो दर्शितः । ननु चेति । ख्युनादिषु करणादिरर्थो

उ०—मित्यर्थः । नन्वेवं विधित्वमेव स्यात्, विशेषणोपादानात् कर्मण्येवेत्येव स्यान्न तु ष्ट्रनेवेतीत्यरुचेराह—अथवेति । आवृत्त्येति भावः । धात्वर्थाक्षिप्ते कर्मण्यपि सिद्धे नियमार्थत्वमिति तात्पर्यम् । एवं करणाधिकरणयोरित्यत्राऽपि बोध्यम् । सार्वधातुके यगित्यत्रेति । नन्वाभ्यन्तरेऽपि भावे न भविष्यन्ति, 'तुमर्थे से'इति तुमर्थग्रहणेनाभ्यन्तरे भावे सयादीनां नियमादिति चेन्न; सति ह्यस्मिन्नत्र तुमर्थग्रहणेन 'भाव'ग्रहणम्, असति त्वस्मिन् विधित्वसम्पत्तये तुमर्थग्रहणेन कर्तुरेव ग्रहणं स्यात्, तुमुनोऽण्वुकन्यायेन कर्त्रर्थेव प्रसक्तेरित्याशयः । लः कर्मणि च भावे चेति । भावग्रहणे तु न नियमः शक्यो विज्ञातुम्, 'अकर्मकेभ्य' इति विशेषणाय तदावश्यकत्वात् । भाष्ये—ख्युनादयः कर्त्तरीति । अयं भावः,—'स्वस्वविधायकैर्विहितानाम्प्रत्ययानां पश्चादनेनाऽर्थोऽऽदेशन'मिति पक्षे यथा तृजादीनामर्थ आदिश्यत एवं ख्युनादीनामप्यादिश्येताऽविशेषात् । ततश्च

‡ करणाधिकरणयोश्च ३ । ३ । ११७

× सार्वधातुके यक् ३ । १ । ६७ सूत्रभाष्ये भावभेद उक्तः ।

+ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ३ । २ । ५६

ननु च करणे ल्युनादयो विधीयन्ते ते[1] कर्तरि न भविष्यन्ति । तेन च करणे स्युरनेन च कर्तरि । ननु चापवादत्वाल्ल्युनादयो बाधकाः स्युः । न स्युः । किं कारणम् ? 'नानावाक्यत्वात्' । नानावाक्यं तच्चेदं च । समानवाक्येऽपवादैरुत्सर्गा बाध्यन्ते, नानावाक्यत्वाद्बाधनं न प्राप्नोति ।

तद्वच्च कृत्येष्वेवकारकरणम् ॥ ३ ॥

एवं च कृत्वा कृत्येष्वेवकारः क्रियते,—'तयोरेव कृत्यक्तखलर्थाः' [ ३ । ४ । ७० ] इति, 'भावे चाकर्मकेभ्य' इति* ॥ किं प्रयोजनम् ?

प्र०—विशेषविहितत्वात्कर्तु र्बाधको भविष्यतीति भावः । नाना वाक्यत्वादिति । 'इह ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये'त्यभिन्नकालत्वादेकं वाक्यं विशिष्टस्य दानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते । यदा तु कालभेदेन वाक्यद्वयमुच्चार्यते 'पूर्वाह्णे ब्राह्मणभोजनप्रकरणे दधि ब्राह्मणेभ्यो दीयता'मिति । अपराह्णे तु 'तक्रं कौण्डिन्याय दीयता'मिति । तदा तक्रेण दधि न बाध्यते । तथेहापि कालभेदेन वाक्यद्वयोच्चारणाद्बाध्यबाधकभावो नास्तीत्यर्थः । यत्त्विगादिवाक्ये 'यद्येकं वाक्यं तच्चेदं च ततस्तच्छेषोऽथ नानावाक्यं तदा तदपवाद' इत्युक्तम् । तदसंभवाश्रयेण । यदाऽङ्गस्येति इगपेक्षावयवावयविसंबन्धे षष्ठी तदा स्थानषष्ठ्यभावादलोन्त्यस्येत्यस्यानुपस्थानं, तदेव चापवादत्वम् । ल्युनादयस्तु कृत्त्वादनेन कर्तरि स्युः । करणादिश्रुत्या च करणादिषु । तत्राऽनेकस्यार्थस्य युगपदभिधानाऽसंभवात् पर्यायः स्यात् । कदाचित्कर्तरि, कदाचित्करणादिषु ।

तद्वच्चेति । योऽयमर्थ उक्तस्तेन तुल्यमेवकारकरणमित्यर्थः । तथाहि,—कृत्त्वात्कर्तरि कृत्यादयः प्राप्ता एवकारेण कर्तु रपकृष्यन्ते, भावकर्मणोरेव यथा स्युरित्येवमर्थमित्यर्थः । 'भावे

उ०—तेऽप्यनेन कर्त्तरि स्युः, तत्तद्वाक्ये उपादानात्करणादिषु चेति करणादिरर्थो विशेषविहितत्वादिति । कार्यशब्दवादेऽर्थस्याऽपि शास्त्रमात्रगम्यत्वेन विधेयत्वमिति भावः । भाष्ये—ननु चाऽपवादत्वादिति । ल्युनादिशास्त्रोपात्ताः करणादय इत्यर्थः । इहाऽपि कालभेदेनेति । पूर्वं करणे विधानं, तदा तु न कर्त्रर्थोपस्थितिरिति बाधाऽभावः, विधानोत्तरं पश्चादुपस्थितस्य कथं बाधः, तत्प्राप्तिकाले तस्य नाऽप्राप्त्यभावात् । यथा अपराह्णतक्रदानेन पूर्वाह्णदधिदानस्य न बाध इति भावः । ननु 'इको गुणवृद्धी' इति सूत्रे नानावाक्यत्वमङ्गीकृत्य कथमपवादत्वोक्तिरत आह—यत्त्विति । तदसम्भवाश्रयेणेति । 'अलोऽन्त्यस्ये'त्यस्योपस्थित्यसम्भवाऽभिप्रायेणेत्यर्थः; तदेवाह—यदेति । कृत्त्वादनेनेति । विध्युत्तरकालमर्थसमर्पकेणेत्यर्थः । तत्राऽनेकस्येति । कर्तृकरणयोः स्वातन्त्र्याऽस्वातन्त्र्याभ्यां भिन्नकत्त्वादिति भावः । योऽयमिति । अबाधकारण-

१—'तेन कर्तरि न' पा० ।

* लः कर्मणि च भावे चाकर्मकेभ्यः ३ । ४ । ६९

**तच्च भव्याद्यर्थम् ॥ ४ ॥**

भव्यादिषु† समावेशः सिद्धो भवति । गेयो माणवकः साम्नाम् । गेयानि माणवकेन सामानीति ।

**ऋषिदेवतयोस्तु कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्य ॥ ५ ॥**

यदयं 'कर्तरि चर्षिदेवतयोः' [ ३ । २ । १८६ ] इति सिद्धे सति समावेशे समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यो 'न भवति समावेश' इति ।

किमर्थं तर्हि कृत्येष्वेवकारः क्रियते ?

**एवकारकरणं च चार्थे ॥ ६ ॥**

एवकारकरणं च चाऽर्थे द्रष्टव्यम् । तयोर्भावकर्मणोः कृत्या भवन्ति, भव्यादीनां कर्तरि चेति ॥ किं प्रयोजनम् ?

---

प्र०—चाऽकर्मकेभ्य' इत्यनेनाधिकारसहितं वाक्यं दर्शयति । किं प्रयोजनमिति । एवकारेणाऽन्यत्र समावेशज्ञापनेन किं प्रयोजनमिति प्रश्नः । तच्च भव्याद्यर्थमिति । भव्यगेयादिसूत्रे वाग्रहणं न कर्तव्यम्, तदन्तरेणापि भव्यादयः कर्तरि भवन्तीत्यनेन समावेशज्ञापनादेवकारकरणाद्भावकर्मणी न बाधिष्येते इत्यर्थः । इदानीं 'तत्र ल्युनादिप्रतिषेध' इत्यस्य परिहारमाह—ऋषिदेवतयोरिति । कृद्भिरिति जातौ बहुवचनम् । अत्र च यथासंख्यं वार्तिककारस्यानभिमतम् । यथासङ्ख्ये हि चशब्दस्य ज्ञापकत्वन्न स्यात्, समावेशाऽभावात् । भव्याद्यर्थमिति । भव्यगेयादिसूत्रं न कर्त्तव्यं

---

उ०—नानावाक्यस्वरूप इत्यर्थः । तेन तुल्यमिति । तस्याऽपि तद्बोधकत्वादिति भावः । इत्येवमर्थमिति । यदि बाध्यबाधकभावः स्यात्तदा भावकर्मभ्यां कर्त्तुर्बाधसम्भवात्तद्वैयर्थ्यं स्पष्टमेव । तस्मादेवकारेण ज्ञाप्यते—'अर्थस्याऽर्थान्तरं न बाधकमिती'ति भावः । ननु 'भावे चे'त्याद्यंशोच्चारणं किमर्थमत आह—भावे चेत्यादि । ननु कृत्यादीनां कर्त्तर्यप्रवृत्तिरेवकारप्रयोजनमिति ज्ञातत्वात्प्रश्नाऽनुपपत्तिरत आह—एवेति । 'वा'ग्रहणेन तत्सिद्धमत आह—भव्येति । कर्त्तरि भवन्तीति । 'कर्त्तरि कृदि'ति शास्त्रादिति भावः । इति हेतोर्न कर्त्तव्यमित्यन्वयः । नन्वेवमपि कर्त्रा भावकर्मणोर्बाधः स्यादत आह—अनेनेति । अनेन—कर्त्रा । समावेशेति । करणव्युत्पत्त्या समावेशज्ञापकादेवकारकरणादित्यर्थः । प्रत्ययस्यैकत्वादर्थयोरपि द्वित्वाद्बहुवचनमनुपपन्नमत आह—जाताविति । जातिविवक्षायामेकवचनस्य, व्यक्तिविवक्षायां बहुवचनस्य साधनेन भाष्ये 'जात्याख्याया'मिति सूत्रप्रत्याख्यानादिदञ्चिन्त्यम् । प्रयोगभेदेनाऽर्थबाहुल्याद्बहुवचनमिति वक्तुं

---

† भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३ । ४ । ६८

## तच्च भव्याद्यर्थम् ॥ ७ ॥

भव्यादिषु समावेशः सिद्धो भवति । गेयो माणवकः साम्नाम् । गेयानि माणवकेन सामानीति ।

यत्तावदुच्यते—'ऋषिदेवतयोस्तु कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्ये'ति, नैतज्ज्ञापकसाध्यमपवादैरुत्सर्गा बाध्यन्त इति । एष एव न्यायो यदुतापवादैरुत्सर्गा बाध्येरन् । ननु चोक्तं—'नानावाक्यत्वाद्बाधनं न प्राप्नोती'ति । न विदेशस्थमिति कृत्वाऽतो नाना वाक्यं भवति । विदेशस्थमपि सदेकं वाक्यं भवति । तद्यथा,—द्वितीयेऽध्याये लुगुच्यते‡, तस्य चतुर्थषष्ठयोरलुगुच्यतेऽपवादः+ ।

प्र०—भवतीत्यर्थः । अन्ये तु कृत्यादयोऽनभिधानात्कर्त्तरि न भविष्यन्तीति भावः । इदानीं भाष्यकारो वार्तिकदूषणमाह—यत्तावदिति । न विदेशस्थमिति । न कालभेदान्नानावाक्यत्वं भवति । शास्त्रे विदेशस्थानामप्यवान्तरवाक्यानामाकाङ्क्षावशादेकवाक्यत्वदर्शनात् । देशग्रहणं चाऽत्र कालस्योपलक्षणम् । शब्दक्रमस्य कालकृतत्वात् । चतुर्थषष्ठयोरिति । चतुर्थे 'गोत्रेऽलुगची'ति । षष्ठे तु 'अलुगुत्तरपदे' इति । तदुक्तं हरिणा—

'अनेकाख्यातयोगेपि वाक्यं न्यायापवादयोः ।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥
नियमः प्रतिषेधश्च विशेषश्च तथा सति ।
द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः ॥' इति ।

उ०—युक्तम् । भाष्ये—कृद्भिरित्यस्य कृदर्थकर्तृकरणयोरित्यर्थः । ननु तत्र ऋषौ करणे देवतायां कर्त्तरीत्यन्वयात्समावेश एव नास्तीत्यत आह—अत्र च यथासङ्ख्यमिति । तत्सत्त्वे हि तथा संबन्धार्थमेव चस्य सार्थकत्वात्सति प्रयोजने ज्ञापकत्वं न स्यादिति भावः । भाष्ये—समावेशवचनमिति । समावेशबोधकचकारवचनमित्यर्थः । सूत्रं नेति । भव्यादीनां कर्त्तरि चेति भाष्यस्वरसेन सूत्राऽभावस्यैव लाभादिति भावः । ननु तत्सूत्राऽभावे पूर्वोक्तरीत्या अन्येऽपि कृत्याः कर्त्तरि स्युरत आह—अन्ये त्विति । यत्तावदितीति । कृदुत्पत्तिवाक्यानामेवायं शेषः । तथा च समानकालतयाऽनिर्दिष्टार्थेषु चरितार्थस्याऽस्य विशेषार्थनिर्देशेन बाध इति भावः । यद्वा तेषामर्थांशे निराकाङ्क्षत्वात्तेष्वनुपस्थितिरेव । तृजादिविधौ तु तेषामर्थाऽऽकाङ्क्षासत्वात् 'कर्त्तरी'त्यस्याऽप्यर्थवत्याकाङ्क्षासत्त्वेनोभयाऽऽकाङ्क्षया तत्रैवाऽन्वयो न ल्युनादिषु, साक्षादर्थनिर्देशेन तेषां निराकाङ्क्षत्वादिति तत्त्वम् । अनेकाख्यातयोगः—'यण् भवति' 'दीर्घो भवती'त्यादिरूपः । न्यायः—उत्सर्गः । 'विधिशेष' इति पाठे नियमप्रतिषेधौ विधिशेषावेव न तु स्वतन्त्रावित्यर्थः ।

१–एवकारकरणं च चार्थे तच्च भव्याद्यर्थम्' इत्येकमेव वार्तिकं क्वचिद् दृश्यते ।
‡ यञञोश्च; सुपो धातुप्रातिपदिकयोः २ । ४ । ६४; ७१
+ गोत्रेऽलुगचि ४ । १ । ८९; अलुगुत्तरपदे ६ । ३ । १

यदप्युच्यते—'एवकारकरणं च चार्थे' इति, कथं पुनरन्यो नामाऽन्यस्यार्थे वर्त्तते । कथमेवकारश्चार्थे वर्तते ? स एष एवकारः स्वार्थे वर्त्तते । किं प्रयोजनम् ? ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्य 'इत* उत्तरं समावेशो भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'तच्च भव्याद्यर्थम्' । भव्यादिषु समावेशः सिद्धो भवति । गेयो माणवकः साम्नाम् । गेयानि माणवकेन सामानीति ।

यद्येतज्ज्ञाप्यत इहापि समावेशः प्राप्नोति—'दाशगोघ्नौ संप्रदाने' [३।४।७३] 'भीमादयोऽपादाने' [ ७४ ] इति । अत्रापि सिद्धं भवति । यदयं 'मादिकर्मणि क्तः कर्तरि च' [ ७१ ] इति सिद्धे समावेशे समावेशं[3] शास्ति तज्ज्ञापयत्याचार्यः—'प्रागमुतः† समावेशो भवती'ति ।

किं पुनरयं प्रत्ययनियमः,—'धातोः परोऽकारोऽकशब्दो वा नियोगतः कर्तारं

प्र०—कथमिति । एवकारस्य लौकिके प्रयोगे न क्वचिच्चाऽर्थवृत्तित्वं दृश्यत इति भावः । उत्तरमिति । 'कर्तरि कृ'दित्यस्मादुत्तरमित्यर्थः । तच्चेति । भव्यगेयादिसूत्रे 'वे'ति न कर्तव्यं भवतीत्यर्थः । यदयमिति । 'आदिकर्मणि क्तः कर्तरी'त्येतावदस्तु नाऽर्थश्चशब्देन । समावेशोप्येवकारज्ञापितो भविष्यति । कृतस्तु 'च'शब्दो ज्ञापयति—आदिकर्मणीत्यस्मात् सूत्रात् परेषु समावेशो न भवतीति । किं पुनरिति । सिद्धे शब्दार्थसंबंध इति यदुक्तं तत्स्मारयितुं विचार्यते । प्रत्ययनियम इति । धातोः परः कृत्प्रत्ययः कर्तरि वर्तताममिति कर्तृलक्षणेऽर्थे कृत्प्रत्ययो नियम्यते । नियोगत इति । 'कर्तरि कृ'दित्यस्मादाचार्यनियोगादित्यर्थः । कार्यशब्दाभ्युपगमे

उ०—तदुदाहरणमाह-द्वितीये इति । 'विशेषश्च तथे'ति पाठे विशेषोऽपवादः । एतन्नितयं विध्येकवाक्यतापन्नमित्यर्थः । न कर्त्तव्यं भवतीति । न च चार्थे वृत्तिमाश्रित्य सूत्रमेव न कार्यम्, अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति प्रागुक्तं युक्तम्, अनभिधानेन प्रत्याख्यानस्याऽयुक्तत्वादित्याहुः । एवञ्च स्वार्थे कृतां व्यावृत्तये सूत्रं कार्यं, ख्युनादिषु च करणरूपार्थेन बाधान्न दोषः । तत्र 'किमिदमपूर्वतयाऽर्थं बोधयत्प्रत्ययमितरार्थेभ्यो व्यावर्त्तयति, किं वा तत्राऽर्थे लोके प्रयुज्यमानस्यैव कृदादिसंज्ञेति प्रतिपादयती'ति सन्दिह्य,—तत्र द्वितीयस्य सिद्धान्तत्वकरणेनाऽपि'ख्युनादीनां तत्र प्रतिषेध' इति वार्तिकं प्रत्याख्यातुमुपक्रमते भाष्ये—किम्पुनरिति । कृत्प्रत्ययो नियम्यत इति । एतावानेव सूत्रव्यापारः, 'कर्त्तारं ब्रुवन् कृत्संज्ञे'त्यादि तु सकलशास्त्रैकवाक्यतालाभाऽर्थं कथनमिति बोध्यम् । ननु सिद्धशब्दाऽन्वाख्याने कथमाचार्यनियोगादर्थविशेषे प्रवृत्तिरित्यत आह—कार्यशब्देति । तत्राद्यपक्षे कृत्प्रत्ययः कर्त्तरि वर्त्ततामित्युक्तेऽर्थादन्यत्राऽऽवृत्त्या प्रत्ययनियमः, द्वितीये त्वर्थस्य लोकत एव सिद्धत्वात्तद्विध्यसम्भवेन कृत्संज्ञाया अप्यधिकारेण सिद्धत्वेन कर्त्तारं ब्रुवन्नेव

१–'विद्यते' पा० ।　　२–'ज्ञाप्यते' पा० ।　　* कर्तरि कृत् ३ । ४ । ६७
३–'समावेशार्थं चकारं शास्ति' पा० ।　　† आदिकर्मणि क्तः कर्तरि च ३ । ४ । ७१

ब्रुवन्कृत्संज्ञश्च भवति प्रत्ययसंज्ञश्चेति । आहोस्वित्संज्ञानियमः,—'धातोः परोऽकारोऽकशब्दो वा स्वभावतः कर्तारं ब्रुवन्कृत्संज्ञश्च भवति प्रत्ययसंज्ञश्चे'ति । कश्चात्र विशेषः ?

**तत्र प्रत्ययनियमेऽनिष्टप्रसङ्गः ॥ ८ ॥**

तत्र प्रत्ययनियमे सत्यनिष्टं प्राप्नोति । काष्ठभिदब्राह्मणः । बलभिदब्राह्मणः[2] । एषोऽपि नियोगतः कर्तारं ब्रुवन्कृत्संज्ञश्च स्यात्प्रत्ययसंज्ञश्चेति[1] ।

**संज्ञानियमे सिद्धम् ॥ ९ ॥**

संज्ञानियमे सति सिद्धं भवति ॥ यदि संज्ञानियमः,—'वि[3]भक्त्यादिषु दोषः' ।

प्र०—चाऽस्य पक्षस्य संभवः । आहोस्विदिति । नित्यशब्दार्थसंबन्धाभ्युपगमनिबन्धनोयं प्रश्नः । 'यः स्वभावतः कर्तरि वर्तते स एव कृत्संज्ञो नान्य'इति कृत्संज्ञा नियम्यते । यद्येवं ल्युनादीनां कृत्संज्ञा न प्राप्नोति । नैष दोषः । एतत्सूत्रव्यापारो नियम्यते । करणे ल्युन्नित्यादावप्ययमेव विचारः,— किमयमर्थः—'करणे ल्युन्वर्तता'मिति, उत 'यत् स्वभावतो वर्तते तस्य साधुत्व'मिति । कृत्संज्ञा तु प्रतिप्रत्ययमधिक्रियमाणा ल्युनादिषु प्रवर्तत एव । काष्ठभिद्ब्राह्मण इति । अनित्यशब्दाभ्युपगमे काष्ठभेद इत्यत्राऽप्यण्प्रत्ययो वचनादेव कर्तारमाचष्टे । उत्पाद्यशब्दपक्षे चाऽकाराणां विशेषाभावादब्राह्मणशब्दाऽकारस्यापि कर्तरि नियोगत्वं प्राप्नोति । आचार्यनियोगाच्च कर्तारं ब्रुवतः कृत्प्रत्ययसंज्ञाप्रसङ्गः । तत्र कृत्संज्ञायां सत्यां स्वाद्युत्पत्तिप्रसङ्गः, प्रत्ययसंज्ञायां च सत्यां तन्निबन्धनाऽङ्गसंज्ञाश्रय आर्द्धधातुकनिमित्तो गुणः प्राप्नोति । ननु नाऽयं धातोर्विहितः, ततो दोषाऽभावः । नैतदस्ति । लक्षणवशाच्छब्दार्थसंबन्धव्यवस्थानुविधाने कुतोऽयं नियमः,—अयं धातो-

उ०—कृत् प्रत्ययसंज्ञको नाऽन्यादृश इति तत्तच्छास्त्रैकवाक्यतया संज्ञानियम इति भावः । ल्युनादीनामिति । 'करणादिषु वर्त्तमानाना'मिति शेषः । एतत्सूत्रव्यापार इति । एतत्सूत्रविषय इत्यर्थः । कृत्संज्ञा त्विति । प्रत्ययसंज्ञाया अप्युपलक्षणम् । प्रतिसूत्रमुपस्थानवैयर्थ्येन सर्वत्र प्रवर्त्तत एवेत्यर्थः । वचनादेवेति । 'कर्त्तरि कृ'दिति वचनादेवेत्यर्थः । नन्वेवमप्येतत्प्रकरणविहितानामेव नियोगेन कर्त्रर्थकत्वमाख्यायेत नत्वन्येषामपीत्यत आह—उत्पाद्येति । धातोः परेऽकाराः कर्त्तर्येव वर्त्तन्त इत्यर्थादिति भावः ।-अर्थविधानञ्च प्रयोगे दृश्यमानानामेवेति नाऽनुबन्धा भेदका इति तात्पर्यम् । अतएव भाष्ये 'अकारोऽकशब्दो वा नियोगत' इत्युक्तम् । नियोगः—नियमः । नियोगत्वमिति पाठे नियोगविषयत्वमित्यर्थः । धातोः परः कृत्प्रत्यय इति । सर्वसङ्ग्रहप्रदर्शकम् । कृत्यप्रत्ययसंज्ञे ति । प्रकृतसूत्रे विद्यमानाऽनुवर्त्तमानकृत्प्रत्ययपदाभ्यामित्यर्थः । गुण इति । 'क्ङिती'ति निमित्तसप्तमीति क्विबाश्रयो निषेधो नेति भावः । ननु नाऽयं धातोरिति ।

१–क्वचिन्न । २–बलभिद्ब्राह्मणः' पा० । ३–इदं वार्तिकमिति केचित् ।

विभक्ता भ्रातरः, पीता गाव इति न सिध्यति । प्रत्ययनियमे पुनः सति परिगणिताभ्यः प्रकृतिभ्यः परः क्तो नियोगतः कर्तारमाह‡, न चेमास्तत्र परिगण्यन्ते प्रकृतयः ।

**विभक्तादिषु चाऽप्राप्तिः प्रकृतेः प्रत्ययपरवचनात् ॥ १० ॥**

विभक्तादिषु च प्रत्ययनियमस्याऽप्राप्तिः । किं कारणम् ? 'प्रकृतेः प्रत्ययपर-

---

प्र०—विहितो नायमिति । काष्ठशब्दो हि कर्मोपपदं, भिदिर्धातुः, तस्माच्च परोऽकार इति—तस्य कर्तरि स्यादेव नियोगः । यदा हि स्ववाक्यैर्विहितानां प्रत्ययानामनेनार्थविशेषे नियोगः क्रियते तदा विशेषाऽभावादस्यापि नियोगः प्राप्नोति । क्विपो लुप्तत्वाद्धातुरेव कर्त्रर्थे नियुक्त इत्यकारस्य कर्ताऽर्थो न भविष्यतीति चेत्, यावकादिष्विव सर्वाभिधानमस्तु । लौकिकार्थानपेक्षायां हि धातोः परस्य कृत्प्रत्ययसंज्ञाकर्तृनियोगप्रसङ्गः । संज्ञानियमे सिद्धमिति । नह्यत्राऽकारो लौकिके प्रयोगे कर्तारं ब्रवीति, प्रतिषेधवाचित्वादिति कृत्प्रत्ययसंज्ञयोरप्रवृत्तिरित्यर्थः । प्रत्ययनियमवाद्याह—यदीति । अत्र हि क्तः स्वभावतः कर्तारमाह, भ्रातृभिर्गोभिश्च सामानाधिकरण्यात् । ततश्च कर्तरि साधुत्वं प्राप्नोतीत्यसाधुत्वं मन्यते । क्रियाकारकसंबन्धेन विभक्तादीनां कर्तरि वृत्तिरनभिमतेति दोषोपन्यासः । प्रकारान्तरेण साधुत्वं दर्शयिष्यते । प्रत्ययनियमवादिनस्त्वयमदोषः । 'गत्यर्थाकर्मके'त्यत्र परिगणिताभ्यः प्रकृतिभ्यः परः क्तः कर्तरि नियुज्यते । नहि तत्र भजिपिबती परिगणितावित्यर्थः । संज्ञानियमवाद्याह—विभक्तादिषु चेति । ममापि 'गत्यर्थाकर्मके'ति सूत्रं न दण्डवारितम् । तत्र गत्यर्थादिभ्य एव क्तः स्वभावतः कर्तारं ब्रुवन् कृत्प्रत्ययसंज्ञो भवतीति भजिपिबतिभ्यां क्तस्य कर्तरि साधुत्वाऽप्रसङ्गः । प्रकृतेरिति । गत्यादिकाया इत्यर्थः । प्रत्ययपरवचनादिति । क्तप्रत्ययस्य कर्तरि वर्तमानस्य साधुत्वेन प्रतिपादनादित्यर्थः । तदेवं स्थितमेतत्—स्वभावतस्तेषु तेष्वर्थेषु वर्तमानानां प्रत्ययसंज्ञाविधानद्वारेण साधुत्वमन्वाख्यायते । इदानीं भाष्य-

---

उ०—'धातो'रित्येवं विहितस्यैवार्द्धधातुकत्वादित्यर्थः । ननु कार्यशब्देऽपि य एते कृत्संज्ञकास्तत्तच्छास्त्रैर्निष्पन्नास्ते कर्त्रर्थेव वर्त्तन्त इत्यर्थः । एवञ्च कथमस्याऽकारस्य नियोगेन कर्त्रर्थकत्वमित्यत आह—काष्ठशब्दो हीति । एवञ्च स्वरूपे विशेषाऽभावेन सादृश्यादस्मिन्नपि तत्त्वबुद्धिरस्त्येवेति धातोर्विहितत्वबुद्धिरप्यस्तीत्यार्द्धधातुकत्वमस्त्येवेति भावः । नन्वेकवाक्यतयैवाऽर्थविधानान्न दोष इत्यत आह-यदा हीति । प्रत्ययानामिति । प्रयोगे दृश्यमानरूपाणामित्यर्थः । धातुरेवेति । क्विप्सहचरितो धातुरेवेत्यर्थः । सर्वाऽभिधानमिति । सर्वैरभिधानमित्यर्थः । एवं कृदादिसंज्ञा अपि विहितानामेव पश्चात् क्रियन्त इति लौकिकार्थानपेक्षया शास्त्रेणैवाऽर्थविधाने धातोः परत्वात्स्यादेव प्रत्ययत्वादीत्याह—लौकिकेति । नह्यत्रेति । एवञ्च ल्युनोऽपि लोके कर्त्र्यवृत्तेस्तत्रैतस्याऽनुपस्थानमिति न कर्त्राद्यर्थकत्वप्रसङ्ग इति तत्प्रतिषेधो व्यर्थ इति भावः । ननु साधुत्वमिष्टमेवेति साधुत्वम्प्राप्नोतीत्यसङ्गतमत आह—असाधुत्वं मन्यत इति । एवञ्च 'इति न सिध्यती'त्यत्र इत्येतेषु क्तस्य कर्त्तरि असाधुत्वं न सिध्यतीत्यर्थ इति भावः । असाधुत्वे बीजमाह—क्रियाकारक-

---

‡ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ३ । ४ । ७२

वचनात्' । परिगणिताभ्यः प्रकृतिभ्यः परः क्तः स्वभावतः कर्तारमाह, न चेमास्तत्र परिगण्यन्ते ॥ न तर्हीदानीमयं साधुर्भवति ? भवति साधुर्न तु कर्तरि । कथं तर्हीदानीमत्र कर्तृत्वं गम्यते ? अकारो मत्वर्थीयः† । विभक्तमेताषामस्ति विभक्ताः । पीतमेषामस्ति पीता इति । अथवोत्तरपदलोपोऽत्र द्रष्टव्यः—विभक्तधनाः विभक्ताः, पीतोदकाः पीता इति ॥ ६७ ॥

## लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ३ । ४ । ६९ ॥

किमर्थमिदमुच्यते ? ल एतेषु साधनेषु यथा स्यात्, कर्त्तरि च कर्मणि च भावे चाकर्मकेभ्य इति । नैतदस्ति प्रयोजनम् । भावकर्मणोरात्मनेपदं विधीयते, शेषात्कर्त्तरि परस्मैपदम्, एतावांश्च लो यदुत परस्मैपदमात्मनेपदं च* । स चायमेवं

प्र०—कारः प्रश्नपूर्वकं प्रयोगसमर्थनं करोति—न तर्हीति । न तु कर्तरीति । 'तयोरेवे'ति वचनात्कर्मण्येव साधुरित्यर्थः । विभक्तमिति । धनमिति भावः । पीतमिति । उदकमित्यर्थः । आकृतिगणश्चाऽर्श आदिः । अथवेति । गम्यमानार्थस्य शब्दस्याऽप्रयोग एव लोपोऽभिमतः । 'विभक्ता भ्रातर' इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्यते । 'पीता गाव' इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते ॥ ६७ ॥

लः कर्मणि । केचिल्ल इति प्रथमां व्याचक्षते । अपरे षष्ठीं, लस्य य आदेश इति । तत्र लकारो द्विविधः तिङ्भावी, अतिङ्भावीति । तत्र तिङ्भाविनः कृत्संज्ञानिषेधात् 'कर्तरि कृ'दित्यस्यानुपस्थानात् स्वार्थे भावे विधानं प्राप्नोति । अतिङ्भाविनस्तु 'कर्तरि कृ'दिति वचनात्कर्त्तर्येव साधुत्वं प्राप्नोतीति वचनम् । किमर्थमिति । वक्ष्यमाणोऽभिप्रायः । ल एतेष्विति । लकार इत्यर्थः । अथवा लस्य य आदेश इति भावः । भावकर्मणोरिति । असत्यस्मिन् सूत्रे

उ०—संबन्धेनेति । धनकर्मकविभागकर्त्तार इत्यर्थे इति भावः । प्रकारान्तरेण—मत्वर्थसंनिधित्वेन बोधे इत्यर्थः । क्तः कर्त्तरि नियुज्यत इति । शास्त्रेण बोध्यत इत्यर्थः । भाष्ये—प्रकृतेः प्रत्ययेति । प्रकृतिविशेषाद्गत्यादेः परस्य क्तप्रत्ययस्य कर्त्तरि साधुत्ववचनादित्यर्थः । तदाह—क्तप्रत्ययस्येति । 'भवति साधुर्न तु कर्त्तरी'ति भाष्याद्यत्र कर्मणि स्वरसतो विधानं तत्रेति लभ्यत इत्याशयेनाह—धनमिति भाव इति । एतेन इदम्भाष्यं सकर्मकेभ्योऽपि भावे क्ते साधकमुपन्यस्यन्तः परास्ताः । उत्तरपदलोपविधायकवचनाऽभावादाह—गम्यमानेति ॥ ६७ ॥

लः कर्मणि च । केचिदिति । उच्चारणाऽर्थाकारेण सूत्रे 'लस्ये'ति षष्ठ्येकवचनवत् प्रथमैकवचनं जातो । एतावांश्च लो यदुत परस्मैपदमिति भाष्ये परस्मैपदादिशब्दानां तद्विषये लक्षणेति तद्भावः ।

† अर्श आदिभ्योऽच् ५ । २ । १२७    १—चः क्वचिन्न ।
२—'लकारो यदुत' पा० ।    * भावकर्मणोः; शेषात् कर्तरि परस्मैपदम् १ । ३ । १३; ७८

विहितः ॥ अत उत्तरं पठति—

## लग्रहणं सकर्मकनिवृत्त्यर्थम् ॥ १ ॥

लग्रहणं क्रियते सकर्मकनिवृत्त्यर्थम् । सकर्मकाणां भावे लो मा भूदिति ।

यदि पुनस्तत्रैवाऽकर्मकग्रहणं क्रियेत† ॥ तत्त्राऽकर्मकग्रहणं कर्तव्यम् ॥ ननु चेहापि क्रियते,—'भावे चाकर्मकेभ्य' इति ॥ परार्थमेतद्भविष्यति,—'तयोरेव कृत्यक्तखलर्थाः' [ ७० ] भावे चाकर्मकेभ्य इति ॥ यावदिह लग्रहणं तावत्तत्राऽकर्मकग्रहणम् । इह वा लग्रहणं क्रियेत तत्र वाऽकर्मकग्रहणं को न्वत्र विशेषः ?

प्र०—भावकर्मणोरात्मनेपदविधानात् 'शेषात्कर्तरी'ति च परस्मैपदविधानाल्लकारस्य भावकर्मकर्तारोऽर्था अनुमास्यन्ते । लकारस्य प्रयोगासमवायाद्वा लादेशानामेवैतेऽर्था भविष्यन्तीत्यर्थः । एतावानिति । नन्वाम्विषयोऽपि लो विद्यते । नैष दोषः । तस्य लुकाऽपहारात्, अनुप्रयोगलकारेण भावादीनां प्रतिपाद्यत्वात् । लग्रहणमिति । यदीदं नारभ्येत तदा यथा भावे विधीयमाना घञादयः सकर्मकेभ्यो भवन्ति—'ओदनस्य पाकः' 'सूत्रस्य कृति'रिति तथा भावकर्मणोरित्यनेन भावे आत्मनेपदं सकर्मकेभ्योपि स्यात् । ततश्च 'पच्यते यवागूं देवदत्तने'त्यपि स्यात् । यदि पुनरिति । 'भावकर्मणोरकर्मका'दित्येवं करिष्यते, सामर्थ्याच्चाकर्मकग्रहणं भावार्थं भविष्यति । अकर्मकाणां कर्माऽसंभवात् । सूत्रारम्भवाद्याह—तत्रेति । सूत्राप्रत्याख्यानवाद्याह—ननु चेति । 'त्वयापी'ति शेषः । आरम्भवाद्याह—परार्थमिति । सूत्रप्रत्याख्यानवाद्याह—यावदिहेति । 'कर्मणि च भावे चाकर्मकेभ्य' इत्येतदत्र प्रदेशे द्वाभ्यामपि वक्तव्यम् । त्वया तु 'ल' इत्येतत्पदमत्र कर्तव्यम्, मया

उ०—अपरे इति । लस्य प्रयोगाऽसमवायित्वात्तस्याऽर्थकथनं व्यर्थं, भाष्ये लक्षणाप्रसङ्गश्चेति तद्भावः । 'वर्तमाने ल'डित्यादौ प्रतिज्ञाप्रापितद्योतकत्वं यथा लकारस्य तथाऽत्रापि भविष्यतीत्याद्यमतमेव युक्तम्, अन्त्येऽपि वाक्यैकदेशन्यायेन प्रयोगस्य लक्षणया समत्वात् । ननु भावादिष्वात्मनेपदादिविधानेऽपि लां किमागतमत आह—असतीत्यादि । भावकर्मणोरात्मनेपदेति । भावकर्मणोर्लस्याऽऽत्मनेपदमिति तदर्थः । आदेशानामेवेति । लस्य स्थाने भावकर्मणोरात्मनेपदमित्यर्थ इति भावः । तस्य लुकेति । एतद्विषयं निष्कर्षमग्रे वक्ष्यति । अनुप्रयोगेति । एवञ्च स निरर्थक एव सङ्ख्याप्रतिपत्तये तदनुसरणस्याऽऽवश्यकत्वादिति भावः । स चाऽयमेवंविहित इति । सोऽयं लकार एवं 'लः कर्मणि चे'ति सूत्रसत्त्वे यथा विहितस्तथा विहित इत्यर्थः । अतोऽपि 'ल' इत्यस्य षष्ठ्यन्तत्वपक्षोऽयुक्तः । तथा सति 'ते चेमे' इति वदेत् भाष्ये । इत्यपि स्यादिति । लकारेण कर्तृकर्मणोरनभिधानादिति भावः । इत्येतदत्र प्रदेश इति । तयोरेवेति सूत्रार्थमित्यर्थः । पदेनेति । पदसमुदायात्मके सूत्रे भगवान्मात्रालाघवं नाद्रियत इति भावः । वस्तुतस्त्वत्र लग्रहणे कर्मभावाभ्यां

† भावकर्मणोः १ । ३ । १३

अयमस्ति विशेषः,—इह लग्रहणे क्रियमाणे आनः† कर्तरि सिद्धो भवति। तत्र पुनरकर्मकग्रहणे क्रियमाण आनः कर्तरि न प्राप्नोति॥ तत्राप्यकर्मकग्रहणे क्रियमाण आनः कर्तरि सिद्धो भवति। कथम्? 'भावकर्मणो'रित्यतोऽन्यद्यदात्मनेपदानुक्रमणं सर्वं तत् कर्त्रर्थम्।

'विप्रतिषेधाद्वाऽऽनः कर्तरि'॥

विप्रतिषेधाद्वाऽऽनः कर्तरि भविष्यति। तत्र 'भावकर्मणोः'[ १ । ३ । १३ ] इत्येतदस्तु 'कर्तरि कृत्' [ ३ । ४ । ६७ ] इति, कर्तरि कृदित्येतद्भविष्यति विप्रतिषेधेन।

'सर्वप्रसङ्गस्तु'॥

सर्वेभ्यस्तु धातुभ्य आनः कर्तरि प्राप्नोति। परस्मैपदिभ्योपि॥ नैष दोषः। 'अनुदात्तङित'इत्येष योगो‡ नियमार्थो भविष्यति॥ यद्येष योगो नियमार्थो विधिर्न प्रकल्पते,—आस्ते शेत इति। अथ विध्यर्थः, आनस्य नियमो न प्राप्नोति,—आसीनः शयानः [ इति ]। तथा 'नेर्विशः' [ १ । ३ । १७ ] इत्येवमाद्यनुक्रमणं यदि नियमार्थं विधिर्न प्रकल्पते। अथ विध्यर्थमानस्य नियमो न प्राप्नोति।

प्र०—'भावकर्मणो'रित्यत्र अकर्मकग्रहणमिति पदेन पदस्य साम्यम्। मात्रालाघवं त्वत्र न विवक्षितम्। आरम्भवाद्याह—अयमस्तीति। आन इति। आत्मनेपदसंज्ञात्वाद्भावकर्मणोरिति वचनाद्भावकर्माभिधायित्वमेव स्यान्न तु कर्तृवाचित्वमिति 'शयान' इत्यादौ कर्तर्यानो न स्यात्। सूत्रारम्भे तु कर्तर्यप्यानः सिध्यतीत्यर्थः। प्रत्याख्यानवाद्याह—तत्रापीति। 'अनुदात्तङित' इत्यादिभिः सूत्रैः कर्तर्यात्मनेपदविधानार्थैरानः कर्त्तरि 'शयान' इत्यादौ भविष्यतीत्यर्थः। विप्रतिषेधाद्वेति। 'भावकर्मणो'रित्यस्य तङवकाशः, यत्र कृत्संज्ञाया अभावात्कर्तरि कृदिति न प्रवर्तते 'आस्यते पच्यत' इति। 'कर्तरि कृ'दित्यस्य तृजादयोवकाशः। आनस्य तूभयप्रसङ्गे कर्तरि कृदिति परत्वात्कर्ताऽर्थो भविष्यतीत्यर्थः। आरम्भवाद्याह—सर्वप्रसङ्ग इति। परस्मैपदिभ्यो धातुभ्य आनः कर्तरि

उ०—कर्तृरूपाऽर्थोऽध्याधाय 'च'द्वयं कार्यम्, उत्तरसूत्रे च 'तयो'रिति वाच्यम्। मम तु कर्मणि कृत्यक्तखलर्था भावेऽकर्मकेभ्य इत्येवेति मात्रालाघवमप्यस्त्येवेति बोध्यम्। भाष्ये सूत्राऽनुसारेण 'च'घटितो न्यासः, कैयटे च तथैव न्यासो दर्शितः। तृजादय इति। तेषामात्मनेपदादिसंज्ञाऽभावादिति भावः। परत्वात्कर्त्रर्थं इति। इदं कार्यशब्दवादे। एवं हि भावकर्मणोर्न स्यादिति त्वग्रे भाष्य एव स्पष्टम्। सर्वप्रसङ्ग इति। विप्रतिषेधवादे दूषणम्। तङोऽनुदात्तेति। 'कर्त्तरी'ति शेषः। एवं 'नेर्विश' इत्यादीनां नियमत्वे कर्त्तरि तङ्

† तङानावात्मनेपदम् १ । ४ । १०० १—वार्तिकमित्यन्ये।

‡ अनुदात्तङित आत्मनेपदम् १ । ३ । १२ २—क्वाचित्कम्।

अस्तु तर्हि नियमार्थम् । ननु चोक्तं 'विधिर्न प्रकल्पत' इति । विधिश्च प्रकॢप्तः । कथम् ? 'भावकर्मणो'रित्यत्रा'ऽनुदात्तङित' इत्येतदनुवर्तिष्यते । यद्यनुवर्तत एवमप्यनुदात्तङित एव भावकर्मणोरात्मनेपदं प्राप्नोति । एवं तर्हि योगविभागः करिष्यते† । अनुदात्तङित आत्मनेपदं भवति । ततो 'भावकर्मणोः' । ततः 'कर्तरि' । कर्तरि चात्मनेपदं भवति । 'अनुदात्तङित'इत्येव । 'भावकर्मणोरिति निवृत्तम् । ततः 'कर्मव्यतिहारे' । 'कर्तरी'त्येवानुवर्तते, 'अनुदात्तङित' इत्यपि निवृत्तम् ।

यदप्युच्यते—'तथा नेर्विश इत्येवमाद्यनुक्रमणं यदि नियमार्थं विधिर्न प्रकल्पते । अथ विध्यर्थमानस्य नियमो न प्राप्नोती'ति, अस्तु विध्यर्थम् । ननु चोक्तमानस्य नियमो न प्राप्नोतीति । नैष दोषः । यथैवात्राऽप्राप्तास्तङो भवन्त्येवमानोऽपि भविष्यति ।

'सर्वत्राऽप्रसङ्गस्तु' ॥ सर्वेषु च साधनेष्वानो न प्राप्नोति । विप्रतिषेधाद्वाऽऽनः

प्र०—प्राप्नोतीत्यर्थः । प्रत्याख्यानवाद्याह—नैष दोष इति । 'अनुदात्तङित आत्मनेपदं नान्यस्मा'दिति नियमादानः कर्तरि परस्मैपदिभ्यो न भविष्यतीत्यर्थः । आरम्भवाद्याह—यदीति । भावकर्मणोरात्मनेपदविधानात्तङोऽनुदात्तङितो न प्राप्नुवन्ति । 'अनुदात्तङित' इत्यनेन आन एव धातुविशेषे नियम्यत इत्यर्थैकत्वादेकस्य वाक्यस्य विधिनियमावेकेन सूत्रेण न प्रकल्पेते इत्यर्थः । प्रत्याख्यानवाद्याह—अस्तु तर्हीति । भावकर्मणोरित्यत्रेति । 'अनुदात्तङित आत्मनेपद'मित्यनेनैकेन वाक्येन आनस्य नियमः क्रियते । 'भावकर्मणो'रित्यत्र त्वनुवृत्त्या द्वितीयेन वाक्येन तङां विधिः क्रियते इत्यर्थः । एवमपीति । 'भावकर्मणो'रित्यस्यानुदात्तङित इत्यनेनैकवाक्यता सत्यामनुवृत्तौ स्यात् । ततश्चाऽऽस्यते गुरुणा अतिशय्यते गुरुरित्यादौ आत्मनेपदं स्यात्, भूयते गम्यते शेते आस्ते इत्यादौ तु नैव स्यादित्यर्थः । यथैवात्रेति । अनुदात्तङित इत्यनेनाऽऽनस्य नियमादप्राप्तिः । तङोऽपि भावकर्मणो विधीयमानाः निविशते इत्यादौ कर्तरि न प्राप्नुवन्ति । तत्राविशेषा'न्नेर्विश' इत्यादिभिः सूत्रैस्तङानाः कर्तरि विधास्यन्त इत्यर्थः । सर्वत्राप्रसङ्गस्त्विति । असत्यस्मिन् सूत्रे

उ०—न स्यात्, विधित्वे केवलादप्यानः स्यादित्यादि बोध्यम् । तङां विधिरिति । 'कर्त्तरी'ति शेषः । भावकर्मणोरिति । तथा चाऽऽसादिभ्यः कर्त्तरि न स्यादन्येभ्यो भावकर्मणोर्न स्यादित्यर्थः । भाष्ये—भावकर्मणोस्ततः कर्त्तरीति योगविभागसामर्थ्याद्भावकर्मणोरित्यत्राऽसंबद्धमेव अनुदात्तङिद्ग्रहणं 'कर्त्तरी'त्यत्र संबध्यत इति भावः । तदाऽस्येति । 'लः कर्मणि चे'त्यस्येत्यर्थः । षष्ठयन्तत्वं न भाष्यसम्मतमित्युक्तम् । वक्ष्यते च—'शेषादेव परस्मैपद'मिति । नियमे तदवस्थो दोष इत्यत आह—कर्त्तर्येवेति । लक्ष्याऽनुसारादिति भावः । लुकोऽप्यर्थमिति । नन्वनुप्रयोगस्य लादेशैरेव भावाद्यभिव्यक्तौ किमस्याऽर्थोऽऽदेशेनेति

१—वार्त्तिकमित्यन्ये । † कर्तरि कर्मव्यतिहारे १ । ३ । १४

कर्तरीति भावकर्मणोर्न स्यात्, कर्त्तर्येव स्यात् । इह पुनर्लग्रहणे क्रियमाणे 'कर्तरि कृ'दित्येतदस्तु, 'लः कर्मणि च भावे चाकर्मकेभ्य' इति,—लः कर्मणि च भावे चाकर्मकेभ्य'इत्येतद्भविष्यति विप्रतिषेधेन ।

'सर्वप्रसङ्गस्तु' ॥ लादेशः सर्वेषु साधनेषु प्राप्नोति । शतृकसू च भावकर्मणोरपि प्राप्नुतः । नैष दोषः । 'शेषात्परस्मैपदं कर्तरी'त्येवं तौ कर्तारं ह्रियेते ॥ ६९ ॥

## लस्य ॥ ३ । ४ । ७७ ॥

### लादेशे सर्वप्रसङ्गोऽविशेषात् ॥ १ ॥

लादेशे सर्वप्रसङ्गः । सर्वस्य लकारस्यादेशः प्राप्नोति । अस्यापि प्राप्नोति—लुनाति लभते । किं कारणम् ? 'अविशेषात्' । न हि कश्चिद्विशेष उपादीयते, एवंजातीयकस्य लकारस्यादेशो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ।

अर्थवद्ग्रहणात्सिद्धम् । अर्थवतो लकारस्य ग्रहणम्, न चैषोऽर्थवान् ।

---

प्र०—भवदुक्तेन विप्रतिषेधेनाऽऽनः 'कर्तरि कृ'दिति कर्तर्येव स्यान्न तु भावकर्मणोः । ततश्च भूयमानं गम्यमानमित्यादिप्रयोगो न स्यादित्यर्थः । इह पुनरिति । यदि 'ल' इति षष्ठी तदाऽस्य तिङोऽवकाशः । 'कर्त्तरि कृ'दित्यस्यतृजादयः । आनस्य परत्वादनेनार्थनिर्देशः । अथ ल इति प्रथमा तदास्य तिङ्भावी लकारोऽवकाशः । आनभाविनस्तु लकारस्य परत्वादनेनार्थव्यवस्था । शेषादिति । 'कर्तर्येव परस्मैपद'मित्येवं नियमात् शतृकसू भावकर्मणोर्न भविष्यत इति भावः । 'ल' इत्यादेशापेक्षषष्ठीनिर्देशपक्षे 'आम' इति विधीयमानस्य लुकोऽप्ययमर्थनिर्देशः, अभावस्याप्यादेशत्वात् । तथा च 'अचः परस्मिन्पूर्वविधा'वित्यत्र लोपस्याऽप्यजादेशस्य स्थानिवद्भावः प्रदर्शितः । लुकोऽभावरूपत्वात्कथमर्थाऽभिधानमिति चेत् । प्रतिज्ञाप्रापितं क्विबादीनामिव प्रयोगेऽश्रवणेपि लुकोर्थवत्त्वम्, अनुप्रयोगात्तु तदर्थाभिधानव्यक्तिरित्यदोषः ॥ ६९ ॥

लस्य । अर्थवद्ग्रहणादिति । लडादय एव भावाद्यर्थाभिधायिनः स्थानित्वेन गृह्यन्त इत्यर्थः । न वर्णग्रहणेष्विति । लस्येत्यत्र लकारेऽकार उच्चारणार्थः । ततश्च वर्णमात्रस्याऽयं

---

उ०—चेन्न, एवं हि आम्विषयस्य 'कर्त्तरि कृदि'ति कर्त्रर्थकत्वमेव स्यात् । एवं हि विरोधादन्यवाचिप्रत्ययपरोऽनुप्रयोगो न स्यादिति भावः । लोपस्याऽप्यजेति । पटयतीत्यादौ । प्रतिज्ञेति । अनेन प्रथमान्तत्वमेव युक्तमिति सूचयति । लग्रहणं सकर्मकनिवृत्त्यर्थमिति भाष्याच्च । षष्ठ्यन्तत्वे 'ल'इति ग्रहणमिति स्यात् । समासेऽपि विभक्तिलोपेऽकारश्रवणाऽनापत्तिः, अलोपे विसर्गश्रवणापत्तिः । अन्यदपि प्रथमान्तत्वसाधकमप्रागुक्तम् ॥ ६९ ॥

लस्य । भावाद्यर्थाऽभिधायिन इति । शास्त्रप्रतिज्ञाताऽर्थवन्त इति भावः । अकार उच्चारणार्थं इति । अन्यथा लिडादीनां तिङो न स्युः । ततश्च 'परस्मैपदानां ण'लित्याद्यसङ्गतं स्यादिति भावः ।

---

१—वार्तिकमित्यन्ये । २—वार्तिकमिति केचित् ।

एकोऽयमर्थः स्त्रीत्वं नाम, तस्यैकत्वादेकवचनमेव प्राप्नोति ॥ 'अनेकप्रत्ययानुपपत्तिश्च' । अनेकश्च प्रत्ययो नोपपद्यते—गार्ग्यायणी* कारीषगन्ध्या† कालितरेति‡ । किं कारणम् ? एकत्वात् स्त्रीत्वस्य । एकोऽयमर्थः स्त्रीत्वं नाम, तस्यैकेनोक्तत्वाद्-द्वितीयस्य प्रयोगेण न भवितव्यम् । किं कारणम् ? 'उक्तार्थानामप्रयोग' इति ।

**स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिः ॥ २ ॥**

स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् 'स्त्रिया'मिति ईकारो न प्राप्नोति ।
अस्तु तर्हि—'स्त्रीसमानाधिकरणात्प्रातिपदिका'दिति ।

प्र०—बहुत्वेऽपि संनिवेशस्याऽभेदविवक्षायां घट इत्येकवचनं भवति, एवमवस्थाविशेषस्य लिङ्गस्याप्येकत्वमेव संस्त्यानादेरिति मन्यते । अनेकश्चेति । पक्षद्वयेऽपि द्योतकः प्रत्ययः, अनेकस्यापि च प्रदीपादेर्दृष्टं द्योतकत्वमित्यनेकप्रत्ययोत्पत्तिरविरुद्धा । वाचके तु प्रत्ययेऽर्थप्रयुक्तत्वाच्छब्दस्यैकेनैवाभिहितेऽर्थे द्वितीयस्यानुत्पत्तिप्रसङ्गः ।

गार्ग्यायणीति । गर्गस्यापत्यं गोत्रं स्त्री । गर्गादिभ्यो यञ् । तदन्तात्'प्राचां ष्फ तद्धित' इति ष्फः । तदन्तान्ङीष् ॥ करीषगन्धेरपत्यं स्त्रीत्यण् । तस्या'णिञो'रिति ष्यङ् । ततो 'यङश्चा'-बिति चाप् ॥ कालशब्दाज्जानपदादिसूत्रेण ङीष् । ततस्तरप् । ततष्टाब्न प्राप्नोति, ङीषा स्त्रीत्वस्योक्तत्वात् । स्त्र्यर्थस्येति । संस्त्यानवाचिड्रट्प्रत्ययान्तेन स्त्रशब्देन स्त्रीत्वस्याभिधानान्ङीब्न प्राप्नोति ।

उ०—ख्याया धर्मिण्यारोपात्साध्यमित्याशयः । शब्दादीनां—शब्दरूपादिगुणानामित्यर्थः । अवस्थाश्चेति । एवञ्च 'कुमार्य' इत्यत्रावस्थातृभूतानां गुणानां बहुत्वात्सर्वदा बहुवचनमेव स्यादिति चोदनीयमित्यर्थः । सन्निवेशस्येति । रूपादिसंघातरूपस्य संस्थान विशेषस्येत्यर्थः । अभेदेति । एकत्वेत्यर्थः । अवस्थाविशेषस्येति । अवस्थात्राऽभेदेऽपि भेदस्याऽपि सत्त्वात्स्वगतैकत्वमेवेत्यर्थः ।

नन्वितरयोरपि पक्षयोरनेकप्रत्ययाऽनुपपत्तिस्तुल्या, तत्राह— पक्षद्वये त्विति । समानाधिकरणपक्षे, प्रकृत्यर्थविशेषणपक्षे चेत्यर्थः । अनेकस्याऽपीति । यथा अन्धकारबाहुल्ये एकप्रदीपेन प्रकाशाऽभावे प्रदीपान्तरोपादानं, तद्वदेकेन स्त्रीत्वाऽद्योतने प्रत्ययान्तरोपादानमित्यर्थः । तदन्तान्ङीषिति । द्योतकत्वे तु प्रातिपदिकेनोक्तेऽपि स्त्रीत्वे ङीषुत्पत्तिरविरुद्धेति भावः । 'स्त्रीसमानाधिकरणा'दिति पक्षेपि द्योतकतैवेति बोध्यम् ।

स्त्रीत्वोपलक्षितेति । अत्र पक्षे स्त्रीत्वं द्रव्योपलक्षणमिति तदुपलक्षितब्राह्मण्यां 'भूत शब्दस्य वृत्तेः पदान्तरोपलक्षितबहिरङ्गस्यैवाऽर्थस्य स्त्रीप्रत्ययाऽन्वाख्याने निमित्तत्वात्स स्यादिति भावः । ननु

---

* गर्गादिभ्यो यञ्; प्राचां ष्फ तद्धितः; षिद्गौरादिभ्यश्च ४ । १ । १०५; १७; ४१

† प्राग्दीव्यतोऽण्; अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे; यङश्चाप् ४ । १ । ८३; ७८; ७४

‡ जानपदकुण्डगोणस्थलभाजनागकाल……४ । १ । ४२; द्विवचनविभज्योपपदे तरबीयसुनौ ५ । ३ । ५७; अजाद्यतष्टाप् ४ । १ । ४

**स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः ॥ ३ ॥**

स्त्रीसमानाधिकरणादिति चेद्भूतादिष्वतिप्रसङ्गो भवति—भूतमियं ब्राह्मणी, कारणमियं ब्राह्मणी, आवपनमियमुष्ट्रिकेति[1] ॥ स्त्र्यर्थाभिधाने पुनष्टाबादिषु सत्सु, इह तावद्—'भूतमियं ब्राह्मणी'ति नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? पौतन्यम् । 'कारणमियं ब्राह्मणी'ति नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? प्राधान्यम् । 'आवपनमियमुष्ट्रिके'ति नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? संभवनम् ।

**षट्संज्ञकेभ्यश्च प्रतिषेधः ॥ ४ ॥**

षट्संज्ञकेभ्यश्च प्रतिषेधो वक्तव्यः+ । पञ्च ब्राह्मण्यः, दश ब्राह्मण्यः । स्त्र्यर्थाभिधाने पुनष्टाबादिषु सत्सु नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? भेदो विवक्षितः संख्या ॥ इह च 'स्त्री'( ति[2] ) ईकारो न प्राप्नोति । न हि तेनैव तस्य सामानाधिकरण्यमस्ति ।

प्र०—भूतमियमिति । स्त्रीत्वोपलक्षितब्राह्मणीवृत्तित्वाद्भूतशब्दस्य तत्सामानाधिकरण्यात् स्त्रीप्रत्ययप्रसङ्गः । स्त्र्यर्थाभिधान इति । प्रत्ययार्थपक्षे दोषोऽयं नावतरतीत्यर्थः । भूतादयः पौतन्याद्यर्थवृत्तय इति तदर्थस्य स्त्रीत्वेन संबन्धाभावात् प्रत्ययोत्पत्तिप्रसङ्गाभावः । न हि तेनैवेति । स्त्रीशब्दसामानाधिकरण्याद्ब्राह्मण्यादिषु स्त्रीप्रत्ययः सिध्यति । स्त्रीशब्दे तु पदान्तरप्रयोगाभावाद्, ब्राह्मण्यादिपदापेक्षाभावाच्च प्रत्ययो न प्राप्नोतीत्यर्थः । अथ ब्राह्मण्याद्यपेक्षया स्त्रीशब्दात् प्रत्ययः क्रियते तदेतरेतराश्रयदोषापत्तिः । प्रत्ययोत्पत्तौ परस्परापेक्षणात् ।

उ०—'भूतमियम्' इत्यत्र टाप्यपि 'ह्रस्वो नपुंसके' इति ह्रस्वो दुर्वार इति चेन्न; पर्जन्यवल्लक्षणप्रवृत्त्याऽन्तरङ्गत्वाद्ध्रस्वे ततष्टापि 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तेः । आवपनादौ ङीपो भूतत्वस्य जातित्वे तत्रापि ङीषः प्रसङ्गाच्च ।

भाष्ये—स्त्र्यर्थाऽभिधाने इति । स्त्र्यर्थस्य अभिधाने—प्रतिपादने—तन्निमित्तं प्रयोगे, टाबादिषु सत्सु—जायमानेषु । 'न दोष' इति शेषः । दोषाऽभावमेवोपपादयति—इहेति । भाष्ये—पौतन्यं—पूतनात्वं, पिशाचता । तद्वाचि'भूत'शब्दो नित्यनपुंसकः । एवम्—आवपनं—भाजनविशेषः । पौतन्यादिप्रवृत्तिनिमित्तम् ।

भाष्ये—षट्संज्ञकेभ्य इति । षट्संज्ञकानां लिङ्गाऽभावात्पक्षद्वये तन्न कर्तव्यमित्याशयः । भेदनियतत्वात्संख्याभेदः । स्त्रीप्रत्यय इति । स्त्रीशब्दप्रयोगाऽभावेऽपि 'प्रविश पिण्डी'मित्यादौ क्रियाकारकादेरिव तत्प्रतीत्या तत्सामानाधिकरण्यमिति भावः । नन्वत्र पक्षे यथा ब्राह्मण्यादिषु स्त्रीप्रत्ययस्तथा स्त्रीशब्देऽपि स्यादत आह—स्त्रीशब्दे त्विति । पदाऽपेक्षाऽभावादिति । तदर्थाऽपेक्षाऽभावादित्यपि बोध्यम् । सामान्य-

१–'उष्ट्रिका मृत्तिकाभाण्डभेदे' इति मेदिनी । 'धूर्भङ्गसंक्षोभविदारितोष्ट्रिका' इति माघः (१२।२६)
+ न षट्स्वस्रादिभ्यः ४ । १ । १० २–क्वाचित्कम् ।

पूर्वसूत्रनिर्देशो वा पुनरयं द्रष्टव्यः । पूर्वसूत्रेऽप्रधानस्योपसर्जनमिति संज्ञा क्रियते । यावद्ब्रूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेति तावदनुपसर्जनादिति । किं प्रयोजनम् ? 'आपिशलमधीत' इति । आपिशलमधीते ब्राह्मणी—आपिशला* ब्राह्मणी । अणन्तादितीकारो† मा भूदिति ।

अथानुपसर्जनादित्युच्यमाने कस्मादेवात्र न भवति ? अणन्तं ह्येतदनुपसर्जनम् । नाऽनुपसर्जनग्रहणेनाऽणन्तं विशेष्यते—'अणन्तादनुपसर्जना'दिति । किं तर्हि ? अणेव विशेष्यते—'अणयोऽनुपसर्जन'मिति ।

## जातिशब्देभ्यस्त्वतिप्रसङ्गः ॥ ४ ॥

जातिशब्देभ्यस्त्वतिप्रसङ्गो भवति । अवन्ती कुन्ती‡ गान्धारी+ ।

प्र०—प्रोक्तप्रत्ययस्याणोऽत्रोपसर्जनत्वात् ङीब् न भवति । अणन्तमिति । प्रत्यये लुप्ते प्रकृतेरेव तदर्थाभिधानादिति भावः । अणेवेति । अत्र च प्रोक्तार्थस्योपर्जनत्वादर्थद्वारेणाणप्रत्यय उपसर्जनमिति भावः । यस्त्वध्येत्र्यां प्रत्यय उत्पन्नस्तस्य लुप्तत्वात्तदाश्रयो ङीब्न भवति । प्रत्ययलक्षणेनापि न भवति—'अणयोऽकार' इति विज्ञानात् । अतिप्रसङ्ग इति । तेन तेभ्योपि प्रतिषेधः प्राप्नोतीत्यर्थः । अवन्तीति । अवन्तेरपत्यं स्त्री । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' । तस्य—'स्त्रियामवन्ति-कुन्तिकुरुभ्यश्चे'ति लुक् । गान्धारीति । गान्धारेरपत्यं स्त्री । 'साल्वेयगान्धारिभ्यां चे'त्यञ् ।

उ० —पूर्वमिति । 'अहमत्पूर्वे'त्यनेनेत्यर्थः । अत्र पक्षे 'इदं तर्हि प्रयोजन'मित्यग्रिमभाष्याऽस्वारस्यम् । तस्माद्—'अमह'दिति ज्ञापकं लक्ष्याऽनुसाराज्ज्ञापकसिद्धस्य क्वाचित्कत्वेन पूर्वविषयमेव । अत एव पूर्ववार्त्तिके 'पूर्वत्रे'त्युक्तम् । एतत्प्रभृति तदन्तविधेः फलं स्वयं न पश्यतीत्यपरे । भाष्ये—पूर्वसूत्रेति । सामर्थ्याल्लक्ष्याऽनुसारिव्याख्यानाच्चाऽत्र कृत्रिमन्यायाऽप्रवृत्तिरिति भावः । ननु 'डाबुमाभ्या'मिति पूर्वसूत्रे नाऽप्रधानस्योपसर्जनसंज्ञोक्तेत्यत आह—पूर्वाचार्येति । ननु 'आपिशलि'शब्दात्प्रोक्तार्थे छेन भाव्यमत आह—इञश्चेतीति । साक्षाच्छब्दस्योपसर्जनत्वाऽसम्भवादाह —अत्र चेति । अण् योऽकार इति । एवञ्च प्राधान्येन वर्णाश्रयत्वात्प्रत्ययलक्षणाऽभाव इति भावः ।

भाष्ये—जातिशब्देभ्यस्त्विति । उपसर्जनार्थप्रतिपादकत्वादवन्त्यादिशब्दानामिति पूर्वपक्षः । उपसर्जनीभूतजात्यर्थप्रतिपादकादित्यर्थ इत्युत्तरम् । अनन्तराऽपत्येऽपि गोत्रत्वारोपेणाऽत्र जातित्वम् । भाष्ये—

* तेन प्रोक्तम् ४ । ३ । १०१; इञश्च; तदधीते तद्वेद; प्रोक्ताल्लुक् ४ । २ । ११२; ५९; ६४

† टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४ । १ । १५

‡ वृद्धेत्कोसलाजादाञ्ञ्यङ्; स्त्रियामवन्तिकुन्तिकुरुभ्यश्च; इतो मनुष्यजातेः ४ । १ । १७१; १७६; ६५

+ साल्वेयगान्धारिभ्यां च; अतश्च; इतो मनुष्यजातेः ४ । १ । १६९; १७७; ६५

## सिद्धं तु जातेरनुपसर्जनत्वात् ॥ ५ ॥

सिद्धमेतत् । कथम् ? अनुपसर्जनादित्युच्यते, न च जातिरुपसर्जनम् ।

एतदपि नास्ति प्रयोजनम् । 'स्त्रियाम्' [ ४ । १ । ३ ] इति वर्तते, तेनाणं विशेषयिष्यामः—'स्त्रियां योऽणविहित' इति । एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणी, अत्र प्राप्नोति । नैष दोषः । अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम्, यश्चात्राध्येत्र्यामभिधेयायामणुक्तो लुप्तः सः, यश्च श्रूयते, उत्पन्नस्तस्मादीकार इति कृत्वा पुनर्न भविष्यति ।

इदं तर्हि प्रयोजनम्—प्रधानेन तदन्तविधिर्यथा स्यात्—कुम्भकारी नगरकारी* ।

प्र०—तस्यातश्चेति लुक् । अत्र प्रत्ययार्थं प्रति प्रकृत्यर्थस्योपसर्जनत्वा'दितो मनुष्यजाते'रिति ङीष् न प्राप्नोति । तस्य तु दाक्षीत्यादिरवकाशः । सिद्धं त्विति । प्रत्यये लुप्ते प्रकृतिरेवापत्यलक्षणां जातिमाह, सा चानुपसर्जनमित्यर्थः । एतदपीति । यदुक्तं 'पूर्वसूत्रनिर्देशो वे'ति तद्भाष्यकारः प्रत्याचष्टे । स्त्रियां योऽणिति । आपिशलिशब्दात्तु यः प्रोक्तार्थेऽण्प्रत्ययः स स्त्रियां न विहितः । उत्पन्न इति । सोपि 'लुक् तद्धितलुकी'ति लुप्तः । पुनर्नेति । सकृत्प्रवृत्तौ शास्त्रस्य चरितार्थत्वात् पुनः प्रवृत्त्यभावः । अकारान्तस्य चाध्येत्र्यां स्त्रियां वृत्त्या टाब् भवति ।

इदं तर्हीति । प्रधानेन तदन्तविधेर्ज्ञापनार्थमित्यर्थः । नन्वमहत्पूर्वेति ज्ञापितोऽसौ । एवं तर्हि ज्ञापकाद्यथा प्रधानेन भवति एवमुपसर्जनेनापि स्यादिति सर्वथाऽयं योगः कर्तव्यः । भाष्य-

उ०—एवमपीति । अत्र प्रोक्ताया अपि स्त्रीत्वात्स्त्रियामणस्तीति पूर्वपक्षाशयः ।

भाष्ये–उत्तरयति–नैष इति । किमध्येत्रीगतस्त्रीत्वे प्रोक्ताऽणन्तादापादयसि, उत प्रोक्तागतस्त्रीत्वे ? नाऽऽद्य इत्याह—अध्येत्र्यामभिधेयायामिति । एवञ्चाऽत्र 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायी'ति न्यायेनाऽणन्तस्य तद्गतस्त्रीत्वाऽर्थकत्वेऽपि विद्यमानो योऽण् स न तद्गतस्त्रीत्वाऽर्थक इति भावः । नाऽन्त्य इत्याह—उत्पन्न इति । एतेनाऽर्थभेदेन लक्ष्यभेदात्प्रोक्तागतस्त्रीत्वे उत्पन्नत्वेऽपि अध्येत्रीगतस्त्रीत्वे स्यादेव । अत एव चित्रायां जाता चित्रेत्यादौ पुनष्टाबित्यपास्तम् । प्रोक्तागतस्त्रीत्वे पुनरापादितस्य ङीप 'उत्पन्न' इत्यादिना वारणात् । यद्युत्पन्नः कथं न श्रूयतेऽत आह—सोऽपीति । अध्येत्रणो लुक् 'भस्याऽढे' इति पुंवत्त्वे प्रोक्ताऽर्थकात्परत्वेन सुलभः । लिङ्गविशिष्टपरिभाषयाऽध्येत्रणो लुगित्यन्ये । प्रधानेनेति । उत्तरत्राऽपीति भावः । एवञ्चाऽस्य नाऽनुवादकतामात्रं किन्तु व्यावर्त्तकताऽपीति भावः ।

गणपठितेति । वस्तुतो वार्त्तिकं तत्, अत एव 'वक्तव्य'मिति भाष्ये उक्तम् । गणस्य तु सूत्रकृदुक्तत्वात्तत्पदप्रयोगाऽसङ्गतिः । एवञ्च 'वार्त्तिकेन सूत्रप्रत्याख्यानं न युक्त'मिति भाष्याशय उचितः । प्रतिषेधानपेक्षयेति । सूत्रस्याऽवश्यकर्त्तव्यत्वादिति भावः ।

* कर्मण्यण् ३ । २ । १; टिड्ढाणञ्द्वयसज् ……क्वरपः ४ । १ । १५

अत्र हि 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'त्यवयवादुत्पत्तिः प्राप्नोति । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवती'ति सङ्घातादुत्पत्तिर्भविष्यति । 'कृद्ग्रहण' इत्युच्यते, न चैतत्कृद्ग्रहणम् । कृदकृद्ग्रहणमेतत् । कृदप्ययमण्, तद्धितोऽपि । एवं तर्हि—ईकारान्तेन समासो भविष्यति । यद्येवं लभ्येत कृतं स्यात्, तत्तु न लभ्यम्[1] । किं कारणम् ? अत्र हि 'गतिकारकोपपदानां कृद्भिः सह समासो भवती'ति समास एव तावद्भवति, समासे च कृतेऽवयवादुत्पत्तिः प्राप्नोति । अवयवादुत्पत्तौ सत्यां

प्र०—कारेण तु सूत्रमेवेदं ज्ञापनायाश्रितं गणपठितप्रतिषेधानपेक्षया । सर्वादिवार्तिके तु भाष्यम्—'अनुपसर्जनादित्ययं योगः प्रत्याख्यायत'इत्यादि तदपेक्षया । एवं तर्हीति । कुम्भस्य कारीशब्देनोपपदलक्षणः समासः करिष्यते । 'स्त्रीभ्यो ढ'गित्यत्र च 'ङ्याप्प्रातिपदिका'दिति त्रितयाधिकारात् स्त्रीप्रत्ययान्तात्समासप्रातिपदिकाड्ढग् विधास्यते । समासमन्तरेण स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्यासम्भवात्समासः स्त्रीप्रत्ययान्तो गृह्यते । ङ्याबन्तेभ्यश्च सुपर्ण्यादिभ्यो ङ्याब्ग्रहणानुवृत्त्या भविष्यतीति भावः । अवयवादिति । अत्र चोदयन्ति—'कृत्तद्धितसमासाश्चे'त्यत्र कृद्ग्रहणपरिभाषया कुम्भकारशब्दस्य प्रातिपदिकत्वात्तत एव ङीब् भविष्यतीति । तदयुक्तम् । अत्रास्याः परिभाषाया अनुपस्थानस्य पुंयोगसूत्रे प्रतिपादनात् ।

नन्वेवमपि कारशब्दान्ङीपि विहिते कुम्भकारी शब्दादेव ढक् भविष्यति, स्त्रीप्रत्ययग्रहणे तदादिनियमाभावात् । तथा च परमकारीषगन्धीपुत्र इत्यत्र संप्रसारणं भवति । एवं तर्हि

उ०—प्रत्याख्यात इति । तद्गणपठितप्रतिषेधस्य ज्ञापकत्वाऽपेक्षया, 'स्त्रिया'मित्यस्य गृह्यमाणविशेषणत्वाऽपेक्षया चे'ति शेषः । केचित्तु तत्रथा 'प्रत्याख्यायते' इत्याद्युक्तिराद्यवार्तिकाऽभिप्रायेण । 'अत उत्तरं पठती'ति भाष्यकृदवतरणिकया तस्य वार्त्तिककृत्सिद्धान्तत्वोक्तेः । उत्तरवाक्यद्वयन्त्वाचार्यदेशीयस्य, पूर्वत्र तदन्ताऽप्रतिषेधेऽप्युत्तरत्र तदन्तविध्यभावेन बहुकुरुचरादावप्राप्त्याऽस्य सार्थक्याऽनुपपादनात् । 'पूर्वत्रे'त्युक्त्यसङ्गतेराद्यस्य तदुक्तित्वम् । अन्त्यन्तु भाष्य एव दूषितम् । तेनाद्यवार्त्तिकस्यैव वार्त्तिककृत्सिद्धान्तत्वम् । वार्त्तिककारीयसंज्ञोपसर्जनप्रतिषेधप्रत्याख्यानाय हि तत्र तदुक्तं, स्वप्रत्याख्यातसूत्रेणैवाऽत्रोपसर्जनप्रतिषेधव्याख्यानसम्भवादत्र तद्व्यर्थमिति तदाशयः । 'इदं तर्हि प्रयोजनं प्रधानेने'त्यादि तु भाष्यकृतः सूत्रप्रयोजनप्रश्नेन वार्त्तिकप्रत्याख्यानमित्याहुः । ननु स्त्रीप्रत्ययान्तेन समासेऽपि समासस्य 'प्रत्ययग्रहण'परिभाषया स्त्रीप्रत्ययान्तत्वाऽभावात्कथं ततो ढगत आह—स्त्रीभ्यो ढगिति । एवञ्च स्त्रीप्रत्ययान्तप्रातिपदिकाड्ढको विधानसामर्थ्येन 'प्रत्ययग्रहण'परिभाषा बाध्यत इति भावः । नन्वेवं सुपर्ण्यादिभ्यो ङ्यन्तेभ्यो ढक् न स्यात्, उभयत आश्रयणेऽन्तादिवत्त्वाऽभावाच्च विनतादिभ्योऽपि न स्यादत आह—ङ्याबन्तेभ्य इति । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावादिदं सर्वं चिन्त्यम् । तस्मात्—'स्त्रीभ्य' इति सूत्रे 'प्रातिपदिका'दिति न सम्बध्यते इत्येव तत्त्वम् । अन्यथा 'ङ्याब्'ग्रहणस्यैतदर्थमावश्यकत्वेन ङ्याप्सूत्रस्थभाष्यविरोध इति दिक् ।

तत एवेति । वस्तुतोऽवयवस्याऽप्रातिपदिकत्वात्समुदायस्य चाऽणन्तत्वाऽभावान्ङीपोऽप्राप्तिरिति

१—'लभ्यते' पा० ।

को दोषः ? कौम्भकारेयो† न सिध्यति । अवयवस्य वृद्धिस्वरौ‡ स्याताम् । तस्मादनुपसर्जनाधिकारः ।

**अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुपर्ण्या उपसङ्ख्यानम् ॥ ६ ॥**

अनुपसर्जनाधिकारे जातेर्ङीष्विधाने* सुपर्ण्या उपसङ्ख्यानं कर्तव्यम् । सुपर्णी ।

**न वा समासस्यानुपसर्जनत्वाज्जातिवाचकत्वाच्च शब्दस्य सामान्येन ङीष्विधानम् ॥ ७ ॥**

प्र०—तदादिनियमाभावादनियमः प्रसज्येत । तथा च कदाचित्कारीशब्दात्प्रत्ययः स्यात्, कदाचित् कुम्भकारीशब्दात् । यदा तु कुम्भकारशब्दान् ङीब्विधीयते तदा कुम्भकारीशब्द एव स्त्रीप्रत्ययान्तो भवति न तु कारीशब्द इति ततः प्रत्ययो न भवति । ननु कदाचिन्नियमाभावात्कारीशब्दोपि स्त्रीप्रत्ययान्तो भवतीति ततोऽपि ढक्प्रसङ्गः । नैष दोषः । नियमप्रतिषेधेनाधिकस्य तदन्तस्य कार्यं विधीयते न तु न्यूनस्य । अथवा स्त्रीप्रत्यये तदादिनियमाभावमनाश्रित्य कुम्भकारीति प्रयोजनमुक्तम् ।

सुपर्णीति । शोभनानि पर्णान्यस्या इति बहुव्रीहिः । तत्र पर्णशब्दस्योपसर्जनत्वाद्ङीष् न प्राप्नोति ॥ न वेति । सुपर्णशब्दो जातिवाचि प्रातिपदिकं, तच्चानुपसर्जनम् ।

उ०—शङ्कितुमुचितम् । प्रधानेन तदन्तविधिज्ञापने तु नाऽनियमप्रसङ्गदोषोऽत आह—यदा त्विति । 'विधीयते' इत्यनन्तरं 'तदे'ति शेषः । तत इति । कुम्भकारीशब्दादित्यर्थः । नञ्पाठे तु कारीशब्दादित्यर्थः । सत्यपि प्रधानेन तदन्तविधौ शङ्कते—ननु कदाचिदिति नियमप्रतिषेधेनेति । अयं भावः,—नियमेनाऽधिकस्यैव व्यावृत्तिर्न तु न्यूनस्य । अत एव 'अस्याऽपत्यं युवा'—इत्यर्थे 'अ'शब्दादिञि यस्येतिलोपे इञन्तात्फक्सिद्धिः । 'इयदेव इयन्मात्रम्' इत्यादौ वत्वन्तात्स्वार्थे मात्रजादिसिद्धिः । एवञ्च तन्निषेधे तद्व्यावर्त्यस्यैव संग्रहो न्याय्यो न स्वतद्व्यावर्त्यस्य । नन्वसत्यपि प्रधानेन तदन्तविधौ स्त्रीप्रत्यये तदादिनियमाऽभावात्, कुम्भेनैकार्थीभूतस्य निष्कृष्याऽपत्येनाऽनन्वयाच्च, तदन्तर्गत'कारी'शब्दस्य सुबन्तत्वाऽभावाच्च समुदायादेव ढगादि भविष्यतीत्यत आह—अथवेति । तदाश्रयणे तु व्यर्थमेवेदमिति ध्वनितम् । केचित्तु—कुम्भकर्मकोत्पत्त्यनुकूलक्रियाश्रयसंबन्धित्वे विवक्षिते समासोत्पत्त्यनुकूलक्रियाश्रयसंबन्धित्वविवक्षाया अप्यनपायेन तस्याऽपि प्रथमोच्चारितत्वाच्च भवेदेवाऽवयवादुत्पत्तिरेकार्थीभावेऽपि । समुदायाऽर्थेनैकार्थीभावे प्रधानाऽवयवार्थेनाऽपि तस्य दुर्वारत्वात् । ध्वनितश्चेदं—'येन विधि'रिति सूत्रे-भाष्येऽपीति तत्रैव निरूपितम् । सुबन्तत्वन्तु न वचनेन निमित्तकोटौ प्रविष्टं, किन्तु न्यायप्राप्तमिति भाष्याशयः । तत्र 'वृद्धि'दोषः प्रकृतोदाहरणे स्पष्ट एव । 'स्वर'दोषस्तु यदा कुम्भकरणे नियुक्ता कुम्भं करोति तदा 'अणि नियुक्ते' इत्यनेन पूर्वपदाद्युदात्तत्वमिति । न च 'स्त्रिया'मित्यस्य गृह्यमाणविशेषणतायाः प्रागुक्तत्वेन 'अनुपसर्जना'दित्येतद्व्यावर्त्याऽसम्भवेन ज्ञापितेऽपि

---

† स्त्रीभ्योढक् ४ । १ । १२० ‡ किति च ७ । २ । ११८; कितः ६ । १ । १६५

* पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ४ । १ । ६४

न वैष दोषः । किं कारणम् ? समासस्यानुपसर्जनत्वात् । समासोऽत्रानुपसर्जनम् । स च जातिवाचकः । समासस्यानुपसर्जनत्वात्तस्य च जातिवाचकत्वाच्छब्दस्य सामान्येन ङीष् भविष्यति—'जातेरस्त्रीविषयादयोपधात्' [ ४ । १ । ६३ ] इति ।

कथं कृत्वा चोदितं, कथं कृत्वा परिहारः ? 'बहुव्रीहि'रिति कृत्वा चोदितं, 'तत्पुरुष' इति कृत्वा परिहारः ।। १४ ।।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

---

प्र०—'बहुकुक्कुटा नगरी'त्यत्र तु जातिवाचिनः कुक्कुटशब्दस्योपसर्जनत्वात्समासस्याऽजातिवाचित्वाद्ङीषोऽभावः । जातेरिति । 'जाते'रित्यनुवर्तमाने 'पाककर्णपर्णे'त्यनेनेत्यर्थः । बहुव्रीहिरिति । नास्त्युपसर्जनमस्मिन्नित्यनुपसर्जनमित्याश्रीयमाणे पर्णशब्दस्योपसर्जनत्वात् ङीष् न स्यात्, तत्पुरुषे तु दोषाभावः । समासस्योपसर्जनत्वाभावात् ।। १४ ।।

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे चतुर्थस्याध्यास्य
प्रथमेपादे प्रथममाह्निकम् ।

---

उ०—कथं चारितार्थ्यम्,—अनेनैव 'स्त्रिया'मित्यस्य-तदन्तविशेषणताया अपि ज्ञापनात् । तस्य ङीप्प्रकृतिविशेषणताया न्याय्यत्वाच्च । स्वप्रकृत्यर्थे एव तदर्थोऽन्वयात् । एवञ्च 'बहुकुरुचरे'ति व्यावर्त्त्यम्प्रसिद्धम् । किञ्च,—एवं सति 'आपिशले'त्यत्रैतद्व्यावर्त्त्यमेव, 'अनुपसर्जना'दिति तु गृह्यमाणविशेषणमेवेत्याहुः ।

भाष्ये—जातेर्ङीषिति । 'जाते'रित्यनुवर्त्तमाने 'पाककर्णे'ति ङीष्विधाने इत्यर्थः । भाष्ये—'तस्य च शब्दस्य जातिवाचकत्वा'दित्यन्वयः ।

जातिवाचीति । ओषधीजातीवाचीत्यर्थः । नन्वेवं 'जातेरस्त्री'त्यस्याऽनुपसर्जनाऽधिकारे पाठो व्यर्थोऽत आह—बहुकुक्कुटेति । कथं कृत्वेति—भाष्यस्योदाहरणविषयत्वभ्रमं निराकरोति—नाऽस्त्युपेति ॥ १४ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थस्याध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ ४ । १ । १५ ॥

### ढग्रहणे सानुबन्धकस्योपसङ्ख्यानम् ॥ १ ॥

ढग्रहणे सानुबन्धकस्योपसङ्ख्यानं कर्तव्यम् । कारिकेयी हारिकेयी* ।
किं पुनः कारणं न सिध्यति ?

### अननुबन्धकग्रहणे हि न सानुबन्धकस्य ॥ २ ॥

अननुबन्धकग्रहणे हि[1] न सानुबन्धकस्य ग्रहणं भवतीत्येषा परिभाषा कर्तव्या । कान्येतस्याः परिभाषायाः प्रयोजनानि ? तव्यग्रहणे† तव्यद्ग्रहणं मा भूत् । दिव्ग्रहणे‡ दिवुग्रहणं मा भूत् ।

ननु चेयमपि कर्तव्या 'तदनुबन्धकग्रहणेऽतदनुबन्धकग्रहणं ने'ति । कान्येतस्याः परिभाषायाः प्रयोजनानि ? यद्ग्रहणे× ण्यद्ग्रहणं मा भूत् । अङ्ग्रहणे+ चङ्ग्रहणं

---

प्र०—टिड्ढाणञ् । तव्यग्रहण इति । पूरणगुणेति तव्येन समासप्रतिषेध उच्यमानस्तव्यता न भवतीति 'ब्राह्मणकर्तव्य'मिति समासो भवत्येव, तत्र कृत्स्वरेणान्तस्वरितं भवति । तव्येन तु समासे कृत्स्वरेण तशब्दाकार उदात्तः स्यात् । दिव्ग्रहणे इति । तेनाक्षद्युरिति'दिव औ'दिति न भवति । अक्षद्यूभ्यामिति 'दिव उ'दिति न भवति । अन्यथा ऊठि कृते एकदेशविकृतस्यानन्यत्वादौत्त्वोत्त्वे स्याताम् । परिभाषायान्तु सत्यां प्रातिपदिकस्य स्वर्गान्तरिक्षवाचिनो दिवशब्दस्य ग्रहणम् ।

प्रसङ्गेन परिभाषान्तरप्रतिपादनायाह—ननु चेयमिति । स एवानुबन्धो यस्येत्यर्थः । उपात्तानुबन्धव्यतिरिक्तानुबन्धयुक्तस्त्वतदनुबन्धकः । यद्ग्रहण इति । 'यतोऽनाव' इत्यादावित्यर्थः । अङ्ग्रहण इति । 'ऋदृशोऽङि गुण' इत्यत्र चङो ग्रहणाभावादङि विधीयमानं 'श्वयतेर'

---

उ०—टिड्ढा । अन्तस्वरितमिति । तव्यतस्तित्त्वेन स्वरिताऽन्तत्वात् । तशब्दाऽकार इति । प्रत्ययस्वरेण कर्त्तव्यस्य मध्योदात्तत्वात् । अक्षद्यूरिति । धातोः साऽनुबन्धकत्वात् । ऊठि कृते इति । बहिर्भूतविभक्त्यपेक्षौत्त्वोत्त्वाऽपेक्षया क्विबपेक्षत्वादूडन्तरङ्गः ।

दिवशब्दस्येति । डिविप्रत्ययान्तस्याऽव्युत्पन्नस्य वेत्यर्थः । प्रसङ्गेनेति । न तु प्रकृते ढको ग्रहणाऽनुपपत्तिप्रयोजिका सेत्यर्थः । स एवेति । सप्तपर्णादौ वीप्सावदत्र वृत्ताववधारणस्याऽन्तर्भाव इत्यर्थः ।

---

* स्त्रीभ्यो ढक् ४ । १ । १२०
१—'हि सानुबन्धकस्य ग्रहणं न भवती' पा० ।
† पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ । २ । ११
‡ दिव औत् ७ । १ । ८४
× यतोऽनावः ६ । १ । २१३
+ ऋदृशोऽङि गुणः ७ । ४ । १६

मा भूत् । अञ्ग्रहणे याञ्ग्रहणं मा भूत् ।

तद्द्वे[1] एते परिभाषे कर्तव्ये ? न कर्तव्ये । आचार्यप्रवृत्तिर्ज्ञापयति भवत एते परिभाषे यदयं 'वामदेवाड्ड्यड्ड्यौ' [ ४ । २ । ९ ] इति ययतौ ङितौ करोति ।

तत्तर्ह्युपसङ्ख्यानं कर्तव्यम् ? न कर्तव्यम् । अननुबन्धको ढशब्द स्त्रियां नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते । ननु चायमस्ति 'शिलाया ढः' [ ५ । ३ । १०२ ] इति । नैष स्त्रियां वर्तते । अयं तर्हि 'सभाया यः' 'ढश्छन्दसि' [ ४ । ४ । १०५; १०६ ] इति । एषोऽपि न स्त्रियां वर्तते । किं कारणम् ? 'तत्र साधुः' [ ४ । ४ । ९८ ] इति वर्तते, कथं स्त्री नाम सभायां साध्वी स्यात् ।[2]

**अञ्ग्रहणमनर्थकं तदन्ताद्धि ङीन्विधानम् ॥ ३ ॥**

अञ्ग्रहणमनर्थकम् । किं कारणम् ? 'तदन्ताद्धि ङीन्विधानम्' । तदन्ताद्ध्य-

प्र०—इत्यत्वं चङि न भवति-अशिश्वियदिति ॥ ड्यड्ड्याविति । 'यस्येति'लोपेन वामदेव्यमिति रूपे सिद्धे ङित्करणं 'ययतोश्चातदर्थे'इत्यत्र ड्यड्ड्यतोर्ग्रहणनिवारणार्थम् । एवं चैतङ्वित्वस्य प्रयोजनं भवति यद्येते परिभाषे भवतः । तेनाऽवामदेव्यमित्यत्रान्तोदात्तत्वं न भवति, अपि त्वव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् ॥ नैष स्त्रियामिति । शिलेव शिलेयमिति नपुंसकलिङ्ग एव शिलेयशब्दः, स्वभावात् । कथं स्त्री नामेति । यज्ञसभायां विदुषामेव पुरुषाणां साधुत्वाधिकारादिति भावः । ननु सभायां साध्वियं ब्राह्मणपङ्क्तिः परिषद्वेति संभवति स्त्रियाः सभायां साधुत्वम्; एवं तर्हि च्छन्दसि सभेयशब्दस्यैवंविधायां स्त्रियां प्रयोगाभावः ।

अञ्ग्रहणमिति । 'शार्ङ्गरवाद्यञो ङी'नित्यनेनाञन्तान्ङीन्विधानादत्राञन्तान्ङीब्विधान-

उ०—अतदित्यस्य तत्तद्भिन्न इत्यर्थ इत्याह—उपात्तेति । ढशोऽङीति । अनुवृत्तिप्रदर्शनार्थमेतत् । चङि नेति । 'विभाषा धेट्श्व्योः' इति चङ् । जृस्तम्भित्रिति पदेऽङ् । ननु लोपाऽर्थं ङित्वमत आह—यस्येतीति । एवञ्चेतिशब्दस्याऽर्थमाह—यद्येते इत्यादि । अन्तोदात्तत्वं नेति । 'ययतोश्चाऽतदर्थे' इत्यनेन । नञ उत्तरयोर्ययदन्तयोरुत्तरपदयोस्समासस्यान्त उदात्त इति तदर्थः । यज्ञसभायामिति । 'यज्ञे'ति प्रायश्चित्तादेरप्युपलक्षणम् । प्रायश्चितादिविमर्शे याजनादौ च विदुषामेव साधुत्वेन योग्यतयाऽधिकारादिति भावः । वैदुष्यञ्चोपनयनादिमतां पुंसामेवेति तात्पर्यम् ।

१–'ते द्वे' पा० ।

२—पतञ्जलिसमये समाजे स्त्रीणां स्थितिर्न समुन्नता बभूवेत्यनेन ध्वन्यते । पाणिनिकाले तु तस्मादुत्कृष्टतरा प्रतिष्ठा नारीणां सूत्रेषु दृश्यते 'पत्युर्नो यज्ञसंयोगे' ४ । १ । ३३ इति यज्ञसंयोग एव नकारादेशे ङीपि च सति पत्नीशब्दव्युत्पादनात् । तथा च पाणिनिः 'प्रत्यभिवादेऽशूद्रे' ८ । २ । ८३ इत्यत्र स्त्रीणां प्रत्यभिवादवाक्ये प्लुतप्रतिषेधं न चकार । पश्चाद्भाविना कात्यायनेन 'अशूद्रस्त्र्यसूयकेषु' ८ । २ । ८३ वा० १ इति वार्तिकं कुर्वता स्त्रियोऽपि शूद्रकोटौ कृताः ।

अन्तान्ङीन्विधीयते—'शार्ङ्गरवाद्यञो ङीन्' [ ४ । १ । ७३ ] इति । न चास्ति विशेषोऽन्तान्ङीनो वा ङीपो वा । तदेव रूपं, स एव स्वरः ।

**न वा जात्यधिकारात् ॥ ४ ॥**

न वाऽनर्थकम् । किं कारणम् ? 'जात्यधिकारात्' । जातेरिति* तत्रानुवर्तते, अजात्यर्थोऽयमारम्भः—औत्सी औदपानी† ॥ तच्चावश्यं जातिग्रहणमनुवर्त्यम् ।

**अनधिकारे हि पुंयोगादाख्यायां ङीन्प्रसङ्गः ॥ ५ ॥**

अननुवर्तमाने हि जातिग्रहणे पुंयोगादाख्यायां‡ ङीन्प्रसज्येत—बैदस्य स्त्री बैदीति ॥ यदि तर्ह्यस्य निबन्धनमस्तीदमेव कर्तव्यं तन्न कर्तव्यम् । तदप्यवश्यं कर्तव्यम् । अक्रियमाणे हि तस्मिन् बैदस्य भगिनी बैदी परत्वाज्जातिलक्षणो* ङीष् ङीपं बाधेत । ङीनि पुनः सति परत्वान्—ङीन् ङीषं बाधते ।

**ख्युन उपसङ्ख्यानम् ॥ ६ ॥**

ख्युन उपसङ्ख्यानं कर्तव्यम् । आढ्यङ्करणी सुभगङ्करणी × ।

प्र०—मनर्थकम्, स्वरे विशेषाभावात्, अञन्तस्याद्युदात्तत्वान्ङीपि ङीनि वाद्युदात्तस्यैवावस्थानात् ।

औत्सीति । उत्से भवेति भवादावर्थे 'उत्सादिभ्यो'ऽञित्यञ्विधाने जातिवाचित्वाभावः । बैदस्य भगिनीति । अनेन जातिवाचित्वं दर्शयति । या हि बैदस्य भगिनी सा बिदस्यापत्यमिति तस्यां जातिनिमित्त एव बैदशब्दः प्रवर्तते न पुंयोगनिमित्तः । परत्वादिति । परत्वग्रहणेन बाधकत्वं लक्ष्यत इत्यपवादत्वादित्युक्तं भवति ।

ख्युन इति । सूत्रे ख्युनः पाठोऽनार्षः । नञ्स्नञीति । तरुणतलुनशब्दयोरवयोऽर्थे ग्रहणं 'तरुणी सुरे'ति । प्राणिधर्मो हि वयः । गौरादिषु तरुणतलुनशब्दयोः पाठान्ङीषपि भवति । स्वरे

उ०—ङीन्विधानादिति । भाष्ये—हिर्हेतावित्यर्थः । नन्वौत्स्या अपत्याऽर्थत्वे जातित्वमस्त्येवेत्यत आह—भवेति । ननु भगिन्यामपि पुंयोगादेव 'बैद'शब्दस्य वर्तनात्कथं जातित्वमत आह—अनेनेत्यादि । ननु शार्ङ्गरवादिसूत्रे जातिग्रहणाऽनुवृत्तौ निरवकाशत्वान्ङीनः कथम्परत्वोक्तिरत आह—परत्वेति । ननु तरुणतलुनयोः 'वयस्यचरमे' इति ङीपः सिद्धेरुपसंख्यानं व्यर्थमत आह—तरुणेत्यादि । स्वरे विशेष इति ।

* जातेरस्त्रीविषयादयोपधात् ४ । १ । ६३ † उत्सादिभ्योऽञ् ४ । १ । ८६

‡ पुंयोगादाख्यायाम् ४ । १ । ४८ १—'वक्तव्यम्' पा० ।

२—'अनुच्यमाने' पा० ।

× आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ३ । २ । ५६

अत्यल्पमिदमुच्यते 'ख्युन' इति । 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ।' नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानं कर्तव्यम् । नञ् स्नञ्—स्त्रैणी पौंस्नी* । ईकक्—शाक्तीकी याष्टीकी† । ख्युन्—आढ्यङ्करणी सुभगङ्करणी । तरुण तलुन—तरुणी तलुनी ॥ १५ ॥

## यञश्च ॥ ४ । १ । १६ ॥

### [ आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् ॥ ]

आपत्यग्रहणं कर्तव्यं द्वीपाद्यञः प्रतिषेधार्थम् । इह मा भूत्—द्वैप्येति‡ ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैवं विज्ञायते—'कन्करपो यञश्चे'ति । कथं तर्हि ? 'कन्करपोऽयञश्चे'ति ॥ १६ ॥

प्र०—विशेषः । अथवा वयोवाचिभ्यामपि गौरादिपाठात्परत्वान् ङीषेव स्यादिति वयोवचनावपि तरुणतलुनशब्दावुपसङ्ख्यानं प्रयोजयतः, तत्र सामर्थ्यान्ङीप्ङीषोर्विकल्पः ॥ १५ ॥

यञश्च । आपत्यग्रहणमिति । अपत्ये भव—आपत्यः । द्वैप्येति । द्वीपे भवेति भवादार्थे 'द्वीपादनुसमुद्रं य'ञिति यञ् । कन्करपोऽयञश्चेति । अयं संहितापाठ[2] आर्षः । तत्र 'गर्गादिभ्यो य'ञित्यत्राकारप्रश्लेषादयञ्विधीयते, स एव चेहानुक्रियते । तत्राऽकारोऽनुनासिक इत्संज्ञक इह विशेषणार्थ इति यञो ग्रहणाभावाद् द्वैप्येति टाबेव भवति । 'यस्कादिभ्यो गोत्रेऽय-

उ०—उननन्तावाद्युदात्ताविमौ । तत्र ङीप्याद्युदात्तत्वं, ङीषि स्वन्तोदात्तत्वमिति विवेकः । 'तरुणी सुरे'त्याद्यपि वयस आरोपात्प्रयोगः स्यादत आह—अथवेति ॥ १५ ॥

यञश्च । अपत्ये भव इति । स च प्रतिपदोक्तपरिभाषयाऽपत्याऽधिकारस्थ एव गृह्यते । अत एव 'देवाद्यञञौ' इति यञि 'दैव्ये'त्यादौ न ङीबिति बोध्यम् । अत एव प्रत्याख्यानेन समफलता ॥ ननु विच्छिद्य पाठे दोष एवेत्यत आह—आर्ष इति । स तु व्याख्यातृकल्पित इति भावः । नन्वयञोऽभावात्कथं तदन्तान्ङीब्विधिरत आह—तत्रेति ।

नन्वेवं गार्ग्यो न सिध्यतीत्यत आह—तत्राऽकार इति । लुग्विधायकेऽकारप्रश्लेषं विनाऽपि सिद्धि

* स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४ । १ । ८७ † शक्तियष्ट्योरीकक् ४ । ४ । ५९

१—इदं वार्तिकं बहुषु पुस्तकेषु न दृश्यते । ‡ द्वीपादनुसमुद्रं यञ् ४ । ३ । १०

२—महर्षिपाणिना सूत्राणि संहितयैव पठितानि, सूत्रविच्छेदस्तु व्याख्यातृभिः कल्पित इति कैय्यटाशयः ।

## प्राचां ष्फ तद्धितः ॥ ४ । १ । १७ ॥

तद्धितवचनं किमर्थम् ?

**तद्धितवचनं षितः प्रातिपदिकादीकारार्थम् ॥ १ ॥**

तद्धितवचनं क्रियते, षितः प्रातिपदिकादीकारो यथा स्यात् × ।

नैतदस्ति प्रयोजनम् । षित्करणसामर्थ्यादेवात्रेकारो भविष्यति । यथैव तर्हि षित्करणसामर्थ्यादप्रातिपदिकादपीकारो भवत्येवं प्रातिपदिकादित्यस्यानुवर्तनसामर्थ्यादषितोऽपि प्रातिपदिकादीकारः स्यात् * । अस्त्यन्यत्प्रातिपदिकानुवृत्तौ प्रयोजनम् । किम् ? उत्तरार्थम् । 'अत इञ्' [ ४ । १ । ९५ ] दाक्षिः । प्लाक्षिः ॥ १७ ॥

## सर्वत्र लोहितादिकतन्तेभ्य ॥ ४ । १ । १८ ॥

'सर्वत्र'ग्रहणं किमर्थम् ? प्राचामेव हि स्यात् । नैतदस्ति प्रयोजनम् । सिद्धं

---

प्र०—अत्रोश्चे'त्यत्राप्यकारप्रश्लेषः । अथवा गोत्रग्रहणानुवृत्त्या 'गर्गादिभ्योऽय'ञित्यस्यैव लुप्ताकारस्य निर्देशः ॥ १६ ॥

**प्राचां ष्फ** । षित्करणसामर्थ्यादिति । धातोस्त्रपादेः षित्त्वमङ्विधौ चरितार्थमिति त्रपा क्षमेत्यादौ ङीष् न भवति । यथैव तर्हीति । यदि 'षिद्गौरादिभ्यश्चे'त्यत्र षित्प्रातिपदिकशब्दयोर्विशेषणविशेष्यभावो नास्ति तदा समुच्चयेन भाव्यमिति भावः । उत्तरार्थमिति । अत्र त्वनुवर्तनं नान्तरीयकम् । एतच्च गौरादिग्रहणाद्विज्ञायते । समुच्चये गौरादिभ्यो ङीषः सिद्धत्वात् । अत इञिति । अन्यथाऽत इति समर्थविशेषणं स्यादिति भावः ॥ १७ ॥

**सर्वत्र** । सिद्धमिति । आरम्भसामर्थ्यात् प्राचामिति न संभन्त्स्यत इति भावः । सर्वेषा-

---

उ०—दर्शयति-अथवेति । एतेन 'सङ्घाङ्कलक्षणे'ति व्याख्यातं, 'गोत्रचरणा'दित्यतो गोत्रग्रहणाऽनुवृत्तेः । तदनुबन्धकपरिभाषा तु अनित्यत्वेन भाष्यप्रामाण्यान्न प्रवर्त्तते, गोत्रग्रहणस्य तत्राऽनुवृत्त्या गोत्रे तदनुबन्धकयञोऽभावाच्चेति दिक् । 'अभिजि'दिति यञस्तु अस्त्रियां विधानान्न तद्विषये दोषः ॥ १६ ॥

**प्राचां ष्फ** । ननु षित्त्वसामर्थ्यादप्रातिपदिकान्ङीषि धातोरपि स्यादत आह—धातोरिति । धात्वर्थस्य स्त्रीत्वेनाऽयोगः । कृदन्ते त्ववयवे चारितार्थ्येन समुदायोपकारकत्वे मानाऽभाव इति भावः । एतच्च-अत्रानुवृत्तेर्नान्तरीयकत्वञ्च । यद्यपि गौरादिग्रहणमितरप्रातिपदिकव्यावृत्त्यर्थं, तथाऽपि व्याख्यानादत्र तदसम्बन्धेनैवोपपत्तौ'तद्धित'ग्रहणं न कार्यमिति भाष्याशयः । अन्यथा—प्रातिपदिकाऽधिकाराऽभावे । समर्थेति । ततश्च दध्नयोरपत्यमित्यत्र न स्यादिति भावः ॥ १७ ॥

**सर्वत्र** । अपवादेति । बाधकेत्यर्थः । परत्वाद्धि चाप्प्राप्नोति, बाधकविषयेऽपि प्राचां मते ष्फो यथा

---

× कृत्तद्धितसमासाश्च १ । २ । ४६; षिद्गौरादिभ्यश्च ४ । १ । ४१

* ङ्याप्प्रातिपदिकात् ४ । १ । १ १-'प्रातिपदिकादित्यनुवृत्तौ' पा० । २-क्वचिन्न ।

प्राचां पूर्वेण† । इदं तर्हि प्रयोजनं सर्वेषामेव यथा स्यात्।—आवट्यायनी । चापं‡ बाधित्वा ष्फो यथा स्यात् ।

लोहितादिषु शाकल्यस्योपसङ्ख्यानम् ॥ १ ॥

लोहितादिषु शाकल्यस्योपसङ्ख्यानं कर्तव्यम् । शाकल्यायनी ।

यदि पुनरयं शकलशब्दो लोहितादिषु पठ्येत ? नैवं शक्यम् । इह हि शाकल्यस्य च्छात्राः शाकलाः 'कण्वादिभ्यो गोत्रे' [ ४ । २ । १११ ] इत्यण्न स्यात् ।

एवं तर्हि—

कण्वात्तु शकलः पूर्वः

कण्वशब्दाच्छकलशब्दः पूर्वः पठितव्यः ।

कतादुत्तर इष्यते ।

कतशब्दाच्छकलशब्द उत्तरः पठितव्यः ।

पूर्वोत्तरौ तदन्तादी

पूर्वोत्तरौ गणौ तदन्तादी द्रष्टव्यौ । ये कण्वादयस्ते शकलादयः । ये कतपर्यन्तास्ते शकलपर्यन्ताः ॥ किं प्रयोजनम् ?

प्र०—मिति । अपवादविषयाणामपीत्यर्थः । इहानुपयोगात्पूर्वसूत्रेण सर्वत्रग्रहणं संबध्यते । तेनावट्यायनीति प्राचां ष्फः सिद्धो भवति । अन्यथा ह्यावट्याच्चेति चाबुदीचां सावकाशः परत्वात्प्राचां ष्फं बाधेत । कण्वात्त्विति । गर्गादिषु कपि, कत, कुरुकत, अनडुह, कण्व, शकलेत्येवं गणसन्निवेशः । तत्रानडुह–कुरुकत–शब्दावतः स्थानादपकृष्यान्यत्र पठितव्यौ । शकलशब्दस्तु कतकण्वशब्दयोर्मध्ये पठितव्यः—कत, शकल, कण्वेति । तत्र कतस्यान्तः कतन्त इति तत्पुरुषेण शकलशब्द उच्यते । शकन्ध्वादित्वान्निपातनाद्वा पररूपत्वम् । तथा कतोऽन्तो येषां तानि कतन्तानि । तत्र बहुव्रीहितत्पुरुषयोर्बहुव्रीहिः शिष्यते, 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते'इति

उ०—स्यादित्यर्थः । अत्रत्य'सर्वत्र'ग्रहणेन कथं तल्लाभोऽत आह—इहेति । सर्वत्रेत्यस्य बाधकविषयेऽपीति तत्राऽर्थः । ननु चाप्यपि 'लिङ्गविशिष्ट'परिभाषया ष्फस्य सिद्धेः 'सर्वत्र'ग्रहणं व्यर्थमेवेति चेन्न; 'अत' इत्यधिकारादिति दिक् ।

भाष्ये—पूर्वोत्तरौ तदन्तादी इति । पूर्वो–लोहितादिः शकलान्तः, उत्तरः–कण्वादिः शकलादिरित्यर्थः ॥ नन्वेवमप्युपसंख्यानमावश्यकं, कतकण्वयोर्मध्ये पठितस्य शकलस्य गणद्वयादपि प्रच्युतत्वादत आह—तत्र कतस्येति । अन्तशब्दः समीपवाची । पदान्तत्वाद् 'अतो गुणे' इत्यस्याऽप्राप्तेराह—शकन्ध्वा-

† प्राचां ष्फ तद्धितः ४ । १ । १७ १–'एव' क्वचिन्न । ‡ आवट्याच्च ४ । १ । ७५

**ष्फाणौ तत्र प्रयोजनम् ॥**

तत्रैवं सति ष्फाणौ सिद्धौ भवतः।

कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते।
पूर्वोत्तरौ तदन्तादी ष्फाऽणौ तत्र प्रयोजनम् ॥ १८ ॥

## कौरव्यमाण्डूकाभ्यां च ॥ ४ । १ । १९ ॥

**कौरव्यमाण्डूकयोरासुरेरुपसङ्ख्यानम् ॥ १ ॥**

कौरव्यमाण्डूकयोरासुरेरुपसङ्ख्यानं कर्तव्यम्। आसुरायणी†।

**छश्च ॥ २ ॥**

छश्चेति वक्तव्यम्। आसुरीयः‡ कल्पः ॥ १९ ॥

## वयसि प्रथमे ॥ ४ । १ । २० ॥

वयस्यचरम इति वक्तव्यम्। इहापि यथा स्यात्—वधूटी चिरण्टीति।

प्र०—वचनात्। एवं 'कण्वादिभ्यो गोत्रे' इत्यत्राप्येकशेषः। ष्फाणाविति। शाकल्यायनीति स्त्रियामनेन ष्फः। शाकल्यस्य छात्रा ( शाकलाः ) इति छापवादः 'कण्वादिभ्यो गोत्रे'इति शैषिकोऽण् भवति॥ १८ ॥

कौरव्य। आसुरायणीति। 'प्राचां ष्फ तद्धित' इत्यत्र सूत्रपाठापेक्षया तद्धितग्रहणं प्रत्याख्यातम्। आसुरिशब्दात्तु ष्फस्य तद्धितसंज्ञाप्रयोजनमिकारलोपः। अकारान्तात्तु ष्फे सवर्णदीर्घत्वेनापि रूपं सिध्यति। आसुरीय इति। आसुरिणा प्रोक्त इति शेषेऽर्थे छापवादे 'इञश्चे'त्यणि प्राप्ते छस्य प्रतिप्रसव इहैव लाघवार्थं क्रियते। अन्यथा द्विरासुरिग्रहणं कर्तव्यं स्यात् ॥ १९ ॥

वयसि। वयस्यचरम इति। ये त्रीणि वयांसीच्छन्ति कौमारयौवनस्थाविराणि तन्मतेनेदं

उ०—दीति। स्वरभिन्नानामिति। यद्यपीदं 'नपुंसकमनपुंसकेने'त्यनेनाऽपि सिध्यति, तथापि 'कण्वादिभ्य' इत्येतत्साधारण्येनेदमेवोपन्यस्तम्। अत्राऽप्येकशेष इति। षष्ठीतत्पुरुषबहुव्रीह्योरिति भावः ॥ १८ ॥

कौरव्यमा। ननु पूर्वत्र 'तद्धित'ग्रहणप्रत्याख्यानात्कथम् 'आसुरायणी'त्यत्र 'यस्ये'तिं लोपोऽत आह—सूत्रपाठेति। एवञ्च तद्धितग्रहणमेवैतदर्थकस्य ज्ञापकमित्यर्थः। शेषेऽर्थ इति। इदञ्च भाष्योदाहरणस्थ- 'कल्प'पदाज्ज्ञायते। ननु छप्रतिप्रसवस्येह का सङ्गतिरत आह—इहैवेति। लाघवमेव दर्शयति—अन्यथेति ॥ १९ ॥

वयसि। ये त्रीणीति। वार्तिकसम्मतत्वादिदमेव युक्तम् ॥ वयोविषयत्वेन वयोबोधकतया नैतानि

† यस्येति च ६ । ४ । १४८ ‡ इञश्च ४ । २ । ११२ इत्यण् प्राप्तौ छो विधीयते।

१–'वयस्यचरमे' इति वार्तिकमिह स्यादित्युद्द्योतेन ध्वन्यते। न त्विदानीं तथा पाठ उपलभ्यते।

इह कस्मान्न भवति—उत्तानशया लोहितपादिका द्विवर्षा त्रिवर्षेति ? नैतानि वयोवाचीनि । कथं तर्हि वयो गम्यते ? सम्बन्धात् ॥ यदि तर्हि यत्र सम्बन्धाद्वयो गम्यते तत्र न भवति, इहापि न प्राप्नोति—कुमारीति । अत्रापि हि[1] सम्बन्धाद्वयो गम्यते । कोऽसौ सम्बन्धः ? योऽसौ पुंसां सहाऽसंप्रयोगः ।

सम्बन्धादेवात्र वयो गम्यते, इह पुनः सम्बन्धसम्बन्धात् । इह तावदुत्तानशयेति यदा कर्तृत्वं विशेषितं भवति तत उत्तरकालं वयो गम्यते । लोहितपादिकेति

प्र०—वक्तव्यं, वधूटचिरण्टशब्दयोर्द्वितीयवयोवचनत्वात् । यदा तु द्वे एव वयसी उपचयापचयलक्षणे इति दर्शनं तदेतन्न वक्तव्यं, यौवनस्यापि प्रथमवयोरूपत्वात् । उत्तानशयेति । एते हि शब्दाः प्रथमवयोविषयाः प्रयुज्यन्त इति भावः । नैतानीति । नैतेषां वयः प्रवृत्तिनिमित्तमित्यर्थः । संबन्धादिति । विशेषणविशेष्यभावलक्षणादित्यर्थः । ततश्च बहिरङ्गत्वाद्वयःप्रतीतेर्ङीम्न भवति । कुमारीति । पुंसा सहाऽसंप्रयोगोऽस्य प्रवृत्तिनिमित्तं न तु प्रथमं वयः । तथा च वृद्धकुमारीति प्रयोगः पाणिगृहीती तु प्रथमवया अपि कुमारीशब्देन नोच्यत इति भावः । सम्बन्धादेवेति । औत्पत्तिकाद्वाच्यवाचकभावलक्षणात् संबन्धादित्यर्थः । कुमारशब्दस्य हि प्रथमं वयः प्रवृत्तिनिमित्तम् । साहचर्यात्तु पुंसा सहाऽसंप्रयोगमुपादाय वृद्धायां गौणः कुमारीशब्दः प्रयुज्यते ।

सम्बन्धसम्बन्धादिति । कर्तृमात्रादेरभिधेयस्य शब्दसंबन्धस्य प्रमाणान्तरावगतेन विशेषणेन संबन्धादित्यर्थः । कर्तृत्वमिति । उत्तानशयेति शेतिक्रियायाः कर्त्री शब्दार्थः । यदा तु प्रकरणादिवशात् प्रथमवयोविशिष्टा कर्त्री प्रतीयते तदा प्रथमवयोविषयत्वं बहिरङ्गमित्यर्थः । लोहितपादिकेति ।

उ०—वयोवाचीनीत्ययुक्तमत आह–नैषामिति । बाल्ययौवनस्थाविररूपं वयो नैषां प्रवृत्तिनिमित्तमिति भावः । एतच्छब्दप्रतिपाद्यक्रियाकारकादिसम्बन्धाद्वयसोऽप्रतीतेराह—विशेषणेति । प्रकरणादिसापेक्षाऽवधारणादिगर्भविशेषणविशेष्यभावादित्यर्थः । सर्वोऽपि कदाचिदुत्तानः शेते इति सामर्थ्यादुत्तान एव शेते इत्यवधारणमाश्रीयते । तत्र प्रकरणादवृद्धत्वाऽभावे निश्चिते 'बाले'ति गम्यत इति तात्पर्यम् । नन्वेवं वयोऽवगतौ ङीप्स्यादेवेत्यत आह—ततश्चेति । भाष्ये—अत्रापि हि सम्बन्धादिति । पुरुषाऽसम्प्रयोगसम्बन्धादिति भावः ।

औत्पत्तिकादिति । स्वाभाविकादित्यर्थः । स हि साक्षात्सम्बन्धः । प्रथमं वय इति । पुंसि तस्यैव प्रवृत्तिनिमित्तत्वेन स्त्रियामपि तदेवेति भावः । साहचर्यादिति । यस्याः प्रथमं वयस्तस्याः पुंसाऽसम्प्रयोग इति सम्बन्धादित्यर्थः । शब्दसम्बन्धस्येति । शब्देन सम्बन्धो यस्येति बहुव्रीहिः । प्रमाणान्तरम्—प्रकरणादि । विशेषणेनेति । प्रकरणादिना प्रथमवयोविशिष्टायाः कर्त्रीत्वप्रतीतिरिति प्रकरणादिप्राप्तप्रथमवयोरूपेण विशेषणेन सम्बन्धादित्यर्थः । भाष्ये—यदा कर्तृत्वमित्यादि । प्रत्ययाऽर्थो यदोपपदार्थधात्वर्थाभ्यां विशेषितस्तदा तद्विशेषणकप्रत्ययार्थस्य सामान्यतो बोधोत्तरम्प्रकरणादितो वयः प्रतीतिरित्यर्थः । उत्तानशयननिरूपिकर्तृत्ववतीति बोधादिति भावः । एवञ्च बहुव्रीह्यर्थोऽन्यपदार्थो वर्तिपदार्थविशेषणकः

१–क्वचिन्न । २–'पुंसाऽसंप्रयोगः' पा० ।

यदा बहुव्रीह्यर्थो विशेषितस्तत उत्तरकालं वयो गम्यते। द्विवर्षा त्रिवर्षेति यदा द्विग्वर्थो* विशेषितस्तत उत्तरकालं वयो गम्यते।

यदि तर्हि यत्र सम्बन्धादेव वयो गम्यते तत्र भवति, इहापि तर्हि प्राप्नोति-कन्येति। निपातनादेतत्सिद्धम्। किं निपातनम्? 'कन्यायाः कनीन च' [४।१।११६] इति॥ २०॥

## अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥४।१।२२॥

इमौ द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्योऽवक्तुम्। कथम्? एवं वक्ष्यामि-परिमाणान्तात्तद्धितलुकि ङीब्भवतीति। तन्नियमार्थं भविष्यति—'परिमाणान्तादेव तद्धितलुकि ङीब्भवति नान्यत' इति। ततो 'विस्ताचितकम्बल्येभ्यो ने'ति। 'तद्धितलुकी'त्येव॥ २२॥

## बहुव्रीहेरूधसो ङीष्। ४। १। २५॥

### ऊधसो नकारो लिङ्गाधिकारे॥ १॥

प्र०—अत्राप्यन्यपदार्थमात्रं शब्दार्थः। विशेषप्रतिपत्तिः प्रकरणायत्ता। द्विवर्षेति। द्वे वर्षे भूतेति ठञो 'वर्षाल्लुक् च' 'चित्तवति नित्य'मिति लुक्। अत्रापि परिमाणिमात्रं शब्दार्थः, शालादावपि प्रयोगात्। वयः प्रतिपत्तिस्तु प्रमाणान्तरनिबन्धना॥ २०॥

अपरिमाण। परिमाणान्तादेवेति। 'तद्धितलुक्येवे'त्येष तु विपरीतनियमो न भवति, लक्ष्यानुसारित्वाल्लक्षणस्य। तेन तद्धितलुकि समाहारे च द्व्याढकीति ङीब् भवति। पञ्चभिरश्वैः क्रीता पञ्चाश्वेत्यादौ न भवति। विस्तादीनां परिमाणवाचित्वात्प्रतिषेधो विधेयः॥ २२॥

बहुव्रीहेः। ऊधस इति। 'ऊधसोऽन'ङिति समासान्तप्रकरणे सूत्रमकृत्वा 'बहुव्रीहे-

उ०—प्रथमं बुध्यते ततोऽनन्तरं प्रकरणादितः 'स्वाभाविकरक्तपादरत्नवती बाले'ति विशेषप्रतीतिरिति। (भाष्ये) द्विग्वर्थ इत्यस्य—द्विगुनिमित्तप्रत्ययार्थ इत्यर्थः। प्रमाणान्तरम्—प्रकरणादि॥ २०॥

अपरिमाण। तद्धितलुक्येवेति। एवं हि समाहारे न स्यादिति भावः। 'आगन्तूनामन्ते निवेश' इति न्यायेन स एवोचित इति तात्पर्यम्। द्व्याढकीति। द्वाभ्यामाढकाभ्यां क्रीतेति, द्वयोराढकयोः समाहार इति चाऽर्थः। परिमाणवाचित्वादिति। विस्तादीनां पृथग्ग्रहणादेवाऽत्र 'परिमाण'शब्देनोन्मानमपि गृह्यत इति भावः। विस्तादयः—परिमाणविशेषा अपीत्याशय इत्यन्ये॥ २२॥

बहुव्रीहेरू। ननु लिङ्गाऽधिकारे क्रियमाणे'महोध्नी' इत्यादावूधसोऽनङ् दुर्वारोऽत आह—ऊध-

* तदस्य परिमाणम्; चित्तवति नित्यम् ५। १। ५७; ८९

ऊधसो नकारो† लिङ्गाधिकारे कर्तव्यः । इह मा भूत्-महोधाः पर्जन्य इति ।

**न वा समासान्ताधिकारे स्त्रीग्रहणात् ॥ २ ॥**

न वा लिङ्गाधिकारे नकारः कर्तव्यः । किं कारणम् ? 'समासान्ताधिकारे स्त्रीग्रहणात्' । समासान्ताधिकारे [ एवं[1] ] स्त्रीग्रहणं कर्तव्यम् ।

**इतरथा हि कब्विधिप्रसङ्गः ॥ ३ ॥**

इतरथा हि कब्विधिः प्रसज्येत ॥ कस्यां पुनरवस्थायां कप्प्राप्नोति ? प्राङ्ङीषुत्पत्तेः* । प्राक्तावन्न प्राप्नोति । किं कारणम् ? न हि ङीष्विभाषा । उत्पन्ने तर्हि ङीषि प्राप्नोति‡ । उत्पन्ने चापि न प्राप्नोति । किं कारणम् ? 'नद्यन्तानां यो

प्र०—ऊधसो ङीष्-नश्चे'ति वक्तव्यम् । तत्रालोन्त्यस्येत्यन्त्यस्य नकारो ङीष्प्रत्ययश्च स्त्रियां भवतीत्यर्थो भवति । 'धनुषोऽनङि'ति समासान्तेषु पठितव्यम् । एवं च महोधाः पर्जन्यः, कुण्डोधो धैनुकमित्यनङ् न भवति ।

न वेति । समासान्तप्रकरण एव 'ऊधसोऽनङ्-स्त्रिया'मिति वक्तव्यम् । तत्रैवावश्यकर्तव्यं कप्समासान्तनिवृत्त्यर्थमित्यर्थः ॥ कस्यां पुनरिति । द्वावप्यत्र कपौ, नदीलक्षणो नित्यः, शेषलक्षणो विकल्पितश्च, तत्र कस्य प्रसङ्ग इति प्रश्नः ।

प्रागिति । शेषलक्षण इत्यर्थः । न हि ङीषिति । यद्यत्र कप्स्यान्ङीष्विधानमनवकाशं स्यादिति भावः । द्वयोस्तु विकल्पे सति परस्परपरिहारेण प्रवर्तनान्नास्ति ङीषोऽनवकाशत्वम् ।

उ०—सोऽनङिति । नश्चेति वक्तव्यमिति । न चैवमनो लाक्षणिकत्वादल्लोपाऽनापत्तिः, अर्थवत्परिभाषावदन्-ग्रहणे 'लक्षणप्रतिपदोक्त'परिभाषाया अप्यप्रवृत्तेः । एतद्भाष्यप्रमाण्यादेवाऽनङादेर्ङित्त्वं—हलन्तेभ्य आचार-क्विबभावान्नऽऽचारक्विबन्ते आत्मनेपदप्रयोजकमिति बोध्यम् । नन्वत्र पाठे 'धनुषश्चे'त्यत्राऽनङ् न लभ्येतेत्यत आह—धनुष इति ।

कप्समासान्तेति । कब्रूपसमासान्तेत्यर्थः । द्वावत्रेति । अवस्थाप्रश्नद्वारेण कब्विशेषविषयः प्रश्न इति भावः । अनवकाशं स्यादिति । वाक्याऽवस्थायां कपः प्रवृत्त्या तदन्तस्यैव बहुव्रीहित्वादूधोऽन्तबहुव्रीहिरभाव इति भावः । ननु 'न हि सावकाशो ङीष्' इति वक्तव्ये 'न हि ङीष् विभाषे'ति कुत उक्तमत आह—द्वयोस्त्विति । नदीलक्षण इति । ननु ङीषि कृते तदन्तस्य बहुव्रीहित्वाऽभावाद्बहुव्रीह्यर्थकवाक्यत्वाऽभावाच्च 'नद्यन्तबहुव्रीहेः कब्'—इत्यर्थेऽपि कथं तत्प्राप्तिः, न च 'लिङ्गविशिष्ट'परिभाषया तत्प्राप्तिः, तया च परिभाषया स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशो बोध्यत इति वाच्यं, 'समासान्तविधौ लिङ्गविशिष्टपरिभाषा ने'ति 'ङ्याप्प्रातिपदिका'दिति सूत्रे भाष्ये उक्तत्वेनाऽत्र

† ऊधसोऽनङ् ५ । ४ । १३१ १—'वक्तव्यः' पा० । २—क्वचिन्न ।
* शेषाद्विभाषा ५ । ४ । १५४ ‡ नद्यृतश्च ५ । ४ । १५३

बहुव्रीहि'रित्येवं तत्, न चैष नद्यन्तानां बहुव्रीहिः। प्रागेव तर्हि प्राप्नोति। ननु चोक्तं 'न हि ङीब्विभाषे'ति। यद्यपि न ङीब्विभाषा, कप्तु विभाषा। कपोऽवकाशः—अन्यो बहुव्रीहिः—अयवकः अव्रीहिकः। ङीषोऽवकाशः—विभाषा कप्, यदा न कप्सोऽवकाशः—कुण्डोध्नी घटोध्नी। कप्प्रसङ्ग उभयं प्राप्नोति, परत्वात्कप्स्यात्। तस्मात्सुष्ठूच्यते—'न वा समासान्ताधिकारे स्त्रीग्रहणादितरथा हि कब्विधिप्रसङ्ग'इति†॥ २५॥

## दामहायनान्ताच्च ॥ ४। १। २७॥

### दामहायनान्तात्संख्यादेः॥ १॥

दामहायनान्तात्सङ्ख्यादेरिति वक्तव्यम्। इह मा भूत्—उद्दामा वडवेति।

### तत्पुरुषविज्ञानाद्वा सिद्धम्॥ २॥

बहुव्रीहेरिति‡ वर्तते, तत्पुरुषश्चायम्-उत्क्रान्ता दाम्न उद्दामेति। भवेत्सिद्धं यदा तत्पुरुषः। यदा तु खलु बहुव्रीहिस्तदा न सिध्यति-उत्क्रान्तं दामाऽस्या इति। ननु च चेतनावत एतद्भवति-उत्क्रमणं वाऽपक्रमणं वा, दाम चाऽचेतनम्। अचेतनेष्वपि चेतनावदुपचारो दृश्यते। तद्यथा,—स्रस्तान्यस्या बन्धनानि, स्रस्यन्तेऽस्या बन्धनानीति।

तत्तर्हि सङ्ख्यादेरिति वक्तव्यम्? न वक्तव्य। प्रकृतमनुवर्तते। क्व प्रकृतम्?

प्र०—उत्पन्न[3] इति। नदीलक्षण इत्यर्थः॥ २५॥

दामहाय। संख्यादेरिति। संख्याव्यययोर्द्वन्द्वनिर्देशादेकदेशानुवृत्तिरलभ्येति भावः। चेतनावत इति। लोकव्यवहारे उत्क्रमणादौ चेतनस्यैव कर्तृत्वेन प्रसिद्धत्वात्। न हि 'घट उत्क्रामती'ति प्रसिद्धिरिति भावः। अचेतनेष्वपीति। देशान्तरप्राप्तिरचेतनानामपि दृश्यत इत्यर्थः।

उ०—तदप्राप्तेरिति चेन्न; तदनभ्युपगमेनैव पूर्वपक्षिणा प्राप्त्युद्भावनात्। समासान्तविधाववयवग्रहण एव दोष इत्यत्रैव तद्भाष्यतात्पर्याच्च, समाससमुदायग्रहणे तत्प्रवृत्त्यप्रवृत्त्योः फले विशेषाऽभावाच्च। भाष्ये—नद्यन्तानामिति। नद्यन्तप्रकृतिकसुबन्तोत्तरपद इति भावः। अत एव 'करभोरु'रित्यत्र न नित्यः कप्। परत्वादिति। उत्कृष्टत्वात् अन्तरङ्गत्वादित्यर्थः॥ २५॥

दामहाय। न हि घट इति। फलाऽनुकूलत्वेन कृतेरपि सर्वधात्वर्थत्वादिति भावः। भाष्ये—अचेतनेष्वपीति। कृत्याद्यारोपेण प्रयोग इति भावः। एवमेव 'रथो गच्छती'त्याद्युपपत्तिः।

१—'सः' पा०।
† ४। १। २५ वा० २; ३
‡ बहुव्रीहेरूधसो ङीष् ४। १। २५
२—'चेतनवदु'पा०।
३—अस्थानेऽयं पाठो मुद्रितेषूपलभ्यते। 'प्रागिति' इत्यस्मात्पूर्वमनेन भवितव्यम्।

'सङ्ख्याव्ययादेर्ङीप्' [ ४ । १ । २६ ] इति । यदि तदनुवर्तते, अव्ययादेरपि प्राप्नोति । नैष दोषः । सङ्ख्यादेरित्यनुवर्तते, अव्ययादेरिति निवृत्तम् । कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तते, एकदेशो न ? एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति । यद्यथा,—'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' [ ५ । २ । २४ ] । 'पक्षात्तिः' [ २५ ] इत्यत्र 'मूल' इत्यनुवर्तते, 'पाक' इति निवृत्तम् ।

अथेह कथं भवितव्यम्—द्वौ हायनावस्याः शालाया द्विहायना त्रिहायनेति ।

हायनो वयसि स्मृतः ।

वयोवाचिनो हायनशब्दस्य ग्रहणम्, न चैष वयोवाची ।

अथ णत्वं कस्मान्न भवति ? णत्वमपि वयोवाचिन एव ॥ २७ ॥

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ४ । १ । ३० ॥

मामकग्रहणं किमर्थं, न 'अणन्ता'दित्येव सिद्धम्* ? नियमार्थोऽयमारम्भः—'मामकशब्दात्संज्ञाछन्दसोरेव' । क्व मा भूत् ? मामिका† बुद्धिरिति ॥ ३० ॥

प्र०—एकयोगेति । शब्दानुमानपक्षे यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञायते स एवानुवर्तते । अर्थानुमानपक्षे तु द्वन्द्वार्थस्यैकत्वादनुवृत्तिः स्यात् ।

हायन इति । वक्तव्यमेतदिति भावः । णत्वमपीति । 'त्रिचतुर्भ्यां हायनस्ये'ति विहितम् ॥ २७ ॥

केवल । मामिकेति । ममेयमिति-'युष्मदस्मदोरन्यतरस्यां खञ्चे'त्यण् । 'तवकममकावेकवचने' इति ममकादेशः । टाप् । 'मामकनरकयोरुपसंख्यान'मितीत्वम् ॥ ३० ॥

उ०—एकयोगनिर्दिष्टानामेकदेशनिवृत्तौ बीजमाह-शब्दानुमानेति । भाष्ये-'शालाया' इत्यन्तः प्रश्नः । ईदृशेऽर्थे कथं प्रयोगेण भाव्यमिति प्रश्नः । द्विहायनेत्याद्युत्तरम् ॥ वक्तव्यमिति । हायनाऽन्तो यो बहुव्रीहिः स वयसि गम्ये एव ङीषः प्रकृतिः शिष्टैः स्मृत इत्यर्थो भाष्यस्य ॥ २७ ॥

* युष्मदस्मदोरन्यतरस्यां खञ् च; तवकममकावेकवचने ४ । ३ । १; ३; टिड्ढाणञ्..... द्वयसः ४ । १ । १५

† अजाद्यतष्टाप् ४ । १ । ४; मामकनरकयोरुपसंख्यानमप्रत्ययस्थत्वात् ७ । ३ । ४४ वा० ४

## रात्रेश्चाजसौ ॥ ४ । १ । ३१ ॥

अजसादिष्विति वक्तव्यम् । इहापि यथा स्यात्—

रात्रिं रात्रिं स्मरिष्यन्तः, रात्रिं रात्रिमजानतः[1] ।
सर्वां रात्रिं सहोषित्वा, पत्न्या एका त्रिरात्रिकाम्[2] ॥ ३१ ॥

## अन्तर्वत्पतिवतोर्नुक् ॥ ४ । १ । ३२ ॥

### अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे ॥ १ ॥

अन्तर्वत्पतिवदिति गर्भभर्तृसंयोग इति वक्तव्यम् । इह मा भूत्—

'प्रथते त्वया पतिमती पृथिवी'ति ।

अथान्तःशब्दस्याऽगर्भसंयोगे किं प्रत्युदाह्रियते ? 'अन्तरस्यां शालायामस्ती'ति । किं पुनः कारणं वाक्यमेव प्रत्युदाह्रियते न पुनर्मतुप् ? अस्तिसामानाधिकरण्ये मतुब्विधीयते‡, न चाऽत्राऽस्तिना सामानाधिकरण्यम् । इहापि तर्हि न प्राप्नोति—अन्तर्वत्नीति । एवं तर्हि—

### अन्तर्वत्पतिवतोस्तु[3] मतुब्वत्वे निपातनात् ।

अन्तर्वदिति मतुब्निपात्यते, वत्वं सिद्धम् । पतिवदिति वत्वं निपात्यते* मतुप्सिद्धः ॥ किमविशेषेण ? नेत्याह—

प्र०—अन्तर्वत्पति । अन्तर्वदिति । अन्तर्वत्नी—गर्भिणी । पतिवत्नी—जीवद्भर्तृकेत्यर्थः । किं पुनरिति । अन्तर्वतीति नुगभाव एव प्रत्युदाहार्य इति मन्यते । न चात्रेति । अन्तः—

उ०—रात्रेश्चा० । भाष्ये—'सर्वां रात्रिं सहोषित्वा पत्न्या एका त्रिरात्रिकाम्' इति पाठः ॥ ३१ ॥
अन्तर्वत्प । जीवदिति । लोकव्यवहारादीदृशस्य संयोगस्य ग्रहणम् । अत एवाऽग्रे 'जीवपत्याश्चे'-ति भाष्ये उक्तम् । तत्र 'ङिति ह्रस्वश्चे'ति पाक्षिकनदीत्वम् । ननु मतुब्युगिल्लक्षणङीपो दुर्वारत्वेन कथं

१—'अजानन्तः' पा० । २—'वृत्त्यामेकान्तरात्रिम्' कीलहार्नपाठः । 'पत्न्या एका त्रिरात्रिकाम्' इति नागेशसम्मतः पाठः । 'पत्न्या चैकान्तरात्रिकम्' पा० । 'पत्न्या एकान्तरात्रिकाम्' इति गौडा पठन्ति ।
‡ तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ९४ ३—'पतिवतोर्नुक्' पा० ।
* मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८ । २ । ९

गर्भिण्यां जीवत्यां च

एतस्मिन्विषये ।

वा च च्छन्दसि नुग्भवेत् ॥

वा च च्छन्दसि नुग्वक्तव्यः । सान्तर्वती देवानुपैत् । सान्तर्वत्नी देवानुपैत् । पतिवती तरुणवत्सा । पतिवत्नी तरुणवत्सा ।

अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् ।
गर्भिण्यां जीवपत्यां च वा च च्छन्दसि नुग्भवेत् ॥ ३२ ॥

## पत्युर्नो यज्ञसंयोगे ॥ ४ । १ । ३३ ॥

यज्ञसंयोग इत्युच्यते, तत्रेदं न सिध्यति—इयमस्य पत्नी । क्व तर्हि स्यात् ? पत्नीसंयाजा इति, यत्र यज्ञसंयोगः ।

नैष दोषः । पतिशब्दोऽयमैश्वर्यवाची । सर्वेण च गृहस्थेन पञ्च महायज्ञा निर्वर्त्याः, यच्चादः सायंप्रातर्होमचरुपुरोडाशान्निर्वपति तस्यासावीष्टे ।

प्र०—शब्दस्याधिकरणप्रधानत्वादिति भावः । वा चेति । मतुब्वत्वे तु नित्यं भवतः ॥ ३२ ॥

पत्युर्नो । इयमस्य पत्नीति । 'यज्ञसंयोगे' इति पतिशब्दस्य विशेषणं मन्यते । तेन यत्र यज्ञवाचिसमवधाने पतिशब्दः प्रयुज्यते पत्नीसंयाजा इत्यादौ तत्रैव नत्वेन भाव्यमिति भावः । पतिशब्दोऽयमिति । पतिशब्दार्थस्य यज्ञसंयोग इति विशेषणम् । पत्न्याश्च दम्पत्योः सहाधिका-

उ०—प्रत्युदाहरणत्वमत आह—नुगभाव एवेति । भाष्ये उक्तमेव सामान्येनोपसंहरति—एतस्मिन्विषय इति । एतस्मिन् विषयविशेष इत्यर्थः । नुक्पदोच्चारणकृत्यमाह—मतुब्वत्वे इति ॥ ३२ ॥

पत्युर्नो । पतिशब्दस्येति । नार्थस्येत्यर्थः । 'पत्नीसंयाज'शब्दो यागविशेषस्य संज्ञा । पतिशब्दाऽर्थस्येति । तत्प्रवृत्तिनिमित्तस्यैश्वर्यस्येत्यर्थः । सूत्रे 'यस्य च भावेने'ति सप्तमी । यज्ञसंयोगे सति यदैश्वर्यं, प्रत्यासत्त्या तन्निरूपितं, तत्र वर्त्तमानात्पतिशब्दादित्यर्थ इति भावः । यज्ञफलस्वर्गादिभोक्तृत्वाच्च यज्ञस्वामित्वं भार्याया बोध्यम् । सहाऽधिकारादिति । 'मदभिलषितसाधनत्वान्मदर्थं कर्मे'त्येवंलक्षणोऽधिकारो भार्याया अप्यस्तीति मीमांसायां स्पष्टम् । कर्त्तृत्वादिति । यस्याऽधिकारस्तस्य कर्तृत्वादित्यर्थः । न तु शूद्रस्येति । विद्याया अभावात्तस्यैवाऽनधिकारे तद्भार्यायाः सुतरामिति भावः । ननु पञ्चमहायज्ञेषु शूद्राणामप्यधिकारोऽस्तीति चेन्न, शूद्रस्येत्यस्याऽसच्छूद्रस्येत्यर्थात् । सच्छूद्राणामेव तेष्वधिकार इति

१—कीलहार्नसंस्करणे संग्रहश्लोक इह न पठ्यते ।

२—'पत्नीसंयाज इति' पा० । यागविशेषस्य संज्ञेयम् ।

एवमपि 'तुषजकस्य पत्नी'ति न सिध्यति । उपमानात्सिद्धम् । पत्नीव पत्नीति ॥ ३३॥

## विभाषा सपूर्वस्य ॥ ४ । १ । ३४ ॥

### पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् ॥ १ ॥

पत्युः सपूर्वादुपसर्जनसमास उपसङ्ख्यानं कर्तव्यम् । वृद्धपतिः वृद्धपत्नी । स्थूलपतिः स्थूलपत्नी ॥ वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् ? आशापतिः आशापत्नी ।

### सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'पत्युः प्रातिपदिकविशेषणत्वात्' । नैवं विज्ञायते— 'अस्त्यस्मात्पतिशब्दात्पूर्वः सोऽयं सपूर्वः, सपूर्वात्पतिशब्दादनुपसर्जना'दिति । कथं तर्हि ? 'अस्त्यस्मिन्प्रातिपदिके पूर्वस्तदिदं सपूर्वम्, सपूर्वात्प्रातिपदिकात्

प्र०—राद्यज्ञेऽधिकारात्कर्तृत्वात्तत्फलसम्बन्धाद्यज्ञसंयोगः । तुषजकस्येति । त्रैवर्णिकानामेव सभार्याणां यज्ञेऽधिकारो न तु शूद्रस्य । उपमानादिति । अग्निसाक्षिपूर्वकपाणिग्रहणाश्रयादिति भावः ॥ ३३ ॥

विभाषा । सहशब्दोऽत्र विद्यमानवचनो–विद्यमानपूर्वं सपूर्वं, न तु 'सपुत्र आगत' इत्यादिवत्तुल्ययोगे सहशब्दः । न हि पूर्वस्य नकारादेश इष्यते । तत्र पतिशब्दविशेषणं सपूर्वग्रहणमिति मत्वाह—पत्युरिति । उपसर्जनसमास इति । सर्वोपसर्जने बहुव्रीहावित्यर्थः । आशापतिरिति । आशायाः पतिरिति षष्ठीसमासः । प्रातिपदिकविशेषणत्वादिति । प्रातिपदिकं पतिशब्देन विशेष्यते, तदेवानुपसर्जनग्रहणेन सपूर्वग्रहणेन च । पूर्वशब्दश्चावयववाची

उ०—प्रसिद्धं स्मृत्यादिषु । अग्नीति । अग्निसाक्षिकपाणिग्रहणनिमित्तसादृश्यादित्यर्थः । इदमुपलक्षणम्, येषां तदपि नास्ति, तेषां सादृश्यान्तरं बोध्यम् ॥ ३३ ॥

विभाषा स । विद्यमानेति । '[२]सहैव पुत्रैर्दशभि'रितिवत् । न त्विति । तथा सति पूर्वस्यापि नकारः स्यादिति भावः । तदाह—न हीति । तत्र पतिशब्देति । प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्गृह्यमाणविशेषणताया एव सर्वत्र दर्शनात्—'अनुपसर्जना'दित्यपि तस्यैव विशेषणमिति भावः । ननु 'वृद्धपत्नी'त्यादावपि समास उपसर्जनं न भवतीत्यत आह—सर्वोपसर्जनेति । वस्तुतस्तूपसर्जनपत्यवयवके समासे इत्यर्थः । अत एव—'अतिपत्नी'त्यपि सिध्यति, सङ्कोचे मानाऽभावाच्च । अत एव प्रत्याख्यानारम्भयोः समफलता । आशायाः पतिरिति । आशापतिश्चन्द्रः तत्पूरकत्वेन । तदेव—पत्यन्तं प्रातिपदिकमेव । सपूर्वग्रहणेन चेति । 'विशेष्यते' इत्यनुषङ्गः । ननु 'वृद्धपत्नी'त्यादौ समासप्रातिपदिकात्पूर्वस्य कस्यचिदभावात्सपूर्वत्वाऽभावेन प्रत्ययो न स्यादत आह—पूर्वशब्दश्चेति । अत एव वाक्ये नाऽतिप्रसङ्गः । प्रत्ययविधौ

१—'पूर्वं' पा० ।

२—सहशब्दोऽत्र विद्यमानवाची ।

पत्यन्तादनुपसर्जना'दिति ॥ ३४ ॥

## पूतक्रतोरै च ॥ ४ । १ । ३६ ॥

### पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् ॥ १ ॥

पूतक्रत्वादयः पुंयोगप्रकरणे* वक्तव्याः । पूतक्रतोः स्त्री पूतक्रतायी । यया हि पूताः क्रतवः पूतक्रतुः सा भवति ।

### लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतप्रसङ्गः ॥२॥

लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतं प्राप्नोति । पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः † । पञ्चाग्निः दशाग्निः ‡ । किमुच्यते 'सर्वत्रे'ति ?

प्र०—गृह्यते न तु व्यवस्थावाची, शब्देऽवयवस्य प्रत्यासन्नत्वात्, सामर्थ्याच्च । पतिशब्देन तदन्तविधिर्भवति, 'ग्रहणवते'ति तदन्तविधिप्रतिषेधबाधनात् ॥ ३४ ॥

पूतक्र । पूतक्रत्वादीनामिति । त्रय एते योगाः ङीप्सहिताः 'पुंयोगादाख्याया'मित्यत्रानुवर्तयितव्या इत्युक्तं भवति । तेन यदा पुंयोगान् स्त्रियां पूतक्रत्वादयो वर्तन्ते तदायं विधिर्नान्यदा ।

लिङ्गसंनियोगेनेति । लिङ्गार्थविहितः प्रत्ययो लिङ्गशब्देनोच्यते । यद्यपि स्त्रीप्रत्ययेन सहागमादेशानां विधानं तथापि विधानोत्तरकालं स्त्रीप्रत्यये लुप्तेऽपि तेषां श्रवणं प्रसज्येत, तन्निवृत्तौ प्रमाणाभावात् । यथा यमलकयोरेकविनाशेऽपि नापरस्य विनाश इति भावः । पञ्चेन्द्राण्य इति । तद्धितार्थे द्विगुः । 'सास्य देवते'त्यण् । तस्य 'द्विगोर्लुगनपत्ये' इति लुक् । 'लुक्तद्धितलुकी'ति ङीषो लुक् । अत्रानुको निवृत्तिर्न प्राप्नोति । पञ्चाग्निरिति । पञ्चाग्नाय्यो

उ०—तदन्तविधिप्रतिषेधादाह—सामर्थ्याच्चेति । सपूर्वस्येति विशेषणसामर्थ्यादित्यर्थः । विद्यमानपूर्वोऽवयवकत्वस्य केवलपतिशब्देऽभावात्, पकाररूपाऽवयवस्तु अव्यभिचारीति तात्पर्यम् । लक्ष्याऽनुसारिव्याख्यानाच्च 'अनुपसर्जना'दित्यपि तदन्तविशेषणम् । तदुक्तम् भाष्ये—पत्यन्तादनुपसर्जनादिति ॥ ३४ ॥

पूतक्रतो । अविशेषेण सर्वेषामुत्तरयोगानां ग्रहणमिति भ्रमं निराकरोति—त्रय इति । लक्ष्याऽनुसारिव्याख्यानेनेति भावः । नन्वर्थधर्मस्य लिङ्गस्य लुकोऽसम्भवः, आगमादेशैः सन्नियोगस्य चाऽसम्भवोऽत आह—लिङ्गार्थे इति । यद्यपीति । सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायादिति भावः । अस्य न्यायस्य व्यभिचरितत्वं दर्शयति—यथेति । अत्रानुक इति । 'इन्द्रवरुणे'ति विहितस्येत्यर्थः । ऐकारस्य—

* पुंयोगादाख्याम् ४ । १ । ४८

† इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४ । १ । ४९; सास्य देवता ४ । २ । २४; द्विगोर्लुगनपत्ये ४ । १ । ८८; लुक् तद्धितलुकि १ । २ । ४९

‡ वृषाकप्यग्निकुसितकुसीदानामुदात्तः ४ । १ । ३७

अन्यत्रापि नावश्यमिहैव । क्वान्यत्र ? पञ्चभिर्धीवरीभिः क्रीतः पञ्चधीवा दशधीवेति×।

लिङ्गग्रहणेन नार्थः । 'सर्वत्रागमादेशानां वचने लुकि तत्कृतप्रसङ्ग' इत्येव । इदमपि सिद्धं भवति—पञ्चमेन गृह्णाति पञ्चकः+ । नैतदस्ति । मडयं परादिः, स डटो ग्रहणेन ग्राहिष्यते । इदं तर्हि प्रयोजनम्—षष्ठेन गृह्णाति षट्क इति† ।

**सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणे वचनात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? आगमादेशा य इह स्त्रीप्रकरण उच्यन्ते तेऽङ्गाधिकारे वक्तव्याः* ॥ 'स्त्रीप्रकरण'ग्रहणेन नार्थः । 'सिद्धं त्वागमादेशानामङ्गतो वचना'-दित्येव । इदमपि सिद्धं भवति—षष्ठेन गृह्णाति षट्क इति ।

प्र०—देवता अस्येति पूर्ववत्सर्वम् । अत्रैकारस्य निवृत्तिर्न प्राप्नोति । पञ्चभिरिति । आर्हीयष्ठक् । तस्याध्यर्द्धपूर्वेति लुक् । ततो ङीपो लुक् । अत्र रेफस्य निवृत्तेरप्रसङ्गः । पञ्चमेनेति । 'तावतिथस्य ग्रहणमिति लुग्वे'त्यत्र 'तावतिथेन गृह्णातीति लुक् चे'त्युपसंख्यानात्कन्प्रत्ययो डटश्च लुक् । स डट इति । एतेन मट्सहितस्य लुगित्यर्थः । षट्क इति । डटि परतः पूर्वभक्त-स्थुगागमो डटि निवृत्तेऽपि न निवर्तेत, प्रत्ययलक्षणेन वा प्रसज्येत । ननु कनि पूर्वस्य पदत्वात्संयोगान्तस्य लोप इति थुको लोपो भवति । एवं तर्हि चतुर्थेन गृह्णाति चतुष्क इत्युदाहरणम् । अत्र हि 'रात्सस्ये'ति नियमात्थुकः संयोगान्तस्य लोप इति नास्ति ।

सिद्धं त्विति । स्त्रीप्रकरणे य आगमादेशास्ते—अङ्गतः—अङ्गाधिकारे वक्तव्या इत्यर्थः । तत्र स्त्रीप्रत्यये परतोऽङ्गस्य विधीयमाना आगमादेशाःतत्र लुप्ते 'न लुमताङ्गस्ये'ति

उ०—'वृषाकप्यग्नी'ति विहितस्य । थुगागमः—'षट्कतिकतिपये'ति विहितः ॥ ननु 'अन्तरङ्गानपी'ति न्यायेन लुग्विषये पूर्वमेवाऽप्रवृत्तिरत आह—प्रत्ययलक्षणेनेति । स न्यायस्त्वन्तरङ्गनिमित्तविनाशकविधिविषयः; न च प्रकृते तन्नाशः, प्रत्ययलक्षणेन सत्त्वादिति भावः । 'ष'डिति सूत्रे 'ड'डित्यनुवृत्तस्य 'डट् चेदस्ती'-त्येवार्थः, सप्तम्या विपरिणामे फलाऽभावादित्याशयः । 'डटि परत' इत्यपि वस्तुतस्तस्य परत्वादुक्तमिति बोध्यम् । ननु कनीति । डटम्प्रत्ययलक्षणेनाश्रित्य भत्वं तु न, 'न लुमता तस्मि'न्निति प्रत्ययलक्षण-निषेधात् । डडवस्थायां पूर्वं जातभसंज्ञाया डटि निवृत्तेऽपि निवृत्तौ मानाऽभावेन पराया भसंज्ञाया विद्यमानत्वेन पदत्वाऽभावात्तदप्राप्तिः । थुको निवृत्तौ तु सुबन्तत्वनिमित्तकपदत्वेनाऽन्तरङ्गेण जश्त्वादीति भाष्याशयमन्ये ।

× वनो र च ४. १. ७; अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ५ । १ । २८

+ नान्तादसंख्यादेर्मट् ५. २. ४६; तावतिथेन गृह्णातीति लुक् च ५ । २ । ७७ वा० २ ।

१—'ग्रहिष्यते' पा० । † षट्कतिकतिपयचतुरां थुक् ५ । २ । ५१

* न लुमताङ्गस्य १ । १ । ६३

लिङ्गलुकि वा प्रकृतिप्रत्यापत्तिवचनम् ॥ ४ ॥

अथवा लिङ्गलुक्येव प्रकृतिप्रत्यापत्तिर्वक्तव्या ॥ लिङ्गग्रहणेन नार्थः । 'लुकि वा प्रकृतिप्रत्यापत्तिवचन'मित्येव । इदमपि सिद्धं भवति—षष्ठेन गृह्णाति षट्क इति ।

किं पुनरत्र ज्यायः ? 'लुकि [ प्रकृति]प्रत्यापत्तिवचन'मित्येव ज्यायः । इदमपि सिद्धं भवति—पञ्चभिः पट्वीभिः† क्रीतः पञ्चपटुः दशपटुरिति ।

तर्हीह वक्तव्यम् ? न वक्तव्यम् । 'संनियोगशिष्टानामन्यतरापाय उभयोरप्यभावः' । तद्यथा,—देवदत्तयज्ञदत्ताभ्यामिदं कर्म कर्तव्यम् । देवदत्तापाये यज्ञदत्तोऽपि न करोति ॥ ३६ ॥

प्र०—प्रत्ययलक्षणप्रतिषेधान्न भविष्यन्तीति भावः । पञ्चपटुरिति । यणादेशस्यानाङ्गत्वात्प्रत्ययलक्षणप्रतिषेधाभावः । यद्यपि यणादेशः प्रत्ययलक्षणो न भवति, तथापि स्त्रीप्रत्ययलुको बहिरङ्गत्वादसिद्धत्वाद्यणादेशोऽन्तरङ्गो न निवर्तेतेति प्रत्यापत्तौ त्विष्टं सिध्यतीत्यर्थः ।

संनियोगशिष्टानामिति । लौकिकोऽयं न्यायः । एकस्मिन्प्रयोजने येषां सहाधिकारस्तत्रान्यतरनिवृत्तावितरनिवृत्तिः । लिङ्गमपि शास्त्रेऽस्ति—'बिल्वकादिभ्यश्छस्य लु'गित्यत्र छस्येति स्थानिनिर्देशः । तस्य हि प्रयोजनं छमात्रस्य लुग्यथा स्यात्, कुको निवृत्तिर्मा भूदिति । यदि चैषा परिभाषा नाभविष्यत्तदा कुङ्न्न्यवर्त्स्यदिति किं तन्निर्देशेन । कथं पञ्चपटुरिति ? न हि यणादेशः संनियोगशिष्टः । एवं तर्ह्यन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधत इत्युक्त एव यणादेशे लुकि सति निमित्ताभावाद्यण् न भवति । न च लुको बहिरङ्गत्वादसिद्धत्वं, 'नाजानन्तर्य' इत्यसिद्धत्वप्रतिषेधात् । 'इको यणची'त्यत्र हि अचोरानन्तर्यमाश्रितम् ॥ ३६ ॥

उ०—अङ्गाऽधिकारे इति । अङ्गत इत्याद्यादिस्वात्तसिरिति भावः । अङ्गस्येति तत्र तत्र सूत्रे वक्तव्यमिति तात्पर्यम् प्रत्ययलक्षणो न भवतीति । वार्णत्वादिति भावः । बहिरङ्गत्वादिति । तद्धितलुगपेक्षत्वात् । यण् तु वार्णत्वादन्तरङ्ग इति भावः ।

लोके क्वचिद्व्यभिचारदर्शनादाह—लिङ्गमपीति । एवञ्च ज्ञापकाच्छास्त्रेऽङ्गीक्रियते । किञ्च, सहाऽधिकारविषयोऽयं न्याय इति न व्यभिचार इति तात्पर्यम् । न च लुक इति । 'अन्तरङ्गानपी'ति न्यायस्य बहिरङ्गपरिभाषाऽपवादत्वेन लुग्विषये बहिरङ्गाऽसिद्धत्वाऽप्रवृत्तेश्चिन्त्यैषा शङ्का । प्रतिषेधादिति । अनित्यत्वादपि तदप्रवृत्तिर्वक्तुं शक्या ॥ ३६ ॥

---

१—क्वचिन्न ।  † इको यणचि ६ । १ । ७७

२—'अपायः' पा० । षष्ठे त्वेवं पठिष्यति—'संनियोगशिष्टानामन्यतराऽभाव उभयोरप्यभावः' [ ६ । ४ । १५३ ] इति ।

## वर्णादनुदात्तात्तोपधात्तो नः ॥ ४ । १ । ३९ ॥

### असितपलितयोः प्रतिषेधः ॥ १ ॥

असितपलितयोः प्रतिषेधो वक्तव्यः । असिता पलिता ।

### छन्दसि क्नमेके ॥ २ ॥

छन्दसि क्नमेक इच्छन्ति । 'असिक्न्यस्योषधे'† । 'पलिक्नीरिद्युवतयो भवन्ति'‡ ।

### वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानम् ॥ ३ ॥

वर्णान्ङीब्विधाने पिशङ्गादुपसङ्ख्यानं कर्तव्यम् । पिशङ्गी ॥ ३९ ॥

## जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४ । १ । ४२ ॥

### नीलादोषधौ ॥ १ ॥

नीलादोषधाविति वक्तव्यम् । नीली ओषधिः ।

प्र०—वर्णादनु । छन्दसि क्नमिति । तस्य स्थाने इति बोद्धव्यम् । अत्र केचिच्छन्दोग्रहणं प्रयोगदर्शनार्थमिच्छन्ति, तेन भाषायामपि क्नादेशो भवति । 'गतो गणस्तूर्णमसिक्नकाना'मिति । भाष्यकारेण त्वेतन्नोपन्यस्तमित्ययुक्तमित्याहुः ।

पिशङ्गादिति । उत्तरसूत्रेण ङीषि प्राप्ते ङीब्विधिः । स्वरे विशेषः । पिशङ्गशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरुः'इति मध्योदात्तत्वादनुदात्तान्तः ॥ ३९ ॥

जानपद । नीलादिति । सर्वस्मिन्ननाच्छादने प्राप्नोतीति वचनम् ॥ ४२ ॥

उ०—वर्णाद । तस्येति । 'त'शब्दस्येत्यर्थः । नत्वाऽपवादत्वादिति भावः । उत्तरसूत्रेणेति । तोपधाऽपेक्षमेव तत्राऽन्यत्वम् । वर्णादनुदात्तादिति तत्र वर्त्तते । तत्राऽनुदात्तान्तत्वमुपपादयति—लघावन्त इति । बह्वषः—बह्वचः ॥ ३९ ॥

जानपद । ननु नीलादनाच्छादने ङीषो विधानाद्व्यर्थमेतदत आह-सर्वस्मिन्निति । नियमार्थमिति

† अथर्ववेदे १ । २३ । ३ ‡ ऋग्वेदे ५ । २ । ४

१—जानपदी वृत्तिः, जीविकेत्यर्थः । कुण्ड्यते रक्ष्यते भक्ष्याद्यस्मिन् कुण्डी अमत्रम्, स्थाली कमण्डलुर्वा । गोणी आवपनम्, धान्यादिवहनार्थाधारविशेषः । स्थली जलशून्याऽकृत्रिमा भूमिः, 'थली' इति लोके प्रसिद्धा । 'सैषा 'स्थली' यत्र विचिन्वता त्वां भ्रष्टं मया नुपूरमेकमुर्व्या'मिति साहित्यदर्पणे प्रयोगः । भाजी व्यञ्जनविशेषः । नागी नागस्य स्थूला पत्नी । कालः कृष्णवर्णोऽस्यास्ति काली । नीली भाष्ये व्याख्याता । कुशी अयोविकारः, 'कुशी फाले' इति मेदिनी । कामुकी मैथुनेच्छावती, 'वृषस्यन्ती

प्राणिनि च ॥ २ ॥

प्राणिनि चेति वक्तव्यम् । नीलो गौः । नीली वडवा ।

वा संज्ञायाम् ॥ ३ ॥

वा संज्ञायामिति वक्तव्यम् । नीली नीला ॥ ४२ ॥

## वोतो गुणवचनात् ॥ ४ । १ । ४४ ॥

'गुणवचना'दित्युच्यते को गुणो नाम ?

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

प्र०—वोतो । उत इति वचनाद्वचनग्रहणाच्चादेङोर्न ग्रहणम् । विशेषणस्यापि तु गुणस्य ग्रहणं प्राप्नोति । यथा 'यस्य गुणस्य हि भावा'दित्यत्र । ततश्च जात्यादिवचनादपि ङीष् प्राप्नोति—आखुरित्याद्यविति पृच्छति—को गुण इति । सत्त्व इति । द्रव्यमाश्रयते, तत एव च द्रव्यान्निवर्तते, भिन्नजातीयेषु दृश्यते यः स गुणः । एतेन जातेर्गुणत्वं निवारितम् । सा हि द्रव्ये निविशमाना द्रव्यं न कदाचिज्जहाति, न च भिन्नजातीयानि द्रव्याण्यभिनिविशते । यद्यपि गवाश्वादिषु प्राणित्वमस्ति तथापि प्राणित्वेन तेषामेकजातीयत्वमेव ।

क्रियायास्तु पूर्वोक्तलक्षणयोगाद्गुणत्वं प्राप्नोति । सापि हि द्रव्ये निविशते, कदाचिद्द्रव्यान्निवर्तते । निष्क्रियं हि द्रव्यं कदाचिद्भवति कदाचित्सक्रियं, भिन्नजातीयानि च द्रव्याण्याश्रयतीत्याह—आधेय इति=उत्पाद्यः, यथा घटादेः पाकजो रूपादिः । अक्रियाजः=अनुत्पाद्यः,

उ०—भावः ॥ ४२ ॥

वोतो गुण । 'अदेङ्गुण' इति परिभाषणात्किं प्रश्ने नेत्यत आह-उत इतीति । वचनग्रहणाच्चेति । गुणवति द्रव्ये वर्तमानप्रातिपदिकलाभाय हि तत् । न चाऽदेङामेवंप्रकारः सम्भवतीति भावः । नन्वेवं 'संसर्गिभेदकं यद्य'दितिलक्षितगुणग्रहणमस्त्वित्यत आह—विशेषणस्याऽपि त्विति । अपि तु विशेषणस्य—संसर्गिभेदकमिति लक्षितगुणस्य ग्रहणं प्राप्नोतीत्यन्वयः ।

द्रव्यमिति । 'सीदन्त्यस्मिन् जातिगुणक्रिया' इति व्युत्पत्तेः । सदेरौणादिको 'व'प्रत्ययः । ततः पाकादिकारणान्तरवशाद्गुणान्तरोत्पत्तौ स गुणस्ततो द्रव्यान्निवर्त्तत इत्यर्थः । भिन्नजातीयेष्विति । घटपटादिष्वित्यर्थः । एतेन जातेरिति । इदमुपलक्षणम्, अनेन संज्ञाया अपि तत्त्वनिरासात् । न कदाचिदिति । नित्यत्वात्तस्या इति भावः । प्राणित्वमिति । यद्यपि प्राणित्वं प्राणसम्बन्धरूपं न जातिर्नाप्यखण्डोपाधिस्तथाऽपि तस्य जातित्वाङ्गीकारेणेदम् । इत्याहेति । इत्यत आहेत्यर्थः । आधेय इत्यस्याऽर्थ उत्पाद्य इति ।

तु कार्मुकी' इत्यमरः । कबरी केशवेशः, केशविन्यासविशेषस्य संज्ञेयम् ।

अपर आह—

## उपैत्यन्यज्जहात्यन्यद्दृष्टो द्रव्यान्तरेष्वपि ।

प्र०—यथाऽऽकाशादेर्महत्त्वादिः । क्रिया नूत्पाद्यैव न नित्येति तस्या द्वैविध्याभावाद्गुणत्वाभावः। एवन्तु द्रव्यस्यापि गुणत्वं प्राप्नोति। अवयविद्रव्यम्-अवयवद्रव्येषु निविशते, असमवायिकारणसंयोगनिवृत्तौ च विनाशात्ततोऽपैति, भिन्नजातीयेषु च हस्तपादादिषु दृश्यते । द्विविधश्च तन्नित्यानित्यभेदेन । निरवयवस्य द्रव्यस्यात्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्यानित्यत्वादित्याह—असत्त्वप्रकृतिरिति । अद्रव्यस्वभाव इत्यर्थः । अत्र पृथग्जातिष्वित्यसमासः । समासे हि 'जात्यन्ताच्छ बन्धुनी'ति छः प्रसज्येत । तत्र व्यक्तिषु—जात्याधारेषु-दृश्यमानो जातिषु दृश्यत इत्युच्यते ।

अयमेवार्थः श्लोकान्तरेणोच्यते—उपैत्यन्यदिति । अन्यद्द्रव्यं शुक्लादिको गुण आगच्छ-

उ०—एतेन नित्याऽनित्यवृत्तिजातिमत्त्वं लब्धम् । नैवं क्रियेत्याह—क्रिया त्विति । अद्रव्यस्वभाव इति । द्रव्यभिन्न इत्यर्थः । द्रव्यादन्य इत्युत्तरलक्षणे उक्तेः । द्रव्यपदेनाऽत्र गुणाऽऽश्रय उच्यते । इत्युच्यत इति । जातिशब्दो लक्षणया व्यक्तिवचन इति भावः । अत्रैवं व्याख्याने 'पृथग्जातिषु दृश्यते' इत्यनेन, 'सत्त्वे निविशते' इत्यादिना वा जातेर्वारणे सिद्धेऽन्यतरवैयर्थ्यापत्तिः । किञ्च,—क्रियावारणेनैव जातिवारणे सिद्धे उभयोरपि वैयर्थ्यम् । किञ्च,—'पृथग्जातिषु' इत्यनेन जातिवारणमशक्यं, भिन्नजातीयेषु घटपटादिषु द्रव्यत्वादिदर्शनात् । अन्यद्द्रव्यमिति । यथा कुसुम्भादिरूपं वस्त्रमायाति कुसुम्भञ्च परित्यजतीत्यर्थः । पटुत्वाद्यपि क्वचिदायाति क्वचिन्नश्यति, कस्यचित्पटोरपटुत्वस्याऽपटोश्च पटुत्वस्य दर्शनात् । पूर्वलक्षणेऽप्येवमेव व्याख्यातुमुचितम् ।

द्रव्येषु दृष्ट इति—पूर्वार्धेन संज्ञाया जातेश्च तत्त्वनिरासः । ननु गुणस्य वाचकत्वमनुपपन्नमत आह—शब्दधर्मस्येति । अनेनाऽलिङ्गक्रियाया गुणत्वनिरासः । अत्रापि पूर्वलक्षणवद्व्यर्थविशेषणताऽऽपतति । द्रव्याऽन्यत्वेन भावत्वोपलक्षणादभावनिरासः ।

अत्र वदन्ति,—'गुणो नामे'ति प्रश्ने नामैकदेशग्रहणं, 'गुणवचनः क' इति प्रश्नः । अत एवोत्तरे 'वाचकः सर्वलिङ्गाना'मिति यथाश्रुततयैव सङ्गच्छते । येषां च शब्दानाम् 'आकडार'सूत्रे गुणवचनसंज्ञोक्ता, तेषामेवाऽत्र कथनम् । एवं हि द्वयोर्भाष्ययोरेकवाक्यता भवति । तत्र हि समस्तकृदन्ततद्धितान्तसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तशब्दस्य गुणवचनसंज्ञा कृता । तस्मादत्राऽपि विशेषणैस्तद्व्यावृत्तिरेव युक्ता । तथा हि—तत्राऽऽद्यपादेन संज्ञानिरासः । न हि संज्ञाजातिशब्दा द्रव्ये विद्यमाना एव रक्तादिशब्दवत्कदाचिद्वाचकत्वेन प्रवर्त्तन्ते कदाचिन्नेति भवति । 'जातिषु पृथग्दृश्यते' इत्यनेन सर्वनामनिरासः । यथा शुक्लादयः शब्दाः—समाने शुक्ले गवि शुक्लशब्दोऽश्वे च कर्कशब्दो, नैवं सर्वनामशब्दा नियतविषयाः । चार्वादयोऽपि क्वचिच्चारुरिति क्वचिच्चारुतर इति, नैवं क्वचिदपि 'सर्वतर' इति । 'आधेय' इत्यनेन संख्याशब्दनिरासः । न हि रक्तादिगुणशब्दवद्द्रव्ये विद्यमाने यत्नाऽऽधेयो यत्नाधेयाऽर्थक इत्यर्थः । अनेनैव जातिशब्दानामपि निरासः । अक्रियाज इत्यस्य क्रियाप्रतिपादकधात्वजन्य इत्यर्थः । तेन कृदन्तनिरासः ।

वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥

गुणवचनान्ङीबाद्युदात्तार्थम् ॥ १ ॥

गुणवचनान्ङीब्वक्तव्यः* । किं प्रयोजनम् ? 'आद्युदात्तार्थम्' । आद्युदात्ताः प्रयोजयन्ति—वस्वी [ पट्वी ] ।

खरुसंयोगोपधप्रतिषेधश्च ॥ २ ॥

खरुसंयोगोपधानां च प्रतिषेधो वक्तव्यः । खरुरियं ब्राह्मणी । पाण्डुरियं ब्राह्मणी ॥ ४४ ॥

प्र०—त्यन्यत्तु परित्यजति, भिन्नजातीयेषु च द्रव्येषु दृष्टः । सर्वलिङ्गाश्रयगतलिङ्गग्राहित्वाद्वाचकः सर्वलिङ्गानाम् । शब्दधर्मस्य वाचकत्वस्यार्थे आरोपाद् वाचक इत्युच्यते । द्रव्यादन्य इति । यथोक्तलक्षणयुक्तत्वेपि यस्य द्रव्यत्वं नास्ति स गुण इत्यर्थः ।

वस्वीति । 'धान्ये नि'दित्यतो निदिति वर्तमाने 'शॄस्वृस्निही'ति वसुशब्द आद्युदात्तो व्युत्पादितः । तस्मान् ङीपि सति ईकारोऽनुदात्तो भवति । ङीषि तूदात्तः स्यात् । अन्तोदात्तात्तु ङीम्ङीषोर्विशेषाभावः—'उदात्तयणो हल्पूर्वा'दिति ङीप उदात्तत्वविधानात् ॥ ४४ ॥

उ०—असत्वप्रकृतिरित्यनेन सत्त्ववाचकप्रकृतिकभिन्नाऽर्थकेन समस्ततद्धितान्तयोर्निरासः । अत एव 'प्रकृति'-ग्रहणं चरितार्थम् ॥ उत्तरश्लोकेऽप्याद्यपादेन संज्ञाशब्दनिरासः । दृष्ट इत्यस्य—'पृथ'गिति शेषः । तेन सर्वनामनिरासः । तृतीयपादेन जातिनिरासः । न चाद्यपादेन जातिनिरासः, नीचतत्तद्वर्णवृत्त्या सप्तमादौ ब्राह्मणत्वादिनिरासात्, विश्वामित्रादौ तत्सम्बन्धाच्च । 'आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्त्तते उत्पत्तिप्रभृत्याऽऽविनाशात्तल्लिङ्गं न जहातीति—'विशेषणानाञ्चे'ति सूत्रे भाष्योक्तेस्तद्वाचकानां न सर्वलिङ्गवाचकत्वम् । अनेन संख्यानिरासोऽपि, विंशत्यादीनां सर्वलिङ्गत्वाऽभावात् ।

द्रव्यादन्य इत्यस्य—द्रव्यवाचकप्रातिपदिकप्रकृतिकादन्य इत्यर्थः, द्रव्यवाचकान्यप्रकृतिक इत्यर्थो वा । तेन समस्ततद्धिताऽन्तयोर्निरासः । द्वितीयपादस्थाऽपिनाऽधातुजत्वस्य संग्रहः, तेन कृदन्तनिरासः । अत एवोत्तरसूत्रे 'बहु'ग्रहणं चरितार्थम् । 'संख्याशब्दस्याऽगुणवचनत्वा'दिति कैयटव्याख्यानेऽपि 'आधेयश्चे'त्यादिना संख्यावारणसम्भवात् । वस्तुतोऽत्रत्यमिदम्भाष्यमेकदेश्युक्तिः, व्याख्यालेशस्याऽप्यभावात्, उक्तरीत्या सिकताकूपवद्विशीर्णत्वाच्च, 'आकडार'सूत्रे स्वयमुक्तत्वाच्च भगवताऽत्र नोच्चरितमिति भाति ।

ननु ङीम्ङीषोः को विशेषोऽत आह—धान्ये निदितीति । वसुशब्दः प्राशस्त्यवाची । खरुः—पाणिग्रहणोत्कण्ठावती ॥ ४४ ॥

* अनुदात्तौ सुप्पितौ ३ । १ । ४ इतीकारानुदात्तत्वार्थं ङीप् कर्तव्यः । १—क्वचिन्न ।

# पुंयोगादाख्यायाम् ॥ ४ । १ । ४८ ॥

## गोपालिकादीनां प्रतिषेधः ॥

**गोपालिकादीनां प्रतिषेधो वक्तव्यः । गोपालिका पशुपालिका ।**

**किं पुनरिहोदाहरणम् ? प्रष्ठी प्रचरी । कथं पुनरयं प्रष्ठशब्दोऽकारान्तः स्त्रियां वर्तते ? तस्येदमित्यनेनाभिसम्बन्धेन । यथैव ह्यसौ तत्कृतान्स्नानोद्वर्तनपरिषेकाँल्लभते,**

प्र०—पुंयोगा । पुंसा योगः पुंयोगः, तस्माद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्तते ततो ङीष् भवति । आख्याग्रहणं गुणभूतेनापि पुंसा संबध्यते, अन्येन संबन्धासम्भवात् । गणकादयो हि शब्दाः पुंयोगात्स्त्रियां वर्तमाना न पुंयोगस्याख्या भवन्ति । स्त्रियां च पुंयोगमन्तरेण न वर्तन्त इति स्त्रिया अपि नाख्याः । पुंयोगात्स्त्रियां वर्तमानानां स्त्रीं प्रत्याख्यात्वमव्यभिचारान्न विशेषणम् । पुंविशेषणस्य तु प्रयोजनं प्रजाता प्रसूतेत्यादौ ङीष्निवृत्तिः । प्रसूतादयो हि पुंयोगात्स्त्रियां प्रवर्त्तन्ते पुमांसं तु नाचक्षते ।

गोपालिकादीनामिति । 'सिद्धये' इति वाक्यशेषः । किं पुनरिति । यदि प्रष्ठादिशब्दः पुंसि व्युत्पाद्यते ततः स्त्रीवृत्तिर्न स्यात्, अथ तत्समर्थाचरणात्प्रस्थानादिक्रियां प्रति कर्तृत्वमाश्रित्य स्त्रियां व्युत्पाद्यते तदान्तरङ्गत्वाट्टापि कृते सुबुत्पत्तौ सत्यां समासे कृतेऽकारान्तत्वाभावान्ङीष् न स्यादिति प्रश्नः ।

तस्येदस्मित्यनेनेति । यथा राजामात्यो राजकार्याणि राजव्यपदेशश्च लभते तथा

उ०—पुंयोगादा । क्लिष्टत्वात्सूत्राऽर्थं दर्शयति–पुंसा योग इति । 'कर्तृकरणे' इति समासः । हेतोरिति । हेतौ पञ्चमीति भावः । ननु प्रधानेन योगेन, स्त्रिया वा सम्बन्धः स्यादत आह—अन्येनेति । तत्र नाद्य इत्याह—गणकादय इति । अन्त्ये 'स्त्रिया आख्याया'मित्यत्र किं पुंयोगात्प्राक्तदाख्यायामित्यर्थः ? उत उत्तरकालमिति ? नाद्य इत्याह—स्त्रियाश्चेति । नान्त्य इत्याह—पुंयोगादिति । प्रसूतादयो हीति । पुंयोगहेतुकगर्भाधानोत्तरकालं तन्निःसरणरूपप्रसवप्रवृत्तिनिमित्तत्वादिति भावः । नाचक्षते इति । ततो गर्भनिःसरणाऽभावादिति भावः । गर्भाधाननिमित्तकः 'प्रसूत'शब्दः पुंस्यपि, तथाप्युक्तप्रवृत्तिनिमित्तको न पुंस आख्या, नाऽपि गर्भाधाननिमित्तेन प्रसूतशब्दवाच्यपुंयोगमात्रेणाऽस्य स्त्रियां वृत्तिरिति भावः ।

गोपालिकादीनां प्रतिषेधप्रतियोगित्वाऽसम्भवादाह–वाक्यशेष इति । नन्वत्र 'तृजकाभ्या'मिति निषेधात्समासो दुर्लभः, शेषषष्ठ्या समासेऽपि आपः सुपः परत्वादित्त्वं दुर्लभमिति चेन्न, शेषषष्ठ्या अपि तत्प्रकृत्यर्थस्य क्रियाजनकत्वात्कारकत्वमेवेति तयापि सुबुत्पत्तेः पूर्वं समास इति नाऽऽपः सुपःपरत्वमित्यदोषात् । यथाकथञ्चित्तत्कारकोपादानेऽपि कथञ्चित्कारकत्वमादाय सा प्रवर्त्तत इति—अत्रत्यभाष्याद् 'उपपद'मिति सूत्रस्थभाष्याच्च ज्ञायते ॥ पुंसीति । प्रस्थानादिक्रियायाः पुंधर्मत्वादिति भावः । उदाहरणयोः 'सुपि स्थः' 'चरेष्टः'

१—इदं वार्तिकं कीलहार्नसंस्करणे नास्ति ।

एवं प्रष्ठशब्दमपि लभते ॥ यद्येवं—

पुंयोगादाख्यायां तद्धितलुग्वचनम् ॥ १ ॥

पुंयोगादाख्यायां तद्धितस्य लुग्वक्तव्यः । 'तस्येदम्' [ ४ । ३ । १२० ] इति प्राप्नोति । न तर्हीदानीमिदं भवति—प्राष्ठ्य इमाः, प्राचर्य इमा इति । भवति च । विभाषा लुग्वक्तव्यः । यदा लुक्तदा प्रष्ठी, यदा न लुक् तदा प्राष्ठी ।

यद्येवं नार्थो लुका । विभाषा तद्धितोत्पत्तिः । यदा तद्धितोत्पत्तिस्तदा प्राष्ठी, यदा न तद्धितोत्पत्तिस्तदा प्रष्ठी । एवमपि लुग्वक्तव्यो न ह्यन्तरेण तद्धितस्य लुकं परार्थे शब्दो वर्तते ।

यदि पुनस्तस्यामेव प्रष्ठशब्दो वर्तेत[1] । कथं पुनस्तस्यामप्रतिष्ठमानायां[2] प्रष्ठशब्दो वर्तते ? यथैव ह्यसावकुर्वती किंचित्पापं तत्कृतान्[3] वधबन्धनपरिक्लेशाँल्लभते, एवं प्रष्ठशब्दमपि लभते ।

प्र०—प्रष्ठभार्यापीत्यर्थः । 'स्नान'शब्दः करणसाधन इत्यपुनरुक्तः परिषेकशब्दः ।

तद्धितलुग्वचनमिति । तस्येदमिति संबन्धस्य भेदनिबन्धनत्वाद्भेदाश्रयतद्धितोत्पत्तौ सत्यां तस्य लुग्वक्तव्यः । न ह्यन्तरेणेति । तद्धितस्य विकल्पेनोत्पत्तावपि पक्षे वाक्यमेव भवति—प्रष्ठस्येयमिति । तत्र च प्रष्ठशब्दः पुंस्येव वर्तते न तु स्त्रियाम् । तस्मात्स्त्रीवृत्तित्वमस्येच्छता तद्धितलुग्विधेय इत्यर्थः ।

**यदि पुनरिति** । यथा पञ्चभिर्हलैः कृषतीति प्रतिविधानात्कर्तृत्वम्, एवं स्त्रिया अपि प्रस्थानादौ कर्तृत्वं स्यादेवेति भावः । कथमिति । साक्षात्तस्याः क्रियाया अकरणादकर्तृत्वं मन्यते । यथैवेति । साक्षात्पापमकुर्वत्यपि संविधात्रीत्वात्कर्तृत्वमापद्यते । यथा 'स्वामिदासौ पचत'इति स्वामिनः संविधातृत्वात् पक्तृत्वं, दासस्य तु साक्षात्, तथा स्त्रीपुंसयोः प्रस्थातृत्वमित्यर्थ. । तत्रान्तरङ्ग-

उ०—इति क-टै ।

भाष्ये—तस्येदमिति—सामान्ये नपुंसकम् । तत्कृतानिति । 'तस्येद'मित्यभिसम्बन्धकृतानित्यर्थः । **करणसाधन इति** । तथा च 'स्नान'शब्दो गन्धतैलादिवचन इत्यर्थः ॥ ननु तद्धितस्य विकल्पे प्रष्ठशब्द एव सम्बन्धमाचष्टे इति किं लुकेत्यत आह—तद्धितस्येति । महाविभाषया वाक्यस्यैवाऽप्यनुशासनादिति भावः । लक्षणया चेदृशेऽर्थेऽसाधुत्वम्, 'तत्सम्बन्धी'त्यर्थेऽनुशासनेन प्रत्ययान्तस्यैव तत्सम्बन्धीत्यादिसमासस्यैव वा साधुत्वनियमादिति तात्पर्यम् ॥ प्रतिविधानात्—तत्समर्थाचरणात् । पञ्चभिर्हलैर्भूकर्षणस्यैकेनाऽसम्भवादिति भावः ॥ भाष्ये—भर्तृकृतानिति । भर्तृकृतपापकृतानित्यर्थः । तत्कृतानिति—पाठेऽप्ययमेवार्थः । तथा च दाम्पत्यलक्षण एव पुंयोगो भगवतोऽभिमतः । केकयी देवकी रेवतीत्यादौ गौरादित्वान्ङीषिति

१—'वर्तते' पा० । २—'तस्यामेवाप्रति' पा० ।

३—'भर्तृकृतान्' पा० । 'पुंयोगोऽत्र दाम्पत्यरूप एवेति भाष्यस्वरसः' इति लघुशब्देन्दुशेखरे नागेशः ।

## सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः ॥ २ ॥

सुबन्तसमासवचनाच्चाकारान्तता नोपपद्यते। सुबन्तानां समासस्तत्रान्तरङ्गत्वाट्टाप्*। टाप्युत्पन्ने समासः। स्थाशब्दः समस्येत। तत्र पुंयोगादाख्यायामकारान्तादितीकारो न प्राप्नोति।

## सिद्धं तु स्त्रियाः पुंशब्देनाभिधानात् ॥ ३ ॥

सिद्धमेतत्। कथम्? 'स्त्रियाः पुंशब्देनाभिधानात्'। स्त्री पुंशब्देनाऽकारान्तेनाभिधीयते॥ ननु चोक्तं 'पुंयोगादाख्यायां तद्धितलुग्वचन'मिति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—'नातस्तद्धितोत्पत्तिर्भवती'ति यदयं 'पुंयोगादाख्याया'मितीकारं शास्ति†।

नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। येऽनीकारास्तद्धितास्तदर्थमेतत्स्यात्‡॥ यत्तर्ह्याख्याग्रहणं करोति। न हि तद्धितान्तमाख्या भवति।

प्र०—त्वादिति। प्रातिपदिकं पूर्वं लिङ्गमभिदधाति पश्चात्संख्यामिति तन्निमित्तस्य सुपो बहिरङ्गत्वमिति भावः। सिद्धं त्विति। तस्येदमिति संबन्धात्तच्छब्दलाभं मन्यते। यदयमिति। अणि हि ङीप्सिद्धो न चाणन्तान्ङीपि ङीषि वा विशेषः, उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वात्॥ येनीकारा इति। यथा भानोरियमिनि वृद्धाच्छः—भानवीया। अत्र टाब्बाधनार्थमिदं वचनं स्यात्। न हि तद्धितान्तमिति। तद्धितान्तस्य शब्दस्य प्रकृत्यर्थे पुंस्यवर्तनादिति भावः। तदेवमाख्याग्रहणं तस्येदमिति भेदविवक्षायामपि तद्धितोत्पत्तिमन्तरेण प्रष्ठशब्दस्य स्त्रियां वृत्तित्वं साधुत्वं च

उ०—तदाकूतम्। तथेति। स्वामिदासयोः पाककर्तृत्ववत्स्त्रीपुंसयोः पापकर्तृत्ववच्च तयोः प्रस्थातृत्वमपीत्यर्थः। कथं पुनरन्याऽर्थेनाऽन्यार्थोऽभिधानमत आह—सम्बन्धादिति।

नन्वणि ङीब्विधानार्थमिदमित्यज्ञापकमत आह—अणि हीति। भाष्ये—अनीकारा इति। ईकाराऽ[१]प्रातियोग्या इत्यर्थः। प्रकृत्यर्थे पुंसीति। एवञ्च पुमाख्यायाः स्त्रियामवृत्तेः सूत्रवैयर्थ्यमेवेति भावः। ननु प्रसूतादौ ङीब्व्यावृत्तये तस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति चेन्न, व्याख्यानात् 'पुंयोगा'दित्यस्य यः पुंशब्दः स्वार्थयोगात्स्त्रियां वर्त्तत इत्यर्थकरणेन तद्वारणात्। नित्यो बाध इति। तथा च 'प्राष्ठय इमा' इत्यसाधु स्यादिति भावः। इदं चिन्त्यं—सर्वथा बाधकल्पनाऽपेक्षया ईदृशे विषये तस्य वैकल्पिकत्वज्ञापनस्यैवौचित्यात्। तच्चेदं ज्ञापकं स्त्रीप्रत्ययङीब्विषयमेवेति नाऽन्यत्र अनया रीत्या प्रकृतिमात्रस्य साधुत्वमिति

* सह सुपा २।१।४; अजाद्यतष्टाप् ४।१।४

† तस्येदम् ४।३।१२०; टिड्ढाणञ्……करपः ४।१।१५

१—'स्त्रीप्रत्ययाः' इति कीलहार्नपाठः।

‡ वृद्धाच्छः ४।२।११४

अथवा पुनरस्तु तस्येदमित्यनेनाभिसम्बन्धेन । ननु चोक्तं 'पुंयोगादाख्यायां तद्धितलुग्वचन'मिति । नैष दोषः । नावश्यमयमेवाभिसम्बन्धो भवति—तस्येदमिति । अयमप्यभिसम्बन्धोऽस्ति 'सोय'मिति । कथं पुनरतस्मिन् 'स' इत्येतद्भवति ? चतुर्भिः प्रकारैरतस्मिन् 'स' इत्येतद्भवति—तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यादिति । तात्स्थ्यात्तावत्—मञ्चा हसन्ति, गिरिर्दह्यते । ताद्धर्म्यात्—जटिनं यान्तं ब्रह्मदत्त इत्याह । ब्रह्मदत्ते यानि कार्याणि जटिन्यपि तानि क्रियन्त इत्यतो जटी 'ब्रह्मदत्त' इत्युच्यते । तत्सामीप्यात्—गङ्गायां घोषः, कूपे गर्गकुलम् । तत्साहचर्यात्—कुन्तान्प्रवेशय, यष्टीः प्रवेशयेति ।

प्र०—ज्ञापयति । तेन 'न केवला प्रकृतिः प्रयोक्तव्ये'ति नियमो न प्रवर्तत इत्युक्तम् ।

अस्मिंस्तु व्याख्याने तद्धितस्य नित्यो बाधः प्राप्नोतीति 'सिद्धं तु स्त्रिया'इत्येतत्पक्षान्तराश्रयेण व्याचष्टे—अथवेति । अनेनाभिसंबन्धेनेति । एतत्पूर्वकेण 'सोय'मिति संबन्धेनेति भावः । इतरो भेदसंबन्ध एवानेनोक्त इति मत्वाह—ननु चेति । अयमपीति । अभेदाच्च भेदस्य निवृत्तत्वात्तद्धितानुत्पत्तिः । भेदस्य तु विवक्षायां तद्धितो न निवार्यते ।

कथं पुनरिति । भिन्नानामभेदाभावादिति प्रश्नः । चतुर्भिरिति । आरोप्यते ताद्रूप्यं न तु मुख्यमित्यर्थः । मञ्चा हसन्तीति । अत्र बालेषु मञ्चत्वारोपान्मञ्चशब्दप्रवृत्तिर्हसन्तीति पदान्तरप्रयोगाद्धि ज्ञायते । जटिनमिति । ब्रह्मदत्तधर्मलाभात्तद्रूपारोपः । 'सिंहो माणवकः' 'गौर्वाहीक' इत्यादावपि ताद्धर्म्यात्ताद्रूप्यारोपात्तच्छब्दप्रवृत्तिः । तदुक्तं हरिणा—

गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते ।
अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ॥ इति ।

उ०—न पक्षयोः फलभेदः । परन्तु 'आख्याया'मित्यस्योक्तार्थतात्पर्यग्राहकतया चारितार्थ्येन ज्ञापकत्वाऽसम्भव इत्यरुचिर्वक्तुमुचिता । ननु पूर्वव्याख्यानेऽपि 'तस्येद'मिति सम्बन्धस्यैवोक्तेः पक्षभेदोऽनुपपन्न इत्यत आह—एतत्पूर्वकेणेति । 'प्राष्ठी'त्यस्य तर्हि कथं साधुत्वमत आह—भेदस्य त्विति । आरोप्यत इति । आरोपे च हेतवस्तात्स्थ्यादयः । शक्यताऽवच्छेदकप्रकारक एव लक्ष्यार्थबोध इति भावः । तत्प्रकारकप्रतीतिविशेष्यप्रसिद्धार्थत्वं मुख्यत्वम् । तादृशाऽप्रसिद्धार्थत्वञ्च गौणत्वम् ।

अत्र बालेष्विति । मुख्यमञ्चपदार्थस्याऽचेतनत्वेन हसनकर्तृत्वाऽसम्भवादित्यर्थः । ताद्धर्म्यादिति । शौर्यादियोगान्माणवकवाहीकयोः सिंहत्वगोत्वारोप इति भावः । गोत्वाऽनुषङ्ग इति । गोत्वसम्बन्ध इत्यर्थः । नन्वन्यधर्मस्याऽन्यत्र कथं सम्बन्धोऽत आह—निमित्तादिति । शौर्यादिरूपादित्यर्थः । विपर्यस्तमिति । अन्यत्र विद्यमानमर्थरूपमन्यत्रारोपितमित्यर्थः । स्वार्थे—गोत्वे । कैश्चिदित्यस्य पातञ्जलैरित्यर्थः । सामीप्याद्गङ्गायां घोषः । अत्र तीरे सामीप्याद्गङ्गात्वारोपः । गङ्गासम्बन्धितीरे लक्षणायान्तु 'तस्येद'मित्यणन्तस्यैव

१—'पीनं' पा० ।

अथवा पुनरस्तु तस्यामेव प्रष्ठशब्दः । ननु चोक्तं 'सुबन्तसमासवचनाच्चाकारान्तानुपपत्ति'रिति । नैष दोषः ।

**गतिकारकोपपदानां कृद्भिः सह समासवचनम् ॥ ४ ॥**

'गतिकारकोपपदानां कृद्भिः सह समासो भवती'त्येषा परिभाषा कर्तव्या । कानि[1] पुनरस्याः परिभाषायाः प्रयोजनानि ?

**प्रयोजनं क्तादल्पाख्यायाम् ॥ ५ ॥**

अभ्रविलिप्ती सूपविलिप्ती[2] । सुबन्तानां समासः । तत्रान्तरङ्गत्वाट्टाप् । टाप्युत्पन्ने समासः । विलिप्ताशब्दः समस्येत । तत्र 'क्तादल्पाख्याया'मकारान्तादिति* ङीष् न प्राप्नोति ।

**जातेर्ङीष्विधाने ॥ ६ ॥**

जातेर्ङीष्विधाने प्रयोजनम् । व्याघ्री कच्छपी । सुबन्तानां समासः । तत्रान्तरङ्गत्वाट्टाप् । टाप्युत्पन्ने समासः । घ्राशब्दः समस्येत । तत्र 'जातेरस्त्रीविषयादयोपधा'दकारान्तादिति† ङीष् न प्राप्नोति ।

---

प्र०—इह तु साहचर्यात्स्त्रियां प्रष्ठत्वारोप. ॥ अथवेति । संविधात्रीत्वात् प्रस्थाने कर्त्रीत्वं स्त्रियाः, पुरुषगताया वा प्रस्थानक्रियायास्तस्यामारोपादिति भावः ।

अभ्रविलिप्तीति । अभ्रशब्दस्य तृतीयान्तस्य विलिप्ताशब्देन कर्तृकरणे कृतेति समासः । ततः करणपूर्वादिति वर्तमाने 'क्तादल्पाख्याया'मिति ङीष् न प्राप्नोति । वचनसामर्थ्याट्टाबन्तादपि भविष्यतीति चेदत इत्यधिकारो बाध्येत । परिभाषा चान्यार्थावश्यं कर्तव्या । अथवा वचनात्प्रातिपदिकाधिकारो बाध्येत, ततश्च वाक्ये ङीष् प्रसज्येत—अभ्रैर्विलिप्ता द्यौरिति ।

व्याघ्रीति । व्याङ्पूर्वाज्जिघ्रते'र्जिघ्रः संज्ञायां प्रतिषेध' इति शस्य प्रतिषेधात् 'आतश्चोपसर्गे'इति कप्रत्यय. । तत्र घ्रशब्दमात्रं जातौ न वर्तत इति टाबेव स्यात् । ङीषस्तु सूकर्यादिरवकाशः ।

---

उ०—तत्रार्थे साधुत्वेनाऽस्यासाधुत्वम् । एवं मत्वर्थादिलक्षणायामपि प्रकृतेरसाधुत्वम् । साहचर्यञ्च सम्बन्धमात्रोपलक्षणम् । अत्र पक्षे पुंयोगहेतुकस्त्रीवृत्तित्वाऽभावादाह–पुरुषगताया वेति आरोपे निमित्तञ्च तत्साहचर्यम् । बाध्येतेति । अबाधेनोपपत्तौ बाधो न न्याय्य इति भावः । ननु तदबाधाय परिभाषायाः करणे गौरवमत आह—परिभाषा चेति । शस्य–'पाघ्रा' इत्यादिना विहितस्य । वस्तुतो जिघ्रादेशस्य तेन प्रतिषेध इति शप्रत्ययान्त एव व्याघ्रशब्द इति बोध्यम् । घ्रशब्दमात्रमिति । किन्तु 'व्याघ्र'शब्द इति भावः । सूकर्या-

---

१—'कान्येतस्याः' पा० । २—'सूपविलिप्ती' पा० । * क्तादल्पाख्यायाम् ४ । १ । ५१

† जातेरस्त्रीविषयादयोपधात् ४ । १ । ६३

## समासान्तस्य णत्वे ॥ ७ ॥

समासान्तस्य णत्वे प्रयोजनम् । वक्ष्यति—'प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थ'मिति‡ । तस्मिन्क्रियमाणे माषवापिणी व्रीहिवापिणी, सुबन्तानां समासः । तत्रान्तरङ्गत्वान्नकारान्तत्वान्ङीप् । ङीप्युत्पन्ने समासः । वापिनीशब्दः समस्येत । तत्र 'समासान्तस्ये'ति णत्वं न प्राप्नोति ।

## कृदन्तात्तद्धिते वृद्धिस्वरौ च ॥ ८ ॥

कृदन्तात्तद्धिते वृद्धिस्वरौ च प्रयोजनम् । साङ्कूटिनम्× व्यावक्रोशी+ । अत्रावयवादुत्पत्तिः प्रसज्येत । 'गतिकारकोपपदानां कृद्भिः सह समासो भवती'ति न दोषो भवति ।

सत्यामप्येतस्यां परिभाषायामवयवादुत्पत्तिः प्राप्नोति । किं कारणम् ? 'प्रत्यय-

प्र०—समासान्तग्रहणमिति । समासस्य प्रातिपदिकस्य योन्तो नकारस्तस्य णत्वमित्यर्थः । तत्र माषान्वपत्यभीक्ष्णमिति 'बहुलमाभीक्ष्ण्ये' इति णिनौ कृते 'ऋन्नेभ्य'इति ङीपि कृते सुबन्तेन यदि समासः स्यात्तदा समासस्यान्त ईकारो न तु नकार इति णत्वं न स्यात्, माषवापिण इत्यादेरेव तु स्यात् । साङ्कूटिनमिति । 'अभिविधौ भाव इनु'णितीनुण्प्रत्ययः । तत्र 'कूटि'न्नित्येतस्माच्छब्दात्समासार्था विभक्तिश्च प्राप्नोति, 'अणिनुण' इत्यण्प्रत्ययश्च । तत्र स्वार्थिकत्वादन्तरङ्गत्वादण्प्रत्ययः स्यात् । ततश्च कूटिन्नित्यस्यैवाङ्गत्वादादिवृद्धिः स्यात् । प्राक् सुबुत्पत्तेः समासेऽन्तरङ्गत्वात्पूर्वं समासः । अण्प्रत्ययो हि प्रातिपदिकविशेषापेक्षत्वाद्बहिरङ्गः । तत्र सङ्कूटिन्नित्यस्मात्समासप्रातिपदिकादण्प्रत्यये सतीष्टं सिध्यति । व्यावक्रोशीति । कर्मव्यतिहारे णच्स्त्रिया'मिति णच् । 'णचः स्त्रिया'मित्यञ् । सत्यामपीति । 'णच' 'इनुण' इति प्रत्ययग्रहणात् प्रत्यय-

उ०—दिरिति । 'सूतेः कर'गिति मत इदम् । प्रोष्ठीत्यादिरिति पाठान्तरम् । प्रोष्ठी—सूकरीत्याहुः ॥ अभीक्ष्णमिति । तच्छीलस्याऽप्युपलक्षणम् । स्वार्थिकत्वादिति । एवञ्चाऽत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेव प्रवृत्तिरिति भावः । अन्यथा तस्याऽपि सुबन्तादुत्पत्तौ पूर्वं सुपि—इनुणन्तस्वरूपाधिकपदार्थसापेक्षतया बहिरङ्गाऽण्प्रत्ययादन्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादणि रूपसिद्धौ भाष्यमसङ्गतमेव स्यात् । भाष्योक्तः स्वदोषस्तु—'व्यावक्रोशी'त्यत्र । प्रथमं तद्धिते तदन्तेन समासेऽन्तोदात्तं स्यात् । समासोत्तरमञि तु आद्युदात्तमिति बोध्यम् । विशेषाऽपेक्षत्वादिति । इनुणन्तस्वरूपाऽधिकपदार्थाऽपेक्षत्वादित्यर्थः । बाध्यते इति । नन्वियं

‡ ८ । ४ । ११ वा० १

× अभिविधौ भाव इनुण् ३ । ३ । ४४; अणिनुणः ५ । ४ । १५; तद्धितेष्वचामादेः ७ । २ । ११७

\+ कर्मव्यतिहारे णच् स्त्रियाम् ३ । ३ । ४३; णचः स्त्रियामञ् ५ । ४ । १४; तद्धितेष्वचामादेः ७ । २ । ११७; ञ्नित्यादिर्नित्यम् ६ । १ । १९७

ग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवती'ति सङ्घातादुत्पत्तिर्भविष्यति ।

यदि तर्ह्येषा परिभाषाऽस्ति नैतदस्याः परिभाषायाः प्रयोजनं भवति, एतयैव सिद्धम् । न सिध्यति । किं कारणम् ? अप्रातिपदिकत्वात् । कृत्त्वात्प्रातिपदिकसंज्ञा भविष्यति* । ननु चेदानीं प्रातिपदिकसंज्ञायामप्येतया परिभाषयेह शक्यमुपस्थातुम् ? 'ने'त्याह । इह हि 'मूलकेनोपदंशं भुङ्क्ते' इति† वाक्येऽपि लुक्प्रसज्येत‡ । स्वरे

प्र०—ग्रहणपरिभाषोपस्थानात् 'कूटि'न्नित्यादेरेवावयवात्तद्धितोत्पत्तिप्रसङ्ग इत्यर्थः । कृद्ग्रहण इति । अनया परिभाषया प्रत्ययग्रहणपरिभाषा बाध्यत इत्यर्थः । नैतदस्या इति । 'गतिकारकोपपदाना'मित्यस्याः साङ्कूटिनमित्यादि न प्रयोजनम् । अकृत एव समासे कृद्ग्रहणग्रपरिभाषया सङ्घातात्तद्धितोत्पत्तिर्भविष्यतीति भावः । अप्रातिपदिकत्वादिति । 'णचः स्त्रियामञ्' 'अणिनुण' इत्यत्र प्रातिपदिकाधिकाराण्णजन्तादिनुणन्ताच्च प्रातिपदिकात्तद्धितो विधीयते । तत्र कृद्ग्रहणपरिभाषया णजिनुणन्तत्वं सिध्यति न तु प्रातिपदिकत्वम् । तत्र समासग्रहणेन नियमार्थेन सङ्घातस्य प्रातिपदिकसंज्ञानिषेधात्सङ्घातात्तद्धितो न स्यादित्यर्थः ।

ननु चेति । 'कृत्तद्धितसमासाश्चे'त्यत्रापि कृद्ग्रहणे कृद्ग्रहणपरिभाषया 'सङ्कूटि'न्नित्यस्य विनापि प्राक्सुबुत्पत्तेः समासेन प्रातिपदिकसंज्ञा भविष्यति, तन्निबन्धनश्च तद्धित इति भावः । मूलकेनोपदंशमिति । 'उपदंशस्तृतीयाया'मिति णमुल् । अत्र यदि सगतिकारकस्य कृदन्तस्य प्रातिपदिकसंज्ञा स्यात्तदा प्रातिपदिकान्तर्वर्तित्वात्सुपो लुक्प्रसज्येत । यद्येवं 'तृतीयाप्रभृतीन्यन्यतरस्या'मिति विकल्पेन समासविधानस्य किं प्रयोजनमिति चेत् दधि उपदंशं भुङ्क्ते इत्यत्र पक्षे प्रकृतिभावः । अन्यथाऽसत्यस्मिन्विकल्पविधाने 'अमैवाव्ययेने'ति नित्यसमासः स्यात् । ततश्च 'सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः' इति प्रकृतिभावः प्रतिषिध्येत ।

उ०—तदप्राप्तविषयसङ्ग्राहिका, अत एव अपिना तदर्थस्याऽपि सङ्ग्रहः परिभाषायामिति चेन्न, गत्यादिसमवधाने बाधिकैव तस्या इत्याशयात् । अपिस्तु गत्याद्यभावे तावन्मात्रस्यापि ग्रहणाऽर्थ इति भावः ।

न तु प्रातिपदिकत्वमिति । प्रत्ययग्रहणपरिभाषया कृदन्तत्वाऽभावादिति भावः । अर्थवत्सूत्रेणाऽपि नेत्याह—तत्र समासेति । भाष्ये–इतर आह—कृत्त्वादिति । तदेव विवृणोति—ननु चेदानीमिति । एतया परिभाषयेहेति । 'कृद्ग्रहण'परिभाषयेत्यर्थः । सुपो लुक्प्रसज्येतेति । तद्व्यावृत्तये समासग्रहणकृतनियमेन परत्वात्कृदन्तत्वप्रयुक्तसंज्ञाया अपि बाधोऽवश्यं वाच्यः, एवञ्च फलाऽभावान्नैतत्परिभाषोपस्थितिस्तत्रेति भावः। सिन्नित्यसमासयोरिति । नित्यग्रहणाऽभावेऽपि समासे प्रतिषेधः प्राप्नोतीत्यपि बोध्यम् । प्रतिषिध्येतेति । स्वरेऽपि विशेषो बोध्यः समासाऽसमासयोः । एवञ्च प्रकृतिभावः समासप्रयोजनं, तथा विशेषणाऽनन्वयसंख्याभानाऽभावावित्यपि बोध्यम् । पदव्यपदेशोऽस्तीति । 'समुदायस्ये'ति शेषः ।

---

* कृत्तद्धितसमासाश्च १ । २ । ४६

† उपदंशस्तृतीयायाम् ३ । ४ । ४७

‡ सुपो धातुप्रातिपदिकयोः २ । ४ । ७१

च दोषः स्यात्—प्रकारकः प्रकरणम् । 'गतिकारकोपपदात्कृदन्तमुत्तरपदं प्रकृतिस्वरं भवती'त्येष स्वरो* न स्यात् । नैष दोषः । द्वे अत्र प्रातिपदिकसंज्ञे, अवयवस्यापि समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रयः स्वरो भविष्यति । इहापि तर्हि साङ्कूटिनम् व्यावक्रोशीति द्वे अत्रापि प्रातिपदिकसंज्ञे, अवयवस्यापि समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रयाऽवयवादुत्पत्तिः प्रसज्येत । अवयवादुत्पत्तौ सत्यां को दोषः ? कौम्भकारेयो+ न सिध्यति । अवयवस्य वृद्धिस्वरौ स्याताम् ।†

प्र०—प्रकारक इति । अत्र समुदायस्य प्रातिपदिकसंज्ञायां सत्यां सुबुत्पत्तौ पदव्यपदेशोस्ति न तूत्तरपदव्यपदेशस्तत्र समुदायस्य कृदन्तव्यपदेशे तदन्तर्भावाद्गतेस्तस्मात्परं कृदन्तमुत्तरपदं न भवतीति कारकशब्दस्य प्रकृतिस्वरो न स्यात् । वचनं किमर्थमिति चेत्, उपपदार्थं स्याद्—अमावास्येत्यादौ । गतिकारकग्रहणं तूत्तरार्थं स्यात् । अथवा वचनस्याप्रतिपादकत्वलक्षणमप्रामाण्यं स्यात् । द्वे इति । 'गतिकारकपूर्वस्यापी'त्यत्राऽपिशब्दात्कारकशब्दस्यापि प्रत्ययान्तस्य प्रातिपदिकसंज्ञा, प्रकारकशब्दस्यापि समुदायस्येत्यर्थः । तदाश्रय इति । कारकशब्दस्य प्रातिपदिकसंज्ञायां सत्यां 'गतिकारकोपपदाना'मित्येतदनाश्रयणे सुप्युत्पन्ने समासे कृते अपिग्रहणात्कारकशब्दस्यापि कृदन्तत्वाद्गतेरुत्तरत्वात्स्वरो भविष्यतीत्यर्थः । कौम्भकारेय इति । एतच्चोपलक्षणम् । सांकूटिनं व्यावक्रोशीत्यपि न सिध्यति । समुदायावयवसन्निधाने द्विर्वचनवत्समुदाय एव प्रकृतित्वेनाश्रयिष्यत इति चेत् प्रकारके दोषः स्यात् । समुदायस्य कृदन्तत्वे तदन्तर्भावाद्गतेस्तदाश्रयः स्वरो न स्यात् । किञ्च समुदाये द्विरुक्ते अवयवा अपि द्विरुक्ता भवन्तीति पृथग्द्विर्वचनं न प्रयुज्यते । इह तु समुदायादुत्पत्तौ तस्यैवाङ्गसंज्ञायां तन्निबन्धनानि कार्याणि प्रवर्त्तन्ते नावयवानामित्यवयवादपि प्रत्ययोत्पत्तिप्रसङ्गः । तत्र कुम्भकारशब्दे यदि 'कार'शब्दस्यापि प्रातिपदिकसंज्ञा, समुदायस्यापि, 'गतिकारकोपपदाना'मित्येतच्च नाश्रीयते तदा कारशब्दात्प्रातिपदिकान्ङीपि कृते 'कारी'शब्दस्य स्त्रीप्रत्ययान्तत्वात्तत एव ढकि सति तस्यैवादिवृद्धिः स्यात् ।

ननु चानुपसर्जनादितिसूत्रं प्रधानेन तदन्तविध्यर्थमित्युक्तं, तत्र कारशब्दान्तान्ङीभविष्यति, तत्कथमुक्तं 'कौम्भकारेयो न सिध्यती'ति । नैष दोषः । 'गतिकारकोपपदाना'मित्येतद्वचन-

उ०—न तूत्तरपदेति । 'उत्तरखण्डस्ये'ति शेषः । समासाऽभावादिति भावः । तस्मादिति । यत्कृदन्तं तदुत्तरपदं न, यच्च गतेरुत्तरं तन्न कृदन्तं, नापि पदं, समुदायस्यैव पदत्वात्, समासाऽप्राप्तिरपि तत एवेति भावः । अयं भावः,—गतिसमवधाने विशिष्टस्यैव कृदन्तत्वमिति । ननूत्तरार्थत्वे तत्रैव कार्यमत आह—अथवेति । एकदेश्याह भाष्ये—नैष दोष इत्यादि । ननु 'कृद्ग्रहण'परिभाषायां सत्यां कथमवयवस्य प्रातिपदिकत्वमत आह—गतिकारकेति । गतिसमवधानेऽपि—'अपि'शब्दात्केवलस्येत्यर्थ इत्यभिमानः ।

* गतिकारकोपपदात् कृत् ६ । २ । १३९

+ स्त्रीभ्यो ढक् ४ । १ । १२० † किति च ७ । २ । ११८; कितः ६ । १ । १६५

**तस्मात्प्रयोजनमेवैतदस्याः परिभाषायाः, उभाभ्यां तु खलु सिध्यति ।**

प्र०—मत्र प्रदेशे आक्षिप्तम् । अस्मिंश्चासति उपपदस्य सुबन्तेन सह समासेन भाव्यम् । तत्रान्तरङ्गत्वात्कारशब्दादेव ङीपि सति सुबुत्पत्तौ सत्यां समासः प्रसज्येत । ततश्च 'कारी'शब्दादेव ढक् स्यात् । यद्यपि स्त्रीप्रत्यये तदादिनियमो नास्ति तथापि 'स्त्रीभ्यो ढ'गिति समुदायाड्ढकं बाधित्वा 'द्व्यच' इति परत्वादन्तरङ्गत्वाद्वाऽवयवाड्ढक्प्रसज्येत । तस्मात् स्थितमेतत् 'कृत्तद्धितसमासाश्चे'त्यत्र कृद्ग्रहणपरिभाषा नोपतिष्ठते । यस्मादप्रत्यय इत्यस्य प्रतिषेधस्य बाधनार्थं तत्र कृद्ग्रहणम् । परिभाषोपस्थाने तु सति 'मूलकेनोपदंशं भुङ्क्ते'इति वाक्यस्यापि स्यात् । तथा च समासग्रहणाद्यो नियमः स बाध्येत । मध्येऽपवादा इति न्यायाच्च 'अप्रत्यय'इत्ययं निषेधः कृद्ग्रहणेन बाध्येत न तु समासग्रहणकृतो नियमः । तत्र परत्वात्समासग्रहणेन गतिकारकपूर्वस्यापि कृदन्तस्य वाक्यस्य प्रातिपदिकसंज्ञाया निवर्तनाद्यस्मात् कृद्विहितस्तदादेरेव कृदन्तस्य प्रातिपदिकसंज्ञाऽवतिष्ठते ।

तस्मादिति । 'गतिकारकोपपदाना'मित्यस्याः साङ्कूटिनमित्यादिप्रयोजनमित्यर्थः । उभाभ्यामिति । साङ्कूटिनादिपरिभाषाद्वयेन सिध्यति न केवलया कृद्ग्रहणपरिभाषयेत्यर्थः । ननु च 'गतिकारकपूर्वस्यापी'त्यपिग्रहणात् 'कूटि'न्नित्यस्यापीनुणन्नत्वादण् प्राप्नोति । नैष दोषः । उभयोरपीनुणन्तत्वे प्रातिपदिकत्वे चार्थविच्छेदाभावादवयवविच्छेदे प्रमाणाभावात्समुदायादेवो-

उ०—तद्दूषयति भाष्ये—इहाऽपीति । कृदन्तत्वादवयवस्य प्रातिपदिकत्वम्, ततः सुपि समासे विशिष्टस्यापि प्रातिपदिकत्वमिति द्वे इत्यर्थः । एवञ्च ऽवयवादुत्पत्तौ साङ्कूटिनकौम्भकारैयाद्यसिद्धया नैवं परिभाषार्थः, किन्तु प्रागुक्त एव । एवञ्च-समुदायस्याऽप्रातिपदिकत्वात्साङ्कूटिनाऽसिद्धया तत्सिद्धये एषाऽपि तदर्थमावश्यकीत्याह भाष्ये—तस्मादिति । न्यायसम्भवमपि दर्शयति—किन्चेति । इत्येतच्च नाश्रीयत इति । तदाश्रयणे ह्यन्तरङ्गत्वात्कारशब्देनैव पूर्वं समासे ततः प्रधानेन तदन्तविधिसत्त्वात्समुदायादेव ङीपि समुदायादेव तद्धितः स्यादिति भावः । कारीशब्दादेवेति । न तूपपदसङ्घातात् । तथाऽपीति । तदादिनियमाऽभावात्कदाचित्कारीशब्दादपि 'स्त्रीभ्य' इत्यनेनैव स्यादित्यपि बोध्यम् । यथोक्तं कैयटेनैव—'अनुपसर्जना'दित्यत्र । अन्तरङ्गत्वादिति । स्त्रीभ्य इत्यत्र स्त्रीप्रत्ययान्तत्वस्याऽधिकस्यापेक्षणादस्याऽन्तरङ्गत्वमिति भावः । अनुपस्थितौ प्रमाणं दर्शयति—यस्मादित्यादिना । अप्रत्यय इत्यस्येति । 'अधातु'रित्यस्याऽपीति बोध्यम् । ननु तद्बाधेऽपीष्टापत्तिरत आह—मध्येऽपवादा इति । परिभाषाद्वयेन 'गतिकारकोपपदाना'मिति, 'कृद्ग्रहण' इति च समासे कृते विशिष्टस्यैवेनुणन्तत्वात्, प्रातिपदिकत्वाच्च । अर्थविच्छेदाऽभावादिति । वृत्तावेकार्थीभावेनाऽवयवार्थस्य पृथङ्निष्कर्षाऽभावात्तन्मात्रगतस्वार्थस्य प्रत्ययेन प्रतिपिपादयिषायाः कर्तुमशक्यत्वात्तत्र प्रत्ययाऽभाव इति भावः । परे तु—शङ्केयमसङ्गता, 'गतिकारकसमवधाने तत्पूर्वस्यैव ग्रहणं, तदसमवधाने केवलस्यापी'त्येव तत्परिभाषाऽर्थात्, उक्तरीत्या भाष्यात्तथैव लाभात्, 'अनया प्रत्ययग्रहणपरिभाषा बाध्यते इति स्वोक्तेरसङ्गत्यापत्तेश्च । किञ्च, सिद्धान्तोऽप्यसङ्गतः, 'अनुपसर्जना'दिति सूत्रस्थस्य 'अवयवादुत्पत्तिः प्राप्नोतीति भाष्यस्य निर्दलत्वाऽऽपत्तेः । किञ्च, येन विधिस्तदन्तस्ये'ति सूत्रस्थस्य

## अवदातायां तु ङीप्प्रसङ्गः ॥ ६ ॥

अवदातायां तु ङीप्प्राप्नोति । अवदाता ब्राह्मणी । 'वर्णादनुदात्तात्तोपधात्तो नः' [ ४ । १ । ३९ ] इति ॥ नैष वर्णवाची । किं तर्हि ? विशुद्धवाची । अतश्च विशुद्धवाची, एवं ह्याह–

त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च ।
एतच्छिवं विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् ॥ इति ।

सूर्याद्देवतायां चाब्वक्तव्यः । सूर्यस्य स्त्री सूर्या । देवतायामिति किमर्थम् ? सूरी† ॥ ४८ ॥

प्र०—त्पत्तिर्भवति । असत्यां त्वेकतरस्यां परिभाषायामवयवस्यैवेनुणन्तत्वात्प्रातिपदिकत्वात्तत एव तद्धितोत्पत्तिः प्रसज्येत । 'गतिकारकोपपदात्कृ'दित्यत्र तु गतिकारकयोर्भेदेनोपादानान्निमित्तभावाद्यथासंभवं क्वचित्केवलस्य कृदन्तस्य क्वचिद्गतिकारकपूर्वस्य गत्यादिभ्य उत्तरस्य स्वरो भवति । तदेवं 'गतिकारकोपपदाना'मिति वचनात्प्राक् सुबुत्पत्तेः समासे प्रष्ठशब्दोऽकारान्तः पुंयोगात् प्रस्थानाऽऽसङ्गात् पुंस्कर्तृकप्रस्थानक्रियायां संविधात्रीत्वाद्वा कर्त्रीत्वात्स्त्रियां वर्तते पुंसो वाचकश्चेति प्रष्ठीत्युदाहरणं भवतीति ।

अवदातायामिति । 'प्राक्सुबुत्पत्तेः समास'इत्येतत्प्रसङ्गेनात्रेदमुक्तं, 'वर्णादनुदात्ता'दित्यत्र तु वक्तव्यम् । अवदातशब्दो गौरवाचीति मन्यते । विशुद्धवाचीति । वर्णान्तरव्यतिकीर्णेऽपि विशुद्धिमुपादाय प्रयुज्यते । सूरीति । 'सूर्यतिष्ये'ति यलोपः ॥ ४८ ॥

उ०—'समर्थः पदविधि'रिति सूत्रशेषस्यस्य च भाष्यस्याऽसङ्गतेरित्याहुः । तत एवेति । सामर्थ्यादिति भावः । नन्वेवं–गतिकारकोपपदा'दिति स्वरविधायके 'कृद्ग्रहणे' इत्युपस्थितौ प्रकारके स्वरो न स्यात्, अनुपस्थितौ इध्मप्रव्रश्चने । इध्मप्रव्रश्चनस्य कृदन्तत्वाऽभावात्स्वरो न स्यादत आह—गतिकारकेति । एवं च,—तत्सूत्रे गतिकारकयोर्भेदेनोपादानसामर्थ्यात्तयोरपि निमित्तत्वेन 'कृद्ग्रहणे गती'त्यस्याः 'प्रत्ययग्रहणे यस्मा'दित्यस्याश्चोपस्थितिरिति भावः । 'पुंयोगात्स्त्रियां वर्तते' इत्यन्वयः । कथमित्याह—प्रस्थानासङ्गादिति । साहचर्येण स्त्रियां प्रस्थानाऽऽरोपादित्यर्थः । संविधात्रीत्वाद्वेति । तदनुकूलसंविधानमपि धात्वर्थ इति भावः ।

'अवदाताया'मित्यस्य प्रकृतसूत्रेऽसङ्गतेः प्रसङ्गसङ्गतिं दर्शयति—प्राक्सुबिति । अवदातशब्दो 'वर्णानां तणती'त्याद्युदात्तः, 'गतिकारक' इति सुबुत्पत्तेः पूर्वं समासादकारान्तश्चेति ङीन्नकारयोः प्राप्तिः । वर्णान्तरेति । वर्णान्तरं गौराऽतिरिक्तं, तद्युक्तेऽपि प्रयोगाद्गौरवाचीत्ययुक्तमिति भावः । एवञ्च गौरेऽपि विशुद्धिमादायैव प्रयोग इति तात्पर्यम् ॥ ४८ ॥

१–'एतच्छिवे' इति पा० । २–अस्मात् पूर्वं 'सूर्याद्देवतायां चाप्' इति वार्तिकं क्वचित् ।
† सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ६ । ४ । १४९

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्

॥ ४ । १ । ४९ ॥

### हिमारण्ययोर्महत्त्वे ॥ १ ॥

'हिमारण्ययोर्महत्त्व' इति वक्तव्यम् । महद्धिमं हिमानी । महदरण्यमरण्यानी ।

### यवाद्दोषे ॥ २ ॥

'यवाद्दोष' इति वक्तव्यम् । दुष्टो यवो यवानी ।

### यवनाल्लिप्याम् ॥ ३ ॥

'यवनाल्लिप्या'मिति वक्तव्यम् । यवनानी लिपिः ।

### उपाध्यायमातुलाभ्यां वा ॥ ४ ॥

'उपाध्यायमातुलाभ्यां वे'ति वक्तव्यम् । उपाध्यायी उपाध्यायानी । मातुली मातुलानी ।

### मुद्गलाच्छन्दसि लिच्च ॥ ५ ॥

'मुद्गलाच्छन्दसि लिच्चे'ति† वक्तव्यम् । 'रथीरभून्मुद्गलानी'‡ ।

---

प्र०—इन्द्रवरुण । महद्धिममिति । महत्त्वयोगे हिमारण्ययोः स्त्रीत्वम् । यवानीति । जात्यन्तरमेवाभिधीयते । दोषस्तु यवत्वजातेरभावे तदाकारानुकृतिमात्रमित्याहुः । यवनानीति । 'तस्येद'मित्यणो बाधको ङीष् । उपाध्यायेति । उपाध्यायस्याऽप्राप्तेर्मातुलस्य तु नित्यं प्राप्ते

---

उ०—इन्द्रवरुण । महत्त्वयोग इति । तेन महत्त्वोपाध्यभावेऽन्यत्र टाबिति भ्रमो न कार्य इति भावः । जात्यन्तरमेवेति । न तु यवानामेव केनचित्कारणेन दुष्टत्व एतत्प्रवृत्तिरिति भावः । तर्हि दोष इत्ययुक्तमत आह—दोषस्त्विति । बाधक इति । हिमादिसाहचर्यादस्मादपि मुख्यार्थादेव प्रत्यय इति भावः । तथा च 'यावनी'ति प्रयोगो लिपावसाधुः । बोधकृतं वैलक्षण्यन्तु भगवतो नाभिमतमिति 'तस्येदमित्यपत्येऽपी'त्यादिना भाष्य एव स्पष्टम् । भाषायां तु साधुरेव ।

एतेन[1] गृह्यत इति । अत एव गोपस्य भगिनी 'गोपी'त्यपि भवति, जन्यजनकभाव इवेदृशपुंयोगस्यापि ग्रहीतुं युक्तत्वात् । एवञ्च,—'लिपौ वर्तमानाद्यवनशब्दात्पूर्वेण सिद्धेरानुग्मात्रं विधीयते' इति महल्लाघवम् । कैयटहरदत्तादयस्तु मुख्यार्थाद्यवनशब्दाल्लिपावित्यर्थे—'तस्येद'मित्यण्बाधको ङीष्विधीयत इत्याहुस्तन्न; प्रकरणविरोधात्, इन्द्रादिसाहचर्येण गौणार्थस्यैव युक्तत्वाच्च । तस्मान्मुख्यार्थक'यवन'शब्दाल्लिपावित्यर्थे 'तस्येद'मित्यणि 'यावनी'ति भवत्येवेत्याहुरिति मान्योक्तं प्राचामनुरोधेन बोध्यम् । अत एवाहुरिति—तैरप्यरुचिसूचनमुक्तमिति बोध्यम् ।

---

† लिति ६ । १ । १९३ ‡ ऋ० १० । १०२ । २

१—संदर्भोऽयं निर्णयसागरीयपुस्तके न विद्यते ।: न चेदं प्रतीकमिह भाष्यप्रदीपयोः दृश्यते ।

आचार्यादणत्वं च ॥ ६ ॥

'आचार्यादणत्वं चे'ति वक्तव्यम् । आचार्यानी ।

अर्यक्षत्रियाभ्यां वा ॥ ७ ॥

'अर्यक्षत्रियाभ्यां वे'ति वक्तव्यम् । अर्या अर्याणी । क्षत्रिया क्षत्रियाणी ॥४९॥

क्रीतात्करणपूर्वात् ॥ ४ । १ । ५० ॥

करणपूर्वादिति किमर्थम् ? गवा क्रीता । अश्वेन क्रीता । 'करणपूर्वा'दित्युच्यमानेऽप्यत्र प्राप्नोति । एषोऽपि हि क्रीतशब्दः करणपूर्वः । विभक्त्या व्यवहितत्वान्न भविष्यति । यदि तर्हि विभक्तिरपि व्यवधायिका भविष्यति, मनसाक्रीतीति* न सिध्यति ।

एवं तर्हि नैवं विज्ञायते—'करणं पूर्वमस्मात् क्रीतशब्दात्सोऽयं करणपूर्वः, तस्मात्करणपूर्वात्क्रीतशब्दादनुपसर्जना'दिति । कथं तर्हि ? 'करणमस्मिन्प्रातिपदिके पूर्वं तदिदं करणपूर्वम्, तस्मात् करणपूर्वात्प्रातिपदिकात्क्रीतान्तादनुपसर्जना'दिति ॥५०॥

प्र०—आनुग्विकल्प्यते । मुद्गलानीति । ङीषो लित्वादानुगाकारस्य लित्स्वरः । अर्येति । केचित्तु पुंयोग एवेच्छन्ति । अन्ये तु स्वार्थ एवेच्छन्ति । पुंयोगे तु अर्यी क्षत्रियीत्येव भवितव्यम् ॥४९॥

क्रीतात् । करणपूर्वादिति किमर्थमिति । क्रियमाणेऽपि 'करणपूर्व'ग्रहणे पूर्वशब्दस्य व्यवस्थावाचित्वादनिष्टप्रसङ्ग इति पृच्छति । विभक्त्येति । 'कर्मादीनां द्योतिका विभक्तय'इति दर्शने इदमुच्यते । अन्यथा विभक्तेः करणाभिधाने व्यवधानाभावः । मनसाक्रीतीति । 'मनसः संज्ञाया'मिति तृतीयाया अलुक् । करणमस्मिन्निति । पूर्वशब्दोऽवयववचनः, समासप्रातिपदिकं चान्यपदार्थस्तेन वाक्ये ङीष् न भविष्यतीत्यर्थः ॥ ५० ॥

उ०—आनुग्विकल्प्यत इति । ङीष् तु 'पुंयोगा'दिति नित्यमेवेति भावः । इदञ्च भाष्ये 'उपाध्यायी'-त्युदाहरणाज्ज्ञायते । 'इङश्चे'ति सूत्रे 'या स्वयमेवाऽध्यापिका तस्यामुपाध्यायी उपाध्याये'त्युक्तेरिदं पुंयोग एवेति ज्ञायते । स्वार्थ एवेति । इदमेव युक्तम्, अन्यथोपाध्यायीतिवदर्यीति पद्ये ङीषमेवोदाहरेत् ॥ ४९ ॥

क्रीतात्करण । कर्मादीनामिति । शक्तिनामित्यर्थः । विभक्तेरिति । पञ्चमीयं, ततः करणबोधे इत्यर्थः । अस्माद्भाष्याद् द्योतकत्वपक्ष एव सिद्धान्त इति ज्ञायते । करणपूर्वादित्यस्य—करणत्ववान् योऽर्थस्तद्वाचकपूर्वादित्यर्थः । समासप्रातिपदिकञ्चेति । अवयवेनाऽवयविन आक्षेपादिति भावः । तत्सामर्थ्यादेव—'क्रीतान्ता'दिति तदन्तविधिरिति तात्पर्यम् ॥ ५० ॥

१–'आर्यक्षत्रियाभ्यां वा ॥ आर्यक्षत्रियाभ्यां वेति वक्तव्यम् । आर्या आर्याणी । क्षत्रिया क्षत्रियाणी' इति कीलहार्नपाठः । 'आर्येति पाठस्तु कैयटाद्यसम्मतः' इति लघुशब्देन्दुशेखरे नागेशः ।

* मनसः संज्ञायाम् ६ । ३ । ४ इति तृतीयाया अलुक् ।

# बहुव्रीहेश्चान्तोदात्तात् ४ । १ । ५२ ॥

## अन्तोदात्ते जातप्रतिषेधः ॥ १ ॥

अन्तोदात्ते जातस्य प्रतिषेधो वक्तव्यः । दन्तजाता स्तनजाता† ।

## पाणिगृहीत्यादीनां विशेषे ॥ २ ॥

पाणिगृहीत्यादीनां विशेष इति वक्तव्यम् । पाणिगृहीती भार्या[1] । यस्या हि यथाकथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवति ।

## बहुलं तणि ॥ ३ ॥

बहुलं तणीति वक्तव्यम् । किमिदं 'तणी'ति ? सञ्ज्ञाछन्दसोर्ग्रहणम् । किं प्रयोजनम् ?

## प्रबद्धविलून्याद्यर्थम् ॥ ४ ॥

प्रबद्धविलूनी प्रबद्धविलूना ।

## अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वात् ॥ ५ ॥

'अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वा'दिति वक्तव्यम् । बहु—बहुकृता । नञ्—अकृता । सु—सुकृता । काल—मासजाता संवत्सरजाता । सुखादि—सुखजाता दुःखजाता* ।

प्र०—बहुव्रीहेः । दन्तजातेति । 'वा जाते' इत्यन्तोदात्तत्वं वा भवति । पाणिगृहीतीति । यस्या अग्निसाक्षिपूर्वकं पाणिग्रहणं कृतं साभिधीयते । प्रबद्धविलूनीति । प्रबद्धं विलूनं यस्या इति बहुव्रीहिः । अपरे तु कर्मधारयं कुर्वन्ति । बहुकृतेति । बहूनि कृतान्यनयेति बहुव्रीहिः । 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यन्तोदात्तत्वम् । अकृता सुकृतेत्यत्र 'नञ्सुभ्या'मिति । मासजातेत्यादौ 'जातिकालसुखादिभ्य'इति । सुखादयः--'सुखादिभ्यः कर्तृवेदनाया'मिति क्यङर्थं गणे पठिता इह गृह्यन्ते । अथवेति । बहुव्रीहावन्तोदात्तनिमित्तेष्वन्येषु निषिद्धेषु जातिरेवान्तोदात्तनिमित्तं

उ०—बहुव्रीहेश्चान्तो । ननु दन्तजातेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरप्राप्त्याऽन्तोदात्तत्वाऽभावादाह—वा जात इति । विशेषं दर्शयति—यस्या इति । भाष्ये—आदिपदार्थो हस्तगृहीतीत्यादिः । कर्मधारयमिति । स च बहुलग्रहणात्प्रकृते सुबुत्पत्तेः पूर्वमेवेत्यन्तरङ्गत्वाद्टापि अदन्तत्वाऽभावान्ङीषोऽप्राप्तिरिति न शङ्क्यम् ।

† वा जाते ६ । २ । १७१    १—'भार्या चेत्' पा० ।    २—'प्रवृद्ध' पा० ।
३—'विलूनाद्यर्थम्' पा० ।    ४—'तृप्रजाता' 'क्षिप्रजाता' इत्यधिकं पाठभेदेन क्वचित् ।
* जातिकाल......मितप्रतिपन्नाः; नञ्सुभ्याम्; बहोर्नञ्वदुत्तरपदभूम्नि ६।२।१७०;१७२;१७५

जातिपूर्वाद्वा ॥ ६ ॥

अथवा 'जातिपूर्वा'दिति वक्तव्यम्* ॥ ५२ ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ४ । १ । ५४ ॥

'स्वाङ्गाच्चोपसर्जना'दित्युच्यते, किं स्वाङ्गं नाम ?

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथायुतम् ॥

अप्राणिनोऽपि स्वाङ्गम् ॥ 'अद्रव'मिति किमर्थम् ? बहुलोहिता । नैतदस्ति । 'बह्वचो ने'ति† प्रतिषेधो भविष्यति । इदं तर्हि—बहुकफा ॥ 'मूर्तिम'दिति किमर्थम् ? बहुबुद्धिः बहुमनाः । नैतदस्ति । 'अत' इति‡ वर्तते । इदं तर्हि—बहुज्ञाना ॥ 'प्राणिस्थ'मिति किमर्थम् ? श्लक्ष्णमुखा शाला ॥ 'अविकारज'मिति किमर्थम् ? बहुगडुः बहुपिटका । नैतदस्ति । इह तावद्बहुगडुरिति 'अत' इति‡ वर्तते । बहुपिटकेति 'बह्वचो ने'ति† प्रतिषेधो भविष्यति । इदं तर्हि—बहुशोफा ।

प्र०—क्तान्तस्यावशिष्यत इति जातिग्रहणमेवात्र कर्तव्यमित्यर्थः ॥ ५२ ॥

स्वाङ्गाच्चो । किं स्वाङ्गमिति । किं स्वमेवाङ्गं स्वाङ्गमाहोस्विल्लक्षणान्तरयुक्तमिति प्रश्नः । अद्रवमिति । द्रवतीति द्रवं, ततोऽन्यदद्रवम् । मूर्तिः—काठिन्यम् । अथवा—असर्वगतद्रव्यपरिमाणं, सा यस्यास्ति तन्मूर्तिमत् । अविकारजमिति । विकारो वातादिवैषम्यं, तस्माद्यन्न जातमित्यर्थः । तथा—अप्राणिस्थमपि संप्रति यत्पूर्वं प्राणिनि दृष्टं तदपि स्वाङ्गम् । यथा रथ्याप-

उ०—बहुकृतादौ 'अस्वाङ्गपूर्वपदाद्वे'त्युत्तरसूत्रप्राप्तस्यापि निषेधः ॥ ५२ ॥

स्वाङ्गाच्चोप । ननु लोक एव स्वाङ्गशब्दः प्रसिद्धोऽत प्रश्नाऽनुपपत्तिरत आह—किं स्वमिति । तदाश्रयणे 'दीर्घनासिक्यर्चे'त्यादावव्याप्तिः, अङ्गशब्दस्य चेतनशरीराऽवयवे रूढत्वात् । अद्रवमित्यनेन रुधिरादिव्यावृत्तिः । नन्वेवमद्रवमिति व्यर्थं स्यादत आह—अथवेति । आकाशादेर्मूर्तत्ववारणाय—असर्वेति । अविभुद्रव्यपरिमाणमित्यर्थः । अविकारजमित्यनेन —शोफादिव्यावृत्तिः । ननु प्राणिनि दृष्टस्य कथमप्राणिस्थत्वमत आह—सम्प्रतीति । अप्राणिनोऽपीति । तस्येति शेषत्वविवक्षायां षष्ठी । तेन—अप्राणिना तथायुत-

* जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः; नञ्सुभ्याम्; बहोर्नञ्वदुत्तरपदभूम्नि ६ । २ । १७०; १७२; १७५ † न क्रोडादिबह्वचः ४ । १ । ५६
‡ अजाद्यतष्टाप् ४ । १ । ४

'अतत्स्थं तत्र दृष्टं च'

अप्राणिस्थं प्राणिनि दृष्टं च स्वाङ्गसंज्ञं भवति। दीर्घकेशी रथ्या।

'तस्य चेत्तत्तथायुतम्' ॥

अप्राणिनोऽपि स्वाङ्गसंज्ञं भवतीति। दीर्घनासिक्यर्चा[1], तुङ्गनासिक्यर्चेति।

अथोपसर्जनग्रहणं किमर्थम्? इह मा भूत्—शिखा[2]।

**उपसर्जनग्रहणमनर्थकं बहुव्रीह्यधिकारात् ॥ १ ॥**

उपसर्जनग्रहणमनर्थकम्। किं कारणम्? बहुव्रीह्यधिकारात्। 'बहुव्रीहे'रिति [ प्रकृतमनु[3] ] वर्तते। क्व प्रकृतम्? 'बहुव्रीहेश्चान्तोदात्तात्' [ ४। १। ५२ ] इति।

बह्वजर्थं तर्ह्युपसर्जनग्रहणं कर्तव्यम्। 'बह्वचो ने'ति† प्रतिषेधं वक्ष्यति तद्बह्वज्ग्रहणमुपसर्जनविशेषणं यथा विज्ञायेत—'बह्वच उपसर्जनान्ने'ति। अथाक्रियमाण उपसर्जनग्रहणे कस्य बह्वज्ग्रहणं विशेषणं स्यात्? 'बहुव्रीहे'रिति वर्तते, बहुव्रीहिविशेषणं विज्ञायेत। अस्ति चेदानीं कश्चिदबह्वज्बहुव्रीहिर्यदर्थो विधिः स्यात्? 'अस्ती'त्याह—खडा स्वडीति।

प्र०—तिताः केशाः। तस्य चेद्दिति। अप्राणिनोऽपि मुखं स्वाङ्गं भवति, यदि यथा प्राणिना तत्सम्बद्धं तथैवाऽप्राणिनाऽपि। अप्राणिनोऽपीति। 'तस्य चेत्तत्तथायुत'मित्यस्य सामर्थ्यलभ्योऽयमध्याहारः।

बहुलोहितेति। लोहितं रुधिरमुच्यते। नैतदस्तीति। ङीषभावार्थं लोहितस्याऽस्वाङ्गत्वप्रतिपादनं नोपयुज्यते, 'स्वाङ्गेऽध्रुवे' 'उपसर्गात्स्वाङ्गं ध्रुवमपर्शु' इत्यादिकार्याभावार्थं तूपयुज्यत एव। अस्ति चेदानीमिति। अनेकपदावयवत्वादबह्वच्त्वं बहुव्रीहेर्न सम्भवति, तत्र

उ०—चेदप्राणिनोऽपि स्वाङ्गमित्यर्थः। तदाह-अप्राणिनोऽपि स्वाङ्गमिति। अध्याहार इति। अन्यलक्षणद्वयप्रदर्शनमाद्यलक्षणे 'प्राणिस्थ'पदोपलक्षितार्थविवेचनायेति बोध्यम्। रुधिरमिति। न तु रक्तवर्णमात्रमिति भावः। उपयुज्यत एवेति। एवमुत्तरत्राऽपि द्रष्टव्यम्। भाष्ये—अशिखेति। नन्वत्र बहुव्रीहौ 'उपसर्जन'ग्रहणे कृतेऽपि दोषः, अन्तरङ्गत्वाट्टापि अदन्तत्वाऽभावेनोपसर्जनग्रहणाऽभावेऽप्यप्राप्तेश्च। अत एव तत्पुरुषोऽपि न, नञ्पूर्वकत्वेन 'सहनञ्विद्यमाने'ति निषेधेनाऽप्राप्तिश्चेति चेन्न; 'शिखे'त्यवयवस्यैव प्रत्युदाहरणत्वे तात्पर्यात्। क्वचित्तु-'शिखा'इत्येव पाठः। भाष्ये-अथाऽक्रियमाण इति। बह्वज्ग्रहणस्य बहुव्रीहिविशेषणत्वे

१—अर्चा-प्रतिमा। मूर्तिः।

२—'अशिखा' इति पाठभेदः। 'शिखेति।' इदमेव प्रत्युदाहरणम्।...यद्यपि भाष्ये 'अशिखे'ति प्रत्युदाहृतं तथाप्येकदेश एव तात्पर्यम्, नञ्पूर्वे 'सहन'ञिति निषेधेन प्राप्तयभावात्।' इति लघुशब्देन्दुशेखरे नागेशः। इह तु 'अशिखा' इत्येव पाठ उद्द्योते वर्तते।

३—इदं क्वचिन्न।

† न क्रोडादिबह्वच ४। १। ५६

## बह्वजर्थमिति चेत्स्वाङ्गग्रहणात्सिद्धम् ॥ २ ॥

स्वाङ्गग्रहणं क्रियते, तद्बह्वज्ग्रहणेन विशेषयिष्यामः—'स्वाङ्गाद्बह्वचो ने'ति । एवं तर्हि 'अन्तोदात्ता'दिति* वर्तते, अनन्तोदात्तार्थोऽयमारम्भः ।

## अनन्तोदात्तार्थमिति चेत्सहादिकृतत्वात्सिद्धम् ॥ ३ ॥

यदयं 'सहनञ्विद्यमानपूर्वाच्च' [ ४ । १ । ५७ ] इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो'ऽनन्तोदात्तादपि भवती'ति ।

## स्वाङ्गसमुदायप्रतिषेधार्थं तु ॥ ४ ॥

स्वाङ्गसमुदायप्रतिषेधार्थं तर्ह्युपसर्जनग्रहणं कर्तव्यम् । स्वाङ्गाद्यथा स्यात्स्वाङ्गसमुदायान्मा भूत्—कल्याणपाणिपादा ।

अथ क्रियमाणेऽप्युपसर्जनग्रहणे कस्मादेवात्र न भवति, स्वाङ्गं ह्येतदुपसर्जनम् ? न स्वाङ्गसमुदायः स्वाङ्गग्रहणेन गृह्यते, यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यते—काशिकोसलीया इति । 'जनपदतदवध्यो'रिति† वुञ्न भवति ।

प्र०—विधिसामर्थ्याद्बह्वज्ग्रहणमुत्तरपदविशेषणं भविष्यतीति मत्वा प्रश्नः । स्वडेति । अडो वृश्चिकावयवविशेषः ।

अनन्तोदात्तार्थं इति । बहुव्रीह्यधिकारात्स्वाङ्गस्योपसर्जनत्वे लब्धे पुनरुपसर्जनग्रहणमुपसर्जनमात्रपरिग्रहार्थमित्यनन्तोदात्तादपि ङीष्भविष्यतीति भावः ।

सहादिकृतत्वादिति । सहादीनां कृतः सहादिकृतः--प्रतिषेधः, तद्भावः--सहादिकृतत्वं, तस्मादित्यर्थः । सहादिपूर्वस्य हि बहुव्रीहेः पूर्वपदप्रकृतिस्वरे शेषनिघाते च नास्त्यन्तोदात्तत्वमिति प्रतिषेधं न विदध्यादिति भावः । कल्याणपाणिपादेति । पाणी च पादौ च पाणिपादं, तत्कल्याणं यस्या इति बहुव्रीहिः । अत्र पाणिपादशब्द उपसर्जनं, स च स्वाङ्गसमुदायवाची न तु

उ०—'सुमुखी'त्यादावपि निषेधापत्तिः । उपसर्जनविशेषणत्वे उपसर्जनीभूतबह्वजन्तात्प्रातिपदिकान्न ङीषित्यर्थ इति भावः । कथम्पुनरुपसर्जनग्रहणे सत्यनन्तोदात्तान्ङीष्सिद्धिरत आह—बहुव्रीहीति ।

तस्मादिति । भावप्रत्ययान्तेन पुनर्धर्मी लक्ष्यते । 'प्रियतद्धिता दाक्षिणात्या' इति तदुच्चारणमिति भावः । प्रतिषेधं न विदध्यादिति । तेन 'अन्तोदात्त'इत्यस्य निवृत्तिर्ज्ञाप्यत इति भावः । ननु स्वाङ्गसमुदायस्याऽस्वाङ्गत्वादेव ङीषभावः सिद्धः किमुपसर्जनपदेनेत्यत आह—असति त्विति । सति तु तस्मिन्समासशास्त्रे प्रथमानिर्दिष्टत्वं समुदायस्येति न 'पाद'शब्द उपसर्जनम्, अन्यपदार्थविशेषणञ्च समुदाय एव, न केवलः पादशब्द इति तात्पर्यम् । 'जनपदतदवध्योश्चे'ति—प्रकरणोपलक्षणमित्याह—अवृद्धादपीति । जनपदत्वादेः प्रत्येकपर्याप्ततया समुदाये स्वाङ्गत्वजनपदत्वयोरभावादिति दिक् ।

* बहुव्रीहेश्चान्तोदात्तात् ४ । १ । ५२　　† जनपदतदवध्योश्च ४ । २ । १२४

एतदपि नास्ति प्रयोजनम् । 'अस्वाङ्गपूर्वपदा'दि‡ति वर्तते,तेन स्वाङ्गं विशेषयिष्यामः—'अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्ताद्बहुव्रीहे'रिति । यच्चाऽत्राऽस्वाङ्गपूर्वपदात्परं स्वाङ्गं न तदन्तो बहुव्रीहिः, यदन्तश्च बहुव्रीहिर्न तदस्वाङ्गपूर्वपदात्परं स्वाङ्गम् ।

ननु च तत्पूर्वस्मिन्योगे बहुव्रीहिविशेषणम् । 'ने'त्याह । पूर्वपदविशेषणं तत् । 'न स्वाङ्गमस्वाङ्गम्, पूर्वं पदं पूर्वपदम्, अस्वाङ्गं पूर्वपदमस्वाङ्गपूर्वपदम्, अस्वाङ्गपूर्वपदा'दिति । यद्येवं पूर्वस्मिन्योगे बहुव्रीहिरविशेषितो भवति । बहुव्रीहिश्च विशेषितः । कथम् ? क्तादिति+ वर्तते, तेन बहुव्रीहिं विशेषयिष्यामः—'अस्वाङ्गात्पूर्वपदात्परं यत्क्तान्तं तदन्ताद्बहुव्रीहे'रिति ।

इदं तर्हि प्रयोजनम्—'बहुव्रीहे'रिति वर्तमाने उपसर्जनग्रहणमुपसर्जनमात्राद्यथा स्यात्—निष्केशी यूका अतिकेशी मालेति ॥ ५४ ॥

प्र०—स्वाङ्गवाची । यस्तु स्वाङ्गवाची पादशब्दः स उपसर्जनं न भवतीति ङीष्न भवति । असति तूपसर्जनग्रहणे पादशब्देन स्वाङ्गवाचिना स्वाङ्गान्तो बहुव्रीहिर्भवतीति ङीष् स्यात् । काशिकोसलीया इति । काशयश्च कोसलाश्चेति द्वन्द्वः । तत्र भवा इति 'अवृद्धादपी'ति वुञ्न भवति, वृद्धलक्षणश्छ एव भवति । न स्वाङ्गमिति । पर्युदासाश्रयणेन तत्सदृशशब्दान्तरमर्थान्तरवाचि गृह्यते इत्यर्थः । निष्केशीति । केशेभ्यो निष्क्रान्तेति प्रादिसमासस्तत्पुरुषः ॥ ५४ ॥

उ०—भाष्ये—अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गमिति । पादशब्दस्य व्यवहितत्वम् । पाणिपादेति समुदायस्य तु स्वाङ्गसमुदायत्वान्न स्वाङ्गत्वमिति भावः । बहुव्रीहिविशेषणमिति । 'अस्वाङ्गपूर्वपदा'दिति बहुव्रीहिरिति भावः । पूर्वपदविशेषणमिति । कर्मधारय इति भावः ।

ननु पर्युदासेन स्वाङ्गभिन्नस्य प्राणिस्थवाचकस्यैव ग्रहणं स्यादत आह—शब्दान्तरमिति । शब्दत्वेनैव सादृश्यं गृह्यत इत्यर्थः । भाष्ये—उपसर्जनमात्रादिति । 'निष्केशी'त्यादौ 'एकविभक्ती'त्युपसर्जनत्वम्, अप्रधानत्वरूपमुपसर्जनत्वञ्चेति भावः । न चैवं 'कल्याणपाणिपादे'त्यत्र दोषः, तत्र स्वाङ्गरूपपादार्थस्य समाहारम्प्रत्यप्रधानत्वेऽपि न तस्य स्त्रीत्वम्, बहुव्रीह्यर्थम्प्रति तु समाहारस्योपसर्जनत्वेऽपि न पादस्य तत्त्वमिति वाच्यम्, यदन्तस्य स्त्रीत्वं तदर्थम्प्रत्युपसर्जनस्वाङ्गान्तस्यैव तस्य प्रत्यासत्त्या ग्रहणात्, अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गमित्यर्थेनैव वारणसम्भवाच्चेति बोध्यम् ॥ ५४ ॥

‡ अस्वाङ्गपूर्वपदाद्वा ४ । १ । ५३
\+ क्तादल्पाख्यायाम् ४ । १ । ५१

१—'स्वाङ्ग'मिति कीलहार्नभाष्ये नास्ति ।
२—'वर्तत उपसर्जमात्राद्यथा स्यात्' पा० ।

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ४ । १ । ५५ ॥

### नासिकादीनां विभाषायां पुच्छाच्च ॥ १ ॥

नासिकादीनां विभाषायां पुच्छाच्चेति वक्तव्यम् । कल्याणपुच्छी कल्याणपुच्छा ।

### कबरमणिविषशरेभ्यो नित्यम् ॥ २ ॥

कबरमणिविषशरेभ्यो नित्यमिति वक्तव्यम् । कबरपुच्छी मणिपुच्छी । विषपुच्छी शरपुच्छी ।

### उपमानात्पक्षाच्च ॥ ३ ॥

उपमानात्पक्षाच्च पुच्छाच्चेति वक्तव्यम् । उलूकपक्षी शाला, उलूकपुच्छी सेनेति ।

### नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन ॥ ४ ॥

नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो* भवति विप्रतिषेधेन । नासिकादिभ्यो विभाषाया अवकाशः—कल्याणनासिकी कल्याणनासिका । सहनञ्विद्यमानपूर्वलक्षणस्य प्रतिषेधस्यावकाशः—समुखा अमुखा विद्यमानमुखेति । इहोभयं प्राप्नोति—सनासिका अनासिका विद्यमाननासिकेति । सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो भवति विप्रतिषेधेन ।

---

प्र०—नासिकोदर । कबरपुच्छीति । 'कबर'शब्देन वर्णविशेषोऽभिधीयते ।

विधिप्रतिषेधयोरिति । विधिरुत्सर्गः, प्रतिषेधस्त्वपवाद इति तुल्यबलत्वाभावादस्या अप्राप्तेः सहादिलक्षणेनैव प्रतिषेधेन भाव्यमित्यर्थः ।

---

उ०—नासिकोदरौष्ठ । अस्वाङ्गपूर्वपदात्परत्वं व्युत्पादयितुमाह-कबरशब्देनेति । न तु केशपाश इति भावः । अपवाद इति । विध्युन्मूलकत्वादिति भावः । अस्या अप्राप्तेरिति । विप्रतिषेधपरिभाषाया इत्यर्थः । सहादिलक्षणेनैवेति । तल्लक्षणेन प्रतिषेधेनैव भाव्यम्, प्रतिषेधत्वात्, न तु विप्रतिषेधस्याऽयं विषय इति भावः । 'अस्या अपि प्राप्ते'रिति पाठे 'नासिकोदरौष्ठे'ति प्राप्तेरपि विप्रतिषेधं विनैव तेन प्रतिषेधः सिद्ध इति भावः ।

---

१—'पुच्छाच्च' इत्यधिकं क्वचित् । तच्चानावश्यकं पूर्ववार्तिकादेवास्यानुवृत्तेः ।

२—'विभाषायां' पा० ।

* सहनञ्विद्यमानपूर्वाच्च ४ । १ । ५७

नैष युक्तो विप्रतिषेधः। अयं विधिः स प्रतिषेधः, विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः॥ अयमपि विधिर्न मृदूनामिव कार्पासानां कृतः प्रतिषेधविषये प्रारभ्यते[1]। स यथैव बह्वज्लक्षणं संयोगोपधलक्षणं च† प्रतिषेधं बाधत एवं सहनञ्विद्यमानपूर्वलक्षणमपि बाधेत।

का तर्हि गतिः? इह तावन्नासिकोदरे'ति बह्वज्लक्षणश्च प्रतिषेधः प्राप्नोति, सहनञ्विद्यमानपूर्वलक्षणश्च। 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते' [ न[2] परान् ] इत्येवमियं विभाषा बह्वज्लक्षणं प्रतिषेधं बाधिष्यते, सहनञ्विद्यमानलक्षणं न बाधिष्यते। 'ओष्ठजङ्घादन्तकर्णशृङ्गाच्चे'ति संयोगोपधलक्षणश्च प्रतिषेधः प्राप्नोति, सहनञ्विद्यमानपूर्वलक्षणश्च। 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्त'इत्येवमियं विभाषा संयोगोपधलक्षणं प्रतिषेधं बाधिष्यते, सहनञ्विद्यमानपूर्वलक्षणं न बाधिष्यते॥५५॥

## दिक्पूर्वपदान्ङीप्॥ ४। १। ६०॥

### दिक्पूर्वपदान्ङीषोऽनुदात्तत्वम्॥ १॥

दिक्पूर्वपदान्ङीषोऽनुदात्तत्वं वक्तव्यम्। प्राङ्मुखी प्रत्यङ्मुखी।

### ङीष्विधाने ह्यन्यत्रापि ङीष्विषयान्ङीप्प्रसङ्गः॥ २॥

ङीष्विधाने हि सत्यन्यत्रापि ङीष्विषयान्ङीप्प्रसज्येत[3]। प्राग्गुल्फा प्रत्यग्ललाटा।

प्र०—न मृदूनामिति। मृदुभिः कार्पासैः कृतः पटो मृदुरेव भवति, अयं तु विधिः प्रतिषेधापवादत्वाद्बलवानित्यर्थः। का तर्हीति। विधेरपि बलवत्त्वे विप्रतिषेधाभाव इति मन्यते। इदानीं यथा विप्रतिषेधोपपत्तिस्तथा दर्शयति—इह तावदिति॥ ५५॥

दिक्पूर्व। अन्यत्रापीति। यत्रापि प्रतिषिद्धो ङीषित्यर्थः। 'असंयोगोपधा'दित्यादिकस्तु

उ०—मृदुभिरिति। भाष्ये करणस्य शेषत्वविवक्षायां षष्ठीति भावः। प्रतिषेधाऽपवादत्वादिति। बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्तेऽस्याऽऽरम्भादिति भावः। विधेरपि बलवत्त्वे विप्रतिषेधोपपत्तौ तदुपपत्त्या आक्षेपो न युक्तोऽत आह-विधेरपीति। सर्वप्रतिषेधकत्वाद्विप्रतिषेधाऽनुपपत्तिरित्यर्थः॥ ५५॥

दिक्पूर्वपदान्ङीप्। ङीष एवेति। 'स्वाङ्गाच्चोपसर्जना'दिति विहितङीष एवेत्यर्थः। वेत्यनुवर्तना-

[1] 'आरभ्यते' पा०। † न क्रोडादिबह्वचः; स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५६; ५४
[2] काचत्कः पाठः।
[3] 'प्राप्नोत' पा०।

ननु चैते विशेषा अनुवर्तेरन्–'असंयोगोपधात्' 'बह्वचो ने'ति* । यद्यप्येते विशेषा अनुवर्तेरन् 'असंयोगोपधाद्बह्वचो ने'त्येवमपि दिक्पूर्वपदान्ङीपा मुक्ते ङीष्प्रसज्येत । नैष दोषः । उक्तमेतत्–'यत्रोत्सर्गापवादं विभाषा तत्रापवादेन मुक्त उत्सर्गो न भवती'ति† ।

अथवा ङीष आदेशो ङीष्करिष्यते । तत्तर्हि ङीषो ग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'अन्यतो ङीष्' [ ४ । १ । ४० ] इति । तद्वै प्रथमनिर्दिष्टं, षष्ठीनिर्दिष्टेन चेहार्थः । 'दिक्पूर्वपदा'दित्येषा पञ्चमी 'ङी'षिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति–'तस्मादित्युत्तरस्य' [ १ । १ । ६७ ] इति । प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः, प्रकृतश्चानुवर्तते ॥ ६० ॥

## जातेरस्त्रीविषयाद्योपधात् ॥ ४ । १ । ६३ ॥

जातेरित्युच्यते- का जातिर्नाम ?

प्र०—प्रतिषेधोऽनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ङीष एव भवति नानेन विधीयमानस्य ङीपो लभ्यत इति भावः । एवमिति । वेत्यनुवर्तनाद्विकल्पेन ङीब्विधीयते पक्षे प्राङ्मुखेत्यपि यथा स्यात् । तत्र ङीपा मुक्ते पक्षे ङीष् प्राप्नोतीत्यर्थः । उक्तमिति । 'पारे मध्ये षष्ठ्या वे'त्यादौ । ततश्च ङीपा मुक्ते टाबेव भविष्यतीति नार्थः सूत्रभङ्गेनेत्यर्थः ।। ६० ॥

जातेरस्त्री । का जातिरिति । लक्षणविप्रतिपत्त्या प्रश्नः । आकृतिग्रहणेति । गृह्यतेऽ-

उ०—दिति । 'अस्वाङ्गपूर्वपदाद्वे'त्यतो मण्डूकप्लुत्येति भावः । तथाऽनुवृत्तौ मानमाह–प्राङ्मुखेत्यस्याऽपीति । अत एवादेशपक्षेण न फलभेदः । भाष्ये–यत्रोत्सर्गापवादमिति । सर्वविशेषाऽनुवृत्तौ हि अयं तस्याऽपवादः, तत्रै तदभावे तत्प्रसक्तावपवादत्वमेव भज्येतेति भावः । सूत्रभङ्गेनेति । दिक्पूर्वपदान्ङीषोऽनुदात्तत्वमित्येवंरूपेणेत्यर्थः ॥ ६० ॥

जातेरस्त्रीविषया । ननु जातेर्लोके तन्त्रे च प्रसिद्धत्वात्प्रश्नाऽनुपपत्तिरित्यत आह—लक्षणेति ।

१—अनुवर्तन्ते पा० ।  २ 'संयोगोपधाद्बह्वच' इति कीलहार्नपाठः ।
* स्वाङ्गाचोपसर्जनादसंयोगोपधात्; न क्रोडादिबह्वचः ४ । १ । ५४; ५६
† २ । २ । ३ सूत्रभाष्ये ।
३—अस्मात्पूर्वं 'ङीषादेशो वा' इति वार्तिकं गुरुप्रसादसंस्करणे दृश्यते ।
४—'ङीषोऽत्र' पा० ।  ५—'षष्ठीमिह' पा० ।

**आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।**
**सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥**

अपर आह—

प्र०—नेनेति ग्रहणमिति करणसामान्ये पदं संस्क्रियते, तत्राकृतिशब्दसंनिधाने स्त्रीत्वप्रतिपत्तिर्बहिरङ्गत्वात्स्त्रीप्रत्ययनिमित्तं न भवति । आकृतिर्ग्रहणं यस्याः सा—आकृतिग्रहणा । अवयवसंनिवेशविशेषव्यङ्ग्येत्यर्थः । एतेन गोत्वादिजातिर्लक्षिता । ब्राह्मणत्वादिस्तु न सङ्गृहीता । ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति तत्सङ्ग्रहायाह—लिङ्गानामिति । सर्वाणि लिङ्गानि भजतीति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वा'द्भजोण्वि'रिति ण्विप्रत्ययः । 'लिङ्गान'मिति कर्मणि षष्ठी । अप्राप्तप्रापणार्थं चेदं वचनमिति तटादेः सर्वलिङ्गत्वेऽप्याकृतिग्रहणत्वाज्जातिरूपोपपत्तिः । उपदेशापेक्षं च 'लिङ्गाना'मिति जातिलक्षणमिति ब्राह्मणत्वादिरेव लक्ष्यते । तेन देवदत्तेत्यसर्वलिङ्गत्वेऽपि जातिलक्षणङीषभावः । सकृदिति । 'अयं गौ'रिति सकृदुपदिष्टा जातिर्निर्ग्रहीतुम्—निश्चेतुं पिण्डान्तरे शक्येत्यर्थः । गोत्रमिति । अपत्यमित्यर्थः । 'चरण'शब्देन शाखाध्यायिनो गृह्यन्ते । गोत्रस्य सर्वलिङ्गत्वात् पृथगुपादानं, 'नाडायनं नापुंसक'मिति दर्शनात् ।

उ०—जननेन प्राप्यत इति लक्षणमेके, जायेते अनया भिन्नेष्वभिन्नाऽभिधानप्रत्ययावितीत्यन्ये, नित्यमेकमनेकाऽनुगतं सामान्यमित्यन्ये,—इत्येवं विप्रतिपत्त्येत्यर्थः ।

ननु करणसाधन'ग्रहण'शब्दस्याऽऽकृतिसमानाऽधिकरणतया स्त्रीत्वेनाकृतिग्रहणीकेति प्राप्नोतीत्यत आह—सामान्येति । स्त्रीप्रत्ययनिमित्तं भवतीति । 'स्त्रीत्व'मिति शेषः । नन्वाकृतिरपि जातिरेवेति 'जातिव्यङ्ग्या जातिः' इत्ययुक्तमत आह—अवयवेति ।

ननु 'भजोण्वि'रित्यस्य सुप्युपपदे विधानात्पदविधितयाऽसामर्थ्ये कथम्प्राप्तिरत आह—गमकत्वादिति । बोधकत्वादित्यर्थः । अबोधकत्वमेव ह्यसामर्थ्ये वृत्त्यप्राप्तौ बीजम् । नन्वेवं तटादेः सर्वलिङ्गत्वाज्जातित्वं न स्यादत आह—अप्राप्तेति । पूर्वेण यत्राऽप्राप्तं जातित्वं तदर्थमिदमित्यर्थः । एतदभावेऽपि पूर्वलक्षणेन सिद्धिरिति भावः । सर्वलिङ्गत्वेऽपीति । न च जात्याश्रयो द्रव्यं सलिङ्गं न जातिरिति कथमेतत्तद्विशेषणमिति वाच्यम्, जातिद्रव्ययोरभेदात् । यद्वा—आकृतिग्रहणार्थकः शब्दः, सकृदाख्यातनिर्ग्राह्याऽसर्वलिङ्गार्थकः शब्दो जातिशब्द इति शब्दलक्षणमेतत् । ध्वनितञ्चेदमाकडारसूत्रे भाष्ये । नन्वेवमपि देवदत्तत्वादेरसर्वलिङ्गत्वाज्जातित्वाऽऽपत्तिरत आह—उपदेशेति । उपदेशसहायप्रत्यक्षेणैकत्र गृहीतब्राह्मणत्वस्य तद्भ्रातृपित्रादिरूपपिण्डान्तरे ग्रहणवन्न देवदत्तत्वं क्वचित्पिण्डान्तरे प्रतीयते । यद्यपि पिण्डान्तरस्याऽपि 'देवदत्त' इति संज्ञा, तथाऽपि वाचकसादृश्यमेव, न त्वर्थसादृश्यं तत्र प्रतीयत इति ॥ 'सकृदाख्याते'त्युभयशेष इत्याह—अयं गौरिति । अनेन चाऽनेकवृत्तित्वमेकत्वञ्चोपलक्ष्यत इति भावः । 'लिङ्गानाञ्च न सर्वभा'गित्यनेन शुक्लादिव्यावृत्तिः, तेषां त्रिलिङ्गत्वात् । ब्राह्मणादिशब्दास्तु न त्रिलिङ्गा इति बोध्यम् ।

अपत्यमित्यर्थ इति । अपत्याऽधिकारादन्यत्र लौकिकगोत्रग्रहणादिति भावः । प्रवराऽध्यायप्रसिद्धगोत्रप्रत्ययान्तमित्यपत्यमित्यस्यार्थः, 'एको गोत्रे' 'अणिञोः' इति सूत्रस्थभाष्यस्वरसात् । 'अवन्ती'त्यादौ तादृशगोत्रत्वारोपाज्जातिकार्यनिर्वाह इत्यन्ये । शाखाऽध्यायिन इति—द्वन्द्वः । तेन 'कठी शाखे'त्यपि सिद्धमिति

**प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।**
**असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥**

**गोत्रं च चरणानि च ।**

**कः पुनरेतयोर्जातिलक्षणयोर्विशेषः ? यथा पूर्वं जातिलक्षणं तथा 'कुमारीभार्य' इति भवितव्यम्‡ । यथोत्तरं तथा 'कुमारभार्य' इति भवितव्यम् ।**

प्र०—प्रादुर्भावेति । सत्त्वस्य-द्रव्यस्य प्रादुर्भावविनाशाभ्यां या आविर्भावतिरोभावौ प्राप्नोति । यावद्द्रव्यभाविनीत्यर्थः । गुणैर्युगपद्द्रव्येण संबध्यते, यथा निर्गुणस्य द्रव्यस्योपलम्भो न भवत्येवं जातिरहितस्यापीत्यर्थः । बह्वर्थामिति । सर्वव्यक्तिव्यापिनीत्यर्थः । अर्थशब्दोऽत्र विषयवाची । चरणानीति चरणशब्दोऽध्ययनवचनः । इह तूपचारादध्येतृषु वर्तते ।

कुमारीभार्य इति । कौमारमयावद्द्रव्यभाव्यप्याकृतिग्रहणत्वाज्जातिरिति 'जातेश्चे'ति पुंवद्भावप्रतिषेधः । उत्तरे तु लक्षणे कौमारं जातिर्न भवति, अयावद्द्रव्यभावित्वात् । पूर्वोक्तमेव लक्षणं भाष्यकारस्याभिमतम्, अपर आहेत्यभिधानादित्याहुः । तथा च युवतितरेति ङ्याप्सूत्रे

उ०—केचित् । कठशाखेत्येव तत्र प्रयोग इत्यपरे । शेषं पूरयति -आविर्भावेत्यादि । नित्यत्वादुत्पत्तिविनाशाऽसम्भवादेवमुक्तम् । नन्वेवमात्मनः प्रादुर्भावविनाशाऽभावेनात्मत्वादेर्जातित्वं न स्यादत आह-यावद्द्रव्येत्यादि । एतदर्थोपलक्षणं तदित्याशयः । गुणैरिति । इदमत्र लक्षणं स्वरूपकथनपरमेव । तेन द्रव्यगतजातिरेवाऽत्र लक्ष्येति सूचितम् । अयावद्द्रव्यभावित्वेन युवत्वादीनां न जातित्वम् । बह्वर्थामित्यनेन 'देवदत्त' इति संज्ञाशब्दे न दोषः । विषयवाचीति । न प्रयोजनादिवाची । जात्याश्रयत्वाद्व्यक्तीनां विषयत्वोक्तिः । समानकालिकबहुव्यक्तिवर्त्तिनीमित्यर्थः । तेन परिमाणभेदेन द्रव्यभेदेऽपि देवदत्तत्वादीनां न जातित्वम् । चरणानीति नपुंसकत्वोपपत्तय आह—चरणशब्द इति । उपचारात् -अध्ययनत्वारोपादित्यर्थः । आकृतिग्रहणत्वादिति । बाल्यगतसूक्ष्माऽवयवसन्निवेशस्य सर्वत्रैकजातीयत्वादिति भावः ।

नन्वेवं सन्देहे कथं साधुत्वव्यवस्थेत्यत आह—पूर्वोक्तमेवेति । वस्तुतस्तु लक्षणद्वयप्रणेतृऋषिद्वयप्रामाण्याज्जातिकार्यस्य 'युव'शब्दादौ विकल्पः । अत एव 'युवजानिः, युवतितरे'त्यादौ द्विविधमप्यनुष्ठानं भगवतः । 'वृद्धा' 'स्थविरे'त्यादौ त्वजादिपाठाट्टाबिति तत्त्वम् ।

परे तु—'आकृतिग्रहणे'त्येव लक्षणम्, 'आकृति'पदेनोपदेश्यमुपलक्ष्यते । तेन 'आकृत्युपदेशद्वारा साक्षाद्वोपदेशेन गम्या जाति' इत्येव लक्षणमुभयसाधारणम् । 'लिङ्गानाञ्च न सर्वभा'गित्यनेन 'विशेषणानाञ्चे'ति सूत्रस्थमाविष्टलिङ्गत्वं जातेरुक्तमनूदितम्, 'उत्तरलक्षणे 'असर्वलिङ्गाम्' इत्यस्य तावन्मात्रफलकत्वात् । 'सकृ'दित्यनेनैकत्वमनेकवृत्तित्वञ्चोक्तम् । उत्तरलक्षणे 'बह्वर्था'मित्यनेन तदेवोक्तम् । तत्र असर्वलिङ्गत्वं प्रायिकम् । भाष्यप्रामाण्याज्जातिशब्दानां त्रिलिङ्गत्वमप्रामाणिकं वा । अत एव भाष्ये—'यथा पूर्वं जातिलक्षणम्' इत्येकवचनमप्रयुक्तम् । वस्तुतस्तु 'भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्न'मिति पस्पशास्थभाष्यबोधितं नित्यत्वे एकत्वे च सत्यनेकाऽनुगतत्वमेव जातिलक्षणं भाष्यसम्मतं ब्राह्मणत्वघटत्वादिसाधारणम् । शुक्लादीनां नित्यत्वैकत्वमते-

‡ जातेश्च ६ । ३ । ४१ पूर्वं जातिलक्षणं भाष्यकारस्याभिमतम् ।

अथाऽस्त्रीविषयादिति कथमिदं विज्ञायते—'समानायामाकृतौ यदस्त्रीविषय'मिति, आहोस्वित्क्वचिद्यदस्त्रीविषयमिति । किं चातः ? यदि विज्ञायते 'समानायामाकृतौ यदस्त्रीविषय'मिति द्रोणी कुटी पात्रीति न सिध्यति । अथ विज्ञायते क्वचिद्यदस्त्रीविषयमिति । माला बलाका अत्रापि प्राप्नोति । अस्तु क्वचिद्यदस्त्रीविषयमिति । कथं माला बलाकेति ? अजादिषु* पाठः करिष्यते ।

अयोपधादिति किमर्थम् ? इभ्या क्षत्रिया ॥ अत्यल्पमिदमुच्यते—'अयोपधा'दिति । 'अकोपधा'दित्यपि वक्तव्यम् । इहापि यथा स्यात्—चटका मूषिकेति ।

यद्यकोपधादित्युच्यते काकी कोकी पिकी शुकीति¹ न सिध्यति । अस्तु तर्ह्ययोपधादित्येव । कथं चटका मूषिकेति ? अजादिषु पाठः कर्तव्यः* ।

**योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः² ॥ १ ॥**

योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानां प्रतिषेधो न भवतीति वक्तव्यम् ।

प्र०—उदाहरणं ददौ, 'तसिलादि'ष्विति प्राप्तस्य पुंवद्भावस्य 'जातेश्चे'ति निषेधात् ॥ अथेति । यदा अस्त्रीविषयोऽस्मिन्नर्थे प्रवृत्तिनिमित्ते इत्यन्यपदार्थः प्रवृत्तिनिमित्तमाश्रीयते तदा 'समानायामाकृतावस्त्रीविषया'दित्येष पक्षो भवति । यदा तु प्रातिपदिकमन्यपदार्थत्वेनाश्रीयते तदा 'यत्र क्वचिदस्त्रीविषया'दित्येष पक्षः संपद्यते । द्रोणीति । द्रोणशब्दः परिमाणविशेषे पुंलिङ्गो गवादन्यान्तु स्त्रीलिङ्गः । मालेति । मलनं माल इति पुंलिङ्गं, क्षेत्रविशेषे नपुंसकम् । स्रजि स्त्रीलिङ्गम् । बलमाकायतीति बलाकशब्दो यौगिकः पुंसि दृश्यते ॥ अस्त्विति । 'अन्य एव क्रियावाची,

उ०—ऽप्यौपाधिकभेदेनाऽनेकत्वव्यवहारादेकत्वव्यवहाराऽभावाच्च न जातित्वम् । अत एव 'जात्याख्याया'मिति सूत्रे 'यत्तद्व्रीहौ व्रीहित्वं गार्ग्ये गार्ग्यत्वं तस्यैकत्वादेकवचन'मिति भाष्ये । अनेन तत्र जातित्वारोपो दर्शितः । 'गोत्रञ्च चरणैः सहे'त्यत्रत्यमपि तयोस्तत्त्वारोपबोधकमेव । डित्थत्वादौ तु न तत्त्वाऽऽरोपः, जातिकार्याऽदर्शनात् । वयस्यपि जातित्वारोपः कार्याऽनुसारेण व्यवस्थित इति तद्विषयरूपद्वयसिद्धिः, 'अवन्ती'त्यादौ तत्र गोत्रत्वारोपवत् । अत एव एतयोर्लक्षणयोर्व्याख्यानलेशोऽपि भगवता नाऽकारीति साम्प्रदायिकाः । गवादन्यान्त्विति । एवञ्च जातौ नित्यस्त्रीत्वान्ङीषनापत्तिरिति भावः । एवं 'कुट'शब्दो गेहे स्त्रीलिङ्गः, घटे पुमान् । 'पात्र'शब्दो भाजनसामान्येऽर्धर्चादित्वादुभयलिङ्गः, भाजनविशेषे स्त्री । बलमाकायतीत्यर्थप्रदर्शनमेतत् । व्युत्पत्तिस्त्वेवम्—आकायतीत्याकः, बलस्याक इति । अन्यथा 'बलाकाय' इति स्यात् । परिहारान्तरमपीति । द्रोणीत्यादावपि तुल्यन्यायाद्दोषापत्तेरिदं चिन्त्यम् । केचित्तु—'समानायामाकृतौ अस्त्रीविषय' इत्यर्थ एवोचितः, अत एव च 'पाककर्णे'ति चरितार्थं, तद्धि स्त्रीविषयार्थम्, अन्यथा तेषामपि यौगिकार्थे

* अजाद्यतष्टाप् ४ । १ । ४

१—'उलूकी' इत्यधिकः पाठः क्वचित् ।

२—'हयगवय' पा० ।

गवय–गवयी । हय–हयी । मुकय-मुकयी । मनुष्य-मनुष्यी[1] । मत्स्य-मत्सी† ॥६३॥

## पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च[2] ॥ ४ । १ । ६४ ॥

**सदच्काण्डप्रान्तशतैकेभ्यः[3] पुष्पात्प्रतिषेधः ॥ १ ॥**

सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेधो वक्तव्यः । सत्पुष्पा प्राक्पुष्पा [4]प्रत्यक्पुष्पा काण्डपुष्पा प्रान्तपुष्पा शतपुष्पा एकपुष्पा ।

**संभस्त्राजिनशणपिण्डेभ्यः फलात्[4] ॥ २ ॥**

संभस्त्राजिनशणपिण्डेभ्यः फलात्प्रतिषेधो वक्तव्यः । सम्–संफला । भस्त्रा–भस्त्राफला । अजिन–अजिनफला । शण–शणफला । पिण्ड–पिंण्डफला ।

**[ श्वेताच्च[5] ॥ ]**

श्वेताच्चेति वक्तव्यम् । श्वेतफला ।

**त्रेश्च ॥ ३ ॥**

त्रेश्च प्रतिषेधो वक्तव्यः । त्रिफला[6] ।

**मूलान्नञः ॥ ४ ॥**

मूलान्नञः प्रतिषेधो वक्तव्यः । अमूला ॥ ६४ ॥

---

प्र०—जातिशब्दस्त्वन्य एवे'ति परिहारान्तरमप्यत्र संभवति । गवयीति । गौरादिष्विदानीन्तनैर्गवयादयः प्रक्षिप्ता इति वार्तिकारम्भाद्विजायते ॥ ६३ ॥

पाककर्ण । सदच्काण्डेति । अत्राञ्चतिः क्विन्नन्तो गृह्यते । अयमप्यजादिषु पाठ इदानीन्तनः । त्रिफलेति । त्रयाणां फलानां समाहार इति द्विगुः । ततो द्विगुलक्षणान्ङीपः परत्वान्ङीष् प्राप्तो निषिध्यते । तन्निषेधसामर्थ्याच्च ङीबपि न भवति । तयोरत्र विशेषाभावात् ॥ ६४ ॥

---

उ०—लिङ्गान्तरसम्भवेनाऽस्त्रीविषयत्वात्पूर्वेणैव सिद्धे किं तेन ? द्रोणीत्यादयो गौरादिषु पाठ्या इत्याहुः । वस्तुतः—क्वचिद्विध्यैवाश्रित्य 'पाककर्ण' स्यपि न कार्यमिति भाष्यतात्पर्यम् ॥ ६३ ॥

पाककर्ण । अत्राऽञ्चतिरिति । 'सत्प्राक्काण्डे'ति पाठस्त्वयुक्त इति भावः । भस्त्राफलेति । जातिशब्दोऽयं, न संज्ञेति ह्रस्वो न कृतः । निषेधसामर्थ्यं दर्शयति—तयोरत्रेति । द्विगुसमासस्याऽन्तोदात्तत्वेन ङीप्युदात्तनिवृत्तिस्वरप्राप्तेः, ङीषि प्रत्ययस्वरप्राप्तेश्चेति भावः ॥ ६४ ॥

---

१—'मनुषी' पा० । † सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ६ । ४ । १४६

२—'वाल' कीलहार्नपाठः । ३—'सदक्काण्ड' पा० ।

४—'फलात् प्रतिषेधः' इति पाठस्त्वनावश्यको गतार्थत्वादनुवृत्तेः । ५—इदं क्वाचित्कम् ।

६—'पथ्याविभीतधात्रीणां फलैः स्यात् त्रिफला समैः ।' इति भावप्रकाशः । 'हरड़ बहेड़ा आमला' इत्येतेष्वेव त्रिषु फलेषु रूढोऽयं शब्द आयुर्वेदशास्त्रे पङ्कजवत् ।

## इतो मनुष्यजातेः ॥ ४ । १ । ६५ ॥

जातेरिति‡ वर्तमाने पुनर्जातिग्रहणं किमर्थम् ? अयोपधादिति वर्तते, योपधादपि यथा स्यात्—औदमेयी§ ।

**इतो मनुष्यजातेरिञ उपसंख्यानम् ॥ १ ॥**

इतो मनुष्यजातेरिञ उपसङ्ख्यानं कर्तव्यम् । सौतङ्गमी मौनिचिती* ॥ ६५ ॥

## ऊङुतः ॥ ४ । १ । ६६ ॥

किमर्थो ङकारः ? विशेषणार्थः । क्व विशेषणार्थेनार्थः ? 'नोङ्धात्वोः' [ ६ । १ । १७५ ] इति । 'नोधात्वो'रित्युच्यमाने यवाग्वा यवाग्वै इत्यत्रापि प्रसज्येत ।

अथ दीर्घोच्चारणं किमर्थं न 'उङुत' इत्येवोच्येत ? का रूपसिद्धिः—ब्रह्मबन्धूः धीवबन्धूरिति ? सवर्णदीर्घत्वेन सिद्धम्† ।

न सिध्यति । 'गोस्त्रियोरुपसर्जनस्य' [ १ । २ । ४८ ] इति ह्रस्वत्वं प्रसज्येत× । इह च ब्रह्मबन्धूछत्रम् ब्रह्मबन्धूच्छत्रम् 'पत्वतुकोरसिद्धः' [ ६ । १ । ८६ ]

प्र०—इतो मनुष्य । औदमेयीति उदमेयस्यापत्यमित इञ् । सौतङ्गमीति । सुतङ्गमेन निर्वृत्तेति—वुञ्छणादिसूत्रेण इञ् ॥ ६५ ॥

ऊङुतः । यवाग्वेति । वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषा नोपतिष्ठत इति भावः । गोस्त्रियोरिति । एकादेशस्यान्तवद्भावादुपसर्जनान्तं प्रातिपदिकं स्त्रीप्रत्ययान्तं भवतीति भावः । नद्युत

उ०—इतो मनुष्य । औदमेयिशब्दस्य मनुष्यजातिवाचित्वं दर्शयति उदमेयस्येति । सुतङ्गमेनेति । एवञ्चोपसंख्यानमजात्यर्थमिति भावः ॥ ६५ ॥

ऊङुतः । वर्णग्रहण इति । प्रत्ययग्रहणपरिभाषाऽप्येवमिति बोध्यम् । ननूपसर्जनस्त्रीप्रत्ययान्तान्तप्रातिपदिकाऽभावात्कथं ह्रस्वत्वमत आह—एकादेशस्येति । उपसर्जनेन, स्त्रीप्रत्ययेन च प्रातिपदिकं विशेष्यत इति भावः । तत्र एकादेशस्याऽन्तवद्भावेनोपसर्जनान्तं प्रातिपदिकम्, आदिवद्भावाच्च स्त्रीप्रत्ययान्तमिति बोध्यम् । नद्युत्तरपदादित्यर्थेऽप्राप्तेराह—नद्यन्त इति । तत्सामर्थ्यादिति । प्रश्लेषेण उकारद्वयविधानात्क-

‡ जातेरस्त्रीविषयादयोपधात् ४ । १ । ६३

§ अत इञ् ४ । १ । ९५

* वुञ्छण्कठजिल……कुमुदादिभ्यः ४ । २ । ८०

१—'वीरबन्धू' पा० ।

† अकः सवर्णे दीर्घः ६ । १ । १०१ × अन्तादिवच्च ६ । १ । ८५

इत्येकादेशस्यासिद्धत्वान्नित्यस्तुक् प्रसज्येत+ । इह च ब्रह्मबन्धूः धीवबन्धूरिति 'नंद्यृतश्च' [ ५ । ४ । १५३ ] इति कप्प्रसज्येत ।

नैष दोषः । 'यत्तावदुच्यते ब्रह्मबन्धूः धीवबन्धूरिति 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वत्वं प्रसज्येतेति, उभयत आश्रये नान्तादिवत् । यदप्युच्यत 'इह च ब्रह्मबन्धूछत्रम् ब्रह्मबन्धूच्छत्रम् 'षत्वतुकोरसिद्ध'इत्येकादेशस्यासिद्धत्वान्नित्यस्तुक्प्रसज्येते'ति, पदान्तपदाद्योरेकादेशोऽसिद्धो न चैष पदान्तपदाद्योरेकादेशः । यदप्युच्यत 'इह च ब्रह्मबन्धूः धीवबन्धूरिति 'नंद्यृतश्चे'ति कप्प्रसज्येते'ति, नद्यन्तानां यो बहुव्रीहिरित्येवं तत्, न चैष नद्यन्तानां बहुव्रीहिः ।

शेषलक्षणस्तर्हि कप्प्राप्नोति* । तस्माद्दीर्घोच्चारणं कर्तव्यम् ।

ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् ॥ १ ॥

ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम् । अलाबूः कर्कन्धूः ।

अप्राणिजातेरिति किमर्थम् ? कृकवाकुः ।

अरज्ज्वादीनामिति किमर्थम् ? रज्जुः हनुः ॥ ६६ ॥

प्र०—इति । नद्यन्तो बहुव्रीहिर्भवतीति भावः । दीर्घोच्चारणे तु तत्सामर्थ्यात्कब्ह्रस्वौ न प्रवर्तेते । उभयत इति । एकादेशस्यान्तवत्त्वेन प्रातिपदिकसंज्ञा संपाद्या, अन्यथाऽप्रत्यय इति प्रतिषेधप्रसङ्गः; आदिवत्त्वेन च स्त्रीप्रत्ययत्वं साध्यमित्येकोऽवयवो युगपद्द्वयोरित्येषा बुद्धिर्विरोधान्न प्रवर्तते । स्त्रीप्रत्ययविशेषणं चोपसर्जनम्, न चात्र स्त्रीप्रत्ययस्योपसर्जनत्वमिति ह्रस्वाऽप्रसङ्गः । पदान्तेति । अधीत्येत्यादावेवेत्यर्थः । तस्मादिति । उकारद्वयं दीर्घेण निर्दिष्टं. तत्र द्वितीय उकारः परत्वाद्बाधकस्य शेषलक्षणस्य कपो बाधनार्थ इति भावः । अबालूरिति । ऊङि सति 'नोङ्धात्वो'रिति विभक्तेरुदात्तत्वनिषेधो भवति,—अलाब्वेति ॥ ६६ ॥

उ०—ङ्निवृत्तिरिति भावः । स्वयं परिहारान्तरमाह-स्त्रीप्रत्ययविशेषणञ्चेति । स्त्रीप्रत्ययान्तविशेषणमित्यर्थः । भाष्ये—शेषलक्षणस्तर्हीति । 'ऊङः प्रागेवे'ति शेषः । ननु दीर्घोच्चारणेऽपि परत्वात्कप्प्राप्नोति, कब्भावे ऊङ् साऽवकाशोऽत आह—उकारद्वयमिति । परत्वादिति । अन्तरङ्गत्वादित्यर्थः । 'श्वश्रू'शब्दस्तु 'श्वशुरः श्वश्र्वे'ति निर्देशसिद्धोऽव्युत्पन्नं प्रातिपदिकमिति भावः । ध्वनितञ्चेदं 'ङ्याप्'सूत्रे भाष्ये । ननु 'आलबू'-शब्दस्य स्वत ऊकारान्तत्वात्किम् 'ऊङ्'विधानेनेत्यत आह—ऊङि सतीति । अत्र वार्तिके 'उत' इत्यस्याऽसम्बन्ध इति भावः ॥ ६६ ॥

---

+ छे च ६ । १ । ७३

२—'आश्रये' पा० ।

१—'नद्यृतः कन्निति' पा० ।

* शेषाद्विभाषा ५ । ४ । १५४

## संहितशफलक्षणवामादेश्च ॥ ४ । १ । ७० ॥

### [ संहितसहाभ्यां च ॥ ]

'सहितसहाभ्यां चे'ति वक्तव्यम् । सहितोरूः सहोरूः ॥ ७० ॥

## कद्रुकमण्डल्वोश्छन्दसि ॥ ४ । १ । ७१ ॥

अत्यल्पमिदमुच्यते कद्रुकमण्डल्वोरिति । कद्रुकमण्डलुगुग्गुलुमधुजतुपतयालू-नामिति वक्तव्यम् । कद्रूः कमण्डलूः गुग्गुलूः मधूः जतूः पतयालूः ॥ ७१ ॥

## यङश्चाप् ॥ ४ । १ । ७४ ॥

### षाच्च यञश्चाप् ॥ १ ॥

षाच्च यञश्चाब्वक्तव्यः । शार्कराक्ष्या पौतिमाष्या† ।

तत्रायमप्यर्थो गौकक्ष्यशब्दः क्रौड्यादिषु‡ पठ्यते स न पठितव्यो भवति । यदि न पठ्यते 'गौकक्षीपुत्र' इति संप्रसारणं* न प्राप्नोति । इष्टमेवैतत्सङ्गृहीतम् । गौकक्ष्यापुत्र इत्येव भवितव्यम् । एवं हि सौनागाः पठन्ति—'ष्यङः संप्रसारणे गौक-क्ष्यायाः प्रतिषेध' इति ॥ ७४ ॥

प्र०—संहित । सहितोरूरिति । नन्वेकदेशविकृतस्यानन्यत्वात्संहितशब्दग्रहणेन सहितशब्दस्य सिद्धं ग्रहणम् । एवं तर्हि विद्यमानं हितमस्य सहित इति यदा व्युत्पत्तिस्तदर्थं वार्त्तिकम् । सहोरू-रिति । सहेते इति सहौ ऊरू यस्या इति व्युत्पत्तिः । अथवा विद्यमानावूरू यस्याः सा सहोरूरित्यूर्वे-तिशयप्रतिपादनार्थः प्रयोगः ॥ ७० ॥

कद्रु । गुग्गुलुमधुजतूनां छन्दसि लिङ्गव्यत्ययेन स्त्रीत्वम् । पतयालुशब्दः 'स्पृहिगृही'-त्यालुजन्तः ॥ ७१ ॥

यङश्चाप् । शार्कराक्ष्येति । गर्गादियञन्ता एते ॥ ७४ ॥

उ०—संहितशफ । नन्वेकदेशेति । 'समो वा हिततततयो'रिति व्युत्पन्नत्वादिति भावः । ननु सर्वस्या अप्यूरुमत्त्वेनैतत्प्रयोगानर्थक्यमत आह—सहेते इति । 'रतिश्रम'मिति शेषः ॥ ७० ॥

कद्रुकम । ननु गुग्गुलुमधुजतूनामस्त्रीत्वात्कथं स्त्रियामूङ्विधानमत आह—गुग्गुल्विति ॥ ७१ ॥

१—क्वाचित्कः पाठः ।
† गर्गादिभ्यो यञ् ४ । १ । १०५
‡ क्रौड्यादिभ्यश्च ४ । १ । ८०
* ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ६ । १ । १३

## आवट्याच्च ॥ ४ । १ । ७५

### अन उपधालोपिन ऊधसो ङीष्पूर्वविप्रतिषिद्धम् ॥ १ ॥

'अन उपधालोपिनोऽन्यतरस्याम्' [ ४ । १ । २८ ] इत्येतस्मादूधसो ङीष्भवति× पूर्वविप्रतिषेधेन । 'अन उपधालोपिनोऽन्यतरस्या'मित्येतस्यावकाशः—बहुराज्ञी बहुतक्ष्णी । ऊधसो ङीष्भवतीत्यस्यावकाशः—विभाषा ङीप्, यदा न ङीप्सोऽवकाशः । ङीष्प्रसङ्ग उभयं प्राप्नोति । ऊधसो ङीष्भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । 'अन उपधालोपिनोऽन्यतरस्या'मित्यत्र 'ऊधसो ङीष्भवती'त्येदनुवर्तिष्यते ।

### आवट्याद्यञः ष्फश्चापः ॥ २ ॥

आवट्याद्यञः ष्फश्चापो भवति पूर्वविप्रतिषेधेन+ । आवट्याद्यञश्चापोऽवकाशः उदीचाम्—आवट्या । ष्फस्यावकाशोऽन्यानि यञन्तानि—गार्ग्यायणी वात्स्यायनी । आवट्यशब्दात्प्राचामुभयं प्राप्नोति—आवट्यायनी, ष्फो भवति पूर्वविप्रतिषेधेन ।

आवट्यग्रहणेन नार्थः । 'यञः ष्फश्चाप' इत्येव । इदमपि सिद्धं भवति—शार्कराक्ष्यायणी पौतिमाष्यायणी* ।

यञ्ग्रहणेनापि नार्थः । 'ष्फश्चाप' इत्येव । गौकक्ष्यशब्दः क्रौड्यादिषु पठ्यते‡, इदमपि सिद्धं भवति—गौकक्ष्यायणी ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । एवं वक्ष्यामि—'प्राचां ष्फ तद्धितः सर्वत्र'† । क्व सर्वत्र ? यत्र ष्फश्चान्यश्च प्राप्नोति, ष्फ एव तत्र भवतीति । ततो लोहितादिकत-

प्र०—आवट्याच्च । अन इति । यद्यपीदमन्यत्र वक्तव्यं तथाप्यन्यार्थं पूर्वविप्रतिषेधप्रतिपादनप्रसङ्गेनात्रोक्तम् । गौकक्ष्यायणीति । गोकक्ष्यस्यापत्यं गोत्रं स्त्री । गर्गादित्वाद्यञ् । ततः ष्यङ् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद्यञन्तात्ष्फो विधीयमानः ष्यङन्तादपि भवतीति

उ० – आवट्याच्च । प्रक्रियाश्रयेणेति । वस्तुतः स्त्रीप्रत्ययविधौ नास्याः प्रवृत्तिः, फलाऽभावादित्यनेन ध्वनितम् । ष्फविधावपि भाष्ये ध्वनितमेतत् । भाष्याशयस्तु—'क्रौड्यादिभ्य' इति तादर्थ्ये चतुर्थी, क्रौड्यादिसिद्धये प्रत्ययस्य ष्यङादेश इत्यर्थः । एवञ्च स्थानिवत्त्वेन यञन्तत्वात्ष्फो भवतीति ॥ यद्वा—'भस्याऽढे

× बहुव्रीहेरूधसो ङीष् ४ । १ । २५
+ प्राचां ष्फ तद्धितः ४ । १ । १७
* ४ । १ । ७४ वा० १
‡ क्रौड्यादिभ्यश्च ४ । १ । ८०
† सर्वत्र लोहितादिकतन्तेभ्यः ४ । १ । १८

न्तेभ्यः सर्वत्र । क्व सर्वत्र ? प्राचां चोदीचां च ॥ ७५ ॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्गोत्रे ॥ ४ । १ । ७८ ॥

इह कस्मान्न भवति–दाक्षी प्लाक्षीति‡ । आतिशायिकेनायं तमशब्देन निर्देशः क्रियते, स च त्रिप्रभृतिषु वर्तते, त्रिप्रभृतीनामभावात् ॥ यद्येवम्—

प्रकर्षे चेत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुरु ।
आम्विधिः केन ते न स्यात्प्रकर्षे यद्ययं तमः ॥

'प्रकर्षे चेत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुरु'इत्युच्यते, आम्विधिः केन तव न स्यात् ? 'अव्ययघा'दिति+ प्राप्नोति । 'प्रकर्षे यद्ययं तमः' । यद्ययं तमः प्रकर्षे वर्तते ।

उद्गतस्य प्रकर्षोऽयं गतशब्दोऽत्र लुप्यते ।

उद्गतस्यायं प्रकर्षः । गतशब्दस्याऽत्र लोपो भवति ।

प्र०—प्रक्रियाश्रयेणेदमुक्तम् ॥ ७५ ॥

अणिञोर । दाक्षीति । दक्षस्यापत्यं गोत्रं स्त्रीति 'अत इञ्' । उत्तमशब्दमव्युत्पन्नमन्त्यमात्रवचनमाश्रित्य प्रश्नः । स चेति । यत्रैकोऽनुद्गतः—प्रथमोच्चारितत्वात्, त्रयस्तूद्गताः—ऊर्ध्वोच्चारितास्तत्रोत्तमशब्दः प्रयुज्यते । एवं च चतुष्प्रभृतिषु प्रयुज्यते । उद्गतापेक्षया तु त्रिप्रभृतिष्वित्युक्तम् ।

प्रकर्षे चेति । चण चेदर्थे वर्तते । कंचित्तु 'प्रकर्षे चे'दिति पाठः । यदि प्रकर्षप्रत्ययं कृत्वा दाक्ष्यां गुरूपोत्तमं न भवतीत्युच्यते तत उच्छब्दात्तमपि सति 'किमेत्तिङव्ययघा'दित्याम्प्रत्ययप्रसङ्गादुत्तमामिति प्राप्नोति । उद्गतस्येति । उच्छब्दोऽत्र ससाधनक्रियावचनः, तत्र क्रियाप्रकर्षद्वारको द्रव्यप्रकर्ष इत्यद्रव्यप्रकर्ष इतिवचनादाम्न भवतीत्यर्थः । गतशब्दोत्रेति । उच्छब्देन

उ०—तद्धिते' 'सिद्धश्च प्रत्ययविधा'विति पुंवद्रूपाऽतिदेशेन यञन्तत्वात्ष्फ इति (–भाष्याशयः) ॥७५॥

अणिञोर । अन्त्यमात्रेति । तेनाऽत्रोपान्त्यस्य गुरुत्वात्ष्यङः प्रसङ्ग इति भावः । ननु 'त्रिप्रभृतिषु' इत्युक्तेर्वाराहिशब्देऽच्त्रयसद्भावाद्वाराह्यायां ष्यङ् न सिध्यतीति वक्ष्यमाणं चोद्यमनुपपन्नमत आह–यत्रेति । उच्छब्द उद्गतार्थे वर्त्तते । ऊर्ध्वमुच्चरितम्—उद्गतम् । उर्ध्वं च प्रथमसापेक्षं, तदाह–प्रथमेति । उद्गतस्यानुद्गताऽपेक्षत्वाद्बहूनामेकस्य प्रकर्षे तपमो विधानाच्च बहुषूद्गतेष्वन्त्ये 'उत्तम'शब्दो वर्त्तत इति भावः ।

‡ अत इञ्; इतो मनुष्यजातेः ४ । १ । ६५; ६५

१—'एते श्लोका भाष्यकृत एव, न वार्तिककृतः, सम्पुटीकरणाऽभावा'दिति नागेशः ।

+ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५ । ४ । ११

**नाव्ययार्थप्रकर्षोऽस्ति धात्वर्थोऽत्र प्रकृष्यते ॥**

नायमव्ययार्थस्य प्रकर्षः । कस्य तर्हि ? धात्वर्थस्य ।

**उद्गतोऽपेक्षते किंचित्त्रयाणां द्वौ किलोद्गतौ ।**

अनुद्गतमपेक्ष्योद्गत इत्येतद्भवति । 'त्रयाणां द्वौ किलोद्गतौ' । त्रयाणां किल द्वावुद्गतौ भवतः ।

**चतुष्प्रभृतिकर्तव्यो वाराह्यायां न सिध्यति ॥**

चतुष्प्रभृतिषु ष्यङ्कर्तव्यः[1], 'वाराह्यायां न सिध्यति' । वाराह्यायां न प्राप्नोति । किं कारणम् ? चतुष्प्रभृतीनामभावात् ।

**भिद्यतेऽस्य स्वरस्तेन विधिश्चामो न लक्ष्यते ।**

भिद्यते खल्वस्य स्वरस्तेनातिशायनिकेन[2] तमशब्देनोत्तमस्य* । 'विधिश्चामो न लक्ष्यते' । विधिश्चामो न क्वचिदपि लक्ष्यते ।

प्र०—गतार्थस्याभिधानादप्रयोग एव गतशब्दस्य लोपः । धात्वर्थोऽत्रेति । धातुशब्देन धात्वर्थोऽत्र क्रियाभिधीयते, सोऽर्थः प्रयोजनं विषयो वा यस्य स धात्वर्थः—साधनाधारः पदार्थः, स प्रकृष्यते क्रियाप्रकर्षद्वारेणेत्यर्थः ॥ त्रयाणामिति । यत्र त्रयो वर्णास्तत्राद्योऽनुद्गतो द्वयोश्चैकस्य प्रकर्षे तरपा तमपो बाधनादुत्तमशब्दो नास्तीति वाराह्येति ष्यङ् न प्राप्नोति । यत्र तु चतुष्प्रभृतयो वर्णास्तत्रैव ष्यङ् स्यादित्यर्थः । भिद्यत इति । तमपः पित्त्वादनुदात्तत्वादुत्तमशब्द आद्युदात्तः प्राप्नोति, अन्तोदात्तश्चेष्यते । एतच्चोञ्छादिषु—'उत्तमशश्वत्तमौ सर्वत्रे'ति पाठानपेक्षयोक्तम् । न च क्रियाप्रकर्षेऽपि आमन्तस्य क्वचित्प्रयोगो दृश्यते इत्यनभिधानादुच्छब्दात्तमबेव नास्ति ।

उ०—यदि प्रकर्षेति । एतेनाऽव्युत्पन्नोत्तमशब्दाश्रयणे नाऽयं दोष इति ध्वनितम् । ससाधनेति । क्रियाविशिष्टसाधनवचन इत्यर्थः । क्रियाप्रकर्षद्वारक इति । एवञ्चाऽद्रव्यप्रकर्ष इति निषेध इति भावः ।

ननु धात्वर्थप्रकर्षेऽपि 'अद्रव्यप्रकर्षे' इत्याम् 'पचतितरा'मित्यत्रैव स्यादत आह—धातुशब्देनेति । भाष्ये—नाऽव्ययार्थेत्यस्य–नाऽसत्त्वभूतार्थस्येत्यर्थः । प्रयोजनमिति । क्रियार्थं साधनोपादानात्क्रिया तत्प्रयोजनम् । विषय इति । उद्देश्य इत्यर्थः । साधननिर्वर्त्यत्वात्क्रियायाः साधनानां सा उद्देश्यतया 'विषय' इत्युच्यते । साधनाधर इति । शक्त्याधारो द्रव्यमित्यर्थः ॥ तमप्प्रत्ययपक्षे 'आम्' रूपदोषोद्धारेऽपि लक्ष्याऽसिद्धिमाह–भाष्ये—उद्गतोऽपेक्षते इति । त्रयाणां द्वौ किलोगतावित्येतत्, 'चतुष्प्रभृतिकर्तव्य' इत्येतच्च शेषपूरणेन योजयति—यत्रेति । भाष्ये–व्युत्पत्तिपक्षे दूषणान्तरमप्याह–भिद्यतेऽस्येति । दूषणान्तरमाह—विधिश्चाम इति । तद्व्याचष्टे–न च क्रियेति । यद्ययं तमप्स्यात्तदा क्रियाप्रकर्षविवक्षायां स्यात्, न

१—'वक्तव्यः' पा० । २—'शायिकेन' पा० । * अनुदात्तौ सुप्पितौ ३ । १ । ४

शब्दान्तरमिदं विद्याद् दृष्टमभ्यन्तरं त्रिषु ॥

एवं तर्ह्यन्योऽयमातिशायनिकेन समानार्थस्तमस्त्रिप्रभृतिषु वर्तते ।

किं पुनरयमणिञोरादेश आहोस्विदणिञ्भ्यां परः ? कश्चात्र विशेषः ?

**ष्यङ्यनादेशे यलोपवचनम् ॥ १ ॥**

ष्यङ्यनादेशे यलोपो वक्तव्यः । औदमेघ्यायाश्छात्रा औदमेघाः† ।

**द्विरणिविधिः ॥ २ ॥**

द्विश्चाणिवधेयः । औदमेघ्यायाश्छात्रा औदमेघाः । औदमेघ्यानां सङ्घ औदमेघः । इञ‡ इत्यण्न प्राप्नोति ॥ अस्तु तर्हि आदेशः ।

प्र०—अव्युत्पन्न एव तूत्तमशब्दः स्वभावात्त्रिप्रभृतीनामन्त्यमाहेत्याह—शब्दान्तरमिति । दृष्टमिति । त्रिग्रहणं बहुत्वोपलक्षणार्थम् । तेन त्रिप्रभृतिषु यदभ्यन्तरमन्तर्भूतं तत्र दृष्टमित्यर्थः । आतिशायनिकेनेति । आतिशायनिकश्चतुष्प्रभृतीनामन्त्यमाह । अव्युत्पन्नस्तु त्रिप्रभृतीनामित्यन्त्यत्वमात्रेण सदृशार्थत्वमिति भावः । तम इति । तमान्तोऽव्युत्पन्नशब्द इत्यर्थः ।

किं पुनरिति । प्रत्ययविधावपि 'गापोष्टक्' व्रीहिशाल्योर्ढ'गित्यादौ षष्ठी दृश्यत इति सन्देहात्प्रश्नः । औदमेघ्याया इति । उदमेघस्यापत्यं गोत्रं स्त्री, अत इञ् । यद्यत्र इञन्तात्परः स्त्रियां ष्यङ् विधीयते तदाऽऽपत्ययकारो न भवतीति यलोपो न प्राप्नोति । आदेशपक्षे तु स्थानिवद्भावात्ष्यङ आपत्यत्वमिति यलोपः सिध्यति ॥ द्विरिति । 'इञश्चे'त्यस्यानन्तरं 'ष्यङश्चे'ति

उ०—च तत्राऽपि स दृश्यतेऽतस्तमनेवाऽत्र नाऽस्तीति भावः । 'क्रियाप्रकर्षेऽप्यामन्तस्य न क्वचित्प्रयोगो दृश्यत' इत्यन्वयः ।

अभ्यन्तरमित्यन्त्यमेव विवक्षितमित्याह—अन्त्यभूतमिति । 'अन्तर्भूत'मिति पाठेऽन्त्यमिति शेषः । नन्वव्युत्पन्नत्वे तमस्यानर्थक्यात्—'तमस्त्रिप्रभृतिषु वर्त्तते' इत्ययुक्तमत आह—तमान्त इति । त्रिप्रभृतिषु वर्तते इति भाष्यस्य तेषु मध्ये यदन्त्यन्तत्र वर्त्तत इत्यर्थः ॥ एते श्लोका भाष्यकृत एव, न वार्तिककृतः, सम्पुटीकरणाऽभावात् ।

ननु षष्ठीनिर्देशेनादेशत्वनिश्चयात्प्रश्नाऽनुपपत्तिरत आह—प्रत्ययविधावपीति । स्थानिवद्भावादिति । अपत्ये विधानेनाऽपत्यार्थकत्वमपि शास्त्रीयमेवेति भावः । वस्तुतः 'स्थानिवद्भावा'दित्यस्य स्थानिसदृशत्वादित्यर्थः । स्थान्यर्थाऽभिधानसमर्थस्यैवादेशत्वात् । आदेशत्वेऽपत्यार्थकत्वरूपमापत्यत्वमिति भावः । द्विरणो विधेयतामुपपादयति—इञश्चेतीति । तथैवेति । इञः ष्यङश्चेतीत्यर्थः । ननु 'सङ्घाङ्के'तिसूत्रे ऋषिप्रजनस्यैव गोत्रस्य ग्रहणमिति' स्त्रीपुंसाभ्या'मिति सूत्रे भाष्यादिषु प्रसिद्धं, तदस्याऽनृषि-

† अत इञ्; अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ४ । १ । ७८; यस्येति च ६ । ४ । १४८; इञश्च ४ । २ । ११२; आपत्यस्य च तद्धितेऽनाति ६ । ४ । १५१

‡ इञश्च ४ । २ । ११२; सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ४ । ३ । १२७

## आदेशेऽन्लोपवचनम् ॥ ३ ॥

यद्यादेशोऽनो[1] लोपो वक्तव्यः । औडुलोम्या शारलोम्येति×। 'ये चाभावकर्मणोः' [ ६ । ४ । १६८ ] इति प्रकृतिभावः प्रसज्येत ।

## न वा ष्यङो लोपनिमित्तत्वात् ॥ ४ ॥

न वैष दोषः । किं कारणम् ? 'ष्यङो लोपनिमित्तत्वात्' । लोपनिमित्तः ष्यङ् । न चाऽकृते लोपे ष्यङ् प्राप्नोति । किं कारणम् ? 'गुरूपोत्तमयो'रित्युच्यते, न चाऽकृते लोपे गुरूपोत्तमता[3] भवति ।

अथवा पुनरस्तु परः । ननु चोक्तं 'ष्यङ्यनादेशे यलोपवचनम्, 'द्विरणिविधि'-रिति । नैष दोषः । यत्तावदुच्यते 'यलोवचन'मिति, अदोष एषः । किं कारणम् ? पुंवद्भावाद्यजादौ तद्धिते । यजादौ तद्धिते पुंवद्भावो भविष्यति, 'भस्याढे तद्धिते' पुंवद्भवतीति* ॥ अयं तर्हि दोषो 'द्विरणिविधि'रिति । नैष दोषः । सिद्धश्च प्रत्ययविधौ । स च सिद्धः प्रत्ययविधौ ।

प्र०—वक्तव्यम् । तेनेञः परो यः ष्यङ् तदन्तादणभवतीत्ययमर्थो भवति । 'सङ्घाङ्के'त्यत्रापि तथैव वक्तव्यम् । आदेशपक्षे तु स्थानिवद्भावात्सिध्यति । औडुलोम्येति । उडुलोम्नोऽपत्यं गोत्रं स्त्री । बाह्वादिषु लोमन्शब्दस्य पाठात्केवलस्यापत्येन योगाभावात्सामर्थ्यात्तदन्तग्रहणादिञ्प्रत्ययः । तत्र यदि तदादेशः ष्यङ् क्रियेत तदा 'ये चाभावकर्मणो'रिति प्रकृतिभावाट्टिलोपो न प्राप्नोति, प्रत्ययपक्षे त्विञा व्यवधानात्प्रकृतिभावाभावः ॥ न वेति—आनुपूर्व्याश्रयेण दोषं परिहरति । सिद्धश्चेति । यद्यपि लिङ्गविशिष्टपरिभाषाश्रयेणेञन्तात्प्रातिपदिकादण् विधीयमानः ष्यङन्तादपि

उ०—स्यात्कथं तत्प्राप्तिः, ऋषित्वे तु कथं ष्यङः प्राप्तिरिति चेन्न, 'संघाङ्के'ति सूत्रे ऋषिप्रजनस्यैव ग्रहणमिति नियमोऽञ्प्रत्ययमात्रविषय इति न दोषः, ऋषिप्रजनत्वेऽप्यनृषित्वे बाधकाऽभावाच्च । स्थानिवद्भावादिति । अण्त्वमिञ्वद्भाऽतिदेशादिति भावः ॥ सामर्थ्यादिति । अन्यथा प्रत्ययविधौ निषेधात्तदन्तान्न स्यादिति भावः । टिलोपः—'नस्तद्धिते' इति विहितः । इञा व्यवधानादिति । 'यस्येति'लोपेऽपि स्थानिवत्त्वाद्व्यवधानमेवेति भावः ।

भाष्ये—लोपनिमित्त इति—बहुव्रीहिः । इञाद्यन्तस्य हि गुरूपोत्तमत्वमपेक्षितं, तच्च न लोपं विनेति भावः । न्याय्यत्वादिति । पुंवत्त्वेन ष्यङो निवृत्तौ लिङ्गविशिष्टपरिभाषाया अनुपस्थानादिति भावः ।

१—'आदेशे नलोपवचन'मिति कीलहार्नपाठः ।   २—'देशो नलोप' पा० ।

× बाह्वादिभ्यश्च ४ । १ । ९६; नस्तद्धिते ६ । ४ । १४४

३—'गुरूपोत्तमं' कीलहार्नपाठः ।   * ६ । ३ । ३५ वा० ११

उभयमिदमुक्तमादेशः पर इति च, किमत्र न्याय्यम् ? आदेश इत्येतन्न्याय्यम् । कुत एतत् ? एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम्, षष्ठ्या च निर्देशः कृतः । अत एष पक्षो निर्दोषः । ननु च परस्मिन्नपि सति ये दोषास्ते परिहृताः । पुंवद्भावेन यलोपः परिहृतः, स च पुंवद्भावोऽढे भवति, तत्र [ तं ] औदमेघेयो न सिध्यति† ।

अनुबन्धौ त्वया कार्यौ

यस्यादेशोऽनुबन्धौ तेन कर्तव्यौ । एकः सामान्यग्रहणार्थोऽपरः सामान्यग्रहणाऽविघातार्थः । क्व सामान्यग्रहणार्थेनार्थः ? 'यङश्चाप्' [ ४ । १ । ७४ ] इति । अथ सामान्यग्रहणाविघातार्थेन क्वाऽर्थः ? अत्रैव‡ । किं प्रयोजनम् ?

चाबर्थं

चान्यथा स्यात् ॥ तव कथं चाप् ?

टाब्विधिर्मम ।

प्र०—सिध्यति, तथापि पुंवद्भावस्य न्याय्यत्वात्स एवोक्तः । षष्ठ्या चेति । चशब्दो हेतौ । 'अणिञोरनार्षयो'रिति षष्ठीनिर्देश आदेशार्थ एव । प्रत्ययपक्षस्याभिमतत्वे ह्यसन्देहाय पञ्चम्येवोच्चार्येत । औदमेघेय इति । ष्यङन्तात् स्त्रीभ्यो ढक् ।

उ०—हेत्वन्तराऽनभिधानाच्चोऽनुपपन्न इत्यत आह—चो हेताविति । असन्देहायेति । किमानन्तर्ये षष्ठी, उत स्थानरूपे सम्बन्धे इति सदेहनिवृत्तय इत्यर्थः ।

भाष्ये—अत एष पक्षो निर्दोष इति । नन्वादेशपक्षे हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । बाह्वादित्वादिञ्, 'अचि शीर्षः' । तत इञः ष्यङ् । हास्तिशीर्ष्या । अत्र स्थानिवत्त्वेन शीर्षस्य शिरश्शब्दत्वाद्'ये च तद्धिते' इति शीर्षन्नादेशः प्राप्नोति । 'ये चाऽभावकर्मणो'रिति प्रकृतिभावाट्टिलोपो दुर्लभः । प्रत्ययत्वपक्षे त्विकारलोपस्य स्थानिवत्त्वेन व्यवधानान्न दोषः । स्पष्टश्चेदं 'ये च तद्धिते' इति सूत्रे भाष्ये इति चेन्न; उपजीव्यविरोधेन शीर्षन्नादेशाऽप्रवृत्तेः, प्रकृतिभावविधायके—'अभावे'त्यादिपर्युदासेन प्रत्ययास्थानिकयादेरेव ग्रहणेनाऽदोषाच्च । अत्र चेदं भाष्यं मानमित्याहुः ।

दोषमुद्भावयतीति । अस्मत्पक्षे लक्ष्याऽसिद्धिर्दोषः, त्वन्मते गौरवमिति समतेत्यभिमानः । एवञ्चाऽनुबन्धावित्यादिर्भाष्ये एकदेशिनोरुक्तिः । भाष्ये—एक सामान्येति । एको ङकारोऽस्य 'यङश्चा'बित्यत्र । ग्रहणार्थ इत्यर्थः । एकाऽनुबन्धकत्वादस्यैव ग्रहणं स्यान्न तु 'वृद्धे'दिति ञ्यङ इति द्वितीयोऽपि कार्य इत्यर्थः । अत्रैवेति । 'यङश्चा'बित्यत्रैवेत्यर्थः । चाबर्थम् । अत्र, ञ्यङि च चाप्सिद्ध्यर्थमित्यर्थः । तव कथं चाबित्यादेशवादिनः प्रश्नः । टाबिति—प्रत्ययवादिन उत्तरम् ।

१—कश्चिन्न ।

† स्त्रीभ्यो ढक् ४ । १ । १२०

‡ यङश्चाप् ४ । १ । ७४

टापा मम सिद्धम्+ ॥ ननु च ममापि टापा सिद्धं [ स्यात् ] ॥ न सिध्यति। अण इति इञ इति चेकारः प्राप्नोति* ॥ नैष दोषः । नैवं विज्ञायते—अणन्तादकारान्तादिञन्तादिकारान्तादिति । कथं तर्हि ? अणयोऽकार इञ् य इकार इति ।

स्वरार्थस्तर्हि त्वया चाब्वक्तव्यः । ञ्नितीत्याद्युदात्तत्वं मा भूच्चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यादिति† ।

तवापि तर्हि ष्यङोक्तत्वात्स्त्रीत्वस्य टाब्न प्राप्नोति ॥ नैष दोषः ।

उक्तेऽपि हि भवन्त्येते

प्र०—इदानीं प्रत्ययवाद्यादेशवादिनो दोषमुद्भावयति—अनुबन्धाविति । टापा ममेति-प्रत्ययवादी । प्रत्यये कृते टापं करोतीत्यर्थः । आदेशवाद्याह—ममापीति । अण् य इति । अकारः प्रधानं तद्विशेषणमण् । तत्र 'नल्विधा'विति प्रतिषेधात्स्थानिवद्भावाभावः । अणन्तादकारान्तादिति तु विज्ञायमाने स्वाश्रयमकारान्तत्वं स्थानिवद्भावादणन्तत्वं चेति स्यादेव ङीप्प्रत्ययः । इञादेशस्य तु ष्यङो न स्वाश्रयमकारान्तत्वं, नापि स्थानिवद्भावप्रापितम्, 'अनल्विधा'विति प्रतिषेधादिति ततः सिद्ध एव टाप् । यदा चेञ उपसङ्ख्यानमित्यत्रेत इत्यपेक्ष्यते तदा ष्यङि कृतेऽनिकारान्तत्वान्ङीषोऽप्रसङ्गः ॥ प्रत्ययवाद्याह—स्वरार्थ इति । इञादेशो यदि ष्यङ् क्रियते तदन्ताच्च टाप्तदा वाराह्येत्याद्युदात्तं पदं स्यात्तस्मादन्तोदात्तार्थस्त्वया चाब्विधेयः । आदेशवाद्याह—तवापीति । मम तु 'यङश्चा'बिति वचनाचाब्भवतीति मन्यते । प्रत्ययवाद्याह—नैष दोष इति ।

उ०—'इतो मनुष्ये'त्यस्य प्राप्तिस्तु नेत्याह—इञादेशस्य त्विति । ननु सूत्राऽप्राप्तावपि 'इञ उपसंख्यान'-मिति प्राप्नोति, तत्र च 'इत' इत्यस्याऽभावोऽत आह—यदा चेति । अत्रैव वारणार्थम् 'इत' इत्यस्याऽनुवृत्तिरिति भावः । चाब्विधेय इति । प्रत्ययवादिमते तु प्रत्ययस्वरेणाऽन्तोदात्तं पदं सिध्यतीत्याशयः । नन्वादेशपक्षेऽप्युक्तार्थत्वं तुल्यमत आह—मम त्विति ॥ वाचकत्वपक्षाद्द्योतकत्वपक्षे विशेषमाह-एकस्येति ।

+ अजाद्यतष्टाप् ४ । १ । ४ * टिड्ढाणञ्…क्वरपः; इतो मनुष्यजातेः ४ । १ । १५; ६५

१—अस्मादग्रेऽयमधिकः पाठो गुरुप्रसादसंस्करणे वर्तते—

[ कथं तर्हि स्वरः ? ॥ * ॥ एकादेशात्प्रत्यययोः स्वरः पिदपितोर्मम ॥ * ॥ एकादेशात्प्रत्यययोः स्वरः पिदपितोर्मम सिद्धः—उदात्तानुदात्तयोरेकादेश उदात्त इति ॥ * ॥ स्थानिवत्त्वादिञादेशे स्वरस्ते दापि दुष्यति ॥ * ॥ स्थानिवत्त्वादिञादेशे स्वरस्ते दापि दुष्यति—ञ्नित्यादिरुदात्त इति । चापं विनाऽन्तोदात्तत्वं न ॥ ]

† ञ्नित्यादिर्नित्यम्; चितः ६ । १ । १९७; १६३

उक्तेऽपि तु स्त्रीत्वे भवन्त्येते टाबादयः। उक्तमेतत्—'स्वार्थिकाष्टाबादय' इति¶।

[ सानुबन्धकस्यादेशो मम। ]

ममापि तर्हि सानुबन्धकस्योदेश इत्कार्यं नेति*। तेन ञिन्न भविष्यति।

अस्थानिवत्त्वे दोषस्ते वृद्धिरत्र न सिध्यति।

अस्थानिवत्त्वे दोषो वृद्धिस्ते न प्राप्नोति†—औडुलोम्या शारलोम्येति। न चेदानीमर्धजरतीयं लभ्यं वृद्धिर्मे भविष्यति स्वरो नेति। तद्यथा,—अर्धं जरत्याः कामयतेऽर्धं नेति।

त्वयाऽप्यत्र विशेषार्थं कर्तव्यं स्याद्विशेषणम्॥

त्वयाऽप्यत्र विशेषणार्थोऽनुबन्धः कर्तव्यः। कः विशेषणार्थेनाऽर्थः? 'ष्यङः सम्प्रसारण'मिति‡।

अक्रियैव विशेषोऽत्र सानुबन्धो विशेषवान्।

अक्रियैव मम विशेषः सानुबन्धस्तु × विशेषवान्।

प्र०—उक्त इति। द्योतित इत्यर्थः। एकस्य स्त्रीत्वद्योतने सामर्थ्याभावाद्द्वयोर्द्योतकत्वम्। तच्च प्रयोगदर्शनादवसीयते। आदेशवाद्याह—सानुबन्धकस्येति। इञ एवाऽकृतञकारेत्संज्ञकस्य यादेशः करिष्यते, तेन ञित्स्वराभावात्प्रत्ययस्वरे टापि कृते 'एकादेश उदात्तेनोदात्त' इति वाराह्यशब्दोऽन्तोदात्तो भविष्यतीत्यर्थः। प्रत्ययवाद्याह—अस्थानिवत्त्व इति। अर्धजरतीयमिति। 'समासाच्च तद्विषया'दिति छप्रत्ययः। मुखं न कामयते, अङ्गान्तरं तु जरत्याः कामयते। आदेशवाद्याह—त्वयाऽप्यत्रेति। प्रत्ययवाद्याह—अक्रियैवेति। 'यस्य संप्रसारण'मिति वक्ष्यते, निरनु-

उ०—अन्धकाराधिक्ये एकस्य प्रदीपस्येवेत्यर्थः। गार्ग्य इत्यादावपि यस्य सत्त्वेन तन्मात्रस्य द्योतने सामर्थ्याऽभावादिति भावः। तच्च प्रयोगेति। अतिप्रसङ्गो नाशङ्क्य इति भावः। साऽनुबन्धकस्यादेशे ञित्कार्याऽभावमुपपादयति—इञ एवेति। भाष्ये—अस्थानिवत्त्व इति। स्थानिवत्त्वेन ञित्त्वाऽभावे इत्यर्थः। समासाच्चेति। इवार्थे समास इवार्थे प्रत्यय इति इवार्थद्वयनिर्वाहाय जरतीशब्दोऽर्थान्तरे वर्त्तते, अर्धशब्दश्च प्रत्यासत्त्या

१—'टाबादय इति सिध्यति' पा०। ¶ ४। १। ३ वा० ५ भाष्ये।

२—अयं पाठः क्वचिन्नापि दृश्यते। क्वचित्तु 'सानुबन्धकस्यादेशो मम ञिन्न भविष्यती'ति श्लोकार्धत्वेन पठ्यते।

* २। ४। ४६ वा० २ भाष्ये। † तद्धितेष्वचामादेः ७। २। ११७

‡ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ६। १। १३ × वृद्धेत्कोसलाजादाञ्ञ्यङ् ४। १। १७१

**पाश्यायां ते कथं न स्यात्**

पाश्यापतिः पाश्यापुत्र इत्यत्र+ कस्मान्न भवति ?

**एको मे स्याद्विशेषणम् ॥**

एको मम विशेषणार्थः । त्वया पुनर्द्वौ कर्तव्यौ ।

अथैकस्मिन्नपि सति कः करिष्यते । किं चातः ?

**अन्यस्मिन्सूत्रभेदः स्यात्**

यद्येताभ्यामन्यः क्रियते सूत्रभेदः कृतो भवति ।

**षिति लिङ्गं प्रसज्यते ।**

अथ षित्क्रियते षित इतीकारः प्राप्नोति* ।

**ङिति चेक्रीयिते दोषः**

अथ ङित्क्रियते चेक्रीयिते दोषो भवति† । लोलूयापुत्रः लोलूयापतिरिति ।

**व्यवधानान्न दुष्यति ॥**

प्र०—बन्धकत्वाचायमेव ग्रहीष्यते । 'आम्बष्ठयापुत्र' इत्यादौ तु ञ्यङः सानुबन्धकत्वात्संप्रसारणं न भविष्यतीत्यर्थः । आदेशवाद्याह—पाश्यायामिति । यदीह यप्रत्ययं विधाय 'यस्य संप्रसारण'-मित्युच्यते तदा पाशानां समूहः [ पाश्या], 'पाशादिभ्यो य' इति यप्रत्ययस्य 'पाश्यापति'रित्यादौ संप्रसारणप्रसङ्गः । प्रत्ययवाद्याह—एक इति । आदेशवाद्याह—अथेति । चेक्रीयित इति । 'धातोरेकाच' इत्यनेन विहिते यङीत्यर्थः । यङः पूर्वाचार्यसंज्ञा—चेक्रीयितमिति । प्रत्ययवाद्याह—व्यवधानादिति । लोलूयेत्यत्र यङन्तादप्रत्ययादित्यकारप्रत्यये सति अकारेण व्यवधानादित्यर्थः । 'पुत्रपत्यो'रिति सप्तमीनिर्देशादनन्तरस्य यङः संप्रसारणेन भाव्यम् । तत्र वाराह्याशब्दे टापा सहैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्पुत्रपत्योरनन्तरो यङ् भवति । 'लोलूये'त्यत्र तु यङन्ता'दप्रत्यया'-दित्यकारप्रत्यये कृते'ऽतोलोप'इति यङोऽकारो लुप्यते । तत्र टापि कृते एकादेशे च पुत्रपत्योरन-

उ०—जरत्या एवाऽर्थान्तरे, तौ च कामनाऽकामनालाक्षणिकौ । एवञ्च तादृशकामनाऽकामनादिसदृशवृद्धया-दिकामनाकमनाप्रयोज्या तज्जन्यप्रवृत्तिसदृशी तव प्रवृत्तिरित्यर्थः । व्यतिरेके च दृष्टान्तः । यथा तत्र विषयभेदा-त्तादृशकामनादि, तथा प्रवृत्त्यादि च वक्तुं शक्यं, नैवं प्रकृते; एकनिमित्तकत्वात्कार्यद्वयस्येति तात्पर्यम् । ञ्यङः—'वृद्धेत्कोसले'तिविहितस्य ।

ननु यदि लोलूयापुत्रेऽकारेण व्यवधनन्तर्हि वाराहीपुत्रेऽपि टापा व्यवधानान्न प्राप्नोतीत्यत आह—तत्र वाराह्येति । न च 'अचः परस्मि'न्नित्येतत् 'कृदति'ङितिसूत्रस्थभाष्यरीत्या सुलभम्, एवञ्च व्यवधान-

१—'पाश्यापति'रिति पाठः क्वचिन्न दृश्यते । प्रदीपे दर्शनादयं भाष्यपाठ एव । क्वचिच्च 'पाश्या-पुत्र' इति न विद्यते ।    + पाशादिभ्यो यः ४ । २ । ४९

* षिद्गौरादिभ्यश्च ४ । १ । ४१    † धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३ । १ । २२

अकारेण‡ व्यवहितत्वान्न दोषो भवति ।

**योऽनन्तरो न धातु सः**

धातोरिति वर्तते+ यश्चाऽत्राऽनन्तरो नासौ धातुः ।

**यो धातुः सोऽननन्तरः ।**

यश्च धातुर्नाऽसावनन्तरः ।

**न चेदुभयतः साम्यमुभयत्र प्रसज्यते ॥**

न चेदुभयतः साम्यं भवति, उभयत्र प्राप्नोति ॥ यदि पुनर्यङा धातुर्विशेष्येत ?

**यङा विशेष्येत यदीह धातुर्यङ् धातुना वा यदि तुल्यमेतत् ।**

यद्येव यङा धातुर्विशेष्यतेऽथापि धातुना यङ्, तुल्यमेतद्भवति ।

प्र०—न्तरो यङ् न भवत्याकारेण व्यवधानादिति संप्रसारणं न भविष्यतीत्यर्थः । आदेशवाद्याह—योऽनन्तर इति । 'यङः संप्रसारण'मिति भवता सूत्रं क्रियते तदा 'लिटि धातो'रित्यतो धातुग्रहणानुवृत्तौ सत्यां धातुना यङ्विशेष्यते । तत्र पुत्रपत्योरनन्तरो यङन्तो धातुर्न सम्भवतीति सामर्थ्याद्यथाऽधातोरनन्तरस्य वाराहीपुत्र इति संप्रसारणं भवति, एवं लोलूयापुत्र इत्यत्र व्यवहितस्यापि धातोः स्यादित्यर्थः । धातुत्वमानन्तर्यं च विशेषणमाश्रितं, तत्रैकस्योभयासंभवात्सामर्थ्यादिकतरविशेषणाश्रयणादुभयोरपि संप्रसारणप्रसङ्ग इत्यर्थः । न चेदिति । एकस्य यदा धर्मद्वयं न संभवति तदाऽन्यतररूपाश्रयणादुभयोः साम्यात्कार्यप्राप्तिः । प्रत्ययवाद्याह—यदीति । तदा किं दोषः स्यान्नवेति पृच्छति ।

आदेशवाद्याह—यङेति । जुसि चेत्यादावङ्गेनेको विशेषणेऽङ्गस्येका वा विशेषोऽस्त्येव ।

उ०—मेवेति वाच्यं, 'येन नाऽव्यवधान'मिति न्यायेन तद्व्यवधानेऽपि प्रवृत्तेरित्याशयात् । आदेशवाद्याहेति । प्रत्ययवादिना 'यङः सम्प्रसारण'मिति सूत्रन्यासेऽतिप्रसङ्गे परिहृते तं परिहारमादेशवाद्याक्षिपतीत्यर्थः । धातुग्रहणानुवृत्ताविति । उत्तरत्र सम्बन्धावश्यकत्वेन मध्येऽपि सम्बन्ध इति भावः । न सम्भवतीति । धातुना ताभ्यां समासाऽभावात् । न च क्विबन्ते सम्भवः; अल्लोपयलोपयोः कृतयोः स्थानिन एवाऽभावादिति भावः । उभयोरपीति । अधातोरनन्तरस्य, धातोर्व्यवहितस्य चेत्यर्थः । अङ्गस्येका वेत्यत्र विशेषण इत्यनुकर्षः । अन्यत्र विशेषणविशेष्यभावव्यत्यासेऽर्थभेदेऽपि प्रकृते नेत्याह—जुसि चेति । अङ्गेनेको विशेषणेऽनन्त्यस्याऽपि गुणः, अन्यथा त्वन्त्यस्येति विशेषः । यङा त्विति । उभयथाऽपि प्रत्ययग्रहणपरिभाषया तदन्तविधिसद्भावाद्धातुरूपयङोऽसम्भवादिति भावः । धातुना वा यङीत्यत्र विशेष्यमाणे इत्यनुकर्षः ।

‡ अ प्रत्ययात् ३ । ३ । १०२ + लिटि धातोरनभ्यासस्य ६ । १ । ८

१—'भवती'ति क्वचिन्न ।

**उभौ प्रधानं यदि नात्र दोषः**

अथोभौ प्रधानं भवतो नात्र दोषो भवति ।

**तथा प्रसार्येत तु वाक्पतिस्ते ॥**

तथा सति वाक्पतिः वाक्पुत्र इत्यत्र [ सं[1] ] प्रसारणं प्राप्नोति ॥ [ एवं तर्हि ]

**धातुप्रकरणस्येह न स्थानमिति निश्चयः ।**

'धातुप्रकरणस्येह स्थानं नास्ती'ति कृत्वैष निश्चयः क्रियते ॥ अवश्यमात्त्वार्थं धातुग्रहणं कर्तव्यम् । इह मा भूत्*—गोभ्याम् गोभिः, नौभ्यम् नौभिः ।

**आत्त्वार्थं यदि कर्तव्यं तत्रैवैतत्करिष्यते ॥**

प्र०—यङ तु धातौ विशेष्यमाणे, धातुना वा यङि विशेषो नास्तीत्यर्थः । प्रत्ययवाद्याह—उभाविति । यङ्धात्वोः परस्परेण विशेषणविशेष्यभावो नास्ति, समुच्चयेन तु कार्यं विधीयते पुत्रपत्योरनन्तरस्य यङो धातोश्चेति । तत्र वाराहीपुत्र इत्यादौ भविष्यति न तु लोलूयपतिरित्यादौ, धातोर्व्यवधानात् । ततश्च सामर्थ्याद्धातुग्रहणस्योत्तरार्थैवाऽनुवृत्तिः । आदेशवाद्याह—तथेति । यदि यङ्धात्वोः समुच्चयो न तु विशेषणविशेष्यभावस्तदा वाक्पतिशब्दे पत्युरनन्तरस्य यङो धातोश्चेति वचेर्धातोः संप्रसारणप्रसङ्गः । प्रत्ययवाद्याह—धातुप्रकरणस्येति । धातुग्रहणं नानुवर्तत इति नास्त्यतिप्रसङ्गः । आदेशवाद्याह—अवश्यमिति । 'आदेच उपदेशेऽशिती'त्येतदर्थमवश्यमनुवर्त्यं धातुग्रहणमित्यर्थः ।

प्रत्ययवाद्याह—आत्वार्थमिति । एतदिति । एतत्प्रयोजनार्थं व्याख्यानमित्यर्थः । उपदेशशब्देन—शास्त्रमुच्यते । तेन शास्त्रे ये पठिता एजन्तास्तेषामात्वं विधीयते । प्रातिपदिकानि तु न प्रतिपदं शास्त्रे पठितानि, किं तर्हि प्रकृत्यादिविभागकल्पनाद्वारेण साधुत्वेन प्रतिपादितानि । ननु 'नौद्व्यचष्ठन्' 'गोद्व्यच'इत्यादौ उपदेशे यानि प्रातिपदिकानि पठितानि तेषामात्वप्रसङ्गः । एवं तर्हि 'गोतो णि'दिति णित्त्वातिदेशाज्ज्ञापकात्तेषामात्वाभावः । न ह्यात्वे गोशब्दस्य कृते णित्त्वस्याऽस्ति

उ०—वृत्त्येत्यत आह—ततश्चेति । भाष्ये—धातुप्रकरणस्येति प्रकरणपदेनाऽनुवृत्तिरुच्यते । नास्त्यतिप्रसङ्ग इति । वाक्पतावित्यर्थः ।

ननु येनाननुवृत्तिरुक्ता तेनैव कथं तत्करणमुच्यतेऽतो नानेनानुवृत्तिकर्त्तव्यतोच्यते, किन्तर्हि तत्फलसम्पत्त्यर्थं व्याख्यानमेवेत्याह—एतत्प्रयोजनार्थमिति ; शास्त्रमिति । करणव्युत्पत्त्येति भावः ।

एवं तर्हीति । वस्तुत उपदेशपदेनाऽज्ञातज्ञापकमुच्चारणमुच्यते, एजन्तमित्यर्थश्च शब्दरूपं विशेष्यमादाय । शब्दश्च प्रत्यासत्त्योपदेशविषय एवेति 'ढौकिते'त्यादौ न दोषः । नैवं 'नौद्व्यच' इत्यादौ, अनुवादत्वादिति तत्त्वम् । अत एवाऽग्रे—'प्रातिपदिकानां नोपदेश' इति भाष्यं सङ्गच्छते । स्वयं प्रौढयाह—

१—क्वचिन्न । * आदेच उपदेशेऽशिति ६ । १ । ४५

उपदेशे यदेजन्तं तस्य चेदात्त्वमिष्यते ।
उद्देशो रूढिशब्दानां तेन गोर्न भविष्यति ॥

एवं तर्हि 'उपदेशे' इत्युच्यते, उद्देशश्च प्रातिपदिकानां नोपदेशः ॥ ७८ ॥

## गोत्रावयवात् ॥ ४ । १ । ७९ ॥

किमर्थमिदमुच्यते ? 'गोत्रावयवादगोत्रार्थम्' । गोत्रावयवादित्युच्यते, अगोत्रार्थोऽयमारम्भः ।

**गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम् ॥ १ ॥**

'गोत्रावयवादगोत्रार्थ'मिति चेत्तदनिष्टं प्राप्नोति । इहापि प्राप्नोति—आहिच्छत्री कान्यकुब्जीति† ॥ एवं तर्हि गोत्रादेव गोत्रावयवात् ।

प्र०—प्रयोजनम् । एवं प्रत्ययपक्षोऽपि निर्दोषः । अत एव च 'क्रौड्यादिभ्यश्चे'ति पञ्चमीनिर्देशः । 'औदमेघेय'इत्यादौ तु सिद्धः प्रत्ययपक्षेऽपि यलोपः, ष्यङः अपत्याद्विहितत्वात्स्वार्थिकत्वादापत्यत्वादित्याहुः ॥ ७८ ॥

गोत्रा । अवयवशब्दस्यानेकार्थत्वात्सन्देहात्प्रश्नः—किमर्थमिति । पृथग्भाववाचिनमवयवशब्दमाश्रित्याह—गोत्रावयवादिति । गोत्रावयवो गोत्रात्पृथग्भूतो गोत्रं न भवतीत्यर्थः । सप्तम्यर्थे चेयं पञ्चमी । तेनाऽगोत्रेऽणिञोः ष्यङ् भवतीत्यर्थः । इहापीति । पूर्वसूत्रे गोत्रग्रहणानर्थक्यप्रसङ्गादेषोऽर्थ इह नाश्रीयत इति भावः ॥ इदानीमेकदेशवाच्याश्रयेणाह—एवं तर्हीति ।

उ०—एवं प्रत्ययेति । अपत्याद्विहितत्वादिति । अपत्यप्रत्ययान्ताद्विहितत्वादित्यर्थः । यलोपसूत्रे आपत्यशब्दस्य तन्त्रेणाऽर्थद्वयम्—अपत्ये भवस्येति, अपत्यार्थकप्रत्ययोद्देश्येन विहितस्येति चेति भावः । द्वितीये 'शेषे' इत्यण् । अस्याऽर्थस्य 'आपत्य'शब्देन स्वरसतोऽलाभादाह—स्वार्थिकत्वाद्वेति । इञन्तस्य स्वार्थश्चाऽपत्यमेवेति भावः । अधिकस्त्रीत्वद्योतकतासत्त्वेऽपि तत्त्वाऽक्षतेरिति तात्पर्यम् । वस्तुतस्तु स्वार्थिकत्वेऽपि 'स्त्रिया'मिति विशेष्योक्तेः स्त्रीत्वार्थकत्वमेवाऽस्य न त्वपत्यार्थकत्वम्, अभिजिच्छब्दाद्गोत्राऽणन्तादस्यन्तस्वार्थिके यञि कस्याऽप्यर्थस्य विशिष्य द्योत्यताऽनुक्तेरविशेषात्सर्वोऽपि तद्द्योत्य इति यञोऽपत्यार्थकत्वेन ततो 'गोत्रचरणा'दिति वुञि 'आपत्यस्ये'ति यलोपसिद्धिरिति भाष्याशयः ॥ ७८ ॥

गोत्राऽवयवात् । गोत्राऽवयवाद्विहितयोरणिञोः ष्यङिति सूत्रार्थः । अनेकार्थत्वादिति । पृथग्भूताऽप्रधानैकदेशार्थत्वादिति भावः । नन्वेवमर्थेन पौर्वापर्याऽसम्भवात्पञ्चम्यनुपपन्नेत्यत आह—सप्तम्यर्थे चेति । तदनाश्रयणे बीजमप्याह-पूर्वसूत्र इति । ननु देवदत्ताऽवयवस्य देवदत्तत्वाऽभावेन 'गोत्रादेव गोत्राऽवयवा'-दित्ययुक्तमत आह—यथा घृतेति ॥ सूत्रे-गोत्राऽवयवादिति—गोत्रञ्चाऽसाववयवश्चेति कर्मधारयः । तत्र

१—'उपदेश आत्वमित्युच्यते' पा० ।

† तत्र जातः ४ । ३ । २५ अहिच्छत्रा पञ्चालराजद्रुपदस्य राजधान्यासीद्, यामर्जुनो निर्जित्य

**गोत्रादिति चेद्वचनानर्थक्यम् ॥ २ ॥**

गोत्रादिति चेद्वचनमनर्थकम्[१] । सिद्धं गोत्रे पूर्वेणैव‡ ।

इदं तर्हि प्रयोजनम्—'गुरूपोत्तमयो'रित्युच्यते‡, अगुरूपोत्तमार्थोऽयमारम्भः ।

**अगुरूपोत्तमार्थमिति चेत्सर्वेषामवयवत्वात्सर्वप्रसङ्गः ॥ ३ ॥**

अगुरूपोत्तमार्थमिति चेत्सर्वेषामवयवत्वात्सर्वत्र प्राप्नोति । अष्टाशीतिः सहस्राण्यूर्ध्वरेतसामृषीणां बभूवुस्तत्रागस्त्याष्टमैर्ऋषिभिः प्रजनोऽभ्युपगतः । तत्रभवतां यदपत्यं तानि गोत्राणि, अतोऽन्ये गोत्रावयवाः, तत उत्पत्तिः प्राप्नोति, तच्चाऽनिष्टम् । तस्मान्नार्थोऽनेन योगेन ॥ कथं येभ्योऽगुरूपोत्तमेभ्य इष्यते ?

**सिद्धं तु रौढ्यादिषूपसङ्ख्यानात् ॥ ४ ॥**

प्र०—यथा घृतावयवो घृतमेवं गोत्रावयवोऽपि गोत्रमित्यर्थः ॥ **गोत्रादिति चेदिति**। पौत्रप्रभृत्यपत्यसमुदायस्य गोत्रत्वे तदवयवस्यापि गोत्रत्वात्पूर्वेणैव ष्यङ्सिद्ध इत्यर्थः । **सर्वप्रसङ्ग इति** । यथा भार्गवगोत्रस्य साधारणस्यावान्तरगोत्राणि च्यवनादीनि, तेषु ऋषिशब्देभ्यः पूर्वसूत्रेऽनार्षयोरिति ष्यङ्प्रतिषेधादनृषिशब्देभ्यो गुरूपोत्तमेभ्य एव ष्याङ्भ्यते न त्वगुरूपोत्तमेभ्य इति भावः । **तत्रभवतामिति** । अगस्त्याष्टमानामित्यर्थः ॥ **कथं येभ्य इति** । पुणिकमुखरादिभ्यः । ये क्रौड्यादय

उ०—'गोत्र'शब्देन यदि पारिभाषिकं गोत्रं तदा दोषमाह भाष्ये—**वचनमनर्थकमिति** । ननु पूर्वेण गोत्रे विधानमनेन तदवयव इति कथं वचनाऽऽनर्थक्यमत आह—**पौत्रप्रभृतीति** । भाष्ये—**अगुरूपोत्तमार्थ इति** । कस्मिंश्चिन्महागोत्रे यान्यवान्तरगोत्राणि, यथा भार्गवस्य च्यवनादीनि, तेष्वगुरूपोत्तमार्थः । ( भाष्ये ) **तत्र भवतां यदपत्यमिति** । साक्षाद्यदपत्यमित्यर्थः । **तानि गोत्राणीति** । गोत्रत्वेन लोके प्रसिद्धानीत्यर्थः । एतदेव च तत्र-तत्र लौकिक'गोत्र'पदेनोच्यते । **अतोऽन्ये इति** । तदपत्यसन्तानरूपा अवान्तरगोत्रपदार्था इत्यर्थः । **तत इति** । अवान्तरगोत्रेभ्योऽगुरूपोत्तमेभ्य इत्यर्थः । तद्व्याचष्टे—**यथा भार्गवेत्यादि** । प्रवराऽध्यायप्रसिद्धा द्विविधः—ऋषयोऽनृषयश्च । ऋषिशब्देनाऽत्र-मन्त्रद्रष्टारः । तत्राद्येषु न प्राप्तिरित्याह—**पूर्वसूत्र इति** । अन्त्ये आह—**अनृषीति** । **न त्विति** । एवञ्चाऽगुरूपोत्तमार्थत्वं दुष्टमिति बोध्यम् । 'ये

द्रोणाय गुरुदक्षिणायां ददौ । द्रष्टव्यं महाभारत आदिपर्वणि १३७ अ० ७७ श्लोके—

'एवं राजन्नहिच्छत्रा पुरी जनपदायुता । युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता ॥'

कान्यकुब्जः साम्प्रतं 'कन्नौज'नाम्ना प्रसिद्धः । कन्यानां संघः कान्यम्, तत् कुब्जं यत्र स कान्यकुब्जः । उपाख्यानं तु रामायणे बालकाण्डे ३२ सर्गे द्रष्टव्यम् ।

१—'अनर्थकं भवति' पा० ।   ‡ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ४ । १ । ७८

२—गोत्रकाराश्चाष्टौ सुप्रसिद्धाः । यथाह नि० सि० वौधायनः—[१]"विश्वामित्रो [२]जमदग्निर्भरद्वाजो[३]ऽथ गोतमः[४] । [५]अत्रिर्वसिष्ठः[६] कश्यप[७] इत्येते सप्त ऋषयः, सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद् गोत्रमिति" इति वाचस्पत्यम् ।

सिद्धमेतत् । कथम् ? 'रौढ्यादिषूपसङ्ख्यानात्' । रौढ्यादिषूपसङ्ख्यानं कर्तव्यम् । के पुना रौढ्यादयः ? ये क्रौड्यादयः* ।

भारद्वाजीयाः पठन्ति—'सिद्धं तु कुलाख्याभ्यो लोके गोत्राभिमताभ्य' इति ।[1] सिद्धमेतत् । कथम् ? कुलाख्या लोके 'गोत्रावयवा' इत्युच्यन्ते ।

अथवा गोत्रावयवः को भवितुमर्हति ? यो गोत्रादवयुतः । कश्च गोत्रादवयुतः ? योऽनन्तरः—दैवदत्त्या याज्ञदत्त्येति ॥ ७९ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ।

प्र०—इति । पूर्वाचार्यसंज्ञयैवमभिहितमित्यर्थः । कुलाख्याभ्य इति । अप्रधानवचनोऽवयवशब्द इह गृह्यते । तत्र प्रवराऽध्यायपठितानां मुख्यं गोत्रत्वम् । ये त्वादिपुरुषाः श्रुतशीलसंपन्ना अपत्यसन्तानप्रसिद्धिहेतवस्तेषामप्रधानं गोत्रत्वं, तेभ्योऽनेन ष्यङ्विधानम् । पुणिकस्यापत्यं गोत्रं स्त्री–पौणिक्या, भौणिक्या, मौखर्येति । योऽनन्तर इति । पृथग्वाच्यवयवशब्दोऽपत्यत्वेन गोत्रसादृश्ये सति पृथग्भावोऽन्तरङ्गत्वादाश्रीयत इति जातादौ ष्यङ् न भवति—आहिच्छत्रीति । तदेवमर्थद्वयमस्य सूत्रस्य भाष्यकारेण व्याख्यातम् । अभिधानलक्षणाश्च कृत्तद्धितसमासा इति सर्वत्रानन्तरापत्ये ष्यङ् न भवति ॥ ७९ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ।

उ०—क्रौड्यादय' इत्यन्तेन ग्रन्थेन सूत्रं प्रत्याख्यातम् ।

अथ भारद्वाजीयोक्तं सूत्रप्रयोजनमाह—भारद्वाजीया इति । अप्रधानवचन इति । अप्रधानानि गोत्राणि 'गोत्राऽवयव'शब्देनोच्यन्ते । तत्र प्राधान्याऽप्राधान्ये कथमत आह— प्रवराऽध्यायेति । तेषामप्रधानमिति । अपत्यसन्तानप्रसिद्धिहेतुत्वेन तेषां गौणं गोत्रत्वम् । 'अपत्यं पौत्रप्रभृती'ति गोत्रत्वञ्चोभयसाधारणमिति भावः । सूत्रे कर्मधारयः, सौत्रः परनिपातः । एवञ्चात्र'अगुरूपोत्तमयो'रिति नाऽनुवर्तत इत्याह—पुणिकस्येति । एवञ्चाऽगुरूपोत्तमार्थमिदमिति भावः । क्रौड्यादिपाठात्सिद्धेः सूत्रवैयर्थ्यं मनसि निधायाह - भारद्वाजीयः—अथवेति । अयं भावः, एतत्सूत्रारम्भसामर्थ्यादपत्याऽधिकारादन्यत्वेऽपि पूर्वसूत्रे गोत्रशब्देन शास्त्रीयं गृहीत्वा तद्भिन्नेऽनन्तराऽपत्यप्रत्ययान्ते विध्यर्थमिदमिति । तद्ध्वनयन्नुदाहरति—दैवदत्त्येत्यादि । गोत्राऽवयवशब्देन कथमन्तराऽपत्यग्रहणमत आह—पृथग्भावेति । यथा 'ब्राह्मणात्पृथग्भूतोऽय'मित्युक्ते तत्सदृशे क्षत्रियादौ प्रथमं प्रतीतिरिति भावः । नन्वेवं सत्यतिप्रसङ्गः स्यादत आह—अभिधानलक्षणा इति । अत एव युवाऽपत्ये न दोषः । एवञ्चाऽनन्तराऽपत्ये तत्पठितमुदाहरणद्वयमेव साध्विति भावः । एवञ्च येभ्योऽनन्तराऽपत्यप्रत्ययान्तेभ्य इष्यते तानपि क्रौड्यादिषु पठित्वा इदं सूत्रं त्याज्यमेवेति भाष्यमतमिति भाति ॥ ७९ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते
चतुर्थस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ।

* क्रौड्यादिभ्यश्च ४ । १ । ८० 

1—'गोत्राभिमता गोत्रावयवा' पा० ।

## समर्थानां प्रथमाद्वा ॥ ४ । १ । ८२ ॥

समर्थवचनं किमर्थम् ? समर्थादुत्पत्तिर्यथा स्यात्—उपगोरपत्यम्† । असमर्थान्मा भूत्—कम्बल उपगोरपत्यं देवदत्तस्येति ।

### समर्थवचनमनर्थकं न ह्यसमर्थेनाऽर्थाभिधानम् ॥ १ ॥

समर्थवचनमनर्थकम् । किं कारणम् ? 'न ह्यसमर्थेनार्थाभिधानम्' । 'न ह्यसमर्थादुत्पद्यमानेन प्रत्ययेनाऽर्थाऽभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ।

अथ प्रथमवचनं किमर्थम् ? प्रथमवचनं प्रकृतिविशेषणार्थम् । प्रथमात्प्रत्ययोत्पत्तिर्यथा स्यादप्रथमान्मा भूत्—उपगोरपत्यमित्यपत्यशब्दात् ।

प्र०—समर्थानां । समर्थवचनमिति । तस्यापत्यमित्यादौ श्रूयमाणसम्बन्ध्यपेक्षायां विभक्तौ विज्ञायमानायामसामर्थ्ये प्रत्ययप्रसङ्ग एव नास्तीति मत्वा प्रश्नः । समर्थादिति । समर्थादेवेत्यवधारणं द्रष्टव्यम् । न 'तस्यापत्य'मित्यादौ लक्षणवाक्ये सम्बन्धप्रतिपादनाय विभक्त्युच्चारणम्, इह तस्य प्रयोजनाभावात्, किं तर्हि षष्ठ्यन्तात्प्रत्ययविध्यर्थं 'तस्ये'ति निर्दिष्टम्, अपत्यमिति प्रत्ययार्थत्वेन निर्दिष्टमिति—परस्परसंबन्धस्याप्रतिपादनादसमर्थादपि प्रत्ययः स्यादिति भावः । ऋद्धस्योपगोरपत्यमित्यादावपि प्रत्ययो न भवति, सापेक्षत्वादसामर्थ्यात् ॥ समर्थवचनमिति । प्रत्युक्तानामिदमन्वाख्यानं प्रवृत्तम् । तत्र 'कम्बल उपगोरपत्यं देवदत्तस्ये'ति योऽर्थः प्रतीयते नासौ 'कम्बल औपगवो देवदत्तस्ये'ति प्रत्यये कृते, इति प्रत्ययो न भविष्यतीत्यर्थः । प्रकृतिप्रत्ययौ च प्रत्यायार्थं सह ब्रूतो न चानन्वितयोः सहाभिधानसम्भवः । असमर्थशब्देनाऽसेमर्थादुत्पन्नः प्रत्यय उपचारादभिहितः । अपत्यशब्दादिति । अपत्यविशेषवाचिनो देवदत्तादिशब्दादित्यर्थः । तथा हि—

उ०—सामर्थानां । सम्बन्ध्यपेक्षायामिति । अपत्याद्यर्थनिरूपितसम्बन्धार्थिकायामित्यर्थः । तत्सम्बन्ध्यपत्यमित्यर्थे प्रथमोच्चारितात्प्रत्यय इत्यर्थाद् 'वस्त्रमुपगोरपत्यं चैत्रस्ये'त्यादिव्यावृत्तिसिद्धेरिति भावः । ननु न समर्थादुत्पत्त्यर्थं वचनं, किन्त्वसमर्थादनुत्पत्त्यर्थमत आह—समर्थादेवेति । इह—लक्षणे । तस्य—सम्बन्धप्रतिपादनस्य । तस्येतीति । सर्वविशेषसङ्ग्रहाय च तच्छब्देन सामान्येनोपादानम् । पूर्वोक्तार्थकत्वेऽपि सूत्राणां 'समर्था'दित्यावश्यकमित्याह—ऋद्धस्येति । 'अनभिधाना'दित्यस्य—प्रत्ययान्तेन वा[illegible]प्रतीयमानार्थप्रतीत्यभावादित्यर्थमुक्त्वा प्रकृतिप्रत्यययोः सहाऽभिधानाऽयोगादित्यर्थान्तरं दर्शयति—प्रकृतिप्रत्ययौ चेति । प्रत्ययार्थमिति । प्रतीयमानार्थमित्यर्थः । क्वचित्तु 'प्रत्येयार्थ'मिति पाठः । ऋद्धस्यौपगव इत्यादिवारणाय पूर्वोक्तार्थ एवावश्यक इति बोध्यम् । नन्वसमर्थेनाऽपि प्रकृत्यादिना स्वार्थाऽभिधानमस्त्येवेत्यत आह—असमर्थशब्देनेति । तुल्यन्यायात् 'समर्थः पदविधि'रित्यपि प्रत्याख्यातमिति बोध्यम् ।

† तस्यापत्यम् ४ । १ । ९२

१—'इति' क्वचिदधिकः पाठः ।

प्रथमवचनमनर्थकं न ह्यप्रथमेनाऽर्थाभिधानम् ॥ २ ॥

'प्रथमवचनमनर्थकम्' । किं कारणम् ? 'न ह्यप्रथमेनार्थाभिधानम्' । न ह्यप्रथमादुत्पद्यमानेन प्रत्ययेनार्थस्याऽभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ।

अथ 'वा'वचनं किमर्थम् ? वाक्यमपि यथा स्याद्—उपगोरपत्यमिति ।

वावचने चोक्तम् ॥ ३ ॥

किमुक्तम् ? तत्र‡ तावदुक्तम्—'वावचनानर्थक्यं च नित्यत्वात्सन' इति । इहापि वावचनमनर्थकम् । किं कारणम् ? तत्र नित्यत्वात्प्रत्ययस्य । इह द्वौ पक्षौ वृत्तिपक्षश्चाऽवृत्तिपक्षश्च । स्वभावतश्चैतद्भवति वाक्यं च वृत्तिश्च । तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्द्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाऽभावाविष्येते । तस्मान्नाऽर्थो वावचनेन ।

अथैतत्समर्थग्रहणं नैव कर्तव्यम् ? कर्तव्यं च । किं प्रयोजनम् ? समर्थादुत्पत्तिर्यथा स्यादसमर्थान्मा भूदिति[1] । किं पुनः समर्थम् ? अर्थाऽभिधाने यत्समर्थम् । किं पुनस्तत् ? कृतवर्णानुपूर्वीकं पदम्—सौत्थितिः वैक्षमाणिरिति ।

प्र०—यथेन्द्रो देवता यस्य तदैन्द्रं हविरिति प्रथमान्तात्प्रत्ययो भवति, एवं देवदत्तोऽपत्यमस्योपगोरिति प्रत्ययप्रसङ्गः । लक्षणवाक्यापेक्षं च प्राथम्यं नियतत्वादाश्रीयते न तु विग्रहवाक्यापेक्षमनियतम्, अन्यथा पर्यायेण सर्वस्य प्राथम्यात् प्रथमादित्यनर्थकं स्यात् ॥ प्रथमवचनमिति । दैवदत्तिरित्युक्तेऽपत्यं प्रतीयते, न त्वपत्यवानित्यर्थः ॥ इहेति । व्यपेक्षैकार्थीभावयोरत्यन्तभेदाद्भिन्नार्थस्य वाक्यस्य वृत्त्या बाधनं न भविष्यतीत्यर्थः । कृतवर्णानुपूर्वीकमिति । तस्यैव लोकेऽर्थप्रतिपादनाय प्रयोगात्समर्थत्वमिति भावः । सौत्थितिरिति । विभज्यान्वाख्याने सु उत्थित इत्यस्मादपि प्रत्ययः स्यात्,

उ०—नन्वपत्यमित्यर्थनिर्देशान्न ततः शब्दात्प्रत्ययप्रसङ्गः, 'स्त्रीभ्यो ढ'गित्यादेश्चाऽसङ्गतिः स्यादत आह—अपत्यविशेषेति । अपत्यशब्दादिति भाष्यस्याऽपत्यबोधकशब्दादित्यर्थः । न त्विति । 'उपगोरपत्यम्' 'अपत्यमुपगो'रिति द्विविधप्रयोगस्याऽपि लोके दर्शनादिति भावः । भाष्ये—अन्यदतः संज्ञाया इति । प्रत्ययतद्धितादिसंज्ञाया इत्यर्थः ।

भाष्ये—अथैतत्समर्थेति । 'समर्थः पदविधि'रित्येव सिद्धेरिति भावः । परिपूर्णस्यैव पदार्थान्तरेण सम्बन्धात्सुबन्तात्तद्धितोत्पत्त्या पदविधित्वं स्पष्टमेव । भाष्ये—अर्थाऽभिधाने यत्समर्थमिति । अर्थबोधने यच्छक्तमित्यर्थः । कृतवर्णाऽनुपूर्वीकं पदमिति । अनेनाऽर्थबोधनसामर्थ्यं विशिष्टपदे एव, न तु सत्यपि शास्त्राद्प्रकृतिप्रत्ययशक्तिज्ञाने तस्य लोके बोधकत्वमिति । एवञ्च वर्णस्फोटः शास्त्रव्यवहारमात्रोपयोगीति सूचितम् । एवञ्च समर्थपदेनाऽपि सुबन्तादुत्पत्तिः सूचिता । तदेव 'कुत्सित'इति सूत्रे

‡ ३ । १ । ७ वा० ६

१—'इति' क्वचिन्न ।

**अथ तद्वावचनं नैव कर्तव्यम्? कर्तव्यं च । किं प्रयोजनम्? नित्याः शब्दाः । नित्येषु शब्देषु वाक्यस्यानेन साधुत्वमऽन्वाख्यायते ॥ ८२ ॥**

प्र०—ततश्च 'सावुस्थिति'रित्यनिष्टप्रसङ्गो 'वार्णादाङ्गं बलीय'इति वृद्धिप्रसङ्गात् । नन्वन्तरङ्गत्वाद्वार्णेपु कार्येषु कृतेषु प्रत्ययो भविष्यति। एवं तर्ह्येतदनेन समर्थवचनेन ज्ञाप्यते—अस्तीयं परिभाषा 'अकृतव्यूहाः पाणिनीया' इति । तेन 'पपुषः' 'तस्थुष'इत्यादि सिद्धं भवति । अत्राऽन्तरङ्गत्वात्पूर्वं कृतोऽपीडागम एतत्परिभाषावशान्निवर्तते। तत्र पपा वस् अस् इति स्थिते इट् च प्राप्नोति, संप्रसारणं च । तत्र संप्रसारणं बलीयः, प्रतिपदविधानादिति,—तत्र कृते वलादित्वाभावादिण्नास्तीति सिद्धं 'पपुष' इति ।

वाक्यस्येति । वृत्तिवाक्ययोरवान्तरार्थभेदेऽपि प्रधानार्थाऽभेदादैकार्थ्याद्वाक्यस्य वृत्त्या बाधः स्यात् । तथा ह्यौपगवमानयेत्युक्ते योऽर्थ आनीयते स एवोपगोरपत्यमानयेत्युक्ते । तत्र यथा गोशब्देन गावीशब्दो निवर्त्यते सत्यामपि गावीशब्दादधिकस्य स्त्रीत्वस्य प्रतिपत्तौ जातिलक्षणार्थभेदादेवं वाक्यस्यापि वृत्त्या निवृत्तिः स्यादिति तदभ्यनुज्ञानाय वावचनम् ॥ ८२ ॥

उ०—वक्ष्यति । नन्वन्तरङ्गत्वात्सवर्णदीर्घः स्यादत आह—वार्णादिति । क्रमेणाऽन्वाख्याने सिद्ध्यतीदमिति शङ्कते—नन्वन्तरङ्गत्वादिति । 'वार्णादाङ्ग'मिति तु समानकालप्राप्तिविषयमिति भावः । न कृतो विशिष्ट ऊहः—तर्कों निमित्तविनाशेऽपि कार्यस्थितिरूपो यथा दण्डनाशेऽपि घटस्थितिः स यैस्त इत्यर्थः । तदाह—पूर्वं कृतोऽपीत्यादि । प्रकारान्तरेण 'पपुष' इत्यस्य सिद्धिमाह—तत्रेत्यादि । प्रतिपदविधानादिति । अनवकाशत्वाऽभावाद्बाधकत्वाऽभावेऽपि पूर्वप्रवृत्तौ शीघ्रोपस्थितिकत्वेनेदमपि नियामकमिति भावः । अनेन पदस्य विभज्याऽन्वाख्याने 'अकृतव्यूह'परिभाषां विनाऽप्येतत्सिद्ध्या तस्या अनावश्यकत्वं सूचितम् । 'विषुण' इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तद्धिते तथेति भ्रमवारणाय सूत्रे न्यायसिद्धाऽर्थाऽनुवाद एव समर्थग्रहणमिति भाष्याशयः । अत एव 'सौस्थितौ पदस्य विभज्याऽन्वाख्यानेऽकृतसन्धेरपि प्रत्ययः स्या'दिति कैयटेनोक्तम् । अत एव विप्रतिषेधसूत्रे 'अन्तरङ्गं बलीय' इत्यस्य सौस्थितिर्वैद्लमाणिरिति प्रयोजनत्वेनोक्तम् । वार्णपरिभाषा त्वनित्यत्वान्न प्रवर्त्तत इति तदाशयः ।

नन्वर्थभेदादेव वृत्त्या वाक्यस्य न बाधोऽत आह—वृत्तीति । अवान्तरार्थभेदः-पदजन्योपस्थितिकालिकः । वाक्येऽपत्यशब्देनाऽपत्यत्वप्रकारिकोपस्थितिः, वृत्तौ त्वणा—उपगुसम्बन्धविशिष्टस्येति भावः । उभयविधार्थाऽभेद एव बाधकत्वं मन्यमानस्त्वाह—तत्र यथेति । वाक्यस्य निवृत्तिरित्यस्य—तस्य साधुत्वनिवृत्तिः स्यादित्यर्थः । अनेन समासीयमहाविभाषाऽपि कर्त्तव्येत्युक्तम्, तुल्यन्यायात् । अधिकस्य स्त्रीत्वस्येति । प्रवृत्तिनिमित्तादधिकस्य स्त्रीत्वस्यैवेत्यर्थः । गोशब्दस्तु पुंस्त्वसमानाधिकरणमपि गोत्वमाहेति भावः ॥ ८२ ॥

## प्राग्दीव्यतोऽण् ॥ ४ । १ । ८३ ॥

अयुक्तोऽयं निर्देशः, न हि तत्र+ कश्चिद्दीव्यच्छब्दः पठ्यते । कस्तर्हि ? दीव्यतिशब्दः । कथं तर्हि निर्देशः कर्तव्यः ? 'प्राग्दीव्यते'रिति ।

स तर्हि तथा निर्देशः कर्तव्यः प्राग्दीव्यतेरिति ? न कर्तव्यः । दीव्यतिशब्दे दीव्यच्छब्दोऽस्ति तस्मादेषा पञ्चमी । किं पुनः कारणं विकृतनिर्देशः क्रियते ? एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा—'एकदेशविकृतमनन्यवद्भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? एकदेशविकृतेषूपसङ्ख्यानं चोदितं* तन्न कर्तव्यं भवति ।

अथवा प्राक्शब्दोऽयं दिक्शब्दः, दिक्शब्दैश्च योगे पञ्चमी भवति†, तत्राऽ-

प्र०—प्राग्दीव्यतोऽण् । अयुक्त इति । प्रसिद्धन्यायकरणो युजिः । प्रसिद्धस्य च कदाचिद्विस्पष्टप्रतिपत्त्यर्थः प्रयोगो दृश्यते—न्यायेनायुक्तमिति । न हीति । दीव्यतिशब्दवाच्यस्यार्थस्यैवावधिभावो विवक्षितः । अर्थानामेवावधिमत्त्वस्येष्टत्वात् । समानजातीयानामवध्यवधिमद्भावस्य सुप्रसिद्धत्वात् । समुदाये चैकदेशस्य गुणभावादवधित्वानुपपत्तिरिति भावः । दीव्यच्छब्द इत्येकदेशेन समुदायो निर्दिश्यते । स चार्थप्रधान इत्यर्थस्याऽवधित्वं सम्पद्यते । तन्नेति । तेन पचत्वित्यादौ पदसंज्ञा सिद्धा भवति ॥ अथवेति । नैवेदमनुकरणं, किं तर्ह्यर्थ एवावधित्वेन

उ०—प्राग्दीव्यतो । केनायुक्त इत्याकाङ्क्षायामाह—प्रसिद्धेति । न तु जीवत्यादौ प्राणादिवद्धात्वर्थेऽन्तर्भूतः । तदेव ध्वनयन्नाह—प्रसिद्धस्य चेति । ननु तदेकदेशं'दीव्य'च्छब्दमनुकृत्य निर्देशोऽत आह—दीव्यतिशब्देति । समानजातीयेति । अवधिमत्त्वमर्थानामेवेष्टमित्यवधिरप्यर्थ एवेति भावः । नन्वेकदेशदीव्यदर्थस्यैवाऽवधित्वमस्त्वत आह—समुदाये चेति । एकदेशस्य समुदायस्वरूपनिष्पादकतया कथमपि नाऽर्थप्रतिपादकत्वमित्यर्थः ।

निर्दिश्यत इति । समुदायार्थो बोध्यत इत्यर्थः । एकदेशविकृतस्याऽन्यत्वाऽभावादिति भावः । स च-समुदायश्च । अर्थप्रधान इत्ययमेकदेशोऽप्यर्थप्रधान इति तात्पर्यम् ॥ तदाह-भाष्ये—विकृतनिर्देश इत्यादिना । इकाराऽभावरूपविकारेण निर्देश इत्यर्थः । भवत्येषेति । एवञ्चैकदेशविकृतोऽप्यर्थबोधक इति भावः । अनन्यवदित्यस्याऽन्यवन्नेत्यर्थः । तत्राऽन्यसादृश्यनिषेधेऽन्यत्वनिषेधः सुतराम् । एतेन 'एकदेशविकृतन्यायोऽपि स्थानषष्ठीनिर्दिष्ट एवे'त्यपास्तम् ॥ भाष्ये—अथवा प्राक्शब्दोऽयमिति । यद्यप्याद्यपक्षेऽपि दिक्शब्द एवाऽयं, तथापि प्रथमासामानाधिकरण्याऽभावबोधनायेदम् । अयं हि सूत्रे प्रथमान्तः सम्भाव्यते । तेन तु न सामानाधिकरण्यमिति भावः । एवञ्च प्रसज्यप्रतिषेधे शतृसम्भवः । पर्युदासस्य न्याय्यत्वदयं पक्ष एकदेशिनः । नैवेदमनुकरणमिति । नैकदेशोच्चारणमित्यर्थः । अनूच्चारितस्य—नाऽन्तरीयकतयोच्चारितस्य,—

+ तेन दीव्यति खनति जयति जितम् ४ । ४ । २

* एकदेशविकृतस्योपसंख्यानम् १ । १ । ५६ वा० ६ पृ० ४०८

† अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते २ । ३ । २९

प्रथमासमानाधिकरण इति [ कृत्वा ] शता भविष्यति‡ ।

अथ प्राग्वचनं किमर्थम् ?

**प्राग्वचनं सकृद्विधानार्थम् ॥ १ ॥**

प्राग्वचनं क्रियते सकृद्विधानार्थम् । सकृद्विहितः प्रत्ययो विहितो यथा स्यात्, योगे योगे तस्य ग्रहणं मा कार्षमिति ॥ नैतदस्ति प्रयोजनम् । अधिकारादप्येतत्सिद्धम् । 'अधिकारः प्रतियोगं तस्याऽनिर्देशार्थ'* इति योगे योग उपतिष्ठते ।

**अधिकारात्सिद्धमिति चेदपवादविषयेऽणप्रसङ्गः ॥ २ ॥**

अधिकारात्सिद्धमिति चेदपवादविषयेऽण् प्राप्नोति । 'अत इञ्' [ ४ । १ । ९५ ] अणपीत्यणपि प्राप्नोति ।

**तस्मात्प्राग्वचनम् ॥ ३ ॥**

तस्मात्प्राग्वचनं कर्तव्यम् ।

अथ क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञायते—प्राग्दीव्यतो याः प्रकृतय इति, आहोस्वित्प्राग्दीव्यतो येऽर्था' इति । किं चातः ? यदि विज्ञायते 'प्राग्दीव्यतो याः प्रकृतय'इति, स एव दोषोऽपवादविषयेऽणप्रसङ्ग इति । अथ विज्ञायते 'प्राग्दीव्यतो

प्र०—निर्दिश्यते । तत्र दिवेर्लटि कृते—'अर्था'दित्यनेन गम्यमानार्थत्वादप्रयुक्तेनाऽप्रथमान्तेन सामानाधिकरण्यात् प्रथमासमानाधिकरणे निषेधाद्वा लटः शत्रादेशः कृत इत्यर्थः ।

अथेति । एकदेशाक्षेपद्वारेण 'प्राग्दीव्यत'इति समुदाय आक्षिप्तः । अणित्येव वक्तव्यमधिकारार्थमिति मत्वा प्रश्नः । सकृद्विधानार्थमिति । प्राग्दीव्यतो येऽर्थास्तान् सर्वानपेक्ष्याऽनेनाणप्रत्ययः सकृद्विधीयत इत्यर्थः । विहितो यथा स्यादिति । सर्वेष्वर्थेषु विहितो यथा स्यादित्यर्थः । अण्वेति प्रतियोगमुपस्थाने द्वयोरेकविषयत्वाद्विकल्पः स्यान्न तु बाध्यबाधकभावः । स एव

उ०—करणमुच्चारणमित्यक्षरार्थः । शब्दमात्रतात्पर्यकत्वाऽभावेन मुख्याऽनुकरणत्वाऽभावात् । अर्थ एवेति । अविकृतस्वबोधकपदबोध्योऽर्थ एवेत्यर्थः । ननु अप्रथमान्तेन सामानाधिकरण्याऽभावात्कथं शतेत्यत आह—तत्रेति । निषेधाद्वेति । प्रसज्यप्रतिषेध इति भावः । प्रयुक्तेनैव सामानाधिकरण्यम्भवतीत्याद्योऽयुक्त इति बोध्यम् ।

नन्वेवं प्रतियोगमणित्यस्य कर्तव्यतया गौरवमत आह—अणित्येवेति । अणप्रत्ययः सकृद्विधीयत इति । सर्वेष्वर्थबोधकवाक्येष्वणप्रत्ययसम्बन्धः सकृद्बोध्यत इत्यर्थः । विहितशब्दे पौनरुक्त्यं वारयति—सर्वेष्वर्थेष्विति । सकृदुच्चारितः सर्वेष्वर्थवाक्येषु विहितो यथा स्यादिति भाष्याऽक्षरार्थः । अन्यथा सर्वत्रार्थ-

१-कश्चित ।　　‡ लटः शतृशानचावप्रथमासमानाधिकरणे ३ । २ । १२४

* १ । ३ । ११ वा० १ पृ० २२८

येऽर्थां' इति, न दोषो भवति। समानेऽर्थे प्रकृतिविशेषादुत्पद्यमान इञ्—अणं बाधते ॥ यथा न दोषस्तथाऽस्तु।

'प्राग्दीव्यतो येऽर्था' इति विज्ञायते। कुत एतत् ? तथा ह्ययं प्राधान्येनाऽर्थं प्रतिनिर्दिशति। इतरथा [ हि[1] ] बह्व्यस्तत्र प्रकृतयः पठ्यन्ते, ततो यां काञ्चिदेवाऽवधित्वेनोपाददीत।

अथवा पुनरस्तु 'प्राग्दीव्यतो याः प्रकृतय' इति। ननु चोक्तम्—'अपवादविषयेऽप्रसङ्ग' इति।

न वा क्वचिद्वावचनात् ॥ ४ ॥

न वैष दोषः। किं कारणम् ? क्वचिद्वावचनात्। यदयं क्वचिद्वावचनं करोति 'पीलाया वा' [ ४ । १ । ११८ ] 'उदश्वितोऽन्यतरस्याम्' [ ४ । २ । १९ ] इति तज्ज्ञापयत्याचार्यो 'नापवादविषयेऽणभवती'ति।

यद्येतज्ज्ञाप्यते नार्थः प्राग्वचनेन। अधिकारात्सिद्धम्। ननु चोक्तम्—'अधिकारात्सिद्धमिति चेदपवादविषयेऽप्रसङ्ग' इति। नैष दोषः। परिहृतमेतत्—'न वा क्वचिद्वावचना'दिति।

---

प्र०—दोष इति। सर्वाश्चेत्प्रकृतय इहापेक्ष्यन्ते तदैकविषयत्वादण इञादीनां च बाध्यबाधकभावो न स्यात्। समानेऽर्थ इति। अर्थापेक्षणे सत्यर्थेष्विदमणिवधानमिति प्रकृत्यन्तरे सावकाशोऽण्प्रत्यय एकस्मिन्नर्थे प्रकृतिविशेषादुत्पद्यमानेनेञादिना तक्रकौण्डिन्यन्यायेन बाध्यत इत्यर्थः। तथा हीति। यज्जातीयोऽवधिस्तज्जातीयोऽवधिमानिति भावः। प्राधान्येनेति। तात्पर्येणेत्यर्थः। यां काञ्चिदिति। 'प्राक्कुलत्थादण्' इति वक्तव्यं स्यादित्यर्थः। पीलाया वेति। सूत्रमप्येतदनारम्भणीयं स्यात्, द्व्यच इत्यनेनैव ढकः सिद्धत्वात्, अनेनाप्यणः। उदश्वित इति। 'उदश्वित' इत्येव

---

उ०—बोधकवाक्येऽणित्युच्चार्यं स्यादित्याह—योगे योग इति। सर्वाश्चेदिति। प्राग्दीव्यतः प्रकृतिष्वणित्येतत्सम्बध्यत इत्यर्थ इति भावः। भाष्ये—समानेऽर्थ इति—समानशब्द एकपर्यायः। ननु 'अर्थं प्रतिनिर्दिशती'त्येव सिद्धे 'प्राधान्येने'त्यधिकमत आह—तात्पर्येणेति। तद्ग्राहकमाह—भाष्ये—यां काञ्चिदिति। स्पष्टप्रतिपत्तय इत्याशयः। एवञ्चाऽवधिजातीय एवाऽवधिमानुचित इति अर्था एवावधिमन्त इति तात्पर्यम्। सूत्रमपीति। न केवलं 'वा'वचनमेवेत्यर्थः। मात्रागौरवेऽपि प्रतिपत्तिलाघ-

---

१—क्वचिन्न। २—'निमित्तत्वेन' पा०।

किं पुनः कारणमियानवधिर्गृह्यते न'प्राक्ठक'इत्येवोच्येत† ? एतज्ज्ञापयत्यर्थेऽप्ययं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? प्रकृतिविशेषादुत्पाद्यमान इञ्—अणं बाधते ॥ ८३ ॥

## दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ४ । १ । ८५ ॥

### वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् ॥ १ ॥

वाङ्मतिपितृमतां छन्दस्युपसङ्ख्यानं कर्तव्यम् । वाक्—वाच्यः । वाक् ॥ मति—मात्यः । मति ॥ पितृमत्—पैतृमत्यः ।

### पृथिव्या ञाऽञौ ॥ २ ॥

पृथिव्या ञाऽञौ वक्तव्यौ । पार्थिवा पार्थिवी‡ ।

### देवस्य यञञौ ॥ ३ ॥

देवस्य यञञौ वक्तव्यौ । दैव्यम् दैवम् ।

### बहिषष्टिलोपश्च यञ्च ॥ ४ ॥

बहिषष्टिलोपश्च यञ्च वक्तव्यः । बहिर्भवो बाह्यः ।

### ईकक् च ॥ ५ ॥

ईकक्च वक्तव्यः । बाहीकः* ।

प्र०—ठग्विधानाय कर्तव्यं स्यादनेनाणः सिद्धत्वादित्यर्थः । न प्राक् ठक इति । यद्यपीहानेकं ठग्ग्रहणमस्ति तथापि व्याख्यानात् 'प्राग्वहतेष्ठ'गित्ययमेवावधित्वेन ग्रहीष्यते । एतदिति । एवं हि स्पष्टो बाध्यबाधकभावो भवति ज्ञापकाश्रयणमन्तरेणैवेत्यर्थः ॥ ८३ ॥

दित्यदित्या । अणपवादो ण्यः । वाङ्मतीति । कुर्वादिषु मतिपितृमच्छब्दयोरपत्यार्थे भाषायामपि ण्यविधानार्थः पाठः । अनेन तु च्छन्दसि सर्वेषु प्राग्दीव्यतीयेषु ण्यविधिः । बहिष इति । टिलोपवचनम'व्ययानां भमात्रे टिलोप'इत्यस्यानित्यत्वज्ञापनार्थं, तेनारातीय इत्येवमादि

उ०—वाय तथा निर्देश इति भाष्यार्थं इत्याह—एवं हीति ॥ ८३ ॥

दित्यदित्या । प्राग्दीव्यतोऽर्थबोधकेष्विदमधिक्रियत इत्यादिप्रकारेणैषामप्यधिकारत्वं बोध्यम् । तेष्वयं भवतीति विधायकत्वमेवेत्यन्ये । ननु सत्युपसङ्ख्याने कुर्वादौ मतिपितृमतो पाठो व्यर्थः स्यादत आह—कुर्वादिष्विति । नन्वेवमत्र पाठो व्यर्थोऽत आह—अनेन त्विति । नन्वव्ययानामित्येव सिद्धेष्टिलोपविधानं व्यर्थमत आह—टिलोपेति । आरातीय इति प्रयोगो'ऽव्ययात्त्यप्'सूत्रे भाष्ये ॥ प्रत्ययविधौ तदन्तविधिप्रति-

† प्राग्वहतेष्ठक् ४ । ४ । १  ‡ टिड्ढाणञ्...ख्यपः ४ । १ । १५  * कितः ६।१।१६५

ईकञ् छन्दसि ॥ ६ ॥

ईकञ्छन्दसि वक्तव्यः+ । बाह्वीकमस्तु भद्रं वः ।

स्थाम्नोऽकारः ॥ ७ ॥

स्थाम्नोऽकारो वक्तव्यः । अश्वत्थामः* ।

लोम्नोऽपत्येषु बहुषु ॥ ८ ॥

लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः । उडुलोमाः शरलोमाः । बहुष्विति किमर्थम् ? औडुलोमिः शारलोमिः ।

सर्वत्र गोरजादिप्रसङ्गे यत् ॥ ९ ॥

सर्वत्र गोरजादिप्रसङ्गे यद्वक्तव्यः । गवि भवं गव्यम् । गोरिदं गव्यम् । गोः

प्र०—सिद्धं भवति । स्थाम्न इति । भाष्यकारवचनप्रामाण्यात्तदन्तस्य ग्रहणं, न केवलस्य । अश्वत्थाम इति । अश्वस्येव स्थाम–बलं–यस्येति बहुव्रीहिः । पृषोदरादित्वात्सकारस्य तकारः । अपत्यादावर्थेऽकारप्रत्ययः । 'नस्तद्धित' इति टिलोपः । उडुलोमा इति । बाह्वादिषु लोमञ्छब्दस्य पाठादिञि प्राप्तेऽकारो विधीयते । केचिदाहुरिञ्यपि कृते तस्य 'बह्वच इञः प्राच्यभरते'ष्विति लुकि प्रत्ययलक्षणेन 'स्वादि'ष्विति पदसंज्ञायां नलोपेन सिद्धं रूपम् । भसंज्ञा तु वर्णाश्रयत्वात्प्रत्ययलक्षणेन न भवति, 'न ङिसंबुद्ध्यो'रिति ङौ नलोपनिषेधाद्वा । तदेतदयुक्तम् । प्राच्यभरतगोत्रादन्यत्र लुगभावात् । किं चोडुलोमैरुडुलोमेभ्य एवमादौ सुब्विधौ नलोपस्याऽसिद्धत्वादैसादि न स्यात् । 'न लुमताङ्गस्ये'ति प्रत्ययलक्षणनिषेधाद्वा पदसंज्ञाया अभावः । यथा काश्यपेन प्रोक्तमधीयते काश्यपिन 'इत्यत्र 'प्रोक्ताल्लु'गित्यणो लुकि कृते नलोपो न भवति, एवमिहापि न स्यात् । सर्वत्रेति । नापत्य एव । यद्वा प्राग्दीव्यतीये, अन्यत्र च । तेन गवा चरति गव्य इत्यपि भवतीति केचिदाहुः । अजादिप्रसङ्ग इति किम् ? गोभ्यो हेतुभ्य आगतं गोरूप्यम्, गोमयम् ।

उ०—षेधादाह—भाष्येति । यद्यपि बलवाचिनः स्थामशब्दस्याऽपत्येन न योगस्तथापि जातादिना योगः सम्भवतीत्येवमुक्तम् । वार्तिके प्रातिपदिकं विशेष्यमादाय तदन्तविधिः । 'ग्रहणवते'त्यादिनिषेधाऽप्रवृत्तिर्भाष्योदाहरणात् । 'उगिद्वर्णग्रहणवर्ज'मित्यत्रेदमप्युपलक्षणीयमिति भावः । लोमन्शब्दस्येति । अत्र लोम्नोऽपत्येन योगाऽभावात्सामर्थ्यात्तदन्तविधिः । ननु भत्वेन बाधात्कथं पदत्वमत आह—भसंज्ञा त्विति । ननु यन्निमित्तको नलोपः प्रत्यासत्त्या तन्निमित्तके सुब्विधावेवाऽसिद्धत्वादैसादि परिहर्तुं शक्यमत आह—न लुमतेति । अणो लुकीति । न चाऽन्तर्वर्तिविभक्त्या पदत्वान्नलोपो दुर्वारः, तद्विषयतावलात्प्रोक्तार्थकप्रत्ययान्तेभ्यः सुबुत्पत्तेः पूर्वमेवाऽध्येत्रादिप्रत्ययस्वीकारेणाऽदोषात् । प्रकृते त्वन्तर्वर्तिविभक्त्या पदत्वस्य सत्त्वेन 'प्राच्यभरतगोत्रादन्यत्रे'त्याद्यसमाधिरेव युक्त इति ध्येयम् ।

प्राग्दीव्यतीयेषु पाठादेव नाऽपत्य एवेति सिद्धमत आह–यद्वेति । तदनुवाद एव 'सर्वत्रेती'ति

+ ञ्नित्यादिर्नित्यम् ६ । १ । १९७

* नस्तद्धिते ६ । ४ । १४४

स्वं गव्यम् । गौर्देवताऽस्य स्थालीपाकस्य गव्यः स्थालीपाकः ।

ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम् ॥ १० ॥

ण्यादयोऽर्थविशेषलक्षणादणपवादाद्भवन्ति पूर्वविप्रतिषेधेन । ण्यादीनामवकाशः—दितिर्देवताऽस्य दैत्यः । [ अदितिर्देवतास्य आदित्यः । ] अर्थविशेषलक्षणस्याणपवादस्याऽवकाशः—दुलेरपत्यं दौलेयः बालेयः† । इहोभयं प्राप्नोति—दितेरपत्यं दैत्यः । [ अदितेरादित्यः । ]

अपरस्याऽर्थविशेषलक्षणस्याणपवादस्याऽवकाशः—'अचित्तहस्तिधेनोष्ठक्' [ ४ । २ । ४७ ] आपूपिकम् शाष्कुलिकम् । ण्यादीनामवकाशः—बार्हस्पत्यम् प्राजापत्यम् । इहोभयं प्राप्नोति—वनस्पतीनां समूहो वानस्पत्यम् । ण्यादयो भवन्ति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । इष्टवाची परशब्दः‡ । विप्रतिषेधे परं यदिष्टं तद्भवति । दितिवनस्पतिभ्यामपत्यसमूहयोरिति[२] ॥ ८५ ॥

प्र०—ण्यादय इति । ण्यादयो येन नाप्राप्तिन्यायेनाऽण एवापवादाः । ढगादिभिरणपवादैस्तु सह संप्रधारणायां परत्वात्त एव स्युरिति वार्तिकारम्भः । अर्थविशेषो लक्षणं निमित्तं यस्य सोऽर्थविशेषलक्षणः । यस्त्वर्थसामान्यलक्षणोऽणपवादस्स परत्वाद्भवति, उष्ट्रपतिर्नाम पत्नं तस्येदमौष्ट्रपतम् । 'पत्राध्वर्युपरिषदश्चे'त्यत्र भवति, न तु ण्यः ।

बार्हस्पत्यमिति । बृहस्पतिर्देवता अस्येति ण्यः । दितिवनस्पतिभ्यामिति । 'इतश्चानिञ' इति दितेर्ढक् न भवति । वनस्पते'रचित्तहस्तिधेनोष्ठ'गिति ठक् न भवति ॥ ८५ ॥

उ०—तत्त्वम् ॥ ननु ण्यादीनामितराऽपवादत्वात्कथं विप्रतिषेधोऽत आह—ण्यादय इति । यस्त्वर्थसामान्येति । 'तस्येद'मिति सामान्येन विधानादिति भावः । न च 'पत्राद्वाह्ये' इत्युक्तेरयमप्यर्थविशेषलक्षण इति वाच्यं, सामान्यशब्देनैव तस्य विशेषस्याऽपि सङ्ग्रहात् । विशेषलक्षणत्वञ्च विशेषशब्देन बोधितार्थकप्रत्ययत्वमिति भावः । इतश्चेति । दितिवनस्पतिभ्यामपत्यसमूहयोर्ण्य एवेष्टः, न तु प्रत्ययान्तरमिति भाष्यार्थ इति भावः । दितिशब्देन भाष्येऽदितिरप्युपलक्षणीयः । एतेन दैतेयाऽऽदितेयौ भगवतो नेष्टाविति प्रतीयते । ङीषन्ताभ्यामपि लिङ्गविशिष्टपरिभाषया ण्य एवेति भाति ॥ ८५ ॥

१—कीलहार्नसंस्करणे इदं नास्ति । † इतश्चानिञः ४ । १ । १२२

‡ विप्रतिषेधे परं कार्यम् । १ । ४ । २ २—'इति' क्वचिन्न ।

## उत्सादिभ्योऽञ् ॥ ४ । १ । ८६ ॥

### अञ्प्रकरणे ग्रीष्मादच्छन्दसि ॥ १ ॥

अञ्प्रकरणे ग्रीष्मादच्छन्दसीति वक्तव्यम् । ग्रैष्मम् । अच्छन्दसीति किम् ? त्रिष्टुब्ग्रैष्मी ।

यद्यच्छन्दसीत्युच्यते, 'ग्रैष्मावेतौ मासौ' अत्र न प्राप्नोति । अच्छन्दसीत्युच्यते, नैतच्छन्दः समीक्षितं—काठकं कालापकं मौदकं पैप्पलादकं वा । किं तर्हि ? प्रत्ययार्थविशेषणमेतत् । 'न चेच्छन्दः प्रत्ययार्थो भवती'ति ॥ ८६ ॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ४ । १ । ८७ ॥

किमर्थं[1] नञ्स्नञावुच्येते, न नञेवोच्येत ? का रूपसिद्धिः ? पौंस्नम् । पुंसिति सकारान्तः, नञ्शब्दश्च प्रत्ययः । न सिध्यति । 'संयोगान्तस्य लोपः' [ ८ । २ । २३ ] इति लोपः प्राप्नोति ।

एवं तर्हि नैवाऽर्थो नञा, नापि स्नञा । अञ् प्रकृतः* सोऽनुवर्तिष्यते, नकार-

प्र०—उत्सा । ग्रीष्मादिति । छन्दःशब्देनेह वृत्तमुच्यते । तस्मिन्नभिधेयेऽञः प्रतिषेधादणेव भवति । त्रिष्टुबिति । ग्रीष्मो देवता अस्या इत्यण् । यदा तु ग्रीष्मे भवेति शेषार्थविवक्षा[2] तदा तु शैषिको ऋत्वण्सिद्ध एव । न चाऽञा शैषिकस्य बाधप्रसङ्गोऽर्थविशेषलक्षणानां तुल्यकक्ष्याणामेव प्रत्ययानां ण्यादिभिर्बाधनात् । ऋत्वण्तु कक्ष्यान्तरप्राप्तत्वादञो बाधकः । यथा हि 'कालाट्ठञ्'अणोऽपवादः, ठञोऽपि ऋत्वण् । ग्रैष्मावेताविति । शेषलक्षणादर्थादन्यत्र बोद्धव्यम् । शेषे तु ऋत्वणा भाव्यमित्युक्तम् ॥ ८६ ॥

स्त्रीपुंसाभ्याम् । लोपः प्राप्नोतीति । तत्र कर्तव्ये 'पूर्वत्रासिद्ध'मित्यनुस्वारस्याऽसिद्धत्वादनुस्वारस्यापि वा अयोगवाहस्य प्रत्याहारे द्रष्टव्यत्वात्संयोगान्तत्वादिति भावः । अञ् प्रकृत

उ०—उत्सादिभ्यो । वृत्तमिति । यस्य गायत्र्यादयो विशेषाः । ननु 'ण्यादयोऽर्थविशेषे'ति पूर्वविप्रतिषेधेन ऋत्वणोऽप्यञ्बाधकः स्यादत आह—न चाञेति । अर्थविशेषलक्षणत्वं, तुल्यकक्षत्वञ्च बाधे निमित्तं, तत्र ऋत्वणः शेषमात्रे विधानादाद्यं नास्ति । द्वितीयमपि नेत्याह—ऋत्वणिति ॥ ८६ ॥

स्त्रीपुंसाभ्यां । ननु अनुस्वारस्याऽच्त्वात्तस्य संयोगान्तत्वाऽभावोऽत आह—तत्र कर्तव्य इति । प्रत्याहारे—शर्प्रत्याहारे । 'स एव दोष'इत्येवकाराऽसङ्गतिं शङ्कते—ननु चेति । अकृतं—लोपादि । नन्वेवं

१—'किमर्थम्' पा० ।
२—'विवक्षितं' पा० ।
३—'इति' पा० ।
* उत्सादिभ्योऽञ् ४ । १ । ८६

श्चागमो वक्तव्यः । अथ नकारागमे सति किं पूर्वान्तः करिष्यते, आहोस्वित्परादिः ? किं चातः ? यदि पूर्वान्तः 'स्त्रैणाः' बहुषु लोपः प्राप्नोति† । स्त्रैणानां सङ्घः 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' [ ४ । ३ । १२७ ] इत्यण्प्राप्नोति । अथ परादिः 'पौंस्नम्' स एव दोषः संयोगान्तलोपः प्राप्नोति ।

अस्तु पूर्वान्तः । कथं स्त्रैणाः, स्त्रैणानां सङ्घ इति ? उभयत्र‡ लौकिकस्य गोत्रस्य ग्रहणं, न चेदं लौकिकं गोत्रम् । ईकारस्तर्हि प्राप्नोति+ । इष्टमेवैतत्सङ्गृहीतम्, स्त्रैणी पौंस्नीत्येव भवितव्यम् । एवं हि सौनागाः पठन्ति—'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यान'मिति । टिलोपस्तर्हि प्राप्नोति× । नुग्वचनान्न भविष्यति । भवेदिह नुग्वचनान्न स्यात्स्त्रैणमिति । इह तु खलु पौंस्नमिति नुग्वचनादेव प्राप्नोति ।

तस्मान्नञ्स्नञौ वक्तव्यौ ।

प्र०—इति । तत्र भत्वात्पदत्वाभावात्संयोगान्तलोपाऽप्रसङ्गः । बहुषु लोप इति । 'यञञोश्चे'-त्यनेन । अथ परादिरिति । परादौ नशब्दः संपद्यत इत्यङ्कार्याभावः ।

ननु च तद्भक्तस्य तद्ग्रहणेन ग्रहणात्परादावपि नकारेऽङ्कतं प्राप्नोति । एवं तर्हि अश्वासावञित्याश्रयणाददोष इति मन्यते । पररूपं च शकन्ध्वादित्वात्सौत्रत्वाद्वा निर्देशस्य भवति । उभयत्रेति । 'यञञोश्चे'त्यत्र 'यस्कादिभ्यो गोत्रे' इत्यनुवर्तते । 'सङ्घाङ्के'त्यत्रापि 'गोत्रचरणाद्वुञ्'मित्यतः । ऋषिप्रजनश्च लोके 'गोत्र'मित्युच्यते । स्त्री च नर्षिर्नापि पुंशब्दवाच्यं सामान्यमिति भावः । टिलोपस्तर्हीति । 'प्रकृत्यैका'जित्यत्रेष्ठेमेयःस्वित्यनुवर्तनात्प्रकृतिभावो नास्ति । इह तु खल्विति । 'यं विधिं प्रती'ति 'यस्य तु विधे'रिति च न्यायाभ्यामित्यर्थः । ननु च स्त्रीशब्दस्यापि

उ०—सवर्णदीर्घः स्यादत आह—पररूपञ्चेति । ऋषिप्रजन इति । प्रवराऽध्यायप्रसिद्ध इत्यर्थः । तस्यैव लोके गोत्रत्वेन व्यवहारात् । 'गोत्राऽवयवा'दिति सूत्रे भाष्ये स्फुटमेतत् । नापि पुंशब्दवाच्यं सामान्यमिति । 'ऋषि'रिति शेषः । भाष्ये—इष्टमेवैतदिति । न च गोत्राऽपत्यस्त्रियामन्तत्वे शार्ङ्गरवादिङीन्, नञाद्यन्तत्वे जातिलक्षणङीष्, ङीपः परत्वादिति स्वरे विशेष इति वाच्यं, जातिलक्षणेऽपि ऋषिप्रजनस्यैव गोत्रस्य ग्रहणात् । 'अवन्ती'त्यादौ तु तदारोपेण जातिकार्यमित्यदोषात् । न च द्वयोः स्त्रियोर्भवो द्वैस्त्रीण इत्यादौ द्विगोर्लुगापत्तिः, प्रत्ययविधौ तदन्तविध्यभावेन तादृशप्रयोगस्यैव दुर्लभत्वात् । भाष्ये—नुग्वचनादिति । 'यस्येति'-लोपेनैव सिद्धे नुग्विधानसामर्थ्यादित्यर्थः ।

† यञञोश्च २ । ४ । ६४

‡ यञञोश्च २ । ४ । ६४; सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ४ । ३ । १२७

+ टिड्ढाणञ्......क्वरपः ४ । १ । १५  × नस्तद्धिते ६ । ४ । १४४

अथेमौ नञ्स्नञौ प्राग्भवनात्, आहोस्वित्प्राग्वतेः† ? कश्चात्र विशेषः ?

नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधः ॥ १ ॥

नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधो वक्तव्यः—स्त्रीवत् पुंवदिति । किं पुनः कारणं न सिध्यति ? इमौ नञ्स्नञौ प्राग्भवनादित्युच्येते, तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'वतेः प्रा'गिति वक्ष्यामि ।

वतेः प्रागिति चेद्भाव उपसङ्ख्यानम् ॥ २ ॥

वतेः प्रागिति चेद्भावः‡ उपसङ्ख्यानं कर्तव्यम्—स्त्रीभावः स्त्रैणम्, पुंभावः पौंस्नमिति । सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेध' इति । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न वत्यर्थे नञ्स्नञौ भवत इति, यदयं 'स्त्रियाः पुंव'दिति × निर्देशं करोति । एवमपि स्त्रीवदिति न सिध्यति । योगापेक्षं ज्ञापकम् ॥ ८७ ॥

प्र०—नुगेव लोपनिमित्तम्, अन्यथा श्रीर्देवता अस्येति श्रायमित्यादाविव यस्येति लोपात्परत्वाद्वृद्धिः स्यादिति चिन्त्यमेतत् । पौंस्ने दोषप्रसङ्गाद्वा स्त्रैणे नाकारि सूक्ष्मेक्षा । वत्यर्थे इति । प्राग्भवनात्सर्वेष्वर्थेषु नञ्स्नञौ प्रकृतिविशेषाद्विधीयमानौ प्रकृत्यन्तरेषु सावकाशस्य वतेर्बाधकौ प्राप्नुत इति भावः । योगापेक्षमिति । अयं योगो वत्यर्थे न प्रवर्तते इति पुंवदिति निर्देशेन ज्ञाप्यत इत्यर्थः । त्वतलोस्तु नञ्स्नञ्भ्यां समावेशाय 'आ च त्वा'दित्यत्र यत्नः करिष्यते । तेन स्त्रीत्वं स्त्रीता, पुंस्त्वं पुंस्तेत्यपि भवति ॥ ८७ ॥

उ०—सूक्ष्मेक्षेति । परे तु एतद्भाष्यप्रामाण्याद्वृद्धेः पूर्वविप्रतिषेधेन लोपो बलीयान् । श्रायमिति यदि प्रामाणिकं तदा वर्णव्यत्ययेन साधु । लोके तु 'श्रम्' इत्येव साधु । 'नाऽग्लोपी'ति सूत्रेऽगिति प्रत्याहारग्रहणेन सामान्यत एव वृद्धेर्लोपस्य बलवत्त्वज्ञापनाच्च, 'कसोमाट्ट्य'णिति सिद्धे 'कस्ये'दितीत्त्वविधानाच्चेत्याहुः । नन्वकारसहितनगागम एवास्तु, तत्र 'यस्येति'लोपे तस्य स्थानिवत्त्वाट्टिलोपाऽप्राप्तेरिति चेन्न; असन्देहाय प्रतिपत्तिलाघवाय च तयोक्तेः, तादृशागमस्याऽदृष्टत्वाच्चेत्याहुः । ननु 'प्राग्भवना'दित्युक्तेर्भावे नञ्स्नञौ सिद्धौ, परन्तु ताभ्यां त्वतलोर्बाधात्तौ न स्यातामत आह—त्वतलोस्त्विति ॥ ८७ ॥

† धान्यानां भवने क्षेत्रे खञ् ५ । २ । १; तेन तुल्यं क्रिया चेद्वतिः ५ । १ । ११५
‡ तस्य भावस्त्वतलौ ५ । १ । ११९ × स्त्रियाः पुंवद् भाषितपुंस्काद्··· प्रियादिषु ६।३।३४

## द्विगोर्लुगनपत्ये ॥ ४ । १ । ८८ ॥

इह कस्मान्न भवति—त्रैविद्यः पाञ्चनदः षाट्कुल इति ? इह तावत्त्रैविद्य इति नैवं विज्ञायते तिस्रो विद्या अधीते त्रैविद्य इति । कथं तर्हि ? त्र्यवयवा विद्या त्रिविद्या, त्रिविद्यामधीते त्रैविद्य इति ।

इहापि पाञ्चनद इति नैवं विज्ञायते पञ्चसु नदीषु भवः पाञ्चनद इति । कथं तर्हि ? पञ्चानां नदीनां समाहारः पञ्चनदम्*, पञ्चनदे भवः पाञ्चनद इति ।

षाट्कुल इति नैवं विज्ञायते षट्सु कुलेषु भवः षाट्कुल इति । कथं तर्हि ? षण्णां कुलं षट्कुलम्, षट्कुले भवः षाट्कुल इत ।

अजादिग्रहणं च कर्तव्यम् । इह मा भूत्—पञ्चगर्गरूप्यम् पञ्चगर्गमयट्† ।

प्र०—द्विगोर्लुग । त्रैविद्य इति । द्विगोरत्राऽण् प्रत्यय इति मन्यते त्र्यवयवेति । विद्यात्रयरूपस्य समुदायस्य विद्यात्वं विवक्षितमित्यर्थभेदो नास्ति । अव्ययविकन्यायांच द्विगवभावः । पञ्चनदमिति । 'नदीभिश्चे'ति समाहारेऽव्ययीभावः । 'कृष्णोदकपाण्डुसंख्यापूर्वाया' इत्यच समासान्तः । षण्णामिति । आदिपुरुषाणां कुलमिति कुलसामान्यस्य विवक्षितत्वान्न एवार्थ. षट्सु कुलेषु भव इति स एव षण्णां कुले भव इतीति भावः । पञ्चगर्गरूप्यमिति । पञ्चभ्यो गर्गेभ्यो हेतुभ्य आगतमिति द्विगुः । ततो रूप्यमयटौ ।

उ०—द्विगोर्लुग । द्विगोरत्रेति । तिस्रो विद्या अधीत इति विग्रह इति भावः । ननु 'त्र्यवयवे'ति विग्रहे 'विद्यात्रयमधीते' इत्यर्थाऽसम्प्रत्ययादर्थभेदोऽत आह—विद्यात्रयरूपस्येति । नन्वेवमपि यदा तद्धितार्थे द्विगुस्तदा त्रिविद्य इति स्यादत आह—अव्ययविकेति । ननु पञ्चनदात्समाहारद्विगोः 'तद्धिते'ति लुक्स्यादत आह—नदीभिश्चेति । सङ्ख्यापूर्वाया इतीति । तत्र 'भूमे'रित्यवयुत्याऽनुवादः, 'अष्प्रत्यन्वे'ति योगविभागसिद्धत्वादिति भावः । योगविभागाऽभावे तु पृषोदरादित्वादुत्तरपदान्तस्याऽकारादेशः पद्मनाभवदित्यन्ये ।

कुलपदस्य समूहपरत्वभ्रमवारणाय-'षण्णा'मित्यस्य व्याख्या-आदिपुरुषाणामिति । कुलं—सन्तानसमूहः । नन्वेवमादिपुरुषभेदेन कुलभेदात्कुलानीति युक्तमत आह—कुलसामान्यस्येति । एवं च विग्रहद्वयेऽपि नाऽर्थभेद इत्याह—स एवेति । ततो रूप्येति । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' 'मयट् च' इति विहितौ । नन्वजादिग्रहणं 'द्विरथ' इत्यत्र 'तस्येद'मित्यधिकारविहितयतोऽपि लुक्—'येन विधिः' 'तदन्ती'ति सूत्रस्थभाष्यसंमतो न सिध्येदिति चेन्न; 'अजादिग्रहणं कर्तव्य'मिति भाष्यस्य—उत्तरसूत्रादचीत्यपकृष्य वाक्यभेदेन व्याख्येयं, तेन हलादेरपि कस्यचिल्लुगिति तात्पर्येणाऽदोषात् ।

भाष्ये—द्विगुनिमित्तं य इति । यद्यप्युत्तरवार्त्तिके 'अतन्निमित्ता'दिति पञ्चमीदर्शनेन तन्निमित्तग्रहणमपि पञ्चम्यन्तमेव एवाऽग्रे तन्निमित्तपदे समासविकल्पशङ्कापरभाष्ये पञ्चम्यन्तत्वं दृश्यते, तथापि तत्र

* नदीभिश्च २ । १ । २०   † हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः; मयट् च ४ । ३ । ८१; ८२

द्विगोर्लुकि तन्निमित्तग्रहणम् ॥ १ ॥

द्विगोर्लुकि तन्निमित्तग्रहणं कर्तव्यम् । द्विगुनिमित्तं यस्तद्धितस्तस्य लुग्भवतीति वक्तव्यम् । इह मा भूत्—पञ्चकपालस्येदं खण्डं पाञ्चकपालमिति‡ ।

अर्थविशेषाऽसम्प्रत्ययेऽतन्निमित्तादपि ॥ २ ॥

अर्थविशेषाऽसंप्रत्ययेऽतन्निमित्तादपीति वक्तव्यम् । किं प्रयोजनम् ? पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । पञ्चकपाल्यां संस्कृत इत्यपि विगृह्य पञ्चकपाल इत्येव यथा स्यात् ।

अथ क्रियमाणेऽपि तन्निमित्तग्रहणे कथमिदं विज्ञायते—तस्य निमित्तं तन्निमित्तम्, तन्निमित्तादिति, आहोस्वित्स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति । किं चातः ? यदि विज्ञायते 'तस्य निमित्तं तन्निमित्तम्, तन्निमित्ता'दिति, क्रियमाणेऽपि तन्निमित्तग्रहणेऽत्र प्राप्नोति पञ्चकपालस्येदं खण्डमिति । अथ विज्ञायते 'स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्ता'दिति, न दोषो भवति । यथा न दोषस्तथाऽस्तु ।

'स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्ता'दिति विज्ञायते । कुत एतत् ?

प्र०—द्विगुनिमित्तमिति । द्विगोर्निमित्तमिति षष्ठीसमासः । क्वचिद्व 'द्विगुनिमित्त' इति पाठः । तत्र द्विगोर्निमित्तं यस्मिंस्तद्धिते तदीयो योऽर्थः स द्विगुनिमित्त इति व्याख्येयम् । पञ्चकपालस्येति । पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे द्विगुः । ततोऽण् । तस्यानेन लुक् । पुनस्तस्येदमित्यण् । तस्य द्विगुं प्रत्यनिमित्तत्वाल्लुगभावः ॥ अर्थविशेषाऽसंप्रत्यय इति । तद्धितहेतुकाद्व द्विगोर्लुकि योऽर्थः प्रतीयते स एवाऽतद्धितहेतुकादपि यदीत्यर्थः । समाहारद्विगुश्च तद्धितार्थ इति द्विगुना समानार्थ इति तत इदं लुग्विधानम् । तस्येति । तद्धितस्य । स निमित्तमिति । स तद्धितोऽर्थद्वारेण निमित्तं यस्येत्यर्थः । यदयमिति । पञ्चक-

उ०—बहुव्रीहिं सिद्धान्तमभिप्रेत्य फलितार्थकथनमिदं तदाह—षष्ठीसमास इति । बहुव्रीहौ सर्वस्याऽपि द्विगोर्विहितस्य द्विगुनिमित्तत्वेन पाञ्चकपालादावपि लुगापत्तेस्तन्निमित्तग्रहणवैयर्थ्यापत्तिर्नपुंसकत्वाऽनापत्तिश्चेति भावः । निमित्तपदार्थमाह—तदीयो य इति । स इति । तद्धित इत्यर्थः । सर्वस्याऽप्यर्थवत्त्वादर्थविशेषाऽसम्प्रत्यय इत्यनुपपन्नमत आह—तद्धितहेतुकादिति । अतद्धितेति । समाहारद्विगोरित्यर्थः । 'समाहारद्विगुश्च तद्धितार्थद्विगुने'ति पाठः । समाहारद्विगुप्रकृतिकतद्धितान्तश्च—तद्धितार्थद्विगुप्रकृतिकतद्धितान्तेन समानार्थमित्यर्थः । तस्येति तच्छब्देन यदि द्विगुः परामृश्यते, तदा द्विगुनिमित्ताद्द्विगोरित्यर्थः स्यात्स चाऽयुक्त इत्यत आह—तद्धितस्येति । तस्माद्विधीयमानत्वेन द्विगोस्तद्धितनिमित्तत्वमिति भावः । नन्वानन्तर्यादिनि-

‡संस्कृतं भक्षाः ४ । २ । १६; तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१; तस्येदम् ४ । ३ । १२०; द्विगोर्लुगनपत्ये ४ । १ । ८८ ।

'अर्थवद्ग्रहणात् सिद्धम्' । अर्थवतो लकारस्य ग्रहणम्, न चैषोऽर्थवान् ।

अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु ॥ २ ॥

अर्थवद्ग्रहणात्सिद्धमिति चेत्तन्न । किं कारणम् ? वर्णग्रहणमिदम्, न चैतद्वर्णग्रहणेषु भव'त्यर्थवद्ग्रहणे नानर्थकस्ये'ति ।

तस्माद्विशिष्टग्रहणम् ॥ ३ ॥

तस्माद्विशिष्टस्य लकारस्य ग्रहणं कर्तव्यम् ॥ न कर्तव्यम् । 'धातोः' [ ३ । १ । ९१ ] इति वर्तते ॥ एवमपि शाला माला मल्ल इत्यत्रापि[2] प्राप्नोति । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ एवमपि नन्दनः* अत्रापि[2] प्राप्नोति । इत्संज्ञाऽत्र बाधिका भविष्यति† । इहापि तर्हि बाधेत—पचति पठतीति । इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति । इदमस्तीत्कार्यं 'लिति प्रत्ययात्पूर्वमुदात्त' भवती'त्येष स्वरो यथा स्यात्‡ । 'लिती'त्युच्यते न चाऽत्र लितं पश्यामः । अथापि कथंचिद्वचनाद्वा-

प्र०—निर्देशः । वर्णनिर्देशेषु च विद्यमानाप्यर्थवत्ता शब्देन नाश्रिता, वर्णरूपमात्रस्याश्रयणात् । तथा च यस्येति लोपोनर्थकस्यापि भवति—दैवदत्तिरिति । तस्मादिति । भावाद्यर्थाभिधायिनो लस्येति वक्तव्यमित्यर्थः । धातोरिति वर्तत इति । विहितविशेषणं च धातुग्रहणमाश्रीयत इत्यभिचिलभ्यत इत्यत्रापि न भवति । शालेति । शामामलिभ्य औणादिको लन्प्रत्ययः । इत्संज्ञात्रेति । तस्यां च सत्यां लोपे च कृते स्थान्यभावादल्विधित्वाच्च स्थानिवद्भावाऽभावादादेशो न भविष्यतीत्यर्थः । इहापीति । ततश्चात्राप्यादेशा न स्युरित्यर्थः । लितीत्युच्यत इति । ल इदस्येति बहुव्रीहिराश्रितः । अत्र च लस्य लोपे कृते न कश्चिल्लकार इत्संज्ञकः प्रत्ययोऽस्तीत्यर्थः । अथापीति ।

उ०—विहितविशेषणमिति । न चैवं 'शालादिषु प्राप्नोती'ति भाष्याऽसङ्गतिः, समुदायस्य ततो विधानेऽपि निर्दिष्टस्य लकारस्य वर्णस्य ततोऽविधानादिति वाच्यम्, समुदायविधानेऽवयवविधानस्याऽपि सत्त्वमित्यभिमानेन एवमपीत्यादिभाष्यस्यैकदेशयुक्तित्वेनाऽसङ्गतेः । एतेन ल्युट् धातोर्विहितो न तु लकार इति परास्तम् । अथाऽपिकथञ्चिदिति । अस्य 'लित्स्वरार्थमित्त्वं स्या'दितिशेषः । तदेवाह—ल एवेदिति । तत्रेत्संज्ञासामर्थ्याल्लोपात्पूर्वं, लोपेऽपि स्थानिवत्त्वाद्वा स्वर इति भावः । तत्पुरुषत्वे खलादौ कथं स्वर इति चिन्त्यम् । इत्संज्ञकलस्य परत्वाऽभावात्, तदव्यवहितपूर्वस्य तदनिष्टेश्च । तस्माद्बहुव्रीहिरेव । 'अथाऽपि कथञ्चि'दिति

१—वार्तिकमिति केचित् ।

२—'अपि' क्वचिन्न ।

* नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४

† लशक्वतद्धिते; तस्य लोपः १ । ३ । ८; ९ ‡ लिति ६ । १ । १९३

ऽनुवर्तनाद्वेत्संज्ञकानामादेशः स्यादेवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—'न लादेशो[1] लित्कृतं भवती'ति, यदयं णलं लितं करोति।

अथाप्युणादयो व्युत्पाद्यन्ते, एवमपि न दोषः। क्रियते विशिष्टग्रहणं 'लस्ये'ति।

लादेशो वर्णविधेः पूर्वविप्रतिषिद्धम् ॥ ४ ॥

लादेशो वर्णविधेर्भवति पूर्वविप्रतिषेधेन*। लादेशस्यावकाशः—पचतु पठतु। वर्णविधेरवकाशः—दध्यत्र मध्वत्र। इहोभयं प्राप्नोति—पचत्वत्र पठत्वत्रेति। लादेशो भवति पूर्वविप्रतिषेधेन ॥ स तर्हि पूर्वविप्रतिषेधो वक्तव्यः? न वक्तव्यः।

उक्तं वा ॥ ५ ॥

किमुक्तम्? 'लादेशो वर्णविधे'रिति† ॥ ७७ ॥

---

प्र०—ल एवेत्–लिदित्येवं तत्पुरुषो यद्याश्रीयेत तथापि लस्येति स्थानित्वेनाश्रयणात्सत्यामपीत्संज्ञायां लोपो न क्रियते। अनुवर्तनाद्वेति। भावादीनामनुवृत्त्या भावकर्मकर्तृवाचिनो लस्यादेशः। न च लोपे सति भावाद्यर्थाभिधायित्वं संभवतीत्यकृतलोपानामेव लकाराणामादेशाः करिष्यन्ते। ज्ञापकात्तु लित्स्वरो न भविष्यतीत्यर्थः। क्रियत इति। अनुनासिको लकारः स्थानित्वेनोपात्त इत्यर्थः। अथवा ल् अस्य लस्येत्येवं निर्देशः कृतः। अस्येति सर्वनाम्ना भावाद्यर्थाभिधायी परामृश्यते। पचत्वत्रेति। वाक्यस्य विभज्यान्वाख्यानं क्रियत इत्येवमुपन्यासः। लादेशो वर्णविधेरिति। विप्रतिषेधसूत्रे वहिरङ्गपरिभाषाया इदं प्रयोजनमित्यर्थः ॥ ७७ ॥

---

उ०—भाष्यस्य 'व्यपदेशिवद्भावेने'त्याशय उचितः। 'वचनाद्वे'त्यस्य'त्वे यद्यप्यादेशा न स्युस्तथाऽपी'त्यादिस्त दाह–तथाऽपि लस्येति। एवञ्चेत्संज्ञायामप्यादेशसिद्धिर्भावादिविहितस्य लस्य, ल्युटि तु दोषः। भाष्ये—एवमपीति। एवञ्चाऽत्र प्रयोजनाऽभावादित्वाऽभावेन लादेशस्वराऽभावौ सिद्धौ। ल्युटि तु इत्संज्ञया लोपेन च बाधान्न दोष इति भावः। ल् अस्येति। अत्र पक्षे 'ल्' इति लुप्तषष्ठीकम्, 'अस्ये'ति समानाऽधिकरणं तस्य विशेषणम्। वस्तुतो'धातो'रित्यनुवृत्त्या धातुविहितलकारस्य वर्णस्य तत्र ग्रहणम्। अकारस्योच्चारणार्थत्वात्। शालादौ तु न व्यञ्जनमात्रं धातोर्विहितं, किन्त्वकारविशिष्ट इति भाष्यार्थः। भाष्ये—लादेशो वर्णविधेरिति। लादेशादेश इत्यर्थः। ननु वर्णविधिलादेशयोर्युगपत्प्राप्त्यभावेन विप्रतिषेधाऽसङ्गतिरत आह—वाक्यस्येति ॥ ७७ ॥

---

१—'न लादेशेषु' पा०।

७७ इति वर्णविधिः।

* एङः ३।४।८६ इति लादेशः; इको यणचि ६।१।

† १।४।२ वा० २०

# टित आत्मनेपदानां टेरे ॥ ३ । ४ । ७९ ॥

## टित एत्व आत्मनेपदेष्वानप्रतिषेधः ॥ १ ॥

टित एत्व आत्मनेपदेष्वानस्य प्रतिषेधो वक्तव्यः । पचमानः यजमानः । टित इत्येत्वं प्राप्नोति ।

## उक्तं वा ॥ २ ॥

किमुक्तम् ? 'ज्ञापकं वा सानुबन्धकस्यादेशवचन इत्कार्याभावस्ये'ति‡ ।

नैतदस्त्युक्तम् । एवं किल तदुक्तं स्यात्, यद्येवं विज्ञायेत—टित् आत्मनेपदम् टिदात्मनेपदम् टिदात्मनेपदानामिति । तच्च न । टितो लकारस्य यान्यात्मनेपदानीत्येवमेतद्विज्ञायते ॥ अवश्यं चैतदेवं विज्ञेयम् । टित् आत्मनेपदम् टिदात्मनेपदम् टिदात्मनेपदानामिति हि¹ विज्ञायमाने 'अकुर्वि' अत्रापि प्रसज्येत× । नैष टित् । कस्तर्हि ? ठित् । स चावश्यं ठित्कर्तव्यः, आदिर्मा भूदिति+ ।

कथं 'मिटोऽत्' [ ३ । ४ । १०६ ] इति ? इठोऽदिति वक्ष्यामीति । तच्चावश्यं वक्तव्यम्, पर्यवपाद्यस्य मा भूत्—लविषीष्ट* ॥ इह तर्हि 'इषमूर्जमहमित आदि'—'आतो लोप इटि च' [ ६ । ४ । ६४ ] इत्याकारलोपो न प्राप्नोति । तस्माड्डिदेषः ।

प्र०—टित आत्म । यद्येवमिति । यदि 'टित' इत्येकवचनं बहुवचनप्रसङ्गे व्यत्ययेन क्रियेतेत्यर्थः । अथवा केचिट्टितामित्येव पठन्ति, तदाश्रयेणैतदुक्तम् । अकुर्वीति । लङः स्थाने उत्तमैकवचनमिट् । पर्यवपाद्यस्येति । पर्यवपाद्रः—रूपान्तरापत्तिः । तत्र साधुरागमः—पर्यवपाद्यः । 'तत्र साधु'रिति यत् । आदीति । दाञो लङ उत्तमैकवचनम् । शपः श्लुः, 'द्विर्वचनप्रसङ्गे छन्दसि वेति वक्तव्य'मिति द्विर्वचनाभावः । यदि ठिदिट् स्यात्तदा 'आतो लोप इटि चे'त्याकारलोपो न

उ० – टित आ । भाष्ये—ज्ञापकं वेति । 'गाङ् लिटी'ति सूत्रे इदमुक्तम् । नैतदिति । एतदुक्तमत्र नास्तीत्यर्थः । तदुक्तमेवं किलाऽत्र स्यादित्यन्वयः । ननु भिन्नवचनानां कथं सामानाधिकरण्येन संबन्धोऽत आह—यदि टित इति । टिदात्मनेपदानामिति भाष्यस्य तदर्थकं यदि विज्ञायत इत्यर्थः । भाष्यप्रामाण्यात्तादृश एवाष्टाध्यायीपाठ इत्यन्ये । भाष्ये—आदिर्मा भूदिति । अमीवाऽत्रापि 'परश्चे'त्यस्याऽऽप्रवृत्ते रिति भावः । तत्र साधुरागम इति । योगरूढिरिति भावः । नन्वस्य इट आर्द्धधातुकत्वाऽभावादालोपो न स्यादत

‡ २ । ४ । ४९ वा० २

१—क्वचिन्न ।

× तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३ । ४ । ७८

+ आद्यन्तौ टकितौ १ । १ । ४६

२—आगमस्य=इट इत्यर्थः । व्युत्पत्तिः प्रदीपे द्रष्टव्या ।

* लिङः सीयुट् ३ । ४ । १०२; आर्धधातुकस्येड्वलादेः ७ । २ । ३५

आदिस्तर्हि कस्मान्न भवति ? सप्तदशादेशाः स्थानेयोगत्वं प्रयोजयन्ति तानेको नोत्सहते विहन्तुमिति कृत्वाऽऽदिर्न भविष्यति । पर्यवपाद्यस्य तर्हि कस्मान्न भवति—लविषीष्टेति ? 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति ॥ इदं तर्ह्युक्तं—'प्रकृतानामात्मनेपदानामेत्वं भवती'ति* । के च प्रकृताः ? तादयः† ।

आने मुग्ज्ञापकं‡ त्वेत्वे टित्तङामिशिसीरिचः+ ।
डारौरःसु× टिदाटितः प्रकृते तद्गुणे कथम्†† ॥

प्र०—स्यात् । अत्र च 'छन्दस्युभयथे'त्यार्द्धधातुकत्वमिट एष्टव्यम् । आर्द्धधातुक इत्याल्लोपविधानात् । सप्तदशेति । लस्येत्येका षष्ठी, सा यद्यवयवावयविसंबन्धे स्यात्तदा इट एवानुग्रहः स्यान्न तिबादीनाम्, तस्माद्भूयसां स्थान्यादेशसंबन्धस्य प्रयोजकत्वा'ल्लस्ये'ति स्थानेयोगा षष्ठीत्यादेश एवेड्भवति न त्वागमः । असिद्धमिति । वलाद्यार्द्धधातुकापेक्षणादङ्गापेक्षत्वाच्च बहिरङ्ग इडागमः । 'इटोऽ'दित्यद्भावस्तु लिङसंबन्धीडपेक्षणादन्तरङ्गः । तत्र कर्तव्ये आगमस्यासिद्धत्वादद्भावाऽभावः । प्रकृतानामिति । तिबादय इहानुवर्तन्ते, तैरात्मनेपदानि विशेष्यन्ते । अथवा प्रकरणस्य विशेषस्मृतिहेतुत्वात्प्रकृतान्येवात्मनेपदानीहात्मनेपदशब्देनोच्यन्ते । ज्ञापकमप्याह—आने मुगिति । यद्येत्वमानस्य स्या'दानयि मु'गिति वक्तव्यं स्यादित्यर्थः । टित्तङामिति । टितः स्थाने ये तङः तेषामेत्वं न त्वानस्यापि । अथाध्येतेत्यादौ डारौरसामेत्वं कस्मान्न भवतीत्याह—इशिसीरिच इति । 'लिटस्तझयोरेशिरेच्' 'थासः से' इत्येताभ्यां सूत्राभ्यां लाघवाय

उ०—आह—अत्र चेति । स्थान्यादेशसंबन्धस्येति । स्थान्यादेशसंबन्धं प्रति भूयसां प्रयोजकत्वात्स्थानषष्ठीत्यन्वयः । टकारस्तु 'इटोऽदि'त्यत्र विशेषणार्थः । वलाद्यार्द्धधातुके इति । अनेन प्रकृतिप्रत्ययोभयाऽपेक्षत्वमागमस्य दर्शयति । भाष्ये—इदन्तर्ह्युक्तमिति । इदमपि 'गाङ्कुटादि'त्यत्रैवोक्तम् । तैरात्मने इति । तिबादीनां मध्ये यान्यात्मनेपदानीत्यर्थः । न च तन्मध्ये शानज्निविष्ट इति भावः । अनुवृत्तिं विनाऽपीष्टसिद्धिमाह—अथवेति । भाष्ये एकदेश्याह—आने मुगिति । 'आनयी'ति प्रयोगे दृश्यमानरूपस्यैवानुकरणं न्याय्यमिति भावः । वस्तुतस्त्वलादेशे शानचानशादिसंबन्ध्यनेऽपि मुक्सिद्धये तथा निर्देश आवश्यकः । पचमानो यजमान इति । भावकर्मणोरप्रवृत्तये न ते लादेशा इति,—ज्ञापकाऽसङ्गत्यरुचेर्वक्ष्यति—प्रकृते तदिति । ज्ञापनाय तु तयादय इति । ननु परत्वादेत्वे पुनः प्रसङ्गविज्ञानेन डादिषु 'लक्ष्ये लक्षणस्ये'ति न्यायेनैत्वाऽप्रवृत्तौ किमर्थमिदं, स्पष्टं च 'डा'विधायके भाष्ये एतदिति चेन्न, एकदेश्युक्तित्वेनाऽक्षतेः । ज्ञापकस्य फलाऽभावाच्चाऽस्यास्तत्त्वम् । 'एधन्त' इत्यादौ परत्वा'द्वर्णादाङ्ग'मिति वा पूर्वमन्तादेशे पूर्वरूपे 'सर्वे सर्वपदादेशा' इति न्यायेनाऽन्तस्याऽऽदेशादेशत्वेन ज्ञापकेन नैत्वाऽऽपत्तिरित्यन्ये । श्लोकेति । श्लोकपूरणायाऽन्यसूत्रविषय-

* वक्ष्यत्येतत्—प्रकृतानामात्मनेपदानामेत्वं भवतीति । २ । ४ । ४६ वा० ६ भाष्ये ।
† ·········तातांझथासाथांध्वमिड्वहिमहिङ् ३ । ४ । ७८
‡ आने मुक् ७ । २ । ८२
+ थासः से; लिटस्तझयोरेशिरेच् ३ । ४ । ८०; ८१
× २ । ४ । ८५ वा० १
†† ३ । ४ । ६३ वा० १

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ३ । ४ । ८२ ॥

### णलः शित्करणं सर्वादेशार्थम् ॥ १ ॥

णल्शित्कर्त्तव्यः । किं प्रयोजनम् ? 'सर्वादेशार्थम्' । शित्सर्वस्येति* सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत† ।

### उक्तं वा ॥ २ ॥

किमुक्तम् ? 'अनित्त्वात्सिद्ध'मिति‡ । णकारः क्रियते तस्याऽनित्त्वात्सिद्धम्[1] ।

क[2] एष परिहारो न्याय्यः[3] ? शकारमसि चोदितो 'णकारं करिष्यामि शकारं न करिष्यामी'ति ! णकारो वाऽत्र क्रियेत शकारो वा को न्वत्र विशेषः ? अवश्यमत्र

प्र०—इश् सि इरिच् इत्येते आदेशा विधेयाः । एत्वस्याऽनेन सिद्धत्वात् । ज्ञापनाय तु सयादयो विहिता लादेशादेशानामेत्वाऽभावस्य । टिदटित इति । 'अकुर्वी'त्यत्र परिहारः । अटितो लङः स्थाने टिदिट् कृत इत्येत्वं न भवति । प्रकृते तदिति । तत्—एत्त्वं प्रकृते तङ्यात्मनेपदे भवति न त्वाने । गुणे कथमिति । श्लोकपूरणायैतदुक्तम् । 'एत ऐ' इत्यत्र पचावेदम् इत्यादृगुणे कृते कथमेत्वं न भवतीति चोद्यम् । परिहारस्तु वक्ष्यते—बहिरङ्ग आद्गुण इति ॥ ७९ ॥

परस्मै । णल इति । क पुनरस्य शकारः क्रियते, यद्यादौ णकारस्य अनादित्वादित्संज्ञा न प्राप्नोति । मध्ये शस्येत्संज्ञाया अभावः । अन्ते तु लस्येत्संज्ञाया अप्रसङ्गः । एवं तर्हि लश्विधातव्यः । 'लशुत्तमो वे'ति करिष्यते । योगविभागश्चेति मन्यते । अथवा णल् शिदित्यतिदेशः

उ०—पूर्वपक्षोऽत्र दर्शित इति भावः । तद्ध्वनयन्नाह-एत ऐ इत्यत्रेति । अनेनाऽस्य श्लोकस्यैकदेश्युक्तित्वं स्फुटीकृतम् ॥ ७९ ॥

परस्मैपदानां । मध्ये शस्येति । 'अनादित्वा'दिति शेषः । प्रथमपुरुषे पपाचे'त्यादौ वृद्धिसिद्धय आह—योगविभागश्चेति । धात्वधिकारे त्विति । परविशेषणपक्षे इदम् । विहितविशेषणे तु तदप्रवृत्त्याऽन्त्यस्यैव प्राप्नोतीति यथाश्रुतमेव भाष्यं रमणीयमिति दिक् । भाष्ये—अनित्त्वादिति । वाक्यार्थबोधे सति

* अनेकाल्शित् सर्वस्य १ । १ । ५५

† अलोऽन्त्यस्य १ । १ । ५२ ‡ २ । ४ । ८५ वा० ८

१–णलोपविधानकाले प्रत्ययत्वाभावेन णस्येत्त्वाऽभावेऽनेकाल्त्वात् सर्वादेशो भविष्यतीत्यभिप्रायः ।

२–'कथमेष' पा० । ३–'परिहारोऽन्यायः' इति नागेशसम्मतः पाठ उद्योते ।

णकारो वृद्ध्यर्थः कर्तव्यो 'णिती'ति × वृद्धिर्यथा स्यात् ॥ नार्थो वृद्ध्यर्थेन णकारेण । णित्त्वे योगविभागः करिष्यते+ । इदमस्ति 'गोतो णित्' [ ७ । १ । ९० ] । ततः—'अल्' । अल् च णिद्भवति । तत 'उत्तमो वे'ति ।

एवं तर्हि लकारः क्रियते तस्याऽनित्त्वात्सिद्धम् । [ 'एवमपि ] क एष परिहारो न्याय्यः शकारमसि चोदितो 'लकारं करिष्यामि शकारं न करिष्यामी'ति । लकारो वा क्रियेत शकारो वा कोऽन्वत्र विशेषः ? [ [1]अयमस्ति विशेषः । ] अवश्यमेवात्र स्वरार्थो [2]लकारः कर्तव्यः । 'लिति प्रत्ययात्पूर्वमुदात्तं भवती'त्येष स्वरो यथा स्यात्* ।

नैतदस्ति प्रयोजनम् । धातुस्वरे कृते† द्विर्वचनं, तत्रान्तर्यतोऽन्तोदात्तस्याऽन्तोदात्त आदेशो भविष्यति । कथं पुनरयमन्तोदात्तः स्याद्यदैकाच् ? व्यपदेशिवद्भावेन । यथैव तर्हि व्यपदेशिवद्भावेनाऽन्तोदात्त एवमाद्युदात्तोपि, तत्रान्तर्यत

प्र०—कर्तव्यः । अक्रियमाणे हीति । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादित्यर्थः । एतच्च 'प्राग्लादेशाद्धात्वधिकार' इति पक्षमाश्रित्योच्यते । धात्वविकारे तु स'त्यादेः परस्ये'त्यादेः प्राप्नोति । धातुस्वर इति । प्रत्ययस्य पित्त्वादनुदात्तत्वाद्धातुस्वरः प्रवर्तते । यदैकाजिति । योऽनेकाच् जजागारेति,–तत्र धातुस्वरे कृते शिष्टस्यानुदात्तत्वे प्रथमैकाचो द्विर्वचनं सर्वानुदात्तं सिध्यतीत्येकाजेव धातुर्निरूप्यते। व्यपदेशिवद्भावेनेति । 'आद्यन्तवदेकस्मि'न्नित्यनेनेत्यर्थः । यथैवेति । कार्यातिदेशं

उ०—प्रत्ययत्वज्ञाने इत्संज्ञासमकालमेव सर्वादेशतेति तदाऽनेकाल्त्वस्याऽक्षतिरित्यर्थः । [ भाष्ये ] तस्याऽनित्त्वादिति । वाक्यार्थबोधात्प्रागनित्त्वादस्याऽन्वाख्यातुरनित्त्वज्ञानादित्यर्थः । एवञ्चाऽनुबन्धत्वज्ञानाऽभावात्तत्समये 'नाऽनुबन्धकृत'मित्यस्याऽप्राप्तिरिति भावः । यदि तु भाव्यनुबन्धत्वं गृहीत्वा तत्प्रवृत्तिस्तदा 'डा'वत् 'ण—अल्' इति प्रश्लेषेणाऽनेकाल्त्वात्सर्वादेशत्वम् । निरूपितञ्चेदं 'लुटः प्रथमस्ये'ति सूत्रेऽस्माभिः । क एष परिहारो न्याय्य इति । अन्याय्य एष परिहारः क उच्यत इत्यर्थः । एवं तर्हि लकार इति । 'ल' इति 'ल'णिति वादेशः कार्य इति भावः । धातुस्वरः प्रवर्त्तत इति । प्रवृत्तः सतिशिष्टस्वरेण न निवर्त्त्यंत इत्यर्थः । भाष्ये—अन्तोदात्त आदेश इति । स्थाने द्विर्वचनमिति भावः । सर्वोऽनुदात्तम्—अनुदात्ताऽभ्यासमपीत्यर्थः । निरूप्यत इति । विचारविषयीक्रियत इत्यर्थः । भाष्ये—कथम्पुनरयमिति । द्विर्वचनप्रकृतिरित्यर्थः । यदैकाजिति । यदैकाजिणादिः प्रकृतिरित्यर्थः । धातोरन्तोऽनुदात्त इत्यर्थ इति भावः । व्यपदेशिवदिति । तेनाऽतिदेशेनाऽन्तत्वातिदेशात्स्वरसिद्धिरित्यर्थः । अस्य आद्यन्तवत्सूत्रपरतया कैयटोक्ते व्याख्याने बीजं चिन्त्यम । इतरोऽन्तोदात्तत्वव्यवहार एवाऽनेन व्यपदेशिवद्भावेनोक्त इति मत्वाह—यथैवेति । अन्तोदात्तत्वादिधर्माऽतिदेश एव कैयटे कार्याऽतिदेशपदेनोक्तः । नन्विदमिति । एवञ्चाऽनेनाऽ-

× अचो ञ्णिति ७ । २ । ११५ + णलुत्तमो वा ७ । १ । ९१ १–क्वचिन्न ।
२–'लकार इत्कर्त्तव्यः' पा० । * लिति ६ । १ । १९३ † धातोः ६ । १ । १६२

आद्युदात्तस्याऽऽद्युदात्त आदेशः प्रसज्येत। सत्यमेवमेतत्। न त्विदं लक्षणमस्ति–'धातोरादिरुदात्तो भवती'ति। इदं पुनरस्ति–'धातोरन्त उदात्तो भवती'ति। सोऽसौ[1] लक्षणेनान्तोदात्तस्तत्रान्तर्यतोऽन्तोदात्तस्याऽन्तोदात्त आदेशो भविष्यति।

एतदप्यादेशे नास्ति—'आदेशस्यान्त उदात्तो भवती'ति। प्रकृतितोऽनेन स्वरो लभ्यः। प्रकृतिश्चाऽस्य यथैवान्तोदात्तैवमाद्युदात्ताऽपि॥ द्विःप्रयोगे चापि[2] द्विर्वचन उभयोरन्तोदात्तत्वं प्रसज्येत। 'अनुदात्तं पदमेकवर्जम्' [ ६। १। १५८ ] इति नास्ति यौगपद्येन संभवः। पर्यायः प्रसज्येत।

तस्मात्स्वरार्थो लकारः कर्तव्यः। लकारः क्रियते, तस्यानित्त्वात्सिद्धम्।

**अकारस्य शित्करणं सर्वादेशार्थम्॥ ३॥**

अकारः शित्कर्तव्यः। किं प्रयोजनम्? 'सर्वादेशार्थम्'। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत॥ ननु चाऽकारस्याऽकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेण शकारं सर्वादेशो भविष्यति। अस्त्यन्यदकारस्याऽकारवचने प्रयोजनम्। किम्?

**अकारवचनं समसङ्ख्यार्थम्॥ ४॥**

सङ्ख्यातानुदेशो‡ यथा स्यात्।

प्र०—मन्यते। न त्विदमिति। शास्त्रातिदेश इति भावः। एतदपीति। 'स्थानिवदिति'कार्यातिदेशः, प्राधान्यादिति भावः। प्रकृतित इति। स्थानित इत्यर्थः। द्विःप्रयोग इति। षाष्ठिकं द्विर्वचनं द्विःप्रयोगो न तु स्थाने द्विर्वचनमिति निर्णयः। लकार इति। ततश्च 'ल उत्तमो वे'ति कर्तव्यं, योगविभागश्च कार्यः। अकारस्येति। यस्य स्थाने विधीयते तस्येत्यर्थः। एतदपि 'प्राग्लादेशा-

उ०—न्तत्वाऽतिदेशे शास्त्रेणाऽन्तत्वप्रयुक्तोदात्तत्वे तद्व्यवहारसिद्धिः, आद्युदात्तविधायकशास्त्राऽभावात्तु न तद्व्यवहार इति भावः। 'शास्त्राऽतिदेश' इत्यस्य शास्त्रप्रवृत्तौ निमित्तस्याऽन्तत्वस्याऽनेनाऽतिदेश इत्यर्थः। भाष्ये—सोऽसाविति। प्रकृतिभूतो धातुरित्यर्थः। अन्तोदात्तः—तथाव्यवहारविषयः। तद्दूषयति—एतदपीति। 'अन्तोदात्त आदेश' इति वचनं नास्तीत्यर्थः। 'स्थानिव'दिति न धर्मोऽतिदेशकमित्याह—स्थानिवदिति कार्यातिदेश इति। भाष्ये–प्रकृतित इति। आदेशे प्रकृतिसादृश्यबोधकात् 'स्थानेऽन्तरतम'सूत्रादित्यर्थः। सादृश्यञ्च तद्वृत्तिधर्मवत्त्वम्। स च यथा व्यपदेशिवद्भावेनाऽन्तोदात्तत्ववान्

१–'सोऽयं' पा०। २–'खल्वपि' पा०।

‡ यथासंख्यमनुदेशः समानाम् १। ३। १०

## तस्माच्छित्करणम् । ५ ॥

तस्माच्छकारः कर्तव्यः ॥ न कर्त्तव्यः । क्रियते न्यास एव । प्रश्लिष्टनिर्देशोऽयम् । अ अ इति[1] । [2]सोऽनेकाल्शित्सर्वस्य [ १ । १ । ५५ ] इति सर्वादेशो भविष्यति ॥ ८२ ॥

## लोटो लङ्वत् ॥ ३ । ४ । ८५ ॥

## लङ्वदतिदेशे जुस्भावप्रतिषेधः ॥ १ ॥

लङ्वदतिदेशे जुस्भावस्य प्रतिषेधो वक्तव्यः । यान्तु वान्तु । लङः शाकटायनस्यैव' [ ३ । ४ । १११ ] इति जुस्भावः प्राप्नोति ।

## उत्ववचनात्सिद्धम् ॥ २ ॥

उत्वमत्र बाधकं भविष्यति* ॥ अनवकाशा हि विधयो बाधका भवन्ति, सावकाशं चोत्वम् । कोऽवकाशः ? पचतु पठतु । अत्रापीकारलोपः† प्राप्नोति । तद्यथैवोत्वमिकारलोपं बाधत एवं जुस्भावमपि [3]बाधते । न बाधते । किं कारणम् ? येन नाप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्त इकारलोप उत्वमारभ्यते, जुस्भावे

प्र०—द्वात्वधिकार' इति पक्षाश्रयेणोच्यते । धात्वधिकारे ह्यादेः परस्यादेरकारे सति रूपं सिद्धम् । अ अ इति । अकारद्वयसमुदायस्य आदेशत्वमित्यर्थः ॥ ८२ ॥

लोटो ल. । 'लोट' इत्युपमेये षष्ठीनिर्देशादुपमानं षष्ठ्यन्तं विज्ञायते, तेन लङो यत्कार्यं तल्लोटोऽतिदिश्यते न तु लङि यत्कार्यं तदित्यडाटौ लोटि न भवतः । उत्ववचनादिति । नाप्राप्ते

उ०—तथाऽऽद्युदात्तवानपीति भावः । स्थाने द्विर्वचनपक्ष एवाऽसङ्गत इत्याह—द्विःप्रयोगे चापीति । तदाह—निर्णय इति । योगविभागश्चेति । णकाराऽभावे इदम् । धात्वधिकार इति । परविशेषणे इदम् । विहितविशेषणपक्षे त्वन्त्यादेश एव प्राप्नोति । अत एव 'नित्यं ङित' इत्यादौ न दोष इति बोध्यम् । अकारद्वयेति । एवं 'ण—अलि'त्यत्रापि प्रश्लेषो बोध्यः ॥ ८२ ॥

लोटो ल । अस्माददतिदेशाल्लेटि अडाटावपि प्राप्नुत इत्यत आह—लोट इतीति । ननु झिविषये परत्वाज्जुसा 'इतश्चे'त्यस्य बाधान्न तस्याऽप्येतद्विषये सर्वत्र प्राप्तिः, जुसा इकाराऽपहारे तदभावा'दितश्चे'त्यस्याऽप्राप्तिः । इकारलोपे झेरभावाज्जुसोऽप्राप्तिरिति यौगपद्याऽसम्भवात् । स्थानिवत्त्वन्तु आदेशप्रवृत्त्यु-

१—'अ अ अ' पा० । २—'सोऽसावनेकाल् । अनेकाल्शित् सर्वस्य' पा० ।
* एरुः ३ । ४ । ८६ † इतश्च ३ । ४ । १०० ३—'बाधेत' पा० ।

पुनः प्राप्ते चाऽप्राप्ते च । अथवा 'पुरस्तादपवादा अनन्तरान्विधीन्बधान्त' इत्येवमुत्व मिकारलोपं-बाधते जुस्भावं न बाधते ॥ एवं तर्हि वक्ष्यति तत्र लङ्ग्रहणस्य प्रयोजनम्—'लङेव यो लङ्तत्र यथा स्याल्लङ्वद्भावेन यो लङ् तत्र मा भू'दिति‡ ॥८५॥

## सेर्ह्यपिच्च ॥ ३ । ४ । ८७ ॥ मेर्निः ॥ ३ । ४ । ८९ ॥

### हिन्योरुत्वप्रतिषेधः ॥ १ ॥

हिन्योरुकारस्य प्रतिषेधो वक्तव्यः । लुनीहि लुनानि । 'एरुः' [ ३ । ४ । ८६ ] इत्युत्वं प्राप्नोति ।

### न वोच्चारणसामर्थ्यात् ॥ २ ॥

न वा वक्तव्यः । किं कारणम् ? [ '¹उच्चारणसामर्थ्यात्' । ] उच्चारणसामर्थ्यादत्रोत्वं न भविष्यति । अलघीयश्चैव हीकारोच्चारणमुकारोच्चारणात्, इकारं चोच्चारयत्युकारं च नोच्चारयति, तस्यैतत्प्रयोजनमुत्वं मा भूदिति ॥ ८७ ॥ ८९ ॥

## एत ऐ ॥ ३ । ४ । ९३ ॥

### एत ऐत्व आड्गुणप्रतिषेधः ॥ १ ॥

एत ऐत्व आड्गुणस्य प्रतिषेधो वक्तव्यः । पचावेदम् पचामेदम् । आड्गुणे कृते* 'एत ऐ' ²इत्यैत्वं प्राप्नोति ।

---

प्र०—लङ्वद्भावे उत्वमारब्धं तस्य बाधकमित्यर्थः । अत्रापीति । लङ्वदभावा'दितश्चे'त्यनेनेत्यर्थः ॥ ८५ ॥

सेर्ह्य । अलघीय इति । उकारे सति प्रक्रियायां लाघवं भवति । इकारे तु सति लक्षणान्तरेणोत्वे प्रक्रियागौरवं स्यात् । न चेकारोच्चारणे लाघवं भवति । तस्मादिकारोच्चारणमुत्वस्य बाधकमेवेत्यर्थः ॥ ८७ ॥ ८९ ॥

---

उ०—त्वरं, न तत्समकालम्, एवं सत्यन्यतरविषयत्वे मानाऽभावाद्विनिगमनाविरहेणोभयबाधकं स्यादत आह भाष्ये—अथवा पुरस्तादपवादा इति । तत्र लङ्ग्रहणस्येति । तत्र—'लङः शाकटायनस्ये'ति सूत्र इत्यर्थः ॥ ८५ ॥

सेर्ह्यपिच्च । भाष्ये—अलघीयश्चैव हीति । मात्राकृतलाघवाऽभाव इत्यर्थः । प्रक्रियालाघवन्तु-कारोच्चारणेऽस्त्येवेति भावः । उत्वस्य बाधकमेवेति । उत्वग्रहणमिकारलोपस्याऽप्युपलक्षणम् ॥८७॥८९॥

---

‡ ३ । ४ । ११० वा० ४ भाष्ये ।
* आद् गुणः ६ । १ । ८७

१—क्वचिन्न ।
२—'एत ऐ'दित्यै'त्वं' पा० ।

न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

न वा वक्तव्यः । किं कारणम् ? 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गलक्षण आद्-गुणः, अन्तरङ्गलक्षणमैत्वम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥ ६३ ॥

## लिङः सीयुट् ॥ ३ । ४ । १०२ ॥

यासुडादेः सीयुट्प्रतिषेधः ॥ १ ॥

यासुडादेः† सीयुटः प्रतिषेधो वक्तव्यः । चिनुयुः सुनुयुः । 'लिङः सीयु'डिति सीयुट्प्राप्नोति ।

न वा वाक्यापकर्षात् ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् ? 'वाक्यापकर्षात्' । वाक्यापकर्षाद्यासुट्सीयुटं बाधिष्यते ।

सुट्तिथोस्त्वपकर्षविज्ञानम् ॥ ३ ॥

सुटोऽपीदानीं तिथोरपकर्षो विज्ञायेत‡ । कृषीष्ट कृषीष्ठाः । [ [२]हृषीष्ट हृषीष्ठाः । ]

अनादेश्च सुड्वचनम् ॥ ४ ॥

अनादेश्च सुड्वक्तव्यः । कृषीयास्ताम् कृषीयास्थाम् । तकारथकारादेर्लिङ इति सुएन प्राप्नोति ।

प्र०—लिङः सी । यथैव कृषीष्ट कृषीष्ठा इत्येवमादौ सुटि कृते विरोधाऽभावाद्बाधक-भावाऽभावात्सीयुड्भवति, एवं यासुटचपि कृते तस्य लिङ्भक्तत्वात्तदादेः सीयुट्प्रसङ्ग इति मत्वाह—यासुडादेरिति । न वेति । 'लिङः सीयु'डित्यस्य वाक्यस्य यासुड्विधिवाक्येनापकर्षो बाधन-मित्यर्थः । विनापि विरोधेन सामान्यविधिर्विशेषविधिना बाध्यते तक्रेणेव दधीति भावः । अनादेश्चेति । तिथोरिति सप्तमीं मन्यते । ततस्तदादिविधिसद्भावात्तकारथकारादेरेव लिङा-

उ०—लिङः सीयुट् । नन्वपवादतया यासुटा बाधात्कथं तद्विषये सीयुडत आह—यथैवेति । विना-ऽपीति । अत एव पूर्वमपि सीयुण्न, अपवादविषये उत्सर्गोऽप्रवृत्तेरिति भावः । भाष्ये—सुटोऽपीति । कर्त्तरि षष्ठी । कर्मणोऽनुपादानादुभयप्राप्त्यभावः । सुट्कर्तृकः सीयुटो बाधः स्यादित्यर्थः । कार्यिभेदादिति । प्रथम-द्विर्वचनस्य द्वितीयद्विर्वचनेन कार्यिभेदेऽपि बाधदर्शनाचिन्त्यमिदम् । 'तस्मादपकर्षो विज्ञायेते'त्युत्तरं भाष्ये

† यासुट् परस्मैपदेषूदात्तोङिच्च ३ । ४ । १०३
‡ सुट् तिथोः ३ । ४ । १०७

१—'वक्तव्यः' पा० ।
२—क्वाचित्कः पाठः ।

**न वा तिथोः प्रधानभावात्तद्विशेषणं लिङ्ग्रहणम् ॥ ५ ॥**

न वा वक्तव्यम् । किं कारणम् ? 'तिथोः प्रधानभावात्' । तिथावेवाऽत्र प्रधानं, तद्विशेषणं लिङ्ग्रहणम्[1] । नैवं विज्ञायते तकारथकारादेर्लिङ इति । कथं तर्हि ? तकारथकारयोः सुड्भवति तौ चेल्लिङ' इति ॥ १०२ ॥

## यासुट्परस्मैपदेषूदात्तो ङिच्च ॥ ३ । ४ । १०३ ॥

किमर्थं यासुटो ङित्त्वमुच्यते ?

**यासुटो ङिद्वचनं पिदर्थम् ॥ १ ॥**

[ यासुटो ङित्त्वं क्रियते । किं प्रयोजनम् ? 'पिदर्थम् । ] पिति वचनानि प्रयोजयन्ति ॥ अथ किमर्थमुदात्तवचनं क्रियते ?

**उदात्तवचनं च ॥ २ ॥**

[ उदात्तवचनञ्च ] किम् ? 'पिदर्थमेव'* ।

**आगमानुदात्तार्थं वा ॥ ३ ॥**

अथवैतज्ज्ञापयत्याचार्य—'आगमा अनुदात्ता भवन्ती'ति ॥ असत्यन्यस्मिन्प्रयोजने ज्ञापकं भवति । उक्तं चैतत्—'यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चे'ति । शक्यमनेन वक्तुं—यासुट्परस्मैपदेषु भवति, अपिच्च लिङ्भवतीति, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्य—'आगमा

प्र०—देशस्य सुट् स्यात् कृषीष्ट कृषीष्ठा इत्यादाविति भावः । नवेति । चोद्यद्वयमपि परिहृतम् । सुटस्तकारथकारावागमिनौ, सीयुटस्तु समुदाय इति कार्यिभेदाद्बाध्यबाधकभावाऽभावः । 'तिथो'रिति च षष्ठीनिर्देशात्तदादिविध्यभावादनाद्योरपि तिथोः सुड्भवति ॥ १०२ ॥

उ०—'तस्माद्यासुडादेः सीयुटः प्रतिषेधो वक्तव्य' इति शेषः । तदेव च वचनं ज्ञापकमत्र प्रकरणे बाध्यबाधकभावाऽभावस्येति सुटा सीयुटो न बाध इति भाव इत्युचितम् ॥ १०२ ॥

यासुट् प । आगमा अनुदात्ता इति भाष्ये । 'अनुदात्तम्पद'मित्येकवाक्यतापन्नोदात्तादिविधिप्रवृत्तिकालेऽसन्निहितानामपि तेन निघातप्रवृत्तिर्ज्ञाप्यत इत्यर्थः । विस्तरेण चैत'दाद्युदात्तश्चे'त्यत्र निरूपितं,

[1] 'तयोर्विशेषणं' पा० । २—क्वाचित्कः पाठः ।

* अनुदात्तौ सुप्पितौ ३ । १ । ४

अनुदात्ता भवन्ती'ति† ॥ १०३ ॥

## आतः ॥ ३ । ४ । ११० ॥

किमिदं जुस्याकारग्रहणं नियमार्थमाहोस्वित्प्रापकम् ? कथं च नियमार्थं स्यात्, कथं वा प्रापकम् ? यदि सिज्ग्रहणमनुवर्तते‡ ततो नियमार्थम्, अथ निवृत्तं ततः प्रापकम् ॥ कश्चात्र विशेषः ?

**जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणम् ॥ १ ॥**

जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणं कर्तव्यम् । 'आतः सिज्लुगन्ता'-दिति वक्तव्यम् । इह मा भूत्—अकार्षुः अहार्षुः ॥ अस्तु तर्हि प्रापकम् ।

**प्रापकमिति चेत्प्रत्ययलक्षणप्रतिषेधः ॥ २ ॥**

प्रापकमिति चेत्प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्यः । अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति ।

**एवकारकरणं च ॥ ३ ॥**

एवकारकरणं च कर्तव्यम् । 'लङः शाकटायनस्यैव' [३ । ४ । १११] इति ।

प्र०—आतः । अकार्षुरिति । अत्र नाकारान्तात्सिज्विहितः, नापि परः, रेफेण व्यवधानादिति जुस्न स्यात् । ननु यद्यकार्षुरित्यादावपि नियमः स्यात्तदा पूर्वसूत्रेण सिजन्ताज्जुस्विधानमनवकाशं स्यात् । नैष दोषः । अगुरस्थुरित्यादेरवकाशस्य संभवात् । विषयविभागश्च न लभ्यते, यतोऽकार्षुरिति जुस् भवति, अभूवन्नित्यत्र तु न भवति । यद्येवं पूर्वसूत्रे सिज्ग्रहणमकृत्वा 'आतः सिच' इति वक्तव्यं स्यात् । नैतदस्ति । उत्तरत्राऽऽत इत्यस्यानुवृत्त्यर्थो योगविभागः स्यात् । अथवा योगविभागोऽस्य नियमार्थत्वाय स्यात् । अस्य हि नियमार्थत्वे उत्तरत्र लङ्ग्रहणं न

उ०—प्रकृतसूत्रे शब्देन्दुशेखरे च ॥ १०३ ॥

आतः । भाष्ये—इह माभूदकार्षुरिति । नियमेन व्यवच्छेदो मा भूदित्यर्थः । ननु सिचः परस्य झेर्जुश्चेदाकारपरसिचः परस्यैवेति न दोष इत्यत आह—अत्रेति । नियमः स्यादिति । नियमेन व्यवच्छेदः स्यादित्यर्थः । अगुरिति । योगविभागानर्थक्यन्त्वनुपदमेव परिहरिष्यति । अत एव दूषणान्तरमाह—विषयविभागश्चेति । अभूवन्निति । अत्र प्रत्ययलक्षणेन सिच्सत्ता बोध्या । योगविभागः स्यादिति । 'लङः शाकटायनस्ये'त्यत्र सिच्पदाऽसंसृष्टस्य 'आत' इत्यस्याऽनुवृत्त्यर्थो योगविभाग इत्यर्थः । ननु 'आतः सिच' इत्युच्यमानेऽपि स्वरितलिङ्गाऽऽसञ्ज्ञादात इत्येवाऽनुवर्तिष्यते न तु सिच

† ३ । १ । २ वा० ७ भाष्ये ।

‡ सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९

नियमार्थे पुनः सति नार्थ एवकारकरणेन । ननु च प्रापकेऽपि सति सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति । इष्टतोऽवधारणार्थस्तर्ह्येवकारः कर्तव्यः । यथैवं विज्ञायेत—'लङः शाकटायनस्यैवे'ति । मैवं विज्ञायि—'लङ एव शाकटायनस्ये'ति । किं च स्यात् ? लुङः शाकटायनस्य न स्यात् । अदुः अपुः अधुः अस्थुः ।

लङ्ग्रहणं च ॥ ४ ॥

लङ्ग्रहणं च कर्तव्यम् । लङः शाकटायनस्यैवेति ॥ नियमार्थे पुनः सति नार्थो लङ्ग्रहणेन । आतो 'ङित' × इति वर्तते । न चान्य आकारादनन्तरो ङिद-स्त्यन्यदतो लङः ।

अस्तु तर्हि नियमार्थम् । ननु चोक्तं 'जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहण'मिति । नैष दोषः । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः ? यो द्वाभ्यामनन्तर आतश्च सिचश्च ।

अथ तदेवकारकरणं नैव कर्तव्यम् ? कर्तव्यं च । किं प्रयोजनम् ? उत्तरार्थम् । 'लिट् च' 'लिङाशिषि' [ ३ । ४ । ११५; ११६ ] आर्धधातुकमेव यथा स्यात् । इतरथा हि वचनादार्धधातुकसंज्ञा स्यात्, तिङ्ग्रहणेन च ग्रहणात्सार्वधातुकसंज्ञा* ।

प्र०—कर्तव्यं भवति । एवकारकरणं चेति । यदा सिज्ग्रहणमिह नानुवर्तते तदानेनैव लङादेशस्य झेरात उत्तरस्याऽयुरित्यादौ जुसि सिद्धे 'लङः शाकटायनस्यैवे'ति नियमार्थ एवकारः कर्तव्यः, अन्येषां मतेन अयानित्यादि यथा स्यात् । यदा तु सिज्ग्रहणानुवृत्त्या नियमार्थमिदं तदा 'लङः शाकटायनस्ये'त्येव पक्षे विध्यर्थं कर्तव्यं, नार्थ एवकारेणेत्यर्थः । मैवं विज्ञायीति । 'लङ एव शाकटायनस्ये'ति विज्ञायमाने लुङः शाकटायनस्य न स्यात् । ततश्च लुङि विकल्पः प्रसज्येत । लङि तु नित्यः स्यादित्यर्थः । तुल्यजातीयस्येति । सिज्लुकं विना आतः सिचश्चानन्तरो झिर्न

उ०—इति, उत्तरत्र लङ्ग्रहणाच्चाऽत आह—अथवेति। नियमार्थत्वायेति । तत्फलन्तु 'अभूवन्नि'त्यस्य व्यावृत्तिः। नियमपक्षे योगविभागप्रयुक्तगौरवेऽपि लाघवान्तरं दर्शयति—अस्य हीति । ततश्च लुङीति । शाकटायनमते लङ एवाऽन्यस्य तन्मते नेत्यर्थे लुङि शाकटायनमते निषेधः, अन्यस्य मते जुसित्यर्थाद्विकल्पः फलितः। लङि तु शाकटायनमतेऽन्यमते च प्राप्त्या नित्यत्वं फलतीति भावः । भाष्ये—लङ्ग्रहणञ्चेति । असति लङ्ग्रहणे लुङ्यपि विकल्पः स्यात् । न च 'आत' इति योगविभागाल्लुङि नित्य इति वाच्यं, लुङि विकल्पो

१-'अयुः' पा० । × नित्यं ङितः ३ । ४ । ९९

* तिङ्शित् सार्वधातुकम् ३ । ४ । ११३

अथ तल्लङ्ग्रहणं नैव कर्तव्यम् ? कर्तव्यं च । किं प्रयोजनम् ? लङेव यो लङ्तत्र यथा स्याल्लङ्वद्भावेन यो लङ् तत्र मा भूदिति† ॥ ११० ॥

## आर्धधातुकं शेषः ॥ ३ । ४ । ११४ ॥

### आर्धधातुकसंज्ञायां धातुग्रहणम् ॥ १ ॥

आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम् । धातोः परस्यार्धधातुकसंज्ञा यथा स्यात् । इह मा भूत्—वृक्षत्वं वृक्षतेति ॥ क्रियमाणे चापि धातुग्रहणे—

### स्वादिप्रतिषेधः ॥ २ ॥

स्वादीनां प्रतिषेधो वक्तव्यः । इह मा भूत्—लूभ्यां लूभिरिति ॥ अनुक्रान्तापेक्षं शेषग्रहणम् ॥ एवमपि अग्निकाम्यति वायुकाम्यतीति प्राप्नोति‡ । तस्माद्धातुग्रहणं कर्तव्यम् ।

[ तत्तर्हि धातुग्रहणं कर्त्तव्यम् ? ] न कर्तव्यम् । आतृतीयाऽध्यायपरिसमाप्तेर्धात्वधिकारः प्रकृतोऽनुवर्तते । क्व प्रकृतः ? 'धातोरेकाचो हलादेः' [ ३ । १ । २२ ] इति ॥ एवमपि श्रीकाम्यति भूकाम्यतीति प्राप्नोति ।

प्र०—भवतीति सिज्लुगन्तस्याकारान्तस्येह ग्रहणमिति नियमेन सिज्लुगन्तमेव निवर्त्यते । उत्तरार्थमिति । अन्यथैकसंज्ञाधिकारादन्यत्र संज्ञासमावेशस्य दृष्टत्वाल्लिङ्लिडादेशानां सार्वधातुकसञ्ज्ञाऽपि स्यात् । ततस्तन्निमित्तविकारणप्रसङ्गः । आर्द्धधातुकसञ्ज्ञा चेडाद्यर्था स्यात् ॥ ११० ॥

आर्द्धधा । अनुक्रान्तापेक्षमिति । अनुक्रान्ता ये प्रत्ययास्तिङ्शिद्वर्जितास्ते आर्द्धधातुकसंज्ञा भवन्ति न त्वनुक्रंस्यमाना इत्यर्थः । धातोरित्येवमिति । धातोरित्येवं धातुशब्दमुच्चार्य ये

उ०—लङि नित्य इति वैपरीत्यस्याऽपि सम्भवादिति भावः । एवञ्च 'आत' इति सूत्रं 'सिच' इत्यनुवृत्त्या नियमार्थम्, उत्तरसूत्रन्तु विध्यर्थम् । 'शाकटायनस्यैवे'त्येवकार उत्तरार्थः । लङ्ग्रहणं लङ्वद्भावेन लङोऽग्रहणार्थमिति बोध्यम् । एवञ्च 'धातो'रिति सूत्रस्थभाष्यं प्रौढया, एतत्सूत्रस्थभाष्यविरोधादिति बोध्यम् ॥ ११० ॥

आर्द्धधा । भाष्ये—धातोरेकाच इति । 'धातो'रिति पृथक्सूत्रन्तु प्रत्याख्यातमेव । धातोरित्येव-

† लोटो लङ्वत् ३ । ४ । ८५
‡ काम्यच्च ३ । १ । ९; सार्वधातुकार्धधातुकयोः ७ । ३ । ८४
१—कोष्ठान्तर्गतः पाठः क्वाचित्कः ।

तद्विधानात्सिद्धम् ॥ ३ ॥

विहितविशेषणं धातुग्रहणं—'धातोर्यो विहित' इति । 'धातोरेष विहितः' सङ्कीर्त्य धातोरित्येवं यो विहित इति ॥ ११४ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य
चतुर्थे पादे प्रथममाह्निकम् । पादश्च समाप्तः ।
तृतीयोऽध्यायः समाप्तः ।

प्र०—विहिता इत्यर्थः ॥ ११४ ॥

इति महामहोपाध्यायश्रीमज्जैय्यटपुत्रकैयटकृते महाभाष्यप्रदीपे
तृतीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।
पादोऽध्यायश्च समाप्तः ।

उ०—मिति । व्याख्यानादिति भावः ॥ ११४ ॥

इति कालोपनामकश्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योते
तृतीयस्याऽध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।
पादश्चाऽध्यायश्च समाप्तः ।



१–इदं भाष्यमिति केचित् । वार्तिकमित्यन्ये ।

राजस्थानप्रान्तान्तर्गत- चिडावा'तहसीलस्थित-घासीकावासग्रामवास्तव्यस्य श्रीमतो ज्ञानारामस्य पुत्रेण,
श्रीयुतभगवान्देवाचार्याणामन्तेवासिना, श्रीमदुपाध्यायविश्वप्रियशास्त्रिणां शिष्येण,
व्याकरणाद्याचार्यवेदव्रतशास्त्रिणा कृतायां 'विमर्श'टिप्पण्यां
तृतीयोऽध्यायः समाप्तः ।

# परिचय-पद्यानि

शालिनी—राजस्थाने वीरभूमौ प्रसिद्धे, 'झुंझुनू'स्थं पत्तनं तच्च-'चिड़ावा'।
घासीकाबाससाभिधग्राम एको, वीरैर्यस्मिन्नुष्यते सूर्यवंशैः ॥ १ ॥

अनुष्टुप्—तत्र चाभून्महामान्यो ज्ञानारामो महाशयः।
श्रीमती जमनादेवी गृहिणी यस्य राजते ॥ २ ॥
जनन्या जमनादेव्या ज्ञानारामेण धीमता।
बाल्ये गुरुकुले सोऽहं झज्जरस्थे प्रवेशितः ॥ ३ ॥

शार्दूल०—यस्याचार्यवरो व्रतीन्द्रभगवान् देवस्तपस्वी महान्
तत्राहं विधिपूर्वकं गुरुकुले वेदाङ्गवेदानलम्।
येभ्यस्तान्समधीत्य भूरितपसा सम्पूर्णवाञ्छितक्षणं
तेषां संस्मरणं करोमि विदुषां भक्त्याऽत्र वेदव्रतः ॥ ४ ॥

इन्द्रवज्रा—सद्धर्मशिक्षां व्यवहारशिक्षां, श्रीधर्मसिंहाद् गुरुतोऽलभेऽहम्।
शिक्षामथो व्याकरणं च विज्ञाद्, विश्वप्रियाद् व्याकरणैकसूर्यात् ॥ ५ ॥

अनुष्टुप्—निरुक्तं ज्योतिषं वेदं देवराजान्मुनीश्वरात्।
विद्यावाचस्पतेस्सम्यक् समध्यैषि गुरूत्तमात् ॥ ६ ॥
काव्यालङ्कारसाहित्यच्छन्दःशास्त्रेषु कौशलम्।
प्राप्तवं मुनिवर्याच्छ्री-मेधाव्रतकवीश्वरात् ॥ ७ ॥
न्यायं वैशेषिकं कल्पं तर्कवाचस्पतेर्गुरोः।
अशिक्षे जगदेवार्यात् सिद्धान्तीश्वरशास्त्रिणः ॥ ८ ॥
दर्शने साङ्ख्यवेदान्ता-वध्यगीषि वशंवदः।
स्वामिब्रह्ममुनेर्वर्णी विद्यामार्तण्डपण्डितात् ॥ ९ ॥
भैंसवालाश्रमाचार्यः पण्डितः श्रीमहामुनिः।
आसीद् योगगुरुः शास्त्री व्रतिनो मे गुरोः कुले ॥ १० ॥
आयुर्वेदमर्मज्ञ आचार्यो वैद्यकेसरी।
श्रीसत्यदेववासिष्ठस्तच्छास्त्रस्य गुरुर्मम ॥ ११ ॥
गुरूणां कृपयैवैषां विमर्शाभिधटिप्पणी।
समग्रे हि महाभाष्ये मयाऽकारि यथामति ॥ १२ ॥
व्योमर्तुग्रहसूर्याब्द-प्रमिताद् खिष्टहायनात्।
अप्रैलात्तु महाभाष्यं समपाद्यब्दचतुष्टयम् ॥ १३ ॥

* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ श्रीकैय्यटकृतप्रदीपेन नागोजीभट्टकृतेन भाष्यप्रदीपोद्द्योतेन च विभूषितम् ]

तस्याऽयं

## चतुर्थोऽध्यायः

स च-

परमतपस्विनां श्रीमताम्भगवान्देवाचार्याणामन्तेवासिना महाविद्यालय-गुरुकुलझज्जरस्योपाचार्येण वेद-व्याकरण-साहित्य-दर्शन-आयुर्वेदाचार्येण पण्डितवेदव्रतेन वर्णिना सम्पादितो 'विमर्श' टिप्पण्या च संयोजितः ।

प्रकाशकः—

हरयाणा-साहित्य-संस्थानम्
गुरुकुल झज्जर ( रोहतक )

| प्रथमं संस्करणम् | २०२१ विक्रमाब्दे | मूल्यम् ७.०० |
| --- | --- | --- |
| द्विसहस्रम् | १८८६ शकाब्दे | सप्तरूप्यकाणि |
| २००० | १९६४ खिस्ताब्दे | ( सात रुपये ) |

* ओ३म् *

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

[ प्रदीप-उद्द्योत-विमर्शैः समलङ्कृतम् ]

तस्याऽयं—

## चतुर्थोऽध्यायः

### ङ्याप्प्रातिपदिकात् ॥ ४ । १ । १ ॥

ङ्याप्प्रातिपदिकग्रहणं किमर्थम् ? ङ्याप्प्रातिपदिकात्स्वादयो यथा स्युः, धातोर्मा भूवन्निति । नैतदस्ति प्रयोजनम् । धातोस्तव्यदादयो विधीयन्ते* तेऽपवा-

प्रदीपः—ङ्याप्प्रातिपदिकात् । ङ्याप्प्रातिपदिकग्रहणं किमर्थमिति । परश्चेति वचनात्परे भवन्तो वक्ष्यमाणाः प्रत्ययाः प्रत्ययार्थसंबन्धयोग्यार्थाभिधायिनीं ङ्याप्प्रातिपदिकलक्षणामेव प्रकृतिमाक्षेप्स्यन्ति । सति च पञ्चमीनिर्देशे 'परश्चे'ति प्रत्याख्यातम्, असति त्विह पञ्चमीनिर्देशे वक्ष्यमाण-प्रत्यय-परत्वप्रतिपादनपरत्वान्नास्ति प्रत्याख्यानम् । सति वा प्रत्याख्याने प्रत्ययद्योत्यवाच्यार्थसंबन्ध्यर्थाभिधायिप्रकृत्याक्षेपः सिद्ध इति प्रश्नः । धातोर्मा भूवन्निति ।

उद्द्योतः—ङ्याप्प्रा । नन्वेतदभावे केवलानामेव स्वादीनाम्प्रयोगः स्यादत आह—परश्चेतीति । नन्वेवं धात्वादेरपि स्युरत आह—प्रत्ययाऽर्थेति । स च कर्मादिरपत्यादिश्च । तत्संबन्धयोग्यार्थस्याऽभिधायिनीमित्यर्थः । ननु प्रत्याख्यातसूत्रमादायैतदाक्षेपो न युक्तोऽत आह—सति चेति । ए[1]तदादिपञ्चमीनिर्देशैः 'तस्मा'दिति परिभाषया परत्वलाभेन हि तत्प्रत्याख्यातमिति भावः । प्रतिपादनपरत्वादिति । 'परश्चेति सूत्रस्थे'ति शेषः । ननु वचनान्तराश्रयेण वचनान्तराक्षेपो न युक्तोऽत आह-सति चेति[2] । द्योत्यवाच्याऽर्थयोः संबन्धी योऽर्थ इत्यर्थः । प्रकृत्याक्षेप इति । नित्याऽऽकाङ्क्षत्वादित्यर्थः । प्रत्याययति प्रकृत्या

* तव्यत्तव्याऽनीयरः ३ । १ । ९६

१—'ङ्याप्प्रातिपदिकात्', 'धातोः' इत्यादीत्यर्थः । २—'सति चे'ति क्वचित्पाठः ।

दत्वाद् बाधका भविष्यन्ति ॥ तिङन्तात्तर्हि मा भूवन्निति । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते†, ते चाऽत्र 'तिङोक्ता एकत्वादय' इति कृत्वा उक्तार्थत्वान्न भविष्यन्ति ।

प्र०—असतीह प्रकृतिनिर्देशे धात्वधिकाराद्धातोरेव स्युः । वासरूपविधिश्च स्यात् । अथवा-प्रत्ययपरत्वेन प्रकृतिमात्राक्षेपे धातोरपि स्युः । तत्र यथा कर्तृकर्मणोर्लकार उत्पद्यते, साधनाश्रय-संख्यायां च तिङामुत्पत्तिः, कर्त्रादिषु तृचूतव्यादीनां च, तथा स्वादयोऽपि स्युरिति भावः ।

धातोरिति । धातुग्रहणं निवृत्तम्, तत्र प्रकृतिमात्राद्विधीयमानाः स्वादय उत्सर्गाः, तव्यदादयस्तु प्रकृतिविशेषाश्रयेण विधानादपवादा इति भावः । तिङन्तादिति । कर्मादयः स्वादीनामर्थाः, तत्र यथा 'पुत्रीय'शब्दादन्तर्भूतकर्मक्रियावाचिनः कर्तरि लकार उत्पद्यते तथा 'पचति'शब्दात्कर्तृविशिष्टक्रियावाचिनः कर्मादिषु द्वितीयादयः स्युः । यद्वा—एकत्वादिष्वपि विभक्त्यर्थेषु यथा एको द्वौ बहव इति प्रकृत्यभिहितेष्वपि भवन्त्येवं तिङाऽभिहितेष्वपि स्युरिति भावः । एकत्वादिष्विति । संख्या विभक्त्यर्थः, सा च तिङैवाभिहितेत्युक्तार्थत्वात् स्वादयो न

उ०—सह स्वार्थमिति प्रत्यय इति भावः ॥ असतीहेति । सजातीयाऽधिकारान्तराऽदर्शनेन पूर्वाऽधिकार-निवृत्तिरयुक्तेत्यर्थः । नन्वेवं विशेषविहिततव्यादयो व्यर्थाः स्युरत आह—वासरूपेति । ननु व्याख्यानादेव पूर्वाऽधिकारनिवृत्तिः सिद्धेत्यत आह—अथवेति ।

ननु पदान्तरवाच्यक्रियाऽपेक्षकारकबोधकता स्वादीनां दृष्टेति धातोर्नोत्पत्तिः, ततो विधीयमानानां तथात्वाऽसम्भवादत आह—तत्र यथेति । प्रकृतिमात्राक्षेपे यथा प्रकृत्यर्थाऽपेक्षकर्तृकर्मादावभिधेये लादय उत्पद्यन्ते तथा स्वादयोऽपि स्युरिति योजना । प्रातिपदिकाद्विधौ तु प्रकृत्यर्थाऽपेक्षकर्माद्यसम्भवादगत्या तथा स्वीकार इति भावः ॥ नन्वेवमपि धात्वर्थस्य सङ्ख्याऽभावात्कथमुत्पत्तिरत आह—साधनाश्रयेति । यथा तदाश्रयेण लब्धसङ्ख्यया तिङस्तथा स्वादयोऽपि स्युरिति भावः । ननु स्वादीनां तृजादीनाञ्च बाध्यबाधक-भावो युक्तोऽत आह—कर्त्रादिष्वति । यथा ण्वुल्तृचोः कर्तृतिङा, यथा वा तव्यादीनां कर्मतिङा पर्यायस्तथा स्वादीनामपि तैः स्यादिति भावः । 'धातो'रित्यननुवृत्तावपि 'वाऽसरूप'इति संबध्यत एवेत्यभिमानः ।

सिद्धान्ताशयमाह—निवृत्तमिति । अत एव तदधिकारसम्बद्ध'वाऽसरूप'विधिरपि नेति भावः । ननु कर्मादौ विधीयमानाः स्वादयः कर्माद्यभिधायिनस्तिङन्तात्कर्मादेरुक्तत्वेन न भविष्यन्तीत्यत आह—कर्मादय इति । अन्तर्भूतकर्मेति—बहुव्रीहिः । ततः क्रियापदेन कर्मधारयः ॥ नन्वेवमेकत्वादिषु विभक्त्यर्थेषु संख्याया उक्तत्वान्न स्युरत आह—यद्वेति । अत्र पक्षे प्रथमाऽऽपत्तिर्बोध्या । वचनग्रहणादिति । प्रवृत्तिनि-मित्तभूता हि संख्या 'वचन'शब्देनोच्यत इति नाऽयं यत्नः प्रकृते इति भावः । प्रकारान्तरेणाऽप्यप्राप्तिमुपपा-दयति—न चेति । एकप्रकृत्यर्थक्रियाया एकपदे प्रत्ययद्वयवाच्येन भिन्नेन साधनद्वयेन संबन्धो न युक्तः,

† बहुषु बहुवचनम्, द्व्येकयोर्द्विवचनैकवचने १ । ४ । २१; २२

**टाबादयस्तर्हि तिङन्तान्मा भूवन्निति। स्त्रियां टाबादयो विधीयन्ते‡, न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति॥ अणादयस्तर्हि तिङन्तान्मा भूवन्निति। अपत्यादिष्वर्थेष्वणादयो**

प्र०—भवन्ति। एकादिभ्यस्तु वचनग्रहणाद्यत्नात्संख्यावाचिभ्योपि प्रथमा भवति। न च 'पचति'-शब्दात्कर्त्रभिधायिनः कर्मादिषु द्वितीयादीनामुत्पत्तिर्युक्ता, न ह्येकक्रियापेक्षो भिन्नसाधनाभिधायिनोरेकस्मिन् पदेऽनुसहायभावो युक्तः। 'पुत्रीय'शब्दस्तु जीवत्यादिधातुवद्विशिष्टक्रियावाचीति ततः कर्तरि लकारोत्पत्तिरविरुद्धा। अनभिहिताधिकाराच्च तिङभिहिते साधने स्वाद्यनुत्पत्तिः।

टाबादय इति। यथा साधनाश्रयसंख्याभिधायित्वं तिङां तथा तद्गतलिङ्गाभिधायित्वमपि स्यादिति भावः। न च तिङन्तस्येति। क्रियाप्रधानत्वादाख्यातस्य क्रियायाश्चाऽसत्त्वभूतत्वात्सत्त्वधर्मेण लिङ्गेनाऽयोगः। न च द्रव्यधर्मलिङ्गग्रहणयोग्यत्वं; नियतत्वाच्छब्दशक्तीनामिति भावः। तदुक्तं हरिणा—

> एकत्वेऽपि क्रियाऽऽख्याते साधनाश्रयसंख्यया।
> भिद्यते, न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः॥ १॥

उ०—शाब्दे व्यवहारे तथा क्वचिददर्शनादिति भावः। भिन्नसाधनाऽभिधायिनोरिति। 'प्रत्यययो'रिति शेषः। एकक्रियाऽपेक्षः–एकक्रियायामनेकसाधनाऽन्वयबोधजननायाऽपेक्षणीयः। अनुसहायभावः–सहायत्वं, तयोर्न युक्तमित्यन्वयः।

ननु 'पुत्रीयती'त्यादावेकस्या इच्छायाः शब्दद्वयवाच्येन कर्मणा कर्त्रा च संबन्धो दृष्ट इत्यत आह— पुत्रीयेति। नन्वेवं तिङ्वाच्य एव साधने स्वादयः स्युरत आह— अनभिहितेति। अत्रेदं चिन्त्यम्— 'पचति–पश्ये'त्यादौ क्रियाया अपि कर्मत्वाद्भाष्योक्त एव समाधिर्युक्त इति। न चौत्सर्गिकमेकवचनं युक्तं, 'न केवला प्रकृतिः' इति निषेधेन यत्र केवलप्रकृतिप्रयोगो न प्राप्तस्तत्र तत्प्रवृत्तावपि अन्यत्र तत्प्रवृत्तौ मानाऽभावात्। प्रकृतित्वञ्च—प्रत्ययविधावुद्देश्यतावच्छेदकावच्छिन्नत्वम्। एतदधिकाराऽभावे हि प्रत्ययान्तरानभिहितसंख्याकारकत्वमुद्देश्यतावच्छेदकं, न चेदं तदवच्छिन्नमिति नैतद्विषये तन्निषेधप्रवृत्तिः। अव्ययेभ्यस्तु—'अव्ययादाप्सुपः' इति ज्ञापकात्कस्यचिदुत्पत्तावावश्यिकायामौत्सर्गिकं तदेव भवति। 'पचतिरूप'मित्यादावपि पूर्वोत्तरतद्धितानां[1] सुप्प्रकृतित्वनिर्णयेन अ[2]स्यापि प्रकृतित्वात् 'न केवले'त्यादिनिषेधप्रवृत्तिः सूपपादा। तृतीयाद्येकवचनन्त्वत्राऽनभिधानान्नेति भावः। अत एव 'सुप्तिङन्त'मिति सूत्रे तिङ्ग्रहणं चरितार्थम्। ननु क्रियाया लिङ्गाऽभावोऽत आह—यथेति।

ननु कारकद्वारा संख्याकार्यवत्तद्द्वारैव लिङ्गकार्यमस्त्वत आह—न चेति। तिङन्तोपस्थाप्यक्रियाया द्रव्यधर्मसंख्यया परम्परायोगेऽपि न तथा लिङ्गेन योगः, विचित्रत्वाच्छब्दशक्तीनामिति भावः। भिद्यते— आरोपितसंख्यावती भवति। तदाश्रयः–तत्संबद्धो लिङ्गाऽऽख्यो भेदस्तत्र न 'आरोप्यते' इति शेषः॥ १॥

---

‡ स्त्रियाम् ४। १। ३ १—तरन्नीयसुन्कल्पब्रादीनाम्। २—अस्यापि=रूपपोऽपि।

विधीयन्ते*, न च तिङन्तस्यापत्यादिभिर्योगोऽस्ति। अथापि कथञ्चिद्योगः स्यात्।

तस्मादु[1]पस्थितेऽप्यर्थे कस्यचित्प्रतिबध्यते।
शब्दस्य शक्तिर्नत्वेष शास्त्रेऽन्वाख्यायते विधिः॥ २॥ इति।

'शोभनं पचती'त्यादौ तूक्तक्रियाविशेषणस्य नपुंसकत्वं, न तु क्रियायाः। पचतिरूपमित्यादौ तु रूपबाद्यन्तार्थस्य क्रियायाः शब्दशक्तिस्वाभाव्यादेव नपुंसकत्वम्। नानारूपा हि शब्दानां शक्तयो न सामान्यतोदृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते। अनेनैव न्यायेन धातोष्टाबाद्यनुत्पत्तिर्व्याख्येया। अणादय इति। यथैव गर्गस्यापत्यमित्यपत्यापत्यवत्संबन्धादिसंभवः, एवं पचति यस्तस्यापत्यमिति सर्वनामप्रत्यवमृष्टतिङन्तार्थाधारसंबन्धसंभव इति भावः। ननु षष्ठ्यन्तादपत्ये प्रत्ययो विधीयते, सर्वनाम्नश्चात्र षष्ठ्यन्तत्वं न तिङन्तस्य। नैष दोषः। गर्गस्यापत्यमित्यत्रापि वाक्यगोचरैव षष्ठी संबन्धप्रदर्शनायोपादीयते, प्रत्ययस्तु प्रातिपदिकादेवोत्पद्यते। लुग्विधानद्वारेण ह्याचार्यः स्वाभाविकीं प्रत्ययस्याऽनुत्पत्तिमाचष्टे।

उ०—कस्यचिच्छब्दस्य शक्तिः कस्मिंश्चिदुपस्थितेऽप्यर्थे प्रतिबध्यते इत्यन्वयः। एषः—प्रकारः, स्वाभाविकत्वाच्छास्त्रे नान्वाख्यायत इत्यर्थः॥ २॥

अत्रैतत्स्वरसात्साधनगतसंख्यायाः क्रियायामारोपेण तिङर्थसंख्याया प्रकृत्यर्थे एवान्वयः। आरोपमूलतया च कर्तुरप्येकत्वप्रतीतिः। शब्दशक्तिस्वभावाच्च स्वप्रकृतिकप्रत्ययवाच्यसाधनगताया एव तस्यास्तत्राऽऽरोपः। तेन भावे न द्विवचनाद्यापाद्यम्। यदा तु तत्र प्रकारान्तरेण संख्याऽवगमस्तदा भावेऽपि बहुवचनं भवत्येव—'हतशायिकाः शय्यन्ते' इति यथा। तत्र हि उपमानबहुत्वाद्धात्वर्थे बहुत्वाऽवगतिः। अन्यथा तत्र बहुत्वोपादानं व्यर्थं स्यात्। एतेन 'क्रिया संख्यायामयोग्यैवे'ति परास्तम्। न चैवं 'पचतः कल्प'मित्यादौ द्विवचनाद्यापत्तिः, संख्यायास्तिङोक्तत्वात्। एकवचनन्तु साधुत्वार्थमिति न दोषः। 'तदपि प्रथमाया एव नाऽन्यासाम्, 'अनभिधाना'दित्यादि पञ्चमे वक्ष्यते। अत एव सुबाद्युत्पत्तिरेकत्वादीनामुक्तत्वाद्वारिता, न तु 'संख्याऽभावा'दित्युक्तम्। यदि संख्यायाः स्वप्रकृत्यर्थकर्त्रादावन्वयस्तदा स्त्रीत्वस्याऽपि तत्रैव स्यादिति वैषम्यं दुरुपपादम्। किञ्च, 'पचति पश्य' इत्यादौ द्वितीयावारणाय 'संख्याऽभावा'दित्येव वक्तुं युक्तं न तु'क्तत्वा'दिति। त्वद्रीत्या 'पचती'ति तिङा कर्तृगताया उक्तत्वेऽपि क्रियागताया अनुक्तेः। अत एव 'कर्माद्यभावा'दिति नोक्तम्। इहाधिकं मञ्जूषायां द्रष्टव्यम्।

न तु क्रियाया इति। शब्दशक्तिस्वभावेन आख्यातोपात्तक्रियायास्तद्योगादिति भावः। नपुंसकत्वमिति। नपुंसकत्वमेव नाऽन्यलिङ्गयोग इत्यर्थः। सामान्यतो दृष्टेनेति। 'विमतं—न लिङ्गयोगि, क्रियात्वात्, यथा पचतीत्ये'वंरूपेणाऽनुमानेनेत्यर्थः। अनेनैवेति। लिङ्गाऽभावेनैवेत्यर्थः। ननु तिङन्तार्थस्याऽपत्यादिना कथं योगोऽत आह—यथैवेति। सर्वनामप्रत्यवमृष्टो यस्तिङन्तार्थक्रियाधारस्तेन सम्बन्धसम्भव इति भावः। ननु प्रातिपदिकादेवोत्पत्तौ लुग्विधानं व्यर्थमत आह लुग्विधानेति। न तु सतो निवृत्तिराख्यायते, अयुक्तत्वादिति भावः। तदन्वाख्यानफलञ्च प्रत्ययलक्षणसिद्धिरिति बोध्यम्। 'स्तोकान्मुक्तः'

* तस्यापत्यम् ४।१।९२ 1—'तस्मादवस्थिते' पा०।

एवमपि न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'न तिङन्तादणादयो भवन्ती'ति; यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति—'अतिशायने तमबिष्ठनौ' 'तिङश्च' [ ५ । ३ । ५५; ५६ ] इति ॥ अत उत्तरं पठति—

**ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् ॥ १ ॥**

ङ्याप्प्रातिपदिकग्रहणं क्रियते, अङ्गभपदसञ्ज्ञार्थम् । अङ्गभपदसंज्ञा ङ्याप्प्रातिपदिकस्य यथा स्युरिति† ।

क्व पुनरिहाङ्गभपदसंज्ञार्थेन ङ्याप्प्रातिपदिकग्रहणेनाऽर्थः ? टावादिषु । नैतदस्ति प्रयोजनम् । ग्रहणवद्भ्यष्टाबादयो विधीयन्ते—'उगितो ङीब्भवति',

प्र०—'तस्ये'ति तु षष्ठीनिर्देशः सति सम्बन्धे प्रत्ययविधानार्थो न तु षष्ठ्यन्तात् प्रत्ययोत्पत्त्यर्थः । न चेति । क्रिया[1]प्रधानत्वादाख्यातस्य तस्याश्चासत्त्वभूतत्वादपत्यादिभिर्योगाभावः । साधनस्यापि—क्रियां प्रति गुणभावादपत्यादिभिर्योगो नास्ति । शब्दान्तरपरामृष्टस्य साधनस्यापत्यादियोगसम्भवेपि तिङन्तप्रतिपाद्यस्य साधनस्यापत्यादिभिर्योगाभावः । न हि यथा 'पाचकस्यापत्य'मिति संबन्धप्रतिपत्तिरेवं 'पचत्यपत्य'मिति । अथापीति । सर्वनामप्रत्यवमृष्टस्यार्थस्यापत्यादियोगासंभवादिति भावः । धातोरपि अणाद्युत्पत्तिर्धात्वर्थस्यापत्यादियोगाभावादेव प्रतिक्षिप्ता । वाक्यार्थस्यापि असत्त्वभूतत्वाच्छक्तिलिङ्गापत्यादियोगाभावाद्वक्ष्यमाणप्रत्ययानुत्पत्तिरभिधानीया । भाष्यकारेण तु—न्यायस्योक्तत्वात् पृथगुपन्यासो न कृतः । अङ्गभपदसंज्ञार्थमिति । 'यस्मात्प्रत्ययविधि'रित्यत्र विधिग्रहणाद्यस्य प्रत्ययविधौ शब्देनाश्रयणं तस्याङ्गसंज्ञा । भपदसंज्ञे अप्युत्तरत्र 'यस्मात्प्रत्ययविधि'रित्यस्यानुवर्तनात्तस्यैवेति भावः । भाष्यकार एतत्प्रयोजनं निराकर्तुमाह—क्व पुनरिति । ग्रहणवद्भ्य इति । ग्रहणम्—उपादानं, तच्च

उ०—'आमुष्यायणे'त्यादौ तु अलुग्विधानादेव षष्ठी बोध्येत्यभिमानः । नन्वेवं 'तस्याऽपत्य'मित्यादौ किमर्थं समर्थविभक्तिनिर्देशोऽत आह—तस्येति त्विति ।

असत्त्वभूतत्वादिति । तस्य हि सत्त्वभूतमर्थं प्रति विशेषणत्वं न दृष्टमिति भावः । शब्दान्तरेति । यच्छब्दपरामृष्टस्याऽपत्यादियोगस्तच्छब्दादेव प्रत्यय इति भावः । अथाऽपि कथञ्चिदिति । भाष्यमभ्युपगमवादमात्रम् । केचित्तु 'तिङश्चे'तिज्ञापकं 'न तिङन्तात्स्वादयो भवन्ती'त्येवं सामान्याऽपेक्षम्, भाष्ये 'अणादय' इत्यादि शब्दः प्रकारवाचीत्याहुः । वाक्यार्थस्येति । कारकाऽन्वितक्रियैवाऽस्मन्मते वाक्यार्थ इति भावः । शक्तिः—कारकम् । न्यायस्योक्तत्वादिति । 'न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ती'त्यनेनेत्यर्थः । तदेवं स्वादिविधौ प्रकृत्यन्तराऽसम्भवात् पारिशेष्येण ङ्याप्प्रातिपदिकलक्षणैव प्रकृतिरिति स्थितम् ।

† यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । सुप्तिङन्तं पदम् । नः क्ये; सिति च; स्वादिष्वसर्वनामस्थाने । यचि भम्; तसौ मत्वर्थे १ । ४ । १३—१६

१—'क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' ( निरुक्त १ । १ । १ ) इत्युक्तेः ।

'अतष्टाब्भवती'ति‡। यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिः, तस्यैताः संज्ञा भविष्यन्ति'। अथापि कश्चिदग्रहणः। एवमपि न दोषः। स्त्रियां टाबादयो विधीयन्ते। यत्तच्छब्दरूपं स्त्रियां वर्तते तस्मादुत्पत्तिः, तस्यैताः संज्ञा भविष्यन्ति।

अणादिषु तर्हि। अणादयोऽपि ग्रहणवद्भ्यो विधीयन्ते—'गर्गादिभ्यो यञ्' [४।१।१०५] 'नडादिभ्यः फक्' [९९] इति। यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिः, तस्यैताः संज्ञा भविष्यन्ति। अथापि कश्चिदग्रहणः। एवमपि न दोषः। अपत्यादिष्वर्थेष्वणादयो विधीयन्ते। यत्तच्छब्दरूपमपत्यादिष्वर्थेषु वर्तते तस्मादुत्पत्तिः, तस्यैताः संज्ञा भविष्यन्ति।

स्वार्थिकेषु तर्हि। स्वार्थिका अपि ग्रहणवद्भ्यो विधीयन्ते—'यावादिभ्यः कन्' [५।४।२९] 'प्रज्ञादिभ्यो'ऽणिति+। यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिः,

प्र०—क्वचित्साक्षात्। यथा—'अजाद्यतष्टा'बित्यजादीनाम्। क्वचित् संज्ञाद्वारेण यथा—अत्रैवाकारेणादन्तानाम्। क्वचित् अनुबन्धनिर्देशोपलक्षितसंज्ञानिर्देशेन। यथा 'उगितश्चेति। अत्र स्त्र्यर्थाभिधायिशब्द आक्षिप्तोऽकारेण उगिता च विशेष्यते। अथापीति। सामर्थ्याक्षिप्तस्याप्युपादानमस्त्येव। अभ्युपगम्यवादेन तु दर्शयति। 'वयसि प्रथमे' इत्यादौ सामर्थ्याक्षिप्ता प्रकृतिः। अथ तु अत्रा'प्यत'इत्यनुवर्तनाद्वर्णग्रहणे च सर्वत्र तदन्तविधिसंभवादकारान्तस्य ग्रहणं, तदा नास्ति कश्चिदग्रहणष्टाबादिः।

उ०—ननु तेषामेवाक्षेपे तत एव स्वादय इति अङ्गत्वादिकमपि तेषां सिद्धमत आह—शब्देनेति। भाष्यकार इति। न तु वार्त्तिककृत्, तेनोत्तरवार्त्तिके चकारकरणादिति भावः। वस्तुत उत्तरवार्त्तिके 'च'शब्दो वार्त्तिककृताऽपि तदर्थे एव प्रयुक्तः। हृदि स्थितयाऽरुच्या च वार्त्तिके फलान्तरकथनं, तामरुचिं भाष्यकारः स्फुटयतीत्येवं व्याख्यानमुचितम्। एवमन्यत्राऽपि बोध्यम्। उपादानमिति। न तु साक्षादुच्चारणमिति भावः। संज्ञेति। 'येन विधि'रित्यनेनेति भावः। नन्वेतदधिकाराऽभावेऽपि विशेष्याऽसन्निधानात्कथं तदन्तविधिरत आह—अत्रेति। स्त्र्यधिकारेणेत्यर्थः। दर्शयतीति। यः सामर्थ्याक्षिप्तस्योपादानं नाऽभ्युपगच्छति तं प्रति कश्चित्तदभ्युपगमाऽवश्यकत्वमेकदेशी दर्शयतीत्यर्थः। परमार्थतस्तत्राऽपिग्रहणमस्तीत्याह—अथ त्विति। नन्वपत्येऽण् न तु प्रकृतिरिति यत्तच्छब्दरूपमित्यादि भाष्यमनुपपन्नमत आह—परार्थेति। तद्धितवृत्तौ परस्य प्रत्ययस्याऽर्थे प्रकृतिरभिधत्ते तदन्वितस्वार्थं प्रतिपादयतीत्याशयेनैतदित्यर्थः। यच्छब्दरूपमपत्यादिष्वर्थेषु वर्त्तते तदन्वय्यर्थप्रतिपादकमित्यन्ये। ननु 'याव'दिति नपुंसकस्य 'शुक्ल' इत्यनेन सामानाधिकरण्यमयुक्तमत आह—यावत्तावदिति। न तु तद्धितान्तावित्यर्थः। ननु संख्यावाक्यैः स्वादिविधीनामेकवाक्यत्वाद्द्वयमाणरीत्या न दोषोऽत आह—प्रकरणेति।

‡ उगितश्च; अजाद्यतष्टाप ४।१।६; ४ + प्रज्ञादिभ्यश्च ५।४।३८

तस्यैताः संज्ञा भविष्यन्ति । यस्तर्ह्यग्रहणः । शुक्लतरः कृष्णतर इति । अत्रापि न यावच्छुक्लस्तावच्छुक्लतरः, प्रकृष्टः शुक्लः शुक्लतरः । यत्तच्छब्दरूपं प्रकृष्टे वर्तते तस्मादुत्पत्तिः, तस्यैताः संज्ञा भविष्यन्ति ।

स्वादिषु तर्हि । एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । यत्तच्छब्दरूपमेकत्वादिष्वर्थेषु वर्तते तस्मादुत्पत्तिः, तस्यैताः संज्ञा भविष्यन्ति । कथं पुनरिहोच्यमानाः स्वादय* एकत्वादिष्वर्थेषु† शक्या विज्ञातुम् ? एकवाक्यत्वात् । एकं वाक्यं तच्चेदं च । यद्येकं वाक्यं तच्चेदं च, किमर्थं नानादेशस्थं क्रियते ? कौशलमात्रमेतदाचार्यो दर्शयति यदेकं वाक्यं सन्नानादेशस्थं करोति, 'अन्यदपि किञ्चित्सङ्ग्रहीष्यामी'ति ।

प्र०—यत्तच्छब्दरूपमपत्यादिष्विति । 'परार्थाभिधानं वृत्ति'रिति प्रकृतिरप्यपत्यादिषु वर्तते । शुक्लतर इति । न ह्यत्र शब्देन प्रकृतिरुपात्तेति भावः । न यावदिति । यावत्तावच्छब्दौ निपातौ पर्यायतां द्योतयतः । स्वादिषु तर्हीति । प्रकरणोत्कर्षाद्ब'बहुषु बहुवचन'मित्यादेः स्वादिविधिवाक्यस्य च भिन्नवाक्यतां मन्यते । एकत्वादिष्विति । आकाङ्क्षायोग्यतावशाद्भिन्नप्रकरणपठितानामप्येकवाक्यत्वमिति भावः । तत्र त्रिके प्रातिपदिकार्थे चतुष्केऽपि पक्षे स्वादय एकत्वादीनां वाचकाः । पञ्चके तु पक्षे चतुष्के च द्योतकाः । तत्रैकत्वादिषु द्योतका वाचका वा विधीयन्त इत्यर्थः । यत्तदिति । द्योतकपक्षेऽयमर्थः—'एकत्वादिषु यद्वर्तते तस्मात् स्वादय एकत्वादीनां द्योतका उत्पद्यन्ते' । वाचकपक्षे त्वयमर्थः—'एकत्वादिषु स्वादिवाच्येष्वाधेयेषु यच्छब्दरूपं तदाधारार्थवाचि, तस्मात्स्वादय एकत्वादीनां वाचका उत्पद्यन्ते' । अन्यदपीति । तिङ्विधिवाक्येनापि सहैकवाक्यत्वं यथा स्यादित्येवमर्थः । अङ्गानां हि प्रधानसन्निधावुपदेशार्हाणां प्रकरणोत्कर्षेणोपदेशः सर्वप्रधानसम्बन्धार्थः ।

उ०—चतुष्केपीति । स्वार्थद्रव्यलिङ्गकारकरूप इत्यर्थः । चतुष्के चेति । स्वार्थद्रव्यलिङ्गसंख्यारूपोऽत्र चतुष्कशब्दार्थः । ननु वाचकत्वपक्षे 'यत्तच्छब्दरूपमेकत्वादिषु वर्त्तते' इति भाष्यमनुपपन्नमत आह—वाचकपक्षे त्विति । द्योतकत्वपक्षे एव तु भाष्यस्वरसः । अत एव तस्या विशेषणत्वमेवेति बोध्यम् । अङ्गानां हीति । एकसन्निधौ पाठे हि तदन्वय एव स्यादिति भावः । एवञ्च 'यस्मात्प्रत्ययविधि'रित्यत्र विधिग्रहणाद्यस्य प्रत्ययविधौ शब्देनाऽर्थतो वाऽवधितयाश्रयणं तस्याऽङ्गादिसंज्ञा सिध्यतीति अङ्गादिसंज्ञार्थं सूत्रं न कार्यमिति स्थिते, फलान्तरमाशङ्कते—यच्छयोश्चेति । ननु 'प्रत्ययस्य लुग्' इति वचनात्कथं प्रकृतेर्लुगापादानमत

१—'शुक्लतमः शुक्लतरः कृष्णतमः कृष्णतरः' पा० ।

* स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुप् ४ । १ । २

† बहुषु बहुवचनम्; द्व्येकयोर्द्विवचनैकवचने १ । ४ । २१; २२

२—ङ्याप्प्रातिपदिकात् स्वादयो भवन्ति, बहुषु बहुवचनम्, द्व्येकयोर्द्विवचनैकवचने भवतः । एवं लस्य तिबादयो विज्ञेयाः ।

## यच्छयोश्च लुगर्थम् ॥ २ ॥

यच्छयोस्तर्हि लुगर्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते। 'कंसीयपरशव्ययोर्यञञौ लुक्च' [४। ३। १६८] इति ङ्याप्प्रातिपदिकात्परस्य लुग्यथा स्यात्। अक्रियमाणे हि ङ्याप्प्रातिपदिकग्रहणे प्रकृतेरपि लुक् प्रसज्येत।

एतदपि नास्ति प्रयोजनम्। यथापरिभाषितं 'प्रत्ययस्य लुक्श्लुलुपो भवन्ती'ति† प्रत्ययस्य भविष्यति। एवमप्युकारसकारयोः प्रसज्येत—'कमेः सः' कंसः। परान् शृणातीति परशुरिति। 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि'।

## वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्सम्प्रत्ययार्थम् ॥ ३ ॥

वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे तर्हि प्रत्ययविधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते। 'वृद्धात्' 'अवृद्धात्' 'अवर्णान्तात्' 'अनुदात्तादेः' 'द्व्यचः' इत्येतानि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरिति।

प्र०—यच्छयोश्चेति—वार्तिककारस्य समुच्चयार्थश्चशब्दः। भाष्यकारेण तु पूर्वप्रयोजनस्य दूषितत्वात्तदर्थे चशब्दो व्याख्यातः। प्रकृतेरपीति। यच्छयोर्या प्रकृतिः—कंसशब्दः परशुशब्दश्च, तदवयवस्यापि प्रत्ययस्येत्यर्थः। इतरश्च प्रकृतेरिति स्थानषष्ठीं मत्वाह—एतदपीति। इतरः पूर्वमेवार्थं स्पष्टीकरोति—एवमपीति। उणादय इति। 'अतः कृकमिकंसे'ति कमिग्रहणेनैव कंसग्रहणे सिद्धे कंसशब्दोपादानं ज्ञापकं 'क्वचिदेषां व्युत्पत्तिकार्यं न भवती'ति। यञञोस्तु विधानसामर्थ्याल्लुङ् न भवतीति यच्छयोरेव भविष्यतीत्यर्थः।

वृद्धावृद्धेति। अत्रापि वार्तिककारस्य चशब्दः समुच्चये, भाष्यकारस्य तु तदर्थे। वृद्धादयो लक्षणं=निमित्तं यस्य प्रत्ययविधेस्तस्मिन् वृद्धादीनि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरित्यर्थः। अथेति। प्रत्ययार्थसम्बन्धयोग्यार्थाभिधायित्वान्ङ्याप्प्रातिपदिकस्यैव विशेषणानि भविष्यन्तीति प्रश्नः।

उ०—आह—यच्छयोरिति। ननु 'कमेः सः' इत्यादिव्युत्पादनादव्युत्पन्नानीत्ययुक्तमत आह—अत इति। कसेस्तु न कंसोऽनभिधानादिति भावः। ननु यञञोरेव लुक्स्यादत आह—य ञोस्त्विति। औत्सर्गिकाण एव लुका सिद्धे तद्विधानं व्यर्थं स्यादिति भावः। विकल्पस्त्वष्टदोषदुष्ट इति ध्येयम्। अथ मुख्यफलमाह—वृद्धेत्यादि। नन्वसाधारणधर्मो लक्षणं, न च वृद्धादिः प्रत्ययस्याऽसाधारणो धर्मोऽत आह—वृद्धादय इति। वृद्धादीनीति। तस्य ङ्याप्प्रातिपदिकस्य वृद्धादिविशेष्यत्वेन सम्प्रत्ययो यथा स्यादिति वार्तिकार्थं इति भावः।

† प्रत्ययस्य लुक्श्लुलुपः १। १। ६१ १—दशपाद्युणादिवृत्तिः ३। २१; पञ्चपाद्याम् ३। ६२
२—'परान् शृणातीति परशुः—आयुधम्' दशपाद्युणादिवृत्तिः १। ११६; पञ्चपाद्याम् १। ३३

अथाऽक्रियमाणे ङ्याप्प्रातिपदिकग्रहणे कस्यैतानि विशेषणानि स्युः ? समर्थविशेषणानि* । तत्र को दोषः ? 'उदीचां वृद्धादगोत्रात्' [ ४ । १ । १५७ ] इह च प्रसज्येत—ज्ञानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् । इह च न स्यात्—ज्ञयोर्ब्राह्मणयोरपत्यमिति । एतद्धि समर्थमवृद्धम् । वृद्ध ।

अवृद्ध—'प्राचामवृद्धात्फिन्बहुलम्' [ ४ । १ । १६० ] इह च प्रसज्येत—ज्ञयोर्ब्राह्मणयोरपत्यमिति । एतद्धि समर्थमवृद्धम् । इह च न स्यात्—ज्ञानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् । अवृद्ध ।

अवर्ण—अत इञ्भवतीतीहैव स्यात्†—दक्षस्यापत्यं दाक्षिरिति । एतद्धि समर्थमकारान्तम् । इह च न स्यात्—दक्षयोरपत्यम् दक्षाणामपत्यमिति । एतद्धि समर्थमनवर्णान्तम् । अवर्ण ।

प्र०—समर्थविशेषणानीति । 'समर्थानां प्रथमा'दित्यधिकाराद्विभक्तिमन्तरेण सामर्थ्यानवगमाद्विभक्त्यन्तस्यैव विशेषणानि स्युरित्यर्थः । ङ्याप्प्रातिपदिकग्रहणे तु सति तदुपादानसामर्थ्यात्तद्विशेषणानि वृद्धादीनि भवन्ति । ज्ञानामिति । ननु वृत्तावभेदैकत्वसंख्योपजननान्नास्ति द्विवचनबहुवचनान्तात्प्रत्ययः । नैष दोषः, क्वचिदादेशादिवशात्संख्याविशेषोपि प्रतीयते, यथा तावको मामक इति । एवमिहापि फिञ् विधीयमानो बहुवचनमन्तरेण वृद्धत्वाभावाद्बहुत्वं गमयेत्, प्रकरणादिवशाद्वा । तदुक्तम्—

> 'भेदः संख्याविशेषो वा व्याख्यातो वृत्तिवाक्ययोः ।
> सर्वत्रैव विशेषस्तु नावश्यं तादृशो भवेत्' ॥ इति ॥

उ०—प्रत्ययार्थेति । भाष्ये—कस्यैतानीति । किं शब्दः क्षेपे । नाऽन्यस्य कस्यापि, किन्तर्हि ? ङ्याप्प्रातिपदिकस्यैवेत्यर्थ इति भावः । अधिकारादिति । 'समर्थः पदविधिः' इत्येतदधिकारादिति वक्तुं युक्तम्, श्रुतविशेष्यसम्भवे न कल्पनाऽवकाश इति भावः । नन्वेतदधिकारेऽपि सन्निहितत्वाऽविशेषात्समर्थविशेषणान्येव स्युरत आह—तदुपादानसामर्थ्यादिति । प्रागुक्तप्रयोजनानि तु भगवता खण्डितान्येवेति भावः । वृद्धादीनीति । आदिना 'समर्थानां प्रथमा'दित्यपि । अन्यथा कृतवर्णानुपूर्वीकस्वसामर्थ्यस्य सुबन्तविशेषणत्वे 'भानोरपत्यं भानवः' इत्यत्र ओकारसहितस्य लुका निवृत्तौ तद्रूपाऽसिद्धिः स्यादिति बोध्यम् ।

ननु 'आम्रगुप्तायनि'रित्यादौ चरितार्थः फिञ् कथं बहुत्वं गमयेदत आह—प्रकरणादिवशाद्वेति । भेदः—पृथगवस्थितिः । संख्याविशेषो—द्वित्वादिः । व्याख्यातः—वृत्तावसत्त्वेन, वाक्ये सत्त्वेनेत्यर्थः । विशेषस्त्विति । संख्याविशेषस्त्वित्यर्थः । तादृशः—असत्त्वविशिष्टः । शौर्पिकमासजाततावकीनादौ व्यभिचारादिति भावः । वस्तुतो वृत्तौ द्वित्वादीनामभानमेव, प्रकृत्यर्थतावच्छेदकरूपेणाऽनेकव्यक्तिभानं, तत्र

* समर्थः पदविधिः २ । १ । १

† अत इञ् ४ । १ । ९५

स्वर—अनुदात्तादेरञ्भवतीतीह च प्रसज्येत‡ वाचो विकारः, त्वचो विकार इति। एतद्धि समर्थमनुदात्तादि। इह च न स्यात्—सर्वेषां विकार इति। एतद्धि समर्थमुदात्तादि+। स्वर।

द्व्यज्लक्षण—द्व्यचष्ठनितीह च प्रसज्येत× वाचा तरति, त्वचा तरतीति। एतद्धि समर्थं द्व्यच्। इह च न स्यात्—घटेन तरतीति। एतद्धि समर्थमद्व्यच्।

अस्ति पुनः समर्थविशेषणे सति किञ्चिदिष्टं सङ्गृहीतं भवति, आहोस्विद्दोषान्तमेव? अस्तीत्याह। किम्? साम्ना तरति, वेम्ना तरतीति। एतद्धि समर्थमपि द्व्यच्, ङ्याप्प्रातिपदिकमपि।

अथ ङ्याब्ग्रहणं किमर्थम्, न 'प्रातिपदिका'दित्येव सिद्धम्? न सिध्यति। 'अप्रत्यय'* इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति॥ यद्येष ङ्याब्ग्रहणे हेतुः, त्यूङ्ग्रहणमपि कर्तव्यम्। तावपि हि प्रत्ययौ। तिग्रहणे तावद्वार्तम्। तद्धितः प्राति-

प्र०—वाचो विकार इति। 'सावेकाच' इति विभक्तेरुदात्तत्वात्पदमेतदनुदात्तादि। एतच्चोदाहरणदिक्प्रदर्शनार्थम्। अस्य वृद्धत्वान्मयटा भाव्यम्। इदं तूदाहरणं—पञ्चा नां विकार इति। 'षट्त्रिचतुर्भ्यो हलादि'रिति विभक्तेरुदात्तत्वादनुदात्तादिसमर्थमेतत्। प्रातिपदिकं तु 'न्रः संख्याया' इत्याद्युदात्तम्। सर्वेषामिति। 'सर्वस्य सुपी'त्याद्युदात्तं पदम्। प्रातिपदिकं तु—सर्वशब्दोऽन्तोदात्तो निपातित इत्यनुदात्तादि।

उ०—तद्बोधनायेदं वाक्यं प्रदर्श्यते न त्वेष विग्रह इति बोध्यम्। मयटेति। 'नित्यं वृद्धे'त्यनेन। केचित्तु—'नित्यं वृद्धे'त्यत्र भाषायामित्यनुवृत्तेर्भाष्यं छन्दोऽभिप्रायमित्याहुः। सर्वस्य सुपीति। सौवरसप्तमीनां तदन्तसप्तमीत्वेन प्रत्यये परतः पूर्वकार्यत्वाऽभावेन 'न लुमता' इत्यस्याऽप्राप्तौ प्रत्ययलक्षणेन सुबन्तत्वं बोध्यम्। 'अन्तरङ्गानपि' इति न्यायोऽप्यन्तरङ्गनिमित्तविनाशकस्यैव लुको बलवत्त्वबोधकः। अकृतव्यूहपरिभाषाया भाष्यकृताऽस्वीकाराच्च। 'सुब्'ग्रहणफलमप्येतदेव, तदभावे हि सर्वत्राऽनेनाद्युदात्तत्वेऽनुदात्तादित्वाऽभावादञनापत्तिरिति बोध्यम्। ननु शिट्स्वरेण सर्वशब्द आद्युदात्त एवेति किं 'सर्वस्य' सुपी'त्यनेनेत्यत आह—सर्वशब्द इति। अत एव सिद्धान्ते 'सार्व' इत्यञन्तप्रयोगसिद्धिः। वार्तं युक्तमिति। वार्त्तशब्दो युक्तपर्यायोऽसारपर्यायश्च।

‡ अनुदात्तादेश्च ४।३।१४०

\+ सावेकाचस्तृतीयादिर्विभक्तिः; सर्वस्य सुपि ६।१।१६८; १९१

× नौद्व्यचष्ठन् ४।४।७

* अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५

पदिकमिति† प्रातिपदिकसंज्ञा भविष्यति । ऊङ्ग्रहणे चापि वार्तम् । उवर्णान्तादूङ्विधीयते‡, तत्रैकादेशः, एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति ।

यद्येष ऊङोऽग्रहणे हेतुः, आब्ग्रहणमपि न कर्तव्यम् । आबपि ह्यकारान्ताद्विधीयते, तत्रैकादेशः; एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति । यस्तर्ह्यनकारान्तात्—क्रुञ्चा उष्णिहा देवविशेति× । अत्राप्यकारान्ताद् वृत्तिर्लक्ष्यते—क्रुञ्चानालभेत, उष्णिहककुभौ, देवविशश्च मनुष्यविशश्चेति ॥ इह तावत्—उष्णिहककुभाविति, आप एवौत्तरपदिकं ह्रस्वत्वम्+ । इह खल्वपि—देवविशश्च मनुष्यविशश्चेति, नास्ति विशेषोऽकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति ।

यत्तावदुच्यते—'इह तावदुष्णिहककुभावित्याप एवौत्तरपदिकं ह्रस्वत्व'मिति, संज्ञाछन्दसोरित्येवं तत् । नैषा संज्ञा, नापीदं छन्दः । यदप्युच्यते—'इह खल्वपि देवविशश्च मनुष्यविशश्चेति, नास्ति विशेषोऽकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वे'ति, स्वरे विशेषः । यद्यत्र व्यञ्जनान्तादुत्पत्तिः स्याद्देवविशमित्येवं स्वरः प्रसज्येत* देवविशमिति चेष्यते† । तस्मात्क एष एवंविषयः ।

प्र०—अथेति । लिङ्गविशिष्टपरिभाषया सिद्धिं मन्यते । इतरोऽगृहीताभिप्राय आह—न सिध्यतीति । तिग्रहण इति । वार्तं—युक्तं प्रातिपदिकत्वमित्यर्थः ।

क्रुञ्चानिति । अजादिषु तु पाठो जातिलक्षणङीषुबाधनार्थः । आब्ग्रहणवाद्याह-तावदिति । आप इति । 'ङ्यापो'रिति ह्रस्वत्वं हलन्तादेव विहितस्याप इत्यर्थः । इहेति । ततश्च देवविट्शब्दादेवामिति भावः ।

आब्ग्रहणप्रत्याख्यानवाद्याह—यत्तावदिति । स्वरे विशेष इति । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वाद्विभक्तेः सुप्त्वादनुदात्तत्वं भवति । यदा तु मूलविभुजादित्वाद्देववि-

उ०—भाष्ये—ऊङ्ग्रहणे चेति । श्वश्रूशब्दः 'श्वशुरः श्वश्र्वा'इति निर्देशादनूङन्त एवाऽव्युत्पन्न इति भावः । अदन्तत्वेऽजादिपाठो व्यर्थ इत्यत आह—अजादिष्विति । हलन्तादेवेति—एवकारो भिन्नक्रमः । हलन्ताद्विहितस्याऽऽप एवेत्यर्थः । नन्वविशेषेऽकारान्तादमिति सोऽप्यस्तीति तत आपि अन्तवद्भावेन सिद्धमत आह—देवविट्शब्दादेवामिति । एवञ्चाऽव्यवहृताऽदन्तसत्त्वे मानाऽभावेन नाऽकारान्तादाब् वक्तुं शक्य इति भावः । 'देवविट्शब्दादेवाऽऽबि'ति पाठेऽप्युक्त एवाऽर्थः । भाष्ये—तस्मात्क एष इति ।

† यूनस्तिः; तद्धिताः ४ । १ । ७७; ७६; कृत्तद्धितसमासाश्च १ । २ । ४६

‡ ऊङुतः ४ । १ । ६६ × क्रुञ्चा उष्णिहा देवविशा ( क्रुञ्च् उष्णिह् देवविश् ) इति हलन्ता अजादिगणे ४ । १ । ४ पठ्यन्ते । + ङ्यापोः संज्ञाछन्दसोर्बहुलम् ६ । ३ । ६३

* गतिकारकोपपदात् कृत् ६ । २ । १३९; अनुदात्तौ सुप्पितौ ३ । १ । ४

† थाथघञ्क्ताजबित्रकाणाम् ६ । २ । १४४

इदं तर्हि–'पादोऽन्यतरस्याम्' 'टाबृचि' [ ४ । १ । ८; ९ ] इति । 'ऋची'-त्युच्यते, तत्र च्छान्दसत्वाद्भविष्यति । 'ऋची'ति नेदं छन्दो विवक्षितं—काठकं कालापकं मौदकं पैप्पलकं वा । किं तर्हि ? प्रत्ययार्थविशेषणमेतत्—'ऋक् चेत्प्रत्ययार्थो भवती'ति । एतदपि नास्ति प्रयोजनम् । पदशब्दः पादशब्दसमानार्थोऽकारान्तश्छन्दसि दृश्यते । 'तस्याः सप्ताक्षरमेकं पदम्' । एकः पाद इत्यर्थः । तस्मादुत्पत्तिर्भविष्यति ॥ इदं तर्हि–'डाबुभाभ्यामन्यतरस्याम्' [ ४ । १ । १३ ] इति । बहुराजा बहुराजे बहुराजा इति ।

**ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् ॥४॥**

ङ्याब्ग्रहणमनर्थकम् । किं कारणम् ? प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवती'त्येषा परिभाषा कर्तव्या ॥ कः पुनरत्र विशेष एषा वा परिभाषा क्रियेत, ङ्याब्ग्रहणं वा ? अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि ?

प्र०—शशब्दः कप्रत्ययान्तस्तदा थाथादिस्वरेणान्तोदात्तत्वाद्विभक्त्या च सहैकादेश उदात्तो भवति । तत्र च्छान्दसत्वादिति । 'अप्रातिपदिकत्वेऽपि प्रत्ययोत्पत्ति'रिति शेषः ।

लिङ्गविशिष्टस्येति । यथाकथञ्चित् प्रातिपदिकग्रहणे एषा परिभाषोपतिष्ठते न तु प्रातिपदिकस्य स्वरूपग्रहण एवेति भावः । कः पुनरिति । ङ्याब्ग्रहणं लघु न तु परिभाषेति भावः ।

उ०—कप्रत्ययाऽन्तोऽदन्त एव । एवंविषयः—देवत्रिशं देवविंशेत्यादिप्रयोगविषयो न हलन्त इत्यर्थः । अनेनाऽतिप्रसङ्गो वारितः । एतेन 'हलन्तेभ्योऽपि टा'विति भागुरिमतं चिन्त्यमिति सूचितम् ।

'भविष्यती'त्यस्य किमित्याकांक्षायामाह—अप्रातिपदिकत्वेऽपीति । भाष्ये—पदशब्द इति । छन्दसि दृष्टस्य लोकेऽपि क्वचित् प्रयोगाऽङ्गीकारे बाधकाऽभावेनाऽकारान्तादेव प्रत्ययः । एवञ्च 'टाबृचि' इति सूत्रं न कार्यमिति भावः । एवञ्च ऋचि वाच्यायामपि 'एकपदी एकपाद्' इत्यस्य भाष्यरीत्या सत्त्वेन 'टाबृचि' इति सूत्राऽऽरम्भेऽपि तत्र 'अन्यतरस्या'ग्रहणानुवृत्त्या तत्साध्यमिति सूचितम् । भाष्ये—बहुराजेतीति । वाचा दिशा निशादेरप्युपलक्षणमिदम् ।

स्वरूपग्रहण एवेति । विशिष्य ग्रहण एवेत्यर्थः । अत एव भाष्ये 'प्रमाणे द्वयस'जिति फलेषु'क्तिन्त्यादि'रिति च दोषेषूक्तं सङ्गच्छते । 'कः पुन'रिति प्रश्ने विशेषाऽभावमात्रं न विवक्षितमित्याह—लघ्विति ॥ भाष्ये—पुंवद्भावेनैतत्सिद्धमिति । 'भस्याऽढे तद्धिते' 'सिद्धश्च प्रत्ययविधा'वित्युक्तेरिति भावः । अप्रयोजन-

१–'टाबृची'ति सूत्रस्य प्रत्याख्यानं सूचयति भाष्यकारः । सत्यस्मिन् सूत्रे 'एकपदा' इति प्रयोगः सिध्यति, स च पादशब्दसमानार्थात् पदशब्दाट्टापि सति सिध्यतीति नार्थः सूत्रेण ।

## प्रयोजनं सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् ॥ ५ ॥

सर्वनामविधिः प्रयोजनम् । सर्वनाम्नः* सुडिहैव स्यात्—येषाम् तेषाम् । यासाम् तासामित्यत्र न स्यात् ॥ नैतदस्ति प्रयोजनम् । अवर्णान्तात्सुड्विधीयते, तत्रैकादेशः, एकादेशे कृतेऽन्तादिवद्भावात्सुड् भविष्यति ॥ इदं तर्हि प्रयोजनम्—'सर्वनाम्नस्तृतीया च' [ २ । ३ । २७ ] इहैव स्यात्—भवता हेतुना, भवतो हेतोरिति । भवत्या हेतुना, भवत्या हेतोरित्यत्र न स्यात् । सर्वनाम ।

स्वर—'कुसूलकूपकुम्भशालं बिले' [ ६ । २ । १०२ ] इहैव स्यात्—कुसूलबिलम् । 'कुसूलीबिल'मित्यत्र न स्यात् । स्वर ।

समास—द्वितीया श्रितादिभिः सह समस्यते† । इहैव स्यात्—कष्टं श्रितः कष्टश्रितः । कष्टं श्रिता कष्टश्रिता इत्यत्र न स्यात् ॥ एतदपि नास्ति प्रयोजनम् । श्रितशब्दोऽकारान्तस्तत्रैकादेशः, एकादेशे कृतेऽन्तादिवद्भावाद्भविष्यति ॥ इदं तर्हि—'पूर्वसदृश' [ २ । १ । ३१ ] इतीहैव स्यात्—पित्रा सदृशः पितृसदृशः । पित्रा सदृशी पितृसदृशीत्यत्र न स्यात् । समास ।

तद्धितविधि—'अचित्तहस्तिधेनोष्ठक्' [ ४ । २ । ४७ ] इतीहैव स्यात्—हस्तिनां समूहो हास्तिकम् । हस्तिनीनां समूहो हास्तिकमित्यत्र न स्यात् ॥ एतदपि नास्ति प्रयोजनम् । पुंवद्भावेनैतत्सिद्धम्‡ । इदं तर्हि—'प्रमाणे द्वयसच्' [ ५ । २ । ३७ ] यथेह भवति—हस्तिद्वयसम् हस्तिमात्रम् । एवं हस्तिनीद्वयसम् हस्तिनीमात्रमित्यपि यथा स्यात् । तद्धितविधि ।

लुक्—'नेन्सिद्धबध्नातिषु च' [ ६ । ३ । १९ ] इहैव स्यात्—स्थण्डिलशायी । स्थण्डिलशायिनीत्यत्र न स्यात् । लुक् ।

प्र०—स्थण्डिलशायिनीति । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते'रिति वचनादनुत्पन्न एव ङीपि समासे सति इन्नन्तमेवोत्तरपदमित्यप्रयोजनमेतत् । एवं 'ग्रामेवासिनी' 'दर्शनी-

उ०—मिति । तदनित्यत्वाश्रयेण भाष्यं व्याख्येयमित्याहुः । किञ्च,—अस्याः परिभाषायाः 'प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गविशिष्टेऽतिदेश'इत्यर्थ इति 'बहुव्रीहेरूधसः' इति सूत्रभाष्ये व्यक्तीभविष्यति । एवञ्च समासोत्तरमप्यन्तरङ्गत्वाल्लुकः पूर्वं ङीपि तेन न्यायेनोत्तरपदत्वस्य तद्विशिष्टे एव सत्त्वेन लुगलुगादि न स्यादिति

* आमि सर्वनाम्नः सुट् ७ । १ । ५२

† द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २ । १ । २४

‡ भस्याऽढे तद्धिते ६ । ३ । ३५ वा० ११

अलुक्—'शयवासवासिष्वकालात्' [ ६ । ३ । १८ ] इहैव स्यात्—ग्रामेवासी । ग्रामेवासिनीत्यत्र न स्यात् ।

**मानिनि च विधिप्रतिषेधार्थम् ॥ ६ ॥**

मानिनि च विधिप्रतिषेधार्थं प्रयोजनम् । विध्यर्थं तावत्—'क्यङ्मानिनोश्च' [ ६ । ३ । ३६ ] इहैव स्यात्—दर्शनीयमानी । दर्शनीयमानिनीत्यत्र न स्यात् । प्रतिषेधार्थमपि । वक्ष्यति—'स्वाङ्गाच्चेतोऽमानिनि'+ । तस्मिन् क्रियमाण इहैव स्यात्–दीर्घमुखमानी । दीर्घमुखमानिनीत्यत्र न स्यात् ।

**प्रत्ययग्रहणोपचारेषु च ॥ ७ ॥**

प्रत्ययग्रहणोपचारेषु च प्रयोजनम् । 'तृजकाभ्यां कर्तरि' [ २ । २ । १५ ] इहैव स्यात्–अपां स्रष्टा । अपां स्रष्ट्रीत्यत्र न स्यात् । प्रत्यय ॥ उपचार–'अतः कृकमिकंसकुम्भ' [ ८ । ३ । ४६ ] इहैव स्यात्—अयस्कुम्भः । अयस्कुम्भीत्यत्र न स्यात् ।

एतान्येतस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या । एतस्यां च सत्यां नार्थो ङ्याब्ग्रहणेन ।

**अतिप्रसङ्ग उपपदविधौ ॥ ८ ॥**

उपपदविधावतिप्रसङ्गो भवति । 'द्विषत्परयोस्तापेः' [ ३ । २ । ३९ ] यथेह भवति—द्विषन्तप इति । एवं द्विषतीताप इत्यत्रापि स्यात् ।

**यञिञोः फकि ॥ ९ ॥**

यञिञोः फक्यतिप्रसङ्गो भवति* । यथेह भवति—गार्ग्यायणः दाक्षायणः । एवं गार्गेयः दाक्षेय इत्यत्रापि स्यात् ॥ नैष दोषः । ढगत्रबाधको भविष्यति† ।

प्र०—यमानिनी' 'दीर्घमुखमानिनी'त्यपि द्रष्टव्यम् । ढगत्रेति । परत्वादिति भावः । समासान्तादीकार इति । मद्रराजस्य भार्या मद्रराजीति 'पुंयोगादाख्याया'मिति ङीष् । तत्र को दोष इति । टचि

उ०—सा तदर्थमावश्यकीत्याशयः । एतदपि भाष्यं तत्र मानमित्यन्ये । परः परिभाषास्वीकारे दोषानुद्भावयति–अतिप्रसङ्ग इत्यादि । अपवादत्वाद्यसम्भवादाह—परत्वादिति । ढकोऽवकाशो दाक्षेय इति । ईकारे लुप्त इति । तस्या आभीयत्वेनाऽसिद्धत्वात् 'नस्तद्धिते' इति टिलोपाऽभावे 'अल्लोपोऽनः' इत्यकारलोपे 'यस्ये'ति-

+ ६ । ३ । ४० वा० १ * यञिञोश्च ४ । १ । १०१ † द्व्यचः ४ । १ । १२१

## समासान्तेषु च ॥ १० ॥

समासान्तेषु चातिप्रसङ्गो भवति । 'राजाहः सखिभ्यष्टच्' [ ५ । ४ । ६१ ] यथेह भवति—मद्रराजः कश्मीरराजः । एवं मद्रराज्ञी कश्मीरराज्ञीत्यत्रापि स्यात् ।

न वा भवति—मद्रराजीति ? भवति, यदा समासान्तादीकारः । लिङ्गविशिष्टग्रहणे त्वीकारान्तात्समासान्तः प्रसज्येत । तत्र को दोषः ? पुंवद्भावष्टिलोपश्च‡ । तत्र मद्रराजीत्येतद्[१]रूपं स्यात्, मद्रराज्ञीति चेष्यते ।

## महदात्त्वे प्रियादिषु ॥ ११ ॥

महदात्त्वे प्रियादिष्वतिप्रसङ्गो भवति । 'आन्महतः समानाधिकरणजातीययोः' [ ६ । ३ । ४६ ] इति यथेह भवति—महान् प्रियोऽस्य महाप्रियः । एवं महती प्रियाऽस्य महतीप्रिय इत्यत्रापि स्यात् ॥ किमुच्यते प्रियादिष्विति ? यत्र पुंवद्भावः प्रतिषिध्यते ×। यत्र तु न प्रतिषिध्यते भवितव्यमेव तत्रात्त्वेनेति ।

## ञ्नित्स्वरे ॥ १२ ॥

ञ्नित्स्वरेऽतिप्रसङ्गो भवति । ञ्नित्यादिरुदात्तो भवतीति+ । यथेह भवति—दाक्षिः अहिचुम्बकायनिः । एवं दाक्षी अहिचुम्बकायनीत्यत्रापि स्यात् ।

---

प्र०—कृते 'यस्येति चे'तीकारे लुप्ते टित्वान्ङीपि कृते मद्रराज्ञीति सिध्यतीति प्रश्नः । यत्र पुंवद्भाव इति । तत्रापूरणीप्रियादिष्विति वचनात् । यत्र त्विति । 'महाजंघ'इत्यादौ । दाक्षीति । 'इतो मनुष्यजाते'रिति ङीष् । प्रत्ययस्वरेणान्तोदात्तमिष्यते ।

बहोर्नञ्वदिति । बहुशब्दादुत्तरपदबहुत्वे वर्त्तमानाद्यत्परं पदं तदन्तस्य समासस्य नञ इव स्वरो भवतीत्यतिदेशार्थः । तेन बहवो गोमन्तोऽस्य बहुगोमानित्यत्र 'नञ्सुभ्या'मिति

---

उ०—लोपे च सतीत्यर्थः । भाष्ये—पुंवद्भावष्टिलोपश्चेति । 'भस्याऽढे' इति पुंवत्वं, 'नस्तद्धिते' इति टिलोप इत्यर्थः ।

महाजङ्घ इति । महती जंघा यस्येति समासे 'स्त्रियाः' इति पुंवत्वे आत्वं भवत्येवेत्यर्थः । इष्यत इति । आद्युदात्तन्तु पदं प्राप्नोतीत्यर्थः । अत्र यथा पूर्वोत्तरपदरूपसमाससंघातग्रहणं तथा सूत्रार्थव्याजेन दर्शयति—बह्विति । बह्व्यो गोमत्यो यस्या इति विग्रहे एतत्प्रवृत्तेरिष्टत्वादाह—बहवो गोमन्तोऽस्या इति ।

---

‡ भस्याऽढे तद्धिते ६ । ३ । ३५ वा० १; नस्तद्धिते ६ । ४ । १४४ १—'इत्येवं पा० ।

× स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४

+ ञ्नित्यादिर्नित्यम् ६ । १ । १९७

## राज्ञः स्वरे ब्राह्मणकुमारयोः ॥ १३ ॥

राज्ञः स्वरे ब्राह्मणकुमारयोरतिप्रसङ्गो भवति। राजा च ब्राह्मणकुमारयोरिति* यथेह भवति—राजब्राह्मणः राजकुमारः। एवं राजब्राह्मणी राजकुमारीत्यत्रापि स्यात्।

## समाससंघातग्रहणेषु च ॥ १४ ॥

समाससङ्घातग्रहणेषु चाऽतिप्रसङ्गो भवति। 'बहोर्नञ्वदुत्तरपदभूम्नि' [ ६। २। १७५ ] यथेह भवति—बहुगोमान् बहुयवमान्। एवं बहुगोमती बहुयवमतीत्यत्रापि स्यात्॥ किमुच्यते 'समाससङ्घातग्रहणे'ष्विति। यदवयवग्रहणं प्रयोजनमेव तदस्याः परिभाषायाः—'कुसूलकूपकुम्भशालं बिले' [ ६। २। १०२ ] कुसूलीबिलमिति यथा।

## विभक्तौ चोक्तम् ॥ १५ ॥

किमुक्तम्? 'न वा विभक्तौ लिङ्गविशिष्टाग्रहणा'दिति†।

एतेऽस्याः परिभाषाया दोषाः, एतानि च प्रयोजनानि स्युः। एते दोषाः समा भूयांसो वा, तस्मान्नार्थोऽनया परिभाषया। न हि 'दोषाः सन्ती'ति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम्। न हि 'भिक्षुकाः सन्ती'ति स्थाल्यो नाधिश्रीयन्ते,

---

प्र०—समासान्तोदात्तत्वं भवति। बहुगोमतीति। बहवो गोमन्तोऽस्या इति बहुव्रीहिः। उगितश्चेति ङीप्। समासोऽत्र संघातरूपः कार्यीति लिङ्गविशिष्टसमासाग्रहणात्समासान्तोदात्तत्वाभावादीकारः पित्त्वादनुदात्तो भवति। ईकारात्तु पूर्व उदात्तो भवति। कुसूलीबिलमिति। पूर्वपदस्यात्र कार्यित्वं, न तु संघातस्येति पूर्वपदान्तोदात्तत्वं भवत्येव।

विभक्तौ चोक्तमिति। 'उगिदचा'मित्यत्रोक्तम्। यथा गोमानित्यत्र नुम्भवति एवं गोमतीत्यत्रापि प्राप्नोति। तत्र परिहार उक्तो—'न वा विभक्तौ लिङ्गविशिष्टाग्रहणा'दिति।

---

उ०—ईकारात्पूर्व इति। ततः पूर्वो 'म'शब्दाऽकारो 'बहोः' इति सूत्रेणोदात्त इत्यर्थः। उगिदचामित्यत्रेति। 'युवोरनाकौ' इति सूत्रे। तत्सूत्रमपि गृहीत्वाऽस्यार्थस्योक्तत्वादिति बोध्यम्। दोषोद्भावयिता आह भाष्ये—एते दोषा इति। मदुक्ता इत्यर्थः। एतानि च—त्वदुक्तानि। समा भूयांसो वेति। अन्येषामपि दोषाणां सत्त्वादित्यभिमानः। परिभाषावाद्याह—न हि दोषा इत्यादि। आरम्भे युक्त्यन्तरमाह—दोषाः खल्वपीति। अन्यत्र दोषाऽभावादिति भावः।

---

१—'कर्मधारये समासे राज्ञःस्वरे अतिप्रसङ्गो भवति।' पा०।

* राजा च ६। २। ५९ 'ब्राह्मणकुमारयो'रित्यनुवर्तते।

† ७। १। १ वा० १३

२—'मेवैतस्याः' पा०।

३—'परिणेयम्' पा०।

न च 'मृगाः सन्ती'ति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः प्रयोजनानामुदाहरणमात्रम् । कुत एतत् ? न हि दोषाणां लक्षणमस्तीति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं च दोषेषु ।

**तद्धितविधानार्थं तु ॥ १६ ॥**

तद्धितविधानार्थं तु ङ्याब्ग्रहणं कर्तव्यम् । ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्—कालितरा हरिणितरा । खट्वातरा मालातरा‡ ॥ किं पुनः कारणं न सिध्यति ?

**विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् ॥ १७ ॥**

विप्रतिषेधाद्धि तद्धितोत्पत्तिः प्राप्नोति[1] ।

**तत्र समासान्तेषु दोषः ॥ १८ ॥**

तत्र समासान्तेषु दोषो भवति—बहुगोमत्का बहुयवमत्का । समासान्ता अपि ङ्याबन्तात्स्युः† ।

प्र०—विभक्त्याश्रयकार्ये क्रियमाणे लिङ्गविशिष्टपरिभाषा नेष्यत इत्यर्थः । प्रतिविधेयमिति । अच्प्रकरणे 'शक्तिलाङ्गूलाङ्कुशे'त्यत्र वार्तिके घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं, तेनानिष्टे विषये नोपतिष्ठते । तद्धितविधानार्थं त्विति । सति ङ्याब्ग्रहणे तद्धितविधौ प्रकृतित्रयाधिकारसामर्थ्यात् पूर्वं ङ्यापौ भवतस्तदन्तात्तद्धित इत्यर्थः । विप्रतिषेधाद्धीति । स्त्रीप्रत्ययस्यावकाशो यत्र प्रकर्षो न विवक्ष्यते—'काली'ति । प्रकर्षप्रत्ययस्यावकाशो यत्र स्त्रीत्वाविवक्षा—'कालतर' इति । स्त्रीत्वप्रकर्षयोस्तु युगपद्विवक्षायां परत्वात्प्रकर्षप्रत्ययः स्यादित्यर्थः । ननु स्त्रीत्वस्यान्तरङ्गत्वात्तन्निमित्तः प्रत्ययोऽन्तरङ्गः, प्रकर्षस्तु बाह्यप्रतियोग्यपेक्ष-

उ०—ननु 'ङ्याब्'ग्रहणे कृतेऽपि प्रातिपदिकत्वमाश्रित्य परत्वात्तद्धितः स्यादत आह—सतीति । प्रकृतित्रयाऽधिकारसामर्थ्या'दिति पाठः । बाह्यप्रतियोग्यपेक्षत्वादिति । तदपेक्षप्रकर्षाद्यन्वयश्च स्वार्थे समासस्यैवेति तरबादिर्बहिरङ्ग इति भावः । स्वार्थमिति । स्वार्थोऽत्र प्रवृत्तिनिमित्तम्, समवेतं—तेन स्वार्थेनाऽऽश्रितमित्यर्थः । विभक्तिः—कारकम् । 'यतः—कृत्स्नमात्मानमपेक्षमाणः=पूर्वं तत्तद्विषयकाकांक्षावान्, 'अतः—ततः प्रियादिषु प्रवर्तेते' इत्यन्वयः ।

युगपदर्थां इति । शब्दबुद्धिकर्मणां विरम्य व्यापाराऽयोगादिति भावः । न तु शास्त्रे कल्पितां कल्पितन्यायवशादारोपितक्रमवतीमर्थवत्तामाश्रित्येति तात्पर्यम् । तदाश्रयणे तु सत्यन्तरङ्गत्वादेव पूर्वं स्त्रीप्रत्यये

‡ द्विवचनविभज्योपपदे तरबीयसुनौ ५ । ३ । ५७; घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६ । ३ । ४३　१—अतोऽग्रे 'तत्र को दोषः' इति क्वचित्कोऽपपाठः, प्रश्नस्यानन्वयादिति नागेशः ।

† नद्यृतश्च ५ । ४ । १५३

## त्यूङोश्च ग्रहणम् ॥ १९ ॥

त्यूङोश्चापि ग्रहणं कर्तव्यं भवति—युवतिका ब्रह्मबन्धुकेति* ।

ऊङ्ग्रहणेन तावन्नार्थः । नास्त्यत्र विशेष उकारान्तादुत्पत्तौ सत्यामूङन्ताद्वा× ॥

इदं तर्हि युवतितरा† ब्रह्मबन्धुतरा‡ [ ब्रह्मबन्धूतरा ] इति ।

## तदन्तस्य च प्रत्ययार्थेनाऽयोगात्तद्धितानुत्पत्तिः ॥ २० ॥

तदन्तस्य च=ङ्याबन्तस्य प्रत्ययार्थेनायोगात्तद्धितोत्पत्तिर्न प्राप्नोति—कालितरा हरिणितरा, खट्वातरा मालातरेति । किं कारणम् ? [1]ङ्याबन्तमेतत्स्त्रीप्रधानम्, न च स्त्रीत्वस्य प्रकर्षाप्रकर्षौ स्तः ॥ नैष दोषः । न हि किंचिदुच्यत 'एवंजातीयकादुत्पत्तव्यमेवञ्जातीयकान्ने'ति । एतावदुच्यते 'अतिशायने तमबिष्ठनौ' 'तिङश्च' [ ५ ।

प्र०—त्वाद्बहिरङ्गः । ततस्तन्निमित्तस्य प्रत्ययस्यापि बहिरङ्गत्वम् । अन्तरङ्गबहिरङ्गयोश्चाऽयुक्तो विप्रतिषेधः । तथा च [3]वक्ष्यते—

'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् ।
समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च ॥
अभिधाय तान् विशेषानपेक्षमाणश्च कृत्स्नमात्मानम् ।
प्रियकुत्सनादिषु ततः प्रवर्ततेऽसौ विभक्त्यन्तः ॥' इति ।

एवं तर्ह्येतत्क्रमानाश्रयेण 'लौकिके प्रयोगे पदादुच्चरिताद्युगपदर्थाः प्रतीयन्ते' इति लौकिकार्यव्यवस्थाङ्गीकारेण न प्रातिपदिकार्थगतस्त्रीत्वप्रकर्षविवक्षाश्रयेण विप्रतिषेध उक्तः ।

समासान्ता अपीति । तत्र बहवो गोमन्तोऽस्या इति बहुव्रीहौ कृते ङीपि च [2]कबुत्पत्तौ बहुगोमतीकेति प्राप्नोति । ब्रह्मबन्धुकेति । अज्ञाताद्यर्थविवक्षायामूङन्तात्कप्प्रत्यय इष्यते ।

उ०—व्यर्थमेव ङ्याब्ग्रहणमिति भावः । भाष्ये—तत्र समासान्तेषु दोषः—इत्यतः प्राक्—'तत्र को दोषः' इति क्वाचित्कोऽपपाठः, प्रश्नस्याऽनन्वयात् । 'बहुयवमत्का' इत्युत्तरं वा [2]स ग्रन्थः । तत्र ङ्याब्ग्रहणे कृते समासान्तेषु दोष इति तदर्थः । ननु ह्रस्वदीर्घयोर्विशेषात् 'नास्त्यत्रे'त्यनुपपन्नमत आह—केऽण इतीति ।

ननु 'युवतितरे'त्यत्र 'तसिलादिषु' इति पुंवत्त्वं दुर्वारमत आह—जातेश्चेतीति । एषां जातिकार्यस्य वैकल्पिकताया अग्रे वक्ष्यमाणत्वान्न 'अचःपरस्मिन्' इति सूत्रस्थ—'युवजानि'रिति भाष्यप्रयोगाऽसङ्गतिः । विकल्पेनेति । एवञ्च तदभावे दीर्घश्रवणार्थमूङन्तात्तद्धितोऽवश्यमङ्गीकार्य इति भावः । भाष्ये दोषान्तरमाह—तदन्तस्य चेति । तस्य सर्वत्रेति । प्रत्ययार्थत्वाच्छास्त्रीयं स्त्रीत्वं प्रधानमिति भावः । सर्वस्यैवेति ।

१—'चापि' पा० । * अज्ञाते ५ । ३ । ७३
× केऽणः ७ । ४ । १३ इति ह्रस्वो भविष्यति । † जातेश्च ६ । ३ । ४१
‡ नद्याः शेषस्याऽन्यतरस्याम् ६ । ३ । ४४ २—क्वाचित्कः पाठः ।
३—'भाष्यकारेण' इति शेषः । 'कुत्सिते' ५ । ३ । ७४ सूत्रभाष्ये ।

३ । ५५; ५६ ] इति, यस्य च प्रकर्षोऽस्ति तस्य प्रकर्षे प्रत्ययो भविष्यति, अस्ति चाऽप्रधानस्य गुणस्य प्रकर्षः । इह खल्वपि शुक्लतरः कृष्णतर इति द्रव्यं प्रधानम्, गुणस्य च प्रकर्षे प्रत्यय उत्पद्यते ।

उक्तं वा ॥ २१ ॥

किमुक्तम् ? 'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादय' इति+ । प्रातिपदिकविशेषणं स्त्रीग्रहणं स्वार्थिकाष्टाबादयः । नैवं विज्ञायते—'स्त्रियामभिधेया-या'मिति, नापि 'स्त्रीसमानाधिकरणात्प्रातिपदिका'दिति । कथं तर्हि ? स्त्रियां यत्प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्ति । कस्मिन्नर्थे ? स्वार्थ इति ।

प्र०—नास्त्यत्रेति । केऽण इति ह्रस्वविधानादिति भावः । युवतितरेति । 'जातेश्चे'ति पुंवद्भाव-प्रतिषेधं मन्यते, यौवनस्य चातिरूपत्वात् । ब्रह्मबन्धुतरेति । अत्र 'नद्याः शेषस्यान्यतरस्या'मिति विकल्पेन ह्रस्वः । न च स्त्रीत्वस्येति । तस्य सर्वत्रैकरूपत्वात् प्रकर्षाप्रकर्षाभाव इत्यर्थः । इह खल्वपीति । सर्वत्र प्रधानस्य प्रकर्षाभावः । तदुक्तं हरिणा—

'सर्वस्यैव प्रधानस्य न विना भेदहेतुना ।
प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यताम् ॥' इति ।

ततश्च कालितरेत्यत्रापि कालगुणप्रकर्षाश्रयस्तप्प्रत्ययः । उक्तं वेति । नात्र स्त्रीत्वं प्राधान्येन प्रत्ययाभिधेयम्, किं तर्हि, स्त्रीत्ववति द्रव्ये वर्तमानात् । प्रातिपदिकात् स्वार्थे टाबादयः, ततश्च द्रव्यमेव प्राधान्येनाभिधीयते । तस्य च व्यपदेशहेतुगुणप्रकर्षाश्रयातिशयविवक्षायां प्रकर्ष-प्रत्यय इत्यर्थः ।

उ०—भेदहेतुगुणादिकं विना न द्रव्यस्य स्वतः प्रकर्षो, नाऽपि भेदहेतुं विना स द्रव्यरूपः प्रधानाऽर्थः शब्दा-ऽभिधेय इत्यर्थः । एवञ्च निरुपाधेर्व्यपदेशाऽभावाद्यदुपाधिकृतो व्यपदेशस्तन्निमित्त एव प्रकर्षः । उपाधिरपि यत्र प्रकर्षादिहीनस्तत्र तत्सहचरितगुणप्रकर्षो बोध्यः । यथा 'गोतर' इत्यादौ । एवं गुणादिरेव यत्र प्रधानं तत्र तस्य द्रव्यायमाणत्वात्तत्संसर्गिधर्मान्तरनिमित्त एव प्रकर्षः । यथा शुक्लतरं रूपम्=अतिशयेन शुक्ल-मित्यर्थ इत्यादि बोध्यम् । स्त्रीत्ववति द्रव्ये इति । तेन प्रातिपदिकविशेषणत्वादित्यस्य तदर्थविशेषणत्वा-दित्यर्थ इति भावः । स्वार्थे टाब्यपि प्रकृते किमायातमत आह—ततश्चेति । गुणप्रकर्षाश्रयेति । गुणप्रकर्ष-कृतेत्यर्थः । गुणगतप्रकर्षस्य द्रव्ये आरोप इति भावः । अन्त्यदोषे उद्धृतेऽपि आद्यो दोषोऽस्त्येवेत्याह—ननु चोक्तमिति—भाष्ये ।

+ ४ । १ । ३ वा० ५　　१—'यत् प्रातिपदिकं स्त्रियां' 'यत् स्त्रियां प्रातिपदिकं' पा० ।

ननु चोक्तम्—'तत्र समासान्तेषु दोष' इति ? समासान्ता अपि स्वार्थिकाः, उभयोः स्वार्थिकयोः परत्वात्समासान्ता भविष्यन्ति ॥ कथं कालिकेति* ? 'प्रत्ययस्थात्कात्पूर्वस्ये' [ ती ]त्त्वं भविष्यति† ॥ कथं हरिणिकेति ? हरिणशब्दः प्रकृत्यन्तरमस्ति ॥ कथं लोहिनिकेति ? वक्ष्यत्येतत्—'लोहितात्लिङ्गबाधनं वे'ति‡ ॥ १ ॥

प्र०—समासान्ता अपीति । ङ्याब्ग्रहणप्रत्याख्यानेन समासान्तेषु परिहारः । स्त्रियामन्यपदार्थे बहुव्रीहिविधानात् स्त्रीप्रत्ययस्य च समासान्तस्य च विप्रतिषेधोपपत्तिः । कालितरेत्यादौ तु पूर्वोक्तेन न्यायेनान्तरङ्गत्वात् स्त्रीप्रत्यये कृते प्रकर्षप्रत्यय उत्पद्यते ॥ कथं कालिकेति । 'वर्णे चानित्ये' 'रक्ते' इति वर्तमाने—'कालाच्चे'ति स्वार्थे कन्प्रत्ययः, तदपेक्षश्च स्त्रीप्रत्ययस्यान्तरङ्गत्वं नास्तीति परत्वात्कन् स्यादिति प्रश्नः ॥ कथं हरिणिकेति । स्वार्थे हरितशब्दात्परत्वात्कन् स्यादिति प्रश्नः । अज्ञातादिकनस्तु बहिरङ्गत्वात्प्रागेव स्त्रीप्रत्ययः सिध्यति । हरिणशब्द इति । हरितशब्दसमानार्थ इति भावः । तत्र हरितशब्दस्य हरितिकेति भवति । हरिणशब्दस्य हरिणिकेति भावः ॥ लोहिनिकेति । न हि लोहिनशब्दः प्रातिपदिकमस्तीति प्रश्नः । वक्ष्यत्येतदिति । अवश्यवक्तव्यतां दर्शयति । क्रियमाणेऽपि ङ्याब्ग्रहणे 'लोहितान्मणौ' 'वर्णे चानित्ये' 'रक्ते' इति प्रतिपदविधानाद्बलीयस्त्वात्स्त्रीप्रत्ययान् ( यं ) बाधित्वा कन्नेव स्यात् ॥ १ ॥

उ०—स्वार्थे 'कथं कालिके'त्यग्रिमभाष्याऽनुत्थानापत्तेराह—प्रत्याख्यानेनेति । विप्रतिषेधोपपत्तिरिति । अर्थकृतत्वबहिरङ्गत्वाऽनाश्रयणात्स्त्रीप्रत्ययानां न बहिरङ्गत्वमिति भावः । ननु पूर्वोक्तकालितरेत्यादित्यक्त्वा 'कथं कालिके'त्युदाहरणान्तरदाने किं बीजमत आह—कालितरेत्यादौ त्विति । पूर्वोक्तेन—'स्वार्थमभिधाये'त्यादिना । अत्यन्तस्वार्थिकतरपोऽभावादिति भावः । ननु 'कालिके'त्यादावपि तेनैव न्यायेनाऽन्तरङ्गत्वात्स्त्रीप्रत्ययः स्यादत आह—वर्णे चेति । स्वार्थे—केवलस्वार्थे । अत्यन्तस्वार्थिकत्वात्तेषां तत्र च न तन्न्यायाऽवसर इति भावः । हरितशब्दात्परत्वात्कनिति । ततश्च 'वर्णादनुदात्ता'दिति ङीब्नकारौ न स्यातामिति भावः । अज्ञातादिकस्य त्विति पाठः । 'कनः' इति पाठे 'संज्ञायां क'निति बोध्यम् । ननु वचनाऽन्तरस्वीकारेण वचनप्रत्याख्यानमयुक्तमत आह—अवश्येति । लोहितात्कना परत्वेन प्राप्तं लिङ्गबोधकप्रत्ययबाधनं चेति तदर्थः । प्रतिपदेति । अनवकाशत्वे सत्येव तस्य बाधकत्वप्रयोजकत्वाच्चिन्त्यमिदम् । परत्वादिति वक्तुमुचितम् । 'एतिका' 'एनिका' इत्यादि तु अत्यन्तस्वार्थिके कनि न भवत्येव, वचनाऽभावात्, एनशब्दस्य प्रकृत्यन्तरस्याऽभावाच्च । किन्तु 'एतिका' इत्येव सूत्रमतेऽपि । ङ्याब्ग्रहणमत्यन्तस्वार्थिकानारभ्य निवृत्तमेव । अत्र चाऽर्थे 'लोहिता'दिति वचनमेव ज्ञापकम् । सूत्रे 'ङ्याब्'ग्रहणन्तु 'कालितरा' इत्यादावुक्तन्यायसिद्धार्थकथनमेवेति न सूत्रभाष्ययोर्विरोधः । न च 'हरिणिके'त्यादौ कनि कृतेऽपि पूर्वभागे 'वर्णादनुदात्ता'दिति दुर्वारम् । 'एकाज्द्विर्वचन'न्यायेन समुदायात्स्त्रीप्रत्यये तेनैवोक्ततया मध्ये तदनुत्पत्तेरित्याहुः ॥ १ ॥

---

* कालाच्च ५ । ४ । ३३ † प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ७ । ३ । ४४

‡ ५ । ४ । ३० वा० १

# स्त्रियाम् ॥ ४ । १ । ३ ॥

स्त्रियामित्युच्यते, का स्त्री नाम ? लोकत एते शब्दाः प्रसिद्धाः 'स्त्री पुमान्नपुंसक'मिति । यल्लोके दृष्ट्वैतदवसीयते—'इयं स्त्री' 'अयं पुमान्' 'इदं नपुंसक'मिति, 'सा स्त्री' 'स पुमान्' 'तन्नपुंसक'मिति ।

प्र०—स्त्रियाम् । का स्त्री नामेति । प्रसिद्धस्यार्थस्य कार्यान्तरविधानायानुवादसम्भवात्, इह च शास्त्रे स्त्रिया अपरिभाषितत्वाल्लोके च खट्वादिषु स्त्रीव्यवहाराभावाल्लौकिकस्त्रीग्रहणेऽव्याप्त्यतिव्याप्तिदर्शनात् प्रश्नः । न च गोत्वादिवत्संस्थानविशेषव्यङ्ग्यत्वं स्त्रीत्वस्य यतः सामान्यविशेषरूपत्वं तस्य स्यात् । खट्वाशिंशपानगर्यादिषु भिन्नत्वात्संस्थानस्य । न च सकृदाख्यातं स्त्रीत्वं गोत्वादिवत् सर्वेषु स्त्रीलिङ्गेषु व्यक्त्यन्तरेषु ग्रहीतुं शक्यते ॥ यत्र वस्तुस्वरूपजिज्ञासा तत्र प्रथमान्तेन प्रश्नो युक्त इति 'का स्त्री नामे'त्युक्तम् । 'कस्यां स्त्रिया'मिति तूच्यमाने विशेषविषयः प्रश्नः स्यात् । लोकत इति । पञ्चम्यन्तात्सप्तम्यन्ताद्वा तसिः । शब्दाः प्रसिद्धा इति । विशिष्टार्थाभिधायित्वेनेति भावः । पुंनपुंसकयोरुपादानं प्रसङ्गेन तद्विषयस्याप्यज्ञानस्य निराकरणार्थम् । यल्लोक इति । यन्निमित्तमुपलभ्य निमित्तवत्यर्थे प्रत्यय उपजायते तत्स्त्र्यादिशब्दवाच्यमित्यर्थः । तद्योगाच्च निमित्तवानप्यर्थः स्त्र्यादिशब्दवाच्यो भवति । किं पुनरिति । द्रव्ये सत्तादेरनेकार्थस्य संभवात् प्रश्नः ।

उ०—स्त्रियाम् । शास्त्रप्रसिद्धेरभावेऽपि लोकप्रसिद्धार्थोऽनुवादो भविष्यतीत्यत आह—लोके चेति । खट्वादिष्वव्याप्तिः, भ्रूकुंसादिष्वतिव्याप्तिरित्यर्थः । ननु यद्यपि लौकिकस्त्रीव्यक्तिग्रहणे दोषस्तथाऽपि जातिरूपस्य खट्वादिसाधारणस्य भ्रूकुंसादिव्यावृत्तस्य ग्रहणमस्त्वित्यत आह—न चेति । सामान्यविशेषरूपत्वं—जातिविशेषरूपत्वमित्यर्थः । भिन्नत्वादिति । एतेन 'आकृतिग्रहणे'त्येतल्लक्षितत्वं न स्त्रीत्वस्येत्युक्तम् । लक्षणान्तरमपि नाऽस्तीत्याह—न चेति । सौत्रविभक्त्यनुसारेणैव प्रश्ने कर्त्तव्ये किमित्यन्यथा प्रश्नोऽत आह—यत्र वस्त्विति । विशेषविषय इति । स्त्रीविशेषविषय इत्यर्थः । पञ्चम्यन्तादिति । आद्ये लोकशब्देन व्यवहारः, अन्त्ये व्यवहर्त्तार इति भेदः ।

लोक्यते येन शब्दार्थौ लोकस्तेन स उच्यते ।
व्यवहारोऽथवा वृद्धव्यवहर्तृपरम्परा' ॥ इत्युक्तेः ।

नन्वर्थे पृष्टे शब्दप्रसिद्ध्यभिधानं व्यधिकरणमत आह—विशिष्टेति । प्रसङ्गेनेति । न तु तत्प्रकृतमिति भावः । दर्शनाऽवसाययोरेकत्वादाह—यन्निमित्तमिति । यत्=निमित्तम्, उपलभ्य, एतत्=निमित्तवदर्थरूपं स्त्र्यादिशब्देनाऽवसीयते=प्रत्याय्यते इत्यक्षरार्थः । भाष्येऽवसायाकारमाह—इयं स्त्रीत्यादि ।

ननु स्त्रीत्वाऽवसायस्य'इयं स्त्री'त्याकारोऽनुपपन्नोऽत आह—तद्योगाच्चेति । शुक्लादिशब्दवदिति भावः । 'सा स्त्री'त्यादौ तदादीनां विधेयलिङ्गग्राहितया नाऽनुपपत्तिः, अन्यथा 'तत्स्त्री'त्यादि वक्तव्यं स्यात् । सत्तादेरिति । आदिना संख्याकर्मत्वादि । 'लिङ्ग'मित्यस्य—अनुमितिजनकमिति नाऽर्थ इत्याह स्तनेति ।

किं पुनर्लोके दृष्ट्वैतदवसीयते—'इयं स्त्री' 'अयं पुमान्' 'इदं नपुंसक'मिति ? लिङ्गम् । किं पुनस्तत् ?

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥

लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप्प्रसज्यते ।

लिङ्गात् स्त्रीपुंसयोर्ज्ञाने सति भ्रूकुंसे टाप्प्राप्नोति* । यदि लोके दृष्ट्वा एतदवसीयत 'इयं स्त्री'ति, अस्ति तद्भ्रूकुंसे ।

प्र०—लिङ्गमिति । स्तनकेशादिकमिति भावः । स्तनकेशवतीति—भूमादौ मतुप् । तथैव 'लोमश' इति शः । लिङ्गे पृष्टे लिङ्गिकथनं लिङ्गप्रतिपत्तिपरमिति प्रश्नप्रतिवचनयोर्नास्त्य-सङ्गतिः । स्तनकेशश्च प्रसिद्धत्वादन्यस्यापि स्त्रीप्रतिपत्तिनिमित्तस्य कुमार्यादिगतस्य उपलक्षणम् । तदनेन स्त्रीत्वादीनां स्तनाद्युपव्यञ्जनानां गोत्वादिवत्सामान्यविशेषत्वं दर्शितम् । यथोक्तं हरिणा—

हस्तिन्यां वडवायाञ्च स्त्रीति बुद्धेः समन्वयः ।
अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम्'[1] ॥ इति ।

उभयोरन्तरमिति । लिङ्गवत्त्वेन सदृशमित्यर्थः । तेनाव्ययाख्यातार्थस्य नपुंसकत्वाऽभावः । 'तदभावे' इत्यनेन मयूरीकुक्कुटादीनां स्त्रीपुंससमुदायानां नपुंसकत्वं निराकृतम् । भवति हि समुदायः समुदायिनोः सदृश इति स्यान्नपुंसकत्वम् । अथ तु 'परवल्लिङ्ग'मित्यनेन समुदायस्य परवल्लिङ्गतातिदेशादप्रसङ्गो नपुंसकत्वस्य, ततो वस्तुस्वरूपनिरूपणपरमेतदित्यवगन्तव्यम् ।

उ०—ननु स्तनादिसम्बन्धस्याऽन्यत्राऽपि दर्शनादाह—भूमादाविति । आदिना—अतिशयः । लिङ्गप्रतिपत्तिपूर्वकमिति । 'पूर्वक'मिति स्वार्थे कः । ततः षष्ठीसमासः । तज्जनकमित्यर्थः । 'लिङ्गप्रतिपत्तिपर'मिति पाठे तत्प्रतिपत्तितात्पर्यकमित्यर्थः । ननु कुमार्यामतिशयितस्तनाद्यभावात्कथं स्त्रीत्वमत आह—अन्यस्याऽपीति । योन्यादेरित्यर्थः । ननु स्तनादीनामननुगतत्वात्तन्निमित्ताऽनुगतप्रत्ययप्रयोगयोरयोगोऽत आह—अनेनेति । जातिविशेषरूपं—स्त्रीत्वादिकम् । तत्राऽऽकृतिग्रहणत्वं दर्शयति—स्तनाद्युपव्यञ्जनानामिति—बहुव्रीहिः । समन्वयः—अनुगमः । द्रव्यादीति । आदिना—गुणक्रियाजातीनां सङ्ग्रहः । 'स्तनादी'त्यादिपदेन शब्दगतटाबाद्यपि । शब्दार्थयोरभेदाच्च तदपि—अर्थगतस्त्रीत्वादिव्यञ्जकं बोध्यम् । स्तनादीनां व्यञ्जकत्वादेव भाष्ये 'यद् दृष्ट्वैतदवसीयते' इत्युक्तम् । तत्र हि स्वरसतो यच्छब्दैतच्छब्दार्थयोर्भेदः प्रतीयते । 'अन्तर'शब्दः सदृशवाचीत्याह—लिङ्गवत्त्वेनेति । अनेन सादृश्यहेतुरुक्तः । तेनेति । लिङ्गवत्तया सादृश्यग्रहणेनेत्यर्थः । अव्ययार्थानामसत्त्वभूतत्वान्न लिङ्गयोग इति भावः । 'तदभावे' इत्युच्यमानेऽव्ययानामपि

* अजाद्यतष्टाप् ४ । १ । ४

१—वाक्यपदीये तृतीयकाण्डे लिङ्गसमुद्देशे ५ कारिका ।

नत्वं खरकुटीः पश्य

इह 'चञ्चाः पश्य' 'वध्रिकाः पश्य' 'खरकुटीः पश्ये'ति† 'तस्माच्छसो नः पुंसि' [ ६ । १ । १० ३ ] इति नत्वं प्राप्नोति । यद्धि लोके दृष्ट्वैतदवसीयते— 'अयं पुमा'निति, अस्ति तद्वध्रिकादिषु ।

खट्वावृक्षौ न सिध्यतः ॥

खट्वावृक्षयोश्च लिङ्गं न सिध्यति । यद्धि लोके दृष्ट्वैतदवसीयत 'इयं स्त्री' 'अयं पुमा'निति, न तत्खट्वावृक्षयोरस्ति ॥ किं तर्हि तयोर्लिङ्गं न्याय्यम् ?

नापुंसकं भवेत्तस्मिन्

नापुंसकं खट्वावृक्षयोर्लिङ्गं न्याय्यम् । किमिदं 'नापुंसक'मिति ? नपुंसके भवं नापुंसकम् ।

प्र०—इदानीमेतद्दूषयितुमाह—लिङ्गादिति । भ्रूकुंसः स्त्रीवेषधारी नटस्तस्य स्तनकेशसंबन्धात् स्त्रीत्वे सति टाप्स्यात् । ननु नित्ययोगे स्तनकेशवतीति मतुब्विज्ञानाद्भ्रूकुंसशब्दस्य स्त्रीत्वाभावः । नैतदस्ति । प्रतिपत्तॄणां नित्यलिङ्गदर्शनात्तत्रापि स्त्रीत्वप्रसङ्गात् । केशवपने च स्त्रियाः स्त्रीत्वं न स्यात्, तदानीं केशसंबन्धाभावात् । स्तनातिशयसंबन्धस्य चोत्तरकालभावित्वादतिशयेपि मतुपि विज्ञायमाने प्राक् स्त्रीत्वं न स्यात् । अव्याप्तिसद्भावाद्वा हेयत्वादस्य दर्शनस्य न सुष्ठु निर्बन्धोऽत्र कर्तव्यः । नत्वमिति । खरकुटी—नापितगृहमुच्यते इति केचिदाहुः । तत्र इवार्थे संज्ञायामिति कन्प्रत्ययः । तस्य 'लुम्मनुष्ये' इति लुप् । तत्र मनुष्यस्य वाच्यत्वात्तस्य च लोमशत्वात् पुंस्त्वात् 'खरकुटीः पश्ये'त्यादौ नत्वप्रसङ्गः । नापुंसकमिति । नपुंसके वस्तूनि भवं

उ०—नपुंसकत्वं स्यादिति तात्पर्यम् । तदभावे इति । स्त्रीपुंस्त्वाऽभावे इत्यर्थः । प्रतिपत्तॄणामिति । सामाजिकानां स्त्रीवेषधारिण्य एव तस्य दर्शनादिति भावः । नित्ययोगे मतुपि दोषान्तरमाह—केशवपने चेति । ननु स्तनाऽतिशययोगादेव तत्र स्त्रीत्वमत आह—स्तनेति । बालायाः केशवपने तत्सम्बन्धोऽपि नास्तीत्यर्थः । ननु 'स्तनकेशग्रहणमन्यस्य योन्यादेरुपलक्षण'मित्युक्तमतो न दोष इत्यत आह—अव्याप्तीति । खट्वादावित्यर्थः । दारादिष्वतिव्यापकत्वमपि बोध्यम् ।

इति केचिदाहुरिति । तस्य लोमशत्वेन पुंस्त्वान्नत्वापत्तिरिति तदाशयः । 'चञ्चे'त्यादिसाधारण्येन प्रकारान्तरमाह—तत्रेवार्थ इति । लुम्मनुष्य इति । यद्यपि 'मनुष्य'शब्दः स्त्रीपुंससाधारणस्तथाऽपि पुरुषसंज्ञायामयम्प्रसङ्गो बोध्यः । नापुंसकशब्दे भावेऽणो दुर्लभत्वादाह—नपुंसके इति । 'लिङ्गवत्त्वेन स्त्रीपुंससदृशत्वा'दित्यन्वयः ।

† संज्ञायां कन्, लुम्मनुष्ये ५ । ३ । ९७; ९८

तद्भावे नपुंसकम् ॥

तदभावे=स्त्रीपुंसलिङ्गाभावे नपुंसकलिङ्गं न्याय्यम् ।

असत्तु मृगतृष्णावत्

असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम् । कथं पुनरसन्नाम लिङ्गं शक्यं द्रष्टुम् ? 'मृगतृष्णावत्' । तद्यथा,—मृगास्तृषिता अपां धाराः पश्यन्ति, न च ताः सन्ति ।

गन्धर्वनगरं यथा ।

प्र०—लिङ्गं नापुंसकं—नपुंसकत्वं, तत्प्राप्तम् । स्त्रीत्वपुंस्त्वयोरभावात्स्त्रीपुंससदृशत्वाच्च-लिङ्गवत्त्वेन, सत्त्वरूपत्वाच्च लिङ्गसंख्यारहितस्य सत्त्वभूतस्याऽर्थस्याऽभावादिति भावः । असच्चिति । मृगतृष्णाविषया मरुमरीचिका यथाऽसत्येन जलरूपेण प्रतिभासते, तथा खट्वावृक्षावसता स्त्रीपुंसत्वेनेत्यर्थः । अथोच्यते—मरीचिदर्शनात्सादृश्याज्जलं पूर्वानुभूतं स्मर्यते न तु तत्रासज्जलं चकास्तीति । तत्राह—गन्धर्वनगरं यथेति । न हि गन्धर्वनगरमन्तरिक्षे कदाचिदुपलब्धम्, न च तत्र तत्सदृशवस्त्वन्तरग्रहणं, येन गन्धर्वनगरं स्मर्येत । तस्मादसतामपि भावनामचिन्त्यान्नि-

उ०—लिङ्गवत्त्वे हेतुमाह—सत्त्वेति । सत्त्वरूपत्वं कथं लिङ्गवत्त्वे साधकमत आह—लिङ्गेत्यादि । वृक्षादावतिव्याप्तिवारणायाह भाष्ये—असत्त्विति । तत्राऽविद्यमानमित्यर्थः । बुद्धौ तु सदिति भावः । तदुक्तम्—

'विप्र ! पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवाऽनुभूयते' ॥ इति ।

अत्र 'न कदाचने'त्युक्त्या सर्वः प्रपञ्चो बहिरसन्नेवेति सूचयति । प्रपञ्चितञ्चैतदस्माभिः परमार्थसारोद्द्योते । तत्र ह्येवमुक्तं भगवता शेषेण—

मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।
तैमिरिकचन्द्रयुगवद्भ्रान्तमखिलं जगद्रूपम्' ॥ इति ।

भ्रमे च बहिरसत एव भानमित्यत्रोक्तम् । ननु मृगतृष्णा न स्वरूपेण असती, नाप्यन्यरूपेण तत्प्रतिभासो, यतः प्रतिभासमानाऽन्यरूपेणाऽसत्त्वं स्यादत आह—मृगेति । पिपासापर्याय'तृष्णा'शब्देन तत्कृतभावनावशादुदकत्वेन प्रतिभासमाना मरुमरीचिकोच्यत इति भावः । 'मरुमरीचिका'शब्देन रविकिरणा ऊर्ध्वाऽधरभावेन नभ आक्रामन्तस्तरङ्गाकारप्रतीतिजनका उच्यन्ते । 'तद्यथा मृगास्तृषिता' इति भाष्ये 'मृगा' इत्युपलक्षणम् ।

स्मर्येत इति । प्रमोषाच्च न तत्तोल्लेख इति भावः । इदञ्च वैशेषिकादिमताऽनुसारेण । अत्र स्मरणाऽभावं दर्शयति—न हीति । अनुभवः, सदृशवस्त्वन्तरग्रहणादि ( ना ) संस्कारोद्बोधश्च स्मृतिहेतुरिति भावः । अदृष्टवशादपि संस्कारोद्बोधेनाऽनादौ संसारे तेषामपि दर्शनेन च तत्राऽपि स्मरणसम्भवाच्चिन्त्यमेतत् । पातञ्जलैः पूर्वाऽनुभूततारूपतत्तायाः प्रमोषानङ्गीकारान्न जलमात्रस्मरणसम्भवः । किञ्च जलस्य स्मरणेऽपि तस्य तद्देशस्थत्वमसदेव भासते इति भाष्याशयः । अचिन्त्येति । अनाद्यविद्यारूपमिथ्यावासनावशादित्यर्थः । अदृष्टविशेषवशादित्यर्थं इत्यन्ये ।

यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते, तद्वत्खट्वावृक्षयोरसल्लिङ्गं द्रष्टव्यम् ।

**आदित्यगतिवत्सन्न**

अथवा यथाऽऽदित्यस्य गतिः सती नोपलभ्यते, तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते ।

**वस्त्रान्तर्हितवच्च तत् ॥**

यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते, तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते ।

---

प्र०—मित्तसामर्थ्याद्यथोपलम्भस्तथा खट्वादावपि स्त्रीत्वादेरित्यर्थः । तदुक्तं हरिणा—

'यथा सलिलनिर्भासो मृगतृष्णासु जायते ।
जलोपलब्ध्यनुगुणाद्बीजाद्बुद्धिर्जलेऽसति ॥
तथैवाऽव्यपदेश्येभ्यो हेतुभ्यस्तारकादिषु ।
मुख्येभ्य इव लिङ्गेभ्यो भेदा लोके व्यवस्थिता'[1] ॥ इति ।

इदानीमसत्त्वं निराकरोति—आदित्यगतिवत्सन्नेति । यथा आदित्यगतिः सति प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्याऽनुमीयते तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात्प्रत्यक्षेणाशक्यं

---

उ०—मृगतृष्णासु—तद्विषयमरुमरीचिकासु । सलिलनिर्भासं स्वयमेव विवृणोति—बुद्धिरित्यादि । असति जले तद्बुद्धिरित्यर्थः । बीजं-मिथ्यावासनादि ।

अव्यपदेश्येभ्यः—अचिन्त्येभ्यः । हेतुभ्यः—मिथ्यावासनाऽदृष्टरूपेभ्यः कारणेभ्य इत्यर्थः । तारकादिषु=तारका-पुष्यः-नक्षत्रमित्यादिषु अचेतनेषु । मुख्येभ्यः-कुमारीत्यादिषु बहिर्विद्यमानेभ्यः स्तनकेशादिभ्यो हेतुभ्यः तद्धेतुकतत्तद्व्यवहार इवाऽसल्लिङ्गहेतुकोऽपि भेदः-भेदव्यवहार इत्यर्थः । शब्देन सम्यग्ज्ञानमिथ्याज्ञानाभ्यामावेदितस्याऽर्थस्याऽविशेषेणाऽभिधानाच्चेतनेषु देवतादिष्विवाऽचेतनेषु तारकापुष्यनक्षत्रादिषु लिङ्गप्रतीतिरविरुद्धेति भावः । प्रतीतिमात्रेणैव च शास्त्रीयकार्यनिर्वाह इति तात्पर्यम् ।

निराकरोतीति । मृगतृष्णादिदृष्टान्तेनाऽसतोऽपि लिङ्गस्य खट्वादौ मिथ्याज्ञानात्मकप्रत्यक्षविषयतामुक्त्वा तस्यैव शब्दबोध्यतोक्ता । तत्राऽसत उपलम्भे शशविषाणादेरप्युपलब्ध्यापत्तिरित्याशयेनाऽसत्त्वं निराकरिष्यन्प्रकारान्तरमाहेत्यर्थः । तत्र तन्निराकरणं 'तयोस्तु तत्कृतं दृष्ट्वे'त्यादिना वक्ष्यति । क्रियाप्रत्यक्षत्ववादिमतसाधारण्याय आदित्यगतिर्दृष्टान्तत्वेनोक्ता भाष्ये । तत्कृतं कार्यं—[2]टाबादि । किञ्चिद्वीति । उद्भूतानुद्भूतगन्धादिवदित्यर्थः । व्यञ्जनं—स्त्रीत्वादिव्यञ्जकं स्तनकेशादि । अनिर्वचनीयवादेनाऽपि न निर्वाहः,

---

१—वाक्यपदीये तृतीयकाण्डे लिङ्गसमु० ८–९ कारिके ।
२—खट्वाशब्दे टाप्, वृक्षे नकारश्चेत्यर्थः ।

विषम उपन्यासः। वस्त्रान्तर्हितानि द्रव्याणि वस्त्राऽपाय उपलभ्यन्ते, खट्वावृत्तयोः पुनर्येऽप्येते रथकारा वाशीवृत्तादनहस्ता मूलात्प्रभृत्याऽऽग्राद् वृत्तांस्तद्दणुवन्ति तेऽपि तयोर्लिङ्गं नोपलभन्ते। केनैतदवसीयते 'खट्वावृत्तयोः सल्लिङ्गं नोपलभ्यत' इति?

षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति, अतिसान्निकर्षादतिविप्रकर्षान्मूर्त्यन्तरव्यवधानात्तमसावृतत्वादिन्द्रियदौर्बल्यादतिप्रमादादिति। अतोऽत्र कश्चिद्धेतुर्द्र-

प्र०—ग्रहीतुं, तत्कृतकार्यदर्शनादनुमीयते। किञ्चिद्धि स्थूलमुपलभ्यं व्यञ्जनं, किञ्चित्सूक्ष्मत्वाद्दुरवधारणमिति भावः। विषम इति। यस्य कदाचिदुपलब्धिर्भवति तस्यानुपलब्धिकारणं व्यवधानादिकमभिधीयताम्; अत्यन्तानुपलब्धस्य तु शशविषाणादिवत् खट्वादौ लिङ्गस्यासत्त्वमेवेत्यर्थः। येप्येत इति। अनेन दृश्यानुपलब्धिमभावसंव्यवहारहेतुमुपन्यस्यति। रथकाराः—तक्षाणः। वृत्तादनम्—शस्त्रकम्। इतरो विद्यमानस्यापि लिङ्गस्य सौक्ष्म्यमनुपलब्धिकारणं दर्शयितुमाह—षड्भिरिति। अतिसन्निकर्षादिति। यथा स्वचक्षुर्गतस्याञ्जनादेः। अतिविप्रकर्षादिति। यथोड्डीनस्य शकुनेः। मूर्त्यन्तरव्यवधानादिति। कुड्यादिव्यवहितस्य सुवर्णादेः। तमसावृतत्वादिति। अन्धकाराक्रान्तस्य श्वभ्रादेः। इन्द्रियदौर्बल्यादिति। तिमिरावृतस्य नयनादेः। अतिप्रमादादिति। विषयान्तरासक्तचित्तत्वादित्यर्थः। सौक्ष्म्यस्येन्द्रियदौर्बल्येऽन्तर्भावान्न पृथगुपन्यासः। दिव्यचक्षुःश्रोत्रा हि सूक्ष्ममप्यर्थमुपलभन्ते न तु दुर्बलेन्द्रियाः। अतोऽत्रेति। इन्द्रियदौर्बल्यमिति

उ०—अनिर्वचनीयस्याऽप्युपलब्धिदर्शनात्। किञ्च, 'ना'ऽनिर्वचनीयस्य ख्यातिस्तदभावा'दिति सांख्यसूत्रेण[1] तन्निरासात्। लोके क्वाप्यदर्शनादिति तदर्थः। अत एवाऽत्र भाष्ये 'असत्तु मृगतृष्णाव'दित्येवोक्तं, न तु 'अनिर्वचनीयन्तु' इत्युक्तम्। किञ्च, सद्भेदेऽसत्त्वम्, असद्भेदे च सत्त्वमित्युभयरूपतैवाऽऽपतति, न त्वतिरिक्तत्वम्। तत्र सत्त्वमधिष्ठानगतमारोपितं, यावद्विशेषदर्शनम्। असत्त्वं वास्तवम् अत एव परमार्थसारे भगवता—'सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येने'त्यादिनोक्तम्। तत्र सत्त्वमधिष्ठानब्रह्मनिष्ठमारोपितमिति'सत्यमिवे'त्यनेन स्पष्टमेवोक्तम्। एतच्च परमार्थसारव्याख्याने प्रपञ्चितमिति बोध्यम्॥ शशविषाणवदिति। अन्यथा तेषामपि सत्त्वं स्यादिति भावः। दृश्याऽनुपलब्धिं—दर्शनयोग्याऽनुपलब्धिम्। शस्त्रकमिति अल्पे कः। 'आरी' इति लोके प्रसिद्धमित्याहुः।

भाष्ये—केनैतदिति। यतो नोपलभ्नेऽत इदं केन मानेन निर्णीतं—सदिति। एवञ्च सत्त्वे मानाऽभावादसत एवोपलम्भ इत्यवश्यमङ्गीकार्यम्। किञ्च, यदि सत्, तदाऽनुपलम्भे किं कारणमिति भावः। अन्धकारेति। आलोकस्य सहकारित्वादिति भावः। श्वभ्रो—गर्त्तः। इन्द्रियाणां दौर्बल्यं—ग्राहकशक्तिहीनता। सा च स्वगततिमिरादिदोषेण, वस्तुगतसौक्ष्म्यदोषेण, तदाधारकालगतसौक्ष्म्यदोषेण च। विषयान्तरेति। मनःसमाधेरपि तत्सहकारित्वादिति भावः। ननु प्रकृतेऽनुपलब्धिकारणसौक्ष्म्यस्याऽनुल्लेखान्न्यूनतेत्यत आह—सौक्ष्म्यस्येति। तदुपपादयति—दिव्यचक्षुरिति। योगसामर्थ्येनेति भावः। एवञ्चाऽस्मदादीनामिन्द्रियशक्त्यभावेन सूक्ष्मार्थसूक्ष्मकालाऽवच्छिन्नार्थग्रहणाऽयोग्यत्वमिति भावः। यद्यपि सर्वदर्शनशक्तिमत्सर्वमिन्द्रियं, तथाप्यस्मदादीनामिन्द्रियस्य द्वयः शक्तयस्तमसावृता इति न देशकालस्वभावविप्रकृष्टाना-

---

१-सांख्यदर्शने ५। ५४

ष्ट्यो येन खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते । केनैतदवसीयते 'खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत' इति ?

**तयोस्तु तत्कृतं दृष्ट्वा**

स्त्रीकृतं शब्दं दृष्ट्वा 'स्त्री'त्यवसीयते, पुंस्कृतं ( शब्दं ) दृष्ट्वा 'पुमा'निति ।

**यथाऽऽकाशेन ज्योतिषः ।**

तद्यथा,—आकाशं दृष्ट्वा 'ज्योतिरत्रेति' गम्यते, ज्योतिर्निमित्तं ह्याकाशम् ।

**अन्योऽन्यसंश्रयं त्वेतत्**

अन्योऽन्यसंश्रयं त्वेतद्भवति । स्त्रीकृतः शब्दः,शब्दकृतं च स्त्रीत्वम् । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।

---

प्र०—भावः । केनैतदिति । सतामसतां चानुपलम्भात्, खट्वादिषु सर्वदा लिङ्गानुपलम्भात् सदसत्त्वविषयः सन्देह इति प्रश्नः । इतरस्तत्सद्भावेऽनुमानमाह—तयोस्त्विति । स्त्रीपुंसकार्यं टाब्लत्वादिकं दृष्ट्वा कारणभूतलिङ्गानुमानं क्रियते इत्यर्थः । आकाशेनेति । आकाशते इत्याकाशं—प्रकाशः, आलोकः । तेन यथा मेघान्तरितं ज्योरिनुमीयते तथा लिङ्गमित्यर्थः ।

अन्योऽन्यसंश्रयमिति । ज्योतिःप्रकाशयोः प्रत्यक्षेण कार्यकारणभावावगमाद्भवतु कार्येण कारणानुमानम्, खट्वादिषु तु लिङ्गस्य कदाचिदप्यग्रहणान्न तेन कस्यचित्कार्यकारणभावग्रहणम् । तत्र हि लिङ्गावगमात् शब्दप्रयोगः, शब्दप्रयोगल्लिङ्गावगतिरितीतरेतराश्रयमेतदित्यर्थः ।

---

उ०—अप्रत्यक्षम् । योगाऽभ्यासेन च तदपनये कॢप्तैः सन्निकर्षैः संयोगादिभिरेव सर्वंप्रत्यक्षम् । योगजधर्मस्य पृथक् प्रत्यासत्तित्वकल्पनस्य गुरुत्वादिति तात्पर्यम् । भाष्ये—अतोऽन्नेति । अत उत्कषट्कादित्यर्थः ।

सतामसताञ्चेति । सतां—विप्रकर्षादिना, असताम्—असत्त्वेन । अनुपलम्भोऽत्र—अप्रत्यक्षम् । एवञ्च खट्वादिषु लिङ्गसदसत्त्वसन्देह एव, न सत्त्वनिश्चय इत्यर्थः । लिङ्गाऽनुमानमिति । स्त्रीत्वसत्ताऽनुमानमेव जायते, न तु तद्बाधज्ञानमपि कदाचिद्व्यवहारपर्यन्तम् । मृगतृष्णाजलादेस्तूत्तरकालं बाधनिश्चयोऽतो न तद्वदारोपेणाऽसतो भानमत्रेत्यर्थः । नन्वव्याप्यत्वात्कथं गगनेन ज्योतिरनुमानमत आह—आकाशत इति ।

न तेन कस्यचित्कार्यकारणेति । अनेन दृष्टविषयाऽनुमानाऽयोगोऽत्र दर्शितः । अथ 'स्त्रियां टा'विति शब्दतस्तयोः कार्यकारणभावग्रहात्, 'कार्यं कारणपूर्वक'मिति सामान्यव्याप्त्या च टाबादिना कार्येण तत्कारणलिङ्गाऽनुमानं स्यात् । तत्रेतरेतराश्रयमाह—तत्र हीति । एतदिति । लिङ्गकार्यदर्शनेन लिङ्गाऽनुमानमित्यर्थः । साधुलिङ्गकार्येण लिङ्गसत्ताऽनुमानं, लिङ्गसत्ताज्ञानेन च तत्साधुत्वज्ञानमित्यन्योन्याश्रय इति भावः ।

लिङ्गस्वरूपविविक्तेति । लिङ्गस्वरूपेण विविक्तं—रहितं यत्खट्वादि तत्प्रत्यक्षेणेत्यर्थः । एवञ्च प्रत्यक्षबाधितमनुमानमिति भावः । नन्विन्द्रियदौर्बल्यादनुपलब्धिरित्युक्तं, तत्राह—इन्द्रियेति । अन्यथा

---

१—क्वचिन्न ।

प्रत्यक्षेण विरुध्यते ॥

प्रत्यक्षेण खल्वपि स विरुध्यते, य आह—'खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत' इति। तत्र स्वेन्द्रियविरोधः कृतो भवति, न च नाम स्वेन्द्रियविरोधिना भवितव्यम्।

तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवसास्यति ॥

तटे च खल्वपि सर्वाणि लिङ्गानि दृष्ट्वा तटः तटी तटमिति, कस्तदध्यवसातुमर्हति—'इयं स्त्री' 'अयं पुमान्' 'इदं नपुंसक'मिति।

तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं च कश्चित् स्वकृतान्त आस्थेयः। कोऽसौ स्वकृतान्तः?

प्र०—यदुक्तमादित्यगतिवत्सन्नेति, तद्दूषयति—प्रत्यक्षेणेति। लिङ्गस्वरूपविविक्तखट्वादिवस्तुविषयेण प्रत्यक्षेण लिङ्गाभावनिश्चयकारिणा विरुध्यत एतदित्यर्थः। इन्द्रियदौर्बल्यमनुपलब्धिकारणं प्रमाणान्तरावसितवस्तुविषवमेवाभिधातुं शक्यते।

तटे चेति। लिङ्गशब्देन तत्कर्माण्यभिधीयन्ते। एकस्मिन् द्रव्ये विरोधात्सर्वलिङ्गाऽसम्भवः। स्त्रीपुंससद्भावे च नपुंसकत्वं न स्यात्। 'तदभावे नपुंसक'मिति वचनात्।

स्वकृतान्त इति। स्वसिद्धान्तः। स्त्रीपुमानिति। रूढिपरिहारेण क्रियाशब्दत्वमाश्रयणीयमित्यर्थः। संस्त्यान इति। भावसाधनत्वं दर्शयति—सूतेरिति। 'सू' इत्येतस्य धातोः सप् भवति। सकारस्य पकारो भवतीत्यर्थः। औणादिको मसुन्प्रत्ययः, ह्रस्वश्च बाहुलकात्।

उ०—शशविषाणादावप्येवं स्यादिति भावः। प्रमाणान्तराऽवसितेति। प्रबलमानाऽन्तरनिश्चितेत्यर्थः। भाष्ये—स्वेन्द्रियविरोधः-स्वेन्द्रियजन्यप्रत्यक्षविरोधः। अनुमानेन च स्वेन्द्रियजप्रत्यक्षविरोधिना न भवितव्यमित्यर्थः। अनयोः प्रत्यक्षाऽनुमानयोरनुमानस्याऽनन्यथासिद्धत्वरूपबलवत्त्वाऽभावेन प्रत्यक्षेण बाध एवोचित इति तात्पर्यम्। कार्येण लिङ्गाऽनुमाने दोषान्तरमाह भाष्ये—तटे चेति। ननु तटे स्तनादिलिङ्गानि नोपलभ्यन्तेऽत आह—लिङ्गशब्देनेति। भाष्ये—अध्यवसास्यति—निश्चेष्यति। ननु तत्र सर्वलिङ्गाऽनुमानमस्त्वत आह—एकस्मिन्निति। सर्वलिङ्गाऽसम्भव इति। लौकिकसर्वलिङ्गाऽसम्भव इत्यर्थः। तेषां परस्परविरोधेन विविक्तविषयाऽवस्थानादिति भावः।

भाष्ये—तस्मादिति। 'सल्लिङ्गं नोपलभ्यते' इति वक्तुमशक्यं; प्रत्यक्षविरोधात्, तटादिषु विरोधाच्च। 'नाऽध्यसदुपलभ्यते' इत्यपि; सत्त्वेन प्रतीतिविरोधात्, (चेतने) कदाचिदपि बाधाऽननुभवाच्च, अनुमानेन सत्त्वनिश्चयाच्च। तथा चाऽचेतनेऽव्याप्तिर्दारादिष्वतिव्याप्तिश्च यतस्तस्मादित्यर्थः। साङ्ख्यमताऽवष्टम्भेनाह—स्वकृतान्त इति। एतेन साङ्ख्यशास्त्राऽनुसारित्वं व्याकरणस्येति सूचयति। रूढिपरिहारेणेति। लोकेऽन्यतन्त्रे च स्त्र्यादिशब्दाः स्तनकेशादिमत्सु रूढा अप्यस्मच्छास्त्रे योगेन तैः संस्त्यानप्रसवावुच्येते इत्यर्थः।

**संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।**

**संस्त्यानप्रसवौ लिङ्गमास्थेयौ।** किमिदं 'संस्त्यानप्रसवा'विति ?

**संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् ॥** इति।

ननु च लोकेऽपि स्त्यायतेरेव स्त्री, सूतेश्च पुमान्। अधिकरणसाधना लोके स्त्री—'स्त्यायत्यस्यां गर्भ' इति। कर्तृसाधनश्च पुमान्—'सूते पुमा'निति। इह पुनरुभयं

प्र०—स्त्यायत्यस्यामिति। संघातरूपं प्राप्नोतीत्यर्थः। कर्तृसाधन इति। सूते-अपत्यं जनयति-पुमानित्यर्थः। संस्त्यानमिति। तिरोभावः। प्रवृत्तिः—आविर्भावः। साम्यावस्था—स्थितिः। एताश्चावस्थाः शब्दगोचरा एवेत्यवसेयम्।

गुणानामिति। 'सत्त्वरजस्तमांसि गुणास्तत्परिणामरूपाश्च तदात्माका एव शब्दादयः पञ्च गुणा', तत्संघातरूपं च घटादि, न तु तद्व्यतिरिक्तमवयवी द्रव्यमस्ती'ति सांख्यानां सिद्धान्तः। केषामिति। सत्त्वादीनामनारब्धकार्याणां सूक्ष्मावस्थानामप्रत्यक्षत्वाच्छब्दव्यवहाराऽगोचरत्वात्प्रश्नः। तथा चोक्तम्—'गुणानां परमं रूपं न दृष्टिपथमृच्छती'ति।

उ०—सपः प्रत्ययत्वभ्रमं निराकरोति—स इत्येतस्येति। सकारस्येति पाठान्तरम्। बाहुलकादिति-पूर्वान्वयि। 'पा'तेर्डुम्सुन्' इत्यादि तु व्याकरणान्तरेऽप्यनार्षम्। सङ्घातरूपमिति। 'गर्भ'पदेन तत्कारणं शुक्रशोणितमुच्यते। संस्त्यानपदार्थमाह—तिरोभाव इति।

संस्त्यानप्रसवाभ्यां तृतीयमपि लक्ष्यत इत्याह—साम्याऽवस्थेति। नन्वेतासामवस्थानां सर्वत्र सत्त्वे प्रत्यक्षेण कुतो नोपलम्भोऽत आह—एता इति। शब्दगोचरा एव-शब्दजन्यप्रतीतिविषया एवेत्यर्थः। यद्यपि वक्ष्यमाणन्यायेन सर्वेषु पदार्थेष्वेता व्याप्तास्तथाऽपि केनचिच्छब्देन कस्यचिदेव प्रत्यायनमित्यपि 'शब्दगोचरा' इत्यनेनोच्यते।

भाष्ये—कस्य पुनरिति। जातावेकवचनम्। सत्त्वेत्यादि। सर्वस्य जगतः सुखदुःखमोहाऽन्वयात्कारणत्वेन सत्त्वादीनि परिकल्प्यन्ते। प्रकृतिस्त्रिगुणात्मिका महच्छब्दवाच्यबुद्धिरूपेण परिणमते। महत्-अहङ्कारात्मना। अहङ्कारस्य—गन्धरूपरसस्पर्शशब्दात्मकपञ्चतन्मात्राः, दशेन्द्रियाणि, मनश्च परिणामः। अत एव सत्त्वाद्यात्मका शब्दादयश्च पृथिव्याद्यात्मना परिणमन्ते। तत्र पञ्चानां पृथिवी, चतुर्णामापः, त्रयाणां तेजः, द्वयोर्वायुः, एकस्य गगनम्। एवं प्रकृतिः सर्वरूपा पुरुषभोगार्था। पुरुषश्च न प्रकृतिर्नोऽपि विकृतिः, केवलचैतन्यरूपोऽपरिणामी शुद्ध इति साङ्ख्यसिद्धान्तः। 'प्रकृतिरचेतनाऽपि चेतनस्य पुरुषस्य भोगा'ऽपवर्गलक्षणमर्थं साधयितुं तत्तददृष्टादिसहकारेणेश्वरेण प्रवर्त्यत' इति च सेश्वरसाङ्ख्यसिद्धान्तः। तत्सङ्घातरूपञ्चेति। शब्दादिसङ्घातरूपमित्यर्थः। न तु तद्व्यतिरिक्तमिति। अत एवाग्रे—'सर्वाश्च मूर्त्तय एवमात्मिकाः' इति भाष्यकारो वक्ष्यति। साङ्ख्यानामिति। सेश्वरसाङ्ख्यानामाचार्यस्य पतञ्जलेरित्यर्थः। 'गुणसमूहो द्रव्य'मिति पतञ्जलि'रिति योगभाष्ये स्पष्टम्। तद्वक्ष्यति—'सर्वाश्च मूर्त्तय एवमात्मिकाः' इति।

१—उणादि० ४। १७८

२—प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् (योग० २। १८)

भावसाधनम्—( सं )स्त्यानं स्त्री, प्रवृत्तिश्च पुमान् । कस्य पुनः ( सं )स्त्यानं स्त्री, प्रवृत्तिर्वा पुमान् ? गुणानाम् । केषाम् ? शब्दस्पर्शरूपरसगन्धानाम् । सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः । यत्राल्पी-

प्र०—इतरस्तत्परिणामरूपान् लोकप्रसिद्धानाह—शब्दस्पर्शेति । अवरत इति । अन्तत इत्यर्थः । ननु आकाशं शब्दात्मकमेव, स्पर्शात्मकश्च वायुः । नैष दोषः । संपिण्डितस्वभावाश्चक्षुर्गोचरा मूर्तिशब्देनात्र विवक्षिताः । रसगन्धाविति । वाय्वाकाशयोरभावात् । सर्वपदार्थव्यापित्वं पुंस्त्वादीनामाह—प्रवृत्तिरिति । न हीति । सत्त्वादीनामाविर्भावादिरूपः प्रवृत्तिशब्दवाच्यो नित्यः

उ०—सूक्ष्माऽवस्थानामिति । प्रकृतिरूपाणामित्यर्थः । अप्रत्यक्षत्वादिति । अस्यैव व्याख्यानं—शब्दव्यवहारेति । प्रकृतिशब्दाऽतिरिक्तशब्दाऽवाच्यत्वादित्यर्थः । तदवस्थानामाविर्भावतिरोभावयोरभावाल्लिङ्गत्रयव्यवहाराऽनुपपत्तेरित्यपि बोध्यम् । यद्वा शब्दकृतव्यवहारस्य प्रवृत्तिनिवृत्तिरूपस्य अविषयत्वादित्यर्थः, तत्राऽप्रत्यक्षत्वं हेतुः । परमं—शब्दादिरूपेण परिणतम् । दृष्टिपथमिति । अस्य ज्ञानविषयत्वमित्यर्थः । शब्दादिग्रहणं तत्परिणामसामान्योपलक्षणम् ।

भाष्ये—संस्त्यानप्रसवगुणत्वे हेतुकथनं—शब्दस्पर्शेत्यादि । शब्दादिपदेन—शब्दादितन्मात्राणि । तेषां तिरोभावादिसम्भवादिति भावः । 'समूहसमूहिनोः कात्स्न्यैनिको भेदोऽपी'ति सूचयितुमत्र मत्वर्थीयः । स्पर्शात्मकश्चेति । चाच्छब्दात्मक इति बोध्यम् । भाष्ये—शब्दस्पर्शेत्याद्युपलक्षणं—सत्त्वरजस्तमःकार्यमात्रस्य । अत एव 'रसो गन्धः पाकः' इत्यादौ लिङ्गव्यवहारनिर्वाहः । पद्मावत्यादौ रूपादीनां सुखदुःखमोहजनकतया तेषां सत्त्वरजस्तमोमयतायाः स्पष्टतया तत्कथनद्वारा सर्वं तत्कार्यमुपलक्षितमिति बोध्यम् । एतेन 'शब्दनिष्ठमेव लिङ्ग'मिति नव्योक्तं परास्तं, स्पर्शादिकथनस्य भाष्ये वैयर्थ्यापत्तेः ।

चक्षुर्गोचरा इति । वाय्वाकाशयोरेवंरूपत्वाऽभावेन ताविह न विवक्षिताविस्यर्थः । वाय्वाकाशयोरिति । इदमुपलक्षणं तेजसोऽपि, रसगन्धयोरभावात् ।। नन्वेवमपि संस्त्यानप्रसवगुणत्वं सर्वत्र कथमत आह भाष्ये—प्रवृत्तिः खल्वपीति । 'प्रवृत्ति'रिति लिङ्गसामान्यलक्षणम् । नित्या—सार्वदिकत्वात्सार्वत्रिकत्वाच्च । तदाह—सर्वपदार्थव्यापित्वमिति । रूपरसादिसर्वपदार्थेत्यर्थः । इदमुपलक्षणं सर्वकालव्यापित्वस्य । 'प्रवृत्तिः खल्वपि नित्ये'त्यनेनाऽन्त्यं, 'तच्चोभयं सर्वत्रे'त्यनेनाद्यं दर्शितमिति बोध्यम् ।

भाष्ये—न हीहेति । रूपादीनामपि काचिदवस्था प्रलीयते काचिद्वर्धते इत्याविर्भावतिरोभावौ सर्वत्रेत्यर्थः । आविर्भावादीति । आदिना तिरोभावस्थिती । नित्य इति । नित्यत्वञ्च सर्वदा सर्वत्र च भावात् । तच्च 'न ही'त्यादिना भाष्ये दर्शितम् । ननु पुरुषे परिणामाऽनभ्युपगमात्कथं 'पुरुषश्चितिश्चैतन्य'मिति लिङ्गत्रययोग इति शङ्कने—पुरुषो यद्यपीति । तद्धर्मापन्न इवेति । भोग्यत्रिगुणात्मकवस्तुधर्मापन्न इत्यर्थः । अयं भावः—भोक्तृत्वाऽवस्थायां भोग्यवस्तुशबलितमेव चैतन्यं प्रतीयते तदेव च शब्दगोचरम्, एवञ्च 'गच्छति पुरुष' इतिवत्तस्य लिङ्गत्रयोपपत्तिरिति ।

---

१—मातापितृजं स्थूलं प्रायश इतरन्न ।। ७ ।। पाञ्चभौतिको देहः ॥ १७ ।। चातुर्भौतिकमित्येके ।। १८ ।। एकभौतिकमित्यपरे ।। १९ ।। ( सांख्य० अ० ३ )

सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ( सां० ५ । ११२ ) इति कपिलः ।

यांसो गुणास्तत्रावरतस्त्रयः शब्दः स्पर्शो रूपमिति । रसगन्धौ न सर्वत्र[1] । प्रवृत्तिः खल्वपि नित्या । न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्धते वा यावदनेन वर्धितव्यम्, अपायेन वा युज्यते । तच्चोभयं सर्वत्र । यद्युभयं सर्वत्र, कुतो व्यवस्था ?

प्र०—परिणाम इत्यर्थः । पुरुषो यद्यप्यपरिणामी, तथापि भोक्तृत्वात्तद्धर्मापन्न इव भवति । तदुक्तं हरिणा—

'प्रवृत्तिरिति सामान्यं लक्षणं तस्य कथ्यते ।
आविर्भावस्तिरोभावः स्थितिश्चेत्यथ भिद्यते ॥ १ ॥

प्रवृत्तिमन्तः सर्वेऽर्थाः तिसृभिश्च प्रवृत्तिभिः ।
सततं न वियुज्यन्ते वाचश्चैवात्र संभवः ॥ २ ॥

यश्चाऽप्रवृत्तिधर्माऽर्थश्चितिरूपेण गृह्यते ।
अनुयातीव सोऽन्येषां प्रवृत्तीर्विष्वगाश्रयः ॥ ३ ॥

तेनाऽस्य चितिरूपं च चितिकालश्च भिद्यते ।

उ०—प्रवृत्तिरिति । 'अजस्रपरिणामिनां गुणानां परिणामविशेषाऽनादरेण प्रवृत्तिः परिणाम' इति सामान्यलक्षणमित्यर्थः । अथ तत्सामान्यमाविर्भावादिरूपेण त्रिधा भिद्यते । तत्र आविर्भावः—पुंस्त्वम्, तिरोभावः—स्त्रीत्वम्, स्थितिः—अन्तरालावस्था नपुंसकत्वम् । अत एव स्थितेः संख्यानप्रसवव्यापित्वेन लिङ्गसर्वनामनपुंसकम् ॥ १ ॥

प्रवृत्तेः सार्वत्रिकत्वं दर्शयति—प्रवृत्तिमन्त इति । 'यतस्तिसृभिः प्रवृत्तिभिः सततं सर्वदा न वियुज्यन्तेऽतः सर्वेऽर्थाः प्रवृत्तिमन्त' इत्यन्वयः । नित्ययोगे मतुप्, नित्यं प्रवृत्तिमन्त इत्यर्थः । 'सतत'मित्यनेन सार्वदिकत्वमुक्तम् । वाचश्चैवेति । एवम्भूतेषु पदार्थेष्वेव वाचः—शब्दस्य सम्भवः । न हि शुद्धं परिणामरहितं वस्तु शब्दविषयम्, आकाराऽवग्रेहेणैव शब्दवाच्यत्वादिति भावः ॥ २ ॥

अपरिणामधर्मिणि पुरुषे लिङ्गयोगमुपपादयति—यश्चेति । चितिरूपेण—केवलचैतन्यरूपेण । गृह्यते—'योगिभि'रिति शेषः । अन्येषाम्—भोग्यानाम् । विष्वगाश्रयः—सर्वपदार्थाऽनुगतः । 'विष्वगाश्रयाः' इति पाठोऽसङ्गतः, 'अन्येषाम्प्रवृत्ती'रित्यनेन पौनरुक्त्यादित्याहुः । अनुयातीव—अनुगच्छतीव । वस्तुतः परिणामाऽभावेऽपि व्यवहारे भोग्यशबलितत्वेनैव ग्रहणाद्भोग्यनिष्ठप्रवृत्त्यादिना सोऽपि लिङ्गादिमानिति भावः । तत्तदवस्थतत्तद्वस्त्वाकारवृत्तीनां चैतन्ये प्रतिबिम्बादिति तत्त्वम् ॥ ३ ॥

तत्र मानं दर्शयति—तेनेति । तेन-बुद्धिदर्पणसंक्रान्तेन भोग्यजातेन । भोक्तुश्चितिरूपं भिद्यते—विषयाकारेण हि ज्ञानं भेदेन गृह्यत इत्यर्थः । यथा घटज्ञानं, पटज्ञानमिति । कालश्चेति । 'ज्ञास्यति' 'ज्ञात'

१—रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥ रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥ २ ॥ तेजो रूपस्पर्शवत् ॥ ३ ॥ स्पर्शवान् वायुः ॥ ४ ॥ त आकाशे न विद्यन्ते ॥ ५ ॥
(वै० द० अ० २ आ० १) इति कणादः ।

विवक्षातः । संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, [1]'उभयोरविवक्षायां नपुंसकम् ।

तस्य स्वरूपभेदस्तु न कश्चिदपि विद्यते ॥ ४ ॥
अचेतनेषु संक्रातं चैतन्यमिव दृश्यते ।
प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम्' ॥ ५ ॥ इति ।

सामान्यमपि गोत्वादिकं व्यक्तेरव्यतिरिक्तत्वात्प्रवृत्तिधर्मः शशविषाणादावपि उत्तरपदार्थस्य सद्भावात्तद्द्वारको लिङ्गयोग इति सर्वपदार्थव्यापित्वं प्रवृत्तेः । आविर्भावतिरोभावान्तरालावस्थास्थितिरुच्यते । सा च नपुंसकत्वेन व्यवस्थाप्यते । स्त्रीत्वं, स्त्रीता, पुंस्त्वमित्यादौ संस्त्यानादेरपि प्रवृत्तिलक्षणलिङ्गयोगः । विवक्षात इति । लोकव्यवहारानुवादिनी विवक्षा आश्रीयते न तु प्रायोक्त्री । तदुक्तं हरिणा—

'संनिधाने निमित्तानां किंचिदेव प्रवर्तकम् ।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥ १ ॥

उ०—इत्यादौ । तस्य—चैतन्यमात्ररूपस्य । स्वरूपभेद इति । स्वरूपतः—देशतः कालतो वा न कश्चित्तत्स्वरूपभेदस्तस्य विद्यते इत्यर्थः ॥ ४ ॥

ननु शुद्धस्य पुरुषस्य भोग्येनाऽसम्बन्धात्कथं तद्वृत्तिधर्मेण व्यवहारोऽत आह—अचेतनेष्विति । 'चैतन्यमचेतनेषु संक्रान्तमिव दृश्यते' इत्यन्वयः । प्रतिबिम्बकधर्मेणेति । बिम्बप्रतिबिम्बन्यायेनेत्यर्थः । यथा दर्पणे मुखादि गृह्यते, न च तद्वस्तुतस्तत्राऽस्ति, तद्वच्चैतन्यमपि दर्पणस्थानीयेषु सत्त्वादिगुणमयेषु जडेषु अन्तःकरणादिषु सत्त्वधर्मस्वच्छत्वाऽतिशयवशेन तत्राऽविद्यमानमपि संक्रान्तमिव दृश्यते, अतस्तत्संक्रमविशिष्टान्तःकरणवृत्तौ सर्वाऽर्थाऽऽकारसमर्पणात्तादृशवृत्तेश्च पुनश्चेतने प्रतिबिम्बादन्येषामप्रवृत्तिमनुविदधदनुभवति लिङ्गयोगमिति तदेव वाचो निबन्धनमिति भावः ॥ ५ ॥

ननु जातेर्नित्यतया प्रवृत्तिधर्माऽयोगात्कथं 'जातिः' 'सामान्य'मित्यादिलिङ्गयोगोऽत आह—सामान्यमपीति । 'तत्तद्व्यक्त्यनुगता ब्रह्मसत्तैव गोत्वादिजाति'रिति पक्षे इदम् । जातिव्यक्त्योस्तादात्म्यबोधकसमवायस्यैव सम्बन्धत्वात्तद्धर्मारोपस्तत्रेत्यर्थः । वस्तुतस्तदपि प्रकृतेः परिणामविशेष एव, चिरस्थायितामात्रेण तु परेषां नित्यत्वव्यवहारः । अत्यन्ताऽसच्छशविषाणादौ लिङ्गयोगमुपपादयति—शशेति । एवञ्चोत्तरपदार्थधर्मस्य बौद्धे समुदाये आरोप इति भावः । केचित्तु—यथा बुद्धिविषयार्थवत्त्वेन प्रातिपदिकत्वं तथा लिङ्गयोगोऽपीत्याहुः । प्रवृत्तेरिति । परिणामस्येत्यर्थः । ननु स्त्रीत्वादेः स्त्रीत्वाऽन्तराद्ययोगात्कथं स्त्रीतेत्यादीति; तत्राह—संस्त्यानादेरिति । परिणामरूपस्यापि संस्त्यानादेः परिणामान्तरसद्भावेन सलिङ्गतोपपन्नेति भावः । लोकव्यवहारेति । पृषोदरादिसूत्रोक्तशिष्टलोकेत्यर्थः ।

किञ्चिदेवेति । लिङ्गविशेषरूपं निमित्तमित्यर्थः । शब्दशक्तिवैचित्र्यादिति भावः । प्रवर्त्तकं—तत्तदर्थे तत्तच्छब्दप्रयोगनियामकम् । यथा तक्षणच्छेदनाद्यनेकक्रियासन्निधानेऽपि तक्षणमाश्रित्य 'तक्षाऽय'मिति व्यवह्रियते ॥ १ ॥

१—'उभयविवक्षायां' पा० ।

**तस्योक्तौ लोकतो नाम**

तस्योक्तौ च=वचने लोकतो नामैतद्भवति—'स्त्री पुमान्नपुंसक'मिति ।

**गुणो वा लुपियुक्तवत् ॥**

वध्रिकादिषु भूयान् परिहारः । 'लुपि युक्तवद्व्यक्तिवचने' [ १ । २ । ५१ ] इत्येवमत्र गुणो भवति ॥ न चैतन्मन्तव्यं स्वमनीषिकयोच्यत इति । पठिष्यति ह्याचार्यः—'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति । पुनः पठिष्यति—'एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वम्, 'अवयवान्यत्वाच्चे'ति* ।

---

भावतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः ।
यद्यद्धर्मेऽङ्गतामेति लिङ्गं तत्तत्प्रचक्षते' ॥ २ ॥ इति ।

तस्योक्ताविति । लोकतः=शिष्टलोकात्=तस्य लिङ्गस्य प्रतिपादने व्यवस्थानुगन्तव्येत्यर्थः । भूयानिति । भ्रूकुंसादिषु स्तनकेशादिमत्त्वलक्षणलिङ्गाभ्युपगमत्यागः परिहारः । खट्वादिषु तु तदपरित्यागेऽपि शास्त्राल्लिङ्गसिद्धिरिति भावः । लिङ्गमशिष्यमिति । अनेन लिङ्गव्यवस्थायां लोकः प्रमाणमित्यर्थः । एकार्थ इति । अनेन लिङ्गस्वरूपमपि लोकादेव ज्ञायत इत्युक्तं भवति । तत्रैकस्मिन्नेवार्थे संस्त्यानादिसद्भावात्पुष्यस्तारका नक्षत्रमिति शब्दान्यत्वाल्लिङ्गान्यत्वम् । स्तनकेशादिसंबन्धे तु लिङ्गेऽभ्युपगम्यमाने एतन्न युक्तम् । अवयवान्यत्वाच्चेति । ( कुटी ) कुटीर

---

उ०—भावतत्त्वविदः—ब्रह्मतत्त्वसाक्षात्कारवन्तः । निरुपपद—'भाव'पदस्य ब्रह्मणि रूढेः । ते=शिष्टाः । शब्दार्थेषु व्यवस्थिताः, 'प्रमाणत्वेने'ति शेषः । तेषाम्प्रयोगे यद्यल्लिङ्गं धर्मेऽङ्गतामेति तत्तच्छब्दस्य लिङ्गमित्यन्वयः । एवञ्च येषां शब्दानां यल्लिङ्गमुपादाय शिष्टाः साधुत्वाऽवगमपूर्वकं धर्मजनकत्वबुद्धया प्रयोगं कुर्वन्ति तेषां तदेव लिङ्गमिति नियमः सिद्ध इति भावः ॥ २ ॥

तमेवार्थं भगवानाह—तस्योक्ताविति । 'तस्योक्ता'वित्यत्र वचिः प्रतिपादने इत्याह—लोकत इति । प्रतिपादने—शब्देन बोधने । तेनाऽस्य लिङ्गस्य शब्दजन्यबोधविषयतोक्ता । किमेतदित्यत्राह—स्त्री पुमानित्यादि ।

भाष्ये—गुणो वेति । 'गुणशब्देन लिङ्गमुच्यते । एवञ्चाऽतिदिश्यमानविरुद्धस्वकार्याऽभाव इति भावः । भाष्ये—न चैतदिति । एतत्—आविर्भावादिरूपं लिङ्गं, 'तस्योक्तौ लोकतो नामे'त्येतच्च स्वमनीषिकयोच्यते इति न मन्तव्यमित्यर्थः । आचार्य इति । वार्तिककृदित्यर्थः । पुनः पठिष्यतीति । 'तस्याऽपत्य'मिति सूत्रे इति बोध्यम् ।

---

* ४ । १ । ९२ वा० ६-७

संस्त्याने स्त्यायतेर्ड्रट् स्त्री, सूतेः सप् प्रसवे पुमान् ।
तस्योक्तौ लोकतो नाम, गुणो वा लुपि युक्तवत् ॥

कथं पुनरिदं विज्ञायते–'स्त्रियामभिधेयायां टाबादयो भवन्ती'ति, आहोस्वित्–'स्त्रीसमानाधिकरणात्प्रातिपदिका'दिति । कश्चात्र विशेषः ?

**स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः ॥ १ ॥**

स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो भवन्ति, द्विवचनबहुवचनयोरनुपपत्तिः-कुमार्यौ कुमार्यः, किशोर्यौ किशोर्यः । किं कारणम् ? [ [1]एकत्वात् स्त्रीत्वस्य । ]

प्र०—इति रेफस्यावयवस्योपजने लिङ्गभेदो दृष्ट इत्यर्थः । यद्यपि अविचारितरमणीयं लिङ्गमाश्रित्य वक्तारः शब्दानुच्चारयन्ति, श्रोतारश्च प्रतिपद्यन्ते, तथापि वस्तुतत्त्वनिर्णयो भाष्यकारेण कृत इति यदन्यैरभ्यध्यायि—'संस्त्यायादिलक्षणमलौकिकं लिङ्ग'मिति, तदपाकृतं भवति । कथमिति । स्त्रीशब्दः शुक्लादिशब्दवद्गुणमात्रे गुणिनि च वर्तते । तत्र यदा गुणमात्रमिह स्त्रीत्वं स्त्रीशब्देनोच्यते तदा 'द्रव्यवाचिनः प्रातिपदिकात् स्त्रीत्वे वाच्ये टाबादय' इति स्त्रीत्वं प्रत्ययार्थ इति पक्षः संपद्यते । यदा तु स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते तदाऽपरं पक्षद्वयं संभवति । 'स्त्रीत्वोपलक्षितद्रव्यवाचिनः प्रातिपदिकाट्टाबादयः इति—स्त्रीसमानाधिकरणपक्षसंभवः । अथ 'स्त्रीत्वयुक्तद्रव्यवाचिनोऽङ्गीकृतस्त्रीत्वात्प्रातिपदिका'दिति—प्रकृत्यर्थविशेषणपक्षसंभवः । एकोयमर्थ इति । प्रकृत्यर्थोपसर्जनस्य स्त्रीत्वस्य प्रत्ययेनाभिधानादिति भावः । यद्यपि शब्दादीनामवस्थाविशेषो लिङ्गम्, अवस्थाश्चावस्थातुरभिन्नास्तथापि यथा शब्दादीनां संनिवेशमात्रे घटे शब्दादीनां

उ०—तत्राद्यवार्तिकार्थमाह–लिङ्गव्यवस्थायामिति । लिङ्गस्वरूपं-संस्त्यानप्रसवावित्येतत् । तत्रेति । 'गुणानामवस्था लिङ्गम्' इत्यभ्युपगमे सतीत्यर्थः भाष्ये—शब्दाऽन्यत्वमेव प्रकारान्तरेणाह—अवयवाऽन्यत्वाच्चेति । एवमपि शब्दाऽन्यत्वमिति भावः ॥ नाऽस्य प्रयोगप्रतिपत्तिः फलं विचारस्य, किं तर्हि ?, परमतनिरास इत्याह—यद्यपीति । अविचारितमपि—आविर्भावत्वादिनाऽज्ञातमपि, रमणीयं—शब्दबलाप्रतीतं लिङ्गमाश्रित्य शब्दव्यवहारदर्शनान्नाऽस्य विचारस्य प्रयोगप्रतिपत्तिः फलमित्यर्थः । तस्मात्स्त्रीत्वादिना प्रतीयमानं संस्त्यनादिकं लौकिकम् । तस्याऽलौकिकत्वे तु 'खट्वा स्त्री, वृक्षः पुमान्' इत्यादिव्यवहारोनुपपन्न इति तस्यापि लौकिकत्वप्रसाधनेनाऽलौकिकत्वं निराकृतमिति भावः । स्त्रीत्वोपलक्षितेति । वस्तुतः स्त्रीत्वयुक्तं यद्द्रव्यं तन्मात्रवाचिनः, न तु स्त्रीत्वविशिष्टवाचिन इत्यर्थः । 'अङ्गीकृतस्त्रीत्वात्प्रातिपदिकादिती'त्यस्य 'पक्षस्तदे'ति शेषः । प्रकृत्यर्थोपसर्जनेति । यद्यपि स्त्रीत्वाश्रयद्रव्यस्य द्वित्वादिसंभवस्तथापि प्रधानार्थस्य संख्यायां वचनेन भाव्यम्, तस्य च द्वित्वाद्यभाव इति भावः । 'वेदाः प्रमाणम्' इत्याद्यपि प्रमाणत्वगतसं-

१—कीलहार्नसंस्करण इदं न विद्यते ।

## सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादयः ॥ ५ ॥

सिद्धमेतत् । कथम् ? 'स्त्रियाः प्रातिपदिकविशेषणत्वात्' प्रातिपदिकविशेषणं स्त्रीग्रहणम्, स्वार्थिकाष्टाबादयः । नैवं विज्ञायते 'स्त्रियामभिधेयाया'मिति, नापि 'स्त्रीसमानाधिकरणा'दिति । कथं तर्हि ? 'स्त्रियां यत् प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्ति । कस्मिन्नर्थे ? स्वार्थ इति ।

अथवा पुनरस्तु 'स्त्रियामभिधेयाया'मिति । ननु चोक्तं 'स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः' 'स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्ति'रिति । नैष दोषः । यत्तावदुच्यते—'द्विवचनबहुवचनयोरनुपपत्ति'रिति—

## गुणवचनस्य चाऽऽश्रयतो लिङ्गवचनभावात् ॥ ६ ॥

गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा,—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति ।

प्र०—इदानीं तृतीयं पक्षमाश्रित्याह—सिद्धं त्विति । स्त्रीत्वयुक्तेऽर्थेऽङ्गीकृतसंस्त्याने वर्तमानात् स्वार्थे टाबादय इत्यर्थः । एवमिहापीति । यद्यपि गुणमात्रे प्रत्ययः क्रियते तथापि गुणगुणिनोरभेदविवक्षायां स्वाभाविकत्वाद्वा गुणप्रधानभावव्यवस्थायाः कुमारीशब्देन द्रव्यस्यैवाभिधानात्तद्गतसंख्यानिमित्ता वचनोत्पत्तिः, द्रव्यवाचिना च नित्यं सामानाधिकरण्यमिति भावः । तदुक्तं हरिणा—

'सोयमित्यभिसम्बन्धादाश्रयं प्रतिपद्यते ।
स्त्रीत्वं स्वभावसिद्धो वा गुणभावविपर्ययः' ॥ इति ।

उ०—विवक्षया शब्दप्रयोगादिति भावः । अथेति । सामान्ये सर्वविशेषाऽन्तर्भावाद्ब्राह्मण्यादिप्रतीतेरिति भावः । परस्पराऽपेक्षणादिति । स्त्रीशब्दान्ङीपि सति तत्सामानाधिकरण्यात्तदधिकारस्थस्त्रीप्रत्यये ब्राह्मण्यादिसिद्धिः । तत्सामानाधिकरण्याच्च 'स्त्र'शब्दात्प्रत्यय इत्यर्थः । साधुत्वज्ञानाऽनुपपत्तिरेतदितरेतराश्रयस्य दूषकताबीजम् । अङ्गीकृतसंस्त्याने इति । तद्विशिष्टस्त्रीवाचकादित्यर्थः । अनेनाऽत्र पक्षे स्त्रीत्वस्य विशेषणत्वमेवेति सूचितम् । एवमिहापीति । ननु शुक्लादीनां द्रव्यविशेषणत्वादाश्रयगतलिङ्गादि युक्तं; तस्य प्राधान्यात्, इह तु स्त्रीत्वं प्रधानं प्रत्ययवाच्यत्वात्, द्रव्यं गुणभूतम्—प्रकृत्यर्थत्वादिति कथं गुणधर्माणां प्रधाने प्रतिपत्तिरिति शङ्कते—यद्यपीति । 'अभेदविवक्षाया'मित्यस्य—'द्रव्यस्यैवाऽभिधाना'दित्यनेनाऽन्वयः । स्वाभाविकत्वाद्वेति । प्रत्ययार्थप्राधान्यं तु उत्सर्ग इति भावः । द्रव्यस्यैवेति । न कदाचिदपि प्राधान्येन स्त्रीत्वस्य गुणस्येति भावः । नित्यं सामानाधिकरण्यमिति । 'इयं स्त्री'त्येव सर्वदा न तु 'अस्याः स्त्री'ति कदाचिदिति भावः । एवन्तु—'अजादीनां या स्त्री'ति 'अजाद्यत' इतिसूत्रे भाष्यं, 'अजाद्यर्थगते स्त्रीत्वे इत्यर्थः' इति कैयटश्च कथं सङ्गच्छत इति चिन्त्यम् ।

यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति । एवमिहापि यददो द्रव्यं श्रितं भवति स्त्रीत्वं[1] तस्य यल्लिङ्गं वचनं च तत्स्त्रीत्वस्यापि भविष्यति ॥ यदप्युच्यते–'अनेकप्रत्ययानुपपत्ति'रिति—

**भावस्य च भावयुक्तत्वात् ॥ ७ ॥**

भावो भावेन युज्यते । तद्यथा,–इषिरिषिणा निमन्त्रिश्च निमन्त्रिणा* ॥ विषम उपन्यासः । युक्तं तत्रान्यत्वं साधनभेदात् कालभेदाच्च । उक्तं तत्रैकस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः, अपरस्याभ्यन्तरं साधनं वर्तमानकालश्च प्रत्यय इति । इह पुनरेकं स्त्रीत्वम् ॥ अथैकमप्युपलभ्यते । किं चातः ? यद्येकमुपलभ्यते द्वितीयमप्युपलभ्यताम् । अथैकमप्यनुमानगम्यं द्वितीयमप्यनुमानाद्गम्यताम् ।

प्र०—भावस्येति । स्त्रीत्वस्य स्त्रीत्वेन योग इत्यर्थः । इषिरिति । एषितुमिच्छतीत्यत्रेत्यर्थः । निमन्त्रिश्चेति । 'निमन्त्रये' इत्यत्र निमन्त्रणे लिङ्विधावित्यर्थः । एकस्येति । एषितुमित्यस्येषेरित्यर्थः । बाह्यमिति । भोजनादिकमित्यर्थः । सर्वकाल इति । तुमुन्नित्यर्थः । स हि 'समानकर्तृकेषु तुमु'न्निति कालमात्रे विधीयते । अपरस्येति । इच्छतीत्यस्य । आभ्यन्तरमिति । इषिरेव कर्मेत्यर्थः । स चैषिषतीत्यत्र प्रकृत्यर्थत्वादाभ्यन्तरः । इह पुनरिति । भेदहेत्वभावादेकमेक स्त्रीत्वम् । इच्छायास्त्वभिन्नरूपाया अपि कालसाधनभेदाद्भवतु भेदग्रहणमित्यर्थः । इतर 'इह पुनरेकमिति ब्रुवता स्त्रीत्वमनेन प्रतिपन्नं, भेदस्तु सुसाध' इति मत्वाह—अथैकमपीति । यद्येकमुपलभ्यत इति ।

खट्वादिष्वसदपि मृगतृष्णावद्यद्युपलभ्यते लिङ्गम् ।
अविचारितमणीयेन च तेन प्रसिद्धो व्यवहारः ॥

उ०—सोऽयमितीति । गुणमात्रस्य प्रत्ययार्थत्वेऽपि द्रव्येणोपचरिताऽभेदं गुणं प्रत्ययोऽभिधत्त इति स्त्रीत्वं कर्तृ—आश्रयमभेदेन प्रतिपद्यते इति तद्गतसंख्यादिलाभ इत्यर्थः । अत्रैव पक्षे भाष्यस्वारस्यं, गुणवचनदृष्टान्तेन साधनात् । न हि गुणप्रधानभावविपर्ययेऽस्योपयोगः, सम्भवो वा । वाचकत्वे प्रत्ययार्थस्य प्राधान्यमेवेत्येव भाष्याशय इति दिक् ।

भावशब्देन धर्ममात्रमुच्यत इत्याह—स्त्रीत्वस्येति । निमन्त्रये इत्यत्रेति । निमन्त्रणार्थकलिङ्विधिविषये'निमन्त्रये' इत्यत्रेत्यन्वयः । कथं पुनरिषिरूपस्य कर्मण आभ्यन्तरत्वमत आह—स चेति । इषिश्चेत्यर्थः । एकमेवेति । एकङीषादिवाच्यमेकमेव स्त्रीत्वमिति स्वस्य स्वेन योगाऽसम्भव इत्यर्थः । अभिन्नरूपाया इति । धातुतो भेदाऽनवगतेरिति भावः ।

भेदसाधनाय'यद्येक'मित्यादि भाष्यम्, तद्व्याचष्टे—खट्वादिष्विति । लिङ्गस्याऽनुमानगम्यत्वमुपपादयति—सुखेति । तत्परिणामेति । सुखाद्यात्मकसत्त्वादिपरिणाम इत्यर्थः । एवञ्च गुणानाम्प्रवृत्त्यनुमेयत्वेन तत्परिणामात्मकलिङ्गस्याऽपि तत्त्वम् । तत्र प्रवृत्तेरपीति । गुणानां प्रवृत्तिः—आविर्भावादि, लिङ्ग—

१—'स्त्रीत्वं गुणः' पा० । * ३ । १ । ७ वा० १५ भाष्ये; ३ । ३ । १६१ वा० ३ भाष्ये ।

कस्य तावद्भवानेतं गुणं न्याय्यं मन्यते स्त्रीत्वं नाम ? द्रव्यस्य । द्रव्ये च भवतः कः संप्रत्ययः ? यदि तावद्गुणसमुदायो द्रव्यम्, का गतिर्य एते भावाः कृदभिहितास्तद्धिताभिहिताश्च—चिकीर्षा गोतेति† । अथ मतमेतत् 'कृदभिहितो भावो द्रव्यवद्भवती'ति, स्त्रीत्वमपि स्त्रीत्वेनाभिहितं द्रव्यवद्भविष्यति ।

क्व च तावद्दोषः स्यात् ? दृष्टस्य हि दोषस्य सुसुखः परिहारो गार्ग्यायणी कारीषगन्ध्या कालितरेति । इह तावद् गार्ग्यायणीति षित्करणसामर्थ्यान्ङीष् भविष्यति‡ । कारीषगन्ध्येति वचनाच्चाब्भविष्यति+ । कालितरेति न यावत्काली तावत्कालितरेति । किं तर्हि ? प्रकृष्टा काली कालितरा । यत्तच्छब्दरूपं प्रकर्षे वर्तते तस्यानुक्तं स्त्रीत्वमिति कृत्वा टाब्भविष्यति* ।

प्र०—तदा स्त्रीतेत्यादौ द्वितीयस्याप्युपलम्भोऽस्त्विति भावः । अथैकमिति । सुख दुःख-मोहान्वयात्सर्वव्यक्तीनां तत्परिणाम एवेदं विश्वं गुणानाञ्च प्रवृत्तिर्लिङ्गम् । तत्र प्रवृत्तेरपि प्रवृत्तिसद्भावाल्लिङ्गयोगोऽस्त्वित्यर्थः । कस्य तावदिति । आश्रये निर्ज्ञाते सुवचः समाधिरिति भावः । गुणसमुदाय इति । रूपादिसन्निवेशमात्रमित्यर्थः । गोतेति । भावे तल् । अथ मतमिति । 'इदं' 'त'दिति सर्वनामप्रत्यवमर्शयोग्यं वस्तु द्रव्यमित्यर्थः । ततश्च स्त्रीत्वस्यापि द्रव्यरूपत्वादपरेण स्त्रीत्वेनाऽविरुद्धो योगः । षित्करणसामर्थ्यादिति । एकमपि स्त्रीत्वं प्रत्यय-द्वयेनाभिधीयत इत्यर्थः ।

वचनादिति । 'यङश्चा'बित्यस्मात् । तथा हि—अत्र सामान्यग्रहणाय तदविघाताय च ष्यङोऽनुबन्धद्वयं कृतमिति भावः । यावत्कालीति । अन्योऽत्र प्रकर्षयुक्तोर्थोऽन्यश्चाप्रकर्षयुक्तः ।

उ०—तत्पदवाच्यम् । एवञ्च, प्रवृत्तेरपि गुणपरिणामत्वात्तत्राऽपि गुणाविर्भावादिसत्त्वाल्लिङ्गयोग इत्यर्थः । सुवचः समाधिरिति । समाध्यन्तरमनेनोच्यत इति भावः ।

भाष्ये—सम्प्रत्यय इति । किमात्मकं द्रव्यं भवान्मन्यते इत्यर्थः । भाष्ये—य एते भावा इति । तेषां गुणसमुदायत्वाऽभावात्स्त्रीत्वं न स्यादिति 'गुणसमुदायो द्रव्य'मिति लक्षणं न युक्तमिति भावः । इदं तदितीति । न तु 'गुणसमूहो द्रव्य'मिति लक्षणमित्यर्थः । इदञ्चैतच्छास्त्रमात्रोपयोगि द्रव्यलक्षणमिति बोध्यम् । स्त्रीत्वस्याऽपीति । चिकीर्षादेरिवेत्यर्थः । भाष्ये—स्त्रीत्वेनाऽभिहितमिति स्त्रीत्वेन स्त्रीत्वगुणवैशिष्ट्येन । भाष्ये—क्व च तावदित्यादिना लिङ्गस्य लिङ्गाऽन्तराऽनङ्गीकारेऽपि अनेकप्रत्ययानुपपत्तौ समाध्यन्तरम् । दृष्टस्येति । त्वया दृष्टस्य 'गार्ग्यायणी'त्यादावनेकप्रत्ययाऽनुपपत्तिरूपस्योक्तस्येत्यर्थः ।

नन्विदं ष्यङि साऽवकाशमत आह—तथा ह्यत्रेति । एवञ्च ष्यङोऽपि चाबनुमीयत इत्यर्थः ।

† अ प्रत्ययात् ३ । ३ । १०२; तस्य भावस्त्वतलौ ५ । १ । ११९

‡ षिद्गौरादिभ्यश्च ४ । १ । ४१ + यङश्चाप् ४ । १ । ७४

* अजाद्यतष्टाप् ४ । १ । ४

यदप्युच्यत 'इह च 'स्त्री' (ति) ईकारो न प्राप्नोती'ति, निपातनादेतत्सिद्धम् । किं निपातनम् ? 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' [ ४ । १ । १७६ ] इति ।

**स्त्रीविषये ङ्याापोरप्रसिद्धिरकारान्ताऽदर्शनात् ॥ ८ ॥**

स्त्रीविषये ङ्याापोरप्रसिद्धिः । खट्वा माला । किं कारणम् ? 'अकारान्तादर्शनात्' । न ह्यकारान्तता दृश्यते । ननु चेयं दृश्यते—अतिखट्वः अतिमाल इति । नैषाऽकारान्तता । आप एवैतद्ध्रस्वत्वम् × ।

**सर्वेषां तु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः ॥ ९ ॥**

सर्वेषामेव तु प्रातिपदिकानां स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः । शशः, 'षष' इति मा भूत् । पलाशः, 'पलाष' इति मा भूत् । मञ्चकः, 'मञ्जक' इति मा भूत् ।

**तस्मात्सिद्धम् ॥ १० ॥**

तस्मात्सिद्धमेतद्भवति ॥ अथवेयमकारान्तता दृश्यते—पञ्चभिः खट्वाभिः क्रीतः पटः पञ्चखट्वः दशखट्वः* ॥ ३ ॥

प्र०—अवस्थाभेदाद्वाचकशब्दभेदाच्चैक एवार्थो भिद्यत इति भावः । स्त्रीविषय इति । ये नित्यमेव स्त्रियां वर्तन्ते खट्वामालादयस्तेषामकारान्तप्रकृतित्वमवधारयितुं न शक्यते, अकारान्तस्य प्रयोगाभावात् । अनेकलिङ्गेषु तु कुक्कुटादिषु शक्यतेऽकारान्तत्वं निश्चेतुमिति भावः । सर्वेषामिति । शाकटायनदर्शनेन सर्वशब्दानां व्युत्पाद्यत्वाच्छास्त्रद्वारेणाकारान्तता निश्चीयते इत्यर्थः । पञ्चभिरिति । तद्धितार्थे द्विगुः । 'आर्हा'दिति ठक्, तस्य 'ध्यर्द्धपूर्वे'तिलुक् । 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुकि कृते प्रयोग एवाकारान्तता दृश्यते एनेत्यर्थः ॥ ३ ॥

उ०—अवस्थाभेदादिति । 'प्रकर्षयुक्तत्वाऽयुक्तत्वरूप एवाऽवस्थाभेदः' नन्वेवमपि 'लोहिनिके'त्यत्यन्तस्वार्थिके कनि टाप् न स्यादत आह—वाचकशब्दभेदाच्चेति । शब्दस्याऽपि शाब्दबोधे विशेषणत्वादिति भावः । भाष्ये—निपातनादिति । 'उणादयोऽव्युत्पन्नानी'ति पक्ष इदम् । व्युत्पत्तिपक्षे ष्ट्रटः टित्वादपि ङीप्सिद्धिर्बोध्या । विषयशब्दस्य प्रयोजनपूर्वमर्थं दर्शयति—ये नित्यमेवेति । अनन्यभावे हि 'विषय'शब्दः । शाकटायनेति । 'सर्वं नाम धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्' इत्युक्तेरिति भावः । भाष्ये 'उपदेश'शब्देन—व्युत्पादनम् ॥ ३ ॥

× गोस्त्रियोरुपसर्जनस्य १ । २ । ४८

१—प्रकरणमिदं भाष्ये पस्पशायां ५२ पृष्ठेऽपि द्रष्टव्यम् ।

* आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्; अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ५ । १ । १९, २८; लुक् तद्धितलुकि १ । २ । ४९

# अजाद्यतष्टाप् ॥ ४ । १ । ४ ॥

## शूद्रा चाऽमहत्पूर्वा ॥ १ ॥

शूद्रा चामहत्पूर्वेति वक्तव्यम् । शूद्रा । अमहत्पूर्वेति किमर्थम् ? महाशूद्री† ।

## जातिः ॥ २ ॥

जातिरिति वक्तव्यम् । या हि महती शूद्रा महाशूद्रा सा भवति ।

प्र०—अजाद्यतष्टाप् । शूद्रा चेति । जातिलक्षणो ङीष् अनेन टापा बाध्यते न तु पुंयोगलक्षणः, 'गौणमुख्ययोर्मुख्ये संप्रत्यय' इति न्यायान्मुख्यार्थवृत्तेरिह शूद्रशब्दस्य ग्रहणात् । तेन शूद्रस्य भार्या शूद्रीत्येव भवति । 'अमहत्पूर्वे'त्यत्र महच्छब्दस्यानुकरणशब्दत्वाल्लौकिकार्थाभिधायित्वाभावादात्त्वाभावः । अमहत्पूर्वेति किमर्थमिति । अन्तरङ्गत्वात् पूर्वं टापि कृते सुप्युत्पन्ने समासेन भाव्यम्—महती शूद्रा महाशूद्रेति । ततश्च निर्वृत्तत्वाट्टापः प्रतिषेधोऽनर्थक इति प्रश्नः ॥ महाशूद्रीति । महाशूद्रशब्दः समुदाय एवाभीरजातिवचनो न त्वत्रावयवार्थोऽस्ति, यथा गौरखर इति । तत्र समुदायव्युत्पादनेऽवयवार्थस्य स्त्रीत्वाभावात्तदविवक्षितैव समासः क्रियते । ततष्टापि प्रतिषिद्धे जातिलक्षणो ङीषेव भवति ।

जातिरिति । महाशूद्रशब्दः समुदायो यदा जातिवाचि तदा टापः प्रतिषेधः । यदा तु

उ०—अजाद्य भाष्ये–शूद्रा चेति । गणपठित'शूद्रे'त्यत्र 'अमहत्पूर्वे'ति वक्तव्यमित्यर्थः । गणे–'अजा एडका मूषिका शूद्रे'ति स्त्रीप्रत्ययान्ताः पठ्यन्त इति बोध्यम् । अत एवाग्रे 'शूद्राशब्दोऽजादिषु पठ्यते' इति भाष्यं सङ्गच्छते । बाध्यत इति । अकारान्तत्वेन सिद्धे पुनः पाठादिति भावः । गौणमुख्ययोरिति । यद्यपि पदकार्यंऽयं न्याय इति 'ओत्' सूत्रे उक्तम्, तथाऽपि यत्र प्रातिपदिकाऽवस्थायामेव गौणत्वप्रतीतिस्तत्र तदाश्रयणं युक्तमेव, तत्र पदग्रहणस्य गौणत्वस्याश्रयोपलक्षणत्वात् । अत्र हि पुंयोगात्स्त्रियां वृत्तौ स्त्रीत्वप्रतीतिसमये एव गौणार्थतेति भावः । अत्राहुः–लाक्षणिकत्वं न गौणत्वं, किन्तु सदृशलाक्षणिकत्वमिति कथमत्राऽस्य न्यायस्य विषयः । शूद्रस्य स्त्रीत्यर्थे तु न टाप्, जातिवाचिमहत्पूर्वभिन्नस्य तत्सदृशस्य स्त्रीत्वविशिष्टजातिबोधकस्यैव शूद्रशब्दस्य ग्रहणात् । किञ्च,—येषां शब्दानामर्थस्य स्वत एव स्त्रीत्वं, न तत्र पुंयोगाद्वृत्तिरिति 'अश्वस्य स्त्री'त्यर्थे ङीष् स्यादिति न वाच्यम् । यदा त्वन्यजातिः शूद्रस्य भार्येति विवक्षिता तदा 'शूद्रो'त्येनेति दिक् । अन्तरङ्गत्वादिति । एवञ्चारम्भेऽपि 'अशक्यक्रियः प्रतिषेध' इति प्रश्न इति भावः । निर्वृत्तस्य वचनशतेनाऽपि दूरीकर्तुमशक्यत्वादिति तात्पर्यम् । आभीरेति । क्षत्रियाच्छूद्रकन्यायामुत्पन्ना—उग्रकन्या, तस्यां ब्राह्मणादुत्पन्न आभीरः । तदविवक्षितैवेति । अविवक्षायां हेतुः—स्त्रीत्वाभावः ।

ननु जातेरन्यत्राऽन्तरङ्गे टापि ततः सुपि समासे च जातस्य टापो निवृत्त्ययोगान्निषेधो जातावेव

† जातेरस्त्रीविषयादयोपधात् ४ । १ । ६३

शूद्रशब्दोऽजादिषु पठ्यते, तत्र कः प्रसङ्गो यन्महत्पूर्वात् स्यात् । नैव प्राप्नोति नार्थः प्रतिषेधेन । तदन्तविधिना‡ प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते । एवं तर्हि ज्ञापयत्याचार्यः—'भवतीह तदन्तविधि'रिति । किमेतस्य ज्ञापने प्रयोजनम् ? भवती अतिभवती, महती अतिमहती अत्र तदन्तविधिः सिद्धो भवति*। जातिरिति च वक्ष्यामीति ।

प्र०—महत्त्वविशिष्टा शूद्रा प्रतिपिपादयिषिता तदा महाशूद्रेत्येव भवति । असति तु जातिग्रहणे अमहत्पूर्वेति प्रतिषेधसामर्थ्यादन्तरङ्गोपि टाब्बाध्येत । ततश्चात्रापि ङीष् प्रसज्येत । अतिभवतीति । भवन्तमतिक्रान्ता, महान्तमतिक्रान्तेति प्रादिसमासः । तत 'उगितश्चे'त्यनेनोगिदन्तान्तादपि ङीप् सिद्धो भवति । गौरादिषु बृहन्महच्छब्दौ न पठितव्यौ । तथा च 'शतुरनुम' इत्यत्र 'नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यान'मित्युक्तम् । अन्यथा ङीष एवोदात्तत्वेन सिद्धत्वात् किं ङीप उदात्तविधानेन । विभक्त्युदात्तार्थं तद्वचनमिति चेत्—किं गौरादिषु पाठेन प्रयोजनम् । अनुपसर्जनाधिकाराच्चातिमहतीत्यत्र गौरादिङीषभावादुगिल्लक्षणो ङीप् कर्तव्यस्तस्य चोदात्तत्वमुपसंख्यानेन कर्तव्यम् । जातिरिति च वक्ष्यामिति । अन्यथा महत्पूर्वेत्यसति प्रतिषेधे महाशूद्री-

उ०—पर्यवस्यतीति नाऽर्थो जातिवचनेनेत्यत आह—असतीति । एतत्सर्वं चिन्त्यम्, आभीरजातिवाचि'महाशूद्र'शब्दे प्रतिषेधाऽवकाशात् । न चाऽनर्थकस्तत्र शूद्रशब्द इति तदन्ते प्राप्त्यभावादनर्थकः प्रतिषेधः, महाशूद्राऽवयवशूद्रशब्दस्यानर्थक्ये तदन्ताट्टापः प्राप्तिरेव नेति निषेधवैयर्थ्याऽनुद्धारात् । जातिरित्यस्य सुतरां वैयर्थ्याऽनुद्धाराच्च । वस्तुतो या हि महती शूद्रा तद्विवक्षायां जातिमात्रविवक्षया कुक्कुटाण्डादाविव'शूद्र'शब्देन समासे ततः स्त्रीत्वविवक्षायां निषेधे सति जातिलक्षणो ङीष् मा भूदित्यर्थं तत् । महाशूद्रशब्दे शूद्रशब्दश्चाऽर्थवानेवेति भाष्याशयः ।

भाष्ये—ग्रहणवतेति । प्रत्ययविधौ प्रतिषेधोपलक्षणमिदम् । उगिदन्तान्तादपीति । भवच्छब्दः शत्रन्त इत्यभिप्रायेणेदम् । 'उगिदन्तादपी'ति तु युक्तः पाठः । ननु गौरादिपाठान्महच्छब्दे ङीषा भाव्यं न तु ङीपेति, भाष्ये—'महती'त्येतत्कथनमयुक्तमित्यत आह—गौरादिष्विति । ननु गौरादिपाठेन तद्वचनमेव प्रत्याख्यायतामिति चेन्न; अन्यार्थमावश्यकत्वादित्याह—विभक्तीति । फलान्तरमप्युपसंख्यानस्याह—अनुपसर्जनेति । भाष्ये—जातिरिति चेति । तदन्तविधौ हि सति 'अमहत्पूर्वे'त्यस्य करणे तद्विशेषणं जातिरिति वक्तुं शक्यमिति भावः । 'जाति'रित्यपि मास्त्विति शङ्कमानं प्रत्याह—अन्यथेति । अमहत्पूर्वेति प्रतिषेधाऽभावे 'जाति'रित्यस्याऽभावादनयोर्विषयविभागो न स्यादिति भावः ।

साधुत्वमिति । स्पष्टं प्रतीतिर्न स्यादिति भावः । ननु 'अजाद्यत' इति पञ्चम्या कथं स्त्री विशेष्ये-

‡ येन विधिस्तदन्तस्य १ । १ । ७२ * उगितश्च ४ । १ । ६

यद्येतज्ज्ञाप्यते पञ्चाजी दशाजी† अत्रापि प्राप्नोति‡ । नैष दोषः । अजादिभिरत्र स्त्रियं विशेषयिष्यामः—'अजादीनां या स्त्री'ति ॥ ४ ॥

## उगितश्च ॥ ४ । १ । ६ ॥

कथमिदं विज्ञायते—उगितः प्रातिपदिकादिति, आहोस्विदुगिदन्तात् प्रातिपदिकादिति । किं चातः ? यदि विज्ञायते—'उगितः प्रातिपदिका'दिति, सिद्धं—भवती मह-

---

प्र०—महाशूद्राशब्दयोर्विषयविभागेन कथं साधुत्वं प्रतीयेतेति भावः । पञ्चाजीति । पञ्चानामजानां समाहार इति द्विगुः । ततो द्विगोरिति ङीब्न प्राप्नोति, टापा बाध्यमानत्वात् ।

अजादीनामिति । 'अजाद्यंत' इति षष्ठी । तेनाजादिप्रातिपदिकाभिधेयसमवेतं स्त्रीत्वमिह गृह्यते । पञ्चाजीत्यत्र तु समासाभिधेयसमाहारगतं स्त्रीत्वं, न त्वजादिशब्दार्थगतमिति टापोऽप्रसङ्गः । प्रत्यासत्त्या च स्त्रीत्वविशेषणोपक्षीणानामप्यजादीनामेव प्रकृतित्वं विज्ञायते, सामर्थ्याद्वा । एवं तु सत्य'महत्पूर्वे'ति न प्रतिषेधो वक्तव्यः, न हि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वमिति टापः प्रसङ्गाभावः ॥ ४ ॥

उगितश्च । कथमिति । प्रातिपदिकादिति वर्तते । तत्र विशेषणविशेष्यभावे कामचाराद्यदि प्रातिपदिकेनोगिद्विशेष्यते नदोगितः प्राधान्यात्तेन तदन्तविधिर्नास्ति, न च प्रातिपदिकान्तमुगित्संभवतीति प्रातिपदिकादुगित इति पक्षसंभवः । यदा तूगिता प्रातिपदिकं विशेष्यते तदा तदन्तविधौ सत्युगिदन्तात्प्रातिपदिकादित्येष पक्षो भवति । पक्षद्वयेऽप्यव्याप्तिरिति मत्वा प्रश्नः ॥ भवतीति । सर्वादिषु भवतुशब्द उगित् पठ्यते, महच्छब्दोपि शतृवद्भावादुगिद्व्यपदेश्यः ।

---

उ०—त्यत्राह—अजाद्यत इतीति । नन्वेवं 'टाप् कस्मा'दिति न ज्ञायेतेत्यत आह—प्रत्यासत्त्येति । सामर्थ्याद्वेति । अजाद्यदन्तप्रातिपदिकवदर्थगतस्त्रीत्वप्रतिपादनं तदुत्पन्नेनैव प्रत्ययेन शक्यते कर्तुमिति भावः । न हीति । समुदायस्य जातिविशेषवाचित्वेन शूद्रशब्दस्य नैरर्थक्येन स्त्रीत्ववृत्तित्वाऽभावादिति भावः । तदन्तविधौ तु ज्ञापकान्तरमनुसर्त्तव्यम् । अत्र केचित्,—'अनुलोमसंकराणामपि मातृजातिवृत्तेः स्मृतिषूक्तत्वेन मातृजातीयत्वात्तत्रापि शूद्रत्वमस्ति, अत एव शङ्खस्मृतौ—'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एवे'त्युक्तम् । 'शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' इति स्मृतिरपि तेषां शूद्रत्वारोपमूलिकैव । अन्यथाऽस्य मूलान्तरकल्पने गौरवं स्यात् । स्मृतौ—अपध्वंसः—शूद्राविवाह उच्यते । अतः शूद्रशब्दाऽर्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्येव टापः प्रसङ्ग इति'अमहत्पूर्वे'त्यावश्यकम् । जातिप्रत्ययश्च शूद्रशब्देन समास एव, न तु शूद्राशब्देन समास इति न प्रागुक्तदोषः । उक्तरीत्या जातिरिति चावश्यकमेवेति भाष्यतात्पर्यम् । अत एव भाष्यकृता नेदं प्रत्याख्यातमित्याहुः ॥ ४ ॥

उगितश्च । ननु भातेर्डवतौ निष्पन्नस्य भवतो नोगित्त्वं, किन्तूगिदन्तत्वमेवेत्यत आह—सर्वादिष्विति । तत्त्वनार्षमित्याहुः । शतृवद्भावेति । 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्चे'त्यनेन । 'उगिद्व्यपदेश' इति पाठे—

---

† द्विगोः ४ । १ । २१  ‡ अजाद्यतष्टाप् ४ । १ । ४

तीति, अतिभवती अतिमहतीति न सिध्यति । तदन्तविधिना भविष्यति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥ अथ विज्ञायते—'उगिदन्तात्प्रातिपदिका'-दिति, सिद्धम्—अतिभवति अतिमहतीति, भवती महतीति न सिध्यति । व्यपदेशिवद्भावेन भविष्यति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ॥ उभयथा च निर्गोमती निर्यवमतीति न सिध्यति । किं कारणम् ? 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति ।

यथेच्छसि तथास्तु । अस्तु तावदुगितः प्रातिपदिकादिति । कथम्—अतिभवती अतिमहतीति ? तदन्तविधिना भविष्यति । ननु चोक्तं 'ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यत' इति । नैतत्प्रातिपदिकग्रहणम् । प्रातिपदिकाऽप्रातिपदिकयोरेतद्ग्रहणम् ॥ अथवा पुनरस्तु—'उगिदन्तात्प्रातिपदिका'दिति । कथं भवति महतीति ? व्यपदेशिवद्भावेन भविष्यति । ननु चोक्तं 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति ।

प्र०—तदन्तविधिनेति । उगिता प्रातिपदिकस्य विशेषणादिति भावः । ग्रहणवतेति । ग्रहणम्—उपादानमात्रं, न तु प्रातिपदिकस्य स्वरूपेणोच्चारणम् ॥ अथेति । अमहत्पूर्वेति प्रतिषेधेनेह प्रकरणे तदन्तविधेर्ज्ञापितत्वादिति भावः । निर्गोमतीति । आद्ये पक्षे गोमतीत्यत्रापि न सिध्यति । उगित्वं मतुपो गोमानित्यादौ नुमर्थं स्यात् । द्वितीये तु गोमतीति सिध्यति, मतुप उगित्त्वात्तदन्तत्वाच्च गोमच्छब्दस्य । गोमतो निष्क्रान्तेति समासे तु कृते निरादेः समुदायान्मतुपो विधानाभावान्ङीप् न स्यादित्यर्थः । तदन्तविधिनेति । ननु च प्रातिपदिकेनोगितो विशेषणाद्विशेष्येण कथं तदन्तविधिः । एवं तर्हि तन्त्रेण योगद्वयमुच्चार्यते । तत्रैकस्मिन्योगे प्रातिपदिकेनोगिद्विशेष्यते, द्वितीये तूगिता प्रातिपदिकमिति दोषाभावः । नैतदिति । उक्-इद्यस्य तदुगिदिति शब्दरूपमात्रमन्यपदार्थ आश्रीयते न तु प्रातिपदिकमेवेत्यर्थः । व्यपदेशिवद्भावेनेति ।प्रयोगभेदेन भवान् भवतीति यच्छब्दरूपं प्रयुज्यते तस्यायं भवच्छब्दोऽन्त इति कल्पनयेत्यर्थः । एतेन 'येन विधिस्तदन्तस्ये'त्यत्र स्वं रूपमिति निवृत्तमिति दर्शितं भवति । तेन 'गोक्षीर'मित्यादौ 'गोस्त्रियो'रिति ह्रस्वो न भवति ।

उ०—उगिदिति व्यपदेशो यस्येत्यर्थः । भाष्ये—अतिभवतीत्यादि 'पचन्ती'त्यादेरप्युपलक्षणं बोध्यम् । ननु प्रातिपदिकस्य स्वरूपेणोच्चारणाऽभावात् कथमत्र न्यायप्राप्तिरत आह—ग्रहणमुपादानमात्रमिति । ननु मतुबादीनामुगित्त्वसामर्थ्यात्तदन्तविधिः स्यादत आह—उगित्त्वन्त्विति । नुम्विधेराङ्गत्वेन तत्र तदन्तविधिरिति भावः । समुदायादिति । प्रत्ययग्रहणपरिभाषयेति भावः । नन्वाद्यपक्षे उगितो विशेष्यत्वात्तदन्तविध्यभाव इत्युक्तमिति शङ्कते—ननु चेति । ननूगिच्छब्दस्य सन्निधानात्प्रातिपदिकमेवान्यपदार्थ इति प्रातिपदिकग्रहणमेवेदमत आह—उगिद्यस्येति । शब्दरूपमात्रमिति । प्रत्ययोऽपीत्यर्थः । नन्वनुवर्त्यं व्यपदेशिवद्भावाऽनारम्भ एव ज्यायानिति शङ्कायामाह—तेनेति । व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति भावः । वस्तुत इदञ्चिन्त्यं, तस्याः प्रत्ययविधिविषयत्वात् । 'गोक्षीर'मित्यस्य यथा वारणं तथा 'गोस्त्रियो'रित्यत्रैव निरूपितम् ।

नैतत्प्रातिपदिकग्रहणम् । प्रातिपदिकाऽप्रातिपदिकयोरेतद्ग्रहणम् ॥ यदप्युच्यते—'उभयथा निर्गोमती निर्यवमतीति न सिध्यति । किं कारणम् ? प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति । नैतत्प्रत्ययग्रहणम् । प्रत्ययाप्रत्यययोरेतद्ग्रहणम् । कथम् ? वर्णोऽप्युगित्, प्रत्ययोऽप्युगित्, प्रातिपदिकमप्युगित् ।

धातोरुगितः प्रतिषेधः ॥ १ ॥

धातोरुगितः प्रतिषेधो वक्तव्यः । उखास्रद्ब्राह्मणी, पर्णध्वद्ब्राह्मणी ।

अञ्चतेश्चोपसंख्यानम् ॥ २ ॥

अञ्चतेश्चोपसंख्यानं कर्तव्यम् । प्राची प्रतीची ।

उगित्यञ्चतिग्रहणात्सिद्धमधातोः ॥ ३ ॥

उगित्यञ्चतिग्रहणादधातोः सिद्धम्* । अञ्चतिग्रहणं नियमार्थं भविष्यति—

प्र०—वर्णोऽप्युगिदिति । 'अर्वणस्त्रसावनञ' इति अर्वन्शब्दस्य तृशब्द आदेशः, तत्रार्वतीति ङीब्भवति । अश्वपर्यायोऽर्वन् शब्दः । नन्वङ्गस्य तृशब्द आदेशो विधीयते तत्र 'ऋन्नेभ्य' इति ङीपि कृते त्रादेशेन भवितव्यम् । एवं तर्हि संभवमात्रेणैतदुक्तमित्यदोषः । उगित्यञ्चतिग्रहणादिति । उगिदचामित्यत्रोगिद्ग्रहणादञ्चतेरपि ग्रहणे सिद्धेऽञ्चतिग्रहणं नियमार्थम्,—'इह शास्त्रे यत्कार्यमुगितो विधीयते तदञ्चतेरेव धातोर्भवति नान्यस्य धातो'रिति कार्यमात्रं नियम्यते न तु नुमागम एव । अधातुग्रहणं तु तत्राऽधातुभूतपूर्वस्यापि नुमागमार्थम् । तेन गोमन्तमिच्छतीति क्यचि क्विपि च कृते गोमानित्यत्रापि नुम्भवति । अन्यथा धातुत्वादञ्चतिग्रहणात् नियमार्थान्न स्यात् । अन्ये त्वाहुः—उगितश्चेति यश्चशब्दः सोऽञ्चतेर्लुप्ताकारनकारस्यानुकरणम् । विभक्तेः सुपां सुलुगिति लुक् । भाविनं चाऽकारलोपमाश्रित्य चेति निर्देशः कृतः, ततश्चाञ्चतिग्रहणमिहैव नियमार्थम् । अकारनकारलोपयोश्चातन्त्रत्वात् 'नाञ्चेः पूजाया'मिति यदा नलोपः प्रतिषिध्यते तदापि ङीब्भवति ॥ ६ ॥

उ०—'अर्वन्'शब्दस्य स्त्रियां वृत्तित्वं दर्शयति—अश्वपर्याय इति । भाव्यमिति । ङीपं निमित्तीकृत्यैवेति भावः । सम्भवमात्रेणेति । 'वर्णोऽप्युगित्सम्भवती'त्येतदेव भाष्येऽभिसंहितं, न तु प्रकृतोपयोगोऽपीत्यर्थः । वस्तुतस्तु 'क्रोष्ट्री'त्यादौ आङ्गोऽपि 'स्त्रियाञ्चे'ति तृज्वद्भावो यथा ङीबुत्पत्तेः प्राक्, तथा 'तृ'आदेशोऽपि ततः प्रागेवेति भाष्याशयः । भाष्ये—अञ्चतेश्चेति वार्त्तिके 'नलोपिन' इति शेषः । एवं हि प्रत्याख्यानेन समफलता भवति । नन्वेवमधातोरिति व्यर्थमत आह—अधात्विति । वाक्यभेदेनेति भावः । चशब्द इति । अकारस्तूच्चारणार्थ इति भावः । भाविनश्चेति । ङीपि कृते भाविनमित्यर्थः । नलोपस्तु न्याय्य एवेति भावः । तदापि ङीब्भवतीति । इदञ्चिन्त्यम्, 'उगिदचा'मित्यत्र नलोपस्य विवक्षितत्वात्पूजायामप्राप्तेः । अत एवौपदेशिकं 'प्राची'त्याद्यपहायातिदेशिकं 'प्राची'त्याद्युदाहरणं भाष्ये दत्तम्, 'उगित्यतिञ्चग्रहणा'दिति चोक्तम्,

* उगिदचां सर्वनामस्थानेऽधातोः ७ । १ । ७०

'अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातो'रिति ॥ ६ ॥

## वनो र च ॥ ४ । १ । ७ ॥

इह कस्मान्न भवति–निःशुनी अतियूनीति ? 'अर्थवद्ग्रहणे नानर्थकस्ये'ति । एवमपि मघोनी[1] अत्र प्राप्नोति । मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम् ।

### वनो न हशः ॥ १ ॥

'वनो र चे'त्यत्र 'हशन्तान्न भवती'ति वक्तव्यम् । इह मा भूत्—'सहयुध्वा ब्राह्मणी'ति ॥ यदि 'न हश' इत्युच्यते शर्वरीति न सिध्यति । विहितविशेषणं हशग्रहणम्–'हशन्ताद्यो विहित'इति ॥ एवमपि प्रेत्वरीति न सिध्यति । कथं चात्र तुगागमः ? छान्दसत्वात् । ङीब्रावपि तर्हि च्छान्दसत्वादेव भविष्यतः ।

बहुलं छन्दसि[2] ङीब्रौ वक्तव्यौ । यज्वरीरिषः† । यज्वनीरिषः ।

प्र०—वनो र च। निःशुनीति । शुनो निष्क्रान्ता, युवानमतिक्रान्तेति प्रादिसमासः, ततो ङीप् । श्वन्-शब्दस्य गौरादिपाठेऽप्युपसर्जनत्वादत्र ङीष् न भवति । 'मघोनीति । मघमस्यास्तीति 'छन्दसीवनिपौ वक्तव्या'विति वनिप्, स चार्थवानिति प्रश्नः । अव्युत्पन्नमिति । 'श्वन्नुक्ष'-नित्यौणादिको मघवन्शब्दः । उणादिषु च नावश्यं व्युत्पत्तिनिमित्तं कार्यं भवतीति प्रागेवोक्तम् । वनो न हश इति । द्वयोरपि ङीब्रेफयोर्निषेधः । सहयुध्वेति । 'सहे चे'ति क्वनिप् । शर्वरीति । शॄ हिंसायामित्येतस्मा'दन्येभ्योपि दृश्यन्ते' इति वनिप् । तत्र गुणे रपरत्वे च कृते हशन्तो भवतीति पूर्वः पक्षः । प्रेत्वरीति । ईर गतावित्यस्मात्प्रपूर्वा'दन्येभ्योपि दृश्यन्ते' इति कनिब्वनिपोरन्यतरः । स च हशन्ताद्विहित इति ङीब्रौ न स्यातामिति प्रश्नः । छान्दसत्वादिति । 'प्र[3] ईरशदोस्तुट् चे'त्युणादिसूत्रमनपेक्ष्यैतदुक्तम् ।

यज्वरीति । 'सुयजोर्ङ्वनिप्' । 'वा छन्दसी'ति पूर्वसवर्णदीर्घः ।

उ०—अन्यथा 'उगिती'त्यस्य नोपयोगः स्यात् । एवञ्च पूजायां 'प्राची'त्याद्यसाध्वेवेत्यन्ये ॥ ६ ॥

वनोर च । ननु । वनिपा व्युत्पन्नस्य कथमव्युत्पन्नत्वमुक्तमत आह—श्वन्नुक्षन्निति । ननु तेन 'कनिन्'प्रत्ययस्य महेर्घस्यावुगागमस्य च निपातनाद्व्युत्पत्तिपक्षेऽपि नैरर्थक्यान्न दोषोऽत आह—नाऽवश्यमिति । इत्याशयेनाऽव्युत्पन्नत्वमेवोक्तमिति भावः । अनपेक्ष्येति । अनपेक्षा च तेषामाधुनिकत्वादिति बोध्यम् । यज्वरीरिति—जसन्तम् । भो यजनशीलाः ! प्रजाभ्य इषः–अन्नानि देयत्वेन वनस्यत-प्रार्थयतेति मन्त्राऽर्थः । तत्र दीर्घाज्जसीति निषेधाद्दीर्घो दुर्लभोऽत आह—वा छन्दसीति ।

१—'मघोनी=मघवती, मघमिति धननामधेयं मंहतेर्दानकर्मणः ।' इति निरुक्ते ( १।२।७ ) यास्कः ।

२—अतः पूर्वम् 'बहुलं छन्दसी'ति वार्तिकं क्वचिद् दृश्यते । 'बहुलं छन्दसि ङीब्रौ वक्तव्या'-वित्येव वार्तिकमित्यन्ये । भाष्यमित्यपरे । † ऋ १ । ३ । १

३—अयं पञ्चपादिपाठः ( ४ । ११७ ) दशपाद्यां 'प्र ईरिसद्योस्तुट् च ( ६ । ७२ ) इति पठ्यते ।

## रविधाने बहुव्रीहेरुपसङ्ख्यानं प्रतिषिद्धत्वात् ॥ २ ॥

रविधाने बहुव्रीहेरुपसङ्ख्यानं कर्तव्यम् । बहुधीवरी बहुपीवरी । किं पुनः कारणं न सिध्यति ? प्रतिषिद्धत्वात् । 'अनो बहुव्रीहेः' [ ४ । १ । १२ ] इति प्रतिषेधः प्राप्नोति ।

## अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वावचनम् ॥ ३ ॥

अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वेति वक्तव्यम् ।[1]

अन्यथा कृत्वा चोदितम्, अन्यथा कृत्वा परिहारः । यथोपसंख्यानं चोदितं तथा नित्याभ्यां ङीब्राभ्यां भवितव्यम् । यथा परिहारस्तथा विभाषया भवितव्यम् ।

प्र०—बहुधीवरीति । बहवो धीवानोऽस्यामिति बहुव्रीहिः । तत्रा'नो बहुव्रीहे'रिति ङीपः प्रतिषेधः प्राप्नोति । रेफस्य ङीप्सन्नियोगेन विधानात्तदभावादेवाभावप्रसङ्गः । यदि वा त्रियां यदुक्तं तस्य सर्वस्याऽ'नो बहुव्रीहे'रिति प्रतिषेधविधानादत्र ङीब्रौ न प्राप्नुतः, तस्माद्वनो र च बहुव्रीहेश्चेति वक्तव्यमित्यर्थः । तत्र बहुव्रीहेश्चेत्यनेन लक्षणान्तरेणाऽन उपधालोपिन इत्यनेन विहिते ङीपि रेफमात्रं विधेयम् । यदि तु द्वावपि ङीब्रौ विधीयेयातां तदा सुपर्वादेरनुपधालोपिनोऽपि स्याताम् । अन इति । 'अनो । बहुव्रीहे'रित्यस्यानन्तरम्—'उपधालोपिनो वे'ति वक्तव्यम् । तेनाऽन उपधालोपिनोऽन्यतरस्यामित्येतन्न वक्तव्यं भवति । तत्रानुपधालोपिनो नित्यो ङीप्प्रतिषेधो भवति—सुपर्वेति । उपधालोपिनस्तु ङीब्विकल्पः, तेन बहुराज्ञी, बहुराजानौ, बहुराजेति रूपत्रयं सिध्यति । एवं बहुधीवरी, बहुधीवानौ, बहुधीवेति वनन्तस्याप्युपधालोपिनो रूपत्रयं भवति । इतरः पूर्वोक्तमभिप्रायमप्रतिपद्याह—अन्यथा कृत्वेति ।

उ०—ननु 'बहवो धीवर्यो यस्ये'ति बहुव्रीहावन्तरङ्गत्वाज्जातयोर्ङीब्रयोः प्रतिषेधस्य वचनेनाऽशक्यत्वादुपसंख्यानं व्यर्थमत आह—बहव इति । यदि वेति । इदञ्चाऽवश्यकमिति 'न षट्'इत्यत्र वक्ष्यामः । इत्यस्यानन्तरमिति । यथान्यासेऽपि अनुपसर्जनादितीह न सम्बध्यते, बहुव्रीहावन्नन्तस्याऽनुपसर्जनस्याऽसम्भवादिति भावः । ननु वचनेन वचनप्रत्याख्यानमयुक्तमत आह—तेनाऽन उपधेति । ङीब्विकल्प इति । प्रतिषेधविकल्पे विधिविकल्पः फलतीति भावः । बहुराजानाविति । एकवचने—प्रतिषेधे डापि च रूपभेदाऽभावाद्द्विवचनमुदाहृतम् । पूर्वोक्तमिति । 'अन उपधे'त्यनेन विहिते ङीपि'र'मात्रेन विधीयत इत्येतमित्यर्थः ।

( भाष्ये ) यथोपसंख्यानमिति । 'बहुव्रीहे'रित्येतत् । परिहारः 'उपधालोपिनो वे'त्येषः । ननु 'अन

[1] —अथवा—अनोबहुव्रीहिप्रतिषेधे 'उपधालोपिनो वे'ति वक्तव्यम्' पा० ।

यथोपसंख्यानं चोदितमेवमपि विभाषया भवितव्यम्, न ह्यत्र ङीब्दुर्लभः। सिद्धोऽत्र ङीप्–'अन उपधालोपिनोऽन्यतरस्याम्' [ ४ । १ । २८ ] इति। ङीप्संनियोगेन र उच्यमानोऽन्येन सति न स्यादित्येवमर्थमुपसंख्यानं चोद्यते। किं पुनः कारणं ङीप्सन्नियोगेन र उच्यते? इह मा भूत्—सुपर्वा चारुपर्वेति।

तत्तर्ह्युपसंख्यानं कर्तव्यम्? न कर्तव्यम्। वक्ष्यति 'डाबुभाभ्यामन्यतरस्याम्' [ ४ । १ । १३ ] इत्यत्रान्यतरस्यांग्रहणस्य प्रयोजनं 'डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपि यथा स्याता'मिति* ॥ ७ ॥

## न षट्स्वस्रादिभ्यः ॥ ४ । १ । १० ॥

कस्यायं प्रतिषेधः? ङीबनन्तरस्तस्य† प्रतिषेधः॥ अथेदानीं ङीपि प्रतिषिद्धे—

प्र०—अन्येन सतीति। प्रकरणान्तरविहितत्वात्तस्य ङीप इति भावः। 'बहुव्रीहेश्चे'ति वचनेन प्रकरणान्तरविहिते पाक्षिके ङीपि रेफो विधीयत इति तदेव रूपत्रयं भवतीत्यर्थः। किं पुनरिति। ङीप्संनियोगमनपेक्ष्य रेफमात्रं वनन्तस्य स्त्रियां विधीयताम्, ततश्च 'बहुधीवरी'त्यत्रापि रेफो भविष्यति, 'अन उपधालोपिन' इत्यनेन च ङीबिति प्रश्नः। डाबिति। एतत्तत्रैव व्याख्यास्यते। केचिच्चोदयन्ति–वनिति प्रत्ययग्रहणं कृद्ग्रहणं वा, ततश्च 'प्रत्ययग्रहणे यस्मात्स विहित' इति 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मिति वा बहुधीवरी अतिधीवरीति रेफो न प्राप्नोति। नैष दोषः। अमहत्पूर्वेति प्रतिषेधेन तदन्तविधेर्ज्ञापितत्वात् ॥ ७ ॥

न षट्। कस्यायमिति। यदि ङीपः प्रतिषेधस्तदा 'पञ्च ब्राह्मण्य' इत्यत्र नलोपे सति अदन्तत्वाट्टाप् प्राप्नोतीति मत्वा प्रश्नः। आचार्यः शिष्यबुद्धिपरीक्षार्थं परिहाराभासमाह–ङीबन-

उ०—उपधे'ति ङीपि तत्सन्नियोगेन 'वनो र चे'त्यनेन रादेशस्यापि सिद्धेः 'बहुव्रीहिश्चे'त्युपसंख्यानं व्यर्थमतो भाष्ये—ङीप्सन्नियोगेनेति। 'ऋन्नेभ्य' इति ङीप्सन्नियोगेनेत्यर्थः।

ननु 'ऋन्नेभ्य' इति ङीप्सन्नियोगेनेवैतत्सन्नियोगेनाऽपि रत्वं दुर्वारमत आह—प्रकरणान्तरेति। वचनेनेति। वचनसामर्थ्येनेत्यर्थः। भाष्ये—किं पुनः कारणं ङीबिति। सूत्रेणोपसंख्यानेन च किमिति मानान्तरसिद्धङीप्सन्नियोगेन रो विधीयते, अपूर्वावेव ङीब्रौ किं न विधीयेते इत्यर्थः। अपूर्वविधाने च नित्यतैव स्यादिति भावः।

तत्तर्ह्युपसंख्यानमिति। 'वनो र चे'त्यनन्तरं 'बहुव्रीहेश्चे'तीत्यर्थः। 'उपधालोपिनो वेति न्यासाऽभावे' इति शेषः। प्रत्ययग्रहणमिति। तद्धितवनिपो ग्रहणे प्रत्ययग्रहणम्, फलाऽभावात्तदग्रहणे तु कृद्ग्रहणमिति विवेकः। तदन्तविधेरिति। 'प्रत्ययग्रहण'परिभाषया वनन्तग्रहणे, तेन च प्रातिपदिकविशेषणे तदन्तविधेर्ज्ञापनादिति भावः॥ ७॥

न षट्। आचार्य इति। आचार्यदेशीयोक्तिरित्यपि वक्तुं शक्यम्। नोभाविति—पूर्वपक्ष्युक्तिः।

* ४ । १ । १३ भाष्ये। † ऋन्नेभ्यो ङीप् ४ । १ । ५

षट्संज्ञानामन्ते लुप्ते‡ टाबुत्पत्तिः कस्मान्न स्यात् ।

'अत'+ इति प्राप्नोति । असिद्धो नलोपस्तस्याऽसिद्धत्वान्न भविष्यति† । परिगणितेषु कार्येषु नलोपोऽसिद्धो न चेदं तत्र परिगण्यते । इदमपि तत्र परिगण्यते । कथम् ?

प्रत्याहाराच्चापा सिद्धम्

'सु'बिति नेदं प्रत्ययग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क्व संनिविष्टानां प्रत्याहारः ? प्रथमैकवचनात्प्रभृत्याऽऽचापः पकारात् × ॥ यदि प्रत्याहारग्रहणम्—

दोषस्त्वित्त्वे

इत्त्वे दोषो भवति । बहुचर्मिका[१] । 'प्रत्ययस्थात्कात्पूर्वस्यातः' [ ७ । ३ । ४४ ] इतीत्त्वं न प्राप्नोति ।

तस्मान्नोभौ ॥

तस्मात् 'षट्संज्ञकेभ्य उभौ न भवत' इति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'स्त्रियाम्' [ ४ । १ । ३ ] इति वर्तते, स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः ।

प्र०—न्तर इति । यस्तु 'टाबृची'ति पादन्ताट्टाब्विहितस्तस्यात्र प्रसङ्गाभावात् 'ङीबनन्तर' इत्युक्तम् । परिगणितेष्विति । 'नलोपः सुप्स्वरे'ति सूत्रं नियमार्थं—'सुबादिविधिष्वेव नलोपोऽसिद्धो नान्यत्रे'त्यर्थः । आ चाप इति । 'यङश्चा'बित्यस्यात्र प्रत्याहारे टापोऽन्तर्भावाट्टाब्विधिः सुब्विधिः, तत्र नलोपस्यासिद्धत्वमस्त्येवेत्यर्थः । दोषस्त्वित्त्वे इति । तत्र हि सुब्विधिरिति सर्वविभक्त्यन्तावयवः समास आश्रितः । ततश्च टापि सुपि विधिरित्त्वं सुब्विधिर्भवतीति इत्त्वे कर्तव्ये नलोपस्यासिद्धत्वात्कात्पूर्वोऽकारो न भवतीत्त्वं न स्यादित्यर्थः । स्त्रियां यत्प्राप्नोतीति । अर्थाश्रयप्राप्ति-

उ०—वार्तिककार एवाऽत्र पूर्वपक्षी । आचार्य आह–तत्तर्हीतीत्यन्ये । ननु 'टाबृची'त्यनन्तरमत आह–यस्त्विति । नन्वित्त्वं टापो न विधीयत इति कथं सुब्विधिरत आह—तत्र हीति । ननु 'स्त्रिया'मित्यनुवृत्तावपि 'स्त्रियां विहितं ने'त्यर्थेऽनन्तरस्येत्यादि दुर्वारमत आह—अर्थाश्रयेति । 'प्रियपञ्चा द्रौपदी,' 'अतिपञ्चा कुलटे'त्यादौ गौणेऽप्ययं निषेधः, तदन्तविधिसत्त्वात्, बहुवचनस्य व्यक्तिबहुत्वाऽभिप्रायेणैव सत्त्वेनाऽर्थप्राधान्य एवैतत्प्रवृत्तौ मानाऽभावाच्च । एतेन 'च्चापः पकारेण प्रत्याहारे इत्त्वे दोषवदतिपञ्चा कुलटेत्यादौ टाप् न स्यादिति दोषाऽनुपन्यासे बीजाऽभाव' इत्यपास्तम् । एवञ्चैतद्भाष्यप्रामाण्याद् 'बहुधीवभ्या'मित्यत्र नलोपे टाबभावनिर्णयाद् 'अनो बहुव्रीहे'रित्यनेनाप्युभयोर्निषेधः । एतदभिप्रायेणैव पूर्वत्र—'यदि वा स्त्रियां यदुक्त'मित्यादि

‡ नलोपः प्रातिकान्तस्य ८ । २ । ७
† नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८ । २ । २
यङश्चाप् ४ । १ । २–७४

+ अजाद्यतष्टाप् ४ । १ । ४
× स्वौजसमौट्छष्टाभ्यांभिस्……;
१–'बहुवर्मिका' इत्यधिकं क्वचित् ।

षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ।
प्रत्याहाराच्चापा सिद्धं दोषस्त्विच्चे तस्मान्नोभौ ॥ १० ॥

## डाबुभाभ्यामन्यतरस्याम् ॥ ४ । १ । १३ ॥

किमर्थमुभाभ्यामित्युच्यते ? उभाभ्यां योगाभ्यां डाब्यथा स्यात्—मनन्ताद-नन्ताच्च बहुव्रीहेः* ॥ नैतदस्ति प्रयोजनम् । प्रकृतमुभयमनुवर्तते ।

अथान्यतरस्यांग्रहणं किमर्थम् ? अन्यतरस्यां डाब्यथा स्यात्, डापा मुक्ते विप्रतिषेधोऽपि यथा स्यादिति ॥ नैतदस्ति प्रयोजनम् । इह डाबप्युच्यते प्रतिषेधोपि, तावुभावपि वचनाद्भविष्यतः ॥ इदं तर्हि प्रयोजनम्—डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यात् । सिद्धोऽत्र ङीप्—'अन उपधालोपिनोऽन्यतरस्याम्' [ ४ । १ । २८ ] इति ।

प्र०—मात्रापेक्षोऽयं प्रतिषेध इत्यर्थः ॥ १० ॥

डाबु । योगाभ्यामिति । योगस्था प्रकृतिर्योगशब्देनोच्यते । प्रकृतमिति । द्वयोरपि स्वरितत्वप्रतिज्ञानादपेक्षणाद्वेति भावः । एवमुभाभ्यामिति प्रत्याख्यातम् । तावुभाविति । यदि यत्रैव ङीप्प्रतिषेधस्तत्रैव डाप् स्यात्तदा प्रतिषेधमविधायैव 'मनो डा'बित्युच्येत, ततो'ऽनो बहुव्रीहे'रित्यनेनापि डाबेव विधीयेत, स एव हि ङीपं बाधिष्यते, किं प्रतिषेधेन । तस्मादुभय-विधानसामर्थ्यादुभयं भविष्यतीत्यर्थः । सिद्धोऽत्रेति । ननु यत्र तेन न सिध्यति सुपर्वेत्यादौ, तदर्थमन्यतरस्यांग्रहणं स्यात् । नैतदस्ति । यदानेनान्यतरस्यांग्रहणेन पक्षे ङीबनुज्ञायते तदा'अन उपधालोपिन' इति नियमार्थं भवति—'उपधालोपिन एवानन्तान्ङीब्भवति नान्यस्मा'दिति । ततश्च सुपर्वेत्यादेरन उपधालोपिनो ङीपा न भाव्यमेव ।

उ०—कैयटेनोक्तमिति बोध्यम् ॥ १० ॥

डाबुभा । योगाभ्याम्प्रत्ययविधेरसम्भवादाह—योगस्थेति । नन्वनन्तरस्यैव सा स्यादत आह—द्वयो-रपीति । 'स्वरितेनाऽधिकार' इत्यस्य प्रत्याख्यानपक्षेऽप्याह—अपेक्षणाद्वेति ।

ननु सम्भवत्येकविषयत्वे विषयभेदेन प्रवृत्तिर्न स्यादत आह—यदि यत्रैवेति । भाष्ये—डाप्प्रतिषे-धाभ्यां मुक्ते इति । 'अन्यतरस्यां'ग्रहणं वाक्यभेदेनाऽनन्तरस्य 'अनो बहुव्रीहेः' इत्येतस्य विषये ङीबनुज्ञाना-र्थमिति भावः । तदर्थमिति । तत्र ङीबनुज्ञानार्थमित्यर्थः । न भाव्यमेवेति । सत्यसति वा 'अन्यतरस्यां'-ग्रहणे इत्यर्थः । विचार इति । प्रकृतविचारोपयोगिविचाराऽन्तरमित्यर्थः । ननु द्वयोरपि तयोः प्रत्याख्याने 'सुपर्वे'त्यादौ सावकाशयोर्डाप्प्रतिषेधयोः 'अन उपधालोपिन'इति ङीप् 'बहुराजे'त्यादौ बाधकः स्यादत आह—

* मनः; अनोबहुव्रीहेः ४ । १ । ११, १२

अथ तदन्यतरस्यांग्रहणं† शक्यमकर्तुम् ? बाढं शक्यम् । कथम् ? इह डाबप्युच्यते, प्रतिषेधोऽपि, ङीबपि, तत्सर्वं वचनाद्भविष्यति । नैवं शक्यं विज्ञातुम् । अक्रियमाणे हि तत्राऽन्यतरस्यांग्रहणेऽनवकाशो ङीप् डाप्प्रतिषेधौ बाधेत । डाप्प्रतिषेधावप्यनवकाशौ तौ वचनाद्भविष्यतः । सावकाशौ डाप्प्रतिषेधौ । कोऽवकाशः ? सुपर्वा चारुपर्वेति । तस्मात्तदन्यतरस्यांग्रहणं कर्तव्यम् ।

इदं तु खल्वन्यतरस्यांग्रहणं शक्यमकर्तुम् । इदमप्यवश्यं कर्तव्यम् । किं प्रयोजनम् ? 'डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपि यथा स्याता'मिति । रविधाने बहुव्रीहेरुपसंख्यानं चोदितं‡ तन्न वक्तव्यं भवति ।

प्र०—अथ तदिति । अन्तराले विचारः क्रियते । इदमेवान्यतरस्यांग्रहणं भवतु. तत्रत्यं न कर्तव्यं भवतीति मन्यते । इतरोऽकरणं संमन्यते—बाढमिति । ङीबपीति । अन्यतरस्याङ्ग्रहणेनात्रत्येन प्रापित इति भावः । इदं त्विति । अस्मिन्नन्यतरस्यांग्रहणे क्रियमाणे'ऽन उपधालोपिनोऽन्यतरस्या'मिति नियमार्थं कर्तव्यम् । तदेवेहाऽकृतेऽन्यतरस्यांग्रहणे विध्यर्थं भविष्यतीति भावः । इदमपीति । असतीहान्यतरस्यांग्रहणे'ऽन उपधालोपिनोन्यतरस्या'मिति सूत्रं विध्यर्थं स्यात्ततश्च प्रकरणान्तरेण ङीपो विधाना'द्वनो र चे'त्यनेन 'ऋन्नेभ्यो ङी'बित्येतत्सूत्रविधीयमानङीप्सन्नियोगेन विधीयमानो रेफो 'बहुधीवरी'त्यत्र न स्यात्, 'बहुधीव्नी'ति स्यात् । सति त्विहान्यतरस्यांग्रहणे'ऽन उपधालोपिन'इति सूत्रं नियमार्थं भवति न तु विध्यर्थमिति 'बहुधीवरी'त्यत्र 'ऋन्नेभ्यो ङी'बित्यनेनैव ङीब्भवति । ततश्च 'वनो र चे'ति रेफादेशः सिध्यति । यदि तह्यन्यतरस्यांग्रहणेन पक्षे ङीबनुज्ञायते तदा मनन्तादपि प्राप्नोति, तदा व्यवस्थितविभाषाविज्ञानान्न भविष्यति । अथवा 'डाबुभाभ्या'मित्येको योगः क्रियते, ततो'ऽन्यतरस्या'मिति द्वितीयः, तत्र 'अनो

उ०—इदमेवेति । इदञ्च निषिद्धङीपोऽनुमतये अस्यैव च 'अन उपधालोपिनः' इत्येतन्नियमार्थमिति—'बहुराजे'त्यादौ ङीब्डाप्प्रतिषेधाः सिद्धाः, 'सुपर्वे'त्यादौ च ङीबभावः सिद्ध इति भावः ।

ननु प्रतिषिद्धो ङीप् कथम् 'उच्यते' इत्युच्यते इत्यत आह—अन्यतरस्यांग्रहणेनाऽत्रत्येनेति । भाष्ये—अनवकाश इति । नित्योऽन उपधेति विधिस्तद्बाधनार्थः, विधिनियमसंभवे विधेरेव ज्यायस्त्वादिति भावः । तस्मादिति । 'अन उपधे'त्यस्य नियमार्थत्वार्थमित्यर्थः । अन्यथैतदन्यतरस्यांग्रहणबोधितविकल्पः 'सुपर्वे'त्यादावपि स्यादिति भावः । विध्यर्थं भविष्यतीति । फले न कश्चिद्विशेष इति भावः । मनन्तादपीति । अनन्तरत्वादिति भावः । ऋन्नेभ्यो ङीबित्यनेनैवेति । नियमार्थस्य तदनुवादरूपत्वादिति भावः । मनन्तादपीति । अबहुव्रीहौ 'पामे पामानौ, इत्यादौ डाब्रिव 'अन्यतरस्या'मित्यनेन वाक्यभेदेनाऽनुज्ञायमानो ङीबप्युभाभ्यां स्यादिति भावः । एकवाक्येन तदनुज्ञाऽसम्भवाद्वाक्यभेद आवश्यक इत्याशयेनाह—अथवेति । व्यवस्थितविभाषया तु नैतत्साधयितुं शक्यं, 'मन' इत्यस्य सम्बन्धे तद्वैयर्थ्यापत्तेः । तदाऽन्राऽपीति । डाप्टिलोपसम्प्रसा-

† अन उपधालोपिनोऽन्यतरस्याम् ४ । १ । २८ ‡ ४ । १ । ७ वा० २

अथेह कथं भवितव्यं—बहवः श्वानोऽस्यां रथ्यायाम्, बहवो युवानोऽस्यां शालायामिति ? बहुशूका, बहुयूकेति भवितव्यम् । का रूपसिद्धिः ? डाप्, टिलोपः, प्रसारणम्, प्रसारणपरपूर्वत्वम्, नद्यृतश्चेति कप्* ।

कपा तावन्न भवितव्यम् । किं कारणम् ? नद्यन्तानां यो बहुव्रीहिरित्येवं तद्विज्ञायते, न चैष नद्यन्तानां बहुव्रीहिः । प्रसारणेनापि न भवितव्यम् । वक्ष्यत्येतत्—'श्वादीनां 'प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थ'मिति† । परपूर्वत्वेन चापि न भवितव्यम् । वक्ष्यत्येतत्—'संप्रसारणपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थ'-मिति‡ ॥ तस्माद्बहुश्वा, बहुयुवेति भवितव्यमिति ॥ १३ ॥

प्र०—बहुव्रीहे'रिति वर्तते, न तु 'मन' इति ।

अथेहेति । यदि 'नद्यृतश्चे'त्यनेन नद्यन्ताद्बहुव्रीहेः कब्विधीयते तदात्रापि कपा भाव्यम् । अथ नद्यन्तानां वर्तिपदानां यो बहुव्रीहिस्ततः कबिति, तदा तत्र कपा न भाव्यमिति संशय्य पृच्छति आचार्यदेशीय आह—बहुशूकेति । सम्प्रसारणपरपूर्वत्वमिति । सम्प्रसारणस्य डापश्चेत्यर्थः । ततो 'हल' इति सम्प्रसारणान्तस्य दीर्घत्वम्, अङ्गप्रत्यययोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावात् ततो नदीसंज्ञायामुपजातायां 'नद्यृतश्चे'ति कप् ।

इदानीमाचार्य आह—कपा तावदिति । वक्ष्यतीति । डापि परतः पूर्वमङ्गं, डाबन्तं तु प्रत्ययान्तरे इति संप्रसारणस्य डापश्च समानाङ्गत्वं नास्तीत्युकाराकारयोरेकादेशाऽभावः, यथा शकह्वाविति ॥ १३ ॥

उ०—रणपूर्वत्वदीर्घत्वेषु कृतेषु नद्यन्तत्वादिति भावः । नद्यन्तानां वर्तिपदानामिति । नद्यन्तोत्तरपदक इत्यर्थं इति भावः । बहुवचनं प्रयोगबाहुल्याऽभिप्रायेण ।

ननु टिलोपे पराऽभावात्कथं सम्प्रसारणपूर्वत्वमत आह—डापश्चेति । दीर्घप्रवृत्तिनिमित्तं सम्प्रसारणत्वं, तदन्ताङ्गत्वञ्चोपपादयति—अन्तवदिति । 'हल' इति सूत्रारम्भसामर्थ्येनाऽल्विधावप्यतिदेशप्रवृत्तिरिति भावः । अन्तवत्त्वादेव च सम्प्रसारणाऽन्तस्याऽङ्गत्वं बोध्यम् । एवं कपो निमित्तं बहुव्रीहित्वमप्यन्तवत्त्वेन बोध्यम् । तत इति । दीर्घाऽनन्तरमित्यर्थः । भाष्ये—श्वादीनां सम्प्रसारणे इति । ननु टिलोपस्याभीयाऽसिद्धत्वेन कथं न नान्तत्वमिति चेन्न, तस्याऽनित्यत्वात् । 'ईदृशे विषये व्याश्रयत्वादसिद्धत्वाऽप्रवृत्ति'रित्यर्थस्य 'असिद्धवत्'सूत्रे उपपादयिष्यमाणत्वाच्च ॥ प्रत्ययान्तरे इति । स च नाऽद्याप्युत्पन्न इति भावः ॥ १३ ॥

* डाबुभाभ्यामन्यतरस्याम् ४ । १ । १३; टेः; श्वयुवमघोनामतद्धिते ६ । ४ । १४३; १३३; सम्प्रसारणाच्च ६ । १ । १०८; हलः ६ । ४ । २; नद्यृतश्च ५ । ४ । १५३ १—'संप्रसारणे' पा० ।

† ६ । ४ । १३३ वा० १

‡ ६ । १ । १०८ वा० १

## अनुपसर्जनात् । ४ । १ । १४ ॥

अनुपसर्जनादिति किमर्थम् ? बहुकुरुचरा मथुरा । प्रियकुरुचरा मथुरा ॥ नैतदस्ति प्रयोजनम् । कुरुचरशब्दात्प्रत्ययो विधीयते* तत्र कः प्रसङ्गो यद्बहुकुरुचरशब्दात् स्यात् ? नैव प्राप्नोति नार्थः प्रतिषेधेन । तदन्तविधिना† प्राप्नोति ।

अत उत्तरं पठति—

**अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् ॥ १ ॥**

प्र०—अनुपसर्जनात् । उपसर्जनमिह शास्त्रीयं गृह्यते—समासावयवभूतम् । तत्रावयवाश्रयकार्यं समुदायस्य न प्राप्नोति । यदवयवे कार्यमकृतार्थं तत्समुदायस्य भवति यथा—'जुगुप्सते' इत्यात्मनेपदम् । न तु यदवयवे कृतार्थं—यथा 'पणायती'ति, न भवति आत्मनेपदम् । तदन्तविधिश्च 'ग्रहणवते'ति प्रतिषिद्धः । तत्रानर्थकोयं प्रतिषेध इति मत्वाह—अनुपसर्जनादिति किमर्थमिति । इतरोऽमहत्पूर्वेति प्रतिषेधेन तदन्तविधिर्ज्ञापित इति मत्वाह—बहुकुरुचरेति । बहवः कुरुचरा अस्यामिति बहुव्रीहिः । कुरुचरशब्द उपसर्जनमिति ङीन्न भवति । कुरुचरशब्दादिति । 'टिड्ढाण' इत्यत्र टित्प्रातिपदिकं गृह्यते । तच्च किञ्चित्साक्षाट्टिद्भवति । यथा नदट्, चोरडिति । किञ्चित्त्ववयवटित्त्वद्वारेण । अवयवे हि यत्र टित्त्वमकिञ्चित्करं तत्र समुदायार्थं तद्विज्ञायते, स चावयवः क्वचिद्धातुष्टिद्भवति । यथा स्तनन्धयीति । क्वचित्तद्धितः—ट्युट्युलादिः । क्वचित् कृत्—ल्युडादिः । तत्र यं समुदायं योऽवयवो न व्यभिचरति तदर्थमवयवस्य टित्त्वमित्यनेनाभिप्रायेणोक्तं—'कुरुचरशब्दा'दिति । न तु कृद्ग्रहणपरिभाषाश्रयेण । न हि टिदिति कृत एव ग्रहणम् ।

उ०—अनुप । शास्त्रीयमित्युक्तं तत्र किन्तच्छास्त्रीयमित्यत्राह—समासावयवभूतमिति । कृत्रिमत्वात्प्रथमानिर्दिष्टमित्यादीत्यर्थः । निषेधवैयर्थ्योपपादिकां विधेरप्राप्तिमुपपादयति—तत्राऽवयवेति । कुरुचरशब्दो हि टित्, तदाश्रयो ङीप् समुदाये न प्राप्नोतीति निषेधो व्यर्थ इति भावः । नन्ववयवाऽनुदात्तेत्त्वमाश्रित्य सनन्तात् 'जुगुप्सते' इत्यादावात्मनेपदं दृष्टं तद्वदिहाऽपि स्यादत आह—यदवयव इति । कार्यं—कार्यप्रयोजकं निमित्तम् । यथा पणायतीति । आर्धधातुके आयस्य वैकल्पिकत्वेन केवले तच्चरितार्थमिति भावः । नन्वेवं तदन्तविधिना स्यादत आह—तदन्तेति । इतरोऽमहत्पूर्वेतीति । अस्मादेव ज्ञापकात्तदन्तविधिरिति वक्ष्यमाण आशय इत्यन्ये । ननु बहूनां कुरूणां समाहारो बहुकुरु, तत्र चरतीत्यर्थे भाव्यमेव ङीपेत्यत आह—बहव इति । ननु टस्य टित्वाट्टितो विधीयमानो ङीप् तत एव प्राप्नोति, तदन्तविधावपि 'चर'-शब्दात् सर्वथाऽपि 'कुरुचरशब्दा'दित्ययुक्तमत आह—टिड्ढेति । प्रातिपदिकाऽधिकारादिति भावः । नदडिति । पचादौ साक्षात्तथा पाठादिति भावः । स्तनन्धयीति । 'स्तनपा तु स्तनन्धयी'त्यमरः । नन्ववयवटित्त्वद्वारेण समुदायस्य टित्त्वे 'बहुकुरुचरे'त्यत्राऽपि स्यादत आह—तत्र यमिति । न हीति । कृद्ग्रहणे

* टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४ । १ । १५

† येन विधिस्तदन्तस्य १ । १ । ७२

अनुपसर्जनग्रहणमनर्थकम् । किं कारणम् ? 'प्रातिपदिकेन तदन्तविधिप्रतिषेधात्' । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ।

## ज्ञापकं तु पूर्वत्र तदन्ताऽप्रतिषेधस्य ॥ २ ॥

एवं तर्हि ज्ञापयत्याचार्यः 'पूर्वत्र तदन्तविधिप्रतिषेधो न भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? भवती अतिभवती, महती अतिमहतीत्यत्र‡ तदन्तविधिः सिद्धो भवति । नैतदस्ति प्रयोजनम् । उक्तमेतत्—वर्णोऽप्युगित्, प्रत्ययोऽप्युगित्, प्रातिपदिकमप्युगिदिति* ।

इदं तर्हि—बहुधीवरी बहुपीवरीति × । एतदपि नास्ति प्रयोजनम् । अत्राप्युक्तम्—'रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वा'दिति+ ॥ इदं तर्हि—अतिधीवरी अतिपीवरी ।

## पूर्वसूत्रनिर्देशो वाऽऽपिशलमधीत इति ॥ ३ ॥

प्र०—बहुधीवरीति । 'वनो र चे'त्यत्र वनन्तस्य प्रातिपदिकस्य ग्रहणादेव तदन्तविधिर्न स्यादिति भावः । उपसंख्यानादत्र सिद्धिं मत्वाह—एतदपीति । अतिधीवरीति । धीवानमतिक्रान्तेति तत्पुरुषः ॥ नन्वमहत्पूर्वेत्यनेनैव ज्ञापितस्तदन्तविधिः, ततश्च नार्थोनेन ज्ञापकेनेत्याह—पूर्वसूत्रनिर्देश इति । वाशब्दस्तर्ह्यर्थे । अथवा पूर्वं तदन्तविधेर्ज्ञापितत्वादुपसर्जनेनापि तदन्तविधिः स्यादिति प्रयोजनसमुच्चयार्थो वाशब्दः । 'पूर्वसूत्र'शब्देन पूर्वाचार्यकृतं व्याकरणमुच्यते । आपिशलिना प्रोक्तमिति-'इञश्चे'त्यण् । ततोऽध्येत्र्यां 'तदधीते'इत्यण् । तस्य 'प्रोक्ताल्लु'गिति लुक् ।

उ०—एव सा परिभाषा, न तु कृदकृद्ग्रहणे इति भावः । भाष्ये—तदन्तविधिप्रतिषेधादिति । 'समासप्रत्ययविधौ प्रतिषेध' इत्यनेनेति भावः । 'ग्रहणवते'त्यपि 'वर्णग्रहणवर्जं'मित्येतदर्थोऽनुवाद एवेति बोध्यम् । भाष्ये—ज्ञापकं त्विति । 'अनुपसर्जना'दिति तदन्तविध्यभावसिद्धाऽर्थोऽनुवादस्तेन पूर्वत्र तदन्तविधिलाभ इत्याशयोऽत एव 'पूर्वत्रे'त्युक्तम् । ननु 'वनो र चे'त्यत्र 'वन्'इति प्रत्ययग्रहणात्कथं 'ग्रहणवता प्रातिपदिकेने'ति निषेधोऽत आह—वनो र चेत्यत्रेति । 'प्रत्ययग्रहण'परिभाषयेति भावः । तथा च सामर्थ्यगृहीतेन वनन्तप्रातिपदिकेन प्रातिपदिकाऽधिकारे विशेष्ये सम्भवन्नपि तदन्तविधिः प्रतिषेधान्न स्यात्, अस्मात्तु ज्ञापकाद्भवतीति तात्पर्यम् । एतत्प्रकरणस्थशब्दानामस्त्रीलिङ्गप्रकृतिकाचारक्विबन्तप्रकृतिककर्तृक्विबन्तानां स्त्रीलिङ्गानामभाव एवेति बोध्यम् । तत्पुरुष इति । बहुव्रीहौ तूपसंख्यानेन सिद्धमिति भावः ॥ ननु पारिभाषिकोपसर्जनग्रहणे तदन्तविधिज्ञापनस्य प्रयोजनस्योक्तत्वेन कथं लौकिकोपसर्जनग्रहणं पक्षान्तरत्वेनोपन्यस्तं, कृत्रिमाऽकृत्रिमन्यायबाधस्याऽनुचितत्वादत आह—नन्वमहदिति । तर्ह्यर्थ इति । यदि ज्ञापकस्य नोपयोगस्तर्हीत्यर्थः । ननु तेन तदन्तविधिज्ञापने 'बहुकुरुचरे'त्यादिव्यावृत्त्यर्थोऽधिकार आवश्यक इति 'तर्ह्यर्थे' इत्ययुक्तमत आह—अथवेति ।

‡ उगितश्च ४ । १ । ६

× वनो र च ४ । १ । ७

* ४ । १ । ६ भाष्ये ।

+ ४ । १ । ७ वा० २

यदयमाह—'अर्थविशेषाऽसंप्रत्ययेऽतन्निमित्तादपी'ति ।

तत्तर्हि तन्निमित्तग्रहणं कर्तव्यम् ? न कर्तव्यम् । द्विगोरिति नैषा पञ्चमी । का तर्हि ? संम्बन्धषष्ठी—द्विगोस्तद्धितस्य लुग्भवति । किं च द्विगोस्तद्धितः ? निमित्तम् । यस्मिन्द्विगुरित्येतद्भवति । कस्मिंश्चैतद्भवति ? प्रत्यये ।

इदं तर्हि वक्तव्यम्—'अर्थविशेषाऽसम्प्रत्ययेऽतन्निमितादपी'ति ? एतच्च न वक्तव्यम् । इहाऽस्माभिस्त्रैशब्द्यं साध्यम्—पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः, पञ्चकपालः दशकपाल इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन । तद्यथा,—'अवेर्मांस'मिति विगृह्य 'अविक'शब्दादुत्पत्तिर्भवति 'आविक'मिति । एवं 'पञ्चसु कपालेषु संस्कृत' इति विगृह्य 'पञ्चकपाल'इति भविष्यति, 'पञ्चकपाल्यां संस्कृत' इति विगृह्य वाक्यमेव[3] ।

प्र०—पाल्यां संस्कृत इत्यत्रापि तद्धितस्य निमित्तं द्विगुरिति किं द्वितीयवार्त्तिकारम्भेण । किञ्च तन्निमित्तग्रहणमपि व्यावर्त्याभावादनर्थकं स्यात् ॥ निमित्तमिति । निमित्तनिमित्तिभावलक्षणस्य संबन्धस्यान्तरङ्गत्वात्स एवाश्रीयते न तु पौर्वापर्यलक्षणः । पौर्वापर्यस्य च पञ्चम्या लाभात्षष्ठ्याश्रयणमनर्थकं स्यात् । अव्यविकन्यायेनेति । अव्यविकशब्दयोर्यो न्यायस्तेनेत्यर्थः । क्वचिदविरविकन्यायेनेति पाठस्तत्र च दृष्टान्तत्वेनोपन्यासः । अविः—अविकन्यायेन—तद्द्वारेण—यथा प्रत्ययमुत्पादयति न तु स्वयं तथाऽयमपीत्यर्थः । अथवाऽविरित्यस्य विभक्त्यन्तस्यानुकरणमविरिति । ततोऽनुकार्येणार्थेनार्थवत्त्वाद्या विभक्तिरुत्पद्यते तस्या द्वन्द्वान्तर्भावाल्लोपः, न तु पूर्वस्याः, अनुकरणत्वात्सुप्त्वाभावात् । यथाऽस्यवामीयमिति षष्ठ्या लुगभावः । अथवा भाष्यकारवचनप्रामाण्यादस्य साधुत्वम् । एवमिति । पञ्चकपालीशब्दात्त्वनभिधानात्तद्धिता-

उ०—रूपितस्याऽपि सम्बन्धस्य सत्त्वात्कथं तल्लाभोऽत आह—निमित्तेति । हेत्वन्तरमप्याह—पौर्वापर्यस्य चेति । अयमभ्युच्चयः ॥ यो न्याय इति । अविशब्देन विग्रह एव, अविकशब्दात्प्रत्ययः, तेन विग्रहश्चेति तयोर्न्यायः । तद्द्वारेण—अविकद्वारेण । अयमेव न्यायशब्दार्थ इति भावः ।

अत्र पक्षे 'यथा तथे'त्यध्याहारगौरवमतः पक्षान्तरमाह—अथवेति । अत्राऽयमर्थः—'अवि'रित्येतत्पदम्, 'अविक'इति च तयोर्मध्ये विकारादिप्रत्ययः कनन्तादेव, न तु केवलादिति न्यायस्तेनेति । भाष्ये—विगृह्याऽविकशब्दादुत्पत्तिरिति—'परावरयोगे चे'ति क्त्वा । न्यायस्य प्रथमान्ते पदे न विषय इत्यरुचेराह—भाष्यकारेति । अयं हि भाष्यकारस्यैव प्रयोगः, तद्वचनप्रामाण्यान्मयूरव्यंसकादित्वात्पूर्वपदस्य रेफ आगम

१—'सम्बन्धे षष्ठी' पा० । २—'अव्यविक' पा० । ३—'भविष्यति'इत्यधिकं क्वचित् ।

त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवति ॥ ८८ ॥

## गोत्रेऽलुगचि ॥ ४ । १ । ८९ ॥

### गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः ॥ १ ॥

गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः । केतरेतराश्रयता ? अलुङ्निमित्तोऽजादिः, अजादिनिमित्तश्चाऽलुक्, तदेतदितरेतराश्रयं[1] भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।

### विप्रतिषेधात्तु लुकश्छविधानम् ॥ २ ॥

विप्रतिषेधात्तु लुकश्छो भविष्यति* । लुकोऽवकाशः—गर्गाः वत्साः, विदाः उर्वाः । छस्यावकाशः—शालीयः मालीयः, गार्गीयः वात्सीयः । इहोभयं प्राप्नोति—गर्गाणां छात्राः गार्गीयाः वात्सीयाः । छो भवति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः ।

---

नुवृत्तिरिति भावः ॥ ८८ ॥

गोत्रेऽलुगचि । 'यस्कादिभ्यो गोत्रे' इति प्रकरणेन प्राप्तस्य लुको विषयविशेषेऽयमपवादः । गोत्रेऽलुगचीति चेदिति । अस्मिन्सूत्रन्यासे दोषः । यदि तु 'गोत्रेऽलु'गित्युक्त्वा 'हलि ने'त्युच्येत तदा न स्याद्दोष इत्यर्थः । अलुङ्निमित्त इति । गर्गाणां छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां सत्यलुकि वृद्धात्वाच्छेन भाव्यं नान्यथा, छे च कृते ईयादेशे परतोऽलुगितीतरेतराश्रयत्वम् । व्यक्तिपक्षेऽचीति परस्य प्रत्ययाश्रयणेऽयं दोषः । आकृतिपक्षे तु विषयप्रत्ययाश्रयणेऽस्य दोषस्यानवतारः । गार्गीया इति । गार्ग्यस्यायं छात्र इति यदा एकवचनान्ता प्रकृतिस्तदेदं छस्यावकाशप्रदर्शनम् ।

---

इत्याशयः ॥ ८८ ॥

गोत्रेऽलुगचि । अत्र 'गोत्र'शब्देन पारिभाषिकं शास्त्रीयमेव, उत्तरसूत्रस्थेन कृत्रिमेण यूना साहचर्यात् । पूर्वसूत्रेण गोत्रप्रत्ययलुकोऽप्राप्ते । प्राप्तिं दर्शयति—यस्कादिभ्य इति । अनेन 'तद्राजे'त्यस्याऽपि सङ्ग्रहः, तत एवैषु बहुष्विन्यनुवृत्तेस्तस्याऽपि तत्प्रकरणस्थत्वात् । 'ण्यक्षत्रिये'ति तु न गृह्यते, यूनो गोत्रसंज्ञाया अभावात्, 'भूम्नि प्राप्तस्ये'ति भाष्याच्च । विशेषे—प्राग्दीव्यतीयाऽजादिप्रत्यये । प्राग्दीव्यतीयस्त्वोरजीवनायैव च प्रकरणोत्कर्ष इति बोध्यम् । 'अलुग्विधान' इति वक्तव्ये 'गोत्रेऽलुगचीति चे'दित्ययुक्तमत आह—अस्मिन्सूत्रेति । यदि त्विति । प्राग्दीव्यतीयेऽर्थे विवक्षिते गोत्रस्याऽलुक्, हलादौ तु नेति सूत्रार्थः । यद्यप्यजादिप्रत्ययमात्रस्य नाऽलुङ्निमित्तकता, तथापि तद्विशेषछस्यास्तीत्याह—गर्गाणामिति ।

---

१—'तदितरेतराश्रयं' पा० । * यञञोश्च २ । ४ । ६४; वृद्धाच्छः ४ । २ । ११४ ।

भूम्नाने च लुक् प्राप्तो बाह्ये चाऽर्थे विधीयतेऽजादिः ।
बहिरङ्गमन्तरङ्गाद्विप्रतिषेधादयुक्तं स्यात् ॥
भूम्नि प्राप्तस्य लुको यदजादौ तद्धितेऽलुकं शास्ति ।
एतद्ब्रवीति कुर्वन्समानकालावलुग्लुकौ च ॥

यदयं भूम्नि प्राप्तस्य लुकोऽजादौ तद्धितेऽलुकं शास्ति तज्ज्ञापयत्याचार्यः 'समानकालावेतावलुग्लुकौ' विति ।

यदि वा लुकः प्रसङ्गे भवत्यलुक्छस्तथा प्रसिद्धोऽस्य ।

यदि वा लुकः प्रसङ्गेऽलुग्भवति तथास्य च्छः प्रसिद्धो भवति । 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' ।

लुग्वाऽलुकः प्रसङ्गं प्रतीक्षते छेऽलुगस्य तथा ॥

लुग्वा पुनरलुकः प्रसङ्गं यदि प्रतीक्षते तथास्य च्छेऽलुक् सिद्धो भवति । 'प्रकल्प्य वाऽपवादविषयं तत उत्सर्गोऽभिनिविशते' ।

प्र०—भूम्नीति चेति । प्रत्ययार्थबहुत्वमात्रापेक्षो लुगन्तरङ्गो बाह्यप्राग्दीव्यतीयार्थापेक्षत्वात्तु बहिरङ्गोऽजादिप्रत्ययः । अन्तरङ्गबहिरङ्गयोश्चाऽतुल्यकालत्वादयुक्तो विप्रतिषेधः । तुल्यकालत्वप्रतिपादनायाह—भूम्नीति । समानकालाविति । यदि पूर्वं लुक् प्रवर्तेत तदाऽभिनिर्वृत्तस्य निवर्तयितुमशक्यत्वादनर्थकमलुग्विधानं स्यात् । तस्मादलुग्विधानान्न तावत्पूर्वं लुक्प्रवर्तत इति लुकोऽपि स पेक्षत्वादन्तरङ्गत्वाभावादुपपन्न एव विप्रतिषेध इत्यर्थः । यदि वेति । अन्तरेणापि विप्रतिषेधं लुगपवादत्वादलुकः, तन्निमित्तमजादिप्रत्ययो बलवत्त्वात्प्रवर्त्तत इत्यर्थः । पूर्वमिति । निरपवादे विषये उत्सर्गेण प्रवर्तितव्यमिति पश्चादसौ प्रवर्तत इति भावः । प्रकल्प्येति । अन्यथा निर्विषयोऽपवादः स्याद्यदि सर्वत्रोत्सर्गः प्रवर्तेतेति भावः ।

उ०—परत इति । ईयादेशे कृते तस्मिन्परत इत्यर्थः । एतेन विषयसप्तम्यां न दोष इति ध्वनितम् । तदाह—व्यक्तिपक्ष इति । तत्पक्षे साक्षात्पौर्वापर्यसम्भवात् । आकृतीति । अत्र हि जातेः पौर्वापर्याऽसम्भवाद्विषयसप्तम्येवेत्याशयः । इदम् 'आर्धधातुके' इति सूत्रे द्वितीये स्पष्टम् ।

ननु गार्गीयस्य विवादस्थानत्वाच्छाऽवकाशत्वमनुपपन्नमत आह—यदेति । अन्तरङ्गः । पूर्वकालप्राप्तिक इत्यर्थः । लुकोऽपि सापेक्षत्वाद्बाह्यार्थसापेक्षाऽलुकशास्त्रकृतलक्ष्यसंस्काराऽपेक्षत्वान्न केवलं छस्यैव किन्तु लुकोऽपीत्यपेरर्थः ॥ भाष्ये—यदि वेति । अथवेत्यर्थः । तन्निमित्तमिति । यथाऽपवादो बलवांस्तथा तन्निमित्तमपीत्यर्थः । तदाह भाष्ये—पूर्वं हीति । अपवादशास्त्रकृतलक्ष्यसंस्कारज्ञानोत्तरमुत्सर्गेण स्वलक्ष्यसंस्कारं, लक्षणैकचक्षुष्को जानीत इत्यर्थः । द्वितीये स्वपवादविषयपरिहारेणोत्सर्गस्य स्वलक्ष्यसंस्कारकता, ततः प्रागेवेत्यर्थः । अयञ्च लक्ष्यैकचक्षुष्कविषयो न्यायः । एवञ्च लुकाऽलुग्विषयपर्यालोचनात्पूर्वं छ इत्याशयः । एवं भाष्ये प्रकारत्रयोक्त्याऽचीत्यस्य विषयसप्तमीत्वं ध्वनितमित्याहुः ।

**गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ॥ ३ ॥**

गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः । बिदानामपत्यं माणवको बैदः, बैदौ* । किमर्थमिदं 'नाऽची'त्येवालुक्सिद्धः ? 'अची'त्युच्यते, न चात्राऽजादिं पश्यामः । प्रत्ययलक्षणेन† । 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' ।

**एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि ॥ ४ ॥**

एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः । बैदस्यापत्यं बहवो माणवका बिदाः । बैदयोर्बिदाः[1] । अञ्यो बहुषु यञ्यो बहुष्वित्युच्यमानो‡ लुग्न प्राप्नोति । मा भूदेवम्—'अञ्यो बहुषु यञ्यो बहु'ष्विति । 'अञन्तं यद्बहुषु यञन्तं यद्बहु'ष्वित्येवं भविष्यति । नैवं शक्यम् । इह हि दोषः स्यात्—'काश्यपप्रतिकृतयः काश्यपा' इति+ ।

प्र०—गोत्रस्येति । गोत्रप्रत्ययस्येत्यर्थः । बहुषु लोपिन इति । बहुष्वर्थेषु विधीयमानलोपस्येत्यर्थः । बहुवचनान्तस्येति । यदा तदर्थान्तरे यूनि संक्रामति तदन्ताद्यूनि यदा प्रत्ययः क्रियते इत्यर्थः । द्व्येकयोरिति । द्वित्वैकत्वयोरित्यर्थः । द्वयोर्यूनोरेकस्मिन्वा यूनि यदा प्रत्यय उत्पद्यत इत्युक्तं भवति । बिदानामिति । बिदस्यापत्यानि बहूनि । 'अनृष्यान्तर्य'इति गोत्रेऽञ् । तदन्ताद्यून्यत इञ् । तस्य 'ण्यक्षत्रियार्षञित' इति लुक् । तत्राऽञो बहुषूत्पन्नत्वाल्लुक् प्राप्तः प्रतिषिध्यते । अञन्तमिति । इञि लुप्ते युवसु बहुष्वञन्तस्य वर्तनाल्लुग्भविष्यतीत्यर्थः । काश्यपा इति । काश्यपस्यापत्यं-बिदादित्वादञ् । तत एकस्यैव काश्यपस्य बह्व्यः प्रतिकृतयो यदा विवक्षिता

उ०—ननु गोत्रसंज्ञकस्याऽपत्यस्य लुकोऽसम्भवादाह-गोत्रप्रत्ययस्येति । भाष्ये—बहुषु लुग्भावी यो गोत्रप्रत्ययः, तदन्तस्य—बहुवचनान्तस्य प्रवृत्तौ-अर्थान्तरसङ्क्रान्तावित्यर्थः । तदेवाह—यदा तदिति । बहुवचनान्तम्—गोत्रप्रत्ययान्तमित्यर्थः । यूनि यदेति । तस्य च यदा लुगित्यपि बोध्यम् । ननु द्व्येकेषा'मिति युक्तमत आह— द्वित्वेति । अर्थान्तरसंक्रान्तस्य द्वित्वैकत्वयोः सतोरित्यर्थः । तत्फलितमाह—द्वयोरिति । भाष्ये—वर्णाश्रये नास्तीति । प्रत्ययलक्षणसूत्रस्य प्रत्ययस्याऽसाधारणं रूपं यत्राऽऽश्रीयते तदेव कार्यं प्रत्ययलोपे भवतीति नियमार्थत्व इदम् । एतेन 'वर्णप्राधान्याऽभावादिदञ्चिन्त्य'मित्यपास्तम् ।

* अनृष्यानन्तर्ये बिदादिभ्योऽञ्; अत इञ् ४ । १ । १०४; ९५; ण्यक्षत्रियार्षञितो लुगणिञोः २ । ४ । ५८ । ( यञञोश्च २ । ४ । ६४ ) । † प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२ ।
१—'बैदयोर्वा बिदाः' पा० । 'विद' पा० सर्वत्र । ‡ यञञोश्च २ । ४ । ६४ ।
+ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०४; इवे प्रतिकृतौ; जीविकार्थे चाऽपण्ये ५ । ३ । ९६; ९९ ।

नैष दोषः । यत्तावदुच्यते 'गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्य' इति, न वक्तव्यः । 'अची'त्येवाऽलुक्सिद्धः । 'अची'त्युच्यते, न चात्राऽजादिं पश्यामः । प्रत्ययलक्षणेन । ननु चोक्तं 'वर्णाश्रये नास्ति प्रत्ययलक्षण'मिति । यदि वा कानिचिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति तथा चेदमपि भविष्यति ।

अथवाऽविशेषेणाऽलुक्मुक्त्वा 'हलि ने'ति वक्ष्यामि । यद्यविशेषेणाऽलुक्मुक्त्वा 'हलि ने'त्युच्यते, बिदानामपत्यं बहवो माणवका बिदाः—अत्राऽप्यलुक्प्राप्नोति[1] । अस्तु । पुनरस्य युवबहुत्वे वर्तमानस्य लुग्भविष्यति† । पुनरलुक्कस्मान्न भवति ?

प्र०—भवन्ति तदा 'इवे प्रतिकृता'विति कन्प्रत्ययस्तस्य देवपथादित्वाल्लुप् । 'हरीतक्यादिषु व्यक्ति'रिति वचनाल्लिङ्गमेव युक्तवद्भावेन भवति । वचनं त्वभिधेयगतमेव । यद्वैकशेषः क्रियते, तदाऽनन्तस्य प्रतिकृतिबहुत्वे वर्त्तनाल्लुक्प्रसङ्गः । यदि वेति । यथैवेत्यर्थः । अतृणेड् इत्यत्र हलादौ पिति सार्वधातुके विधीयमान 'तृणह इ'मितीमागमो लुप्तेऽपि सार्वधातुके भवति । तत्र हि हलीत्यनेन सार्वधातुकं विशेष्यते । ततश्च हलादिसार्वधातुकाश्रयत्वादिमागमः प्रत्ययलक्षण इति लुप्तेऽपि प्रत्यये प्रवर्तते । 'गवे हितं गोहित'मित्यादौ त्ववादयोऽज्मात्रे विधीयमाना वर्णरूपतानिमित्ता एव न तु प्रत्ययत्वनिमित्ता इति प्रत्ययलक्षणाभावाल्लोपे न प्रवर्तन्ते । इहाप्यजादौ प्रत्यये लुगुच्यमानः प्रत्ययलक्षणो भवतीति लुप्तेऽपि प्रत्यये प्रवर्तत इति भावः ।

अविशेषेणेति । प्राग्दीव्यतीयोऽर्थ एवापेक्ष्यते न त्वजादिः प्रत्ययविशेष इत्यर्थः । हलि नेति । गर्गस्य आगतं गर्गरूप्यम्, गर्गमयमिति हलादावलुक् न भवति । बिदानामपत्यमिति । अत्रापि प्राग्दीव्यतीयार्थस्य विवक्षितत्वादलुक् प्राप्नोतीत्यर्थः । युवबहुत्व इति ।

उ०—हरीतक्यादित्वाऽभावेऽपि बहुवचनं साधयति—यद्वैकशेष इति । अनन्वयादाह—यथैवेति । विधिपक्षाऽभिप्रायेणेदम् । 'वर्णाश्रय' इति तु वर्णप्राधान्यविषयकमिति भावः । विषयसप्तमीपक्षेऽपि प्रत्ययलक्षणेन तद्विषयताप्रयुक्तस्याऽतिदेशो भवत्येव, 'न लुमते'ति निषेधस्तु न, अङ्गसंज्ञोद्देश्यकत्वाऽभावादिति भावः । नन्वविशेषेणाऽलुग्वचने 'गर्गा' इत्यादावप्यापत्तिः, 'प्राग्दीव्यतीये परे' इत्यर्थे प्रत्ययलक्षणशास्त्रस्य नियमार्थतया 'बैद' इत्यादावप्यनापत्तिरत आह—प्राग्दीव्यतीय इति । प्राग्दीव्यतीयाऽर्थे विवक्षित इत्यर्थ इति भावः । हलादावलुग्नेति । अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेरिति भावः ।

भाष्ये—यद्यविशेषेणेति । प्रत्ययलक्षणसूत्रे विधिपक्षस्याऽप्युपलक्षणमिदम् । अस्त्विति । युवार्थविवक्षायां गोत्रबह्वर्थकस्याऽलुक्यपि युवबहुत्वे वर्तमानस्य लुगिति भावः । पुनरलुगिति । गोत्राऽतिरिक्तप्राग्दीव्यतीयाऽर्थविषयस्य सत्त्वादिति भावः । लुग्विधौ बहुत्वं गोत्रार्थगतमन्यार्थगतं वेति नाग्रह

१—'अत्रापि प्राप्नोति' पा० ।  † यञञोश्च २ । ४ । ६४ ।

समर्थानां प्रथमस्य गोत्रप्रत्ययान्तस्याऽलुगुच्यते, न चैतत्समर्थानां प्रथमं गोत्रप्रत्ययान्तम्। किं तर्हि ? द्वितीयमर्थमुपसङ्क्रान्तम्। अवश्यं चैतदेवं विज्ञेयम्—अत्रिभरद्वाजिका, वसिष्ठकश्यपिका, भृग्वङ्गिरसिका, कुत्सकुशिकिकेत्येवमर्थम् ‡ ।

**गर्गभार्गविकाग्रहणं वा नियमार्थम् ॥ ५ ॥**

अथवा गर्गभार्गविकाग्रहणं* नियमार्थं भविष्यति × 'एतस्यैव [ गोत्रप्रत्ययान्तस्य ] द्वितीयमर्थमुपसङ्क्रान्तस्याऽलुग्भवति नान्यस्ये'ति ।

प्र०—लुग्विधौ गोत्रप्रत्ययमात्रं गृह्यत इति युवबहुत्वेऽपि लुक्प्रवर्तत इति भावः। प्रथमस्येति। 'प्रथमा'दित्यनुवृत्तमिहाऽर्थवशात्षष्ठ्यन्तं संपद्यते। प्रथमार्थवृत्तित्वाच्च प्राथम्यम्। गोत्रप्रत्ययस्य द्वितीयार्थवृत्तित्वे त्वलुगभावः। अत्रिभरद्वाजिकेति। अत्रेरपत्यानि बहूनि 'इतश्चानिञ'इति ढक्। तदन्ताद्युवबहुत्वे—'अत इञ्'। तस्य 'ण्यक्षत्रियार्षे'ति लुक्। 'अत्रिभृग्वि'ति ढको लुक्। भरद्वाजशब्दाद्बिदाद्यञ्। ततो यूनीञ्। पूर्ववल्लुक्। अत्रोऽपि युवबहुत्वे लुगिष्यते। अनने प्रथमस्योच्यमानोऽत्रिभरद्वाजानां मैथुनिकेति प्राग्दीव्यतीयार्थविवक्षायामलुग्न भवति।

वसिष्ठकश्यपिकेति। वसिष्ठादृष्यण्। यूनीञो लुक्। अणोऽप्यत्र्यादिसूत्रेण लुक्। कश्यपाद्बिदाद्यञ्। यूनीञो लुक्। अञः 'यञञोश्चे'ति लुक्। पूर्ववद्वुन्। भृगोः ऋष्यण्। यूनीञो लुक्। अणोऽत्रिभृग्वित्ति लुक्। एवमङ्गिरसः। कुत्सादृष्यण्, तस्माद्यन्यणो द्व्यच इति फिञा भाव्यम्,

उ०—इति तात्पर्यम्। ननु गोत्रबहुत्वे विधीयमानो 'यञञोश्चे'ति लुक् कथं युवबहुत्वेऽत आह—लुग्विधाविति। गोत्रप्रत्ययमात्रमिति। 'गोत्र' इत्यस्य लुगादिप्रत्ययेनैवाऽन्वयाद्गोत्रे ञो लुग्भवति, तदन्तश्चेद्बहुत्वे इत्यर्थ इति भावः। अन्यथा 'शिष्यमाण'मिति न्यायेनाऽञन्तस्य युवबहुत्वे वृत्तिर्न 'अञ' इति न लुकः प्राप्तिः स्यादिति बोध्यम्। प्रथमार्थेति। न तु प्रथमोत्पन्नत्वात्। तेन यत्रार्थे प्रत्यय उत्पन्नस्तत्रार्थे वर्तमानस्यैवाऽलुगिति भावः।

लुगिष्यत इति। स तु 'प्रथमस्ये'त्यनुच्यमानेऽलुका बाधान्न प्राप्नोति, 'प्रथमस्ये'त्युक्तौ तु नाऽलुकः प्राप्तिस्तदाह—अनेनेति। एतत्प्रयोगसिद्ध्यर्थमेव लुक् द्वितीयमर्थमुपसंक्रान्तस्यापि। तत्र 'प्रथमस्ये'त्यस्याऽ-

---

‡ इतश्चानिञः, ( ऋष्यन्धक० ); अनृष्यानन्तर्ये०; अत इञ् ४। १। १२२; ( ११४ ); १०४; ६५; ण्यक्षत्रियार्ष०; अत्रिभृगु०; यञञोश्च २। ४। ५८; ६५; ६४; द्वन्द्वाद्वुन् वैरमैथुनिकयोः ४। ३। १२५; युवोरनाकौ ७। १। १; ( गोत्रेऽलुगचि ४। १। ८९ )

* गोपवनादिगणे ( २। ४। ६७ ) 'गर्गभार्गविका'शब्दस्य पाठो नोपलभ्यते। "गर्गभार्गविकाशब्दस्य गोपवनादिषु पाठो व्यर्थः स्या" दित्युद्द्योतेनास्य तत्र पाठ आसीदित्यनुमीयते।

× गर्गादिभ्यो यञ्; ऋष्यन्धक०; अत इञ् ४। १। १०५; ११४; ९५; ण्यक्षत्रियार्ष० २। ४। ५८; द्वन्द्वाद्वुन्० ४। ३। १२५; युवोरनाकौ ७। १। १; यञञोश्च; ( अत्रिभृगु० ); न गोपवनादिभ्यः २। ४। ६४; ( ६५ ); ६७

१—क्वाचित्कोऽयं पाठः।

यदप्युच्यत एकवचनद्विवचनान्तस्य च प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः, अञ्यो बहुषु यञ्यो बहुष्वित्युच्यमानो लुग्न प्राप्नोतीति, मा भूदेवमञ्यो बहुषु यञ्यो बहुष्विति, अञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवं भविष्यति । ननु चोक्तं नैवं शक्यमिह हि दोषः स्यात् काश्यपप्रतिकृतयः काश्यपा इति । नैष दोषः। लौकिकस्य तत्र† गोत्रस्य ग्रहणं, न चैतल्लौकिकं गोत्रम् ।

यद्यञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवमुच्यते, 'बिदानामपत्यं माणवको बैदः बैदौ अत्रापि प्राप्नोति । अलुगत्र लुकं बाधिष्यते, अलुकि च कृते पुनर्लुको निमित्तं नास्तीति कृत्वा पुनर्लुग्न भविष्यति ।

**उक्तं वा ॥ ६ ॥**

किमुक्तम् ? 'आपत्यो वा गोत्रम्', 'परमप्रकृतेश्चापत्यः', 'आपत्याज्जीववद्वंश्या-

प्र०—न त्वित्रेति युववित्तक्षा न क्रियते । कुशिकाद्विदाद्यञ् । यूनीञो लुक् । अञोऽपि लुक् । वुन् । गर्गाद्यञो लुक् । भृगोर्ऋष्यण् । यूनीञो लुक् । अणोऽत्रिभृग्विति लुक्प्राप्तो 'न गोपवनादिभ्य' इति प्रतिषिध्यते । स एष प्रतिषेधो नियमार्थ इति बिदा इत्यत्र युवलक्षणेऽर्थेऽलुग् न भवतीत्यर्थः। लोपो यूनीति । लोपग्रहणेन लुग् लक्ष्यते । लोपे हि प्रत्ययलक्षणेन वृद्धिस्वरप्रसङ्गः । लौकिकस्येति । अपत्यस्येत्यर्थः । 'काश्यपा' इत्यत्रान्तं तु प्रतिकृतिबहुत्वे वर्तते नापत्यस्य बहुत्वे ॥ निमित्तं नास्तीति । बहुत्वं नास्ति, द्वित्वैकत्वविषयत्वादित्यर्थः ॥ आपत्यो वेति । अपत्यस्येदमापत्यं—पौत्रप्रभृत्यपत्यमित्यर्थः, तद्वगोत्रसंज्ञं भवति । परमप्रकृतेरिति । गर्गादेरे-

उ०—भावात् । पूर्ववद्वुनिति । वसिष्ठकश्यपानां मैथुनिकेति 'द्वन्द्वाद्वुन्वैरमैथुनिकयो'रिति वुनिति भावः । नियमार्थत्वमुपपादयति गर्गादिति । अन्यथाऽनेनैवाऽलुकि 'सिद्धे 'गर्गभार्गविका'शब्दस्य गोपवनादिषु पाठो व्यर्थः स्यादिति भावः । भाष्ये—अञन्तमिति । एवञ्च 'यञञोश्चे'त्यनेनैव सिद्धिरिति भावः । तत्र शङ्कते—ननु चेत्यादि काश्यपा इतीत्यन्तेन ।

अपत्यस्येति । प्रवराध्यायप्रसिद्धाऽपत्यस्येत्यर्थः । 'स्त्रीपुंसाभ्या'मिति सूत्रे स्वयमेव तथोक्तेः । भाष्ये—बैदः बैदौ अत्रापि प्राप्नोतीति । अञन्तस्य गोत्रयुवसमुदायगतबहुत्वे वर्तनात् । 'अञ्यो बहुषु' इत्यर्थे तु न दोषः, तत्समुदायगतबहुत्वेऽञोऽवर्तनादित्यभिमानः । उत्तरं तु—गोत्रबहुत्वे प्राप्तस्याऽलुका बाधो, यूनस्तु बहुत्वमेव न, उभयसमुदायस्तु न समकक्षतया शब्दवाच्य इति । बहुत्वं नास्तीति । युवबहुत्वं नास्तीत्यर्थः ।

अन्यत्र स्वयं पठितवार्तिकैरत्रत्ये वार्त्तिके प्रत्याचष्टे तेषामावश्यकत्वाऽभिप्रायेण भाष्ये—उक्तं वेति । अपत्यस्येदमिति । 'तस्येद'मित्यादिवार्त्तिकविरुद्धमेतत् । शिवादिपाठादणिति युक्तम् । आपत्याज्जीववद्वंश्या-दिति । जीववद्वंश्यचतुर्थादिबोधकाद्गोत्रप्रत्ययान्तात्स्वार्थे द्वितीयः फगादिर्भवति स 'युव'संज्ञ इत्यर्थः ॥ परे तु अपत्याऽपत्यार्थकस्य आपत्यशब्दस्य तदर्थकप्रत्ययपरता, 'परमप्रकृतेश्चे'ति वार्त्तिके, 'आपत्या'दित्यत्र च

† यञञोश्च २ । ४ । ६४ । १—'विद' पा० ।

त्स्वार्थे द्वितीयो युवसंज्ञः', 'स चाऽस्त्रियाम्', 'एकोगोत्रग्रहणाऽनर्थक्यं च', 'बहुवचनलोपिषु च सिद्ध'मिति‡ । तत्र 'बिदानामपत्यं माणवक'इति विगृह्य बिदशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति बैदः बैदौ, 'बैदस्यापत्यं बहवो माणवका'इति विगृह्य बिदशब्दाद्बहुषूत्पत्तिर्भविष्यति 'बिदा' इत्यविरविकन्यायेन ॥ ८९ ॥

## यूनि लुक् ॥ ४ । १ । ९० ॥

### यूनि लुगचीति चेत्प्रत्ययस्याऽयथेष्टप्रसङ्गः ॥ १ ॥

यूनि लुगचीति चेत्प्रत्ययस्याऽयथेष्टं प्राप्नोति । अनिष्टे प्रत्ययेऽवस्थिते लुक् । अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत ।

प्र०--वापत्यप्रत्ययः कार्यो न त्वनन्तरगोत्रयुवभ्य इत्यर्थः । आपत्यादिति । गर्गादिर्यदा पौत्रप्रभृतेरपत्ये चतुर्थादौ जीवद्वंश्ये प्रत्ययः क्रियते तदा स्वार्थे द्वितीयो 'यञिञोश्चे'त्यादिना फगादिः क्रियते, गार्ग्यायण इति । स चेति । स्त्रियां द्वितीयप्रत्ययाभावाद्गार्गीत्येव भवति । एक इति । 'परमप्रकृतेश्चापत्य' इत्यनेन तदर्थस्य लाभात् । बहुवचनलोपिष्विति । युवबहुत्वे बिदा इत्यादि सिद्धम् । द्वित्वैकत्वयोस्तु बैदो बैदावित्यादीत्यर्थः । तत्र बिदानामिति । 'गोत्रस्य बहुषु लोपिन' इति वार्त्तिकप्रयोजनमन्यथा साधयति । परमप्रकृतेरेव यूनि प्रत्ययः । आपत्याज्जीवद्वंश्यादित्यनेन स्वार्थिको द्वितीयो 'ण्यक्षत्रियार्षञित'इति लुप्यते । अविरविकन्यायेनेति । केचिदाहुरग्रन्थोऽयमिति, 'परमप्रकृतेश्चापत्य' इति वाचनिकत्वादस्यार्थस्य । अन्ये तु वचनस्यैवाव्यविकन्यायमूलत्वप्रतिपादनायैतदुक्तमित्याहुः ॥ ८९ ॥

यूनि लुक् । यूनि लुगचीति चेदिति । अस्मिन्सूत्रन्यासे दोषो न तु न्यासान्तर इत्यर्थः । फाण्टाहृतस्यापत्यमि'त्यत इञ्' । तस्यापत्यं युवा 'फाण्टाहृतिमिमताभ्या'मिति णः ।

उ०—तस्य तत्परत्वावश्यकत्वात् । एवञ्च,प्रत्ययस्यैव गोत्रसंज्ञा, युवसंज्ञावत् । कैयटोक्तव्याख्याने वार्तिकस्य सूत्रसमानार्थकतया 'आपत्यं वे'ति 'वा'शब्दाऽसङ्गतिः, उद्देश्यानन्तरेण 'वा'शब्देन तद्विकल्पबोधनात् । न्यासविकल्पे तु 'आपत्यं गोत्र'मिति वदेत् । स चाऽपत्याऽपत्यबोधकः प्रत्ययः परमप्रकृतेरेव भवति । एवं च गोत्रत्वयुवत्वादिना बोधविषयताश ।ऽपि न । 'आपत्यो वा गोत्र'मिति वार्तिकपाठो 'जीवती'ति सूत्रे भाष्ये क्वचित्पुस्तके दृश्यते स युक्तत :, अपत्यान्तानां स्त्रीपुंसयोरेव वृत्तेः, 'गोत्रेऽलुगची'त्यादौ 'यूनि लुगि'त्यादौ च षष्ठ्यर्थे सप्तमीत्याहुः । वार्तिकप्रयोजनमिति । वार्त्तिकद्वयप्रयोजनमित्यर्थः । अन्यथेति । वार्त्तिककारो वचनं विनैव प्रकारान्तरेण साधयतीत्यर्थः । यूनि युवबहुत्वे तद्द्वित्वैकत्वयोश्चेत्यर्थः । वाचनिकत्वादिति । तत्त्वे न्यायसिद्धत्वकथनमयुक्तमित्यर्थः ॥ ८९ ॥

यूनि लुक् । न्यासान्तर इति । 'यूनि लुक् न हली'ति न्यासे इत्यर्थः । अनिष्टप्रत्ययश्रवणमुदाहरणे दर्शयति—फाण्टाहृतेति । अविशेषेणेति—भाष्ये । 'अची'त्ययं विशेषो नाऽपेक्षित इत्यर्थः ।

‡ ४ । १ । १६३ वा० ४--६ । १—'अनिष्टप्रत्ययस्य' पा० ।

**सिद्धं त्वविशेषेण लुग्वचनं हलि नेति[1] प्रतिषेधः ॥ २ ॥**

सिद्धमेतत् । कथम् ? अविशेषेण लुकमुक्त्वा 'हलि ने'ति वक्ष्यामि । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'यूनि लुगचीति चेत्प्रत्ययस्यायथेष्टप्रसङ्ग' इति । नैष दोषः । 'अची'ति नैषा परसप्तमी । का तर्हि ? विषयसप्तमी—अजादौ विषय इति । तत्राऽचि विषये लुकि कृते यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ।

कानि पुनरस्य योगस्य प्रयोजनानि ?

**प्रयोजनं सौवीरगोत्रेभ्यो णठक्छाः ॥ ३ ॥**

ण—फाण्टाहृतेरपत्यं माणवकः फाण्टाहृतः । फाण्टाहृतस्य यूनश्छात्राः फाण्टाहृताः* । ण ॥ ठक्—भागवित्तेरपत्यं माणवको भागवित्तिकः । भागवित्तिकस्य यूनश्छात्रा भागवित्ताः† । ठक् ॥ छ—तैकायनेरपत्यं माणवकस्तैकायनीयः । तैकायनीयस्य यूनश्छात्राः तैकायनीयाः‡ ।

---

प्र०—तस्य छात्रा इति प्राग्दीव्यतीयार्थविवक्षायामिञश्चेत्यणिष्यते । स च न प्राप्नोति, णान्तत्वात् । ततश्च वृद्धलक्षण एव च्छे परतो णस्य लुक् स्यादिति च्छस्य श्रवणप्रसङ्गः ॥ भागवित्तेरिति । भागवित्तस्यापत्यमि'त्यत इञ्' । ततो यूनि 'वृद्धाट्ठक्सौवीरेषु बहुल'मिति ठक् । तस्य छात्रा इत्यर्थे ठको लुकि इञश्चेत्यण् । तैकायनेरिति । तिकस्यपत्यमिति तिकादिभ्यः फिञ् । ततो यूनि 'फेश्छ च'ेति च्छः । 'यमुन्दश्च सुषामा च वार्ष्यायणिः फिञः स्मृता' इति परिगणनं तु भाष्यकारेण 'फेश्छ चे'त्यत्र नाश्रितमिति तैकायनेश्छो भवति । परिगणनाश्रये तु न प्राप्नोति । तस्य छात्रा इति च्छे लुप्ते वृद्धलक्षणश्छः ।

---

उ०—फेश्छ चेति । तैकायनिः सौवीरगोत्र इति भावः । असौवीरगोत्रोऽप्ययम्, अत एव 'फेश्छ चे'ति सूत्रे 'सौवीरेति किम् ? तैकायनि'रिति वृत्त्यादिग्रन्थाः सङ्गच्छन्ते । 'परिगणनाश्रये त्विति । एवञ्च परिगणनं चिन्त्यमिति भावः । छे लुप्त इति । यद्यपि तदलुक्यपि छः प्राप्नोति तथापि 'तैकायनीयीय' इति प्राप्नोतीति भावः । भाष्ये—सर्वत्रेति । सौवीरगोत्रेभ्योऽसौवीरगोत्रेभ्यश्चेत्यर्थः । सिद्ध इति ।'इञश्चे'त्यण् तु न प्राप्नोति, यूनीञ उत्पन्नत्वेनाऽगोत्रार्थत्वादिति भावः । इत्याहेति । इत्यत आहेत्यर्थः । वक्ष्यमाणेनेति । तेन ह्यपत्याऽधिकारादन्यत्र लौकिकगोत्रग्रहणं ज्ञाप्यत इति भावः ।

---

१—'हलि च प्रतिषेधः' पा० ।

* अत इञ्; फाण्टाहृतिमिमताभ्यां णफिञौ यूनि लुक् ४ । १ । ९५; १५०; ९०; इञश्च ४ । २ । ११२ ।　† अत इञ्; वृद्धाट्ठक् सौवीरेषु बहुलम्; यूनि लुक् ४ । १ । ९५, १४८; ९०; इञश्च ४ । २ । ११२ ।　‡ तिकादिभ्यः फिञ्; फेश्छ च; यूनि लुक् ४ । १ । १५४; १४९; ९०; वृद्धाच्छः ४ । २ । ११४ ।

## इञण्यौ सर्वत्र ॥ ४ ॥

इञ्ण्यौ सर्वत्र प्रयोजनम् । औपगवेर्यूनश्छात्रा¹ औपगवीयाः+ । वृद्धवदतिदेशे× सति इञो गोत्र इत्यण्प्राप्नोति† ॥ नैष दोषः । प्रत्याख्यायतेऽसावतिदेशः । कथं पुनर्यानि प्रयोजनानि ? तानि ज्ञापकेन सिद्धानि ।

यत्खच्छान्तात्तर्हि इञः प्रयोजनम् । यत्—श्वशुरस्यापत्यं श्वशुर्यः । श्वशुर्यस्यापत्यं श्वाशुरिः । श्वाशुरेर्यूनश्छात्राः श्वाशुराः* । यत् ॥ ख—कुलस्यापत्यं कुलीनः । कुलीनस्यापत्यं कौलीनिः । कौलीनेर्यूनश्छात्राः कौलीनाः‡ । ख ॥ छ—स्वसुरपत्यं स्वस्रीयः । स्वस्रीयस्यापत्यं स्वास्रीयिः । स्वास्रीयेर्यूनश्छात्राः स्वास्रीयाः** ।

एतान्यपि हि न सन्ति प्रयोजनानि । अत्रापि यूनि श्वशुर्यः कुलीनः स्वस्रीय इत्येव भवितव्यम् । उक्तमेतदणिञोर्लुकि 'अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योप-

प्र०—औपगवेरिति । उपगोरपत्यमित्यण् । ततो यूनीञ् । तस्मिन्लुप्ते छः । किं पुनरिञो लुकः प्रयोजनं यदा तस्मिन्नलुप्तेऽपि सिद्धश्छो वृद्धलक्षण इत्याह—वृद्धवदिति । वृद्धशब्दः पूर्वाचार्यसंज्ञा गोत्रस्य । तत्र यूनो वृद्धवदतिदेशादिञो लुक्यसत्यण् स्यात् । कथं पुनर्यानीति । गार्ग्यायणानां समूह इत्यादौ गोत्रलक्षणो वुञिष्यते स न प्राप्नोति । ज्ञापकेनेति । 'राजन्याद्वुञ्मनुष्याच्चे'ति वक्ष्यमाणेन । तदेवमिञो लुका विनाप्यौपगवीया इति छस्य सिद्धत्वादनुदाहरणमेतत् । इदानीमिञ उदाहरणान्तरं दर्शयितुमाह—यत्खच्छान्तादिति । श्वाशुरिरिति । 'आपत्यस्य च तद्धितेऽनाती'ति यलोपः । उणादीनामव्युत्पन्नत्वा'न्न य्वाभ्या'मिति वृद्धिनिषेध ऐजागमश्च न प्रवर्तते । कुलीन इति । 'कुलात्खः' । स्वस्रीय इति । 'स्वसुश्छः' ।

एतान्यपीति । लक्षणान्तरेण युवप्रत्ययस्य लुकः सिद्धत्वादित्यर्थः । न चैतदिति ।

उ०—लुका विनापीति । 'इञश्चे'त्यस्य तु न तेन ज्ञापकेन प्राप्तिस्तत्र शास्त्रीयगोत्रस्यैव ग्रहणादिति वक्ष्यत इति भावः । ननु आश्चर्यके 'शौ' उपपदे उरनि श्वशुरस्य सिद्धेः 'न य्वाभ्या'मित्यैच्प्राप्नोतीत्यत आह—उणादीनामिति । क्षत्रियादेरिति । क्षत्रियादेरेवेत्यर्थः । 'अब्राह्मणगोत्रमात्रा'दित्यत्र 'मात्र'-

\+ प्राग्दीव्यतोऽण्; अत इञ्; यूनि लुक् ४ । १ । ८३; ९५; ९०; वृद्धाच्छ ४ । २ । ११४ ।

× प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः ४ । १ । ९० वा० ५   १—क्वचिन्न ।

† इञश्च ४ । २ । ११२

* राजश्वशुराद्यत्; अत इञ्; ( आपत्यस्य च तद्धितेऽनाति ६ । ४ । १५१ ); यूनि लुक्; प्राग्दीव्यतोऽण् ४ । १ । १३७; ९५; ९०; ८३

‡ कुलात् खः; अत इञ्; यूनि लुक्; प्राग्दीव्यतोऽण् ४ । १ । १३९; ९५; ९०; ८३

** स्वसुश्छः; अत इञ्; यूनि लुक्; प्राग्दीव्यतोऽण् ४ । १ । १४३; ९५; ९०; ८३

सङ्ख्यान'मिति† । 'अब्राह्मणगोत्रमात्रा'दित्युच्यते, न चैतदब्राह्मणगोत्रमात्रम् । 'अब्राह्मणगोत्रमात्रा'दिति नायं पर्युदासो यदन्यदब्राह्मणगोत्रमात्रादिति । किं तर्हि ? प्रसज्यंप्रतिषेधोऽयं ब्राह्मणगोत्रमात्रान्नेति । अवश्यं चैतदेवं विज्ञेयं मायूरिः कापोतिः कापिञ्जलिरित्येवमर्थम्‡ ।

एवं तर्ह्यण्ण्यौ सर्वत्र प्रयोजनम् । अण्—ग्लुचुकायनेरपत्यं माणवको ग्लौचुकायनः । ग्लौचुकायनस्य यूनश्छात्रा ग्लौचुकायनाः+ । ण्यश्च कापिञ्जलाद्यर्थम् । कापिञ्जलादेरपत्यं माणवकः कापिञ्जलाद्यः । कापिञ्जलाद्यस्य यूनश्छात्राः कापिञ्जलादाः* ।

## प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदातिदेशः ॥ ५ ॥

प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः कर्तव्यः । 'युवा वृद्धवद्भवती'ति वक्तव्यम् । किं प्रयोजनम् ? गार्ग्यायणानां समूहो गार्ग्यायणकम् । गार्ग्यायणानां

---

प्र०—अब्राह्मणशब्देन ब्राह्मणसदृशक्षत्रियादिग्रहणात् श्वशुरादिशब्दैश्च क्षत्रियादेरनभिधानादित्यर्थः। प्रसज्य प्रतिषेध इति । युवप्रत्ययमात्रस्य लुकं विधाय ब्राह्मणगोत्रात्परस्य स निषिध्यत इत्यर्थः । मायूरिरिति । मयूरस्य पक्षिविशेषस्य गोत्र इञ् । तदन्ताद्यूनि'यञिञोश्चे'ति फक् । तस्य लुक् । ग्लुचुकायनेरिति । ग्लुचुकस्यापत्यं गोत्रमिति 'प्राचामवृद्धात्फिन्बहुल'मिति फिंन् । ततो यून्यण् । तस्य लुक्यणेव भवति । अन्यथा वृद्धत्वाच्छः स्यात् । कापिञ्जलादेरिति । कपिञ्जलादस्यापत्यमत इञ् । ततो यूनि 'कुर्वादिभ्यो ण्य' इति ण्यः । तस्य लुकीञश्चेत्यण् भवति । अन्यथा छः स्यात् ।

प्राग्दीव्यत इति । प्राग्दीव्यतो येऽर्थास्तेषु विवक्षितेष्वित्यर्थः । वृद्धवदिति । गोत्रवदित्यर्थः । अन्यथा गोत्रसंज्ञाया युवसंज्ञया बाधितत्वाद्गोत्राश्रयकार्य्याऽप्रसङ्गः । गार्ग्यायणानामिति । गर्गस्यापत्यं गोत्रं, 'गर्गादिभ्यो यञ्' । तदन्ताद्यूनि 'यञिञोश्चे'ति फक् । तदन्तात्समूहे 'गोत्रोक्षोष्ट्रोरभ्रे'ति वुञ् । इदमर्थे 'गोत्रचरणाद्वुञ्'ति वुञ् । 'सास्य भक्ति'रित्यत्रार्थे 'गोत्र-

---

उ०—पदमवधारणार्थकमिति भावः । ब्राह्मणगोत्रमात्रादन्यदिति—भाष्ये अन्यच्छब्देन क्षत्रियादिगोत्रमात्रग्रहणं बोध्यम् । ब्राह्मणगोत्रमात्रे निषेधे तु क्षत्रियादिमात्रगोत्रे साधारणे च विधिरिति बोध्यम् । बाधितत्वादिति । 'जीवति तु' इति 'तु'ग्रहणादवधारणार्थादिति भावः । नन्वत्रातिदेशेऽपि स्वाश्रययुवत्वमादायौपगवेरिञो

---

† २ । ४ । ५८ वा० १ अपरस्य वचनम् । १—'प्रसज्यायं प्रतिषेधो' पा० ।

‡ अत इञ्; (यञिञोश्च) ४ । १ । ९५; (१०१)

+ प्राचामवृद्धात् फिन् बहुलम्; प्राग्दीव्यतोऽण्; यूनि लुक्; प्राग्दीव्यतोऽण ४ । १ । १६०; ८३; ९०; ८३ २—'तस्य यूनश्छात्राः' कीलहार्नपाठः ।

* अत इञ्; कुर्वादिभ्यो ण्यः; यूनि लुक् ४ । १ । ९५; १५१; ९०; इञश्च ४ । २ । ११२

किञ्चिद्गार्ग्यायणकम् । गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः । गोत्राश्रय वुञ् यथा स्यात्× ।

यदि वृद्धवदतिदेशः क्रियते, औपगवेर्यूनश्छात्रा औपगवीया इतीञो गोत्र इत्यण् प्राप्नोति* ।

यदि पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिरतिदिश्येत । कथं पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिः शक्याऽतिदेष्टुम् ? वतिनिर्देशोऽयम्, कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा,—'उशीनरवन्मद्रेषु यवाः' । 'सन्ति' 'न सन्ती'ति । मातृवदस्याः कलाः । 'सन्ति' 'न सन्ती'ति । एवमिहापि युवा वृद्धवद्'भवति' वृद्धव'न्न भवती'त्येवं वाक्यशेषं समर्थयिष्यामहे । यथा गोत्रे युवप्रत्ययो न भवत्येवं प्राग्दीव्यतोऽधिकारे यून्यपि न भवतीति ।

तद्वक्तव्यम् । यद्यप्येतदुच्यते, अथवैतर्हि 'यूनि लु'गित्येतन्न क्रियते । कथं तर्हि 'फक्फिञोरन्यतरस्याम्' [ ४ । १ । ९१ ] इति ? 'फक्फिञ्वर्ती युवा वा वृद्धवद्भ-

प्र०—क्षत्रियाख्येभ्यो बहुलं वुञ्' इति वुञ् । औपगवेरिति । सत्यतिदेशे 'यूनि लु'गित्यस्य प्रत्याख्यानादिञो लुगभावाद्वृद्धवदतिदेशादिञश्चेत्यण्प्रसङ्गः ॥ एतद्दोषपरिहारायाह–यदि पुनरिति । यथा गोत्रे युवप्रत्ययो नोत्पद्यते तथा यून्यपि प्राग्दीव्यतीयार्थविवक्षायां युवप्रत्ययस्यानुत्पादादिञभावादिञश्चेत्यण्न भविष्यतीत्यर्थः । अतिदिश्येतेति । 'अतोऽयं दोषो न स्या'दिति वाक्यशेषः । एवं वाक्यशेषमिति । उभयसंभवे 'न भवती'त्यध्याहरिष्यत इत्यर्थः । एवमित्यनेनाऽनन्तरं प्रक्रान्तो 'न भवती'ति वाक्यशेषः परामृश्यते । तद्वक्तव्यमिति । ततश्च गौरवं स्यादिति भावः ।

अथवैतर्हीति । एवं सतीत्यर्थः । एतेन गौरवं परिहृतम् । कथमिति । 'यूनि लु'गित्यस्मिन्नकृते 'फक्फिञोरन्यतरस्या'मित्येतदपि न कर्तव्यं, विधेयकार्यानिर्देशात् । ततश्च गार्ग्यायणस्य च्छात्रा गार्गीयाः, गार्ग्यायणीया इति रूपद्वयं न सिध्यतीति भावः । फक्फिञ्वर्तीति । वर्तनं वर्तः, फक्फिञोर्वर्तः फक्फिञ्वर्तः, स विद्यते यस्मिन् यूनि स वा वृद्धवत् । ततः पक्षे फक्फिञोरुत्पत्तिः, पक्षेऽनुत्पत्तिरिति द्वैरूप्यसिद्धिः ।

उ०—लुकि 'इञश्चे'त्यत्र शकन्ध्वादिपररूपेणोकारप्रश्लेषादिकारेणेञो विशेषणादणोऽप्राप्तेराह सत्यतिदेश इति । प्रत्याख्यानादिति । इदञ्चिन्त्यं, कार्याऽतिदेशे तत्प्रत्याख्यानाऽसम्भवः, कापिञ्जलादासिद्धेः । अर्थातिदेशाऽनुत्पत्त्यतिदेशयोर्वक्ष्यमाणत्वेनेदानीं तदभावात् । तस्माल्लुक्यपि प्रत्ययलक्षणेनेञन्तत्वादण्प्रसङ्ग इति भाष्याशयः । इकारप्रश्लेषे तु न मानमिति तत्त्वम् । उभयथाऽतिदेशस्यानिष्टत्वादाह—उभयसम्भव इति । ननु स्वसाध्यफलसिद्धये 'फक्फिञो'रित्येतत्सूत्रमावश्यकमत आह—यूनि लुगिति । वर्तः—प्रवृत्तिः ।

× गर्गादिभ्यो यञ्; यञिञोश्च; ४ । १ । १०५; १०१; गोत्रोक्षोष्ट्र० ४ । २ । ३९;; गोत्रचरणाद्वुञ्; गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ४ । ३ । १२६; ९९

* इञश्च ४ । २ । ११२

वती'ति वक्ष्यामि । यदा तर्हि न वृद्धवत्तदा गार्ग्यायणानां समूहो गार्ग्यायणकम्, गार्ग्यायणानां किञ्चिद्गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः—गोत्राश्रयो वुञ् न प्राप्नोति ।

यदि पुनर्युवा वृद्धवदित्यनेनाऽर्थोऽतिदिश्येत—प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदर्थो भवतीति । तद्वक्तव्यम् । यद्यप्येतदुच्यते, अथवैतर्हि यूनि लुगित्येतन्न करिष्यते । कथं 'फक्फिञोरन्यतरस्या'मिति ? 'फक्फिञ्वतीं युवार्थो वा वृद्धवद्भवती'ति वक्ष्यामि । यदा तर्हि न वृद्धवत्तदा गार्ग्यायणानां समूहो गार्ग्यायणकम्, गार्ग्यायणानां किञ्चिद्गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः—गोत्राश्रयो वुञ् न प्राप्नोति ।

एवं तर्हि—

**राजन्याद्वुञ्मनुष्याच्च ज्ञापकं लौकिकं परम् ।**

यदयं वुञ्विधौ† राजन्यमनुष्ययोर्ग्रहणं ‡ करोति तज्ज्ञापयत्याचार्यो 'लौकिकं

प्र०—यदा तर्हीति । गार्ग्यायणानां समूह इति विवक्षायां यदा वृद्धवदतिदेशात्फकोऽनुत्पत्तिस्तदा 'गार्ग्यक'मिति सिध्यति । यस्मिंस्तु पक्षे वृद्धवदतिदेशाभावात्फक्श्रवणं तत्र गोत्रलक्षणो वुञ्न प्राप्नोति ॥ इदानीमर्थातिदेशदर्शनायाह—यदि पुनरिति । यूनि लुगित्येतदिति । यूनो गोत्रत्वातिदेशाद्युवप्रत्ययस्याभावाल्लुग्न विधेय इत्यर्थः । यदयमिति । प्राग्गोत्रसंज्ञाया 'गोत्रे कुञ्जादिभ्य' इत्यतो गोत्रग्रहणानुवर्तनाच्छास्त्रीयगोत्राभिधायिनौ राजन्यमनुष्यशब्दौ, ततश्च

उ०—भाष्ये—यदा तर्हीति । यदैवाऽतिदेशस्तदैव फकोऽनुत्पत्तिरिति भावः । गोत्रत्वाऽतिशादिति । तत्वाऽतिदेशे च 'गोत्र एक एवे'ति नियमेन युवप्रत्ययाऽनुत्पत्तेर्लुक् न विधेयः, अतिदिश्यमानधर्मविरुद्धस्वाश्रयाऽभावश्चाऽतिदेशस्वभावसिद्ध इति भावः ।

ननु 'राजश्वशुराद्यत्,'मनोर्जातावञ्यतौ' इत्याभ्यामनन्तराऽपत्येऽपि प्रत्ययेन तस्य गोत्रत्वाऽभावात्तत्र वुञोऽप्राप्तौ तत्प्रापकत्वेन तस्य चारितार्थ्यात्कथं ज्ञापकत्वमत आह—प्राग्गोत्रेति । न चाऽत्र पक्षेऽनन्तराऽपत्ये 'गाङ्गेयः' 'श्वशुर्य' इत्यसिद्धिः, द्रौणायनिवदुपचारेण सिद्धेः । न च 'गार्गी'प्रभृतिभ्यो यूनि ढग् न स्यात्, गोत्रत्वारोपे 'एको गोत्रे' इति नियमात्, तदनारोपे तु गोत्रत्वाऽभावादिति वाच्यम्, "उदीचां वृद्धा'दिति सूत्रे 'अगोत्रा'दित्युक्तिसामर्थ्येन गोत्रप्रत्ययान्तप्रकृतिभ्योऽप्येषां विशिष्य विधानसामर्थ्यात् 'यञिञोश्चे'त्यादिवद्यून्युत्पत्तिसिद्धेः । शास्त्रीयेति । यद्यपि लोके राजन्यमनुष्यशब्दौ नाऽपत्यार्थकत्वेन प्रसिद्धौ, किन्तु जातिबोधकत्वेनैव प्रसिद्धौ, तथापि गोत्राधिकारात्पौत्रप्रभृत्यपत्ये प्रत्ययविधानाच्छास्त्रीयवासनया

† गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ४ । २ । ३९

‡ राजश्वशुराद्यत्, मनोर्जातावञ्यतौ षुक् च ४ । १ । १३७, १६१

परं गोत्रग्रहण'मिति । युवा च लोके 'गोत्र'मित्युपचर्यते । किंगोत्रोऽसि माणवक ? गार्ग्यायणः । किंगोत्रोऽसि माणवक ? वात्स्यायनः ।

यद्येतज्ज्ञाप्यते, औपगवेर्यूनश्छात्रा औपगवीयाः, गोत्राश्रय 'इञो गोत्र' इत्यण् प्राप्नोति । सामूहिकेषु ज्ञापकम् । यदि सामूहिकेषु ज्ञापकम्, गर्ग्यायणानां किञ्चिद्गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः, गोत्राश्रयो वुञ् न प्राप्नोति । [ एवं तर्हि— ] वुञ्विधौ ज्ञापकम् । यदि वुञ्विधौ ज्ञापकम्, शालङ्केर्यूनश्छात्राः

प्र०—गोत्रग्रहणेनैव ताभ्यां वुञः सिद्धत्वात्किं तयोर्ग्रहणेन । गृहीतौ तु ज्ञापयतो 'गोत्रग्रहणं लौकिकगोत्रपर'मिति । राजन्यमनुष्यशब्दौ च लौकिके प्रयोगे जातिविशेषवाचित्वाल्लौकिकगोत्राभिधायिनौ न भवत इति कर्तव्यं तयोर्ग्रहणम् । लौकिकं च गोत्रमपत्यमात्रम् । परमिति । अपत्याधिकारादुत्तरमित्यर्थः । उपचर्यत इति । व्यवह्रियत इत्यर्थः ।। शालङ्केरिति । शलङ्कोरपत्यमिति बाह्वादेराकृतिगणत्वादिञ् । पैलादिषु शालङ्किशब्दपाठान्निपातनाच्छलङ्क्वादेशः । अत एव च निपातनाद्गोत्रेऽपि नडादिफका इञ् न बाध्यते । ततो यूनि फक् । तस्य पैलादित्वाल्लुकि कृते

उ०—तदभिधायिनावित्यर्थः । शास्त्रप्रक्रियायाञ्च शास्त्रकल्पित आरोपितोऽप्यर्थो निमित्तम् । अत एव मनुषीशब्दात् कुत्सितमपत्यमित्यर्थे 'मानुषो जाल्म' इति भवत्येव । राजन्यशब्दाच्च 'उदीचां वृद्धा'दिति फिञ् न, 'राजश्वशुरात्' 'मनोर्जातौ' इत्यनयोर्गोत्राऽधिकारे पाठात्तयोरपि शास्त्रीयगोत्रत्वात् । एवञ्च शास्त्रीयगोत्रग्रहणे तद्वैयर्थ्यं स्पष्टमेव । 'शिवादिभ्यः' इत्यत्रैव 'गोत्र इति निवृत्त'मिति वृत्त्यादिग्रन्थास्तु चिन्त्या एव, उक्तप्रयोगाऽसिद्ध्यापत्तेः । लौकिकमित्यस्य च—लोकेऽपत्यत्वेन बोधजनकमपत्याधिकारविहितप्रत्ययान्तमित्यर्थः । अत एव राजन्यमनुष्याभ्यां शैषिको 'गोत्रचरणा'दिति वुञ् न लौकिकगोत्रत्वाऽभावात् । न चैतत्तथेत्याह—राजन्येत्यादि । लोके अपत्यत्वप्रकारकप्रतीतिजनकत्वरूपस्य तस्याऽभावः, जातिप्रकारेण बोधजननादित्यर्थः । गार्ग्यादिभ्योऽप्यपत्यत्वेन गोत्रस्य पौत्रप्रभृतेर्बोध इति बोध्यम् । इदञ्च यत्र शास्त्रीयग्रहणे गमकाऽभावस्तद्विषयम् । यत्र तु गमकं तत्र तस्यैव । यथा 'गोत्रेऽलु'गिति सूत्रे उत्तरसूत्रस्थयुवसाहचर्याच्छास्त्रीयस्यैव ग्रहणम् । अतः एव 'वाऽन्यस्मिन्' इति सूत्रभाष्ये गोत्रयुवसंज्ञयोः समावेशे एतद्विषये फलं दत्तम् ।

भाष्ये—युवा च लोके इति । अनन्तरापत्यस्याऽप्युपलक्षणमिदम् । उत्तरमिति । अन्यत्रेत्यर्थ इति केचित् । इदमेव युक्तम्, अत एव 'यञञोश्चे'त्यत्र लौकिकगोत्रग्रहणं भाष्य उक्तम् ।

अत्र वदन्ति—एतत्सूत्रस्थभाष्यस्वारस्येन, 'अणिञोः' 'गोत्राऽवयवा'दिति सूत्रस्थभाष्येण च ऋष्यपत्यमात्रं गोत्रं लौकिकमिति लभ्यते । जातिलक्षणे चैत्रमेव । 'अनुपसर्जना'दिति सूत्रे कुन्ती—अवन्तीगान्धारीषु तत्त्वारोपेण 'इतो मनुष्यजाते'रित्यस्योदाहरणत्वोक्तिः, 'गोत्रोक्ष' इति सूत्रे च । खण्डिकादिसूत्रे क्षुद्रकमालवशब्दे 'जनपदशब्दात्क्षत्रिया'दित्यधिकारस्थप्रत्ययान्ते 'गोत्रोक्ष' इति सूत्रेण वुञो भाष्ये करणं तु तद्वदारोपेणैव । अपत्याधिकारे तु युवत्वाऽनाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । तदर्थकत्वं चारोपितं वास्तवं वेत्यन्यदिति ।

अत एव चेति । अन्यथा नडादिषु 'शलङ्कु शलङ्कं चे'ति पाठाद्गोत्रे फगेव स्यात् । निपातनात्त्विञपि

१—क्वाचित्कः पाठः ।

पुँल्लिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च, तेन पुँल्लिङ्गादेवोत्पत्तिः स्यादेवचनान्ताच्च, स्त्रीनपुंसकलिङ्गाद् द्विवचनबहुवचनान्तच्चेदं न स्यात् ।

**तद्धितार्थनिर्देशे लिङ्गवचनमप्रामण्यं तस्याऽविवक्षितत्वात् ॥ १ ॥**

तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणम् । किं कारणम् ? तस्याऽविवक्षितत्वात् । नात्र निर्देशस्तन्त्रम् । कथं पुनस्तेनैव च नाम निर्देशः क्रियते, तच्चातन्त्रं स्यात् । तत्कारी च भवांस्तद्द्वेषी च । नान्तरीयकत्वादत्र पुँल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च । अवश्यं कयाचिद्विभक्त्या केनचिद् वचनेन निर्देशः कर्तव्यः । तद्यथा,—कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान्सशकलान् सकण्टकानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वात्पुँल्लिङ्गेन निर्देशः क्रियत एकवचनान्तेन च । न ह्यत्र निर्देशस्तन्त्रम् ।

प्र०—पृथक्सूत्रे हि अपत्यार्थस्य शेषत्वाभाव चच्छस्याभावः । इतरोऽज्ञाताभिप्राय आह—किमिदमिति । अध्यारुह्येति । तत्रैव तात्पर्यं कृतमित्यर्थः । सिद्धान्तवादी स्वाभिप्रायं दर्शयितुमाह—एवं तर्हीति । पुंल्लिङ्गेनेति । यद्यपि नपुंसकेऽपि 'तस्ये'तिरूपं, तथापि पुंनपुंसकयोर्युगपन्निर्देशस्य कर्तुमशक्यत्वात्कामचारादेवमुक्तम् । स्त्रीनपुंसकलिङ्गादिति । सुमातुरपत्यं सौमात्रः । क्षत्रस्यापत्यं क्षात्रिरित्यादावित्यर्थः । तद्धितार्थनिर्देश इति । तद्धितप्रकरणादेवमुक्तम् । सर्वत्रैव हि शास्त्रेऽस्मिन्नान्तरीयकत्वादुपात्तं लिङ्गसङ्ख्यं न विवक्ष्यते । क्वचित्संख्या तु विवक्ष्यते, यथा सुप्सुपेति । अप्रमाणमिति । तद्बलात् कार्यस्य विधिनिषेधौ न भवत इत्यर्थः । भावसूत्रे विस्तरेण भाष्यमेतद्व्याख्यानमिति तत एवावधार्यम् ।

उ०—रूपस्याऽध्यारोहणस्य कथं शब्दविषयत्वमत आह—तत्रैवेति । कामचारादिति । एवं क्लीबनिर्देशे स्त्रीपुंसयोर्न स्यादिति बोध्यम् । यद्यपि 'नपुंसकमनपुंसकेने'त्येकशेषेणाप्येतत्सिध्यति, तथापि वास्तवमेव समाधिं वक्तुं तन्नादृतम् । क्षत्रस्येति । एतेन 'नपुंसकस्याऽर्थस्यापत्येन योगाऽसम्भव' इत्यपास्तम् ।

तद्धितार्थेतिभाष्ये । तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्यय इति सूत्रार्थादेवमुक्तम् । यद्वा तद्धितप्रयोजनकनिर्देशे इत्यर्थः । सर्वत्रैवेति । 'भावे' इत्यादावपि । क्वचित्सङ्ख्येति । लिङ्गं तु सर्वत्राऽविवक्षितमेव, सङ्ख्या तु लक्ष्यानुसारात्क्वचिद्विवक्ष्यते क्वचिन्नेत्यर्थः । विधेयविषये सङ्ख्याविवक्षोदाहर्तुमुचिता । तद्बलादिति ।

१—तृतीयभागस्य ३२३ पृष्ठे टिप्पणी द्रष्टव्या । उदाहरणमिदं भाष्ये १ । २ । ३६ ( भा० २ पृ० ५७-५८ ); ३ । ३ । १८ ( भा० ३ पृ० ३२२-३२३ ); ३ । ४ । २१ वा० २ ( भा० ३ पृ० ३७७-३७८ इत्येतेषु स्थलेष्वपि वर्तते ।

**सर्वनामनिर्देशे विशेषाऽसंप्रत्ययः सामान्यनिर्देशात् ॥ २ ॥**

सर्वनामनिर्देशे विशेषस्याऽसम्प्रत्ययः । किं कारणम् ? सामान्यनिर्देशात् । सर्वनाम्नाऽयं निर्देशः क्रियते, सर्वनाम च सामान्यवाचि । तेन सामान्यवाचिन एवोत्पत्तिः स्याद्विशेषवाचिनो न स्यात् ।

**सामान्यचोदनास्तु विशेषेषु ॥ ३ ॥**

सामान्यचोदनास्तु विशेषेष्ववतिष्ठन्ते । तद्यथा,—'गौरनूबन्ध्योऽजोऽग्नीषोमीय' इत्याकृतौ चोदितायां द्रव्य आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते ।

विषम उपन्यासः । अस्ति कारणं येनैतदेवं भवति । किं कारणम् ? असम्भवात् । आकृतावारम्भणादीनां सम्भवो नास्तीति कृत्वाऽऽकृतिसहचरिते द्रव्य आरम्भणा [ लम्भनविशसना ] दीनि क्रियन्ते । इदमप्येवञ्जातीयकमेव । असम्भवात्सामान्यवाचिन उत्पत्तौ विशेषवाचिन उत्पत्तिर्भविष्यति ।

**अपत्याऽभिधाने स्त्रीपुँल्लिङ्गस्याऽप्रसिद्धिर्नपुंसकलिङ्गत्वात्[2] ॥ ४ ॥**

अपत्याऽभिधाने स्त्रीपुँल्लिङ्गस्याऽप्रसिद्धिः । किं कारणम् ? नपुंसकलिङ्गत्वात् ।

प्र०—सामान्यनिर्देशादिति । 'तस्ये'ति निर्देशात्तच्छब्दादेव सामान्यवाचिनः प्रत्ययः स्यान्नोपग्वादिभ्य इत्यर्थः । सामान्यचोदना इति । विशेषाणामेव कार्यसिद्ध्यर्थं सामान्यमुपादीयते न तु स्वार्थमित्यर्थः । इदमपीति । 'अपत्य'मित्यनेनैव सम्बन्धिशब्दत्वादपत्यवन्मात्रस्याक्षेपात्सामान्येनापत्यस्य विशेषणविशेष्यभावाऽयोगादिहापि सामान्येन विशेषा एव गृह्यन्ते । यदा तु प्रकरणवशाद्विशेषे सर्वनाम वर्त्तते तदा तस्मादपि प्रत्ययो भवति—तादायनिरिति । नपुंसकलिङ्गस्येति । औपगवमित्येनेनैवाऽपत्यस्याभिधानं स्यात् । औपगव औपगवीत्येवं न स्यादित्यर्थः ।

उ०—'अप्रमाण'मित्यस्य विधिनिषेधे प्रमाजनकमित्यर्थं इति भावः । 'सामान्यवाचिनस्तच्छब्दादेवे'त्यन्वयः । उपस्थितत्वादिति भावः । सामान्यवाचित्वञ्च परोक्षत्वेन सकलपरोक्षव्यक्तिबोधकत्वम् । विशेषाणामेवेति । यथा 'तस्मिन्निति निर्दिष्टे''तस्मादित्युत्तरस्ये'त्यादौ । ननु 'गौरनुबन्ध्य' इत्यादावाकृतावसम्भवाद्द्रव्योपलक्षणत्वेऽपीहोपलक्षणत्वे प्रमाणाऽभावोऽत आह—अपत्यमित्यनेनेति । विशेषणविशेष्यभावाऽयोगादिति । फलाभावाच्चेत्यपि बोध्यम् । नन्वेवं सामान्यवाचिनः प्रत्ययो न स्यादेवेत्यत आह—यदा त्विति । यदा तच्छब्दः परोक्षत्वेन व्यक्तिविशेषं वक्तृबुद्धिस्थं प्रकरणाद्बोधयति तदेत्यर्थः । तादायनौ 'त्यदादीनी'ति वृद्धत्वा'दुदीचां वृद्धा'दिति फिञ् । एवमेव-स्त्रैणाः पौंस्ना इत्यत्राऽपत्ये प्रत्ययो बोध्यः । उत्पत्तिस्तत्रेति—भाष्ये । तत्र यथा पुँल्लिङ्गादेवोत्पत्तिश्चोदिता, तथा प्रकृते नपुंसके वाच्ये एवोत्पत्तिः स्यादिति न चोद्यते, किन्तु नपुंसकत्ववैशिष्ट्येनैव सर्वोऽपत्याभिधानं स्यान्न तु पुंस्त्वादिवैशिष्ट्येनाऽपीति चोद्यत इत्यर्थः ।

१—क्वचिन्न । २—'नपुंसकत्वात्' पा० ।

अपत्यं नपुंसकलिङ्गम्, तेन नपुंसकलिङ्गस्यैवाऽभिधानं स्यात्, स्त्रीपुँल्लिङ्गस्य न स्यात् ॥ ननु चेदं पुरस्तादेव चोदितं परिहृतं च। उत्पत्तिस्तत्र चोद्यते, इह पुनरुत्पन्नेनाभिधानं चोद्यते ।

**सिद्धं तु प्रजनस्य विवक्षितत्वात् ॥ ५ ॥**

सिद्धमेतत् । कथम् ? प्रजनस्य विवक्षितत्वात् । प्रजनोऽत्र विवक्षितः । स च सर्वलिङ्गः ॥ किं पुनः कारणं समानायां प्रवृत्तावपत्यं नपुंसकलिङ्गं प्रजनः सर्वलिङ्गः ?

**एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम् ॥ ६ ॥**

एकार्थे शब्दान्यत्वाल्लिङ्गान्यत्वं दृश्यते । तद्यथा,—पुष्यः तारका नक्षत्रम् । गेहम् कुटी मठ इति ।

**अवयवान्यत्वाच्च ॥ ७ ॥**

अवयवान्यत्वाच्च लिङ्गाऽन्यत्वं दृश्यते । तद्यथा,—कुटी कुटीरः । शमी शमीरः । शुण्डा शुण्डारः । अवयवान्यत्वात्किल लिङ्गान्यत्वं स्यात्, किं पुनर्यत्र शब्दान्यत्वमपि ॥ ६२ ॥

प्र०—प्रजन इति । प्रसवमात्रं विवक्षितं, न तु लिङ्गसंख्ये अपीत्यर्थः । स चेति । सन्ततिरपत्यं प्रसव इति सर्वलिङ्गस्य शब्दैरभिधीयमानस्य दर्शनादित्यर्थः । समानायामिति । एकस्मिन्नर्थ इत्यर्थः । अपत्यमिति । अपत्यशब्दप्रत्याय्यमानमित्यर्थः । प्रजन इति । सर्वलिङ्गैः शब्दैः प्रत्याय्यमानत्वात्सर्वलिङ्ग इत्युच्यते ।

एकार्थ इति । एकैकोऽर्थः सर्वलिङ्गः, स च केनचिच्छब्देन प्रत्याय्यमानः केनचिदेव लिङ्गेन युक्तः प्रतीयते । अवयवान्यत्वादिति । स्वार्थिकस्यापि प्रत्ययस्योत्पत्तौ भिन्नावयवत्वाद्भिन्नशब्दप्रत्याय्यमानत्वादेकस्यैवार्थस्य लिङ्गभेदोऽवगम्यते किं पुनरत्यन्तभिन्नशब्दप्रत्याय्यमानस्य लिङ्गभेदावगतिर्न स्यादित्यर्थः ॥ ६२ ॥

उ०—'अपत्यं नपुंसक'मित्ययुक्तं, तस्यैव शब्दान्तरेणाऽभिधाने लिङ्गान्तरयोगादत आह—अपत्यशब्देति । प्रजनशब्दप्रत्याय्यस्य पुँल्लिङ्गत्वात्प्रजनः सर्वलिङ्ग इत्ययुक्तमत आह—सर्वलिङ्गैरिति । प्रजन इत्यर्थः एव विवक्षितः, सूत्रे तच्छब्दाभावादिति भावः ।

नन्वेकस्याऽर्थस्य तत्तच्छब्दप्रतिपाद्यस्यैकमेव लिङ्गं लोके दृष्टम्प्राय इति कथं सर्वलिङ्गत्वमत आह भाष्ये—एकार्थ इति । एकस्मिन्नर्थेऽपीत्यर्थः । तद्व्याचष्टे—एकैक इति । 'स्त्रियाम्' इति सूत्रे निरूपितमेतत ॥ कैमुतिकन्यायप्रदर्शनाय भाष्ये—अवयवाऽन्यत्वाच्चेति । तद्व्याचष्टे—स्वार्थिकस्येति । भिन्नाऽवयवत्वेऽपि भिन्नशब्दत्वमेवेति किम्पुनर्यत्रेति न युक्तमत आह—अत्यन्तेति । यत्किञ्चिदवयवानामपि साम्याऽभावे इत्यर्थः ॥ ६२ ॥

१—अपत्यशब्दस्यायमेवार्थो निरुक्ते (१।३।१) द्रष्टव्यः—"अपत्यं कस्मात् ? अपततं भवति, नानेन पततीति वा ।"    २—'एकार्थत्वेऽपि' पा० ।

# एको गोत्रे ॥ ४ । १ । ९२ ॥

किमर्थमिदमुच्यते ?

**उत्पादयितारं प्रत्यपत्ययोगात्तस्य च[1] विवक्षितत्वादेकवचनं गोत्रे ॥१॥**

उत्पादयितोत्पादयिताऽपत्येन युज्यते । 'तस्य च विवक्षितत्वात्' । उत्पादयितुः स चाऽभिसम्बन्धो विवक्षितः । उत्पादयितारं प्रत्यपत्ययोगात्तस्य चाभिसम्बन्धस्य विवक्षितत्वादुत्पादयितुरुत्पादयितुरपत्याभिधानेऽनेकः प्रत्ययः प्राप्नोति । इष्यते चैक एव

प्र०—एको गोत्रे । एकशब्दोऽयमन्यप्रधानासहायसङ्ख्याप्रथमसमानवाची, इह तु सङ्ख्यावाची प्रथमवाची वा गृह्यते इत्येव निर्णयोऽर्थान्तरासंभवात् । किमर्थमिति । क्रियमाणेऽपि सूत्रद्वये सर्वमिष्टं न सिध्यतीति प्रश्नः । इह पौत्रप्रभृतावपत्ये विवक्षिते मूलप्रकृतेरेव गर्गादेः प्रत्यय इष्यते. न त्वनन्तरापत्यवाचिनो गार्गिप्रभृतेर्नापि गोत्रप्रत्ययान्ताद्गार्ग्यप्रभृतेः । यूनि तु गोत्रप्रत्ययान्तादेवेष्यते न तु मूलप्रकृत्यनन्तरयुवभ्यः । स्त्रियां तु युवकार्यं नेष्यते, अपि तु गोत्रकार्यमेव । एतत्सर्वमेतस्मात्सूत्रद्वयाद्यथा न सिध्यति तथा क्रमेण वक्ष्यते वार्तिककारः ॥ प्रयोजनं तावदाद्यस्य सूत्रस्य कथयितुमाह—उत्पादयितारमिति । प्रतिशब्दो लक्षणे वाक्यकारेण प्रयुक्तः, उत्पादयितृसामान्यविवक्षया च द्विर्वचनं नाऽकारि । भाष्यकारेण तु भेदविवक्षया वीप्सामाश्रित्य द्विर्वचनं कृतम् । अपत्ययोगादिति । अपत्यस्य योग इति कर्तृषष्ठीसमासः । उत्पादयिता चाऽत्र कर्मत्वेन न विवक्षितः किं तर्हि प्रतिशब्दयोगविवक्षायां 'कर्मप्रवचनीययुक्ते द्वितीये'ति द्वितीयया निर्दिष्टः । अन्यथो'पपदविभक्तेः कारकविभक्तिर्बलीयसी'ति कर्मणि कृद्योगलक्षणा षष्ठी स्यात् । तस्य चेति । सन्नप्यर्थो यदा लोके न विवक्ष्यते तदा नासौ शब्दसंस्कारनिमित्तं भवति । अपत्येन योगस्तु लोके उत्पादयितुरेव विवक्षित इति तन्निमित्ताऽनेकप्रत्ययप्रसङ्ग इत्यर्थः ।

उ०—एको गोत्रे । एकशब्दोऽयमिति । 'एके मन्यन्ते' 'एकः पार्थो धनुष्मताम्' 'आद्यन्तवदेकस्मिन्' 'द्व्येकयोः', 'एकेऽल्पप्राणाः' 'तैनैकदिक्' इति क्रमेणोदाहरणानि । असम्भवादिति । इष्टाऽनुगुणाऽसम्भवादित्यर्थः । सूत्रद्वये—'गोत्राद्यूनि' [ इति ] 'एको गोत्र' इति च । प्रयोजनं तावदिति । 'प्रयोजनज्ञानोत्तरं दोषोक्तेरवसर' इति प्रथमं तत्प्रतिपादयतीत्यर्थः । ननु भाष्ये 'उत्पादयितोत्पादयिते'त्युक्तेर्वीप्सायां प्रतिशब्द इत्यवगमात् द्विर्वचनं दुर्वारमत आह—प्रतिशब्द इति । उत्पादयितारं लक्ष्यीकृत्याऽपत्ययोगव्यवहारादित्यर्थः । भाष्यकारेण त्विति । 'वार्त्तिकं सामान्यविवक्षये'ति दर्शयितुमेव तथोक्तमिति भावः । कर्मत्वेन नेति । किन्तु शेषत्वेनेत्यर्थः । तथा सति 'उभयप्राप्तौ' इति नियमात्कर्त्तरि षष्ठी न स्यादिति भावः । प्रतिशब्दयोगविवक्षायामिति । प्रतिशब्दद्योत्यलक्ष्यलक्षणभावसम्बन्धविवक्षायामित्यर्थः । अन्यथा—कर्मत्वेन विवक्षायाम् । ननु तस्य च विवक्षितत्वा'दिति हेतुकथनमयुक्तं, सतो विवक्षाया एव युक्तत्वादत

[1]—'तस्य चाभिसम्बन्धस्य विवक्षितत्वात्' पा० ।

'गोत्राद्यून्यस्त्रिया'मिति ।

अथापि गोत्रग्रहणं क्रियते । एवमपि न दोषः । नैकग्रहणेन प्रत्ययोऽभिसम्बध्यते—'एको गोत्रे प्रत्ययो भवती'ति । किं तर्हि ? प्रकृतिरभिसम्बध्यते—'एका प्रकृतिर्गोत्रे प्रत्ययमुत्पादयती'ति । यदि चेदानीं प्रत्ययान्तादपि प्रत्ययः स्यान्नैका प्रकृतिर्गोत्रे प्रत्ययमुत्पादयेत् ।

अथवाऽस्थानेऽयं यत्नः क्रियते, न हीदं लोकाद्भिद्यते । लोके हि सङ्ख्यां

प्र०—वृद्धा'दिति फिञ् ।। एका प्रकृतिरिति । एकशब्दः सङ्ख्यावाचीति केचिदाहुः । प्रथमाऽतिक्रमे च कारणाभावात्परमप्रकृतिरेवैकशब्देन गृह्यते । शब्दापेक्षया चैक इति पुंल्लिङ्गेन निर्देशः । अन्ये तु साधारण एक इत्याहुः । परमप्रकृतिश्च सर्वप्रत्ययसाधारणीति तत एवोत्पत्तिर्भवति । 'सर्वेऽपत्येन युज्यन्त'इत्ययं च पक्षः प्रमाणोपपन्नत्वात्स्थितः ।। न हीदमिति । लोके योऽर्थ एकशब्दस्य दृश्यते स एवेहाश्रीयते । लोके च प्रथमशब्दसमानार्थ एकशब्दो दृश्यते इतीहापि प्रथमार्थ एवाश्रीयते । शास्त्रेऽपि प्रथमार्थ एकशब्दो दृश्यते—'एकेऽल्पप्राणा' इत्यत्र प्रथमेऽल्पप्राणा इति गम्यते ।

उ०—कृते तु अनुपपत्तिरुक्तैव । ननु गार्ग्यायणसिद्धये 'गोत्राद्यूनी'ति विध्यर्थमेव स्यात्, एवं च 'उपगोर्युवाऽपत्यमित्यर्थे 'औपगव'इत्यस्य दुर्वारत्वापत्तिरत आह–भाष्ये–अथापि गोत्रग्रहणमिति । एवं च गार्ग्यायणस्य सिद्धया 'गोत्राद्यूनी'ति नियमार्थमेव वाच्यं, तथा च नोक्तदोष इति भावः । तत्र 'पितुरेवाऽपत्य'मिति पक्षेऽस्य नियमत्वं तु 'एको गोत्रे' इति साहचर्याद्बोध्यम् । युवपदञ्च युवसमुदायपरम् । विध्यननुष्ठानञ्च प्राग्वदेव । 'सर्वेऽपत्येन युज्यन्ते'इति पक्षे तु स्पष्टमेव नियमत्वम् । अयमेव पक्षः सूत्रभाष्यसंमत इत्युक्तमेव । 'एको गोत्रे' इत्यत्र गोत्रपदेन युवापत्यं न गृह्यते, एतदर्थमेव गोत्रग्रहणमिति बोध्यम् । नन्वे'का प्रकृति'रित्युक्ते द्वितीया तृतीया वैकाऽस्तु प्रथमा कथं लभ्यतेऽत आह–प्रथमाऽतिक्रम इति । इदञ्चिन्त्यम्–'णिजां त्रयाणा'मित्यत्र त्रयाणामित्युक्तेरस्य न्यायस्यात्र शास्त्रेऽनाश्रयणात् । तस्मादयमर्थः–गोत्रे प्रत्ययस्य सिद्धत्वादिदं नियमार्थम् । गोत्रे बोधनीये प्रत्ययप्रकृतिरेकैव नानेका ।

तदाह भाष्ये—यदि चेदानीमित्यादिना । प्रकृतिपरत्वे पुंल्लिङ्गानुपपत्तेराह—शब्दाऽपेक्षयेति । प्रमाणोपपन्नत्वादिति । दशपुरुषानूकम् अपत्यम्पौत्रप्रभृति । जरत्कार्वाद्युपाख्यानञ्च तत्र प्रमाणम् । पक्षान्तरे त्वौपचारिकसम्बन्धाश्रयेण प्रत्ययोत्पत्तिर्वाच्या भवति, विधित्वसम्भवेन नियमाऽलाभश्चेति बोध्यम् ।

भाष्ये अयं यत्नः–'संज्ञाकारिग्रहण'मित्यादिः, 'किं तर्हि प्रकृति'रित्याद्यन्तः । भाष्ये–सङ्ख्यां प्रवर्तमानामिति । प्रवर्त्तमानां सङ्ख्याम्–आरम्भविषयां सङ्ख्याम्–एकशब्देन प्रथमशब्देन च व्यवहरन्तीत्यर्थः । एको द्वावित्यादिवत्प्रथमद्वितीयेत्याद्यपि गणनादर्शनादेकशब्दो लक्षणया प्रथमवाच्यपीति भावः । 'उपाचरन्ती'त्यन्तेन लक्षणाबीजसम्बन्धप्रदर्शनम् । एकशब्दार्थे प्रथमशब्ददर्शनादन्यत्रापि प्रथमार्थे एकत्वमारोप्यै-

प्रवर्तमानामुपाचरन्ति[1] 'एक' इति वा 'प्रथम' इति वा। यावद्ब्रूयात्प्रथमो गोत्रे[2] प्रत्ययमुत्पादयतीति तावदेको गोत्र इति ॥ ९३ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्।

## अत इञ् ॥ ४ । १ । ९५ ॥

### इञो वृद्धाऽवृद्धाभ्यां फिञ्फिनौ विप्रतिषेधेन ॥ १ ॥

इञो वृद्धाऽवृद्धाभ्यां फिञ्फिनौ* भवतो विप्रतिषेधेन। इञोऽवकाशः—दाक्षिः प्लाक्षिः। फिञोऽवकाशः—तादायनिः यादायनिः। इहोभयं प्राप्नोति—तापसायनिः सांमितिकायनिः। फिनोऽवकाशः—त्वचायनिः स्रुचायनिः। इञ स एव। इहोभयं प्राप्नोति—ग्लुचुकायनिः म्लुचुकायनिः। फिञ्फिनौ भवतो विप्रतिषेधेन।

इह कस्मान्न भवति—दाक्षिः प्लाक्षिः ? बहुलवचनात्†।

प्र०—उपाचरन्तीति। व्यवहरन्तीत्यर्थः। अस्यां पङ्क्तावेकमानयेत्यादौ त्वनियतस्यैकस्यावगमात् सङ्ख्यावाच्येकशब्दो न प्रथमवाची ॥ ९३ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्।

अत इञ्। दाक्षिरिति। 'वा नामधेयस्ये'ति यदा वृद्धसंज्ञा नास्ति तदाऽयमिञोऽवकाशः। इञः स एवेति। 'प्राचामवृद्धात्फिन्बहुल'मिति प्राचां मतेन फिनो विधानात्, उदीचां मतेन तदभावादिञोऽवकाश इति भावः॥ इह कस्मादिति। प्राचां मतेनाऽवृद्धात्फिन् प्राप्नोतीति

उ०—कपदप्रयोग इति तात्पर्यम्। तद्ध्वनयन्नाह—अस्यां पङ्क्ताविति। क्वचिदेव एकशब्दस्य विवक्षाप्रकरणादिवशाल्लक्षणया प्रथमपरत्वं न सर्वत्रेत्यर्थः। प्रकृतसूत्रे च लक्ष्यानुरोधात्प्रथमपरत्वमिति भावः। 'पितुरेवापत्य'मिति एकशब्दस्य सङ्ख्यावाचित्वपक्षे च गुरुभूताऽनेकक्लिष्टकल्पनाभिया 'सर्वेषामपत्य'मिति पक्षः, प्रथमवाची एकशब्द इति च न्याय्यमित्याशयः॥ ९३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम्।

अत इञ्। ननु दक्षस्य प्लक्षस्य च नामधेयत्वाद्वृद्धत्वेन 'उदीचां वृद्धा'दिति फिञ्प्राप्तेः कथमिञोऽवकाशोऽत आह—यदा वृद्धसंज्ञा नास्तीति। वैकल्पिकत्वादिति भावः। तदाऽयमिञ इति। उदीचां

१—'उपचरन्ति' पा०। २—'प्रथमोऽपत्ये प्रत्यय'मिति कीलहार्नपाठः।

* उदीचां वृद्धादगोत्रात्; प्राचामवृद्धात् फिन् बहुलम् ४। १। १५७; १६०

† प्राचामवृद्धात् फिन् बहुलम् ४। १। १६०

तद्राजश्च ॥ २ ॥

तद्राजश्चेञो भवति विप्रतिषेधेन । तद्राजस्याऽवकाशः—ऐक्ष्वाकः‡ । इञः स एव । इहोभयं प्राप्नोति—पाञ्चालः वैदेहः वैदर्भः‡ । तद्राजो भवति विप्रतिषेधेन ॥९५॥

## बाह्वादिभ्यश्च ॥ ४ । १ । ९६ ॥

बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः ॥ १ ॥

बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधो वक्तव्यः । बाहोरपत्यं बाहविः । यो हि बाहुर्नाम बाहवस्तस्य भवति* । नडस्यापत्यं नाडायनः† । यो हि नडो नाम, नाडिस्तस्य भवति+ ।

प्र०—भावः ।

ऐक्ष्वाक इति । इक्ष्वाकोरपत्यमिति 'जनपदशब्दात्क्षत्रियाद'ञित्यञ् । दाण्डिनायनादिसूत्रेणोकारलोपो निपात्यते । पाञ्चाल इति । पाञ्चालविदेहविदर्भेभ्योऽञ् ॥ ९५ ॥

बाह्वादिभ्यश्च । बाह्वादिप्रभृतिष्विति । 'प्रभृति'ग्रहणेन वक्ष्यमाणानां कुञ्जादिनडादीनां ग्रहणम् । लौकिक इति । लोके विदित इत्यर्थः । गोत्रभाव इति । संज्ञाकारित्वे आदिपुरुषत्वे इत्यर्थः । एतच्च स्मृतिशास्त्रस्याऽर्थतोऽनादित्वादनाद्यर्थाभिधायित्वं बाह्वादिग्रहणस्य न्याय्यत्वाल्लभ्यते । यत्तु कार्यं विशिष्टशब्दस्वरूपोपादानेन न विधीयते किन्तु प्रकारान्तरेण,यथा 'अत इ'ञिति, तदिदानीन्तनार्थाभिधायिनोऽपि भवति 'दैवदत्ति'रिति ।

उ०—मतेनेति भावः । ननु च वृद्धत्वाऽभावेऽप्यवृद्धत्वात्फिन्प्राप्तेः कथमिञः स एवेत्युच्यतेऽत आह—प्राचामिति । भाष्ये—बहुलवचनादिति । 'प्राचामवृद्धा'दित्यत्र पठितादित्यर्थः ॥ ९५ ॥

बाह्वादिभ्यश्च । ननु बाह्वादीत्यनेनैव गणसङ्ग्रहे 'प्रभृति'ग्रहणं मुधेत्यत आह—प्रभृतीति । लोके इति । लोकविदितेष्वादिपुरुषत्ववत्सु येषां दर्शनमिति भाष्यार्थः । गोत्रभाव इति—प्रकृताभिप्रायम् । अर्थत इति । शब्दतस्तु सादीत्यर्थः । 'अनाद्यर्थाभिधायित्वं बाह्वादिग्रहणस्य न्याय्यत्वाल्लभ्यते'इति पाठः । नन्वेवं 'नाडि'रित्यादाविञपि न स्यादत आह—यत्त्विति यत्र शब्दार्थोपस्थितिस्तत्रैव प्रसिद्धार्थानां ग्रहणं न त्वन्यत्रापीति भावः । बाहुर्नाम ऋषिः । 'जानन्ति बाहव' इत्याश्वलायनसूत्रात् ।

‡ जनपदशब्दात् क्षत्रियादञ् ४ । १ । १६८
* प्राग्दीव्यतोऽण् ४ । १ । ८३
† नडादिभ्यः फक् ४ । १ । ९९
+ अत इञ् ४ । १ । ९५

## सम्बन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधः ॥ २ ॥

सम्बन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधो वक्तव्यः । श्वशुरस्यापत्यं श्वशुर्यः* । यो हि श्वशुरो नाम श्वाशुरिस्तस्य भवति† ।

प्रत्ययग्रहणेन नार्थः । 'सम्बन्धिशब्दानां तत्सदृशात्प्रतिषेध' इत्येव । इदमपि सिद्धं भवति—'मातृपितृभ्यां स्वसा' [ ८ । ३ । ८४ ] मातृष्वसा पितृष्वसा । अन्यथा [ हि[1] ] मातृस्वसेति ॥ ९६ ॥

# सुधातुरकङ् च ॥ ४ । १ । ९७ ॥

## सुधातृव्यासयोः ॥ १ ॥

'सुधातृव्यासयो'रिति वक्तव्यम् । सौधातकिः । वैयासकिः शुकः ।

अत्यल्पमिदमुच्यते । 'सुधातृव्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम्' ।

---

प्र०—संबन्धिशब्देति । अयमपि न्यायानुवादः । आदिमत्त्वात्संज्ञायाः, श्वशुरस्य सम्बन्धोपाधिकस्य त्वनादित्वात्तद्ग्रहणस्यैव न्याय्यत्वात् ॥ मातृस्वसेति । मातृशब्दोऽत्र क्रियावाची न जननीवाचीति 'मातृपितृभ्यां स्वसे'ति षत्वं न भवति । यद्यपि क्रियाशब्दार्थोऽपि नित्यस्तथापि प्रसिद्धतरः सम्बन्धिलक्षणोऽर्थ इति तस्यैव ग्रहणं युक्तम् । उक्तं च हरिणा—

'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥' इति ॥ ९६ ॥

सुधातुरकङ् च । प्रकृत्यन्तराणीति । स्वार्थिककन्प्रत्ययान्तत्वादिति भावः । अव्यवि-

---

उ०—श्वशुरादीनां गोत्रभावे दर्शनाऽभावात्पूर्वेणाऽसिद्धेर्वचनान्तरम् । सम्बन्धिशब्देति । अनेन चावयुत्याऽनुवादेन पूर्ववार्त्तिके 'गोत्रभाव'इत्यस्योपलक्षणत्वं सूच्यते । क्रियावाचीति । क्रियाप्रवृत्तिनिमित्तक इत्यर्थः । क्रियाशब्दार्थं इति । क्रियाप्रवृत्तिनिमित्तकशब्दस्यार्थ इत्यर्थः । अभिव्यक्तेत्यनेनाऽनाद्यर्थाभिधायित्वमुक्तम्, तेन आधुनिकसंज्ञानिरासः । तत्र तत्र 'असंज्ञाया'मित्युक्तेरत्रैव भाष्ये उक्तत्वाच्च पदकार्यविषयोऽयम् । तत्रापि विशिष्टरूपोपादान एव । स्वतन्त्रा इत्यनेन गौणनिरासः । स हि सम्बन्धाप्रवर्तते । लोकविश्रुता इत्यनेनाऽप्रयुक्तं निरस्तम् । तदुक्तिषु इति । तत्सदृशेष्वित्यर्थः ॥ ९६ ॥

सुधातु० । स्वार्थिकेति । व्यासादिविषयमिदम् । अत एव 'वैयासकी संहिता' इत्यस्य सिद्धिः । अत

---

१—क्वाचित्कः पाठः ।
* राजश्वशुराद्यत् ४ । १ । १३७ ।
† अत इञ् ४ । १ । ९५

सौधातकिः । वैयासकिः शुकः । वारुडकिः । नैषादकिः । चाण्डलकिः । बैम्बकिः । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । प्रकृत्यन्तराण्येवैतानि ॥ ९७ ॥

## गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ४ । १ । ९८ ॥

किमर्थश्चकारः ? स्वरार्थः । 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात्* । अथ ञकारः किमर्थः ? ञकारो वृद्धयर्थः । ञ्णितीति वृद्धिर्यथा स्यात्† ।

एकेन ककारेणोभयं सिद्धम्‡ ।

अवश्यमत्र विशेषणार्थोऽन्योऽनुबन्धः कर्तव्यः । क्व विशेषणार्थेनार्थः ? 'व्रातच्फञोरस्त्रियाम्' [ ५ । ३ । ११३ ] इति । 'फक्' इति ह्युच्यमाने 'नाडायनः' अत्रापि प्रसज्येत§ । अथापि 'फञ्'इत्युच्यते, एवमप्याश्वायनः अत्रापि प्रसज्येत¶ । तस्माच्चकार एव कर्तव्यः, अन्तोदात्तत्वमपि यथा स्यात् । चकारे चेदानीं विशेषणार्थे क्रियमाणेऽवश्यं वृद्धयर्थोऽन्योऽनुबन्धः कर्तव्यः । स च ञकार एव कर्तव्यः, सूत्रभेदो मा भूदिति ।

अथ क्रियमाणेऽपि वै चकारेऽन्तोदात्तत्वं न प्राप्नोति । किं कारणम् ? परत्वाञ्ञ्नितीत्याद्युदात्तत्वं प्राप्नोति × । चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति । ञित्करणसामर्थ्यादाद्युदात्तत्वं प्राप्नोति । अस्त्यन्यञ्ञित्करणे प्रयोजनम् । किम् ?

प्र०—कन्यायेन च कन्रहितैर्वाक्यमेव भवति। 'व्यासक'शब्दाच्च कन्नन्तादृषिवाचिनोऽपि बाह्वादेराकृतिगणत्वादिञ्भवति न तु ऋष्यणिति भावः ॥ ९७ ॥

गोत्रे । अथापि फञ इति । सर्वथा सामान्यग्रहणं प्राप्नोतीत्येवंपरमेतत् । फञिति क्रियमाणे कौञ्जायना इति ञित्स्वरप्रसङ्गः । सूत्रभेद इति । च्फञ्यपि सिध्यति, सूत्रभेदस्तु स्यादिति भावः । एवं तर्हीति । चकारस्य विशेषणे चरितार्थत्वाद्वृद्धौ च ञकारस्य परत्वा-

उ०—एव 'वैयासक्यां संहिताया'मिति पुराणेषु पठ्यते । वैयासिक्या मिति त्वपपाठः । ननु व्यासादिभ्यः प्रत्ययेऽनिष्टरूपापत्तिरत आह—अभ्यविकेति ॥ ९७ ॥

गोत्रे कुञ्जा । भाष्ये—फक इत्युच्यमान इति । क्फप्रत्यये कस्येत्संज्ञा दुर्लभेति भावः । फञिति क्रियमाण इति । 'अत्र सूत्रे' इत्यादिः । कानुबन्धेनापि वृद्धिः सिद्धयतीत्याह च्फक्यपि सिद्धयतीति । यशब्दस्य बहुत्वे प्रागभावादिति । बहुत्वे युवप्रत्ययोत्पत्तेः प्राग्यशब्दस्याभावादित्यर्थः । क्वचित्तु—प्रयोगा-

* चितः ६ । १ । १६३ । † तद्धितेष्वचामादेः ७ । २ । ११७ ।
‡ कितः ६ । १ । १६५; किति च ७ । २ । ११८ । § नडादिभ्यः फक् ४ । १ । ९९ ।
¶ अश्वादिभ्यः फञ् ४ । १ । ११० । × ञ्नित्यादिर्नित्यम् ६ । १ । १९७ ।

वृद्ध्यर्थो ञकारः । चित्करणेऽपि तर्ह्यन्यत्प्रयोजनमस्ति । किम् ? विशेषणार्थश्चकारः । शक्योऽत्र विशेषणार्थोऽन्योऽनुबन्ध आसङ्क्तुं तत्र चकारानुरोधादन्तोदात्तत्वं भवति । वृद्ध्यर्थोऽपि तर्ह्यन्यः शक्योऽनुबन्ध आसङ्क्तुं तत्र ञकारानुरोधादाद्युदात्तत्वं प्राप्नोति ।

एवं तर्हि स्वरे योगविभागः करिष्यते+ । इदमस्ति 'चितः' [ ६ । १ । १६३ ] । चितोऽन्त उदात्तो भवतीति । ततः 'तद्धितस्य' । तद्धितस्य च चितोऽन्त उदात्तो भवतीति । किमर्थमिदम् ? परत्वाञ्ञ्नितीत्याद्युदात्तत्वं प्राप्नोति तद्बाधनार्थम् । ततः 'कितः' । कितस्तद्धितस्यान्त उदात्तो भवतीति ।

किं पुनरत्र स्वरार्थेन चकारेणानुबन्धेन यावता च्फञन्ताञ्ञ्यो विधीयते, तत्र ञ्नितीत्याद्युदात्तत्वेन भवितव्यम् । नैतदस्ति । बहुषु* लोपे कृतेऽन्तोदात्तत्वं यथा स्यात्—कौञ्जायना इति ।

इह केचिद् द्व्येकयोः च्फञं विदधति, बहुषु च फकम्, केचिच्च्फञन्ताञ्ञ्यम्, किमत्र न्याय्यम् ? ञ्यवचनमेव न्याय्यम् । द्व्येकयोर्हि च्फञि सति बहुषु च फकि कौञ्जायनानामपत्यं माणवकः कौञ्जायन्यः कौञ्जायन्यौ केन 'य'शब्दः श्रूयेत । द्व्येकयोरित्युच्यमानो न प्राप्नोति । इह कौञ्जायन्यस्यापत्यं बहवो माणवकाः कौञ्जायनाः केन 'य'शब्दो न श्रूयेत । 'द्व्येकयो'रित्युच्यमानः प्राप्नोति ।

तदेतत्कथं कृत्वा ञ्यवचनं ज्यायो भवति ? यदि तन्नास्ति 'आपत्यो वा गोत्रम्, 'परमप्रकृतेश्चापत्यः,' 'आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः,'

प्र०—ञ्नित्स्वरप्राप्तावित्यर्थः । तत्र ञ्नितीति । सति शिष्टस्वरस्य बलीयस्त्वादिति भावः । इहेति । पूर्वे वैयाकरणाः । केन यशब्द इति । यशब्दस्य बहुत्वे प्रयोगाभावात् । यदा तु ञ्यः क्रियते तदा 'गोत्रेऽलुगची'ति लुकि प्रतिषिद्धे यशब्दः श्रूयते । कौञ्जायन्यस्यापत्यानि बहूनीति अत इञो 'ण्यक्षत्रियार्षे'ति लुकि तद्राजान्तस्य बहुषु वर्त्तनाञ्ञ्यस्य लुक्सिध्यति । आपत्यो वेति ।

उ०—भात्रादिति पाठः । लुकि प्रतिषिद्धे इति । युवप्रत्ययस्य तु 'ण्यक्षत्रिये'ति लुगिति बोध्यम् । न च लुका विषयापहारे कथमत्रालुक्; प्रत्ययलक्षणेन सत्त्वात् । 'न लुमता' इति निषेधस्तु न, अस्य प्रत्ययोद्देश्यकत्वेऽप्यङ्गोद्देश्यकत्वाभावादित्याहुः । फगन्ताद्युवप्रत्ययस्य लुक् तु पैलादित्वाद्दषित्वाद्वा । 'आर्षे'त्यत्र लक्षणप्रतिपदोक्तपरिभाषा तु न प्रवर्त्तते, अत एव 'आग्नेय'शब्दाद्यूनि इञो लुगुक्तोऽनेन भाष्य इत्याहुः । तद्राजान्तस्य

\+ चितः; तद्धितस्य; कितः ६ । १ । १६३—१६५ । 'चितस्तद्धितस्ये'त्येकं सूत्रमिति योगविभागेन ध्वन्यते । * ञ्यादयस्तद्राजाः ५ । ३ । ११९; तद्राजस्य बहुषु तेनैवास्त्रियाम् २ । ४ । ६२ ।

'स चास्त्रियाम्', 'एको गोत्रग्रहणानर्थक्यं च' 'बहुवचनलोपिषु च सिद्ध'मिति† । सति हि तस्मिन् द्व्येकयोरपि फ्यञि सति, बहुषु च फकि न दोषो भवति । तत्र कौञ्जायनानामपत्यं माणवक इति विगृह्य कुञ्जशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति—कौञ्जायन्यः कौञ्जायन्यौ । कौञ्जायन्यस्यापत्यं बहवो माणवका इति विगृह्य कुञ्जशब्दाद्बहुषूत्पत्तिर्भविष्यति—कौञ्जायना इति ॥ ९८ ॥

## अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ ४ । १ । १०४ ॥

अनृष्यानन्तर्य इत्युच्यते, तत्रेदं न सिध्यति कौशिको विश्वामित्र इति । किं कारणम् ? विश्वामित्रस्तपस्तेपे 'नानृषिः स्या'मिति । तत्रभवानृषिः सम्पन्नः । स पुनस्तपस्तेपे 'नानृषेः पुत्रः स्या'मिति । तत्रभवान् गाधिरपि ऋषिः सम्पन्नः । स पुनस्तपस्तेपे 'नानृषेः पौत्रः स्यामिति । तत्रभवान्कुशिकोऽपि ऋषिः सम्पन्नः । तदेतदृष्यानन्तर्यं भवति, तत्रानृष्यानन्तर्य इति प्रतिषेधः प्राप्नोति ।

प्र०—'गोत्रेऽलुगची'त्यत्रैतद्व्याख्यातम् । कुञ्जशब्दादेव यूनि फ्यञि फकि च कृते स्वार्थिकस्य चेत्रो लुकि कृते सर्वेष्टसिद्धिः ॥ ९८ ॥

अनृष्या । अनृष्यानन्तर्य इत्यस्यार्थद्वयं सम्भवति,—ऋषीणामानन्तर्ये—अव्यवधाने न भवति । यद्वानन्तरमेवानन्तर्यं, तेन ऋषिभ्योऽनन्तरापत्ये प्रत्ययो न भवतीति । उभयत्राप्यसमर्थसमासः, भवतिना नञः सम्बन्धात् । तत्राऽऽद्यपक्षाश्रयेण पूर्वः पक्षो द्वितीयपक्षाश्रयेणोत्तरम् । संज्ञागोत्राधिकारादिति । संज्ञया यद्गोत्रं पौत्रप्रभृति, तदेवाधिकृतं न त्वपत्यमात्र-

उ०—बहुष्विति । तत अजादिप्राग्दीव्यतीयविवक्षाभावान्नागालुकः प्राप्तिरिति भावः । यूनि फ्यञि फकि चेति । युवद्व्येकयोः फ्यञ्, तद्बहुत्वे फगिति भावः ॥ ९८ ॥

अनृष्या । तेन ऋषिभ्योऽनन्तरेति । भाष्ये-'कथं तर्हि, ऋषावनन्तरे ने'त्यत्र 'ऋषौ' इत्यवधेरेवाधिकरणत्वविवक्षायां सप्तमीति भावः । अत्र 'विश्वामित्रस्तपस्तेपे' इति ग्रन्थान्यत्र ऋष्यानन्तर्याभावं सूचयति, अनृषिपुत्राणामपि ऋषित्वात्, ऋषिपुत्राणामप्यनृषित्वाच्चेति बोध्यम् । ननु गोत्रग्रहणमेव प्रकृतं, न संज्ञागोत्रं नाम किञ्चिदत आह—सञ्ज्ञयेति । संज्ञया प्रतिपाद्यं यद्गोत्रं पौत्रप्रभृतीत्यर्थः । गोत्रसंज्ञया प्रत्याय्यं यत्पौत्रप्रभृति तस्यैवाधिकारोऽत्रेति फलितम् । अन्यथेति । प्राप्तिपूर्वकत्वात्प्रतिषेधस्ये ति भावः । गोत्र एवेति । अनन्तरे निषेधादिति भावः । विशेषविषयस्येति । 'ऋषिभ्योऽनन्तरे न भवती'ति प्रतिषेधेन 'अनृषिभ्योऽनन्तरे भवती'ति शेषोऽनुमीयते, स च 'तक्रकौण्डिन्य'न्यायाद्गोत्रेऽञो बाधक

† ४ । १ । १६३ वा० ४—६ ।

नैष दोषः । नैवं विज्ञायत 'ऋष्यानन्तर्ये न भवती'ति । कथं तर्हि ? ऋषावनन्तरे नेति । यद्येवम्—

**अनृष्यानन्तर्यवचनमनर्थकं संज्ञागोत्राधिकारात् ॥ १ ॥**

अनृष्यानन्तर्यवचनमनर्थकम् । किं कारणम् ? संज्ञागोत्राधिकारात् । संज्ञागोत्र इति वर्तते‡, तत्र[1] कः प्रसङ्गो यदनन्तरे स्यात् । नैव प्राप्नोति, नार्थः प्रतिषेधेन ।

एवं तर्हि सिद्धे सति यदनृष्यानन्तर्य इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'बिदादिषु येऽनृषयः पठ्यन्ते तेषामनन्तरेऽपि वृत्तिर्भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? नानान्द्रः पौत्रः दौहित्र इत्येतत्सिद्धं भवति ॥ १०४ ॥

## वतण्डाच्च ॥ ४ । १ । १०८ ॥

किमर्थमिदमुच्यते, न 'गर्गादिभ्यो यञ्' [ ४ । १ । १०५ ] इत्येव सिद्धम् ? 'लुक् स्त्रियाम्' [ १०९ ] इति वक्ष्यामीति । यदि पुनस्तत्रैवोच्येत* । नैवं शक्यम् ?

---

प्र०—मित्यर्थः । तेषामनन्तर इति । अन्यथा आनन्तर्यप्रतिषेधोऽनर्थकः स्यात् । तत्रर्षिभ्यो गोत्र एवाञ्प्रत्ययः । अनृषिभ्यस्त्वनन्तरापत्य एवेत्येष विषयविभागः । नन्वस्माज्ज्ञापकादनृषिभ्योऽपत्यमात्रे प्रत्ययः प्राप्नोति । नैष दोषः । विशेषविषयस्यानुमानस्याश्रयणात् ॥ १०४ ॥

वतण्डाच्च । लुक्स्त्रियामिति वक्ष्यामीति । तत्र च वतण्डशब्दानुवृत्त्यर्थमेतदित्यर्थः । यदीति । गर्गादिगण एव वतण्डशब्दानन्तरं 'लुक्स्त्रिया'मिति पठितव्यमिति भावः । आङ्गिरस-

---

उ०—इति भावः । भाष्ये—तेषामनन्तरेऽपि वृत्तिरित्यपिशब्द एवकारार्थः, अपिरहित एव पाठ इति वाशयः । अत्र मानञ्चिन्त्यम् । किञ्च 'ऋषिभ्योऽनन्तरे ने'ति प्रसज्यप्रतिषेधेन व्याख्यानं विफलम्, अनृषिभ्योऽनन्तर इत्येव युक्तत्वात् । न च 'गोत्र' इत्यधिकारादनन्तरेऽप्राप्त्या निषेधो व्यर्थः; तत्सामर्थ्येनात्र सूत्रे 'गोत्रे' इत्यस्यासम्बन्धात् । युवापत्ये तु न; 'गोत्राद्यूनी'ति नियमात् । तस्मादनृषिभ्योऽनन्तरे गोत्रे च प्रत्यय इत्येव भाष्याल्लभ्यत इति दिक् ॥ १०४ ॥

वतण्डाच्च । भाष्ये—न गर्गादिभ्यो यञित्येव सिद्धमिति । न च शिवादिष्वप्यस्य पाठादाङ्गिरसेऽण्बाधनार्थमिदमिति वाच्यम्, गणद्वयपाठसामर्थ्येनाभिधानस्वाभाव्यादाङ्गिरसे यञ्, अन्यत्र अणिति व्यवस्थासम्भवादित्यभिमानः । 'तत्र'शब्दार्थमाह—गण एवेति । नन्वेवमन्येभ्योऽपि गर्गादिभ्यो यञः स्त्रियां लुक्स्यादत आह—वतण्डशब्दानन्तरमिति । तथा च तत्र वतण्डग्रहणमनुवर्तत इति भावः ।

---

‡ गोत्रे कुञ्जादिभ्यश्च्फञ् ४ । १ । ९८

[1]—क्वचिन्न ।

* गर्गादिभ्यो यञ् ४ । १ । १०५ गर्गादिगणे 'वतण्ड'शब्दः पठ्यते तदनन्तरं गण एव 'लुक् स्त्रिया'मित्यपि पठितव्यमित्यर्थः ।

आङ्गिरसग्रहणं हि विच्छिद्येत ॥ १०८ ॥

## शिवादिभ्योऽण् ॥ ४ । १ । ११२ ॥

किमर्थं शिवादिभ्योऽणिग्रधीयते, न 'यथाविहित'मित्येवोच्येत ? 'शिवादिभ्यो यथाविहित'मितीयत्युच्यमान इञ् प्रसज्येत† । इञतो यथाविहितः । पुनर्वचनमिदानीं किमर्थं स्यात् ? ये तस्य बाधकास्तद्बाधनार्थम् । स वै नास्ति यस्तं बाधेत, तत्रारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स भविष्यति । कश्चासौ ? अणेव‡ ।

उत्तरार्थं तर्हि, 'अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः' [ ४ । १ । ११३ ] इति । अत्र 'यथाविहित'मितीयत्युच्यमाने ढक्प्रसज्येत+ । ढगतो यथाविहितः । पुनर्वचनमिदानीं किमर्थं स्यात् ? ये तस्य बाधकास्तद्बाधनार्थम् । स वै नास्ति

प्र०—ग्रहणमिति । तथा च सर्वत्र लुक् स्यात् । योगविभागस्तर्हि किमर्थो न 'वतण्डाल्लुक्स्त्रिया'-मित्येकयोग एवोच्येत ? आङ्गिरसे शिवाद्यण्बाधनार्थो योगविभागः । वतण्डो नाम ऋषिः, तत ऋषित्वादेवाणि सिद्धे शिवादिषु तस्य पाठो गोत्रे गर्गादियञा समावेशार्थः । अनेन तु योगेनाऽऽङ्गिरसेऽण्प्रसङ्गे यञ्विधानादण्बाध्यते । अन्यत्र तु गोत्रे यञणौ द्वावपि भवतः । ऋषित्वादेव च वातण्डीत्यत्र ष्यङ् न भवति ॥ १०८ ॥

शिवा । गोत्र इति निवृत्तम्, अपत्यमित्येवानुवर्तते । ढगत इति । ननु मातृशब्दस्याऽ-

उ०—सर्वत्र—आङ्गिरसे, तद्भिन्ने च । एवञ्चाऽऽङ्गिरसे वतण्डी, अन्यत्र वातण्ड्यायनीति भावः । अण्बाधनार्थं इति । गणद्वयपाठसामर्थ्येन स्विष्टा व्यवस्था न लभ्यत इति भावः । परे तु विध्यर्थ इत्येवोचितम्, 'न गर्गादिभ्य' इति प्रश्नस्य गर्गादिष्वेव पठनीयः, किमनेन पृथक्सूत्रेण, कण्वादिष्विव विशेषाऽनुक्तेः । कपिबोधाभ्यां योगविभागेन 'आङ्गिरस'इत्यस्यासम्बन्ध इत्याशयः । उत्तरयति—लुगिति । 'यदि पुनस्तत्रैवोच्येते'त्येतस्य कैयटोक्त एवार्थः । नैवमित्यादि । तद्विच्छेदे हि सर्वत्र यञ्स्यादित्यर्थः । तस्मादाङ्गिरस एव गोत्रेऽस्माद्यञिति भावः । गर्गादिपाठस्तु नास्त्येव । अत एव भगवता योगविभागफलं न विचारितम् । एवं च योगविभागेन कपिबोधयोरिव वतण्डस्यापि गर्गादिगणे पाठाभाव एवानुमीयते । एवं चानाङ्गिरसे 'वातण्ड्यायनी'त्यसाध्वेवेति भाष्यार्थमाहुः ॥ १०८ ॥

शिवादिभ्यो । भाष्ये—न यथाविहितमिति । फञस्तु व्याख्यानादेव नानुवृत्तिरिति भावः । स वै नास्तीति । न चैभ्यः 'प्राचामवृद्धा'दित्यस्य प्राप्तत्वेन कथं तदभावः, बहुलग्रहणात्तस्य दृशे विषयेऽप्रवृत्तिरित्याशयात् । कश्चासावणेवेति । नन्विदमसङ्गतं, 'शिवादिभ्यो गोत्र' एवेञ् नान्यत्रेति नियमेन

† अत इञ् ४ । १ । ९५ ‡ प्राग्दीव्यतोऽण् ४ । १ । ८३
+ स्त्रीभ्यो ढक् ४ । १ । १२०

यस्तं बाधेत, तत्रारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स भविष्यति । कः पुनरसौ ? अणेव ।

उत्तरार्थमेव तर्हि, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' [ ४ । १ । ११४ ] इति । अत्र 'यथाविहित'मितीयत्युच्यमान इञ् प्रसज्येत । इञतो यथाविहितः । पुनर्वचनमिदानीं किमर्थं स्यात् ? ये तस्य बाधकास्तद्बाधनार्थम् । स वै नास्ति यस्तं बाधेत, तत्रारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स भविष्यति । कश्चासौ ? अणेव ।

उत्तरार्थमेव तर्हि, 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः' 'कन्यायाः कनीन च' [ ४ । १ । ११५; ११६ ] इति । अत्र 'यथाविहित'मितीयत्युच्यमाने ढक्प्रसज्येत । ढगतो यथाविहितः । पुनर्वचनमिदानीं किमर्थं स्यात् ? मातुरुकारं वक्ष्यामि, कन्यायाः कनीनभावमिति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात् 'स्त्रीभ्यो ढक्' [ १२० ] मातुरुकारः, कन्यायाश्च कनीनभावं इति ।

इदं तर्हि प्रयोजनम् । अयमृष्टिषेणशब्दः शिवादिषु पठ्यते । तत्र 'यथाविहित'मितीयत्युच्यमान इञ् प्रसज्येत । तं परत्वात्सेनान्तलक्षणो बाधेत× । तत्रारम्भसामर्थ्यादिञ् प्रसज्येत । पुनरण्ग्रहणादणेव भवति ॥ ११२ ॥

## ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ४ । १ । ११४ ॥

प्र०—स्त्रीप्रत्ययान्तत्वात्कथं ढग्विहितः । एवं तर्हि परिहारान्तराभिधानान्न विचारितमेतद्भाष्यकारेण । तं परत्वादिति । परत्वग्रहणेन बाधकत्वं लक्ष्यते । तेनापवादत्वादित्यर्थः ॥ ११२ ॥

ऋष्यन्धक । ऋषिस्त्र्यण इति । 'अवृद्धाभ्यो नदीमानुषीभ्य' इति मानुषीलक्षणोऽण् स्त्र्यणश-

उ०—चारितार्थ्यात्कथमण्ग्रहणं विनाण्विधिरत आह—गोत्र इति निवृत्तमिति । अन्ये तु विध्यर्थत्वस्य युक्तत्वाद्विधित्वायाण एव विधिस्तेनेति भाष्याशयः । अत एव यूनि लुक्सूत्रादिस्थभाष्येणाविरोध इत्याहुः । परिहारान्तरेति । 'स्त्रीभ्य' इत्यर्थग्रहणं मत्वा पूर्वपक्षिणोभयसाधारण्येन ढगित्युक्ते उभयसाधारण्येन परिहारान्तरमेवोक्तं न तु वस्तुतत्त्वं निरूपितम् । तच्च 'स्त्रीभ्य' इति सूत्रे निरूपयिष्यत इति भावः । ननु ण्यस्यानवकाशत्वात्परत्वादित्युक्तमत आह—परत्वग्रहणेनेति । न च प्राग्दीव्यतीयाधिकारेणैवाण्ग्रहणे सिद्धेऽणिति व्यर्थमेव, अर्थस्यावधित्वाश्रयणेनार्थबोधकवाक्य एव तदुपस्थितेः ॥ ११२ ॥

ऋष्यन्धकवृष्णि । ननु स्त्र्यणप्रसिद्धोऽत आह—अवृद्धाभ्य इति । अनृषित्वादिति । मन्त्रद्र-

१—'भाव' इति क्वचिन्न ।

× सेनान्तलक्षणकारिभ्यश्च ४ । १ । १५२

## ऋषिस्त्र्यणो ढग्ढ्कौ विप्रतिषेधेन ॥ १ ॥

ऋष्यणः स्त्र्यणश्च ढग्ढ्कौ भवतो विप्रतिषेधेन* । ऋष्यणोऽवकाशः वासिष्ठः वैश्वामित्रः । ढकोऽवकाशः–दुलि–दौलेयः । बलि–बालेयः । इहोभयं प्राप्नोति—अत्रि–आत्रेयः ॥ स्त्र्यणोऽवकाशः–मकन्दिका–माकन्दिकः । ढ्कोऽवकाशः—काणिकेरः । इहोभयं प्राप्नोति–पौणिकेरः मौद्गलिकेरः । ढग्ढ्कौ भवतो विप्रतिषेधेन ।

## द्व्यचो ढको ढ्ग्ढञौ ॥ २ ॥

द्व्यचो ढग्भवतीत्येतस्माड्ढ्ग्ढञौ भवतो विप्रतिषेधेन† । 'द्व्यचो ढग्भवती'-त्यस्यावकाशः—दात्तेयः गौप्तेयः । ढ्कः स एव । इहोभयं प्राप्नोति—नटी नाटेरः । दासी–दासेरः ॥ ढञोऽवकाशः–कामण्डलेयः[1] माद्रबाहेयः । ढकः स एव । इहोभयं प्राप्नोति–जम्बू–जाम्बेयः । ढ्ग्ढञौ भवतो विप्रतिषेधेन ।

## न वर्ष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ ३ ॥

न वैष युक्तो विप्रतिषेधो योऽयमृष्यणो ढकश्च । किं कारणम् ? ऋष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम् । सिद्धोऽत्राणुत्सर्गेणैव‡, तस्य पुनर्वचन एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैव तदपवादमिञं+ बाधत एवं ढकमपि बाधेत ।

प्र०—न्देनोक्तः । अत्र च यथासङ्ख्यं सम्बन्धः । दौलेय इति । दुलेरनृषित्वाड्ढकोऽयमवकाशः । काणिकेर इति । काणैव–काणिका । पौणिकेर इति । पुणिका तन्नामिका क्षुद्रा च । जाम्बेय इति । चतुष्पाल्लक्षणो ढञ् । 'ढे लोपोऽकद्र्वा' इत्यूकारलोपः । जम्बूशब्दस्यास्त्रीप्रत्ययान्ताड्ढक्प्राप्तिश्चिन्त्या । न वेति । प्राप्तिमात्रं बाध्यं मन्यते । मध्येऽपवादा इति । पूर्वस्य निर्ज्ञातस्वरूपत्वाद्बाध्यत्वं न

उ०—ष्टत्वाभावादिति भावः । काणैवेति । वृद्धत्वात्तन्नामकत्वाभावाच्च ढ्कोऽयमवकाश इति भावः । जम्बूशब्दस्येति । अस्य दीर्घोकारान्तत्वादूङभावः । द्व्यच इत्यत्रापि स्त्रीभ्य इति वर्तते । तच्च स्वर्यते । तेन तदधिकारविहितप्रत्ययग्रहणम् । तत्र 'अप्राणिजातेश्चे'ति वार्त्तिके 'उत' इत्यस्यासम्बन्धेऽपि प्राणिजातित्वात्तदभाव इति भावः । अन्ये तु 'तस्या जम्बोः फलरसो नदीभूय प्रवर्त्तते' इति प्रयोगाज्जम्बुर्ह्रस्वान्तोऽपि । स च वृक्षश्रृगालोभयवचनः । एतद्भाष्यप्रामाण्यात्तस्मादूङि दीर्घान्तोऽप्युभयवचनः । यद्वा 'स्त्रीभ्य'

* ऋष्यन्धकवृष्णिकुरुभ्यश्च; अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः; इतश्चानिञः; क्षुद्राभ्यो वा ४ । १ । ११४; ११३; १२२; १३१ † द्व्यचः; क्षुद्राभ्यो वा; चतुष्पाद्भ्यो ढञ् ४ । १ । १२१; १३१; १३५ १–'हैरण्यवाहेयः' इत्यधिकं क्वचित् ‡ प्राग्दीव्यतोऽण् ४ । १ । ८३
+ अत इञ् ४ । १ । ९५

तस्माद्दाविभ्योऽणिवधानेऽत्र्यादिप्रतिषेधः ॥ ४ ॥

तस्माद्दापिभ्योऽणिवधानेऽत्र्यादिभ्यः प्रतिषेधो वक्तव्यः ।

न वक्तव्यः । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्त' इत्येवमयमृष्यण्–इञं तदपवादं बाधिष्यते, ढकं न बाधिष्यते ।

अयं चाप्ययुक्तो विप्रतिषेधो योऽयं ढको ढूग्ढञोश्च । किं कारणम् ?

ढकः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ ५ ॥

सिद्धोऽत्र ढक् 'स्त्रीभ्यो ढक्' [ ४ । १ । १२० ] इत्येव । तस्य पुनर्वचन एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैव तदपवादं तन्नामिकाणं बाधते, एवं ढूग्ढञावपि बाधेत ।

तस्मात्तन्नामिकाण्यद्व्यचः ॥ ६ ॥

तस्मात्तन्नामिकाणि 'अद्व्यच' इति वक्तव्यम् ।

न वक्तव्यम् । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्त' इत्येवमयं ढक् तन्नामिकाणं तदपवादं बाधिष्यते, ढूग्ढञौ न बाधिष्यते ।

ऋष्यन्धकवृष्णिकुर्वणः सेनान्ताण्ण्यः ॥ ७ ॥

ऋष्यन्धकवृष्णिकुर्वणः सेनान्ताण्ण्यो भवति विप्रतिषेधेन* । ऋष्यणोऽवकाशः—वासिष्ठः वैश्वामित्रः । ण्यस्यावकाशः—पारिषेण्यः वारिषेण्यः । जातसेनो नामर्षिस्तस्मादुभयं प्राप्नोति । ण्यो भवति विप्रतिषेधेन—जातसेन्यः ।

प्र०—तूत्तरस्यानिर्ज्ञातस्वरूपस्येति भावः । अथात्राहुः—कथं पुनर्नित्यानां शब्दानामनित्यान्धकादिवंशाश्रयेणान्वाख्यानं युज्यते । अत्र समाधिः—'त्रिपुरुषानूकं नाम कुर्या'दिति न्यायेनान्धकादिवंशा अपि नित्या एव । अथवानित्योपायाश्रयेणापि नित्यान्वाख्यानं दृश्यते । यथा 'शकाश्रयणेन

उ०—इत्यत्रार्थग्रहणमेव, इडविडादयः 'शिवादिषु पाठ्याः, शिवादिराकृतिगणः' इति गणरत्ने स्पष्टमभिधानाद्वा तेभ्यो ढगभाव इति भाष्याशय इत्याहुः ।

ननु ऋष्यण्मध्येऽपवादन्यायेन इञ एव बाधको न तु ढकोऽत आह—प्राप्नोति । भाष्ये—तन्नामिकाण्यद्व्यच इति । एवं च द्व्यचोऽपि 'स्त्रीभ्यो ढग्' इत्येव ढगिति 'द्व्यच' इति सूत्रं पृथक् न कर्तव्य-

* ऋष्यन्धकवृष्णिकुरुभ्यश्च, सेनान्तलक्षणकारिभ्यश्च ४ । १ । ११४; १५२

१—इदानीं स्वतन्त्रभारत इदमेव स्वीकृतमस्ति । तस्य चाद्य १ चैत्रः १८८६ तिथिर्वर्तते ।

अन्धकाण्योऽवकाशः—श्वाफल्कः श्वैत्रकः । एयस्य स एव । उग्रसेनो नामान्धकस्तस्मादुभयं प्राप्नोति । ण्यो भवति विप्रतिषेधेन—औग्रसेन्यः ।

वृष्ण्यणोऽवकाशः—वासुदेवः बालदेवः । एयस्य स एव । विष्वक्सेनो नाम वृष्णिस्तस्मादुभयं प्राप्नोति । ण्यो भवति विप्रतिषेधेन—वैष्वक्सेन्यः ।

कुर्वणोऽवकाशः—नाकुलः साहदेवः । एयस्य स एव । भीमसेनो नाम कुरुस्तस्मादुभयं प्राप्नोति । ण्यो भवति विप्रतिषेधेन—भैमसेन्यः ।

सेनान्ताण्ण्यो भवति विप्रतिषेधेन जातोग्रविष्वग्भीमेभ्य इति वक्तव्यम् ॥११४॥

## मातुरुत्संख्यासम्भद्रपूर्वायाः ॥ ४ । १ । ११५ ॥

किमर्थं स्त्रीलिङ्गेन निर्देशः क्रियते, न 'सङ्ख्यासंभद्रपूर्वस्ये'त्येवोच्येत ? स्त्रीलिङ्गो यो मातृशब्दस्तस्माद्यथा स्यात् । इह मा भूत्—संमिमीते संमाता, संमातुरपत्यं सांमात्र इति ॥ ११५ ॥

## कन्यायाः कनीन च ॥ ४ । १ । ११६ ॥

इदं विप्रतिषिद्धम् । को विप्रतिषेधः ? अपत्यमिति† वर्तते । यदि च 'कन्या नापत्यम्, अथापत्यं न कन्या । कन्या चापत्यं चेति विप्रतिषिद्धम् ।

---

प्र०—कालस्य ॥ ११४ ॥

मातुरुत् । अणि सिद्धे तत्सन्नियोगेनोत्त्वार्थं वचनम् । स्त्रीलिङ्ग इति । अर्थधर्मं स्त्रीत्वं शब्दे समारोप्य क्रिया शब्दनिवृत्त्यर्थः स्त्रीलिङ्गनिर्देशः कृतः । न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः । सम्बन्धिशब्दस्य प्रसिद्धतरत्वात्तस्यैव ग्रहणस्य सिद्धत्वात् । एतच्च 'बाह्वादिभ्यश्चे'त्यत्रोक्तम् ॥ ११५ ॥

कन्यायाः । यदीति । अक्षतयोनिः कन्या, सा कथमपत्येन सम्बध्येतेति भावः । अभिसम्बन्धपूर्वक इति । शास्त्रोक्तो विवाहोऽभिसम्बन्धस्तत्पूर्वके पुरुषसंयोगे कन्याशब्दो

---

उ०—मित्यर्थः । यथा शकेति । प्रसिद्धमेतज्ज्योतिर्विदाम् । जातादिभ्यः परो यः सेनाशब्दस्तदन्ताण्ण्यो विप्रतिषेधेनेति वक्तव्यमिति भाष्येऽन्वयः ॥ ११४ ॥

मातुरुत्संख्या । अणि सिद्ध इति । 'तस्यापत्यम्' इत्यनेन । भाष्ये—स्त्रीलिङ्गो य इति । नित्यं स्त्रीलिङ्ग इत्यर्थः । सम्बन्धिशब्दस्येति । श्वशुरादिवदित्यर्थः ॥ ११५ ॥

कन्यायाः । ननु प्रथमं वयः कन्याशब्दप्रवृत्तिनिमित्तम्, दैवात्प्रथमे वयस्यप्यपत्यसम्बन्धसम्भवात्को

---

† तस्यापत्यम् ४ । १ । ९२ । १—"कन्या कमनीया भवति, क्वेयं नेतव्येति वा, कमनेनानानीयत इति वा, कनतेर्वा स्यात् कान्तिकर्मणः" इति यास्कः ( निरु० नै० ४ । । २ । १६ ) तथा च महाभारते वनपर्वणि— "यस्मात् कामयते सर्वान् कमेर्धातोश्च भाविनि ! । तस्मात् कन्येह सुश्रोणि ! स्वतन्त्रा वरवर्णिनि ! ॥"

नैतद्विप्रतिषिद्धम् । कथम् ? कन्याशब्दोऽयं पुंसाभिसम्बन्धपूर्वके संप्रयोगे निवर्तते । या चेदानीं प्रागभिसम्बन्धात्पुंसा सह संप्रयोगं गच्छति तस्यां कन्याशब्दो वर्तत एव । कन्यायाः कन्योक्तायाः कन्याभिमतायाः सुदर्शनाया यदपत्यं स कानीन[1] इति ॥ ११६ ॥

## स्त्रीभ्यो ढक् ॥ ४ । १ । १२० ॥

इदं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते स्त्रीग्रहणे स्त्रीप्रत्ययग्रहणं वा स्यात्, स्त्रीशब्द-ग्रहणं वा, स्त्र्यर्थग्रहणं वा ? किं चातः ? यदि [स्त्री[2]] शब्दग्रहणमर्थग्रहणं वा इडविड्-

प्र०—निवर्तते । या तु शास्त्रोक्तेन विवाहसंस्कारेण विना पुरुषं युनक्ति सा कन्यात्वं न जहाति । कन्योक्ताया इति । कन्यैवासावुक्ता । तदेव व्याचष्टे—कन्याभिमताया इति । कन्यैव सा-भिमता स्मृतिकाराणामित्यर्थः । सुदर्शनाया इति । प्रकटदर्शनाया अगुप्तत्वादित्यर्थः । अन्ये त्वाहुः—मुनिदेवतामाहात्म्याद्या पुंयोगेऽप्यक्षतयोनिर्भवति यथा कुन्ती मन्त्राहूतदिनकरोत्पा-दितकर्णाख्यपुत्रापि पुनः कन्यैवाभूत् । तदपत्यं कानीनशब्दाभिधेयम् ॥ ११६ ॥

स्त्रीभ्यो । बहुवचननिर्देशात्स्वरूपग्रहणे निरस्ते पक्षत्रयसम्भावनापूर्वकं प्रत्ययग्रहणमिह व्यवस्थाप्यते—इदं सर्वेष्विति । तत्र क्वचित्कश्चित्पक्ष आश्रीयते, इह तु स्वरितत्वप्रतिज्ञानात् 'स्वरितेनाधिकार' इत्यस्य स्वरितेनाधिकारावगतिर्भवतीत्यस्याप्यर्थस्याश्रयणाट्टाबादिप्रत्ययग्र-हणम् । 'स्त्रियां क्तिं'न्नित्येतत्प्रकरणविहितास्तु प्रत्यया व्यवधानान्न गृह्यन्ते । स्त्रीशब्दग्रहणमिति । स्त्रीलिङ्गानां शब्दानां ग्रहणमित्यर्थः । स्त्र्यर्थग्रहणमिति । अर्थे कार्यासम्भवे तदभिधायिशब्द-

उ०—विरोधोऽत आह–अक्षतेति । नन्वभिसम्बन्धपूर्वके सम्प्रयोग इति पुनरुक्तमत आह शास्त्रोक्त इति । पुरुषं युनक्तीति । पुरुषमात्मनि योजयति, सम्बध्नाति, पुरुषेणात्मानं योजयतीति यावत् । कन्याभिमतत्वे हेतुः—सुदर्शनाया इति । अगुप्तत्वाद्धेतोः प्रकटदर्शनाया इत्यन्वयः । मन्त्राहूतेन दिनकरेणोत्पादितः कर्णाख्यः पुत्रो यस्या इति बहुव्रीहिः । सुदर्शनाया इति भाष्येणेदमेव बोध्यत इत्यन्ये ॥ ११६ ॥

स्त्रीभ्यो । ननु स्वरूपग्रहणपक्षः कुतो न शङ्कितोऽत आह—बहुवचनेति । ननु सर्वेष्वेकजातीय-सिद्धान्ताभावादाह—तत्र क्वचिदिति । यथा 'यू स्त्र्याख्यौ'वित्यत्र स्त्रीलिङ्गशब्दग्रहणं, 'स्त्रिया'मित्यादौ चार्थाभिधानमिति भावः । प्रकृतसूत्रस्थसिद्धान्तपक्षे बीजमाह—इह त्विति । नन्वेवं क्तिनादीनामपि ग्रहणं स्यादत आह स्त्रियां क्तिनिति । व्यवधानात्–अतिदूरत्वादित्यर्थः । ननु बहुवचनात्स्वरूपग्रहण-निरासेन स्त्रीशब्दग्रहणमित्यनुपपन्नमत आह स्त्रीलिङ्गानामिति । ननु शब्दस्यार्थस्य वा ग्रहणे एकजाती-यदोषकथनमयुक्तमत आह—अर्थे इति । एवञ्चात्र सूत्रे स्त्रीशब्दग्रहणं स्त्र्यर्थग्रहणमिति पक्षयोरविशेषेऽपि

१—'पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना' इति मनुः ( ९ । १७२ )। 'कानीनः कन्यकाजातो मातामहसुतो मत' इति याज्ञवल्क्यः ( व्यव० ८ । १२९ )

२—क्वचिन्न ।

ऐडविडः, पृथ्—पार्थः, उशिज्—औशिजः, दरद्—दारदः अत्रापि प्राप्नोति । अथ प्रत्ययग्रहणं लैखाभ्रेयः वैमात्रेय इति न सिध्यति ।

अस्तु प्रत्ययग्रहणम् । कथं लैखाभ्रेयः वैमात्रेय इति ? शुभ्रादिषु* पाठः करिष्यते ।

**वडवाया वृषे वाच्ये**

वडवाया वृषे वाच्ये ढग्वक्तव्यः । वडवाया वृषो वाडवेयः ।

**अण् क्रुञ्चाकोकिलात् स्मृतः ।**

क्रौञ्चः कौकिलः ।

**आरक्पुंसि ततोऽन्यत्र**

ततोऽन्यत्र पुंसि आरग्वक्तव्यः । मूषिकाया पुमान् मौषिकारः । मृग्याः पुमान् मार्गारः ।

**गोधाया ढ्रग्विधौ स्मृतः ॥**

प्र०—ग्रहणमेव सम्बध्यते । इडविडादयः शब्दाः स्त्रीवृत्तयो न तु स्त्रीप्रत्ययान्ता इति तेभ्योऽणेव भवति ।

वडवाया । इति । वृषो—बीजाश्वः । तेन चार्थेन विशेषविहितेनापत्यलक्षणोऽर्थो ढको बाध्यते । तेनापत्ये वाडव इति भवति । क्रौञ्च इति । अपत्य एवायं ढगपवादः ॥ १२० ॥

उ०—सम्भवमात्रेणोपन्यस्तौ । 'स्त्रियाः पुंव'दित्यादौ त्वनयोर्विशेषो बोध्यः । केचित्तु स्त्रीलिङ्गार्थबोधकशब्द-ग्रहणमेवात्र, इडविडादीनां शिवादिषु पाठः, अनभिधानाद्वा तेभ्यो ढगभावः, 'एको गोत्र'सूत्रोक्तरीतेः । यथा केभ्यश्चिदपत्यप्रत्ययसामान्याभावः, तथापि केषाञ्चिच्छुभ्रादिपाठ आवश्यकः, स्त्रीशब्दे स्वरितत्वप्रतिज्ञान-ञ्चाधिकमितीदं भाष्यमेकदेशयुक्तिरित्याहुः । अत्र प्रातिपदिकादिति न सम्बध्यते, विरोधादिति बोध्यम् । सम्बन्धेऽपि लिङ्गविशिष्टपरिभाषया न दोष इत्यन्ये ।

वाडव इतीति । 'न च चतुष्पाद्वाचित्वाड्ढञः प्राप्तिः स्वरे च विशेष इति वाच्यं, देवताविशेषस्य सूर्यस्त्रीरूपस्य गृहीताश्वारूपस्य वाचकवडवाशब्दस्यैवात्र ग्रहणात् । बीजाश्वशब्देनापि गृहीताश्वाकार-स्तत्पुमान् सूर्य एव । एवञ्च तस्य चतुष्पाज्जातिवाचित्वाभावान्न दोषः । अत एव 'वाडवो वडवानल' इत्यमरः । न चार्थस्यानुवाद्यत्वेन विशेषविहितेनार्थेनापत्यार्थो न बाध्यत इति वाच्यम्, अर्थस्यापि विधेयतायाः कार्यशब्दवादे सत्त्वेनादोषा'दिति केचित्, तन्न; 'चतुष्पादो गर्भिण्या' इत्यत्र 'जातिरिति वक्तव्यम्' इति वदता वार्तिककृतात्र चतुष्पाद्वाचिमात्रग्रहणस्य बोधनात् । ब्राह्मणीवाचिवडवाशब्दात्तु ढकोऽपवादे 'अवृद्धाभ्य' इत्यणि ब्राह्मणवाची वाडवः साधुः । अश्वावाचिनस्तु ढञि वाडवेय इत्येव । वाडव इत्यस्यापीष्टत्वे 'दाशरथाये'तिवत् साधुरिति बोध्यम् । वार्त्तिके—क्रुञ्चाकोकिलादिति—समाहारद्वन्द्व-निर्देशः । एवञ्च शिवादिगणे 'क्रुञ्चा' 'कोकिला'पाठोऽनार्ष इति बोध्यम् । ततोऽन्यत्रेति । गोधातोऽन्यत्रे-त्यर्थः । गोधाया ढ्रग्विधावपि पुंसीत्यर्थः स्मृतः । बाधस्तु न युक्तः, नित्यशब्दवादेऽर्थस्याविधेयत्वात्,

*शुभ्रादिभ्यश्च ४ । १ । १२३

गोधायाः पुमान् गौधेरः† ॥ १२० ॥

## चटकाया ऐरक् ॥ ४ । १ । १२८ ॥

### चटकायाः पुँल्लिङ्गनिर्देशः ॥ १ ॥

चटकायाः पुँल्लिङ्गेन निर्देशः कर्तव्यः । इहापि यथा स्यात्—चटकस्यापत्यं चाटकैरः ॥ यदि पुँल्लिङ्गेन निर्देशः क्रियते चटकाया अपत्यं चाटकैर इति न सिध्यति । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवती'त्येवं भविष्यति ।

### स्त्रियामपत्ये लुक् ॥ २ ॥

स्त्रियामपत्ये लुग्वक्तव्यः । चटकाया अपत्यं स्त्री चटका ॥ १२८ ॥

## आरगुदीचाम् ॥ ४ । १ । १३० ॥

### आरग्वचनमनर्थकं रका सिद्धत्वात् ॥ १ ॥

आरग्वचनमनर्थकम् । किं कारणम् ? रका सिद्धत्वात् । 'गोधाऽऽकारान्ता', रक् च प्रत्ययः ॥ एवं तर्हि सिद्धे सति यदारकं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? मौण्डारः जाडारः पाण्डार इत्येतत्सिद्धं भवतीति ॥ १३० ॥

## क्षुद्राभ्यो वा ॥ ४ । १ । १३१ ॥

'क्षुद्राभ्य' इत्युच्यते, का क्षुद्रा नाम ? अनियतपुंस्का, अङ्गहीना वा ॥ १३१ ॥

---

प्र०—चटकायाः । पुँल्लिङ्गेनेति । अन्यथा पुँल्लिङ्गादित्र् प्रसज्येत ॥ १२८ ॥
क्षुद्राभ्यो । अङ्गहीना वेति । वाशब्दश्चार्थे ॥ १३१ ॥

---

उ०—अत एव 'मूषिकाया अपत्यं पुमा'निति विग्रहप्रदर्शनं भाष्ये । वाडवेयेऽपि वडवाया अपत्यं वृष इत्येव विग्रह इत्युचितम् । एवं गोधाया अपत्यं पुमान् गौधेरः । अत एव 'त्रयो गौधारगौधेरगौधेया गोधिकात्मजे' इति कोष[1]: ॥ १२० ॥

चटकाया । स्त्रियामपत्य इति । स्त्रीरूपेऽपत्य इत्यर्थः । चटकाया अपत्यं स्त्री चटकेत्यत्र लुक्तद्धिते-त्यनेन टापो लुक्यर्थभेदेन लक्ष्यभेदात्पुनष्टाप् । अजादिषु चटकशब्दपाठाच्च न जातिलक्षणो ङीष् ॥१२८॥

आरगु । गोधाकारान्तेति । गोधाशब्द आकारान्त इत्यर्थः । अर्थधर्मस्य स्त्रीत्वस्य शब्दे आरोपः । अन्येभ्योऽपीति । न चाख्यानण्यन्तात्क्विपि गोधाशब्दस्यैवानाकारान्तत्वसम्भवेनान्यतः प्रवृत्तौ न मानम्, भाष्यप्रामाण्येनाख्यानण्यन्तात्क्विपोऽनुत्पत्तेः, 'अभिव्यक्ते'ति न्यायेन तस्यात्राग्रहणाच्चेति दिक् ॥१३०॥

---

† गोधाया ढ्रक् ४ । १ । १२६    १—अमरकोष इत्यर्थः ।

## ढकि लोपः ॥ ४ । १ । १३३ ॥

केन विहिते पितृष्वसुर्ढकि लोप इत्युच्यते ? एतदेव ज्ञापयति भवति पितृष्वसुर्ढगिति, यदयं ढकि लोपं शास्ति ॥ १३३ ॥

## मातृष्वसुश्च ॥ ४ । १ । १३४ ॥

'ढकि लोपः' [ १३३ ] इत्युच्यते, तत्रेदं न सिध्यति मातृष्वस्रीय इति । नैष दोषः । एवं वक्ष्यामि—'पितृष्वसुश्छण्' [ १३२ ] ढकि लोपः । ततो मातृष्वसुश्च । पितृष्वसुर्यदुक्तं तन्मातृष्वसुर्भवतीति । किं पुनस्तत् ? छण् ढकि लोपश्च ॥ १३४ ॥

## राजश्वशुराद्यत् ॥ ४ । १ । १३७ ॥

### राज्ञोऽपत्ये जातिग्रहणम् ॥ १ ॥

राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम् । राजन्यो नाम जातिः । क्व मा भूत् ? राजन इति* ॥ १३७ ॥

प्र०—मातृष्वसुः । तत्रेदमिति । अनन्तरस्य विधिं मन्यते । एवं वक्ष्यामिति । व्याख्यास्यामीत्यर्थः । चकारेण पितृष्वसुरित्यनुकृष्यते इति कार्यद्वयलाभः ॥ १३४ ॥

राजश्वशुरा । राजशब्दः क्षत्रियशब्दपर्यायः । जातिग्रहणमिति । यदा प्रकृतिप्रत्ययसमुदायेन जातिर्गम्यते तदा प्रत्ययो नान्यदा, तेन क्षत्रियजातौ प्रतिपिपादयिषितायां राजन्यशब्दप्रयोगो वैश्ये शूद्रे वा राजापत्ये 'राजन'शब्दप्रयोगः ॥ १३७ ॥

उ०—ढकि लोपः । भाष्ये–एतदेवेति । शुभ्रादिषु तत्पाठः कल्पनीय इति भावः । 'ऋष्यन्धके'ति सूत्रोक्तमतान्तररीत्या 'स्त्रीभ्य' इति वा । अनेन ज्ञापकेन 'स्त्रीभ्य इत्यर्थग्रहण'मित्येव ज्ञाप्यत इति बोध्यम् ॥ १३३ ॥

मातृष्वसुश्च । नन्वेमेव पाठाद्वक्ष्यामीत्यसङ्गतमत आह—एवं व्याख्यास्यामीति । वस्तुतः 'च'-रहितः सूत्र पाठ इति वक्ष्यामीति । यथाश्रुतमेवेत्यन्ये ॥ १३४ ॥

राजश्वशुरा । ननु राजशब्द ऐश्वर्यविशेषयोगनिमित्तक इति कथं ततः प्रत्ययेन जातिप्रतीतिरत आह—राजशब्द इति । भाष्ये—राज्ञोऽपत्य इति । अपत्य इति । प्रकृते इत्यर्थः । जातिश्चेद्वाच्या तदापत्ये यत्, अत एव राजन्यमनुष्यग्रहणस्यापत्याधिकारादन्यत्र लौकिकगोत्रग्रहणज्ञापकता प्रासुक्ता सङ्गच्छते ॥ १३७ ॥

* प्राग्दीव्यतोऽण् ४ । १ । ८३

## व्यन्सपत्ने ॥ ४ । १ । १४५ ॥

### व्यन्वचनमनर्थकं प्रत्ययार्थाभावात् ॥ १ ॥

व्यन्वचनमनर्थकम् । किं कारणम् ? 'प्रत्ययार्थाभावात्' । किमिदं प्रत्ययार्थाभावादिति ? अपत्यार्थाभावात् । अपत्यमिति† वर्तते, अनपत्ये चापि सपत्ने 'भ्रातृव्य'शब्दो वर्तते—'पाप्मना भ्रातृव्येणे'ति ।

अस्तु तावद्यदपत्यं सपत्नश्च तत्र भ्रातृव्य इति । कथं पाप्मना भ्रातृव्येणेति ? उपमानात्सिद्धम् । भ्रातृव्य इव भ्रातृव्यः । १४५ ॥

## गोत्रस्त्रियाः कुत्सने ण च ॥ ४ । १ । १४७ ॥

किमर्थो णकारः ? वृद्ध्यर्थः । 'ञ्णिती'ति वृद्धिर्यथा स्यात्* । गार्गो जाल्मः ।

### गोत्रस्त्रियाः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ १ ॥

गोत्रस्त्रियाः प्रत्ययस्य णित्करणमनर्थकम् । किं कारणम् ? 'वृद्धत्वात्प्रातिपदिकस्य' । वृद्धमेवैतत् प्रातिपदिकम् ॥ लुगर्थस्तर्हि णकारः कर्तव्यः । यल्लुगन्तमवृद्धं तत्र वृद्धिर्यथा स्यात्—वातण्डो‡ जाल्मः ।

### लुगर्थमिति चेन्न लुक्प्रतिषेधात् ॥ २ ॥

प्र०—व्यन् सपत्ने । प्रत्ययार्थाभावादिति । भ्रातृव्यशब्दः सर्वस्मिन्सपत्न इष्यते । न हि सर्वः सपत्नो भ्रातुरपत्यमित्यपत्यलक्षणस्य प्रत्ययार्थस्याभाव इत्यर्थः । अस्तु तावदिति । विरोधाभावात्सपत्नेनापत्यार्थो न बाध्यते । न च समुदायार्थः सपत्नः, प्रकृतिप्रत्ययार्थयोस्त्यागप्रसङ्गात् । न च गत्यन्तरसम्भवे तत्त्यागो युक्त इति भावः ॥ १४५ ॥

गोत्र । बहूनां गोत्रप्रत्ययानां वृद्धिमत्त्वदर्शनाद्विचारः—गोत्रस्त्रिया इति । वातण्ड इति ।

उ०—व्यन्सपत्ने । ननु शत्रुरूपप्रत्ययार्थप्रतीतेस्तदभावादित्ययुक्तमत आह—भ्रातृव्येति । भाष्ये—अस्तु तावद्यदपत्यमिति । अनुवर्त्ततामपत्यमितीत्यर्थः । ननु विशेषविहितेन सामान्यविहितस्य बाध उचितोऽत आह—विरोधाभावादिति । वस्तुतो बाधप्रसङ्ग एवात्र नेत्युक्तम् । न च समुदायार्थ इति । शुद्धरूढ एव, अपत्यार्थस्तु नास्त्येवेति शङ्काशयः ॥ १४५ ॥

गोत्रस्त्रियाः । फिनन्तस्यावृद्धस्यापि सत्वादाह—बहूनामिति । भाष्ये गोत्रेऽलुगिति । यद्यपि भूम्नि प्राप्तस्य लुकोऽलुगिति तत्सूत्रभाष्योक्तेरत्रालुकोऽप्राप्तिस्तथापि पुंवद्भावेन सिद्धेः फलाभावादेव

† तस्यापत्यम् ४ । १ । ९२ * तद्धितेष्वचामादेः ७ । २ । ११७

‡ वतण्डाच; लुक् स्त्रियाम्; शार्ङ्गरवाद्यञो ङीन् ४ । १ । १०८; १०९; ७३

लुगर्थमिति चेत्तन्न । किं कारणम् ? 'लुक्प्रतिषेधात्' । प्रतिषिध्यतेऽत्र[1] लुग्-'गोत्रेऽलुगचि' [ ४ । १ । ८९ ] इति ।

व्यवहितत्वादप्रतिषेधः । ईकारेण व्यवहितत्वात्प्रतिषेधो न प्राप्नोति ।

**व्यवहितत्वाप्रतिषेध इति चेन्न पुंवद्भावात् ॥ ३ ॥**

व्यवहितत्वादप्रतिषेध इति चेत् तन्न । किं कारणम् ? 'पुंवद्भावात्' । पुंवद्भावोऽत्र भवति भस्याढे तद्धिते पुंवद्भावो भवतीति‡ ।

**फिनर्थं तु ॥ ४ ॥**

फिनर्थं तु णकारः कर्तव्यः । यत् फिनन्तमवृद्धं तत्र वृद्धिर्यथा स्यात्—ग्लौचुकायनो§ जाल्मः ।

**पुंवद्भावप्रतिषेधार्थं च ॥ ५ ॥**

पुंवद्भावप्रतिषेधार्थं च णकारः कर्तव्यः । गार्गी भार्यास्य गार्गीभार्यः । 'वृद्धि-

प्र०—वतण्डस्यापत्यं गोत्रं स्त्री । 'वतण्डाच्चे'ति यञ् । तस्य 'लुक् स्त्रिया'मिति लुक् । शार्ङ्गरवादित्वान्ङीन् । वतण्ड्या अपत्यमिति णः । व्यवहितत्वादिति । 'अची'ति परसप्तमीं मन्यते । विषयसप्तम्यां तु न दोषः । अथवा यतो गोत्रप्रत्ययादव्यवहितोऽजादिरुत्पद्यते तस्यालुगिति विज्ञानाद्विषयसप्तम्यामपि दोषाय व्यवधानम् । पुंवद्भावादिति । पुंवद्भावेन रूपातिदेशाद्वातण्ड्यशब्दात्स्त्रीवृत्तेर्णप्रत्यय इति भावः ॥ ग्लौचुकायन इति । ग्लुचुकस्यापत्यं स्त्री, 'प्राचा'-मिति फिन्प्रत्ययः । 'इतो मनुष्यजाते'रिति ङीष् । पुंवद्भावे कृते णः ।

नास्ति गार्गेति । गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्यय, 'अस्त्रिया'मिति युवसंज्ञानिषेधाद्गोत्रसञ्ज्ञावस्थानादेको गोत्र इति नियमाद्गोत्रप्रत्ययान्तादपरगोत्रप्रत्ययानुत्पादात् ।

उ०—तदप्रवृत्तेर्वक्ष्यमाणतया नात्र सुष्ठु आदरः कृतः । 'व्यवहितत्वा'दिति वा भूम्यप्राप्तत्वस्याप्युपलक्षणम् । तद्ध्वनयन्नाह वातण्ड्यशब्दादिति पुंवद्भावेन ङीन इव लुकोऽपि निवृत्तिरित्यलुको नोपयोग इति भाष्यार्थ इति भावः । स्त्रीवृत्तेरिति । भूतपूर्वस्त्रीवृत्तेरित्यर्थः । पुंवद्भावेनार्थस्यानिवृत्तेः । अत एव 'वातण्ड्ययुवति'-रित्यादौ यञो लुक् न । भाष्ये—पुंवद्भावोऽत्र भवतीति । पुंवद्भावेनैव लुकः प्रतिषेधसिद्धिरिति भावः ।

---

१—'तत्र' पा० । ‡ भस्याढे तद्धिते ६ । ३ । ३५ वा० ११

§ प्राचामवृद्धात् फिन् बहुलम्; इतो मनुष्यजातेः ४ । १ । १६०; ६५ ग्लुचुकायन्या अपत्यं ग्लौचुकायनः ।

निमित्तस्ये'ति पुंवद्भावप्रतिषेधो यथा स्यात्* ।

गोत्राद्यूत्यस्त्रियामिति वचनादप्रयोजनम् ॥ ६ ॥

'गोत्राद्यूत्यस्त्रियाम्' [ ४ । १ । ९४ ] इति वचनादप्रयोजनमेतद्भवति । नास्ति गार्गा ।

अवंश्यत्वाद्वा स्त्रियाः प्रयोजनम् ॥ ७ ॥

अवंश्यत्वाद्वा स्त्रियाः प्रयोजनमेतद्भवति । न [ च[1] ] स्त्री वंश्या । अस्ति गार्गा स्त्री ।

अपर आह—द्वावेव वंशौ मातृवंशः पितृवंशश्च । यावता मातृवंशोऽप्यस्ति नास्ति गार्गा ॥ १४७ ॥

प्र०—अवंश्यत्वाद्वेति । गार्ग्या अपत्यं या स्त्री तस्या न युवसंज्ञा, नापि गोत्रसंज्ञा, न हि सा गर्गस्यापत्यम् । पौत्रप्रभृतेश्चापत्यस्य गोत्रसंज्ञा विधीयते, तदभावादेको गोत्र इति नियमाभावाण्णस्य भावादस्ति गार्गेत्यर्थः । न च स्त्री वंश्येति । पितृपितामहादिर्वंशो, न मातृमातामहादिरित्यर्थः । तस्मात्पुंवद्भावप्रतिषेधार्थो णकारः । न च 'जातेश्चे'ति प्रतिषेधः सिध्यति, गोत्रत्वाभावे जातित्वाभावात् । यदा च 'गोत्रं च चरणैः सहे'त्यत्रापत्यमात्रं गोत्रं गृह्यते तदा जातित्वमस्त्येव । फिनर्थस्तु कर्तव्य एव णकारो वृद्धये ।

मातृवंश इति । गार्ग्या अपत्यं या स्त्री सा मातृवंशेन गर्गकुला भवत्येवेति गर्गापेक्षया तस्या गोत्रत्वादेको गोत्र इति नियमात्प्रत्ययान्तराभावान्नास्ति गार्गा । पौत्रप्रभृतिग्रहणं तु व्यवहितापत्योपलक्षणम् । तस्मात्फिनर्थो णकारः ॥ १४७ ॥

उ०—न्याय्यत्वादाह—पुंवद्भावे कृत इति । ननु 'नास्ति गार्गे'त्यस्य 'गार्ग्या अपत्यं स्त्री नास्ती'ति मानाभावादत आह—गार्ग्या इति । गार्गाशब्दो नास्तीति भाष्यार्थ इति भावः ।

भाष्ये—अवंश्यत्वादिति । गोत्रभूतस्त्र्यपत्यस्त्रिया मूलपुरुषापतनहेतुत्वाभावेन तद्वंश्यत्वाभावात् तदनपत्यत्वेन न गोत्रत्वं, नापि युवत्वमित्यर्थः । तदाह—गार्ग्या अपत्यमिति । यत्तु 'सामान्यत एव न स्त्री वंश्येत्यर्थ' इति तन्न, 'गोत्रस्त्रिया' 'यञश्चे'त्यादीनामसङ्गत्यापत्तेः । यदपि गोत्रस्य अपत्यभूतस्त्रिया न वंश्यत्वमिति, तदपि न, 'स्त्रिया न युवसंज्ञे'ति निषेधवैयर्थ्यापत्तेः । मम तु गोत्रभूतपुरुषापत्यभूत-स्त्रियास्तत्त्वनिषेधेन चारितार्थ्यं स्पष्टमेव । णस्य भावादिति । 'एको गोत्रे' इति नियमेन गोत्रस्त्रिया गोत्रे विधानासम्भवाद्गोत्र इत्यस्यासम्बन्धेनापत्यसामान्ये एतद्विधानादिति भावः । यदा चेति । वस्तुत इदमयुक्तं 'गार्गे'त्यत्र भाष्ये ङीषोऽकरणादित्याहुः ॥ भाष्ये—द्वावेवेति । द्वावपीत्यर्थः । ननु 'पौत्रप्रभृती'-त्यत्र पुंस्त्वस्य विवक्षितत्वान्न गोत्रत्वमत आह—पौत्रप्रभृतीति ॥ १४७ ॥

* वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६ । ३ । ३९ ।

1—क्वचिन्न ।

शालङ्काः*, 'इञो गत्र' इत्यण् न प्राप्नोति । अस्तु तर्ह्यविशेषेण । कथमौपगवेर्यूनश्छात्रा औपगवीयाः ? गोत्रेणेञ' विशेषयिष्यामः—'गोत्रे य इञ्विहित' इति ॥ ९० ॥

## तस्यापत्यम् ॥ ४ । १ । ९२ ॥

### तस्येदमित्यपत्येऽपि

'तस्येदम्' [ ४ । ३ । १२० ] इत्यपत्येऽपि अणिसद्धः । तस्येदंविशेषा ह्येते—अपत्यं समूहो विकारो निवास इति† ॥ किमर्थं तर्हीदमुच्यते ?

---

प्र०—इञन्तं यूनि वर्तत इति गोत्राश्रय इञश्चेत्यण् न प्राप्नोति ।

गोत्रेणेञमिति । 'कण्वादिभ्यो गोत्र'इत्यत्र गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते । गोत्रप्रत्ययानुवादेन ह्यत्राऽण्विधीयते–'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्योऽण् भवती'ति । कण्वादयश्च गर्गादिषु पठितास्तत्र च गोत्र इति वर्तते । अपत्याधिकारे च गोत्रग्रहणादेव शास्त्रीयं गोत्रं गृह्यते । तदेव च 'कण्वादिभ्यो गोत्रे' इत्यत्रानूद्यते । तदेवेञश्चेत्यत्रानुवर्त्तते । तेन गोत्रे य इञ् विहितस्तदन्तादण् विधीयमानः शालङ्केर्भविष्यति न त्वौपगवेरित्यर्थः । नन्वौपगविशब्देऽनेन सूत्रेणेञो लुका भाव्यम् । नैष दोषः । पूर्वमेवास्योदाहरणस्य प्रत्याख्यानादन्यथासिद्धत्वादित्यभिप्रायेणेदमुक्तम् ॥ ९० ॥

तस्यापत्यम् । तस्येदमिति । इदमिति सम्बन्धिसामान्ये सर्वविशेषान्तर्भावादपत्यस्याऽप्यन्तर्भूतत्वादित्यर्थः । बाधका इति । जातौ बहुवचनम् । तस्येदमित्यनेन विधीमानस्याऽणो बाधकश्छस्तस्य बाधनार्थमिदं सूत्रमित्यर्थः । कथं पुनरिति । एकस्मिन्नर्थे प्राप्तौ सत्यां बाध्यबाधकभावो भवति । तत्र शेषेऽर्थे विधीयमानश्छः, अण् त्वनेनाऽपत्य इति भिन्नार्थत्वादनयोः कथं

---

उ०—भवतीत्यर्थः । नन्वविशेषेण ज्ञापने कथं 'कण्वादिभ्यो गोत्रे' इत्यत्र शास्त्रीयगोत्रग्रहणमित्यत आह—गोत्रप्रत्ययेति । गोत्राधिकारविहितप्रत्ययाऽनुवादेनेत्यर्थः । तत्र च 'गोत्र' इति स्वर्यत इति भावः । तदेव चेति । शास्त्रीयं गोत्रमित्यर्थः । तच्च युवत्वाऽनाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । न त्विति । यूनीञो विधानादित्यर्थः । इञो लुका भाव्यमिति । ननु लुक्यपि प्रत्ययलक्षणं सुलभं, न चेकाररूप इञ् इत्यर्थोन तत्, मानाऽभावादिति चिन्त्यमिदम् ॥ ९० ॥

तस्यापत्यम् । सर्वविशेषेति । सामर्थ्यादिति भावः । एतच्च 'तस्य'पदविचारे भाष्य एव स्फुटम् । ननु उदाहरणे एकस्य छस्यैवोपादानाद्बहुवचनमनुपपन्नमत आह—जाताविति । प्रयोगबाहुल्याऽभिप्रायेणेति वक्तुं युक्तम् । जातौ बहुवचनस्य भाष्ये प्रत्याख्यानात् । भिन्नार्थत्वादिति । न हि 'ब्राह्मणेभ्यो भोक्तुं दधि दीयतां कौण्डिन्याय तैलं स्नानाये'त्यत्र बाध्यबाधकभावोऽस्तीति भावः । यद्येवम् 'उत्सर्गः

---

* बाह्वादिभ्यश्च ४ । १ । ९६; पैलादिभ्यश्च २ । ४ । ५९ ।

† तस्य समूहः ४ । २ । ३७; तस्य विकारः ४ । ३ । १३४; तस्य निवासः ४ । २ । ६९

निमित्तस्ये'ति पुंवद्भावप्रतिषेधो यथा स्यात्* ।

गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम् ॥ ६ ॥

'गोत्राद्यून्यस्त्रियाम्' [ ४ । १ । ९४ ] इति वचनादप्रयोजनमेतद्भवति । नास्ति गार्गा ।

अवंश्यत्वाद्वा स्त्रियाः प्रयोजनम् ॥ ७ ॥

अवंश्यत्वाद्वा स्त्रियाः प्रयोजनमेतद्भवति । न [ च[1] ] स्त्री वंश्या । अस्ति गार्गा स्त्री ।

अपर आह—द्वावेव वंशौ मातृवंशः पितृवंशश्च । यावता मातृवंशोऽप्यस्ति नास्ति गार्गा ॥ १४७ ॥

प्र०—अवंश्यत्वाद्वेति । गार्ग्या अपत्यं या स्त्री तस्या न युवसंज्ञा, नापि गोत्रसंज्ञा, न हि सा गर्गस्यापत्यम् । पौत्रप्रभृतेश्चापत्यस्य गोत्रसंज्ञा विधीयते, तदभावादेको गोत्र इति नियमाभावाण्णस्य भावादस्ति गार्गेत्यर्थः । न च स्त्री वंश्येति । पितृपितामहादिर्वंशो, न मातृमातामहादिरित्यर्थः । तस्मात्पुंवद्भावप्रतिषेधार्थो णकारः । न च 'जातेश्चे'ति प्रतिषेधः सिध्यति, गोत्रत्वाभावे जातित्वाभावात् । यदा च 'गोत्रं च चरणैः सहे'त्यत्रापत्यमात्रं गोत्रं गृह्यते तदा जातित्वमस्त्येव । फिनर्थस्तु कर्तव्य एव णकारो वृद्धये ।

मातृवंश इति । गार्ग्या अपत्यं या स्त्री सा मातृवंशेन गर्गकुला भवत्येवेति गर्गापेक्षया तस्या गोत्रत्वादेको गोत्र इति नियमात्प्रत्ययान्तराभावान्नास्ति गार्गा । पौत्रप्रभृतिग्रहणं तु व्यवहितापत्योपलक्षणम् । तस्मात्फिनर्थो णकारः ॥ १४७ ॥

उ०—न्याय्यत्वादाह—पुंवद्भावे कृत इति । ननु 'नास्ति गार्गे'त्यस्य 'गार्ग्या अपत्यं स्त्री नास्ती'ति मानाभावादत आह—गार्ग्या इति । गार्गाशब्दो नास्तीति भाष्यार्थ इति भावः ।

भाष्ये—अवंश्यत्वादिति । गोत्रभूतस्त्र्यपत्यस्त्रिया मूलपुरुषापतनहेतुत्वाभावेन तद्वंश्यत्वाभावात् तदनपत्यत्वेन न गोत्रत्वं, नापि युवत्वमित्यर्थः । तदाह—गार्ग्या अपत्यमिति । यत्तु 'सामान्यत एव न स्त्री वंश्येत्यर्थ' इति तन्न, 'गोत्रस्त्रिया' 'यञश्चे'त्यादीनामसङ्गत्यापत्तेः । यदपि गोत्रस्य अपत्यभूतस्त्रिया न वंश्यत्वमिति, तदपि न, 'स्त्रिया न युवसंज्ञे'ति निषेधवैयर्थ्यापत्तेः । मम तु गोत्रभूतपुरुषापत्यभूतस्त्रियास्तत्त्वनिषेधेन चारितार्थ्यं स्पष्टमेव । णस्य भावादिति । 'एको गोत्रे' इति नियमेन गोत्रस्त्रिया गोत्रे विधानासम्भवाद्गोत्र इत्यस्यासम्बन्धेनापत्यसामान्ये एतद्विधानादिति भावः । यदा चेति । वस्तुत इदमयुक्तं 'गार्गे'त्यत्र भाष्ये ङीषोऽकरणादित्याहुः ॥ भाष्ये—द्वावेवेति । द्वावपीत्यर्थः । ननु 'पौत्रप्रभृती'-त्यत्र पुंस्त्वस्य विवक्षितत्वान्न गोत्रत्वमत आह—पौत्रप्रभृतीति ॥ १४७ ॥

* वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६ । ३ । ३९ ।

१—क्वचिन्न ।

शालङ्काः*, 'इञो गत्र' इत्यण् न प्राप्नोति । अस्तु तर्ह्यविशेषेण । कथमौपगवेर्यूनश्छात्रा औपगवीयाः ? गोत्रेणेञं विशेषयिष्यामः—'गोत्रे य इञ्विहित' इति ॥ ९० ॥

## तस्यापत्यम् ॥ ४ । १ । ९२ ॥

### तस्येदमित्यपत्येऽपि

'तस्येदम्' [ ४ । ३ । १२० ] इत्यपत्येऽपि अप्रसिद्धः । तस्येदंविशेषा ह्येते—अपत्यं समूहो विकारो निवास इति† ॥ किमर्थं तर्हीदमुच्यते ?

प्र०—इञन्तं यूनि वर्तत इति गोत्राश्रय इञश्चेत्यण् न प्राप्नोति ।

गोत्रेणेञमिति । 'कण्वादिभ्यो गोत्र'इत्यत्र गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते । गोत्रप्रत्ययानुवादेन ह्यत्राऽण्विधीयते–'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्योऽण् भवती'ति । कण्वादयश्च गर्गादिषु पठितास्तत्र च गोत्र इति वर्तते । अपत्याधिकारे च गोत्रग्रहणादेव शास्त्रीयं गोत्रं गृह्यते । तदेव च 'कण्वादिभ्यो गोत्रे' इत्यत्रानूद्यते । तदेवेञश्चेत्यत्रानुवर्त्तते । तेन गोत्रे य इञ् विहितस्तदन्तादण् विधीयमानः शालङ्केर्भविष्यति न त्वौपगवेरित्यर्थः । नन्वौपगविशब्देऽनेन सूत्रेणेञो लुका भाव्यम् । नैष दोषः । पूर्वमेवास्योदाहरणस्य प्रत्याख्यानादन्यथासिद्धत्वादित्यभिप्रायेणेदमुक्तम् ॥ ९० ॥

तस्यापत्यम् । तस्येदमिति । इदमिति सम्बन्धिसामान्ये सर्वविशेषान्तर्भावादपत्यस्याऽप्यन्तर्भूतत्वादित्यर्थः । बाधका इति । जातौ बहुवचनम् । तस्येदमित्यनेन विधीमानस्याऽणो बाधकश्छस्तस्य बाधनार्थमिदं सूत्रमित्यर्थः । कथं पुनरिति । एकस्मिन्नर्थे प्राप्तौ सत्यां बाध्यबाधकभावो भवति । तत्र शेषेऽर्थे विधीयमानश्छः, अण् त्वनेनाऽपत्य इति भिन्नार्थत्वादनयोः कथं

उ०—भवतीत्यर्थः । नन्वविशेषेण ज्ञापने कथं 'कण्वादिभ्यो गोत्रे' इत्यत्र शास्त्रीयगोत्रग्रहणमित्यत आह—गोत्रप्रत्ययेति । गोत्राधिकारविहतप्रत्ययाऽनुवादेनेत्यर्थः । तत्र च 'गोत्र' इति स्वर्यत इति भावः । तदेव चेति । शास्त्रीयं गोत्रमित्यर्थः । तच्च युवत्वाऽनाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । न त्विति । यूनीञो विधानादित्यर्थः । इञो लुका भाव्यमिति । ननु लुक्यपि प्रत्ययलक्षणं सुलभं, न चेकाररूप इञ् इत्यर्थान्न तत्, मानाऽभावादिति चिन्त्यमिदम् ॥ ९० ॥

तस्यापत्यम् । सर्वविशेषेति । सामर्थ्यादिति भावः । एतच्च 'तस्य'पदविचारे भाष्य एव स्फुटम् । ननु उदाहरणे एकस्य छस्यैवोपादानाद्बहुवचनमनुपपन्नमत आह—जाताविति । प्रयोगबाहुल्याऽभिप्रायेणेति वक्तुं युक्तम् । जातौ बहुवचनस्य भाष्ये प्रत्याख्यानात् । भिन्नार्थत्वादिति । न हि 'ब्राह्मणेभ्यो भोक्तुं दधि दीयतां कौण्डिन्याय तैलं स्नानाये'त्यत्र बाध्यबाधकभावोऽस्तीति भावः । यद्येवम् 'उत्सर्गः

* बाह्वादिभ्यश्च ४ । १ । ९६; पैलादिभ्यश्च २ । ४ । ५९ ।

† तस्य समूहः ४ । २ । ३७; तस्य विकारः ४ । ३ । १३४; तस्य निवासः ४ । २ । ६९

बाधनार्थं कृतं भवेत् ।

ये तस्य बाधकास्तद्बाधनार्थम् ॥ कथं पुनरशैषिकः शैषिकं बाधेत ?

उत्सर्गः शेष एवाऽसौ

यो ह्युत्सर्गः सोऽपि शेष एव ।

अथैतस्मिन्बाधकबाधनार्थे सति किं प्रयोजनम् ?

वृद्धान्य प्रयोजनम् ॥ १ ॥

वृद्धानि प्रयोजयन्ति‡ । भानोरपत्यं भानवः । श्यामगोरपत्यं श्यामगवः ।

कथं पुनरिच्छताऽप्यपवादः प्राप्नुवन् शक्यो बाधितुम् ? 'तस्य'ग्रहणसामर्थ्यात् । किमिदं भवानध्यारुह्य 'तस्य'ग्रहणस्यैव प्रयोजनमाह, न पुनः सर्वस्यैव योगस्य ? अवश्यमुत्तरार्थमर्थनिर्देशः कर्तव्यः । समर्थविभक्तिरपि तर्ह्यवश्यमुत्तरार्थं प्रतिनिर्देष्टव्या । एवं तर्हि 'योगविभागकरणसामर्थ्यात्' । इतरथा हि तस्यापत्यमत इञ्भवतीत्येव ब्रूयात् * ।

प्र०—बाध्यबाधकभाव इति प्रश्नः । उत्सर्ग इति । यदि योगविभागमकृत्वा 'तस्याऽपत्यमत इ'ञित्युच्यते तदा प्रकृतिविशेषसम्बद्धस्यैवापत्यार्थस्योपयोगात् प्रकृतिसामान्यसम्बद्धोऽपत्यार्थः शेष एव स्यादिति स्यादेव वृद्धादपत्ये छः । पृथग्योगे तु अपत्यार्थस्य ऽणादिविधानुपयोगाच्छेषत्वाभावाच्छस्याऽप्राप्तिरिति सैव बाधा कथ्यते । उत्सर्ग इति । प्रकृतिसामान्यसम्बद्धः सामान्यभूतोऽपत्यार्थ उक्तः । अथवेदमितिसामान्यभूतोऽर्थ उत्सर्गस्तदन्तर्भावादसत्यस्मिन्पृथग्योगेऽपत्यार्थ उत्सर्गः शेष एव भवति, अनुपयुक्तत्वादित्यर्थः ।

कथं पुनरिति । प्रकृतिसामान्याद्विधानादणेवोत्सर्गः । प्रकृतिविशेषात्तु विधानाच्छोऽपवाद इति मत्वा प्रश्नः । तस्यग्रहणसामर्थ्यादित्येकदेशेन सूत्रं लक्ष्यते । तेन पृथक्सूत्रारम्भादित्यर्थः ।

शेष एवे'त्यनुपपन्नमत आह—यदीति भाष्ये । 'उत्सर्ग' इत्युक्तिस्तु प्रकृतिविशेषाऽसम्बद्धत्वमात्रेण बोध्या । सामान्यसम्बद्ध इति । उक्तप्रकृतिविशेषातिरिक्तप्रकृतिसम्बद्ध इत्यर्थः । 'कथं पुनरशैषिकः शैषिकं बाधेते'ति भाष्ये न 'तस्येदमित्यदत्येऽपी'ति वदतः पूर्वपक्षः, 'तस्येद'मित्यपत्ये सिद्ध्यभावात्, तत्पूर्वपक्षस्याऽपि गलनात्, तस्मात्तृतीयस्योभयाऽनुपपत्त्युद्भाविका शङ्का । अत एव 'उत्सर्गः शेष एवाऽसौ' इति समाधिः । बाधकत्वाऽभावमात्रशङ्कायां स्वप्राप्तिरेव बाध इत्येवोत्तरं दद्यात् । तस्मात्पूर्वपक्षोपपादनपूर्वकं बाधकत्वाऽभावशङ्काया अपीदमुत्तरम् । व्याख्यातं च तथैवोपाध्यायैः । अपत्याऽर्थं उत्सर्ग इति । उत्सर्गभूतसामान्यशब्देनोपादानादिति भावः ।

ननु योगविभागेऽपत्ये छस्याऽप्राप्त्या बाधाया उक्तेः 'कथं पुन'रिति प्रश्नो'नुपपन्नोऽत आह—प्रकृतिसामान्यादिति । ननु तस्यग्रहणमपि 'अत इञ'इत्याद्यर्थं मत आह—एकदेशेनेति । गतिविशेष-

१—'बाधकबाधने' पा० ।

‡ वृद्धाच्छः ४ । २ । ११४

* अत इञ् ४ । १ । ९५

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'समर्थानां प्रथमाद्वा' [ ४ । १ । ८२ ] इति वर्तते । समर्थानां प्रथमस्य यदपत्यं पौत्रप्रभृतीति विज्ञायते ।

जीवद्वंश्यं च कुत्सितम् ॥ २ ॥

जीवद्वंश्यं च कुत्सितं गोत्रसंज्ञं भवतीति वक्तव्यम् । 'गार्ग्यस्त्वमसि जाल्म', 'वात्स्यस्त्वमसि जाल्म' [ इति ] ।

का पुनरिह कुत्सा ? पितृतो लोके व्यपदेशवताऽस्वतन्त्रेण भवितव्यम् । य इदानीं पितृमान्स्वतन्त्रो भवति स उच्यते 'गार्ग्यस्त्वमसि जाल्म' 'वात्स्यस्त्वमसि जाल्म', न त्वं पितृतो व्यपदेशमर्हसीति ॥ १६२ ॥

## जीवति तु वंश्ये युवा ॥ ४ । १ । १६३ ॥

जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं च ॥ १ ॥

प्र०—यूनीति वचनाद्वयूनि प्रत्ययप्रसङ्गः । गार्ग्यादेव च यूनीष्यते । समर्थानामिति । यद्यप्यपत्यशब्दस्य संबन्धिशब्दत्वेन चोद्यमेतत्परिह्रियते, न हि गर्गशब्दस्यापत्यत्वं सदपि वस्तुस्थित्यार्थ इति, तथापि परिहारान्तरसद्भावाद्भाष्यकारेणैतन्नोक्तम् ।

जीवद्वंश्यमिति । 'यूनश्च कुत्सया'मितिसूत्रमनार्षमिति वचनम् ।

न त्वं पितृत इति । पितृतो व्यापदेशो हि गार्ग्यायण इति भाव्यम् ॥ १६२ ॥

जीवति । अभिजनप्रबन्धो वंशः । तत्र भवो वंश्य—पित्रादिः । तस्मिन् जीवति यस्य

उ०—त्यत्वं न गर्गशब्दस्यार्थ इत्यन्वयः । सूत्रे—अपत्यशब्देनापत्यत्वेन बोधविषय उच्यत इत्याशयः । परे तु—सम्बन्धिशब्दत्वेऽपि 'यस्यापत्यं तं प्रति गोत्र'मित्यर्थलाभेऽपि गर्गस्य गोत्रसंज्ञा दुष्परिहरा । 'अपत्यत्वप्रकारकबोधविषय'मित्यर्थेन वारणे तु 'सम्बन्धिशब्दत्वेने'ति निष्फलम् । किं च यदापत्यशब्दः प्रकरणादिना पौत्रादिपरस्तदा ततो यूनि प्रत्ययप्रसङ्गः, तस्माद्भाष्योक्तमेव युक्तम् । 'समर्थानां प्रथमा'-दित्यनुवृत्त्यर्थमेवात्र पठितम्, न तु प्रथमे । तेन ह्यपत्यप्रत्ययान्तवाच्यस्य गोत्रसंज्ञेति फलति । किं च 'यस्यापत्यं विवक्षितं—यस्यापत्यमित्यर्थे प्रत्ययो विवक्षितः—यतः प्रत्ययो विवक्षित इति यावत्, 'तस्य पौत्रप्रभृति गोत्र'मित्यर्थः । न ह्येतावानर्थः सम्बन्धिशब्देनापि वाच्यवृत्त्या लभ्यत इत्याहुः ।

पितृत इति । वृत्तौ त्वीदृशे विषये 'वा गोत्रसंज्ञे' इत्युक्तम्, तच्चिन्त्यमिति भावः । केचित्त्वनेन 'युवैवे'ति नियमादप्राप्तं विधीयते, तेन पर्यायेण सापि, अयमेव वृत्त्याशय इत्याहुः । परन्त्विदं 'न त्वं पितृत' इति भाष्यविरुद्धम् ।पितृतो लोके व्यपदेशवतेत्यस्य-पितृमतेत्यर्थः, पितृमतेति शेषो वा ॥ १६२ ॥

जीवति तु । अभिजन उत्पादकः, तत्प्रबन्धः—तत्परम्परा । तत्र भव इति । दिगादित्वाद्यत् ।

१—क्वचिन्न ।

जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं चेति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'पौत्रप्रभृती'ति* वर्तते । एवं तर्ह्यन्वाचष्टे पौत्रभृतीति वर्तत इति । किमेतस्यान्वाख्याने प्रयोजनम् ?

तच्च दैवदत्त्यर्थम् ॥ २ ॥

देवदत्तस्यापत्यं दैवदत्तिरिति । अनन्तरं यदपत्यं तत्र युवसंज्ञा मा भूदिति । देवदत्तस्य तर्हि पौत्रे युवसंज्ञा प्राप्नोति, एतदपि पौत्रप्रभृति भवति ॥ न पौत्रप्रभृतीत्यनेनापत्यमभिसम्बध्यते 'पौत्रप्रभृति यदपत्य'मिति । किं तर्हि ? वंश्योऽभिसम्बध्यते 'पौत्रप्रभृति वंश्ये जीवति यदपत्य'मिति ।

एवमपि देवदत्तस्य द्वौ पुत्रौ तयोः कनीयसि युवसंज्ञा प्राप्नोति 'भ्रातरि च ज्यायसि' [ ४ । १ । १६४ ] इति ।

एवं तर्ह्यपत्यमेवाभिसम्बध्यते न तु पौत्रप्रभृतिसमानाधिकरणमपत्यम् । नैवं

प्र०—संज्ञेष्यते न स निर्दिष्ट इत्यपत्यमात्रस्य युवसंज्ञा प्राप्नोतीति मत्वाह—पौत्रप्रभृत्यपेक्षं चेति । 'इदं संज्ञाविधान'मिति शेषः । पौत्रप्रभृतीति व्यधिकरणं विशेषणमपत्यस्यापेक्ष्य युवसंज्ञा विधीयते—पौत्रप्रभृतेर्यदपत्यं तद्युवसंज्ञमित्यर्थः ।

अनन्तरमिति । अनन्तरस्य च युवसंज्ञायां 'ण्यक्षत्रियार्षे'ति लुक्प्रसङ्गः । इतरः—पौत्रप्रभृति यदपत्यमिति सामानाधिकरण्येन सम्बन्धं मत्वाह—देवदत्तस्येति । आचार्यदेशीय आह—न पौत्रप्रभृतीति । चोदक आह—एवमपीति । 'भ्रातरी'त्यनेन वंश्यस्य निवर्त्तितत्वात्तद्विशेषणस्यापि पौत्रप्रभृतिग्रहणस्य निवृत्तौ ज्यायसि भ्रातरि जीवत्यनन्तराप-

उ०—तेन पितृव्यमातुलादीनां न वंश्यत्वम् । पौत्रप्रभृत्येत्पदस्य बहुव्रीहित्वेनान्यपदार्थमाह—इदं संज्ञेति । नन्वेवं पौत्रस्यापि युवसंज्ञा स्यादत आह—व्यधिकरणमिति ।

अनन्तरस्य युवत्वे दोषमाह—अनन्तरस्य चेति । 'गोत्राद्यूनी'ति नियमाद्देवदत्तशब्दात्प्रत्ययो न स्यादित्यपि बोध्यम् । भाष्ये—देवदत्तस्य पौत्रस्येति पाठे-व्यधिकरणे षष्ठ्यौ । पौत्रप्रभृतिवंश्ये इति । एवञ्चापत्यमपि यस्य पौत्रप्रभृतिर्वंश्यस्तच्चतुर्थाद्येवेति भावः । ननु तस्य पौत्रप्रभृतिवंश्यकत्वाभावात्कथं संज्ञाऽऽपादनमत आह—भ्रातरीत्यनेनेति । 'भ्रातरि च ज्यायसी'ति सूत्र इति भावः । वंश्यस्य—वंश्यपदस्य । अन्यथेति । तृतीयपरगार्ग्यायण्यादिशब्दाद्यूनि प्रत्ययवारणाय कृतया 'प्रथमा'दित्यनुवृत्त्यैव समर्थानाम्प्रथमस्य यत्पौत्रप्रभृत्यनेनैव गर्गादिवारणेनास्य फलाभाव इति भावः । न चापत्यग्रहणानुवृत्त्यैवास्यार्थस्य सिद्धौ पुनरपत्यग्रहणं व्यर्थमेवेति वाच्यं; तस्य समर्थविभक्तिसम्बद्धत्वेनेहाऽसम्बन्धात् । न चात्र करणं 'ते तद्राजा' इत्यत्राञादीनामेव परामर्शार्थं, 'तद्राजा' इति महासंज्ञया तेषामेव सम्बन्धात् ।

* अपत्यं पौत्रप्रभृति गोत्रम् ४ । १ । १६२ ।

विज्ञायते पौत्रप्रभृति यदपत्यमिति । कथं तर्हि ? गोत्रप्रभृतेयदपत्यमिति ।

वृद्धस्य च पूजायाम् ॥ ३ ॥

वृद्धस्य च पूजायां युवसञ्ज्ञा वक्तव्या । तत्रभवन्ता गार्ग्यायणाः । तत्रभवन्तो वात्स्यायनाः ॥ का पुनरिह पूजा ? युवत्वं लोके ईप्सितं पूजेत्युपचर्यते । तत्रभवन्तो युवत्वेनोपचर्यमाणाः प्रीता भवन्ति ।

आपत्यो वा गोत्रम् ॥ ४ ॥

अथवाऽऽपत्यो गोत्रसञ्ज्ञो भवतीति वक्तव्यम् ।

परमप्रकृतेश्चापत्यः ॥ ५ ॥

परमप्रकृतेश्चाऽऽपत्यो भवतीति वक्तव्यम् ।

आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः ॥ ६ ॥

आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयः प्रत्ययो वक्तव्यः, युवसंज्ञश्च भवतीति वक्तव्यम् ।

स चास्त्रियाम् ॥ ७ ॥

स चास्त्रियां भवतीति वक्तव्यम्† ।

एकोगोत्रग्रहणानर्थक्यं च ॥ ८ ॥

एवं च कृत्वैको गोत्रग्रहणमनर्थकं भवति‡ ।

बहुवचनलोपिषु च सिद्धम् ॥ ९ ॥

प्र०—त्यस्यापि कनीयसो युवसंज्ञाप्रसङ्ग इत्यर्थः । कथं तर्हीति । एतच्चेहार्थादपत्यग्रहणाल्लभ्यते । अन्यथा पौत्रप्रभृतेरपत्यत्वाव्यभिचारादनर्थकमेवापत्यग्रहणं स्यात् ।

वृद्धस्येति । सूत्रेषु तु 'वद्धस्य च पूजाया'मिति केश्चिद्वार्त्तिकदर्शनात् प्रक्षिप्तम् । गार्ग्यायणा इति । युवसंज्ञाविधानसामर्थ्यात्स्वार्थे युवप्रत्ययः । युवत्वमिति ननु युवशब्दोऽनपेक्षितप्रवृत्तनिमित्त एव संज्ञेति कथमेतदुच्यते ? प्रायेणाल्पवयसो जीवद्वंश्यत्वं संभवतीति तदध्यारोपः पूजेत्यदोषः । आपत्यो वेति । 'गोत्रेऽलुगची'त्यत्र व्याख्यातम् ॥ १६३ ॥

उ०—युवसंज्ञेति । अत्रापि वृत्त्युक्तो विकल्पश्चिन्त्यः । तदध्यारोप इति । तदध्यारोपमूलतत्सहचरितवयसोऽध्यारोप इप्सितत्वेन पूजेत्यर्थः ॥ १६३ ॥

१—'पूजिता' पा० ।

२—"आपत्यो वा गोत्र'मिति वार्तिकपाठो 'जीवती'ति सूत्रे भाष्ये क्वचित्पुस्तके दृश्यते स युक्ततरः, आपत्यानां स्त्रीपुंसयोरेव वृत्तेः" इति नागेशः [ उद्द्योते ४ । १ । ८९ ] ।

† गोत्राद् यून्यस्त्रियाम् ४ । १ । ९४ ‡ एको गोत्रे ४ । १ । ९३

बहुवचनलोपिषु च सिद्धं भवति। तत्र बिदानामपत्यं माणवक इति विगृह्य बिदशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति—बैदः बैदौ। बैदस्यापत्यानि बहवो माणवका इति विगृह्य बिदशब्दाद्बहुषूत्पत्तिर्भविष्यति—बिदा इति॥ १६३॥

## वान्यस्मिन्सपिण्डे स्थविरतरे जीवति॥ ४। १। १६५॥

अन्यग्रहणं किमर्थम्? भ्रातरीति* वर्तते, सपिण्डमात्रे यथा स्यात्।

अथ स्थविरतरग्रहणं किमर्थम्? उभयतो विशिष्टे यथा स्यात् स्थानतो वयस्तश्च।

अथ जीवतीति† वर्तमाने पुनर्जीवतिग्रहणं किमर्थम्? जीवतो जीवति यथा

प्र०—वान्यस्मिन्। सपिण्डमात्र इति। अन्यथा पूर्वेण नित्यायां युवसंज्ञायां प्राप्तायामियं विभाषा स्यात्। उभयत इति। 'ज्यायसी'त्यनुवृत्त्या वयःप्रकर्षे लब्धे स्थविरतर इति वचनसामर्थ्यादुभयनिमित्तः प्रकर्ष आश्रीयते। जीवत इति। जीवतीत्याख्यातपदं संज्ञिवि-

उ०—वान्यस्मिन्सपिण्डे। भाष्ये—अन्यग्रहणं किमर्थमिति। अन्यस्मिन्सपिण्डे इति किमर्थमिति प्रश्नः। वर्तते इति भाष्यस्य—सन्निहितं वर्तते इत्यर्थः। तथा च तदनुवृत्तिः स्यादिति भावः। स्थविरतरग्रहणं विद्यादिकृतोत्कर्षलाभार्थं स्यादित्याशयः। अत्र भ्रातुरन्यस्मिन्निति पर्युदासान्मातृसापिण्ड्यं न गृह्यत इति वृत्तिस्वरसः। अविशेषात्तदपि गृह्यत इत्यन्ये। पूर्वेणेति। 'भ्रातरी'त्यनेनेत्यर्थः। पूर्वसूत्रं स्वस्थविरतरार्थं, मृतस्य संज्ञार्थं च स्यादिति भावः।

केचित्तु—अन्यग्रहणं किमर्थमिति। सपिण्डग्रहणसामर्थ्याद्भ्रातरीत्यस्य निवृत्तिर्भविष्यति, न च तन्निवृत्तावपि भ्रातृरूपसपिण्डे जीवति जीवतः परत्वाद्विकल्प एव स्यात्, पूर्वसूत्रं तु मृतस्य संज्ञार्थमिति तद्व्यावृत्तयेऽन्यग्रहणमिति वाच्यं, 'स्थानवयोभ्यामुत्कृष्ट' इत्यर्थकस्थविरतरपदेनैव वारणात्। न हि भ्राता स्थानत उत्कृष्टः, किन्तु वयसैवेति—प्रश्नाशयः। उत्तरस्य तु–केवलस्थविरतरसपिण्डमात्रे यथा स्यात् न तु भ्रातृसहितान्यसपिण्डेऽपि जीवतीत्यर्थं इत्याशयः। तेन तत्र पूर्वेण नित्यमेव। भ्रातरीति वर्त्तत इत्यस्य–'भ्रातरि च ज्यायसी'ति सूत्रं वर्त्तत इत्यर्थः। 'तद्विषये मा भू'दिति शेषः। सपिण्डमात्रे—इत्यस्य तद्रहितसपिण्डमात्रे इत्यर्थ इत्याहुः।

यत्तु वृत्तौ पितृव्ये पितामहे भ्रातरि वा वयसाधिके जीवति गार्ग्यायणो गार्ग्यो वेत्युक्तं तच्चिन्त्यम्। भ्रातरि केवलेऽन्यसहिते वा जीवति जीवतोऽपि नित्यसंज्ञाया एव स्वीकारात्। तत्र भ्रातृपदेन पितामहभ्रातेत्यर्थं इत्यन्ये। सामर्थ्यमुपपादयति–ज्यायसीत्यनुवृत्त्येति। स्थानम्–पितृव्यत्वादि। पितृव्यादयो हि कनिष्ठा अपि स्थानतो ज्येष्ठाः। नन्वेवमपि स्थविरग्रहणसामर्थ्यादेवोभयतो विशिष्टलाभे तरनिर्देशो व्यर्थ इति चेन्न, 'ज्यायसी'तिवत्तरबित्याशयात्। ननु सप्तम्यन्तजीवतिपदेन संज्ञिनो विशेषणा-

* भ्रातरि च ज्यायसि ४। १। १६४। † जीवति तु वंश्ये युवा ४। १। १६३।

स्यात्, मृते मा भूत् । मृते हि 'गार्ग्यो मृत' इत्येव भवितव्यम् ।

अथ गोत्रयूनोः समावेशो भवति, उताहो न ? किं च प्राप्नोति ? बाढं प्राप्नोति, न ह्ययमेकसञ्ज्ञाधिकारः । किं चातः ?

**गोत्रयूनोः समावेशे को दोषस्तत्कृतं भवेत् ।**

गोत्रयूनोः समावेशे को दोषः ? तत्कृतं प्राप्नोति । गोत्राश्रया विधयो यून्यपि प्राप्नुवन्ति—यास्कायनयः लाह्यायनयः* । 'यस्कादिभ्यो गोत्रे' [ २ । ४ । ६३ ] इति लुक्प्राप्नोति ।

**यस्कादिषु न दोषोऽस्ति 'न यूनी'त्यनुवर्तनात् ॥**

यस्कादिषु न दोषः । किं कारणम् ? 'न यूनी'त्यनुवर्तनात्' । 'न यूनी'ति तत्रानुवर्तते । क्व प्रकृतम् ? 'न तौल्वलिभ्यः' [ २ । ४ । ६१ ] इति ।

**दोषोऽत्रिबिदपञ्चाला 'न यूनी'त्यनुवर्तनात् ।**

यदि 'न यूनी'त्यनुवर्तते अत्रयः बिदाः पञ्चाला माणवका इति† न सिध्यति । नैष दोषः । सम्बन्धमनुवर्तिष्यते । 'न तौल्वलिभ्यः', 'तद्राजस्य बहुषु तेनैवा-

प्र०—शेषणार्थमिहोपात्तमित्यर्थः । मृते हीति ॥ संज्ञिनि सपिण्डे चेति भावः । अथेति । एकसंज्ञाधिकारादन्यत्र समावेशस्य दर्शनादर्शनाभ्यां प्रश्नः ।

यास्कायनय इति । यस्कस्यापत्यं गोत्रमिति–शिवाद्यण् । तदन्ताद्यूनि 'अणो द्व्यच' इति फिञ् । एकदेशविकृतस्यानन्यत्वाद्वृद्धौ यस्येति लोपे च यास्केतिशब्दो यस्कशब्द एवेति लुक् प्राप्नोति ॥ न यूनीति । तत्र वाक्यभेदेन सम्बन्धो'यस्कादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति, यूनि तु न भवती'ति ॥ अत्रय इति । अत्रेर्गोत्रे 'इतश्चानिञ' इति ढक् । बिदाद्यञ् । पञ्चालाज्जनपदशब्दादित्यञ् । ततो बहुषु युवस्वत इञ् । तस्य 'ण्यक्षत्रियार्षे'ति लुकि कृते ढगञो-र्लुगिष्यते स 'न यूनी'त्यनुवर्तनान्न प्राप्नोति । सम्बन्धमिति । तेन 'यस्कादिभ्यो गोत्रे' इत्यत्रैव 'न यूनी'ति सम्बध्यते नान्यत्रेत्यर्थः ।

उ०—सम्भवात्कथं मृतस्य संज्ञानिवृत्तिरत आह–आख्यातेति । संज्ञिनीति । संज्ञिनि मृतेऽवंश्ये पितृव्यमातुलादौ जीवतीत्यर्थः । वंश्ये जीवति मृतस्यापि नित्ययुवसंज्ञाया इष्टत्वादिति बोध्यम् । सपिण्डे चेति । 'मृते हि गार्ग्यो मृत इत्येवे'ति भाष्ये पाठ इति भावः । समावेशस्येति । कृत्कृत्यप्रत्ययसंज्ञानां सामावेशदर्शनं, सार्वधातुकार्धधातुकयोश्च समावेशादर्शनमित्यर्थः । भाष्ये—किं च प्राप्नोतीत्यस्य समावेशः किं प्राप्नोतीत्यर्थः ॥ ननु यास्कादयस्परो न तु यस्कादत आह—एकदेशेति ।

* शिवादिभ्योऽण्; अणो द्व्यचः ४ । १ । ११२; १५६ ।

† इतश्चानिञः; अनृष्यानन्तर्ये बिदादिभ्योऽञ्; जनपदशब्दात् क्षत्रियादञ्; अत इञ् ४ । १ । १२२; १०४; १६८; ९५; ण्यक्षत्रियार्ष०; यञञोश्च; अत्रिभृगुकुत्स० २ । ४ । ५८; ६४; ६५

स्त्रियां' लुग्भवति तौल्वलिभ्य यूनि न। 'यस्कादिभ्यो गोत्रे' लुग्भवति यूनि न। तौल्वलिभ्य इति निवृत्तम्। 'यञञोश्च' 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' लुग्भवति। 'यूनि ने'त्यपि निवृत्तम्।

इह तर्हि काण्व्यायनस्य छात्राः काण्व्यायनीयाः‡ 'कण्वादिभ्यो गोत्रे' [४।२।१११] इत्यण्प्राप्नोति।

कण्वादिषु न दोषोऽस्ति न यूंन्यस्ति ततः परम्॥

कण्वादिषु दोषो नास्ति। किं कारणम्? 'न यून्यस्ति ततः परम्'। कण्वादिभ्यो यो विहितस्तदन्तात्प्रातिपदिकादित्युच्यते, यश्चात्र कण्वादिभ्यो विहितो न तदन्तं प्रातिपदिकम्, यदन्तं च प्रातिपदिकं नासौ कण्वादिभ्यः [ परः[२] ]।

इह तर्ह्यौपगवस्यापत्यमौपगविरिति 'एको गोत्रे' [४।१।९३] इत्येतस्मान्नियमात्प्रत्ययो न प्राप्नोति*।

एको गोत्रे प्रतिपदं

प्रतिपदमत्र प्रत्यया विधीयन्ते 'गोत्राद्यून्यस्त्रियाम्' [९४] इति। तदन्तात्तर्ह्यनेकः प्रत्ययः प्राप्नोति†।

प्र०—इह तर्हीति। व्यवहितेऽपि परशब्दस्य वृत्तिदर्शनात्कण्वशब्दात्परः फग्भवतीति गोत्रसंज्ञायामण्प्रसङ्गः।

विहितशेषणाश्रयेण परिहारमाह—कण्वादिष्विति। कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तात्प्रातिपदकाच्छेषेऽर्थेऽण्प्रत्यय इति सूत्रार्थाश्रयणात्तद्दोषाभावः।

प्रतिपदमिति। 'एको गोत्रे' इति नियमादप्राप्तो यून्यपरः प्रत्ययो विधीयत इत्यर्थः। तदन्तात्तर्हीति। यदि 'एको गोत्रे' इति नियमो बाध्यते तदौपगवेर्यूनोऽपत्यमित्यत्रापि यूनो

उ०—न प्राप्नोतीति। 'शिष्यमाणं लुप्यमानार्थाभिधायी'ति न्यायेन ढगाद्यन्तानां यूनि वृत्तेरिति भावः। 'अत्रिभृग्वि'ति 'यञञोश्चे'ति च ढगञोर्लुक्। ननु कण्वादिभ्य परो यो गोत्रप्रत्यय इति तदर्थः, अयं च न कण्वादिभ्यः परः, किन्तु काण्व्यादत आह—व्यवहितेऽपीति। प्रत्ययानां परेषामेव विधानाज्झटिति परशब्दस्यैवाक्षेप इति भावः।

विहितेति। 'तस्मा'दिति परिभाषयाव्यवहितपरत्वलाभेन दोषवारणसम्भवेऽपि लाघवादिदमेवाहतम्। विहितविशेषणस्यापि तत्रैव तात्पर्यमिति परे। 'न यून्यस्ति ततः पर'मिति भाष्यपाठे यद्युवरूपै गोत्रेऽस्ति फग्रूपं न तत्कण्वादिभ्यो विहितं परमित्यर्थः। विहिताद्धि ततः—कण्वादिभ्यो विहितात्—विहितप्रत्ययान्तात् परं—परदेशेऽणिवधानमित्यर्थः। भाष्ये—न तदन्तं प्रातिपदिकतिमिति। 'शैषिकप्रकृतिभूत'मिति शेषः। भाष्ये—तदन्तादिति। अणन्तादित्यर्थः।

‡ गर्गादिभ्यो यञ्; यञिञोश्च ४।१।१०५; १०१; वृद्धाच्छः ४।२।११४।

१—'विहिताद्धि ततः पर'मिति पाठो नागेशाभिमतः।

२—क्वचिन्न।

* प्राग्दीव्यतोऽण्; अत इञ् ४।१।८३; ९५।

† यञिञोश्च ४।१।१०१।

गोत्राद्यूनि च तत्स्मरेत् ।

गोत्राद्यून्यस्त्रियामिति तत्स्मरेत् । किम् ? एक इत्येव ।

गोत्रे तर्ह्यलुगुक्तः‡ स यून्यपि प्राप्नोति । अस्तु । पुनर्यूनि लुग्भविष्यति+ । नैवं शक्यम् । फक्फिञोर्दोषः स्यात्—शालङ्केर्यूनश्छात्राः शालङ्काः× । पैलस्य पैलीयाः* । 'फक्फिञोरन्यतरस्याम्' [ ४ । १ । ९१ ] इत्यन्यतरस्यां श्रवणं

प्र०—गोत्रत्वे सति 'यञिञोश्चे'ति फक्प्रसङ्ग इत्यर्थः ।

गोत्रादिति । 'गोत्राद्यूनी'त्यत्रैकग्रहणमनुवर्तते, तेनैकस्यैव युवप्रत्ययस्यानुज्ञानादनेकः प्रत्ययो न भविष्यतीत्यर्थः । यद्यप्याद्यस्य युवप्रत्ययस्य 'यूनि लु'गिति लुकि कृते इष्टं सिध्यति, तथापि परिहारान्तरसम्भवादेतन्नाश्रितम् ।

स यून्यपीति । अत्रीणां यूनां छात्रा इत्यादावित्यर्थः । पुनरिति । परत्वादलुकं बाधित्वा लुग्भविष्यतीत्यर्थः । शालङ्केरिति । शलङ्कोरपत्यं गोत्रमिति बाह्वादेराकृतिगणत्वादिञ् । पैलादिषु शालङ्किशब्दपाठान्निपातनाद्वेञ्प्रत्ययः शलङ्काद्देशश्च । ततः शालङ्केरपत्यं युवेति 'यञिञोश्चे'ति फक् । तस्य 'पैलादिभ्यश्चे'ति लुक् । ततः शालङ्केर्यूनश्छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां यूनो गोत्रसंज्ञायां सत्यां पैलादिषु लुको 'गोत्रे लुगची'त्यलुग्बाधकः स्यात्, तस्यापि 'यूनि लु'गिति परत्वाल्लुग्बाधकः, तस्यापि 'फक्फिञोरन्यतरस्या'मिति विकल्प इति—पक्षे तु फकः श्रवणप्रसङ्गः । यदा तु यूनो गोत्रसंज्ञा नास्ति तदा 'गोत्रेऽलुगची'त्यस्याप्रवृत्तौ 'पैलादिभ्यश्चे'ति लुग्भवत्येव । ततः 'कण्वादिभ्यो गोत्रे' 'इञश्चे'त्यणि सति शालङ्का इति भवति । 'फक्फिञोरन्यतरस्या'मित्यय च विकल्पोऽनन्तरस्य 'यूनि लु'गित्यस्यैव बाधको न तु पैलादिलुको व्यव-

उ०—यद्यपीति । प्राग्दीव्यतीयाजादिप्रत्यये विषयभूते लुग्विधानादिञ एव प्राप्त्येष्टसिद्धिरिति भावः । अत्रेदञ्चिन्त्य—लुक्यपि प्रत्ययलक्षणेन इञन्तत्वात्फक्प्रसङ्गात्येवेति भाष्योक्त एव समाधिरिति । अत्रीणामिति । अत्रिशब्दाद् 'द्व्यचः' इति ढकि तदन्ताद्युवबहुत्वेऽत इञि तस्य 'ण्यक्षत्रिये'ति एकवचनद्विवचनान्तस्य प्रवृत्तौ 'बहुषु लोपो यूनी'ति 'अत्रिभृगुवत्सि'ति सूत्रेण ढको लुकि 'अत्रीणा'मिति भवति । अत्र प्राग्दीव्यतीयाजादिविवक्षायामलुगिञः प्रसज्येत, एवञ्च ढगन्तस्य बहुत्वं वर्तनाड्ढको लुगभावे 'इञश्चे'त्यणि 'आत्रेयाः'

‡ गोत्रेऽलुगचि ४ । १ । ८९ । + यूनि लुक् ४ । १ । ९० ।

× बाह्वादिभ्यश्च; यञिञोश्च ४।१। ९६, १०१; पैलादिभ्यश्च २।४। ५९; इञश्च ४।२।११२

* पीलाया वा; अणो द्व्यचः ४ । १ । ११८; १५६ पैलादिभ्यश्च २ । ४ । ५९; वृद्धाच्छः ४ । २ । ११४

प्रसज्येत । तस्माद्युवसंज्ञायां गोत्रसंज्ञायाः प्रतिषेधो वक्तव्यः ।

न वक्तव्यः । तुर्नियामकः । तुः क्रियते§ स नियामको भविष्यति—'जीवति तु वंश्येऽपत्यं युवसंज्ञमेव भवती'ति ।

यदि तर्हि युवसंज्ञायां गोत्रसंज्ञा न भवति, य इष्यन्ते यूनि गोत्राश्रया विधयस्ते न सिध्यन्ति—गार्ग्यायणानां समूहो गार्ग्यायणकम्, गार्ग्यायणानां किञ्चिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः‡ । गोत्राश्रयो वुञ् न प्राप्नोति ।

एवं तर्हि—

**राजन्याद्वुञ्मनुष्याच्च ज्ञापकं लौकिकं परम् ॥**

यदयं वुञ्विधौ+ राजन्यमनुष्ययोर्ग्रहणं× करोति तज्ज्ञापयत्याचार्यो 'लौकिकं परं गोत्रग्रहण'मिति । युवा च लोके 'गोत्र'मित्युपचर्यते । किंगोत्रोऽसि माणवक ? गार्ग्यायणः । किंगोत्रोऽसि माणवक ? वात्स्यायनः ।

यद्येतज्ज्ञाप्यते, औपगवेर्यूनश्छात्रा औपगवीयाः इञो गोत्र इत्यण्प्राप्नोति* । सामूहिकेषु ज्ञापकम् । यदि सामूहिकेषु ज्ञापकं गार्ग्यायणानां किंचिद्गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः, गोत्राश्रयो वुञ् न प्राप्नोति । वुञ्विधौ ज्ञापकम् । वुञ्विधावेतज्ज्ञापकम् । यदि वुञ्विधौ ज्ञापकं शालङ्केर्यूनश्छात्राः शालङ्काः इञो गोत्र इत्यण्न प्राप्नोति ।

अस्तु तर्ह्यविशेषेण । कथमौपगवेर्यूनश्छात्रा औपगवीयाः ? 'इञो गोत्रे'

प्र०—हितस्यान्तरङ्गस्य च। पैलीया इति। पीलाया अपत्यं गोत्रं 'पीलाया वे'त्यण् । ततो यून्य'णो द्व्यच' इति फिञ् । तस्य 'पैलादिभ्यश्चे'ति लुक् । ततो वृद्धाच्छः । तुर्नियामक इति ।

उ०—इति स्यात् । इञो लुकि तु ढकोऽपि लुकि प्रत्ययलक्षणेनेञन्तत्वादणि 'आत्रा' इति रूपमिति भावः । परत्वादिति । 'अस्तु' इति भाष्यस्य 'प्राप्नोतु' इत्यर्थं इति भावः । नन्वन्तरङ्गत्वात् 'फक्फिञो'रिति लुकः पैलादिलुगपवादत्वाभावेऽपि परत्वेन बाधकत्वं स्यादत आह—अन्तरङ्गस्य चेति । प्राग्दीव्यतीयाजादिप्रत्ययनिरपेक्षत्वात्पैलादिलुकोऽन्तरङ्गत्वम् । 'गोत्रेऽलुगची'इत्यत्र भूम्नि प्राप्तस्य लुकोऽलुगिति कथनमेतन्मूलकमेवेति न तद्विरोधः । 'गोत्रेऽलुगचि' इत्यत्र हि 'शास्त्रीयगोत्रग्रहण'मित्युक्तम् । शेषभाष्यं तु 'यूनि

§ जीवति तु वंश्ये युवा ४ । १ । १६३

‡ गोत्रोक्षोष्ट्रोरभ्र०, ४ । २ । ३९; गोत्रचरणाद् वुञ्; गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ४ । ३ । १२६; ९९; + गोत्रोक्षोष्ट्रोरभ्र० ४ । २ । ३९ । × राजश्वशुराद्यत्; मानोर्जातावञ्यतौ षुक् च ४ । १ । १३७; १६१ * इञश्च ४ । २ । ११२ ।

इत्यप्राप्नोति । नैष दोषः । गोत्रेणात्रैवं विशेषयिष्यामः—गोत्रे य इञ्विहित इति ॥ १६५ ॥

## जनपदशब्दात्क्षत्रियादञ् ॥ ४ । १ । १६८ ॥

### क्षत्रियादेकराजात्सङ्घप्रतिषेधार्थम् ॥ १ ॥

क्षत्रियादेकराजादिति वक्तव्यम् । किं प्रयोजनम् ? 'सङ्घप्रतिषेधार्थम्' । सङ्घान्मा भूत्—पञ्चालानामपत्यम्, विदेहानामपत्यमिति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । न ह्यन्तरेण बहुषु लुकं* पञ्चाला इत्येतद्भवति । यस्तस्मादुत्पद्यते युवप्रत्ययः स स्यात् । युवप्रत्ययश्चेत्तस्य लुक्, तस्मिंश्चालुग्भविष्यति† ।

प्र०—अनेकार्थत्वान्निपातानामवधारणार्थत्वात्तुशब्दस्य ॥ १६५ ॥

जनपद । एकराजादिति । एकश्चासौ राजा चेति क्षत्रिय एकराजः । तेनैकक्षत्रियवाचिन एव प्रत्ययो न तु बहुत्वसंख्यायुक्तक्षत्रियवाचिन इत्यर्थः । यथैवैकः क्षत्रियः पञ्चालस्तथैव बहवः क्षत्रियाः पञ्चाला इति प्रत्ययप्रसङ्गे वचनमिदम् ।

न ह्यन्तरेणेति । पञ्चालापत्येषु यौगिकः पञ्चालशब्दस्तद्राजस्यात्रो बहुषु लुप्तत्वात् । तस्य लुगिति । 'ण्यक्षत्रियार्षञितः' इत्यनेन । तस्मिंश्चेति । 'गोत्रेऽलुगची'त्यनेन । यद्येवं पाञ्चाल इति सर्वथा भवितव्यमिति किं वार्त्तिकारम्भेण ? तत्र वार्तिककारस्याभिप्रायमाहुः—असति वार्त्तिकारम्भे बहुवचनान्तादेव प्रत्ययः स्यान्नैकवचनान्तात् । जनपदे हि बहुवचनान्तः

उ०—लु'गित्यत्र व्याख्यातं तत एवावधार्यम् ॥ १६५ ॥

जनपदशब्दात् । ननु पञ्चालशब्दादञि बहुषु 'यञञोश्चे'ति 'तद्राजस्ये'ति वा लुकि पञ्चाला इति भवति, ततोऽपत्यविवक्षायाम् 'एको गोत्रे' इति नियमान्न गोत्रे प्रत्ययप्राप्तिः, यूनि तु अजादिप्राग्दीव्यतीयविषये गोत्रप्रत्ययस्यालुकि पाञ्चालशब्दे सम्पन्ने जनपदसमानशब्दत्वाभावान्नैव प्राप्तिरत आह—यथैवेति । न बहुषु पञ्चालशब्दो यौगिकः, किन्त्वेकस्मिन्निव रूढ एवेति भावः । उत्तरस्य तु—एकस्मिन्नैव रूढिः, बहुषु मानाभावादिति भावः ।

ण्यक्षत्रियेति । अजादिप्राग्दीव्यतीयविषये 'गोत्रेऽलु'गित्यलुकि पाञ्चालशब्दत्वाज्जातस्येञो 'ण्यक्षत्रिये'ति लुगिति भावः । यद्येवमिति । बहुवचनान्तप्रकृतिके पञ्चालस्य दुर्वारत्वाद्वार्त्तिकस्योक्तिसम्भवो

* ते तद्राजाः ४ । १ । १७४; तद्राजस्य बहुषु तेनैवास्त्रियाम् २ । ४ । ६२

† ण्यक्षत्रियार्षञितो यूनि लुगणिञोः २ । ४ । ५८; गोत्रेऽलुगचि ४ । १ । ८६

इदं तर्हि क्षौद्रकाणामपत्यम् मालवानामपत्यमिति । अत्रापि क्षौद्रक्यः मालव्य इति‡ नैतत्तेषां दासे वा भवति कर्मकरे वा । किं तर्हि ? तेषामेव कस्मिंश्चित् । यावता तेषामेव कस्मिंश्चित्, यस्तस्मादुत्पद्यते युवप्रत्ययः स स्यात् । युवप्रत्ययश्चेत्तस्य लुक्, तस्मिंश्चालुग्भविष्यति ।

अथ क्षत्रियग्रहणं किमर्थम् ? इह मा भूत्—विदेहो नाम ब्राह्मणस्तस्यापत्यं वैदेहिः+ ।

**क्षत्रियग्रहणानर्थक्ये चोक्तम् ॥ २ ॥**

किमुक्तम् ? एकं तावदुक्तं 'बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेध' इति* । अपरमुक्तम् 'अनभिधाना'दिति† ।

**क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ॥ ३ ॥**

क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्प्रत्यया भवन्तीति वक्तव्यम् । पञ्चालानां राजा पाञ्चालः ।

पूरोरण्वक्तव्यः । पौरवः ॥ पाण्डोर्ड्यण्वक्तव्यः । पाण्ड्यः ॥ १६८ ॥

प्र०—पञ्चालशब्दो वर्त्तत इति तस्यैव जनपदसमानशब्दत्वं क्षत्रियवृत्तित्वं च । भाष्यकारस्तु मन्यते-प्रातिपदिकस्य जनपदसमानशब्दत्वं ग्राह्यं न सुबन्तस्येत्येकवचनान्तात्प्रत्ययः केन निवार्येत इति ।

इदं तर्हीति । क्षौद्रकस्य राज्ञो भृत्या अपि क्षत्रियाः क्षौद्रका उच्यन्ते । ततश्चापत्यापत्यवत्सम्बन्धाभावाद्गोत्रयुवाश्रयकार्याभावादनिष्यमाणोऽपि तद्राजो ञ्यङ् प्राप्नोतीत्यर्थः । नैतदिति । मुख्यया वृत्त्या दासेषु वृत्त्यभावादुपचरितार्थात्प्रत्ययादर्शनात्तदेवोत्तरमित्यर्थः ॥ पूरोरिति । सिद्धे प्राग्दीव्यतीयेऽपि तद्राजसंज्ञार्थमिदं वचनम् । पुरुषशब्दो न जनपदवाची, अन्यथा 'द्व्यञ्मगधे'त्यणः सिद्धत्वाद्वचनमनर्थकं स्यात् ॥ पाण्डोरिति । बाह्वादिप्रभृतिषु येषां दर्शनं लौकिके गोत्रभाव इति वचनाद्युधिष्ठिरादिपितुः पाण्डोरग्रहणात् तद्वाचिनः पाण्डव इत्येव भवति ॥१६८॥

उ०—नास्तीत्यर्थः । केन वार्यत इति । एतच्च 'पञ्चालानामपत्यं पाञ्चाल' इति मा भूदित्येवमर्थं वार्त्तिकमिति वाच्यं तच्च दुर्निवारमिष्टञ्चेति व्यावर्त्तयितुमशक्यमित्याशयेन प्रत्याख्यातं वार्त्तिकमिति भावः । नन्विदमपि पूर्वोदाहृतेन सममत आह—क्षौद्रकस्येति ॥ भाष्ये-तस्मिंश्चालुगिति । अत्र 'तद्राजस्य बहुषु' इति लुकः प्राप्तिः ।

युधिष्ठिरादिपितुरिति । संज्ञाशब्दत्वेन जनपदस्वामित्वेन तत्समानशब्दक्षत्रियजातिविशेषवाचिपाण्डुशब्दापेक्षयास्य पाण्डुत्वगुणयोगनिमित्तकत्वेनाप्रसिद्धत्वादिति भावः ॥ १६८ ॥

‡ वृद्धेत्कोसलाजादाञ्ञ्यङ् ४ । १ । १७१

\+ अत इञ् ४ । १ । ९५ * ४ । १ । ९६ वा० १ † ३ । २ । १ वा० ५

स्यादिति, तच्चाऽन्तरेण यत्नं न सिध्यतीत्येकवचनं गोत्रे । एवमर्थमिदमुच्यते ।

कथं पुनर्ज्ञायत उत्पादयितोत्पादयिताऽपत्येन युज्यत इति ? एवं हि दृश्यते लोके-पितामहस्योत्सङ्गे दारकमासीनं कश्चित् पृच्छति कस्यायमिति ? स आह देवदत्तस्य यज्ञदत्तस्य वेति । उत्पादयितारं व्यपदिशति नात्मानम् ।

अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

**तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो गोत्रे नियतत्वात् ॥ २ ॥**

तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो वक्तव्यः—औपगवस्यापत्यमिति* । किं कारणम् ?

प्र०—एकवचनमिति । एकस्य प्रत्ययस्य प्रतिपादनमित्यर्थः । यावन्त्यपत्यानि तावतां प्रत्ययानां प्रसङ्गे सत्येक एव प्रत्ययो यथा स्यादित्येवमर्थमित्यर्थः । गोत्र इति च जात्यपेक्षयैकवचनं, तेन गोत्रसमुदाये प्रत्ययसमुदायो निवार्यते । कथमिति । एकमप्यपत्यं पितृपितामहादीनां सर्वेषां सम्बन्धि भवति तथा चा'ऽपत्यं पौत्रप्रभृतिगोत्र'मिति सूत्रकारेण सामानाधिकरण्येन निर्देशः कृत इति प्रश्नः । एवं हि दृश्यत इति । शब्दार्थसम्बन्धे लोकव्यवहार एव प्रमाणं नान्यत् । तत्र च प्रष्टृप्रतिवक्त्रोरुत्पादयितृविषये एव प्रश्नप्रतिवचने इति तत एतदवधार्यत इत्यर्थः । 'अपत्यं पौत्रप्रभृती'ति सामानाधिकरण्यं तु गौणमाश्रयिष्यते ।

तत्रेति । अनन्तरोक्ते प्रयोजनेऽभिमते सूत्रस्याऽसामर्थ्यान्नापत्यादिति वक्तव्यम्, अपत्यप्रत्ययान्तादपत्ये प्रत्ययाभावार्थम् । गोत्र इति । यदैको गोत्रे इति गोत्रशब्दोपादानेन नियमः कृतः तदाऽयं प्रतिषेधो वक्तव्यः । यदि त्वेकोऽपत्य इत्युच्यते तदाऽपत्यप्रत्ययान्तादपत्ये नैवापरः

उ०—आह—सन्नपीति । यथा 'मातुः स्मरती'त्यादौ कर्मत्वम् । द्वितीयायाः पारिभाषिकैकवचनस्याऽनन्वयादाह-एकस्येति । नन्वेकत्र गोत्रे एकस्यैव प्रत्ययस्य प्रसङ्गान्नियमाऽनुपपत्तिरत आह-जात्यपेक्षयेति । गोत्रपदं गोत्रसमुदायपरमिति वक्तुं युक्तम् ।

ननूत्पादयितुरपत्येन सम्बन्धस्य प्रसिद्धतया किं प्रश्नेनेत्यत आह—एकमपीति । गौणमिति । अपतनहेतुत्वरूपगुणयोगादित्यर्थः । तत्रेत्यस्यार्थमाह—अनन्तरोक्त इति । 'अनन्तरोक्तेऽभिमते प्रयोजने तत्प्रयोजनसिद्धौ सूत्रस्याऽसामर्थ्या'दित्यन्वयः । 'प्रत्ययान्तात्प्रतिषेध'इति व्याचष्टे—नाऽपत्यादिति । अपत्यभवप्रत्ययान्तान्नेत्यर्थः । तेन गोत्रप्रत्यय एवेति । 'गोत्रसामान्ये एक एव प्रत्ययः' इत्युक्ते तत्रैव नाऽनेक इति

१—'कश्चित् कंचित् पृच्छति कस्यायं दारक इति' पा० ।

२—"जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः ।

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम । न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥ ( ऋ० ७ । ४ । ७ )

परिहर्तव्यं हि नोपसर्तव्यमरणस्य रेक्णः ।...... शेष इत्यपत्यनाम शिष्यते प्रयतः, अचेतयमानस्य तत्प्रमत्तस्य भवती"ति यास्कः । ( निरु० ३ । २ । १ )

* प्राग्दीव्यतोऽण् ( अत इञ् ) ४ । १ । ८३ ( ९५ )

'गोत्रे नियतत्वात्' । गोत्रे ह्ययं नियमः क्रियते, तेन यश्चाऽसौ यथाजातीयकश्च गोत्रे' प्रत्ययः प्राप्नोति स एकः स्यात् । कश्च प्राप्नोति ? यः प्रत्ययान्तात् ।

परमप्रकृतेश्चोत्पत्तिः ॥ ३ ॥

परमप्रकृतेश्चोत्पत्तिर्वक्तव्या । अयोगाद्धि न प्राप्नोति ।

प्र०—प्रत्ययः स्यात्, अपत्यजातावेकस्यैव विधानात् । 'एको गोत्रे' इति तूच्यमानेऽनन्तरापत्यप्रत्ययान्ताद्गोत्रे प्रत्ययः स्यादेव । तुल्यजातीयापेक्षो हि नियमः । तेन गोत्रप्रत्यय एवाऽपरो निवार्यते । ततश्च गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो मा भूत्, अनन्तरापत्यप्रत्ययान्तात्तु गोत्रे प्रत्ययः स्यादेवेति भावः । अथवा यदोत्पादयितैवाऽपत्येन युज्यते न तु पितामहादिः, 'एको गोत्रे' इत्येतच्च नियमार्थं, तदा यतोऽनेकप्रत्ययप्रसङ्गो गोत्राकृतौ विवक्षितायां तस्मादेक एवेति नियम्यते । अपत्यप्रत्ययान्तादेव च क्रमेणापत्यपरम्पराविवक्षायामनेकप्रत्ययप्रसङ्गात्तत एवैकाभ्यनुज्ञानद्वारेणानेकनिवारणं स्यादिति भावः । यश्चासौ यथाजातीयकश्चेति । यत्प्रकृतिरित्यर्थः । उभयोपादानं सर्वविशेषयोगप्रतिपत्त्यर्थम् ।

परमप्रकृतेरिति । गर्गादेरित्यर्थः । अयोगादिति । उत्पादयितर्यपत्ययुक्ते गर्गस्य पौत्रादिना अपत्यापत्यवत्सम्बन्धाभावात्प्रत्ययो न प्राप्नोति । यद्यपि 'गर्गादिभ्यो य'ञिति विधानसामर्थ्याद्गर्गादिभ्यो गोत्रप्रत्ययाः सिध्यन्ति, तथापि येऽणादयोऽनन्तरापत्ये सावकाशास्ते परमप्रकृतेरुपग्वादेर्गोत्रे न प्राप्नुवन्तीति विवक्षितम् । अथोच्यते—'एको गोत्रे' इत्येतत्परमप्रकृतेर्विध्यर्थं भविष्यतीति, नियमस्तर्हि न प्रकल्प्येत । ततश्चापत्यमालायां प्रत्ययमालाप्रसङ्गः । ननु परमप्रकृतेः प्रत्ययोत्पत्तावुच्यमानायामपि प्रकृतिप्रत्ययार्थयोः परम्परायोगस्तदवस्थ एवेति प्रयोगो नैव स्यात् । नैष दोषः । पारंपर्येण सम्बन्धसद्भावात्प्रयोगो भविष्यति । साक्षात्सम्बन्धे तु प्रत्ययद्वय

उ०—वचनव्यक्तेरिति भावः । ननु गोत्रे यदपत्यलक्षणं सामान्यं तदपेक्षे नियमे नाऽयं दोष इत्यरुचेराह—अथवेति । नियमार्थमिति । न तु परमप्रकृतेस्तृतीयादावपत्ये विध्यर्थमिति भावः । ननु विध्यर्थत्वे सम्भवति कथं नियमार्थत्वमिति चेत्सत्यम्, पराऽभ्युपगमेनैवमुक्तेः । यतः—यस्माच्छब्दात् । अपत्यप्रत्ययान्तादेवेति । न ह्युपगोस्तृतीयेन सम्बन्धः, किन्त्वौपगवस्यैवेति भावः । युगपदसम्भवादाह—क्रमेणेति । तत एव—प्रत्ययान्तादौपगवादेरेव । एवञ्च तृतीये 'औपगवि'रिति स्यादेवेति भावः । 'यथाजातीयक'शब्दार्थमाह—यत्प्रकृतिरिति । सर्वविशेषेति । 'गर्गादिभ्यो य'ञित्यादिविशेषसूत्रविषयप्रतिपत्त्यर्थमित्यर्थः ।

'परमप्रकृति'शब्देनाऽपत्यप्रत्ययरहित उच्यते । विध्यर्थमिति । एकशब्दः प्रथमवाची । प्रथमः—प्रकृतिभूतशब्दो गोत्रे प्रत्ययमुत्पादयतीत्यर्थं इति भावः । नन्वेवमेव प्रत्ययोऽपि वचनेन विना भविष्यतीत्यत आह—साक्षात्सम्बन्धे त्विति । वक्ष्यमाणेति । 'यूनि चाऽन्तर्हितेऽप्राप्ति'रित्येतयोः पूर्वपक्षयोः—यच्च पठि-

१—'गोत्रप्रत्ययः' पा० ।

एतयोश्चैव[1] परिहारः, पठिष्यति ह्याचार्यो 'यूनि चान्तर्हितेऽप्राप्ति'रिति† तस्य च यथा तत्प्रत्ययान्तम् । यथा‡ तदेव विकारावयवप्रत्ययान्तं द्वितीयं च तृतीयं च विकारं सङ्क्रामति, एवमिहापि तदेवापत्यप्रत्ययान्तं द्वितीयं च तृतीयं चापत्यं सङ्क्रमिष्यति ।

भवेत्सिद्धम् औपगवस्यापत्यमौपगवः, यत्र स एवानन्तर इष्यते, स एव गोत्रे । इदं तु खलु न सिध्यति गर्गस्यापत्यं गार्ग्य इति । अत्र ह्यन्योऽनन्तर इष्यते, अन्यो गोत्रे* ।

## स्त्रियां चानियमः ॥ ४ ॥

प्र०—चरितार्थत्वाद्गौणसम्बन्धाश्रयेणोत्पत्तिर्न स्यादिति वक्तव्या । इदानीमेतद्दोषद्वयं वक्ष्यमाणेन दोषेण सह परिहर्तुमाह—एतयोश्चेति । 'च'शब्दो वक्ष्यमाणापेक्षया समुच्चयार्थः । तत्प्रत्ययान्तमिति । 'ञितश्च तत्प्रत्यया'दित्येतत्सूत्रं प्रत्याख्यायते । यो हि कपोतस्य तदवयवस्य तद्विकारस्य वावयवो विकारो वा सोऽभेदोपचारात्कापोतस्याप्यवयवो विकारश्च भवतीति कापोत एव भविष्यतीति नार्थो मयड्बाधनार्थेन 'ञितश्च तत्प्रत्यया'दित्यनेन सूत्रेण । तत्र यथा कपोतस्य वा विकारावयवाभ्यामभेदोपचारात्कापोतस्य वेत्युभयथेष्टं सिध्यति तथेहाप्युपग्वौपगवयोरौपगवतदपत्ययोर्वाऽभेदोपचारात्पौत्रप्रभृतिरौपगवशब्देनाभिधायिष्यते । गार्ग्यायणापत्यं च गार्ग्यायणशब्देनेति दोषत्रयमपि परिहृतम् ।

अस्य परिहारस्याव्याप्तिं दर्शयितुमाह—भवेदिति । अत्र ह्यन्य इति । यदि गार्गौ गर्गत्वमारोप्यते तदा गार्गिरेव—भेदसम्बन्धस्य निवृत्तत्वात्—गर्गशब्दवाच्य इति गार्गेरपत्यं गार्गिरेव स्यात्, गार्ग्यश्चेष्यते । अथ गार्गितदपत्ययोरभेदाध्यवसायस्तथापि गार्गेरपत्यं गार्गिः प्राप्नोति । यद्यपि 'गर्गादिभ्यो य'ञिति वचनसामर्थ्याद्गार्ग्यः स्यात्तथापि गार्गिरपि स्यात्, तस्मादपत्यविषये दोषवानभेदोपचार इति भेद एवाश्रयणीयः । तथा च प्रत्ययान्तात्प्रतिषेध, परमप्रकृतेश्चोत्पत्तिर्वक्तव्येति स्थितमेतत् ।

स्त्रियां चेति । 'च'शब्दो दोषसमुच्चयार्थः । तत्रानन्तरापत्यस्त्रियां गोत्रस्त्रियां चानियम-

उ०—ष्यत्याचार्यो 'यूनि चान्तर्हितेऽप्राप्ति'रिति तस्य च परिहारो यथा 'तत्प्रत्ययान्त'मिति भाष्येऽन्वयः ।

ननु 'ञितश्चे'त्यनेन प्रत्ययान्तरविधानेपि रूपभेदाभावाद्युक्तं यत्—तदेव द्वितीयं[illegible]संक्रामतीति, इह तु रूपाभेदसाधकप्रत्ययान्तराभावात्कथं तदुपपद्यत इति तत्प्रत्याख्यानाभिप्रायेणाह—ञितश्चेति । तृतीयदोषपरिहारप्रकारमाह—गार्ग्यायणापत्यञ्चेति । तयोर्भेदविवक्षा त्वनभिधानान्नेति नानिष्टम् । गार्गिरपि स्यादिति । भेदविवक्षायां यत्नेष्टे सिद्धे ऽप्यभेदोपचारादनिष्टमपि प्राप्नोतीत्यर्थः ।

[1]—'चैव' पा० । † ४ । १ । ६३ वा० ५

‡ ञितश्च तत्प्रत्ययात् ४ । ३ । १५५

* अत इञ्; गर्गादिभ्यो यञ् ४ । १ । ९५, १०५

स्त्रियां च युवत्यां नियमो न प्राप्नोति—औपगवी माणविका । नियमाद्धि स्त्री पर्युदस्यते, 'एको गोत्रे' 'गोत्राद्यून्यस्त्रियाम्' [ ४ । १ । ९४ ] इति ।

कतरस्मिन्पक्षेऽयं दोषः ? 'उत्पादयितर्यपत्ययुक्ते' । उत्पादयितरि तावदपत्ययुक्ते न दोषः । उत्पादयितरि ह्यपत्ययुक्ते न सर्वत उत्पत्त्या भवितव्यम् । तत्र

प्र०—प्रसङ्गाभावात्सामर्थ्यात्तौत्रप्रभृतेरपत्यं स्त्री गृह्यते । युवसंज्ञया गोत्रसंज्ञाया एकसञ्ज्ञाधिकारे वृद्धं युवेति वचनात्तुशब्दाद्वा नियमार्थाद्बाधितत्वात्स्त्रियाः पौत्रप्रभृतेरपत्यस्य गोत्रसंज्ञा नास्तीत्येको गोत्र इत्येष नियमो नास्ति । अस्त्रियामिति निषेधाद्गोत्राद्यूनीत्यपि नास्ति नियमः, तथा च स्त्रियां विवक्षितायामनेकप्रत्ययप्रसङ्गः । औपगवस्यापत्यं स्त्रीत्यत इञितीत्र् प्राप्नोति । 'इतो मनुष्यजाते'रिति ङीष्—अत इञन्तान्न प्राप्नोति । 'गोत्रं च चरणैः सहे'त्यत्र शास्त्रीयस्य गोत्रस्य ग्रहणात्, स्त्रियाश्चास्या गोत्रसंज्ञाया अभावात् । एतच्चेत्र उपसङ्ख्यानमजात्यर्थमित्येतदनपेक्ष्यैवोदाहृतम् । गोत्रलक्षणश्च यत्रादि पौत्र्यामेव स्यात्, अजीवद्वंश्यायां च स्त्रियां पौत्रप्रभृतेरपत्ये । जीवद्वंश्यायां तु न स्यात् । अपत्यसामान्यलक्षण एव तु स्यात् । नियमादिति । सामान्यापेक्षमेकवचनं, नियमद्वयादित्यर्थः ।

कतरस्मिन्निति । येनोद्भावितो दोषस्तदीयोऽयं न प्रश्नः, विरोधात्, किं तर्हि पक्षप्रविभागदर्शनेन भाष्यकारोऽनन्तरोक्तमेवार्थं प्रश्नपूर्वकं विवृणोति उत्पादयितरि तावदिति । 'अनियम'इति यदुक्तं तत्र वाक्छलमुद्भावयति । यदोत्पादयितुरेवापत्येन योगो नान्यस्य तस्मिंश्च

उ०—चशब्द इति । पूर्वोक्तस्य दोषद्वयस्य स्थितत्वादिति भावः । ननु वार्तिके 'स्त्रियाश्चे'तिसामान्योक्तेर्भाष्ये 'स्त्रियां युवत्यामिति विशेषकथनं निर्बीजमत आह—तत्रानन्तरेति । अनन्तरापत्यस्यैकत्वात्तत्रानियमप्रसङ्गाऽभावः, गोत्रस्त्रियान्तु 'एको गोत्रे' इति नियमात्तदभाव इत्यर्थः ।

ननु 'अनन्तरस्ये'ति न्यायेन 'अस्त्रिया'मिति 'गोत्राद्यूनी'त्यस्यैव निषेध इति भाष्ये 'एको गोत्रे' इत्यभिधानमयुक्तमत आह—युवसंज्ञयेति । तुशब्दाद्वेति । 'जीवति तु' इत्यत्र तुरवधारणार्थः । युवैव न गोत्रमित्यर्थ इति भावः । ननु इञ्यपि 'इतो मनुष्ये'ति ङीषि 'औपगवीमाणविके'ति सिध्यति, स्वरे च नास्ति विशेषोऽणन्तान्ङीपि, इञन्तान्ङीषि वेत्यत आह—इतो मनुष्येति । अत इञन्तादिति । युवापत्यवाचकादस्मादिञन्तादित्यर्थः । नन्वजात्यर्थमुपसङ्ख्यानमस्त्येनेत्यत आह—एतच्चेति ॥ दोषान्तरमाह—गोत्रलक्षण इति । एवञ्च तदपेक्षायामपि न दोषः इत्यर्थः । पौत्र्यामेवेति । वचनसामर्थ्याद्गोत्रे गर्गादिभ्यो भवन् यञादिः, स्त्रीत्वे पौत्र्यामेव स्यादेवञ्च तत्र सावकाशोऽयमित्यर्थः । अवकाशान्तरमप्याह — अजीवद्वंश्यायाञ्चेति । पौत्रप्रभृत्यपत्यभूतायामजीवद्वंश्यायामत एव गौत्रभूतायां स्त्रियामित्यर्थः । जीवद्वंश्यायान्त्विति । युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः । सिद्धान्ते तु स्त्रियां युवसंज्ञाया अभावात्स एवेष्यत इति तात्पर्यम् । सामान्यलक्षणः—इञादिः ।

विरोधादिति । 'पितुरेवापत्य'मिति पक्षमुपक्षिप्य तत्रैव दोषमभिधाय तस्यैव प्रश्नो व्याहत इत्यर्थः । अनन्तरोक्तमेवेति । स्त्रियां नियमद्वयाऽप्रवृत्तेरनेकप्रत्ययप्रसङ्गरूपाऽनियमः, गोत्रलक्षणश्च यञादिरिति चोक्तमर्थमित्यर्थः । वाक्छलमिति । सामान्येनोक्तेऽर्थे वक्त्रभिप्रेतादर्थान्तरकल्पनया बाधोक्तिर्वाक्छलम् ।

नियमो नोपपद्यते । असति नियमे नैष दोषः ।

सर्वेषु तर्ह्यपत्ययुक्तेष्वयं दोषः । सर्वेषु तर्ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम् । तत्र नियम उपपन्नो भवति । सति [ च[1] ] नियम एष दोषः ।

उत्पादयितरि चापत्ययुक्ते स्त्रिया युवत्या अभिधानं न प्राप्नोति । किं कारणम् ? गोत्रसंज्ञां युवसंज्ञा बाधते, गोत्राद्यूनि चास्त्रियां प्रत्ययो विधीयते ।

यूनि चान्तर्हितेऽप्राप्तिः ॥ ५ ॥

यूनि चान्तर्हिते नियमस्याप्राप्तिः—गार्ग्यायणस्यापत्यमिति ।

कतरस्मिन्पक्षेऽयं दोषः ? सर्वेष्वपत्ययुक्तेषु । सर्वेष्वपत्ययुक्तेषु तावन्न दोषः ।

प्र०—विवक्षिते एकस्या एव प्रकृतेरेक एव प्रत्ययः प्राप्नोति नत्वनेकस्तदा सूत्रद्वयं नैव नियमार्थं किं तर्हि विध्यर्थमिति–किमुच्यते 'स्त्रियां चानियम' इति । प्रत्ययमालाप्रसङ्गदोषस्तु गोत्रलक्षणप्रत्ययाप्रसङ्गदोषश्चस्थित एव ।

सर्वेष्विति । वक्ष्यमाणेन न्यायेन सर्वेऽपत्येन युज्यन्त इति पक्षो- पपत्तिः ।

इदानीं वाक्छलं परिहरति—उत्पादयितरि चेति । 'च'शब्दो न केवलं पक्षान्तरे यावदस्मिन्नपीत्यस्यार्थस्य द्योतनार्थः । अभिधानं न प्राप्नोतीति । गोत्रविषयेण यञादिप्रत्ययेनेत्यर्थः । अयमेवात्रानियमो विवक्षितः । 'एको गोत्रे' इत्येतन्नियमपूर्वकं स्त्रिया गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीत्येषोऽर्थोऽत्र विवक्षित इत्यर्थः ।

यूनि चेति । चतुर्थादिना व्यवहिते पञ्चमादावित्यर्थः । अत्रापि पूर्ववत्प्रश्नपूर्वकं पक्षप्रविभागेन विवरणं कर्तुमाह—कतरस्मिन्निति । तत्र नियम इति । गोत्रादेव यूनीति भावः ।

उ०—प्रकृते च नियमेनास्त्रिया गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीत्येवंरूपस्य वक्तुर्विवक्षिताऽनियमशब्दार्थस्य 'एको गोत्रे' गोत्राद्यूनी'ति नियमशास्त्राऽप्राप्तिरित्यन्यथाकरणेन दोषोद्भावनं क्रियत इत्यर्थः । विध्यर्थमिति । उपगुशब्दात्तृतीयादावपत्ये प्रत्ययाऽप्राप्तेः 'एको गोत्रे' इति विध्यर्थम् । एवं गोत्रान्तात्पञ्चमादौ यूनि विध्यर्थं परं सूत्रम् । किमुच्यत इति । नियमस्यैवाभावास्त्रियां नियमो न प्राप्नोतीति किमुच्यत इति भावः । ननु तर्हि विधिपक्ष एवाश्रीयतामत आह—प्रत्ययमालेति । अयं दोषस्तु स्थित एव, 'गोत्रलक्षणे'त्यादिदोषश्च स्थित एवेत्यन्वयः ।

इदानीं वाक्छलमिति । स्वाभिप्रायप्रकाशनद्वारेत्यर्थः । ननु स्त्र्यादिशब्दैर्युवत्या अभिधानसम्भवादाह—गोत्रविषयेणेति । अयमेवात्रेति । न तु नियमशास्त्राप्राप्तिरूप इति भावः । नियमपूर्वकमिति । नियमोऽपि न सिध्यत्यभिधानञ्चेत्यर्थः । भाष्ये–अभिधानं न प्राप्नोतीत्यस्य—तयोः शास्त्रयोर्नियमत्वपूर्वकं गोत्रविहितयञाऽभिधानं न प्राप्नोतीत्यर्थः । अनयोर्विधित्वेऽपि गोत्रसंज्ञाया युवसंज्ञया बाधादभिधानाप्राप्तिरिति भावः । तथा गार्ग्यप्रकृतिकफकापि स्त्रिया युवत्या अभिधानं न प्राप्नोति । तदाह भाष्ये—गोत्राद्यूनि चास्त्रियां प्रत्ययो विधीयत इति ।

१—क्वचिन्न ।

**सर्वेषु ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम् । तत्र नियम उपपन्नो भवति । सति नियमे नैष दोषः ।**

**उत्पादयितरि तर्ह्यपत्ययुक्तेऽयं दोषः । उत्पादयितरि ह्यपत्ययुक्ते परमप्रकृतेरनन्तराद्गोत्राच्चायोगान्न प्राप्नोति । यूनश्च न प्राप्नोति । किं कारणम् ? गोत्रादिति नियमात् ।**

**सन्तु तर्हि सर्वेऽपत्ययुक्ता इति । कथं पुनर्ज्ञायते सर्वेऽपत्ययुक्ता इति । एवं हि याज्ञिकाः पठन्ति—'दशपुरुषानूकं यस्य गृहे शूद्रा न विद्येरन् स सोमं पिबे'दिति ।**

---

**प्र०—परमप्रकृतेरिति** । पञ्चमस्य त्रिभिरपत्यापत्यवत्संबन्धाभावादित्यर्थः । **यूनश्चेति** । चतुर्थात्यर्थः । **गोत्रादिति** । चतुर्थस्य युवत्वाद्गोत्रसंज्ञाया अभावः । ननूत्पादयितर्यपत्ययुक्ते नियन्तव्यस्याभावाद्गोत्राद्यूनीति विध्यर्थं भविष्यति । तत्रानन्तरे यूनि गोत्रात्सिद्ध एव प्रत्यय इति व्यवहिते यूनि गोत्रेण तस्यायोगादप्राप्तः प्रत्ययो विधास्यते, तत्किमुच्यते 'यूनि चान्तर्हितेऽप्राप्तिः प्रत्ययस्ये'ति ? उच्यते—उत्पादयितर्यपत्ययुक्ते गोत्रसमुदाये प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थ'मेको गोत्रे' इति सूत्रं यथा नियमार्थमेवं युवसमुदाये युवसामान्ये वा 'युव'शब्देनोच्यमाने गोत्रादगोत्राच्च प्रत्ययप्रसङ्गे गोत्रादेव यूनीति नियमे क्रियमाणे विध्यर्थत्वाभावाद्युक्तमुक्तं 'यूनि चान्तर्हिते' इति ।

**सन्तु तर्हीति** । तेन व्यवहितेऽपि यूनि गोत्रादेवेति वचनाद्गोत्रप्रत्ययो भविष्यतीति नास्त्ययं दोषो'यूनि चान्तर्हित' इति । **दशपुरुषानूकमिति** । अनुपूर्वात्कायतेरनूकानमनुक इति 'घञर्थे कविधान'मिति कः । 'अन्येषामपी'ति दीर्घत्वम् । दशपुरुषा अस्मिन्ननूके इति बहुव्रीहिः । दशपुरुषोऽनूकोऽस्मि-

---

**उ०—नियमस्याप्राप्तिरिति** । नियमपूर्वकं गोत्रप्रकृतिकयुवप्रत्ययेनाऽभिधानाऽप्राप्तिरित्यर्थः । **पक्षप्रविभागेनेति** । 'पितुरेवापत्य'मिति पक्षे वार्त्तिकप्रवृत्तिं वक्तुमित्यर्थः । **भाष्ये—सर्वत इति** । मूलप्रकृत्यनन्तरापत्यप्रत्ययगोत्रप्रत्यययुवप्रत्ययान्तादित्यर्थः । तत्र 'एको गोत्रे' इति नियम उपपन्न इति भ्रान्तिं व्युदस्यति—**गोत्रादेवेति** । ननु पञ्चमस्य गर्गादिनैकदेशावस्थानादिरूपसम्बन्धसद्भावादाह—**पञ्चमस्य त्रिभिरिति** । **यूनि चान्तर्हितेऽप्राप्तिरित्यस्य नियमाप्राप्तिरिति** नार्थः, किन्तु प्रत्ययाप्राप्तिरित्यर्थ इति तात्पर्यम् । **नियन्तव्यस्येति** । नियमेन व्युदस्यस्येत्यर्थः । एकस्मादेकस्यैव प्रत्ययस्य प्रसङ्गादगोत्रात्परमप्रकृत्यनन्तरापत्यरूपाद्यूनि प्रत्ययाप्राप्तेर्यद्यपि युवापत्यप्रत्ययान्तात्प्राप्नोति तथापि तस्यां व्यक्तौ गोत्राऽगोत्राभ्यामप्राप्त्या नियमाऽनुपपत्तिरिति भावः । **यथा नियमार्थमिति** । परेण स्वीकृतमित्यर्थः । तदभ्युपगमानुसारेण दूषणदानमिति तात्पर्यम् । प्रत्ययविधित्वे तु युवप्रत्ययान्तादपि युवप्रत्ययप्रसङ्गो दोष इति बोध्यम् ।

**युवसमुदाय इति** । तदभिप्रायमेव सूत्रे एकवचनमिति भावः । **युवसामान्ये वेति** । जातावेकवचनमिति भावः । **अगोत्रादिति** । युवप्रत्ययान्तरूपादित्यर्थः । सर्वेष्वपत्ययुक्तेषु यथानन्तरोक्तदोषाभावस्तथाह—**तेनेति** । 'परमप्रकृतेश्चोत्पत्तिर्वक्तव्ये'त्ययमपि दोषो नास्तीत्यपि बोध्यम् । **अनूकानं—शब्दः** । **अनूकोऽस्मिन्निति** । शब्दोऽन्यपदार्थः । **अनूकोऽस्मिन्निति** । वाचकत्वेनेत्यर्थः । दशपुरुषसमुदायोऽन्यपदार्थः । तत्फलितमाह—**दशपुरुषानुसंशब्दनमिति** । **भाष्ये—दशपुरुषानूकमिति**—यावद्योगे द्वितीया ।

यदि च सर्वेऽपत्ययुक्ता भवन्ति तत एतदुपपन्नं भवति । कथं यदुक्तं 'पितामहस्योत्सङ्गे दारकमासीनं कश्चित्पृच्छति कस्यायमिति, स आह देवदत्तस्य यज्ञदत्तस्य वेति, उत्पादयितारं व्यपदिशति नात्मान'मिति । उत्पत्तिस्तस्य विवक्षिता । सर्वेषां न इदमपत्यम्, देवदत्तस्त्वस्योत्पादयितेति ।

अथ सर्वेष्वपत्ययुक्तेषु किमनेन क्रियत 'एको गोत्र' इति ?

**सर्वेषामप्यपत्ययोगात्प्रत्ययान्ताद्गोत्रे प्रतिषेधार्थमेको गोत्रे ॥ ६ ॥**

सर्वेषामप्यपत्ययोगात्प्रत्ययान्ताद्गोत्रे प्रतिषेधार्थमेको गोत्र इत्युच्यते ।

अस्ति प्रयोजनमेतत् ? किं तर्हीति । न तु ज्ञायते क एको भवति[2] यो वा परमप्रकृतेर्यो वानन्तरादिति ।

---

प्र०—त्रिति पुनर्बहुव्रीहिः । दशपुरुषानुसंशब्दनं, दशसु पुरुषेष्विति यावत् । शूद्रा इति । विवाहिता । 'शूद्रावेदी पतत्यध' इति वचनात्पातहेतुः शूद्रा । एकस्मिंश्च पतिते सर्वेषां च पात इत्येतद्दशपुरुषानूकशब्देनोक्तं भवति । ततश्चार्थादेकस्यैव सर्वान्प्रत्यपातहेतुत्वादपत्यत्वमित्युक्तं भवति । नन्वेकस्यैवापत्योत्पत्तौ व्यापारात्कथं तेनान्येषां सम्बन्धः । क्रियागर्भो हि सर्वत्र सम्बन्धो नान्यथेति उद्घुष्यते । नैष दोषः । पुत्रोत्पादनमेव पौत्राद्युत्पत्तौ व्यापारः, तदन्तरेण तस्यासंभवात् । 'अपत्यं पौत्रप्रभृती'ति च मुख्यं सामानाधिकरण्यमस्मिन्पक्ष उपपद्यते । पूर्वत्र तु पक्षे गौणं सामानाधिकरण्यं स्यादपत्यापत्यस्यापत्यत्वोपचारात् । उत्पत्तिस्तस्येति । सामान्यशब्दस्यापि क्वचिद्विशेषे वृत्तिदर्शनात् । यथा गोमण्डले व्यवस्थितं गोपालकं कश्चित्पृच्छति'गां पश्यसी'ति ।

सर्वेषामिति । यदा गर्गस्य पौत्रप्रभृति सर्वेषां गर्गगार्गिगार्ग्याणामपत्यं भवति तदा गार्गिगार्ग्याभ्यां प्रत्ययो मा भूद्व गर्गशब्दादेव यथा स्यादित्येवमर्थमेको गोत्र इत्येतदित्यर्थः ।

न तु ज्ञायत इति । एक इति सामान्येनोपादानाद्विशेषस्यानवगम इत्यप्रतिपादकत्वात्सन्देहलक्षणमप्रामाण्यं प्रसक्तमित्यर्थः । उत्पादयितरि त्वपत्ययुक्ते क्रमेण संबन्धविवक्षायां गोत्रस-

---

उ०—ननु दासीत्वेन शूद्रायां सत्यामपि सोमपानदर्शनादाह—विवाहिता इति । ननु चातुर्वर्ण्यं विवाहस्मरणान्न दोषोऽत आह शूद्रावेदीति । शूद्राप्रथमवोढेत्यर्थः । 'पतत्यत्रे'ति पाठे—'अत्रे'त्यस्य नरकविशेषे इत्यर्थः । भाष्ये—यस्य गृह इति । कुल इत्यर्थः । तत्र षष्ठ्यर्थोऽपत्यापत्यवत्सम्बन्धः । अनेन सर्वान्प्रत्यपत्यत्वं बोधितम् । दशपुरुषाणां मध्ये कस्यचित्पातेन चास्य पात उक्तः । स च दशपुरुषाणामस्य सम्बन्धे सत्येव, सम्बन्धश्चापत्यापत्यवद्भाव एव नाऽन्योऽसम्भवादित्यपि बोध्यम् । नन्वेवमपि 'सर्वेऽपत्ययुक्ता' इत्यर्थस्य कथं सिद्धिरत आह—एकस्मिंश्चेति । क्रियागर्भेति । जन्यजनकभावाद्युपयोगिक्रियाकृत इत्यर्थः ।

ननु सामान्यशब्देन प्रश्नात्कथमुत्पत्तिर्विवक्षिता । तत्राह—सामान्येति । सर्वेषामपत्ययोगे इष्टसिद्धेराह यदा गर्गस्येति । ननु पक्षान्तरसाधारणेऽस्मिन्दोषे न तद्वादिनाऽयमपर्यनुयोक्तव्योऽत आह—उत्पाद-

---

१—'नेदमपत्यम्' पा० । २—भवतीति ? यो वा' पा० ।

**नियमानुपपत्तिश्च ॥ ७ ॥**

नियमश्च नोपपद्यते । किं कारणम् ?

**न ह्येकस्मिन्नपत्येऽनेकप्रत्ययप्राप्तिः ॥ ८ ॥**

न ह्येकस्मिन्नपत्येऽनेकः प्रत्ययः प्राप्नोति । किं तर्हि ?

**अपत्यान्तरे शब्दान्तरात्प्रत्ययान्तरप्राप्तिः ॥ ९ ॥**

अपत्यान्तरेऽपत्यान्तरे शब्दान्तराच्छब्दान्तरात्प्रत्ययान्तरं प्रत्ययान्तरं प्राप्नोति । फगन्तादिञ्, इञन्तात्फगिति* फगिञोर्दाशतयी प्रत्ययमाला प्राप्नोति ।

कतरस्मिन्पक्षेऽयं दोषः ? सर्वेष्वपत्ययुक्तेषु । सर्वेष्वपत्ययुक्तेषु तावन्न दोषः । सर्वेषु ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम् । तत्र नियम उपपन्नो भवति । सति नियमे नैष दोषः ।

उत्पादयितरि तर्ह्यपत्ययुक्तेऽयं दोषः । उत्पादयितरि ह्यपत्ययुक्ते न सर्वत

---

प्र०—मुदाये प्रत्ययमालाप्रसङ्गे एक एव भवतीत्युच्यमाने य एव परमप्रकृतेः प्राप्नोति स एव भवतीति नास्ति तत्रैकविशेषाज्ञानलक्षणो दोषः ।

न ह्येकस्मिन्निति । एकेनैव तस्यार्थस्योक्तत्वाद्यस्मिन्नपत्ये एकः प्रत्ययः क्रियते तस्मिन्नेव नास्त्यपरस्य प्रत्ययस्य प्रसङ्ग इति तन्निवारणमनर्थकमेवेत्यर्थः ।

अपत्यान्तर इति । सामान्यापेक्षं वार्तिक एकवचनम् । भाष्यकारस्तु भेदं वीप्सां च साकल्यप्रतिपादनायाश्रित्य विवृणोति । दाशतयीति । दशावयवा यस्य सङ्घस्य स दशतयः सङ्घः । तत्र भवा दाशतयी । अनेकप्रत्ययप्रसङ्गप्रतिपादनपरं चैतत् । न त्वत्र दशार्थो विवक्षितः । अतोऽनन्तरमेव क्वचित्पुस्तके—'अपत्यं समुदायश्चे'दिति पठ्यते । अन्यत्र तु प्रत्ययमालाप्रसङ्ग-ग्रन्थानन्तरं 'कतरस्मि'न्नित्यादि सर्वं पूर्वोक्तं पठ्यते । तत्पुनरुक्तत्वादग्रन्थत्वादन्यैरुपेक्षितम् ।

अन्ये त्वेवं पठन्ति—"कतरस्मिन् पक्ष एष दोषः । सर्वेष्वपत्ययुक्तेषु । सर्वेष्वपत्ययुक्तेषु तावन्न दोषः । सर्वेषु ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम्, तत्र नियम उपपन्नो भवति । सति नियमे नैष दोषः । उत्पादयितरि तर्ह्यपत्ययुक्तेऽयं दोषः । उत्पादयितरि तर्ह्यपत्ययुक्ते न सर्वत उत्पत्त्या भवितव्यम् । तत्र नियमो नोपपद्यते । असति नियमे एष दोषः । उत्पादयितरि चापत्ययुक्ते न दोषः । कथम् ? अपत्यं

---

उ०—यितरि त्विति । एकेनैवेति । 'एको गोत्रे' इत्यत्र 'गोत्र' पदेन गोत्रत्वविशिष्टस्यैकस्यैवोपस्थितेरिति भावः । ननु 'दाशतयीत्युक्ते' विंशत्यपत्येष्वपि किं तावत्येव प्रत्ययमाला, नेत्याह—अनेकेति । तेन 'गर्गशब्दादेवे'ति । अनेन न ज्ञायते 'क एक' इति, नियमानुपपत्तिश्चेत्युक्तदोषद्वयनिरासो दर्शितः । भाष्ये—उत्पादयितरि चेति । चेन सर्वेष्व-पत्ययुक्तेष्विति पक्षे तु नैव दोषः, अत्रापि पक्षे न दोष इत्यर्थः । ननु सूत्रे 'गोत्र' पदोपादाना'दपत्यं समुदा-यश्चे'दित्यनुपपन्नत आह—अपत्यशब्देनेति । ननु मुख्ये सम्भवति गौणगोत्रस्य समुदायस्य ग्रहणं न

---

* अत इञ्; यञिञोश्च ४ । १ । ९५; १०१

१–'कतरस्मिन् पक्षेऽय'मित्यारभ्य 'अपत्यं समुदायश्चे'दित्यस्मात्पूर्वतनं भाष्यं पुनरुक्तत्वात् कैश्चि-दुपेक्षितम् । तन्न युक्तम् । पक्षप्रविभागेन दोषपरिहारात् ।

उत्पत्त्या भवितव्यम् । तत्र नियमो नोपपद्यते । असति नियम एष दोषः ।

उत्पादयितरि चापत्ययुक्ते न दोषः । कथम् ?

अपत्यं समुदायश्चेन्नियमोऽत्र समीक्षितः ।
तस्मिन्सुबहवः प्राप्ता नियमोऽस्य भविष्यति ॥

अपत्यमित्यनेन सर्वमुपग्वादिपितृकमपत्यं समीक्षितम् । तस्मिन् सुबहवः

---

प्र०—समुदायश्चेत्" इति । अयं ग्रन्थ एव, पक्षप्रविभागेन दोषपरिहारात् ।

अस्यायमर्थः,—यदा सर्वेऽपत्येन युज्यन्ते तदैकस्मिन्नेव गोत्रापत्ये गर्गगार्गिगार्ग्येभ्यः पर्यायेणापत्यापत्यवत्सम्बन्धविवक्षायां प्रत्ययप्रसङ्गः । तत्र यदा गर्गशब्दात्प्रत्यय उत्पद्यते तदैक एव गोत्रापत्ये प्रत्ययो भवति । यदि तु गार्गिगार्ग्यशब्दाभ्यामुत्पद्यते तदा पूर्वस्मिन्स्थिते परस्योत्पादादनेकः प्रत्ययः कृतः स्यात् । तस्मादनेकप्रत्ययनिवारणायैको गोत्र इति नियमः क्रियते । तेन गर्गशब्दादेवोत्पत्तिरनुज्ञाता भवति । यदा तूत्पादयितैवापत्येन युज्यत इति पक्षो गोत्रशब्देन चैकमेवापत्यमुच्यते तदोत्पादयितुरेवैक एव प्रत्ययः प्राप्नोतीति नियन्तव्याभावान्नियमो नोपपद्यत इत्यपत्यपरम्पराविवक्षायां प्रत्ययमालाप्रसङ्गदोष आपतत्येव । अत्रापि पक्षे परिहारोऽभिधीयते अपत्यं समुदायश्चेदिति । अपत्यशब्देनापत्यसामान्यवाचिनापि प्रकरणवशाद्गोत्रापत्यमेवोच्यते । तेनायमर्थो—गोत्रशब्देन गोत्रसमुदायोऽभिधीयते, अवयवधर्मेण समुदायस्य गोत्रव्यपदेशात् ।

अन्ये त्वाहुः । अपत्यं पौत्रप्रभृतिगोत्रमित्यत्रापत्यशब्देन समुदायोऽभिधीयत इति तस्यैव गोत्रसंज्ञा क्रियते । क्वचित्तु अवयवमात्रेऽपि गोत्रशब्दो वर्त्तते । समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इति न्यायात् । ततश्चैको गोत्र इत्यस्यायमर्थः 'पौत्रप्रभृत्यपत्यपरम्पराविवक्षायां प्रत्ययमालाप्रसङ्गे एक एव कर्त्तव्यो नानेक' इति । तेन परमप्रकृतेरेव सम्बन्धिसम्बन्धाश्रयेणापत्यापत्यवत्सम्बन्धविवक्षायां प्रत्ययः कर्त्तव्य इत्युक्तं भवति । तस्मिन्निति । समुदाय इत्यर्थः ।

---

उ०—युक्तमत आह—अन्ये त्विति । वार्तिकस्थापत्यशब्देन गोत्रसंज्ञासूत्रस्थमपत्यमिति गृह्यत इति भावः । क्रियाशब्देनेति । उत्पादनक्रियाधीनं पतनाजनकत्वं ह्यपत्यत्वम् । तस्यैव—अपत्यसमुदायस्यैव । क्वचित्—'गोत्रेऽलुगची'त्यादौ ।

अत्राहुः—व्याख्याद्वयेऽपि गोत्रशब्देनापत्यगोत्रसमुदायो लक्ष्यत इति युक्तम् । इदमेव ध्वनयितुं भाष्ये—'अपत्य'पदं प्रयुक्तम्, 'सर्वमुपग्वादिपितृकमपत्यं समीक्षित'मिति चोक्तम् । अत एव कैयटेऽपि वक्ष्यति—परमप्रकृतेरेवेति । किञ्चैवं सति गोत्रसमुदायेऽनेकप्रत्ययवारणेऽपि तृतीये वाच्ये प्रत्ययद्वयं न निवारितं स्यादिति बोध्यम् ।

ननु मूलप्रकृतेरप्राप्तिविध्यर्थमेव स्यादत्र पक्षे न तु नियमार्थमिति चेन्न, विधित्वे एकग्रहणवैयर्थ्यापत्तेः । 'गोत्रे' इत्युक्त्यैव 'प्रथमा'दित्यनुवृत्त्योपग्वादिभ्योऽणादिविधानेन त्वदिष्टसिद्धेः । एकग्रहणे

प्रत्यया: प्राप्ताः । नियमोऽस्य भविष्यति 'एको गोत्र' इति ।

यदप्युच्यते 'स्त्रियां चानियम'इति, एवं वक्ष्यामि 'गोत्राद्यूनि प्रत्ययो भवति, स्त्रियां ने'ति ॥ एवमपि स्त्रिया युवत्या अभिधानं न प्राप्नोति । एवं तर्ह्येवं वक्ष्यामि 'गोत्राद्यूनि प्रत्ययो भवति, [ ततः ] स्त्रियां लुक्' ।

एवमप्यौपगवी माणविका, अनुपसर्जनादिति ईकारो† न प्राप्नोति । मा भूदेवम् 'अणयोऽनुपसर्जन'मिति । 'अणन्तादनुपसर्जना'दित्येवं भविष्यति । नैवं शक्यम् । इह हि दोषः स्यात्—काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, काशकृत्स्नीमधीते काशकृत्स्ना‡ ब्राह्मणी । अणन्त दितीकारः प्रसज्येत । नैष दोषः ।

प्र०—एवमपीति । अस्त्रियामिति योगविभागेऽपि कृते यदि नाम गोत्रादेव यूनीत्यस्य नियमस्य निषेधो न भवति तथापि प्राधान्याद्युवप्रत्ययस्यैव निषेधः प्राप्नोति न तु युवसंज्ञाया, ततश्च गोत्रलक्षणः प्रत्ययो न प्राप्नोति । अपत्यसामान्यलक्षण एव तु प्रत्यय स्यादित्यर्थः । ततश्च गार्ग्यस्यापत्यं स्त्रीति गार्ग्यशब्दाद्यञ् न स्यात् । तदभावा'द्यञश्च' प्राचां ष्फतद्धित' इति ङीष्ष्फौ न स्याताम्—गर्गी गार्ग्यायणीति । स्त्रियां लुगिति । गार्ग्यशब्दात् फको लुकि कृते यञाश्रयं रूपद्वयं सिध्यति ।

एवमपीति । औपगवस्यापत्यं स्त्रीत्यत इञ् । तस्य लुकि कृतेऽनुपसर्जनाधिकारादणश्चार्थद्वारेणोपसर्जनत्वात्तदर्थस्य प्रत्ययार्थं प्रति विशेषणत्वादणलक्षण ईकारो न प्राप्नोतीत्यर्थः । अणन्तादिति । प्रत्यये लुप्ते प्रकृतिरेव प्रत्ययार्थमाहेत्यणन्तस्यानुपसर्जनत्वमिति भाव. । काशकृत्स्निनेनि । इञ्श्चेत्यण् । तदन्तादध्येत्र्यामण् । तस्य 'प्रोक्काल्लु'गिति लुक् । 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुक् । अत्राणन्तस्याध्येत्र्यां संक्रान्तत्वादनुपसर्जनत्वादीकारस्य प्रसङ्गः ।

उ०—सामर्थ्यान्नियमेनैकाभ्यनुज्ञाद्वारा परमप्रकृतेर्विधिरपि परम्परापत्यापत्यवत्सम्बन्धे प्रवर्त्तत इत्यनुमीयत इति न दोष इति दिक् ।

ननु योगविभागेन स्त्रियां युवत्वनिषेधाद्गोत्रप्रत्ययान्तगार्ग्यशब्देन युवत्याः स्त्रिया अभिधानं भविष्यतीत्यत आह—यदि नामेत्यादि । यद्यपीत्यर्थः । निषेधो न भवतीति । योगविभागसामर्थ्यादस्त्रियामित्येष इति भावः । न प्राप्नोतीति । युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः । यञ् न स्यादिति । किन्तु इञेव स्यादित्यर्थः ।

उपसर्जनत्वे हेतुः—तदर्थस्येति । प्रत्ययार्थम्—इञर्थम् । नन्वणर्थद्वाराणन्तमप्युपसर्जनमत आह—प्रत्यय इति । इञर्थ एव प्राधान्येनोच्यत इति नोपसर्जनत्वमित्यर्थः । ननु स्त्रीप्रत्ययत्वसाम्याट्टाबपि न स्यादत आह—टाब्विति । ननु ङीपा बाधितष्टाप् कथं स्यादत आह—अपवादस्येति । तस्मादण एवेति । किञ्च तदन्तविशेषणत्वे तदन्तान्तस्यापि विशेषणापत्तावनुपसर्जनाधिकारवैयर्थ्यापत्तिः, 'स्त्रिया'मित्यस्याणिव-

१–क्वचिन्न । † टिड्ढाणञ्······करपः ४ । १ । १५ २–'तामधीते' पा० ।

‡ इञश्च; तदधीते तद्वेद; प्रोक्काल्लुक् ४ । २ । ११२; ५९; ६४; लुक् तद्धितलुकि १ । २ । ४९

अध्येत्र्यामभिधेयायामण् ईकारेण भवितव्यम् । यश्चात्राध्येत्र्यामभिधेयायामण्, लुप्तः सः । यश्च श्रूयत उत्पन्नस्तस्मादीकार इति कृत्वा पुनर्न भविष्यति ।

इह तर्हि औपगवी माणविका भार्याऽस्य औपगवीभार्यः, जातिलक्षणः पुंवद्भावप्रतिषेधो* न प्राप्नोति । मा भूदेवम् । 'वृद्धिनिमित्तस्ये'त्येवं भविष्यति† । यस्तर्हि न वृद्धिनिमित्तः—ग्लुचुकायनी‡ माणविका भार्याऽस्य ग्लुचुकायनीभार्यः ।

तस्मात्स्त्रिया युवत्या युवसंज्ञैव पर्युदसितव्या, तस्यां च पर्युदस्तायां गोत्रप्रत्ययान्तमेतद्यूनि वर्तते ।

प्र०—पुनर्न भविष्यतीति । शास्त्रस्य सकृत्प्रवृत्त्या चरितार्थत्वादिति भावः । टाप्तु पूर्वमनुत्पन्न इति उत्पद्यते । अपवादस्याप्रवृत्तावुत्सर्गस्याऽनिवारणात् ।

नन्वेवमप्यापिशलिना प्रोक्तमापिशलं, तदधीते आपिशला ब्राह्मणीति ङीष्प्राप्नोति । तस्मादण एवानुपसर्जनग्रहणं विशेषणमित्यौपगवी माणविकेति न सिध्यति । एवं तर्हि वक्ष्यमाणाद्दोषादिष्टसिद्ध्यभावादेतद्भाष्यकारेण सुष्ठु न निरूपितम् ।

जातिलक्षण इति । गोत्रसंज्ञाया अभावे जातिरूपाभावात् । यदा तु 'गोत्रं च चरणैः सहे'त्यत्र गोत्रशब्देनापत्यमात्रं गृह्यते तदौपगवीभार्य इत्यत्र जातिलक्षणङीष्पुंवद्भावप्रतिषेधौ सिध्यत एव । ग्लुचुकायनीति । ग्लुचुकस्यापत्यमिति 'प्राचामवृद्धा'दिति फिन्प्रत्ययः, तदन्तादणो लुकि क्रियमाणे जातित्वाभावा'दितो मनुष्यजाते'रिति ङीष्न प्राप्नोति । अथापि सर्वतोऽक्तिन्नर्थादिति ङीष् क्रियते तथापि पुंवद्भावप्रतिषेधो न प्राप्नोति । लुक् चाधिको विधेयः ।

तस्मादिति । अस्त्रियामिति योगविभागे सति यूनीति वर्त्तते । परिभाषा चेयम् । तेन युवसंज्ञायामस्त्रियामित्युपतिष्ठते । तदुपस्थानेन स्त्रियां युवसंज्ञा निवार्यते इति गोत्रसंज्ञा प्रवर्त्तते । यूनि

उ०—शेषणत्वेनाऽप्यत्र परिहारः सुकर इति चेत्तदपि 'औपगवी'त्यत्र तुल्यम् ॥ वक्ष्यमाणाद्दोषात्—पुंवत्त्वप्रतिषेधाऽप्राप्तिरूपात् । सुष्ठु न निरूपितमिति । 'काशकृत्स्निने'त्यादिसिद्धान्त्युक्तिरापिशलेरप्युपलक्षणम् । तदाशयाऽनभिज्ञपूर्वपक्षिणो 'नैष दोष' इत्युक्तिः । सिद्धान्ती स्वाशयमप्रकाश्यैव दोषान्तरेण तं निरस्यतीति भावः ।

जातिरूपाभावादिति । जातित्वाऽभावादित्यर्थः । युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः । यदा त्विति । अत एव 'कुन्ती'त्यनन्तरापत्ये 'जातिलक्षणो ङी'षित्य'नुपसर्जनादि'ति सूत्रस्थं भाष्यं सङ्गच्छते । यदा त्विति—तुनारुचिर्बोधिता—एतद्भाष्यविरोधरूपा । तस्मादेतद्भाष्यात्फाण्टाहृताभार्य इति भाष्याच्च जातिलक्षणे गोत्रं शास्त्रीयमेव । अत एवाऽपत्यमिति नोक्तम्, 'कुन्ती'त्यादौ द्रौणायनिवद्गोत्रत्वारोपो

* जातेश्च ६ । ३ । ४१ † वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६ । ३ । ३९
‡ प्राचामवृद्धात् फिन् बहुलम् ४ । १ । १६०

इहोत्पादयितर्यपत्ययुक्ते प्रत्ययान्तात्प्रतिषेधो वक्तव्यः, परमप्रकृतेश्चोत्पत्तिर्वक्तव्या। सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्यः।

तस्मात्प्रतिषेधः ॥ १० ॥

तस्मात् प्रतिषेधो वक्तव्यः।

संज्ञाकारिभ्यो वा प्रत्ययोत्पत्तिः ॥ ११ ॥

अथवा संज्ञाकारिभ्यः प्रत्ययोत्पत्तिर्वक्तव्या।

यदि संज्ञाकारिभ्यः प्रत्ययोत्पत्तिरुच्यते, कथं गार्ग्यायणः वात्स्यायन इति ?

गोत्राद्यूनीति च ॥ १२ ॥

गोत्राद्यूनीत्येतद्वक्तव्यम्।

प्र०—वर्तते इति। युवसंज्ञाया अभावेऽपि युवत्वेन पौत्रप्रभृतेरपत्यं ह्युपलक्ष्यत इति यूनीत्युक्तम्।
इदानीं पक्षद्वयोक्तदोषपरिहाराय तत्संकीर्त्तनं करोति इहेति। सर्वेष्विति। ननु नायं दोषः पूर्वमुक्तः। नैतदस्ति। न तु ज्ञायते क एको भवतीत्यभिधानादर्थत उक्त एवायं दोषः॥ तस्मादिति। नापत्यादित्येव वक्तव्यम्। तेनापत्यप्रत्ययन्तादपत्ये प्रत्ययो न भवतीत्ययमर्थः संपद्यते।
संज्ञाकारिभ्य इति। कुलव्यपदेशहेतव आदिपुरुषाः संज्ञाकारिण उच्यन्ते। जातिर्नेति।

उ०—भाष्यप्रामाण्यात्, यूनि तु न गोत्रत्वाऽऽरोपस्तत्र तत्संज्ञानिषेधात्, 'ग्लुचुकायनी'त्यत्र ङीष् तु सिद्धान्ते जातित्वादितो मनुष्येत्येवेत्याहुः। अण्णो लुकीति। यून्युत्पन्नस्याऽस्त्रियां लुगित्यनेनेति भावः। पुंवद्भावप्रतिषेध इति। गोत्रस्य यूनश्चाऽपत्यत्वेनैव बोधात्समानायामाकृतौ भाषितपुंस्कत्वनिर्वाहो बोध्यः।

नन्वस्त्रियामिति निषेधः प्रत्ययस्यैव स्यान्न तु युवत्वस्याऽप्राधान्यादत आह—अस्त्रियामिति। परिभाषेति। यत्र युवशब्दस्तत्राऽस्त्रियामित्युपतिष्ठत इत्यर्थः। व्यवहितेनापि सम्बन्धाय परिभाषात्वमुक्तम्। ननु स्त्रियां युवत्वाऽभावाद्यूनीत्ययुक्तमत आह—युवसंज्ञाया इति।

पक्षद्वयोक्तेति। सूत्रन्यासे तूत्पादयितर्यपत्ययुक्ते नैतयोः परिहारः, विधित्वसम्भवेन नियमाऽनुपपत्तेः, 'प्रथमा'दित्यनुवृत्त्यैव विधौ सिद्धे एकग्रहणसामर्थ्यान्नियम' इत्यपि न युक्तं, तस्य सूत्रे प्रथमोच्चारितादित्यर्थकत्वात्। किञ्च नियमत्वे परम्परासम्बन्धे प्रत्ययविध्यनुपपत्तिः। न च सोऽपि तेनैवाऽनुमीयते, एवंविधस्य वचनव्यापारस्याऽन्यत्र क्वाऽप्यदृष्टत्वादिति। अन्त्येऽपि नियमाऽसम्भवः, एकस्मिन्नपत्येऽनेकप्रत्ययाऽप्राप्तेः। अपत्यसमुदायलक्षणायाञ्च न मानमिति शब्दमर्यादया सर्वेष्टाऽसिद्धिरिति भावः।

अत्र दोषे उक्तत्वाऽभावमाशङ्कते—नन्विति। अर्थत इति। 'क एको भवति यो वा परमप्रकृतेर्यो वाऽनन्तरा'दित्यनेनाऽनियम उक्तस्तत्परिहाराय प्रत्ययान्तान्निषेधो वक्तव्य इत्युक्त एवाऽयमर्थः इति भावः।
नापत्यादिति। अपत्यसम्बन्धी प्रत्यय आपत्यः, तदन्तादित्यर्थः। कुलव्यपदेशहेतवः—स्वघटितशब्देन स्वापत्यानां व्यवहारहेतवः। आदिपुरुषाः—गर्गादय इत्यर्थः।

## तच्च जात्यादिनिवृत्त्यर्थम् ॥ १३ ॥

तच्चावश्यं संज्ञाकारिग्रहणं कर्तव्यम् । किं प्रयोजनम् ? जात्यादिनिवृत्त्यर्थम् । जात्यादिभ्य उत्पत्तिर्मा भूदिति ।

जातिर्न वर्तते, सङ्ख्या न वर्तते, सर्वनाम न वर्तते । जातिर्न वर्तते—काकस्यापत्यम् कुररस्यापत्यमिति । सङ्ख्या न वर्तते—नवानामपत्यम् दशानामपत्यमिति । सर्वनाम न वर्तते—सर्वेषामपत्यम् विश्वेषामपत्यमिति ।

यत्तावदुच्यते 'जातिर्न वर्तते काकस्यापत्यम् कुररस्यापत्य'मिति, येनैव हेतुनैकः काकस्तेनैव हेतुना द्वितीयश्च तृतीयश्च काको भविष्यति । यदप्युच्यते 'सङ्ख्या न वर्तते नवानामपत्यम् दशानामपत्य'मिति, सङ्ख्येयमपेक्ष्य सङ्ख्या प्रवर्तते, तत्सापेक्षम्, 'सापेक्षं चासमर्थं भवती'त्यसामर्थ्यान्न भविष्यति । यदप्युच्यते 'सर्वनाम न वर्तते सर्वेषामपत्यम् विश्वेषामपत्य'मिति, निर्देश्यमपेक्ष्य निर्देशः प्रवर्तते, तत्सापेक्षम्, सापेक्षमसमर्थं भवतीत्यसमर्थत्वान्न भविष्यति ।

यत्तावदुच्यते 'येनैव हेतुनैकः काकस्तेनैव हेतुना द्वितीयश्च तृतीयश्च काको भविष्यती'ति, नैतद्विवदामहे काको न काक इति । किं तर्हि ? येनैव हेतुनैतद्वाक्यं

---

प्र०—प्रत्ययं नोत्पादयतीत्यर्थः । परार्थाभिधानं हि वृत्तिः । सति च प्रत्यये प्रकृतिः प्रत्ययार्थे वर्तते तत्र जात्यादिवृत्तिः संज्ञाकारिग्रहणेन निवार्यते ॥ येनैवेति । अपत्यविशेषप्रतिपत्तये प्रकृत्यर्थो विशेषणमुपादीयते । स च विशेषो जातिसम्बन्धावगमेनैवावगम्यत इत्यपत्यापत्यवत्सम्बन्धविवक्षाया एवात्राऽभाव इत्यर्थः । सङ्ख्येयमिति । ब्राह्मणादिकमवश्याऽपेक्षणीयं निराधारस्य गुणस्याभावा-

---

उ०—सत्तानिषेधभ्रमं वारयति—प्रत्ययमिति । 'न वर्त्तत'इत्यनेन प्रत्ययाऽनुत्पत्तिः कथं लभ्येत्यत आह—परार्थेति । संज्ञाकारिग्रहणं कर्त्तव्यमित्यस्योपपादनाय 'जातिर्न वर्त्तते' इत्यादिग्रन्थ इति बोध्यम् ।

संज्ञाकारिग्रहणं प्रत्याचष्टे भाष्ये—यत्तावदिति । ननु जन्यजनकयोर्जातिसाम्येऽप्यपत्यविशेषप्रतिपत्त्यर्थं प्रत्ययः स्यादत आह—अपत्यविशेषेति । निराधारस्येति । नवादीनां शब्दानां संख्येयपरत्वेऽपि संख्येयविशेषाऽपेक्षयाऽसामर्थ्यम् । भाष्ये—सङ्ख्येयमित्यस्य—सङ्ख्येयविशेषमित्यर्थ इति तत्त्वम् । पूर्वप्रकृतमिति । सर्वनाम्नां प्रकृतपरामर्शकत्वादिति भावः । सर्वेषामित्यादेः—केषामिति नियताकाङ्क्षोदयान्निर्देश्यं विशेषमपेक्ष्य सर्वनाम्नां निर्देशः प्रवर्त्तत इति भाष्यात्तरार्थः । निर्देश्यञ्च क्वचित्प्रसिद्धं क्वचिदनुभूतं क्वचित्प्रकृत-

---

१—कुवः क्ररन् ( पं०उणा० ३ । १३३ ) दश० उणा० ८ । ६३ ) कवते कौति वा कुररः—पक्षी । अयं जलचरान्तर्गतपक्षिविशेषः । यथा महाभारते वनपर्वणि "प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम्" ( ६४ । ११३ ) ।

भवति काकस्यापत्यम् कुररस्यापत्यमिति, तेनैव हेतुना वृत्तिरपि प्राप्नोति। यदप्युच्यते 'सङ्ख्येयमपेक्ष्य सङ्ख्या प्रवर्तते, तत्सापेक्षम्, सापेक्षं चासमर्थं भवती'ति, भवति वै कस्यचिदर्थात्प्रकरणाद्वापेक्ष्यं निर्ज्ञातम्, यदा निर्ज्ञातम्, तदा वृत्तिः प्राप्नोति। यदप्युच्यते 'सर्वेषामपत्यम् विश्वेषामपत्यमिति निर्देश्यमपेक्ष्य निर्देशः प्रवर्तते, तत्सापेक्षम्, सापेक्षं चासमर्थं भवती'ति, भवति वै कस्यचिदर्थात्प्रकरणाद्वापेक्ष्यं निर्ज्ञातम्, यदा निर्ज्ञातम्, तदा वृत्तिः प्राप्नोति।

एवं तर्ह्यनभिधानाज्जात्यादिभ्य उत्पत्तिर्न भविष्यति। तच्चावश्यमनभिधानमाश्रयितव्यम्। क्रियमाणेऽपि हि संज्ञाकारिग्रहणे यत्र जात्यादिभ्य उत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं भवति, भवति तत्रोत्पत्तिः। तद्यथा,—

कुतश्चरति मायूरिः केन कापिञ्जलिः कृशः।
आहेयेन च दष्टस्य पाश्विः सुतसमो मतः॥

तादायनिः यादायनिः कैमायनिरिति*।

तदेतदनन्यार्थं संज्ञाकारिग्रहणं वा कर्तव्यम् प्रत्ययान्ताद्वा प्रतिषेधो वक्तव्यः?

उभयं न कर्तव्यम्। गोत्रग्रहणं न करिष्यते। 'एकोऽपत्ये प्रत्ययो भवती'त्येव। यदि चेदानीं प्रत्ययान्तादपि प्रत्ययः स्यान्नैकोऽपत्ये प्रत्ययः [कृतः][1] स्यात्।

यदि गोत्रग्रहणं न क्रियते, कथं गार्ग्यायणः वात्स्यायन इति? वक्तव्यमेवैतद्

प्र०—दित्यर्थः। निर्देश्यमिति। पूर्वप्रकृतमित्यर्थः॥ वृत्तिरपीति। यदा जात्युपव्यञ्जनानि नाभिव्यक्तानि तदा पितृसम्बन्ध एव विशेषावगमायोपादीयते तत्र वाक्यवद्वृत्तिप्रसङ्ग इत्यर्थः। भवतीति। ततश्च सङ्ख्याशब्द एव विशिष्टसङ्ख्येयवाचीति सापेक्षत्वाभावाद्वर्त्तत एवेत्यर्थः॥ आहेयेनेति। अहेरपत्यम्। इतश्चानिञ इति ढक्। पाश्विरिति। बाह्वादित्वादिञ्। तादायनिरिति। 'उदीचां

उ०—मित्यन्यत्। जात्यैव विशेषप्रतीतिमुक्तां निरस्यति—यदेति। अखण्डाद्यवस्थायामित्यर्थः। ततश्चेति। सङ्ख्यामात्रवृत्तित्वे सापेक्षत्वं, प्रकारान्तरेण सङ्ख्येयवृत्तित्वनिश्चये सङ्ख्येयविशेषपरत्वनिश्चये वा न तत्त्वमित्यर्थः।

भाष्ये—एकोऽपत्ये प्रत्ययो भवतीति। प्रातिपदिकादेकोऽपत्यं प्रत्यय इत्यर्थः। प्रातिपदिकादपत्ये प्रत्ययश्चेदेक एव, अर्थादपत्यसमुदायविवक्षायामिति यावत्। तदेवाह—यदि चेदानीमिति। गोत्रग्रहणे

* अत इञ्; इतश्चानिञः; बाह्वादिभ्यश्च; उदीचां वृद्धादगोत्रात् ४।१।९५; १२२; ९६; १५७

१—क्वाचित्कः पाठः।

## वृद्धाट्ठक्सौवीरेषु बहुलम् ॥ ४ । १ । १४८ ॥

'गोत्रस्त्रियाः' 'वृद्धाट्ठक्' 'फेश्छ च' 'फाण्टाहृति' [ १४७–१५० ] इमे चत्वारो योगाः । तत्र त्रयः कुत्सने, त्रयः सौवीरगोत्रे । आद्यो योगः कुत्सन एव, अन्त्य सौवीरगोत्र एव ॥ १४८ ॥

## फाण्टाहृतिमिमताभ्यां णफिञौ ॥ ४ । १ । १५० ॥

किमर्थो णकारः ? वृद्ध्यर्थः । 'ञ्णिती'ति वृद्धिर्यथा स्यात्†—फाण्टाहृतः ।

**फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ १ ॥**

फाण्टाहृतेः प्रत्ययस्य णित्करणमनर्थकम् । किं कारणम् ? 'वृद्धत्वात्प्रातिपदिकस्य' । वृद्धमेवैतत्प्रातिपदिकम् ।

**पुंवद्भावप्रतिषेधार्थं तु ॥ २ ॥**

पुंवद्भावस्य प्रतिषेधार्थो णकारः कर्तव्यः । फाण्टाहृता भार्यास्य फाण्टाहृताभार्यः । 'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधो यथा स्यादिति‡ ।

---

प्र०—वृद्धाट्ठक्सौ । गोत्रस्त्रिया इति । विषयविभागकथनार्थोऽत्रोपक्षेपः । कुत्सनग्रहणस्य सौवीरग्रहणस्य च सूत्रद्वय एवानुवर्तनाद्यथोक्तविषयविभागलाभः ॥ १४८ ॥

फाण्टाहृति । फाण्टाहृतेरिति । यथासंख्यं सम्बन्धस्येष्टत्वान्न मिमतशब्दार्थं णित्त्वम् । पूर्वनिपातव्यवस्था तु शास्त्रे नावश्यं सर्वत्राश्रीयते इति तदनाश्रयणमपि न यथासंख्याभावं

---

उ०—वृद्धाट्ठक्सौ । भाष्ये—अन्त्यः सौविरगोत्र एवेति । इदञ्च फाण्टाहृत्यभिप्रायकं न तु मिमताभिप्रायम्, असम्भवात् । कथमयं विषयविभागो लभ्यतेऽत आह—कुत्सनग्रहणस्येति ॥ १४८ ॥

फाण्टाहृति । ननु अल्पाच्तरत्वान्मिमतस्य पूर्वनिपाते कर्त्तव्ये तदकरणं यथासंख्यप्रवृत्त्यभावबोधनद्वारा मिमताणार्थमिति वृद्ध्यर्थोऽत्र णकारोऽत आह—यथासंख्येति । भाष्ये—फाण्टाहृताभार्येति । नन्वत्र जातित्वान्ङीषुचितः, किञ्च स्त्रियां युवसंज्ञानिषेधेन 'एको गोत्रे' इति नियमेन णोऽपि दुर्लभ इति चेन्; अन्त्यदोषस्याग्रे वक्ष्यमाणत्वेनादोषत्वात् । आद्योऽपि न, शास्त्रीयगोत्रस्यैव जातिलक्षणे ग्रहणात् ।

---

१—'तेषां' 'एषां' पा० ।   २—'परः' पा० ।   † तद्धितेष्वचामादेः ७ । २ । ११७

‡ वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६ । ३ । ३९

उक्तं वा ॥ ३ ॥

किमुक्तम् ? 'गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम्', 'अवंश्यत्वाद्वा स्त्रियाः प्रयोजन'मिति+ । १५० ॥

## कुर्वादिभ्यो ण्यः ॥ ४ । १ । १५१ ॥

### वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ १ ॥

वामरथस्य कण्वादिवद्भावो वक्तव्यः । किमविशेषेण ? नेत्याह । 'स्वरवर्जम्' । स्वरं वर्जयित्वा । किं प्रयोजनम् ? वामरथ्यस्य च्छात्रा वामरथाः । 'कण्वादिभ्यो गोत्रे' [ ४ । १ । १११ ] इत्यण् यथा स्यात्* ।

यदि 'कण्वादिव'दित्युच्यते, प्रत्ययाश्रयमनतिदिष्टं भवति । तत्र को दोषः ? वामरथाः, बहुषु लोपो† न प्राप्नोति । वामरथानां सङ्घः, 'सङ्घाङ्कलक्षणेष्वञ्-यञिञामण्' [ ४ । ३ । १२७ ] इत्यण्न प्राप्नोति ।

यदि पुनर्यञ्वदित्युच्येत[2] । एवमपि प्रकृत्याश्रितमनतिदिष्टं भवति । तत्र को दोषः ? वामरथ्यस्य च्छात्रा वामरथाः, 'कण्वादिभ्यो गोत्र' इत्यण्न प्राप्नोति ।

प्र०—सूचयितुमलम् । शिष्टं भाष्यं पूर्ववद्व्याख्येयम् ॥ १५० ॥

कुर्वादिभ्यो । वामरथस्येति । प्रकरणाण्ण्यप्रत्ययान्तस्येति विज्ञेयम् । कण्वादीनां यञन्तानां यत्कार्यं तदतिदेशः, केवलानां तेषां कार्यस्य कस्यचिदविधानात् । वामारथा इति । छे प्राप्तेऽण्विधिः । 'आपत्यस्ये'ति यलोपः । यदीति । 'कण्वादिव'दिति वचनात्कण्वादीनामाहत्य यत्कार्यं विहितं 'कण्वादिभ्यो गोत्रे' इति तस्यैवातिदेशः प्राप्नोति न तु यञन्तमात्रनिब-

उ०—एतेन 'जातेश्चे'ति पुंवत्त्वनिषेधसिद्धेरिदमप्रयोजनमित्यपास्तम् । अवंश्यत्वाद्वेति । इदमपि पूर्वोक्तापरआहेत्यादिरीत्या प्रत्याख्येयमिति तात्पर्यम् ॥ १५० ॥

कुर्वादिभ्यो । ननु 'वामरथस्य कण्वादिव'दित्युक्त्वा वामरथ्यस्य च्छात्रा इत्युदाहरणमयुक्तमत आह—प्रकरणादिति । ननु 'काण्व्यादिव'दिति वक्तव्ये 'कण्वादिव'दित्ययुक्तमत आह—कण्वादीनामिति । ननु कण्वादिशब्दस्य तत्प्रकृतिकयञन्तलाक्षणिकत्वात्कुतः प्रत्ययाश्रया प्राप्तिरत आह—कण्वादिवदिति ।

+ ४ । १ । १४७ वा० ६; ७ १—क्वचिन्न । * आपत्यस्य च तद्धितेऽनाति ६ । ४ । १५१ ।
† यञञोश्च २ । ४ । ६४ । २—'उच्यते' पा० ।

अस्तु तर्हि 'कण्वादिव'दित्येव । कथं वामरथाः, वामरथानां सङ्घ इति च ? यदयं 'स्वरवर्ज'मित्याह तज्ज्ञापयत्याचार्यः 'प्रत्ययाश्रयमप्यतिदिष्टं भवती'ति ॥ १५१ ॥

## उदीचामिञ् ॥ ४ । १ । १५३ ॥

**उदीचामिञ्विधौ तक्ष्णोऽण्वचनम् ॥ १ ॥**

उदीचामिञ्विधौ तक्ष्णोऽणु[1]वक्तव्यः । ताक्ष्णः‡ ।

यदि पुनरयं तक्षन्शब्दः शिवादिषु+ पठ्येत ?

**शिवादिरिति चेदण्यविधिः ॥ २ ॥**

शिवादिरिति चेदण्यो विधेयः । ताक्ष्ण्य इति ।

**सिद्धं तूदीचां वा ण्यवचनात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? 'उदीचां वा ण्यवचनात्' । उदीचां वा ण्यो भवतीति

प्र०—न्धनस्येति भावः । एवमपीति । सामान्यातिदेशे विशेषानतिदेशात् । यदयमिति । लिङ्गादाहत्यानाहत्य च कण्वादीनां यञन्तानां यत्कार्यं विधीयते तदतिदिश्यते ॥ १५१ ॥

उदीचाम् । उदीचामिति । इञ्बाधनायाऽण्विध्यर्थं वचनम् । ताक्ष्ण इति । 'षपूर्वहन्धृतराज्ञामणी'त्यल्लोपः । यदीति । विशेषविहितेनाणा बाधितत्वादिञ्न भविष्यतीति भावः । ण्यविधिरिति । यद्यणा कार्यमात्रं बाध्यते तदा द्वयोरपि ण्येञोर्बाधः स्यात् । अथ विशेषचिन्ता तदा 'पुरस्तादपवादा' इति न्यायाण्ण्यस्यैव बाधा प्राप्नोति नेञः । सिद्धंत्विति । विकल्पितण्यमुक्ते पक्षे तक्षन्शब्दात् प्राग्दीव्यतोऽणित्यण्भवति । ननु जातमेनोग्रमेनविष्वक्सेनभीमसेनेभ्यो ण्येन मुक्ते पक्षेऽण्ऋष्याद्यिलक्षणः प्राप्नोति । यथान्यासे तु तेभ्यो ण्येञौ भवतः, एवं तर्हि बाह्वादे-

उ०—ननु 'यञ्व'दित्यस्य यञन्तवदित्यर्थात्कथं प्रकृत्याश्रया प्राप्तिरत आह—सामान्येति । स्वरस्याऽऽहत्य विधानाभावादाह—लिङ्गादिति ॥ १५१ ॥

उदीचामिञ् । इञ्बाधनायेति । 'उदीचां मते' इत्यादिः । 'अ'निति प्रकृतिभावप्राप्तेराह—षपूर्वेति । इदं च प्रकृतिभावापवादकमिति भावः । ननु शिवादिपाठः प्राचां मते चरितार्थोऽत आह—विशेषेति । तत्रापि ण्यप्राप्तेर्बाध्यसामान्यचिन्तयेति भावः । भाष्ये—उदीचां वा ण्येति । पूर्वसूत्रे उदीचां-

[1]—'च' क्वचिन्न । ‡ षपूर्वहन्धृतराज्ञामणि ६ । ४ । १३५

+ शिवादिभ्योऽण् ४ । १ । ११२ ।

वक्तव्यम् । ण्येन मुक्ते यो यत प्राप्नोति स ततो भविष्यति‡ ॥ १५३ ॥

## कौसल्यकार्माभ्यां च ॥ ४ । १ । १५५ ॥

किमिदं कौसल्यकार्मार्ययोर्विकृतयोर्ग्रहणं क्रियते ? एवं विकृताभ्यां यथा स्यात् ॥ अत्यल्पमिदमुच्यते 'कौसल्यकार्माभ्यां चे'ति ।

### फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् च ॥ १ ॥

फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् चेति वक्तव्यम् । दगु—दागव्यायनिः । कोसल—कौसल्यायनिः । कर्मार—कार्मार्यायणिः । छाग—छाग्यायनिः । वृष—वार्ष्यायणिः ।

यदि युट् क्रियते युटि कृतेऽनादित्वादादेशो* न प्राप्नोति । इदमिह संप्रधार्यम्—युट् क्रियतामादेश इति किमत्र कर्तव्यम् ? परत्वादादेशः । नित्यो युट्, कृतेऽप्यादेशे प्राप्नोत्यकृतेऽपि प्राप्नोति । युडप्यनित्यः । अन्यस्य कृत आदेशे प्राप्नोत्यन्यस्याकृते, 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' । अन्तरङ्गस्तर्हि युट् । कान्तरङ्गता ? उत्पत्तिसन्नियोगेन युडुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्यादेश उच्यते । आदेशोऽप्यन्तरङ्गः । कथम् ? वक्ष्यत्येतत् 'आयनादिषूपदेशिवद्वचनं स्वरसिध्यर्थ'मिति† । अनवकाशस्तर्हि युट् ।

एवं तर्हि पूर्वान्तः करिष्यते ।

प्र०—राकृतिगणत्वादेतेभ्यो ण्येन मुक्ते इञ्भविष्यतीत्यदोषः ॥ १५३ ॥

कौसल्य । किमिदमिति । कोसलस्यापत्यं 'वृद्धेत्कोसलाजादाञ्ञ्य'ङिति ञ्यङ् । कर्मारस्यापत्यं कारिलक्षणो ण्य इत्येवं यौ कौसल्यकार्मार्यशब्दौ तयोर्ग्रहणं नेष्यत इति प्रश्नः । उत्तरं तु—प्रत्ययसंनियोगेनैवंभूतप्रकृत्यादेशविधानार्थ एव निर्देशः । अङ्गस्यादेश इति ।

उ०—ग्रहणमपकृष्य विकल्पार्थतया व्याख्येयम् । इदं च सूत्रं न कार्यमिति भावः । स्वमतप्रच्युतिमङ्गीकृत्येदम् ॥ १५३ ॥

कौसल्यकार्मा । ननु ञ्यण्यान्तयोः प्रकृतित्वायैवं निर्देशोऽत आह—कोसलस्येति । उत्तरं त्विति । कौसल्यायन्यादिप्रयोगे श्रूयमाणप्रकृतिभागस्येदमनुकरणमित्यर्थः ।

‡ प्राग्दीव्यतोऽण् ४ । १ । ८३ । * आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ७ । १ । २ । † ७ । १ । २ वा० १ (पृ० ११)

यदि पूर्वान्तः क्रियते दागव्यायनः ओर्गुणो‡ न प्राप्नोति ॥ अस्तु तर्हि परादिरेव । ननु चोक्तं 'युटि कृतेऽनादित्वादादेशो न प्राप्नो'तीति । नैष दोषः ।

सिद्धं त्वादिष्टस्य युड्वचनात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'आदिष्टस्य युड्वचनात्' । 'युट् चादिष्टस्ये'ति वक्तव्यम् । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । चेन संनियोगः करिष्यते—'युट् च' । किं 'च' ? यच्चान्यत्प्राप्नोति । किं चान्यत्प्राप्नोति ? आदेश इति ॥ १५५ ॥

## वाकिनादीनां कुक च ॥ ४ । १ । १५८ ॥

यदि पुनरयं कुट् परादिः क्रियेत[3] ?

कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् ॥ १ ॥

कुटि सति प्रत्ययादेरादेशो* नोपपद्यते । किं कारणम् ? 'अनादित्वात्' । कुटि कृतेऽनादिदात्वादेशो न प्राप्नोति ॥ एवं तर्हि पूर्वान्तः करिष्यते ।

पूर्वान्ते नलोपवचनम् ॥ २ ॥

यदि पूर्वांतः क्रियते नलोपो वक्तव्यः—चार्मिकायणिः वार्मिकायणिः । 'नलोपः प्रातिपदिकान्तस्य' [ ८ । २ । ७ ] इति नलोपो न प्राप्नोति । परादौ [ तु ] पुनः सति 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपः सिध्यति ।

अस्तु तर्हि परादिरेव । ननु चोक्तं'कुटि कृतेऽनादित्वादादेशो न प्राप्नोती'ति ।

---

प्र०—अङ्गनिमित्तप्रत्ययावयवस्येत्यर्थः । चेनेति । तेन युगपदागमादेशौ भवतः ॥ १५५ ॥

वाकि । क्रियत इति । गणसूत्रमेवैवं पठ्यते इत्यर्थः । यद्यपि 'वाकिनादीनां कुट् चे'ति सूत्रपाठे लाघवं भवति 'नलोपश्चे'ति गणसूत्रैकदेशस्याकरणात्तथापि गणपाठस्य पश्चात्सूत्रप्रण-

---

उ०—ननु प्रत्ययावयवस्यैते आदेशा इति 'अङ्गस्यादेशा' इत्ययुक्तमत आह—अङ्गनिमित्तेति । भाष्ये—ओर्गुणो न प्राप्नोतीति । कौसल्यादावतो लोपानापत्तिरित्यपि बोध्यम् ॥ १५५ ॥

वाकिनादीनां । नन्वष्टाध्याय्यामस्यादर्शनात् 'क्रियते न्यास एवे'त्ययुक्तमत आह—गणेति ।

---

१—'करिष्यते' पा० । ‡ ओर्गुणः ६ । ४ । १४६ । २—इदं भाष्यमित्यन्ये ।
३—'क्रियते' पा० । * आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७ । १ । २
४—क्वचिन्न ।

## सिद्धं त्वादिष्टस्य कुड्वचनात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'कुट् चादिष्टस्ये'ति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । चेन संनियोगः करिष्यते—'कुट् च' । किं 'च' ? यच्चान्यत्प्राप्नोति । किं चान्यत्प्राप्नोति ? आदेशः । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'पूर्वान्ते नलोपवचन'मिति । नैष दोषः । क्रियत एतन्न्यास एव 'चर्मिवर्मिणोर्नलोपश्चे'ति† ।

## कारिभ्य इञोऽगोत्रात्फिञ्विप्रतिषेधेन ॥ ४ ॥

कारिभ्य इञ्भवतीत्येतस्मादगोत्रात्फिञ् भवति विप्रतिषेधेन‡ । 'कारिभ्य इञ् भवती'त्यस्यावकाशः—आयस्कारिः लौहकारिः । फिञोऽवकाशः—तासायनिः सांमितिकायनिः । इहोभयं प्राप्नोति—नापितायनिः । फिञ् भवति विप्रतिषेधेन ॥ १५८ ॥

## मनोर्जातावञ्यतौ षुक्च ॥ ४ । १ । १६१ ॥

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः× स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

यदि षुक्पूर्वान्तः क्रियते मानुषाः बहुषु लोपः प्राप्नोति+ । मानुषाणां

प्र०—यनाद्गणपाठदर्शनात्कुक्चेत्युक्तमिति भावः । लिङ्गविशिष्टपरिभाषया चर्मिणीवर्मिणीभ्यां प्रत्ययविधानाद्भस्याढ इति पुंवद्भावः सिध्यति। कुटिं तु भत्वाभावात्पुंवद्भावो न स्यात् ॥१५८॥

मनोरजाताव। अपत्य इति। णत्वविधानार्थमिदम्, अणः सिद्धत्वात्। न च 'न दण्डमाणवान्तेवासि'ष्विति निपातनाण्णत्वस्य सिद्धत्वाद्वचनमनारम्भणीयम्, निपातनादर्थविशेषस्यानिश्चयात् । अनधीतविद्यत्वान्मूढत्वं, विहिताकरणान्निषिद्धाचरणाच्च कुत्सितत्वम् । मानुषा इति ।

उ०—स्वयं फलान्तरमाह—लिङ्गविशिष्टेति । स्त्रीप्रत्ययान्ताभ्यामाभ्यां प्रत्ययेनार्थाभिधाने इदं मानं चिन्त्यमिति कश्चित् ॥ १५८ ॥

मनोर्जाताव । अनिश्चयादिति । निपातनसिद्धार्थ एव स्फुटत्वाय कथित इति तत्त्वम् । प्रकृतिप्रत्य-

† ४ । १ । १५८ गणसूत्रम् ‡ उदीचामिञ् ; उदीचां वृद्धादगोत्रात् ४ । १ । १५३; १५७
× प्राग्दीव्यतोऽण् ४ । १ । ८३ + यञञोश्च २ । ४ । ६४

सङ्घः 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' [ ४ । ३ । १२७ ] इत्यण्प्राप्नोति ।

अस्तु तर्हि परादिः । यदि परादिः क्रियते मानुषी अन्तादितीकारो* न प्राप्नोति ।

अस्तु तर्हि पूर्वान्त एव । कथं 'मानुषाः' 'मानुषाणां सङ्घ' इति ? उभयत्र लौकिकस्य गोत्रस्य ग्रहणम्, न चैतल्लौकिकं गोत्रम् । ( किं तर्हि ? जातिः । )

इह तर्हि मानुष्यकमिति† 'हलस्तद्धितस्ये'ति [३]यलोपः प्राप्नोति‡ । परादावप्येष दोषः । यद्धि तद्धलस्तद्धितस्येति हल्ग्रहणं न तदङ्गविशेषणं शक्यं विज्ञातुम् । इह हि दोषः स्यात्—'वृकाट्टेण्यण्' [ ५ । ३ । ११५ ] वार्केणीति । तस्मादुभाभ्यामेव वक्तव्यम् 'प्रकृत्याके राजन्यमनुष्ययुवान' इति§ ॥ १६१ ॥

प्र०—अपत्याधिकारादपत्ये प्रत्ययो विधीयते । जातिग्रहणं तु प्रकृतिप्रत्ययविशेषणं, न तु जातिः प्रत्ययार्थ इति 'यञञोश्चे'ति लुक्प्रसङ्गः । परादौ तु षञ्भवति न त्वञिति लुगभावः । ननु तद्धक्तस्तद्ग्रहणेन गृह्यते इति परादावप्यञ्कृतप्रसङ्गः; एवं तर्हि अकारप्रश्लेषादकारमात्रस्याञोऽत्र ग्रहणात्परादावञ्कार्याभावः । ईकार इति । 'शार्ङ्गरवाद्यञो ङी'नित्यनेनेति भावः । न चैतदिति । अपत्ये व्युत्पादितस्यापि मानुषशब्दस्य ब्राह्मणशब्दस्येव जातिवाचित्वादपत्यवाचित्वाभावादित्यर्थः ॥ इह तर्हीति । हलन्तादङ्गात्परस्य तद्धितयकारस्य लोप इति मन्यते । 'हलस्तद्धितस्ये'ति वर्तमाने 'आपत्यस्यच तद्धितेऽनाती'ति लोपोऽत्र प्राप्नोति । 'हलस्तद्धितस्ये'त्यत्र तु आतीति वर्तते । वार्केणीति । वृकशब्दादायुधजीविसङ्घविशेषवचनात्स्वार्थे टेण्यण्प्रत्ययः ॥ १६१ ॥

उ०—यविशेषणमिति । समुदायार्थविशेषणमित्यर्थः । समुदायगम्येति यावत् । एवं 'राजन्य'इत्यत्रापि बोध्यम् । अकारप्रश्लेषादिति । शकन्ध्वादित्वात् यत्रञोश्च सङ्घाङ्केत्यत्रेति भावः । शार्ङ्गरवादीति । 'अत' इत्यधिकारादकाररूपस्यैवाञस्तत्र ग्रहणमिति भावः । अपत्यवाचित्वाभावादिति । शास्त्रेण विधानेऽपि लोकेऽपत्यबोधकत्वाभावादिति भावः । अपत्यत्वेन बोधकं प्रवराध्यायप्रसिद्धं हि गोत्रम् । तत्प्रसिद्धत्वाभावाच्चेत्यपि बोध्यम् ॥ १६१ ॥

१—'क्रियते' इति क्वचिन्न । * शार्ङ्गरवाद्यञो ङीन् ४ । १ । ७३

२—'कि तर्हि ? जातिः' इति पाठः कीलहार्नसंस्करणे नास्ति ।

† गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ४ । २ । ३९ ३—'लोपः' पा० ।

‡ हलस्तद्धितस्य; आपत्यस्य च तद्धितेऽनाति ६ । ४ । १५०; १५१

§ ६ । ४ । १६३ वा० ३

# अपत्यं पौत्रप्रभृति गोत्रम् ॥ ४ । १ । १६२ ॥

## पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यं तस्य पौत्रप्रभृतिसंज्ञाकरणम् ॥ १ ॥

पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यविवक्षा तस्य पौत्रप्रभृतेर्गोत्रसंज्ञा भवतीति वक्तव्यम् । गर्गोऽपि हि कंचित्प्रति पौत्रः, कुशिकोऽपि; तत्र मा भूदिति ।

प्र०—अपत्यं । पौत्रप्रभृतेरिति । नन्वपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं न्याय्या न तु संज्ञा । नैष दोषः । लिङ्गवती परिभाषा भवति विध्यन्तरशेषभूता वा । न चेयं तथा । यथा च वृद्ध्यादय । सर्वार्थप्रत्यायनयोग्या अपि संज्ञिविशेषे शक्त्यवच्छेदकरणात्संज्ञा उच्यन्ते तथेयमपि । उक्तं च हरिणा—

'व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥

वृद्ध्यादीनां च शास्त्रेऽस्मिञ्छक्त्यवच्छेदलक्षणः ।
अकृत्रिमो हि सम्बन्धो विशेषणविशेष्यवत् ॥' इति ।

गर्गोऽपीति । वस्तुस्थित्या तस्यापि पौत्रत्वमवश्यं भावी । सत्यां च गोत्रसंज्ञायां गोत्रा-

उ०—अपत्यं । अपत्यमात्रस्येति । ननु प्रवराध्यायप्रसिद्धापत्यस्यैव लोके गोत्रत्वेन तदतिरिक्तपौत्रप्रभृतेरपि संज्ञार्थमिदं चरितार्थमिति चेच्चिन्त्यमेवेदम् । नियमादिति । अनियमे नियमकारिणी परिभाषेति भावः । लिङ्गवतीति । यथा 'इको गुणवृद्धी' इति विध्यन्तरेति । यथा 'विप्रतिषेधे पर'मिति । विध्यन्तरशेषभूतत्वञ्च विध्यन्तरनियामकत्वरूपं विवक्षितम्, अतः संज्ञानां कार्यार्थत्वेऽपि न क्षतिः । युक्त्यन्तरमप्याह—यथा चेति । उपस्थाप्यस्योपस्थापकेन वृत्त्या बोधनादिति भावः । करणादिति । स्थापनादित्यर्थः । व्यवहारायेति । क्वचित्संज्ञिनि संज्ञानां नियमो व्यवहारायेत्यन्वयः । ननु विधिरेव किं न स्यादत आह—नित्य एव त्विति । डित्थादिषु डित्थादिपदानां नित्य एव सम्बन्धो यथा गवादिपदानां गवाद्यर्थे इत्यर्थः । अस्मिन् शास्त्रे—व्याकरणे-वृद्ध्यादीनां शब्दानां शक्तिसङ्कोचलक्षणो नियमो व्यवहारायेत्यन्वयः। तत्र हेतुः—अकृत्रिम इति । कृत्रिमत्वम्—आधुनिकत्वमिति भावः । यथा गुणद्रव्ययोर्गुणे विशेषणत्वं द्रव्ये विशेष्यत्वमकृत्रिममनादिसिद्धमेव, न त्वाधुनिकं, तद्वत्सञ्ज्ञासञ्ज्ञिसम्बन्धोऽकृत्रिम एवेत्यर्थः ।

परे तु—कारिकायां नियमः—शक्तिबोधनम्, शक्तिस्तु नित्येत्याह—नित्य एवेति । एवञ्च गोत्रशब्दस्याप्यनेकेष्वर्थेषु शक्तिरस्त्येव, तद्बोधनफलकं शास्त्रम्, अज्ञातशक्तिबोधकत्वात् । कैयटोक्तनियमत्वाऽनुपपत्तेः वृद्ध्यादिष्वप्येवमेवेत्याह—वृद्ध्यादीनाञ्चेतीत्यर्थमाहुः । अत्र यद्वक्तव्यं तद्वृद्धिसूत्रे शब्देन्दुशेखरे, शक्तिवादे मञ्जूषायां च विस्तरेण निरूपितम् ।

भाष्ये—पौत्रप्रभृतेरिति । तद्रूपापत्यस्येत्यर्थः । यस्यापत्येति । यत्सम्बन्ध्यपत्यविवक्षा तत्सम्बन्धिपौत्रप्रभृतीत्यर्थः । गर्गस्य गोत्रत्वे दोषमाह—सत्याञ्चेति । न हि गर्गशब्दस्येति । वस्तुस्थित्या सदप्यप-

१—'यस्यापत्यं विवक्ष्यते तस्य पौत्रप्रभृति गोत्रसंज्ञ' पा० ।

## द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ ४ । १ । १७० ॥

### अणो ञ्यङ्ण्येञो विप्रतिषेधेन ॥ १ ॥

अणो ञ्यङ्ण्य इञित्येते‡ भवन्ति विप्रतिषेधेन । अणोऽवकाशः—आङ्गः वाङ्गः । ञ्यङोऽवकाशः—आम्बष्ठ्यः सौवीर्यः । इहोभयं प्राप्नोति—दार्व्यः ॥ ण्यस्यावकाशः—निचक्र—नैचक्र्यः । अणः स एव । इहोभयं प्राप्नोति—नीप—नैप्यः ॥ इञोऽवकाशः—आजमीढिः आजक्रन्दिः । अण स एव । इहोभयं प्राप्नोति—बुध—बौधिः ॥ ञ्यङ्ण्येञो भवन्ति विप्रतिषेधेन ।

### ञ्यङः कुरुनादिभ्यो ण्यः ॥ २ ॥

ञ्यङः कुरुनादिभ्यो ण्यो भवति विप्रतिषेधेन+ । ञ्यङोऽवकाशः—आवन्त्यः कौन्त्यः । ण्यस्य स एव । नैशो[1] नाम जनपदस्तस्मादुभयं प्राप्नोति । ण्यो भवति विप्रतिषेधेन—नैश्यः ॥ १७० ॥

## कम्बोजाल्लुक् ॥ ४ । १ । १७५ ॥

### कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् ॥ १ ॥

कम्बोजादिभ्यो लुग्वक्तव्यः । किं प्रयोजनम् ? 'चोलाद्यर्थम्' । चोलः[3] शकः केरलः यवनः ॥ १७५ ॥

## अतश्च ॥ ४ । १ । १७७ ॥

इह कस्मान्न भवति—आम्बष्ठ्या सौवीर्या ? 'अत' इत्युच्यते, न चैषोऽकारः × । तदन्तविधिना* प्राप्नोति ॥ अत उत्तरं पठति—

प्र०—द्व्यञ्म । दार्व्य इति । दार्व्यस्यापत्यमिति ञ्यङ् । बौधिरिति । साल्वावयवलक्षण इञ् ॥ १७० ॥

उ०—द्व्यञ्म । साल्वावयवेति । वृत्त्यनुक्ता अपि बुधाजमीढाजक्रन्दा भाष्यप्रामाण्यात्साल्वावयवा बोध्याः ॥ १७० ॥

अतश्च । स्त्रियां तद्राजस्याकारप्रत्ययस्य लुगित्यर्थः । तत्रादन्तस्येत्यर्थं मत्वा पृच्छति—इह

‡ वृद्धेत्कोसलाजादाञ्ञ्यङ्; कुरुनादिभ्यो ण्यः; साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ४।१।१७१-१७३

+ वृद्धेत्कोसल०; कुरुनादिभ्यो ण्यः ४ । १ । १७१; १७२  १—'नैष' 'निषध' इति पाठभेदौ ।

२—'चोडाद्यर्थम्' पा० ।  ३—'चोडः कडेरः केरलः' इति कीलहार्नपाठः । काशिका-कौमुदी-न्यास-पदमञ्जर्यादिषु तूपरिनिर्दिष्ट एव पाठ उपलभ्यते ।

× वृद्धेत्कोसलाजादाञ्ञ्यङ् ४ । १ । १७१  * येन विधिस्तदन्तस्य १ । १ । ७२

**अत इति तदन्ताग्रहणमवन्त्यादिभ्यो लुग्वचनात् ॥ १ ॥**

अत इति तदन्तस्याग्रहणम् । किं कारणम् ? 'अवन्त्यादिभ्यो लुग्वचनात्' । यदयमवन्त्यादिभ्यो लुकं शास्ति† तज्ज्ञापयत्याचार्यो 'नात्र तदन्तविधिर्भवती'ति ।

पर्श्वादिभ्यो लुग्वक्तव्यः । पर्शूः रक्षाः असुरी ‡ ।

**यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुकः ॥ २ ॥**

यदयं 'न प्राच्यभर्गादियौधेयादिभ्य' [ ४ । । १ । १७८ ] इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'भवति पर्श्वादिभ्यो लु'गिति+ ॥ १७६ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् । पादश्च समाप्तः ।

प्र०—अतश्च । पर्शूरिति । पर्शोरपत्यं स्त्री । द्व्यञ्मगधेत्यण् । तस्यातश्चेति लुक् । 'पर्श्वादियौधेयादिभ्यामणञा'विति स्वार्थेऽण् । तस्य भिन्नप्रकरणत्वाल्लुगप्राप्तो वचनेन विधीयते । तत 'ऊङुत' इत्यूङ् । रक्षा इति । रक्षसः क्षत्रियविशेषस्यापत्यं स्त्रीति पूर्ववदण्द्वयस्य लुकि कृते स्त्रिया अभिधायकात्सुलोपे दीर्घत्वे च रक्षा इति भवति । 'रक्ष' इत्ययुक्तः पाठः । असुरीति । असुरशब्दात्स्त्रियामपत्येऽञो लुक् । ततोऽण् । तस्यापि लुक् । जातिलक्षणो ङीष् ।

यौधेयादिप्रतिषेध इति । यदि पाश्चमिकस्यापि तद्राजस्यातश्चेति लुङ्न स्यात्तदा यौधेयादिभ्यो विहितस्याञो लुक्प्रतिषेधविधानमनर्थकमेव स्यादित्यर्थः । युधाया अपत्यं स्त्री । द्व्यच इति ढक् । ततः स्वार्थेऽञ् । तस्य लुकि प्रतिषिद्धेऽञन्तलक्षणे ङीनि कृते यौधेयीति भवति । यदि त्वञ्लुक्स्यात्तदा ढग्लक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात् ॥ १७७ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् । पादश्चायं समाप्तः ।

उ०—कस्मादिति ॥ अवन्तीति । तेन हि ञ्यङ्ण्ययोर्लुक् ।

रक्षस इति । अस्माद् 'द्व्यञ्मगधे'त्यणो 'अतश्चे'ति लुकि ततः पर्श्वाद्यणः 'पर्श्वादिभ्य' इति लुक् ॥१७७॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् । पादश्चायं समाप्तः ।

† स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ४ । १ । १७६

‡ द्व्यञ्मगधकलिङ्गसूरमसादण् ; ( जनपदशब्दात्० ); अतश्च ४ । १ । १७०; ( १६८ ); १७७; पर्श्वादियौधेयादिभ्यामणञौ ५ । ३ । ११७; यौधेयादि० ४ । १ । १७७ वा० २; ( ऊङुतः; जातेरस्त्रीविषयादयोपधाम् ४ । १ । ६६; ६३ )

+ द्व्यचः ४ । १ । १२१; पर्श्वादि० ५ । ३ । ११७; शार्ङ्गरवाद्यञो ङीन् ४ । १ ।७३

## तेन रक्तं रागात् ॥ ४ । २ । १ ॥

'रागा'दिति किमर्थम् ? देवदत्तेन रक्तं वस्त्रम् ।

**रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाध्यानर्थक्यम् ॥ १ ॥**

रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाधिग्रहणमनर्थकम् । न ह्यरागादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ॥ १ ॥

## लाक्षारोचनाट्ठक् ॥ ४ । २ । २ ॥

**ठक्प्रकरणे शकलकर्दमाभ्यामुपसङ्ख्यानम् ॥ १ ॥**

ठक्प्रकरणे शकलकर्दमाभ्यामुपसङ्ख्यानं कर्तव्यम् । शाकलिकम् कार्दमिकम् ।

**नील्या अन् ॥ २ ॥**

नील्या अन् वक्तव्यः । नील्या रक्तं नीलम् ।

**पीतात्कन् ॥ ३ ॥**

पीतात्कन् वक्तव्यः । पीतेन रक्तं वस्त्रं पीतकम् ।

'पीतक'शब्दो वा प्रकृत्यन्तरम्, तस्माल्लुग्वक्तव्यः ।

---

प्र०—तेन रक्तं । रक्तादीनामिति । रक्तादीनां शब्दानां योऽर्थः स एव यदि लौकिके प्रयोगे प्रत्ययेनाभिधीयते तदा प्रत्ययो भवति नान्यथा, प्रयुक्तानां शब्दानां साध्वसाधुत्वविवेकाय शास्त्रारम्भात्, 'देवदत्तेन रक्तं वस्त्र'मिति वाक्याद्योऽर्थोऽवगम्यते नासौ 'दैवदत्तं वस्त्र'मित्यतोऽवगम्यते । स्वस्वामिसम्बन्धस्यैवातः सम्प्रत्ययात् । अत एवानभिधानात् 'कोपेन रक्तं मुखम्' 'रूपेण कान्तायां रक्त' इत्यादौ वर्णाभिष्वङ्गयोर्न भविष्यति प्रत्ययः ॥ १ ॥

लाक्षा । ठक्प्रकरण इति । शकलकर्दमयोः सूत्रे पाठोऽनार्षः । नील्या इति । ओषधिविशेषो नीली । अण्बाधनार्थं वचनम् । नीलशब्दस्तु गुणगुणिनोरभेदोपचारान्मतुब्लोपाद्वा नील्या रक्ते वस्त्रे सिध्यति ॥ पीतादिति । रागविशेषवाची पीतशब्दः । प्रकृत्यन्तरमिति । स्वार्थिक-

---

उ०—तेन रक्तं । ननु रक्तादीनामर्थानामभिधाने इत्यर्थे समासोऽनुपपन्नः, सविशेषणत्वेनासामर्थ्यादत आह—रक्तादीनां शब्दानामिति । शब्दपरत्वे च 'देवदत्तस्य गुरुकुल'मितिवत्समास इति भावः । 'रागा'दित्युक्तेऽप्यनभिधानमावश्यकमित्याह—अत एवेति । अभिष्वङ्गः—प्रीतिः ॥ १ ॥

लाक्षा । प्राण्यादिरूपनील्या रागकरणत्वासम्भवादाह—ओषधीति । अण्बाधनेति । न तु नीलमिति रूपसिद्धय इत्यर्थः । तदुपपादयति—नीलशब्दस्त्विति । स्वार्थिकेति । पूर्वमते स्वस्मादन-

## हरिद्रामहारजनाभ्यामञ् ॥ ४ ॥

हरिद्रामहारजनाभ्यामञ् वक्तव्यः । हारिद्रम् माहारजनम् ।

'रागा'दित्युच्यते, तत्रेदं न सिध्यति 'हारिद्रौ कुक्कुटस्य पादौ, 'काषायौ गर्दभस्य कर्णा'विति । उपमानात्सिद्धम् । हारिद्राविव हारिद्रौ, काषायाविव काषायौ ॥ २ ॥

## नक्षत्रेण युक्तः कालः ॥ ४ । २ । ३ ॥

अयुक्तोऽयं निर्देशः । योगो हि नाम[1] भवति ययोः संनिकर्षविप्रकर्षौ स्तः, न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः, नित्ये हि कालनक्षत्रे । कथं तर्हि निर्देशः कर्तव्यः ?

### नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानम् ॥ १ ॥

नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययो भवतीति वक्तव्यम् । पुष्येण युक्तः पुष्ययुक्तः, पुष्ययुक्तश्चन्द्रमाः अस्मिन् काले—पौषमहः, पौषी रात्रिः ।

---

प्र०—कन्प्रत्ययान्तमित्यर्थः ॥ उपमानादिति । रूपसादृश्यनिमित्तादित्यर्थः ॥ २ ॥

नक्षत्रेण । योगो हीति । अप्राप्तिपूर्विका प्राप्तिर्योगः । स कालनक्षत्रयोर्नास्ति द्वयोरपि नित्यत्वात् । न च चन्द्रमसैव योगे पुष्यादीनां नक्षत्रता; सर्वदा तेषां लोके नक्षत्रव्यवहारदर्शनात् । अथापि सम्बन्धमात्रं योगः, स च नित्यानामपि प्रधानपुरुषवदविरुद्धः । तथापि कालविशेषावगमार्थः पौषादिशब्दप्रयोगः, एवं सत्यसत्यां कालविशेषावगतौ न स्यात् ।

तद्युक्तादिति । नक्षत्रयुक्तचन्द्रवाचिनः कालेऽभिधेये प्रत्ययो विधेय इत्यर्थः । चन्द्रनक्षत्रयोश्चाविभुत्वादस्ति कादाचित्को योगः । कालस्तु नित्यो व्यापी चेति योगाभावः ।

---

उ०—मिधानान्न प्रत्यय इति बोध्यम् । अत्र मते पीतशब्दादनभिधानं बोध्यम् ॥ २ ॥

नक्षत्रेण । ननु प्रधानपुरुषयोरिव नित्यः कालर्क्षयोर्योगः स्यादत आह—अप्राप्तीति । तदुक्तं भाष्ये—'ययोः सन्निकर्षविप्रकर्षौ' इति । न चेति । चन्द्रमोयोगे एव तेषां नक्षत्रत्वं न तु तदभावे इत्यर्थः । एवं सतीति । सर्वस्य कालस्य पुष्यसम्बद्धतया कालविशेषावगतावसत्यां तदवगमार्थः प्रयोगो न स्यादिति भावः । यद्यपि क्षणरूपः कालोऽनित्यस्तथा तद्धारारूपः कालपदव्यवहार्यः, स व्यवहारनित्य इति बोध्यम् ।

ननु नक्षत्रयुक्तचन्द्रलक्षणादर्थान्न प्रत्ययो विधातुं शक्यः, नापि तद्वाचिनः काले वृत्तिरत आह—नक्षत्रयुक्तेति । तद्युक्तादित्यस्य—तद्युक्तचन्द्रवाचिनः पुष्ययुक्तादिशब्दादित्यर्थः । पुष्ययुक्तादिशब्दस्य चन्द्रवाचकत्वे हेतुकथनं—नक्षत्रेण चन्द्रमसो योगादिति । काले—तद्युक्तकाले । नन्वेवमपि तयोः सार्वदिकत्वात्कथं प्रागुक्तो योगोऽत आह—चन्द्रेति ।

---

१—'नाम स भवति' पा० ।

## तत्रोत्तरपदलोपः ॥ २ ॥

तत्रैवं सत्युत्तरपदलोपो वक्तव्यः । पुष्ययुक्तशब्दाद्धि प्रत्ययो विधीयते ।

## लिङ्गवचनानुपपत्तिश्च ॥ ३ ॥

लिङ्गवचनयोश्चानुपपत्तिः । चन्द्रमसो यल्लिङ्गं वचनं च तद्युक्तवद्भावेन प्राप्नोति* ।

## कालयोगात्सिद्धम् ॥ ४ ॥

[ [1]कालयोगात्सिद्धमेतत् । ] अस्तु 'नक्षत्रेण युक्तः काल' इत्येव ।

ननु चोक्त'मयुक्तोऽयं निर्देशः, योगो हि नाम भवति ययोः संनिकर्षवि-प्रकर्षौ स्तः, न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः, नित्ये हि कालनक्षत्रे' इति । नैष दोषः । पुष्यसमीपगते चन्द्रमसि 'पुष्य'शब्दो वर्तते, तेन तत्संज्ञकेन कालो विशेष्यते ।

## तथा च सम्प्रत्ययः ॥ ५ ॥

एवं च कृत्वा लोके सम्प्रत्ययो भवति । पुष्यसमीपगते चन्द्रमसि वक्तारो भवन्ति 'पुष्येणाद्य' 'मघाभिरद्ये'ति ॥ ३ ॥

---

प्र०—लिङ्गेति । मघायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य च लुपि सति मघा इति स्त्रीत्वबहुत्वे न सिध्यत इत्यर्थः ।

कालयोगादिति । कालस्यैव पुष्यादिसमीपस्थेन चन्द्रमसा योग आश्रीयत इत्यर्थः । पुष्यसमीपगत इति । मुख्यार्थासम्भवे गौणस्याश्रयणादिति भावः । मघादयः शब्दा अपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्त्तन्ते । यथा मञ्चादयो 'मञ्चान्स्त्रियः पश्ये'ति । तेन युक्तवद्भावेऽपि दोषाभावः ॥ ३ ॥

---

उ०—'अद्य पुष्य' इत्यादौ युक्तवद्भावेऽपि न दोषोऽत आह—मघायुक्तेति । 'मघा'शब्दो नित्यबहुवचनान्तो नित्यस्त्रीलिङ्गश्च ।

कालस्यैवेति । चन्द्रगौणनक्षत्रवाचकेनैव कालयोगात्सिद्धमिति वार्त्तिकार्थ इति भावः । कैयटे—पुष्यादिसमीपस्थेनेत्यस्य-'पुष्यादिपदबोध्येने'त्यादिः । नन्वेवमपि युक्तवद्भावविषये दोषोऽत आह—मघादय इति । लक्षणास्थले स्वलिङ्गत्यागाभावादिति भावः । 'पुष्येणाद्ये'त्यादिभाष्यस्य 'भाव्य'मिति शेषः ॥ ३ ॥

---

* लुबविशेषे ४ । २ । ४; लुपि युक्तवद् व्यक्तिवचने १ । २ । ५१

१—'क्वाचित्कः पाठः ।

## लुबविशेषे ॥ ४ । २ । ४ ॥

इह कस्मान्न भवति—पौषी रात्रिः, पौषमहः ? 'अविशेष' इत्युच्यते, विशेषश्चात्र गम्यते । 'रात्रि'रित्युक्तेऽहर्नेति गम्यते, 'अह'रित्युक्ते रात्रिर्नेति गम्यते ।

इहापि तर्हि न प्राप्नोति—'अद्य पुष्य' इति । अत्रापि हि विशेषो गम्यते—'अद्ये'त्युक्ते न ह्यो न श्व इति [ गम्यते ] ।

यद्यप्यत्र विशेषो गम्यतेऽविशेषोऽपि गम्यते । 'अद्ये'त्युक्ते न ज्ञायते रात्रौ वा दिवा वेति । यतोऽविशेषस्तदाश्रयो लुब्भविष्यति ।

इहापि तर्हि यद्यपि विशेषो गम्यतेऽविशेषोऽपि तु गम्यते । 'रात्रि'रित्युक्ते न ज्ञायते कदेति । [ दिवेत्युक्ते न ज्ञायते कदेति । ] यतोऽविशेषस्तदाश्रयो लुप्प्राप्नोति ।

एवं तर्हि 'नक्षत्रेण युक्तः कालः' [ ३ ] इत्यनुवर्तते । नक्षत्रेण युक्तस्य कालस्याविशेषे । कः पुनः कालो नक्षत्रेण युज्यते ? अहोरात्रः ॥ ४ ॥

## संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ४ । २ । ५ ॥

इह कस्मान्न युक्तवद्भावो* भवति—श्रवणा रात्रिः । निपातनादेतत्सिद्धम् ।

प्र०—लुबविशेषे । अविशेषस्वरूपदर्शनाय प्रश्नप्रतिवचने—इहेति । पौषमहरित्यहर्विशेषानवगमादस्त्यविशेष इति लुप्प्रसङ्गः । अहोरात्र इति । तेनाहोरात्रस्य यदावान्तररात्र्याद्यवयवविशेषाविवक्षा तदा लुप् । विशेषविवक्षायां तु श्रवणम् । पौषोऽहोरात्र इत्यत्रापि विशेषस्य शब्देनाश्रितत्वाल्लुबभावः ॥ ४ ॥

उ०—लुबविशेषे । दर्शनाय—ज्ञापनाय । इदं प्रश्नसम्बन्धे प्रतिवचनसम्बन्धे ज्ञापनायेत्यर्थः । अहोरूपविशेषावगतेः कथमत्र लुबत आह—अहर्विशेषेति । षष्ठीसमासः । 'अविशेष इत्युच्यते' इति भाष्यं प्रसज्यप्रतिषेधमाश्रित्य । 'यद्यप्यत्रे'त्यादि तु पर्युदासं समाश्रित्येति बोध्यम् । अद्य पुष्य इति । यद्यपि 'अद्य वस्त्रं देय'मित्यादौ अद्येत्यधिकरणशक्तिप्रधानं, तथाप्यत्र भाष्यप्रामाण्याच्छक्तिमत्प्रधानं बोध्यम् । 'राहोः शिर' इतिवत्कल्पितभेदनिबन्धन आधाराधेयभावः । अत एव 'अद्यतनमहोरात्र'मित्यादेरुपपत्तिरित्यन्ये । श्रवणमिति । पौषी रात्रिरित्यादौ प्रत्ययस्य । विशेषस्य शब्देनेति । समुदायप्रतीतावप्यवयवद्वयरूपविशेषस्येत्यर्थः । अविशेष इति । प्रसज्यप्रतिषेध इति भावः ॥ ४ ॥

संज्ञायां श्रवणा । भाष्ये—निपातनादिति । निर्देशेन श्रवणाशब्दात्प्रत्ययलुपि युक्तवद्भावाभावो

१—क्वचिन्न । २—कीलहार्नभाष्येऽयं पाठो नास्ति ।

* लुपि युक्तवद्व्यक्तिवचने १ । २ । ५१ ।

किं निपातनम् ? 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' [ ४ । २ । २३ ] इति ॥ ५ ॥

## दृष्टं साम ॥ ४ । २ । ७ ॥

### दृष्टं साम कलेर्ढक्[1] ॥ १ ॥

'दृष्टं सामे'त्यत्र लेकर्ढग्वक्तव्यः । कलिना दृष्टं साम कालेयं साम गीयते ।

अपर आह—सर्वत्राग्निकलिभ्यां ढक् । सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः । अग्निना दृष्टं सामाग्नेयम् । अग्नौ भवमाग्नेयम् । अग्नेरागतमाग्नेयम् । अग्नेः स्वमाग्नेयम् । अग्निर्देवतास्याग्नेयः । कलिना दृष्टं साम कालेयम् । कलेरागतं कालेयम् । कलौ भवं कालेयम् । कलेः स्वं कालेयम् । कलिर्देवतास्य कालेयश्चरुः ।

### दृष्टे सामनि जाते चाप्यण्डिद्द्विर्वा विधीयते ।

दृष्टे सामनि जाते चाप्यण् डिद् द्विर्वा वक्तव्यः† । उशनसा दृष्टं साम औशनसम् औशनम् । शतभिषजि जातः‡ शातभिषजः शातभिषः ।

तीयादीकक्

प्र०—दृष्टं साम । कलिना दृष्टमिति । यस्य साम्नो विशिष्टकार्यविषयो विनियोगो ज्ञानातिशयसम्पत्त्या कलिनाऽज्ञायि तत्तेन दृष्टमित्युच्यते । सर्वत्रेति । सर्वेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यर्थः । जाते चेति । जातार्थे यो द्विरण्विधीयते—पूर्वं विहितो बाधकेन निर्वर्तितः पुनर्विधीयत इत्यर्थः, स वा डिद्भवति । शतभिषजीति । शतभिषजा युक्तः काल इत्यण् । तस्य लुक् । ततो जातेऽर्थे प्राग्दीव्यतोऽणित्यण्विहितः 'कालाट्ठ'ञिति ठञा बाधितः पुनः सन्धिवेलादिसूत्रेण विधीयते ।

उ०—ज्ञाप्यत इति भावः । यद्यपि तत्रैव फाल्गुनीत्यादिनिर्देशात्पूर्णिमायां न लुप्प्राप्तस्तथापि श्रवणेति निर्देशेन पूर्णिमालुम्निषेधेऽनित्यत्वस्य बोधनान्न दोषः ॥ ५ ॥

दृष्टं साम । ननु ऋग्विषयसाम्नो नित्यत्वात्कलिना दृष्टमित्यनुपपन्नमत आह—यस्य साम्न इति । ज्ञापित इत्यस्य—'प्रथमत' इत्यादिः । अज्ञायीति क्वचित्पाठः ॥ द्विरणित्यनेन योग्यतया जाते चे'त्येवान्वेतीत्याशयेनाह—जातेऽर्थे इति । 'दृष्टे सामनी'त्येतत्त्वणैव सम्बध्यत भति इवः । विद्याशब्दादीक-

१—कलेर्ढक् ४ । २ । ८ इति वार्तिकदर्शनात् काशिकादिषु सूत्रत्वेन व्याख्यातम् । अपाणिनीयं तत् ।

२—"संग्रहश्लोके–जाते च द्विरण् डिद्वा विधीयत इति पाठ" इति पदमञ्जरी ।

† टेः ६ । ४ । १४३ । ‡ प्राग्दीव्यतोऽण् ४ । १ । ८३; तत्र जातः; कालाट्ठञ्; सन्धिवेला० ४ । ३ । २५; ११; १६

तीयादीकग्वक्तव्यः । द्वैतीयीकः तार्तीयीकः ।

न विद्यायाः

विद्याया न भवतीति वक्तव्यम् । द्वितीया विद्या, तृतीया विद्येत्येव ।

गोत्रादङ्कवदिष्यते ॥

औपगवकम् [ कापटवकम् ]+ ।

दृष्टे सामनि जाते चाप्यण् डिद् द्विर्वा विधीयते ।
तीयादीकग् न विद्याया गोत्रादङ्कवदिष्यते ॥ ७ ॥

वामदेवाड्ड्यड्डयौ ॥ ४ । २ । ९ ॥

किमर्थो डकारः ? डितीति* लोपो यथा स्यात् । नैतदस्ति प्रयोजनम् । यस्येति† लोपेनाप्येतत्सिद्धम् ।

एवं तर्हि सिद्धे सति यद्ययतौ डितौ करोति तज्ज्ञापयत्याचार्यो भवत एते परिभाषे अननुबन्धकग्रहणे न सानुबन्धकस्य [ ग्रहणम् ], तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणमिति । किमेतस्य ज्ञापने प्रयोजनम् ? 'अवामदेव्य'मित्येतत्सिद्धं भवति‡ ।

सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ।
ग्रहणं मातदर्थे× भूद् वामदेव्यस्य नञ्स्वरे ॥ ९ ॥

---

प्र०—तीयादीकगिति । अर्थनिर्देशात्स्वार्थ एवेति ज्ञेयम् । न विद्याया इति । विद्यावाचिनो न भवतीत्यर्थः । गोत्रादिति । यथाङ्के गोत्रप्रत्ययान्तात्प्रत्ययः, एवं दृष्टे सामनीत्यर्थः । औपगवकमिति । 'गोत्रचरणाद्वुञ्'निति वुञ् ॥ ७ ॥

वामदेवा । अवामदेव्यमिति । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमित्यर्थः । अन्यथा 'ययतोश्चातदर्थे' इत्यनेनान्तोदात्तत्वं स्यात् । ग्रहणमिति । अतदर्थग्रहणेन सूत्रं लक्ष्यते । नञ्स्वर इति । नञाश्रयेऽन्तोदात्तत्वे विधीयमान इत्यर्थः ॥ ९ ॥

---

उ०—कोऽप्राप्तेराह—विद्यावाचिन इति । वुञिति । अङ्के यो दृष्टस्तस्य सर्वस्यैवातिदेशो न त्वङ्के आहत्यैव विहितस्येति भावः ॥ ७ ॥

वामदेवाड्ड्यड्डयौ । अत्रत्यं भाष्यं 'टिड्ढे'ति सूत्रे व्याख्यातम् ॥ ९ ॥

---

१—क्वाचित्कः पाठः । + सङ्घाङ्कलक्षणेष्वञ्यञिञामण्; गोत्रचरणाद्वुञ् ४।३।१२७;१२६

* टेः ६ । ४ । १४३ । † यस्येति च ६ । ४ । १४८ ।

‡ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६ । २ । २ ।

× ययतोश्चातदर्थे ६ । २ । १५६

## परिवृतो रथः ॥ ४ । २ । १० ॥

### परिवृतो रथ इति तदेकान्तग्रहणम् ॥ १ ॥

परिवृतो रथ इत्यत्र तदेकान्तग्रहणं कर्तव्यम् । 'येन परिवृतो रथो रथैकान्तश्चेत्स भवती'ति वक्तव्यम् । इह मा भूत्—'पुत्रैः परिवृतो रथः', 'छात्रैः परिवृतो रथ' इति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कस्मान्न भवति पुत्रैः परिवृतो रथः, छात्रैः परिवृतो रथ इति ? अनभिधानात् ॥ १० ॥

## पाण्डुकम्बलादिनिः ॥ ४ । २ । ११ ॥

अयं योगः शक्योऽवक्तुम् । कथं पाण्डुकम्बली पाण्डुकम्बलिनौ पाण्डुकम्बलिन इति ? इनिनैतन्मत्वर्थीयेन सिद्धम्+ । पाण्डुकम्बलोऽस्यास्तीति पाण्डुकम्बली ॥ ११ ॥

## कौमारापूर्ववचने ॥ ४ । २ । १३ ॥

### कौमारापूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्वे ॥ १ ॥

कौमारापूर्ववचन इत्यत्रोभयतः स्त्रिया अपूर्वत्व इति वक्तव्यम् । अपूर्वपतिं

प्र०—परि । तदेकान्तग्रहणमिति । रथस्य चर्मवस्त्रादयोऽवयवा इति तद्वाचिभ्य एव प्रत्ययो भवतीत्यर्थः । अनभिधानादिति । पौत्रो रथ इत्यादावभिधानस्याभावादित्यर्थः ॥ १० ॥

पाण्डुकम्बलादिनिः । इनिनैतदिति । अणत्वनभिधानान्न भवतीति तद्बाधनार्थमपीद न वाच्यमिति भावः ॥ ११ ॥

कौमारापू । उभयत इति । उभयस्मिन्नुभयतः । यदि कौमारीति स्त्रियां प्रयोगोऽथ

उ०—परिवृतो रथः । अवयवा इति । अवयवा इवेत्यर्थः । संयुक्तचक्रादिवदत्राप्यवयवत्वबुद्धिरिति भावः ॥ १० ॥

पाण्डुकम्बलादिनिः । नन्वसति सूत्रे पाण्डुकम्बलेन परिवृत इत्यर्थे पूर्वेणाणस्यादत आह—अणित्विति ॥ ११ ॥

कौमारा । उभयत इत्यस्य—स्त्रियाः पुंसश्चेति नार्थः, 'स्त्रिया' इति वाक्यशेषात्, उदाहरणवि-

+ अत इनिठनौ ५ । २ । ११५ ।

कुमारीमुपपन्नः[1] कौमारो भर्ता । कुमार्यपूर्वपतिः पतिमुपपन्ना कौमारी भार्या ।

कौमारापूर्ववचने कुमार्या अणिवधीयते ।
अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥

अथवा कुमार्यां भवः कौमारः* ॥ यद्येवं कौमारी भार्येति न सिध्यति ।

पुंयोगात्स्त्र्यभिधानम् ॥ २ ॥

पुंयोगात्स्त्र्यभिधानं भविष्यति† । कौमारस्य भार्या कौमारीति ॥ १३ ॥

## सास्मिन् पौर्णमासीति ॥ ४ । २ । २१ ॥

सास्मिन्पौर्णमासीति संज्ञाग्रहणम् ॥ १ ॥
सास्मिन्पौर्णमासीत्यत्र संज्ञाग्रहणं कर्तव्यम् ।

असंज्ञायां हि[2] गरीयानुपसंयोगः [ मासार्धमासयोः[3] ] ॥ २ ॥

प्र०—कौमारः पतिरिति पुंस्युभयत्रापि स्त्रियाः पाणिग्रहणस्यापूर्वत्वे प्रयोगः कार्य इत्यर्थः । एतच्च निपातनसामर्थ्याल्लभ्यमेव वार्तिककृता प्रकाशितम् । अपूर्वपतिमिति । अविद्यमानः पूर्वः पतिर्यस्यास्तां प्राप्त इत्यर्थः । द्वितीयासमर्थात्कुमारीशब्दादुपयन्तर्यण्प्रत्ययः । स्त्रियान्तु स्वार्थे प्रत्ययः । कुमार्यां भव इति । रोगादिषु तु यद्यभिधानं नास्ति तदानभिधानात्प्रत्ययाभावः । कौमारस्य भार्येति । प्रत्यासत्त्या यैव तस्य कौमारव्यपदेशनिबन्धनं सैवाभिधीयते नान्या ॥ १३ ॥

सास्मिन् । संज्ञाग्रहणं सूत्रेऽनार्षमिति वार्त्तिकमारब्धम् । उपसंयोग इति । उपसंयुज्यत

उ०—रोघाचात आह—उभयस्मिन्निति । तद्विवृणोति-यदीत्यादि । पाणिग्रहणस्येति । निपातनबललब्धमेतत् । तद्ध्वनयन् वक्ष्यति—एतच्चेति । सौत्रापूर्वशब्दो भावप्रधान इत्याह—अपूर्वत्वे इति । उपयन्तरि—विवोढरि । स्वार्थे—उपयमनविशिष्टे स्वार्थ इत्यर्थः । 'कुमार्यां भवतीति वे'ति वार्तिकव्याख्यानं—कुमार्याम्भव इति । तस्याम्प्राप्त इत्यर्थः । तस्यां सम्बद्ध इति यावत् । यद्यभिधानमिति । इदञ्च सूत्रारम्भेऽप्यावश्यकमन्यथा तवापि स दुर्वारः । नन्वेवमन्यस्या अप्यभिधानं स्यादत आह—प्रत्यासत्त्येति । इदं च सूत्रारम्भेऽप्यावश्यकमन्यथा भवार्थमादायातिप्रसङ्गो दुर्वार इति बोध्यम् ॥ १३ ॥

सास्मिन्पौर्णमासीति । भाष्ये—पञ्चरात्रे दशरात्रे इति पाठः । मासार्धमासयोरिति च

१—'कुमारीं पतिरुपपन्नः' पा० ।
* तत्र भवः ४ । ३ । ५३ † पुंयोगादाख्यायाम् ४ । १ । ४८
२—क्वचिन्न । ३—क्वाचित्कोऽयं पाठः । नागेशस्त्वाह—'मासार्धमासयोरिति च वार्तिकपाठः' इति ।

अक्रियमाणे हि संज्ञाग्रहणे गरीयानुपसंयोगः कर्तव्यः स्यात् । 'मासार्धमासयो'रिति वक्तव्यं स्यात् । इह मा भूत्—पौषी पौर्णमास्यस्मिन्पञ्चदशरात्रे दशरात्र इति।[1] संवत्सरपर्वणीति च वक्तव्यं स्यात् । भृतकमासे मा भूदिति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इतिकरणः क्रियते, ततश्चेद्विवक्षा ॥ २१ ॥

## कस्येत् ॥ ४ । २ । २५ ॥

यस्येति लोपः* कस्मान्न भवति ? इकारोच्चारणसामर्थ्यात् ।

अथ यत्कायं हविः कथं तस्य सम्प्रैषः कर्तव्यः ? यदि तावत्किमः कादेशः,

प्र०—इत्युपसंयोग उपाधिरुच्यते । अनेक उपाधिर्निर्देष्टव्यः स्यादित्यर्थः । संवत्सरपर्वणीति । संवत्सरस्य द्वादश पर्वाणि मासान्तास्तत्र पर्वविशिष्टे मासे यथा स्यात्, भृतकमासे—पौष्या पौर्णमास्या तद्वति मासादिव्यपदेशभाजि पौषशब्दो मा भूदित्येवमर्थमित्यर्थः ॥ २१ ॥

कस्येत् । इकारोच्चारणसामर्थ्यादिति । यदा कशब्दस्येकारस्तदायं परिहारः । यदा तु किमो मकारस्येकारस्तदा लोपेऽपि कायमिति सिध्यति । यद्यपि कशब्दस्येत्त्वे कृते परत्वाद्वृद्ध्या लोपो बाध्यते—यथा श्रीर्देवता अस्य श्रायमिति; तथापि परिहारान्तरसद्भावादेतद्भाष्यकृता नोक्तम् । अथेति । कल्पकारविप्रतिपत्त्या संशयः । अध्वर्युणा होतुः सम्प्रैषः क्रियते । यदि तावदिति । किमो विभक्तौ कादेशं कृत्वा कस्येति यदि निर्देशः कृत इत्यर्थः । किंशब्दश्च

उ०—वार्त्तिकपाठः । संवत्सरस्येति । पूर्णिमान्तमानेन द्वादशमासात्मकस्य द्वादश पर्वाणि मासान्ता इत्यर्थः । पर्वविशिष्टे—पर्वपरिच्छिन्न इत्यर्थः । माघाद्यव्यपदेशभाजीति पाठः । पौषमाघादिव्यवहाररहिते इत्यर्थः । क्वचित्तु मासादिव्यपदेशभाजीति पाठः । आदिनार्धमासः । भाष्ये—ततश्चेद्विवक्षेति । ततः—प्रत्ययान्तादीदृशार्थविवक्षा चेत्तदा प्रत्यय इत्यर्थः ॥ २१ ॥

कस्येत् । तदा लोपेऽपीति । 'वार्णादाङ्ग'मितिन्यायेन दीर्घात्पूर्वं लोप इति भावः । पुनर्यस्येति लोपस्तु न, पूर्वलोपस्यासिद्धत्वात् स्थानिवत्त्वाद्वा । वृद्ध्या लोप इति । वृद्ध्युत्तरं तु तस्य प्राप्तिरेव नेति भावः । वृद्धेर्लोपस्य बलवत्त्वाश्रयेण भाष्यम्, अत एव किमः कायमिति सिध्यतीत्यन्ये । कल्पकारेति । श्रुतिविप्रतिपत्त्या संशय इत्यन्ये ।

ननु विभक्तौ विहितस्य कादेशस्य तद्धिते कथम्प्राप्तिरत आह—किमो विभक्ताविति । ननु किंशब्देन कथं प्रजापतिरुच्यतेऽत आह—किंशब्दश्चेति । यदा कशब्दस्यैवेति । अत्र 'न किम' इत्युक्त्वा

१—'पञ्चरात्रे दशरात्रे' इति नागेशसम्मतः पाठः

२—'वेति' पा० ।

* यस्येति च ६ । ४ । १४८

'कस्मा अनुब्रूही'ति भवितव्यम् । अथ न किमः, 'कायानुब्रूहि'ति भवितव्यम् ।

यद्यपि किमोऽथापि न किमः, उभयथा 'कस्मा अनुब्रूहि'ति भवितव्यम् । सर्वस्य हि सर्वनामसंज्ञा क्रियते† सर्वश्च प्रजापतिः प्रजापतिश्च[1] कः ।

अपर आह—'यद्येव किमोऽथापि न किमः, उभयथा 'कायानुब्रूही'ति भवितव्यम् । संज्ञोपसर्जनयोर्हि सर्वनामसंज्ञा प्रतिषिध्यते‡ संज्ञा चैषा तत्रभवतः ॥२५॥

## अपोनप्त्रपांनप्तृभ्यां घः ॥ ४ । २ । २७ ॥

अथ यदपोनप्त्रियमपांनप्त्रियं हविः कथं तस्य सम्प्रैषः कर्तव्यः ? अपोनपातेऽनुब्रूहि, अपांनपाते अनुब्रूहि ॥ अपोनप्त्रपांनप्तृभावः कस्मान्न भवति ? प्रत्ययसंनियोगेन ऋकारान्तत्वमुच्यते, तेनासति प्रत्यये न भवितव्यम् ॥ २७ ॥

प्र०—प्रश्नाक्षेपयोरिव प्रजापतौ वर्तते । अथ नेति । यदा कशब्दस्यैव कस्येति निर्देश इत्यर्थः ।

सर्वस्येति । सर्वार्थवाचिन इत्यर्थः । सर्वश्चेति । कार्यकारणयोरभेदादिति भावः । प्रजापतिश्च क इति । सर्वादिषु कशब्दस्यापाठेऽपि अन्वर्थसंज्ञाविज्ञानात्सर्वनामसंज्ञा भवति । गणपाठस्तु प्रपञ्चार्थः । येषां तु सकलं कृत्स्नमित्यादीनां सर्वनामसंज्ञा नेष्यते तेषां 'न बहुव्रीहा'-वित्यत्र नेति योगविभागात्तदभावः । यागसंप्रदानं देवता । मन्त्रस्तुत्यश्चार्थः । संज्ञा चैषेति । यद्येवं कादेशाभावात्कायेति किमो न सिध्यति । एवं तर्हि कस्येत्यत एव निपातनात्कादेशो भविष्यतीत्यदोषः ॥ २५ ॥

अपो । अथेति । वेदे क्वचिदपोनप्त्रे स्वाहेति ऋकारान्तः प्रयोगो दृश्यते, क्वचिदपोनपाद-पांनपादिति तकारान्तप्रयोग इति प्रश्नः । प्रत्ययसंनियोगेनेति । वेदे तु छान्दसत्वात्क्वचिदृ-कारान्तप्रयोगः ॥ २७ ॥

उ०—पूर्वपक्षिणा किमोऽपि निर्देशे दोषाभावस्य सूचितत्वेन सिद्धान्तिना नोक्तमेतत् । एतदुत्तरभाष्यं द्वयोरेकदे-शिनोः प्रौढोक्तिपरम् । अत एव सनादिसूत्रस्थभाष्यविरोधो न, 'विश्वेषां देवाना'मिति प्रयोगविरोधश्च नेति बोध्यम् । ननु सर्वशब्दस्य संज्ञायामपि कथं 'क'शब्दस्येत्यत आह—सर्वार्थेति । भाष्ये—सर्वश्च प्रजापतिः प्रजापतिश्च क इति । अत एव 'सर्वं समाप्नोषि ततोऽसि सर्व' इति गीतायामुक्तम् । ननु ब्रह्मणः पूजायामविनियोगात्कथं देवतात्वमत आह—यागसम्प्रेति । कादेशाभावादिति । 'किमः क' इत्यत्र 'त्यदादीना'मित्युनुवृत्तेरिति भावः । एवं तर्हीति । एवञ्च 'अपर आहे'त्यस्य प्रौढित्वं सूचितम् ॥ २५ ॥

† सर्वादीनि सर्वनामानि १ । १ । २७

१—'प्रजापतिर्वै कः' तै० सं० १ । ७ । ६ । ६

‡ संज्ञोपसर्जनप्रतिषेधः १ । १ । २७ वा० २ । पृ० २७८

## छ च ॥ ४ । २ । २८ ॥

### छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम् ॥ १ ॥

छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानं कर्तव्यम् । पैङ्गाक्षीपुत्रीयम् तार्णबिन्दवीयम् ।

### शतरुद्राद् घ च ॥ २ ॥

शतरुद्राद् घ प्रत्ययो वक्तव्यः, छश्च वक्तव्यः। शतरुद्रियम् शतरुद्रीयम् ॥२८॥

## कालेभ्यो भववत् ॥ ४ । २ । ३४ ॥

कथमिदं विज्ञायते—भवे ये प्रत्यया विहितास्ते भवन्ति कालेभ्यः सास्य देवतेत्यस्मिन्नर्थ इति, आहोस्वित्कालेभ्यो भवे ये प्रत्यया विहितास्ते* भवन्ति सास्य देवतेत्यस्मिन्नर्थ इति । कश्चात्र विशेषः ?

### कालेभ्यो भवे प्रत्ययमात्रप्रसङ्गः ॥ १ ॥

यदि विज्ञायते 'भवे ये प्रत्यया विहितास्ते भवन्ति कालेभ्यः सास्य देवतेत्यस्मिन्नर्थ' इति प्रत्ययमात्रं प्राप्नोति ।

### यः कालेभ्यो भवे तस्य विधाने प्रातिपदिकमात्रात्प्रसङ्गः ॥ २ ॥

अथ विज्ञायते कालेभ्यो भवे ये प्रत्यया विहितास्ते भवन्ति सास्य देवतेत्य-स्मिन्नर्थ' इति प्रातिपदिकमात्रात्प्राप्नुवन्ति ।

### सिद्धं तूभयनिर्देशात् ॥३ ॥

सिद्धमेतत् । कथम् ? उभयनिर्देशात् । उभयनिर्देशः कर्तव्यः—'कालेभ्यो भववत्कालेभ्य' इति ।

---

कालेभ्यो । कथमिति । कालेभ्य इति सकृच्छ्रवणाद्भवेन वाभिसंबन्धः स्यात् सास्य देव-तेत्यनेन वेति प्रश्नः । प्रत्ययमात्रमिति । 'दिगादिभ्यो य'दिति यत्प्रत्ययो भवे विहितः स काल-वाचिभ्यः प्राप्नोतीत्यर्थः । प्रातिपदिकमात्रादिति । 'कालाट्ठ'ञिति ठञिन्द्रादेरपि प्राप्नोति । सिद्धं त्विति । वतिरतिदेशमात्रे चरितार्थ इति न सर्वसादृश्यं लभ्यत इति वार्त्तिककारो मन्यते ।

---

छ च । शतरुद्रिये शतशब्दोऽनन्तवाची ॥ २८ ॥

कालेभ्यो । सकृदिति । आवृत्त्योभयान्वयेऽपि ऋत्वादिभ्यो विहितोऽण् मुहूर्त्तादिभ्योऽपि स्यादित्यपि

---

* कालाट्ठञ् ४ । ३ । ११ १—'भवे चेत्' पा० ।

स तर्ह्युभयनिर्देशः कर्तव्यः । न कर्तव्यः । 'भववदि'ति वतिनिर्देशोऽयम्[1] । यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन भवे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषणेन 'सास्य देवते'त्यस्मिन्नर्थे भवन्ति ततोऽमी भववत्कृताः स्युः । अथ हि प्रकृतिमात्राद्वा स्युः, प्रत्ययमात्रं वा स्यात्, नामी भववत्कृताः स्युः ॥३४॥

## महाराजप्रोष्ठपदाट्ठञ् ॥ ४ । २ । ३५ ॥

### ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम् ॥ १ ॥

ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानं कर्तव्यम् । नवयज्ञो वर्ततेऽस्मिन्काले नावयज्ञिकः, पाकयज्ञिकः ।

### पूर्णमासादण् ॥ २ ॥

पूर्णमासादण्वक्तव्यः । पूर्णमासो वर्ततेऽस्मिन्काले पौर्णमासी तिथिः ॥ ३५ ॥

## पितृव्यमातुलमातामहपितामहाः ॥ ४ । २ । ३६ ॥

पितृव्यमातुलेति किं निपात्यते ?

### पितृमातृभ्यां भ्रातरि व्यड्डुलचौ ॥ १ ॥

पितृमातृभ्यां भ्रातरि व्यड्डुलचौ प्रत्ययौ निपात्येते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ।

मातामहपितामहेति किं निपात्यते ?

### मातृपितृभ्यां पितरि डामहच् ॥ २ ॥

मातृपितृभ्यां पितरि डामहच्प्रत्ययो निपात्यते । मातुः पिता मातामहः । पितुः पिता पितामहः ।

---

प्र०—वतिनिर्देशोऽयमिति । कालेभ्यो भवे इत्येव भवार्थे विहिताः प्रत्ययाः सिध्यन्तीति वतिनिर्देशः सर्वसादृश्यपरिग्रहार्थः कृतः ॥ ३४ ॥

---

उ०—बोध्यम् । इत्येवेति । भवे इति सप्तम्यन्तम् । भवे ये प्रत्यया विहितास्ते कालवाचकेभ्य इत्यर्थः ॥३४॥

पितृव्यमातुल । भाष्ये—व्यनिति नित्, निरनुबन्धकस्तिद्वेति बहुदर्शिभिर्विचार्यम् ॥ चिच्चेति ।

---

१—'वतिना निर्देशोऽय'मिति पा० ।

## मातरि षिच्च ॥ ३ ॥

[ मातृपितृभ्यां मातरि डामहच् ] षिच्च वक्तव्यः† । [ मातुर्माता ] मातामही, [ पितुर्माता ] पितामही ।

## महो वा छन्दस्यनङोऽवग्रहदर्शनात् ॥ ४ ॥

महो वा पुनरेष भविष्यति च्छन्दस्यानङोऽवग्रहदर्शनात् । छन्दस्यनङो‡-ऽवग्रहो दृश्यते । पितामह* इति ।

## अवेर्दुग्धे सोढदूसमरीसचः ॥ ५ ॥

अवेर्दुग्धे सोढदूसमरीसच इत्येते प्रत्यया वक्तव्याः । अविसोढम् अविदूसम् अविमरीसम् ।

## तिलान्निष्फलात्पिञ्जपेजौ ॥ ६ ॥

तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ । तिलपिञ्जः तिलपेजः ।

## पिञ्जश्छन्दसि डिच्च ॥ ७ ॥

पिञ्जश्छन्दसि डिच्च†† वक्तव्यः । तिल्पिञ्जं दण्डानतम्+ । ॥ ३६ ॥

प्र०—पितृव्यमातुल । महो वेति । पितृशब्दस्यानङादेशो निपात्यते महच्च प्रत्ययः । तेन पदसंज्ञायां सत्यां पितेत्यवग्रहो भवति, डामहचि न स्यात् । अविसोढमिति । षत्वं सकारोच्चारणसामर्थ्यान्न भवति, अन्यथा षोढप्रत्ययं प्रक्रियालाघवार्थं कुर्यात् । एवं दूसमरीसयोरपि षत्वाभावः सकारस्य । तिलपिञ्ज इति । तिलो धान्यविशेषः । फलरहित इत्यर्थः ॥ ३६ ॥

उ०—गौरादिगणे मातामहीशब्दपाठोऽनार्ष इति भावः । डामहच्चि त्विति । तत्र भत्वादिति भावः । एवं दूसेति । न च एयन्तात्क्विपि 'अविदू'रित्यादौ सकारस्य चारितार्थ्यम्; तेषामभिधाने दृढतरमानाभावादिति भावः । फलरहित इति । फलकाले फलरहित इत्यर्थः ॥ ३६ ॥

१—अयं पाठः क्वचिन्नास्ति । † षिद्गौरादिभ्यश्च ४ । १ । ४१
‡ ङिच्च १ । १ । ५३; नलोपः प्रातिपदिकान्तस्य ८ । २ । ७
* अथर्ववेदे ५ । ५ । १ †† टेः ६ । ४ । १४३
+ 'तिल्पिञ्जं दण्डनं नडम्' इत्यथर्ववेदे पाठः ।

## भिक्षादिभ्योऽण् ॥ ४ । २ । ३८ ॥

किमर्थं भिक्षादिषु युवतिशब्दः पठ्यते न 'तस्य समूहः' [ ३७ ] इत्येव सिद्धम् ? न सिध्यति । अनुदात्तादिलक्षणोऽञ्प्राप्तस्तद्बाधनार्थम्× ।

अत उत्तरं पठति—

**भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ ॥१॥**

भिक्षादिषु युवतिग्रहणमनर्थकम् । किं कारणम् ? 'पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ' । पुंवद्भावोऽत्र भविष्यति 'भस्याढे तद्धिते पुंवद्भवती'ति+ । सिद्धश्च[2] प्रत्ययविधौ । स च सिद्धः प्रत्ययविधौ ॥ ३८ ॥

## गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥४।२।३९॥

वृद्धाच्चेति वक्तव्यम् । वृद्धानां समूहो वार्द्धकम्[3] ।

**अञो वुञ्पूर्वविप्रतिषिद्धम् ॥ १ ॥**

अञो वुञ्भवति पूर्वविप्रतिषेधेन । अञोऽवकाशः—कपोत—कापोतम्× । वुञोऽवकाशः—ग्लुचुकायनि—ग्लौचुकायनकम्[4] । इहोभयं प्राप्नोति—औपगवकम् कापटवकम् । वुञ्भवति पूर्वविप्रतिषेधेन ।

प्र०—भिक्षा । पुंवद्भावोऽत्रेति । पुंवद्भावे सत्याद्युदात्तत्वादणिसद्ध इत्यर्थः । सिद्धश्चेति । पूर्वं पुंवद्भावः पश्चात्प्रत्यय इत्यर्थः ॥ ३८ ॥

गोत्रो । कापोतमिति । 'लघावन्ते द्वयोश्च बह्वषो गुरु'रिति मध्योदात्तत्वादनुदात्तादिः

उ०—भिक्षादिभ्योऽण् । पुंवद्भावे सतीति । कनिन्प्रत्ययान्तत्वादिति भावः । ननु प्रत्यये सति तन्निमित्तं भत्वमिति कथमयप्रत्ययोऽत आह—भाष्ये—सिद्धश्चेति ॥ ३८ ॥

१—'प्राप्नोति' पा० । × अनुदात्तादेरञ् ४ । २ । ४४

+ भस्याढे तद्धिते ६ । ३ । ३५ वा० १

२—वार्तिकमेतदिति केचित् । तन्निर्मूलम्, 'भाष्ये–सिद्धश्चे'त्युद्द्योते दर्शनात् ।

३—'वृद्धाच्चे'ति वार्तिकमिह केचिदधीयते । ४—'ग्लौचुकायनकम्' इत्यधिकं कीलहार्नभाष्ये ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । वक्ष्यत्येतत् 'पूर्वोऽपि वुञ्परमञं बाधत' इति† ।

अथवेष्टवाची परशब्दः—'विप्रतिषेधे परं यदिष्टं तद्भवती'ति ।

ठक् तु विप्रतिषेधात् ॥ २ ॥

ठक्तु भवतिं विप्रतिषेधेन । ठकोऽवकाशः—सक्तु—साक्तुकम्‡ । अत्रः स एव । इहोभयं प्राप्नोति—आपूपिकम् शाष्कुलिकम् मौदकिकम् । ठग्भवति विप्रतिषेधेन ॥ ३९ ॥

## केदाराद् यञ् च ॥ ४ । २ । ४० ॥

"'गणिकायाश्चे'ति वक्तव्यम् । गणिकानां समूहो गाणिक्यम् ॥ ४० ॥

## ब्राह्मणमाणववाडवाद्यन् ॥ ४ । २ । ४२ ॥

किमर्थं ब्राह्मणादिभ्यो यन्विधीयते न यञ् प्रकृतः+ सोऽनुवर्तिष्यते । न ह्यस्ति विशेषो ब्राह्मणादिभ्यो यनो वा यञो वा, तदेव रूपं स एव स्वरः¶ ।

एवं तर्हि सिद्धे सति यद्ब्राह्मणादिभ्यो यनं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? यन्प्रकरणे पृष्ठादुपसङ्ख्यानं चोदयिष्यति × तन्न वक्तव्यं भवति ।

यन्प्रकरणे पृष्ठादुपसङ्ख्यानम् ॥ १ ॥

यन्प्रकरणे पृष्ठादुपसङ्ख्यानं कर्तव्यम् । पृष्ठानां समूहः पृष्ठ्यः षडहः ॥ ४२ ॥

---

प्र०—कपोतशब्दः । सक्तुशब्दस्तुन्प्रत्ययान्तत्वादाद्युदात्तः । शष्कुलीशब्दो ङीषन्तोऽन्तोदात्तत्वादनुदात्तादिः ॥ ३९ ॥

---

उ०—गोत्रोक्षो । आद्युदात्त इति । अत एव 'अचित्ते'ति ठकोऽयमवकाश इति भावः ॥ ३९ ॥

ब्राह्मणमाणव । भाष्ये—तदेव रूपमिति । नपुंसकत्वा'द्यञश्चे'त्यत्रापत्यग्रहणाच्च न स्त्रियां विशेषः, वृद्धत्वाच्च न वृद्धिकृतो विशेषः । योगविभागसामर्थ्याच्च ठञो न सम्बन्धः; घ्यानुकृष्टत्वाच्च न वुञ इति भावः ॥ ४२ ॥

---

† ४ । २ । ४५ सूत्रभाष्ये ।

‡ अचित्तहस्तिधेनोष्ठक् ४ । २ । ४७

१—'गणिकायाश्चे'ति वार्तिकमिह केचिदधीयते ।

+ केदाराद् यञ् च ४ । २ । ४०

¶ ञ्नित्यादिर्नित्यम् ६ । १ । १९७

× ४ । २ । ४२ वा० १ पृ० ६४३

## ग्रामजनबन्धुभ्यस्तल् ॥ ४ । २ । ४३ ॥

### [ गजसहायाभ्यां च ॥ ]

'गजसहायाभ्यां चे'ति वक्तव्यम् । गजता सहायता ।

### अह्नः खः ॥ १ ॥

अह्नः खो वक्तव्यः । अह्नां समूहोऽहीनः ।

### क्रतौ ॥ २ ॥

क्रताविति वक्तव्यम् । इह मा भूत्—

'आह्नाय* धूतपाप्मानो भास्करा जातमृत्यवः ।

### पर्श्वाः सण् ॥ ३ ॥

पर्श्वाः सण् वक्तव्यः । पर्शूनां समूहः पार्शवम् ।

यदि सण्क्रियत इत्संज्ञा न प्राप्नोति । एवं तर्हि णस् वक्तव्यः† ॥ ४३ ॥

## खण्डिकादिभ्यश्च ॥ ४ । २ । ४५ ॥

खण्डिका शुक उलूक । किमर्थं खण्डिकादिषूलूकशब्दः पठ्यते नानुदात्तादेरित्येव‡ सिद्धम् ? न सिध्यति । चाषोलूकयोश्छन्दस्याद्युदात्तप्रयोगो दृश्यते—'चाषेण किकिदीविना'§ 'यदुलूको वदति¶ । नैतयोश्छन्दसि सामूहिको दृश्यते, यत्र च स दृश्यते, तत्रैतावनुदात्तादी ।

---

प्र०—ग्राम । आह्नायेति । खण्डिकादिषु दर्शनादहःशब्दादञ्, तदन्ताच्चतुर्थी ॥ ४३ ॥

खण्डिका । तत्रैताविति । चाषशब्दः चषेर्ण्यन्तादच्यन्तोदात्तः । उलूकशब्दो 'लघावन्ते द्वयोश्चे'ति मध्योदात्तः । औलूक्यशब्दो गर्गादियञन्तः । बहुवचान्तानामिति । द्वयोस्तु समूह-

---

उ०—ग्रामजनबन्धु । क्रताविति । क्रतुवृत्तेरहञ्शब्दादित्यर्थः । एवं च सुत्यासमूहे रूढोऽहीनशब्द इति भावः ॥ ४३ ॥

खण्डिकादिभ्यश्च । प्रत्ययलक्षणेनेति । इदमुपलक्षणं गोत्रार्थकादित्यर्थे लुक्यपि गोत्रार्थकत्वमक्षतमेवेत्यपि बोध्यम् । पूर्वविप्रतिषेधेनेति । वक्ष्यमाणेनेत्यर्थः । अत्रापि पूर्वविप्रतिषेधाश्रानात्परिहारान्त-

---

१—अयं पाठः क्वाचित्कः । 'वृत्तिकृता तु वार्तिकस्थ'सहाय'शब्दोऽपि सूत्रे प्रक्षिप्तः' इत्यत्र तत्त्वबोधिनीकारः । * खण्डिकादिभ्यश्च ४ । २ । ४५ इति समूहेऽञ् ।

† सिति १ । ४ । १६ ( ओर्गुणः ६ । ४ । १४६ ) २—'खण्डिकशुकोलूक' पा० ।

‡ अनुदात्तादेरञ् ४ । २ । ४४ § यजु० १२ । ८७; ऋ० १० । ९७ । १३; तै० सं० ४ । २ । ६ । ४ ¶ अथर्व० ६ । २९ । १

इदं तर्हि प्रयोजनम् । अयमौलूक्यो गोत्रं × तत्र गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम् + । एतदपि नास्ति प्रयोजनम् । बहुवचनान्तानां [ हि' ] सामूहिकः, बहुषु च लुक्, तत्र लुकि कृते§ऽनुदात्तादेरित्येव सिद्धम् । न सिध्यति । गोत्रेऽलुगचि' [ ४ । १ । ८९ ] इत्यलुक् प्राप्नोति ।

**अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।**

'अनुदात्तादे'रित्येवाञ्सिद्धः, किमर्थं क्षुद्रकमालवशब्दः* खण्डिकादिषु पठ्यते ? गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम् ।

**गोत्राद्वुञ्न च तद्गोत्रं**

गोत्राद्वुञ्भवतीत्युच्यते, न च क्षुद्रकमालवशब्दो गोत्रम् । न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते । तद्यथा,—जनपदसमुदायो जनपदग्रहणेन न गृह्यते । काशिकोसलीया इति वुञ् न भवति† ॥ तदन्तविधिना‡ प्राप्नोति ।

**तदन्तान्न स सर्वतः ॥ १ ॥**

परिगणितेषु कार्येषु तदन्तविधिः, न चेदं तत्र परिगण्यते ।

---

प्र०—व्यवहारो लोके प्रायो नास्तीति भावः । बहुषु चेति । 'यञञोश्चे'त्यनेन । लुकि कृत इति । ननु लुक्यपि कृते प्रत्ययलक्षणेन गोत्रलक्षणो वुञ्पूर्वविप्रतिषेधेन प्राप्नोत्येव । एवं तर्हि परिहारान्तराभिधानात्तन्नोक्तम् । सामर्थ्याच्चौलूक्यशब्दार्थं उलूकशब्दस्य यञ्लुगन्तस्य पाठः । कृतयञ्लुक उलूकशब्दस्यानुकरणो गणे निर्दिष्टः । अञ्सिद्धिरिति । क्षुद्रकस्यापत्यानीति 'जनपदशब्दा'दिति विहितस्य तद्राजस्य लुक् । मालवात्तु वृद्धलक्षणस्य ञ्यङः । ततो द्वन्द्वः । ततः समासान्तोदात्तत्वेनानुदात्तादित्वमिति भावः । अत्र च 'गोत्रेऽलुगची'ति ञ्यङो लुक्प्रतिषेधा'दापत्यस्ये'ति

---

उ०—रमुक्तमिति भावः । भाष्ये—अलुगिति । अत्र औलूक्यशब्दादणि 'आपत्यस्ये'ति यलोपः । नन्वत्रोलूकग्रहणं तत्कथमौलूक्यशब्दादस्य प्राप्तिरत आह—सामर्थ्यादिति । औलूक्यशब्दार्थं इति । प्रयोजनवाच्यर्थान्तम्प्रथमान्तम् । उक्तमेव विवृणोति—कृतेति । अनुकरण इति । अनुकरणभूतः शब्द इत्यर्थः । / ञ्यङो लुक्प्रतिषेधादिति । क्षुद्रकाद्विहितास्तु नालुक्, अजादौ प्राग्दीव्यतीये विवक्षिते तदव्यवहितस्यैवालुग्विधानादिति भावः । समुच्चयाद्यर्थस्यासम्भवादाह—इत्यर्थं इति । यद्यपि क्षुद्रकमालवो न लौकिकं गोत्रं, तथापि तत्त्वारोपो बोध्यः । तदन्तादिति । गोत्रान्तादित्यर्थः । उगिद्वर्णग्रहण एवेति ।

---

× गर्गादिभ्यो यञ् ४ । १ । १०५ + गोत्रोक्षोष्ट्रोरभ्र......वुञ् ४ । २ । ३९

१—क्वचिन्न । § यञञोश्च २ । ४ । ६४ * समासस्य ६ । १ । २२३

† जनपदतदवध्योश्च; अवृद्धादपि बहुवचनविषयात् ४ । २ । १२४, १२५

‡ येन विधिस्तदन्तस्य १ । १ । ७२

**ज्ञापकं स्यात्तदन्तत्वे**

एवं तर्हि ज्ञापयत्याचार्यो 'भवतीह तदन्तविधि'रिति।

**तथा चापिशलेर्विधिः।**

एवं च कृत्वापिशलेराचार्यस्य विधिरुपपन्नो भवति—धेनुरनञि कमुत्पादयति। धेनूनां समूहो धैनुकम् ×। अनञीति किमर्थम्? अधेनूनां समूह आधेनवम्।

**सेनायां नियमार्थं वा**

अथवा नियमार्थोऽयमारम्भः। क्षुद्रकमालवशब्दात्सेनायामेव। क्व मा भूत्? क्षौद्रकमालवकमन्यदिति।

**यथा बाध्येत चाञ् वुञा॥ २॥**

अथवा ज्ञापयत्याचार्यः पूर्वोऽपि वुञ् परमञं बाधत इति।

ननु चोक्तं 'गोत्राद्वुञ् न च तद्गोत्र'मिति। तदन्तविधिना प्राप्नोति। ननु चोक्तं 'तदन्तान्न स सर्वत' इति। ज्ञापकं स्यात्तदन्तत्वे। एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति।

प्र०—यलोपः। न चेति। चशब्दो ह्यर्थे। न हीत्यर्थः। वुञ्न भवतीति। 'अवृद्धादपी'त्यनेन। तदन्तादिति। 'तदन्ताद्वुञ् प्राप्नोती'ति यदुच्यते तन्न. यस्मात्स तदन्तविधिः सर्वत्र न भवति,—उगिद्वर्णग्रहण एव प्रत्ययविधौ तदन्तविधेरिष्टत्वात। भवतीहेति। समूहप्रकरण इत्यर्थः। एवं चेति। तदन्तविध्यभावे ह्यनञीति प्रतिषेधोऽनर्थक स्यादित्यर्थः। आधेनवमिति। 'तत्पुरुषे तुल्यार्थे'ति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वादण्। अन्ये त्वाहुः—उत्सादित्वादञ्। तत्र हि 'बष्कयाऽसे' इति समासनिषेधात्तदन्तविधिरस्ति। 'जङ्गलधे'न्वित्युत्तरपदस्य वा वृद्धिः। नियमार्थं वेति। 'वा'-शब्दः समुच्चये। एवमथवेत्ययमपि। यदा सेनारूपः समूहस्तदाञ्प्रत्ययोऽन्यदा तु वुञेवेत्यर्थः।

उ०—इदं तत्सूत्रस्थरोण्यीत्यादिवार्त्तिकानामुपलक्षणम्। बष्कयाऽसे इति। बष्कयशब्दोऽसमासेऽञमुत्पादयतीत्यर्थः। न चानञिति निषेधो न कार्यः, तदन्तविधिश्च मास्त्विति वाच्यं; गौधेनुकमित्याद्यसिद्धेः।

ननु नियमार्थत्वे तदन्तविधेरज्ञापितत्वात् 'क्षौद्रकमालवकमन्य'दिति वुञ् कथमत आह—वाशब्द इति। योगविभागेनोभयं सिध्यतीत्यर्थः। चोद्यपरिहारायेति— षष्ठीसमासः। अन्यतरज्ञापनेनैव चारिता-

१—"धेनोरनञः" इत्यापिशलिसूत्रम्। "स पुनर्धेनोरनञ इति। एतद्धि तत्सूत्रम्" इति न्यासकारः (४।२।४५ पृ० ६४३ पं०४) × अचित्तहस्तिधेनोष्ठक् ४।२।४७

कथं पुनरेतदुभयं शक्यं ज्ञापयितुं 'भवति च तदन्तविधिः, पूर्वश्च वुञ् परमञं बाधत' इति ? उभयं ज्ञाप्यते ।

अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् ॥ १ ॥

अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायामिति वक्तव्यम् । क्षौद्रकमालवी सेना चेत् । क्व मा भूत् ? क्षौद्रकमालवकमन्यदिति ॥ ४५ ॥

[ अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।
गोत्राद्वुञ्न च तद्गोत्रं तदन्तान्न स सर्वतः ॥ १ ॥
ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः ।
सेनायां नियमार्थं वा यथा बाध्येत चाञ्वुञा ॥ २ ॥ ]

पाशादिभ्यो यः ॥ ४ । २ । ४९ ॥

पाश तृण धूम वात ।

पृथग्वातादर्शनादसमूहः ॥ १ ॥

पृथग्वातादर्शनादयुक्तोऽयं[2] वातशब्दस्य सामूहिके पाठः । न हि पृथग्वाता दृश्यन्ते ।

न तर्हीदानीमिदं भवति वात्येति ? भवति ।

प्र०—ननु चेति । 'ज्ञापकं स्या'दित्युक्तमपि चोद्यपरिहारायानूदितम् ॥ उभयमिति । अन्यथानुपपत्त्या ज्ञापकत्वं भवत्युभयेन च विना क्षुद्रकमालवादञ्विधानं नोपपद्यते इत्युभयस्यापि ज्ञापकत्वमित्यर्थः ।

अञ्प्रकरण इति । यद्यपि गण एवैतत्पठ्यते तथापि क्षुद्रकमालवादिति योगविभागेनार्थद्वयं ज्ञाप्यं ततः सेनासंज्ञायामिति नियमः कर्तव्य इति दर्शयितुं वार्तिकारम्भः ॥ ४५ ॥

पाशा । पृथगिति । वातपरमाणूनामनेकत्वेऽपि वातसंज्ञकस्यावयविन एकत्वादनेकाश्रय-

उ०—र्थमिति चोद्यम् । उभयस्यापि ज्ञापकत्वमिति । उभयनिरूपितं ज्ञापकत्वमञ्विधानस्येत्यर्थः । 'स्व'रहितपाठस्तु युक्त एव ।। यद्यपि गण एवेति । गणे क्षुद्रकमालवेत्येव पाठो वार्त्तिकबलादिति साम्प्रदायिकाः ।।४५।।

पाशादिभ्यो यः । ननु वायुत्वस्यावयवावयविसाधारण्यादनेकत्वमस्त्येवेत्यत आह—वातेति । अनेकेति । पूर्वपश्चिमोत्तरदक्षिणभेदेनेत्यर्थः । अथेति । औपाधिक एव दशेत्यपि व्यवहार इत्यर्थः ।

१—संग्रहश्लोकाविह क्वचिदेव दृश्येते । २—'दयुक्तोऽयं सामूहिकः । न हि' पा० ।

शीघ्रत्वे तु[1] ॥ २ ॥

शीघ्रो वातो वात्या ॥ अथवा पृथग्वाता अपि दृश्यन्ते । तद्यथा,—पूर्वो वातः । उत्तरो वातः । सर्वतो वातः । 'वाता वान्तु दिशो देश'[2] ॥ ४९ ॥

## खलगोरथात् ॥ ४ । २ । ५० ॥ इनित्रकटयचश्च ॥ ४ । २ । ५१ ॥

खलादिभ्य इनिः ॥ १ ॥

खलादिभ्य इनिर्वक्तव्यः । खलिनी डाकिनी[3] कुटुम्बिनीति ॥ ५० ॥ ५१ ॥

## विषयो[4] देशे ॥ ४ । २ । ५२ ॥

विषयाभिधाने जनपदे लुब्बहुवचनविषयात् ॥ १ ॥

विषयाभिधाने जनपदे लुब्बहुवचनविषयाद्वक्तव्यः* । अङ्गानां विषयोऽङ्गाः । वङ्गाः सुह्माः पुण्ड्राः ।

गान्धार्यादिभ्यो वा ॥ २ ॥

गान्धार्यादिभ्यो वेति वक्तव्यम् । गान्धारः गान्धारयः । वासातः वसातयः । शैबः शिबयः ।

प्र०—रूपसमूहानुपपत्तिरित्यर्थः ॥ शीघ्रत्वे त्विति । ततश्च 'वाताच्छैघ्र्ये' इति पृथग्वक्तव्यमित्यर्थः । अथवेति । एकस्यापि वातस्य दिग्भेदनिमित्तभेदप्रतिभासादनेकाश्रयसमूहोपपत्तिः । यथैकापि दिक् सूर्योदयास्तमयाद्युपाधिभेदादनेका व्यपदिश्यते । तथा च 'दश दिश' इति लोके व्यवहारः । यद्वा भिन्ना एव वाता अवयविनः पृथगुपलम्भात् ॥ ४९ ॥

विषयो । विषयाभिधान इति । अङ्गानां निवासो जनपद इत्यतः स्वस्वामिभावो न प्रतीयते । अङ्गानां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते न तु निवासार्थ इति 'जनपदे

उ०—भिन्ना एवेति । पूर्वादिवाताः स्वत एव भिन्ना इत्यर्थः । पृथगुपलम्भादिति । 'वात्यासमये' इति शेषः ॥ ४९ ॥

विषयो देशे । ननु चातुरर्थिकलुपाप्यङ्गा इत्यादिविषये सेरस्यत्यर्थाभेदादत आह—अङ्गानामिति । वृत्तौ त्वङ्गत्वेनैवानेकव्यक्तिमानं बोध्यम् । 'गान्धारिभ्यां चे'त्यग्रिमेतदुत्तरं 'लुक्, ततो गान्धारीणा'मित्येव

१—अस्य वार्तिकत्वे सन्देहः । उभयथापि पाठ उपलभ्यते ।

२—'वाता वान्तु दिशो दिशः' इत्यथर्ववेदे [ ४ । १५ । ८ ] पाठः ।

३—'ऊकिनी कुन्दुमिनीति' इति कीलहार्नपाठः ।

४—देशपर्यायो विषयशब्दः कौटिलीयार्थशास्त्रे बहुशः प्रयुक्तः, तद्यथा—'एवं स्वविषये कृत्यान-कृत्यांश्च विचक्षणः' ( अधि० १, प्र० ८, अ० १२ ) 'इति स्वविषये व्याख्यातम् । परविषये तु' ( अधि० २, प्र० ३२, अ० १६ ) इति ।

* जनपदे लुप् ४ । २ । ८१

## राजन्यादिभ्यो वा वुञ् ॥ ३ ॥

राजन्यादिभ्यो वा वुञ्वक्तव्यः । राजन्याः राजन्यकाः । दैवयातवाः दैवयातवकाः ।

## बैल्ववनादिभ्यो नित्यम् ॥ ४ ॥

बैल्ववनादिभ्यो वुञ्नित्यमिति वक्तव्यम् । बैल्ववनक आम्बरीषपुत्रकः आत्मकामेयकः ।

तत्तर्हीदं बहु वक्तव्यम् ?

## न वाभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुब्विषयविवक्षायां प्रत्ययः ॥ ५ ॥

न वा वक्तव्यम् । किं कारणम् ? 'अभिधेयस्य निवासविषयत्वात्' । यदभिधेयं स निवासश्च विषयश्च । अभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुप्, विषयविवक्षायां प्रत्ययो भविष्यति ।

प्र०—लु'बिति चातुरर्थिकस्य लुब्विधीयमानो विषये न प्राप्नोतीति वचनम् । बहुवचनविषयादिति । बहुवचनान्ताच्छब्दात्परस्य प्रत्ययस्येत्यर्थः । गान्धार इति । गान्धारस्यापत्यं गान्धारिः । तस्यापत्यानि —'साल्वेयगान्धारिभ्यां चे'त्यञ् । लुक्, ततो गान्धारीणां विषय इत्यण् । ततस्तस्य वा लुप् 'लुपि युक्तव'दिति लिङ्गसंख्यातिदेशः । राजन्या इति । औत्सर्गिकस्याणो विषयाभिधान इति लुप् । वुञ्पक्षे तु तद्विधानसामर्थ्याल्लुबभावः । न वेति । जनपदलक्षणस्याभिधेयस्याङ्गादिसंबन्धिनो निवासरूपत्वं विषयरूपत्वं चास्ति । यद्यपि विषयनिवासयोः परस्परव्यभिचारस्तथाप्यङ्गादीनां य एव स्वो विषयः स एव तेषां निवास इति स्मर्यते । तत्रैकस्योभयरूपत्वात्प्रयोगदर्शनवशादङ्गादौ निवासविवक्षैव गान्धार्यादिषु राजन्यादिषु च पर्यायेणोभयविवक्षा बैल्ववनादिषु

उ०—कैयटे पाठः । मध्ये—'तद्राजत्वादञो लुक्, तस्य 'गोत्रेऽलुगची'त्यलुग्' इत्यपपाठः । एवं 'ततस्तस्य वा लु'बित्युत्तरं 'लुपि युक्तव'दित्येव पाठः । मध्ये—'ततस्तद्राजान्तत्वादञो लु'गित्यपपाठः । एतेन 'एको गोत्रे' इति नियमादयमत्र्यूनि वाच्यः, एवञ्च ततोऽपि परत्वाद्यूनि लुक् प्राप्नोति, अवश्यञ्च स एवेष्टव्यः, अन्यथा वैषयिकाणि लुप्यपि प्रत्ययलक्षणेन 'गोत्रेऽलु'गित्यस्य दुर्वारतया 'गान्धार' इत्यस्यासिद्धिरेव स्यादिति परास्तं, लुक्शब्देन तस्यैव ग्रहणात् । क्वचित्तु 'चेत्यञ्' । ततो 'गान्धारीणामि'त्येव पाठः । 'वा लुप्' 'लुपि युक्तव'दि'त्येव च पाठः । भाष्ये—अभिधेयस्य निवासविषयत्वादिति । निवासत्वाद्विषयत्वाच्चेत्यर्थः । नन्वत्र विषयस्यैवाभिधेयत्वादभिधेयस्योभयरूपत्वमसङ्गतमत आह—जनपदेति । नन्वेवमाङ्गा इत्यपि

इदं तर्हि प्रयोजनमेतज्ज्ञास्या 'मीह नित्यो विधिरिह विभाषे'ति । एतदपि नास्ति प्रयोजनम् । यावता यदभिधेयं स निवासश्च विषयश्च, 'अभिधेयस्य निवास-विषयत्वान्निवासविवक्षायां लुप्, विषयविवक्षायां प्रत्ययः' [ इत्येव ] ॥ ५२ ॥

## सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ॥ ४ । २ । ५५ ॥

### छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानम् ॥ १ ॥

छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानं कर्तव्यम् । त्रिष्टुबेव त्रैष्टुभम् । अनुष्टुबेवानुष्टुभम् । जगत्येव जागतम् ॥ ५५ ॥

## तदधीते तद्वेद ॥ ४ । २ । ५६ ॥

किमर्थमिमावुभावर्थौ निर्दिश्येते, न योऽधीते वेत्त्यप्यसौ, यस्तु वेत्त्यधीते-ऽप्यसौ । नैतयोरावश्यकः समावेशः । भवति हि कश्चित्संपाठं पठति न च वेत्ति,

प्र०—विषयविवक्षैवाश्रीयत इति नार्थो लुब्विधिना, न तद्धिकल्पेन, न वुञ्विकल्पेन, नापि विकल्पबाधनार्थेन नित्यवचनेनेत्यर्थः ॥ ५२ ॥

सोऽस्यादि । छन्दस इति । छन्दःशब्देनात्राक्षरेयत्ताविशेषवाचिनो गायत्र्यादिशब्दस्य ग्रहणम् । नपुंसकादिति । नपुंसकार्थाभिधायिन इत्यर्थः । नपुंसकार्थाभिधायित्वं च त्रिष्टुबादीनां स्वार्थिकाण्प्रत्ययान्तानामेवेति नपुंसके स्वार्थ इत्युक्तं भवति ॥ ५५ ॥

तदधीते । न य इति । यो हि यं ग्रन्थमधीते स तं स्वरूपतोऽवश्यं वेत्ति यश्च स्वरूपतो वेत्ति सोऽवश्यमधीत इति भावः । नैतयोरिति । अर्थावबोधो वेदनमभिप्रेतं न तु स्वरूपमात्रवेदनं, तत्र

उ०—कदाचित्स्यादत आह—तत्रैकस्येति । भाष्येऽपि—'निवासविवक्षाया'मित्यादिना विवक्षानैयत्यमेव प्रतिपाद्यत इति बोध्यम् ॥ ५२ ॥

सोऽस्यादिरिति । ननु त्रिष्टुबादीनां नपुंसकत्वाभावान्नपुंसकादित्यसङ्गतमत आह—नपुंसकार्थेति । ननु केवलत्रिष्टुबादीनां तत्त्वमपि नास्तीत्यत आह—नपुंसकेति । फलितमाह—नपुंसके स्वार्थ इति । कुटी कुटीर—इतिवत्स्वभावाद्भिन्नलिङ्गत्वम् ॥ ५५ ॥

तदधीते । यो हीति । वेदनम्-अधीयमानग्रन्थविषयमेवेति चोद्याभिप्राय इति भावः । भाष्ये-न य इत्यत्र नञि काकुः । यश्चेति । अध्ययनं विना स्वरूपतो वेदनासम्भवादिति भावः । 'सम्पाठ'-

१—क्वाचित्कः पाठः । २—'द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थ'मिति वृत्तिः । भाष्यकारस्त्वाह-'प्रमादकृतमाचार्यस्य, शक्यमकर्तु'मिति ( ४ । २ । ६७ ) पृ० ६६०

कश्चिच्च वेत्ति न च संपाठं पठति ॥ ५९ ॥

## क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ४ । २ । ६० ॥

'उक्थादी'त्युच्यते, [1]कान्युक्थानि ? सामानि । यद्येवं सामगमात्र औक्थिक इति प्राप्नोति । नैष दोषः । तादर्थ्यात्ताच्छब्द्यं भविष्यति—उक्थार्थमुक्थम् ।

इहोक्थान्यधीत औक्थिकः, यज्ञमधीते याज्ञिकः, य इदानीमौक्थिक्यं याज्ञिक्यं चाधीते कथं तत्र भवितव्यम् ? औक्थिकः याज्ञिक इत्येव भवितव्यम् । कथम् ?

### तस्येदंप्रत्ययाल्लुक् ॥

तस्येदं प्रत्ययाल्लुग्वक्तव्यः । तस्येदंप्रत्ययस्य* च ।

स तर्हि वक्तव्यः ? न वक्तव्यः । इहास्माभिस्त्रैशब्द्यं साध्यम्—[3]उक्थान्यधीते, औक्थिक्यमधीते, औक्थिक इति । तत्र द्वयोः [ शब्दयोः ] समानार्थयोरेकेन

---

प्र०—परस्परव्यभिचारदर्शनादुभयोपादानमित्यर्थः । संपाठमिति । अर्थनिरपेक्षं स्वाध्यायं पठतीत्यर्थः ॥ ५९ ॥

क्रतू कान्युक्थानीति । उक्थशब्दो येषु सामसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते, यदधीयाने प्रत्यय इष्यते तत्रोक्थशब्दो न रूढ इति प्रश्नः । उक्थार्थमिति । सामलक्षणं प्रातिशाख्यं शास्त्रमित्यर्थः । मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते । तत्र वाक्यमेव भवति—उक्थान्यधीते वेद वेति । इहेति । उक्थशब्देन गौण्या वृत्त्या सामलक्षणमौक्थिक्यमुच्यते । य इदानीमिति । औक्थिकानामाम्नाय इतीदमर्थे 'छन्दोगौक्थिके'ति ञ्यः । तस्येदंप्रत्ययादिति ।

---

उ०—शब्दः कर्मणि घञन्त इत्याशयेनाह—स्वाध्यायमिति । स्वाध्यायो वेदः ॥ ५९ ॥

क्रतूक्थादि । नेष्यत इति । अनभिधानादिति भावः । भाष्ये—सामगमात्रे इत्यस्य प्रातिशाख्यानध्येतरि सामगे इत्यर्थः । यदधीयान इति । प्रातिशाख्यमधीयाने इत्यर्थः । 'असामगेऽपी'ति शेषः । सामलक्षणमिति—षष्ठीतत्पुरुषः । भाष्ये—य इदानीमिति । औक्थिक्यमधीत इति विग्रहं करोति । तत्र—तादृशविग्रहे, कथं भवितव्यमित्यर्थः । औक्थिकानामिति । औक्थिकाः—प्रातिशाख्यविदः, तेषामाम्नायः—प्रातिशाख्यमेव ॥ भाष्ये—तस्येदंप्रत्ययादिति—वार्त्तिके षष्ठ्यर्थे पञ्चमी । तस्येत्यस्याध्ये-

---

१—'कानि पुनरुक्थानि' पा० ।        २—इदं भाष्यमिति केचित् ।

* छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ४ । ३ । १२९

३—'औक्थिक्यमधीते उक्थान्यधीते' पा० ।        ४—क्वचिन्न ।

विग्रहोऽपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन । तद्यथा,—अवेर्मांसमिति विगृह्याविक-शब्दादुत्पत्तिर्भवति आविकमिति । एवमुक्थान्यधीत इति विगृह्य औक्थिक इति भविष्यति, औक्थिक्यमधीत इति विगृह्य वाक्यमेव ।

**विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिक्वक्तव्यः ॥**

विद्या—वायसविद्यिकः [ सार्पविद्यिकः ] । विद्या ॥ लक्षण—गौलक्षणिकः आश्वलक्षणिकः । लक्षण ॥ कल्प—पाराशरकल्पिकः पारकल्पिकः । कल्प ॥ सूत्र—वार्तिकसूत्रिकः साङ्ग्रहसूत्रिकः ॥ अकल्पादेरिति किमर्थम् ? काल्पसूत्रः ।

**विद्या चानङ्गक्षत्रधर्मत्रिपूर्वा ॥**

विद्या चानङ्गक्षत्रधर्मत्रिपूर्वेति वक्तव्यम् । आङ्गविद्यः क्षात्रविद्यः धार्मविद्यः त्रैविद्यः ।

**आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ॥**

आख्यानाख्यायिकेतिहासपुराणेभ्यश्च [3]ठग्वक्तव्यः । आख्यान—यावक्रीतिकः

---

प्र०—अध्येतृवेदित्रोरुत्पन्नस्याणो लुक्, आम्नाये विहितस्य ञ्यस्य चेत्यर्थः । विद्येति । इकगिति-ठगित्यर्थः । 'अकल्पादे'रित्येतदानन्तर्यात्सूत्रान्तस्यैव कल्पादेर्निषेधं करोति । तथा च भाष्ये—'काल्पसूत्र' इति प्रत्युदाहृतम् । अन्ये तु—सर्वेषामेव निषेधमिच्छन्तः काल्पविद्य इत्यादि भाष्य-मित्याहुः । तत्तु प्रथमातिक्रमे कारणादर्शनाद्भाष्यविरुद्धमिति लक्ष्यते । त्रैविद्य इति । अवयवा विद्या-त्रिविद्या, तामधीत इति प्रत्ययः कार्यः । तिस्रो विद्या अधीत इति तु क्रियमाणे 'द्विगोर्लु'गिति लुक्प्रसङ्गः । आख्यानेति । द्वयोरर्थग्रहणं, द्वयोः स्वरूपग्रहणम् । यावक्रीतिक इति । यावक्रीता-धिकारेण कृतमाख्यानमुपचाराद्यावक्रीतशब्देनोच्यते, तदधीते वेद वा—यावक्रीतिकः । एवं प्रैयङ्गवाधिकारकृताख्यानाध्यायी—प्रैयङ्गविकः । वासवदत्तिक इति । वासवदत्तामधिकृत्य कृताख्यायिका । 'अधिकृत्य कृते ग्रन्थे' इत्यत्रार्थे वृद्धाच्छः । तस्य 'लुबाख्यायिकाभ्यो बहुल'मिति

---

उ०—आद्यर्थकप्रत्ययस्येत्यर्थः । तदाह-अध्येत्रित्यादि । एकेन विग्रह इति । विग्रह एवेत्यर्थः । अपरस्मादु-त्पत्तिरिति । उत्पत्तिरपीत्यर्थः । अविकशब्दादिति । तस्मादेवेत्यर्थः । औक्थिक इति । इत्यपि भविष्यति वाक्यञ्चेत्यर्थः । तदाह—वाक्यमेवेति । 'उक्थान्यधीत इति विगृह्य 'औक्थिक इति भविष्यती'ति पाठः ।

अत्र शास्त्रे इकको ऽभावात्स्त्रियां ङीबभावापत्तेः, 'आनुसुक' इत्यसिद्धेश्चाह—ठगितीति । ननु 'अकल्पादे'रित्यस्य प्रथमोपस्थितविद्यान्ताद्यपहाय सूत्रान्तोदाहरणादाने बीजाऽभावोत आह—अकल्पादे-रित्येतदिति । प्रथमातिक्रमे इति । विद्या चानङ्गेत्यत्र 'त्रिद्वापी'त्यनुवृत्त्या विद्यायामकल्पादेरित्यस्या-सम्बन्धबाधनादिति वक्तुं युक्तम् । द्वयोरर्थेति । व्याख्यानात्, तथैव भाष्ये उदाहरणाच्चेति भावः ।

---

१—क्वचिन्न । २—'मातृकल्पिकः' पा० । ३—'इकन्वक्तव्यः' पा० ।

प्रैयङ्गविकः यायातिकः ।। आख्यायिका—वासवदत्तिकः सौमनोत्तरिकः* ।। [ इतिहास पुराण—] ऐतिहासिकः पौराणिकः ।

## सर्वसादेर्द्विगोश्च लः ।

सर्वसादेर्द्विगोश्च लो वक्तव्यः । सर्ववेदः सर्वतन्त्रः । सवार्तिकः ससङ्ग्रहः† । पञ्चकल्पः द्वितन्त्रः[2] ‡ ।

## अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः[3] ।

## इकन्पदोत्तरपदात् शतषष्टेः षिकन्पथः ।।

प्र०—लुप् । तनोऽनेन ठक् । एवं सौमनोत्तरिक इति । ऐतिहासिक इति । 'इतिह'शब्द उपदेशपारंपर्ये वर्तते । इति हास्यतेऽस्मिन्निति इतिहासः । 'हलश्चे'ति घञ् । मयूरव्यंसकादित्वात्समासस्ततष्ठक् । सर्वसादेरिति । सशब्दोऽर्थवान् गृह्यत इति सर्वशब्दः पृथङ्निर्दिष्टः । 'द्विगोश्चे'त्यनेन 'द्विगोर्लु'गिति स्मारितम् । सर्ववेद इति । सर्ववेदानधीत इत्यणो लुक् । सवार्त्तिक इति । वृत्तौ साधु वार्त्तिकम् । 'कथादिभ्यष्ठ'गिति ठक् । वार्त्तिकान्तमधीत इत्यन्तवचने सहस्याव्ययीभावः । 'अव्ययीभावे चाकाले'इति सभावः । ततोऽणो लुक् ।

पञ्चकल्प इति । पञ्चकल्पानधीत इति द्विगुः । ततो 'विद्यालक्षणे'ति ठक् । तस्य लुक् । अनुसूरिति । अनुसूशब्दो ग्रन्थविशेषवाची. स ठकमुत्पादयति लक्ष्यलक्षणशब्दौ चेत्यर्थः । अनुसूमधीत इति ठक् । तस्य 'इसुसुक्तान्ता'दिति कादेशः । 'केऽणः' इति ह्रस्वो वृद्धिश्च । तत

उ०—ननु यावक्रीतादयो नाख्याननामानीत्यत आह—यावक्रीतेति । उपचारादिति । यवक्रीतापत्यत्वारोपादित्यर्थः । तदधिकारकृतत्वेन बोधे तु 'अधिकृत्य कृत' इत्यनेन छः स्यादिति बोध्यम । लुबिति । वासवदत्ताभिकारकृतत्वेन बोधादिति भावः । आख्यायिकाभ्य इति । आख्यायिका अभिधातुं कृतस्य प्रत्ययस्य लुबित्यर्थः । बहुलग्रहणादाख्यानेऽपि लुबित्यन्ये । इति हास्यत इति । उपदेशपारम्पर्येणास्यते—निश्चयबुद्ध्या स्थीयतेऽस्मिन्नित्यर्थः । 'उपदेशपरम्परयाख्यानादीन्यस्यन्ते स्थाप्यन्तेऽत्रे'त्यर्थं कश्चित् ।। ननु 'सादे' रित्येव सिद्धे सर्वग्रहणं व्यर्थमत आह—सशब्द इति ॥ ततोऽणो लुगिति । तत्र सत्यव्ययीभावार्थस्योपसर्जनत्वान्नाव्ययत्वमिति बोध्यम् । परस्परमनन्वयादाह—अनुसूशब्द इत्यादि । अनुसूमिति 'अनुसू'मित्यव्युत्पन्नमिति यणभावः । क्वचित्तु—'अनुस्व'मिति पाठः । तदा अनुपूर्वास्सुतेः

* अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम ४ । ३ । ८७ वा० १ १—क्वचिन्न ।

† अव्ययं विभक्तिसमीप......साकल्यान्तवचनेषु २ । १ । ६ अव्ययीभावे चाकाले ६ । ३ । ८१

‡ द्विगोर्लुगनपत्ये ४ । १ । ८८ २—'द्विवेदः' इत्यधिकं क्वचित् ।

३—"महाभाष्य में इस कारिका के केवल द्वितीय चरण की व्याख्या उपलब्ध होती है । इससे प्रतीत होता है, कभी महाभाष्य में शेष तीन चरणों की व्याख्या भी अवश्य रही होगी, जो इस समय अनुपलब्ध है" ( व्या० शा० इतिहास १ भाग, पृ० २५१, द्वि० सं० पृ०२३३ यु० मी० )

## अनुब्राह्मणादिनिः ॥ ४ । २ । ६२ ॥

अयं योगः शक्योऽवक्तुम्[1] । कथमनुब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिन इति ? इनिनैतन्मत्वर्थीयेन सिद्धम्+ [ अनुब्राह्मणमस्यास्तीत्यनुब्राह्मणी ][2] ॥६२॥

## वसन्तादिभ्यष्ठक् ॥ ४ । २ । ६३ ॥

अयुक्तोऽयं निर्देशः । अधीते वेदेति× वर्तते, न च वसन्तो नामाध्ययनमस्ति ।

नैष दोषः । साहचर्यात्ताच्छब्द्यं भविष्यति । वसन्तसहचरितमध्ययनं वसन्तोऽध्ययनमिति ॥ ६३ ॥

## प्रोक्ताल्लुक् ॥ ४ । २ । ६४ ॥

अयुक्तोऽयं निर्देशः । प्रौक्तादिति भवितव्यम् । सौत्रो निर्देशः ॥ ६४ ॥

---

प्र०—आनुसुक इति भवति । लक्ष्यमधीते [ इति ] लाक्ष्यिकः । लक्षमधीते लाक्षणिकः । इकन्निति । पूर्वपदमधीते—पूर्वपदिकः । शतपथमधीते शतपथिकः । शतपथिकी ; षष्टिपथिकः । षष्टिपथिकी ॥ ६० ॥

अनुब्रा । अयमिति । अध्येतृवेदित्रोरनभिधानादण्न भविष्यतीति तद्बाधनार्थमपि सूत्रं न कर्त्तव्यम् ॥ ६२ ॥

वसन्ता । वसन्तसहचरितमिति । यत्र वसन्तो वर्ण्यते यद्वा वसन्तेऽधीयते तत्साहचर्यात्ताच्छब्द्यं लभते ॥ ६३ ॥

प्रोक्ता । अयुक्त इति । अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य पौर्वापर्यासंभवादिति भावः । सौत्र इति । प्रोक्तशब्दस्येह स्वरितत्वं प्रतिज्ञातं, तेन तदधिकारविहितप्रत्ययग्रहणमित्यर्थः ॥६४॥

---

उ०—ष्किन्निति बोध्यम । लाक्षियक इति यकारसहितः पाठः । षिकनः षित्त्वं ङीषर्थं तदाह—षष्टिपथिकीति ॥ ६० ॥

प्रोक्ताल्लुक् । किमत्रायुक्तमत आह—अर्थस्येति । प्रोक्तेऽर्थे विहितादित्यर्थेऽपीदमसाध्वित्याह भाष्ये—प्रौक्तादिति । भाष्ये—सौत्र इति । सौत्रत्वात्प्रत्ययानुत्पत्तिरित्यर्थः । सौत्रत्वाद्वृद्ध्यभाव इत्यन्ये । स्वरितत्वमिति । अस्य क उपयोगः, अधिकारविहितेत्येतत्पर्यन्तं व्याख्यानस्य च क उपयोग इति चिन्त्यम् । ६४ ॥

---

१—'अकर्तुम्' पा० ।
२—अयं पाठः क्वचिन्न ।

+ अत इनिठनौ ५ । २ । ११५
× तदधीते तद्वेद ४ । २ । ५९

## सूत्राच्च कोपधात् ॥ ४ । २ । ६५ ॥

सङ्ख्याप्रकृतेरिति वक्तव्यम् । इह मा भूत्—माहावार्तिकः [ चान्दनगन्धिकः ] कालापकः* ॥ ६५ ॥

## छन्दोब्राह्मणानि च तद्विषयाणि ॥ ४ । २ । ६६ ॥

किमर्थमिदमुच्यते ?

**अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानां तद्विषयवचनम् ॥१॥**

अन्यत्राभिधेयमनित्यं भवति । पाणिनीयमिति वा भवति, पाणिनीया इति वा । 'अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानामप्यनित्यता प्राप्नोति । इष्यते च

---

प्र०—सूत्राच्च । सङ्ख्याप्रकृतेरिति । अष्ट अध्याया परिमाणमस्य 'सङ्ख्याया अतिशदन्तायाः कन्'निति कन्प्रत्ययः । ततोऽष्टकमधीयते इत्यणो लुकि कृतेऽष्टका पाणिनीया इत्युदाहरणम् ॥६५॥

छन्दोब्राह्म । इह प्रोक्तप्रत्ययान्तस्यानेकः प्रकारो दृश्यते,—स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यमध्येतृवेदित्रोः प्रत्ययश्च स्वातन्त्र्यं तावद्यथा–पाणिनिना प्रोक्तं व्याकरणं पाणिनीयमिति । उपाध्यन्तरयोगो—महत्पाणिनीयमिति । वाक्यम्–पाणिनीयमधीयत इति । अध्येतृवेदित्रोः प्रत्ययः—पाणिनीया इति । छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयतैवेष्यते न तु स्वातन्त्र्यादीति तद्विषयार्थमिदं सूत्रम् । क्रियमाणेऽपि चैतस्मिन्नधीते वेदत्यधिकारादध्येतृवेदितृविषयस्य वाक्यस्यैव निवृत्तिः सिध्यति न तु स्वातन्त्र्यादेरिति मत्वा पृच्छति—किमर्थमिति । अन्यत्रेति । पाणिनीयादौ । अभिधेयस्येति प्रोक्तलक्षणस्यार्थस्य । अनित्यत्वादिति । नानाविषयत्वादध्येतृवेदित्रोर्नित्यं विशेषणत्वेनाप्रयोगादनियतत्वादित्यर्थः ।

---

उ०—सूत्राच्च कोप । भाष्ये—कालापक इति । कलापिना प्रोक्तमधीयते कालापास्तेषामाम्नायः[2] कालापकम् । वुञ् । अत्राणो लुकि वुञ्निबन्धनमाद्युदात्तत्वं स्यात्, स्त्रियां ङीप्च न स्यादिति भावः । उदाहरणं भाष्ये नोक्तमिति स्वयमाह—अष्टेति ॥ ६५ ॥

छन्दोब्राह्मणानि । इदं सूत्रं नियमार्थमित्याह–इह प्रोक्तेति । तद्विषयार्थमिति । अध्येतृवेदितृप्रत्ययविषयत्वार्थमित्यर्थः । नन्वेवं 'किमर्थ'मिति प्रश्नोऽनुपपन्नोऽत आह—क्रियमाणेऽपीति । एवं यावदिष्टसिद्ध्या प्रश्न इति भावः । ननु प्रोक्ते प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपं नित्यत्वं नास्त्येवेत्यत आह—नानेति । नित्यमिति । नित्यमध्येतृवेदित्रर्थनिरूपितविशेषणत्वेन प्रोक्तार्थस्याप्रयोगादित्यर्थः । भाष्ये—पाणिनीया इति । वेति । वाशब्दश्चार्थे नन्वध्येतृवेदितृविषयताया एव स्वीकारादध्येतृवेदित्रोरेव

---

१—अयं क्वचिन्नास्ति । * प्रोक्ताल्लुक् ४ । २ । ६४; गोत्रचरणाद्वुञ् ४ । ३ । १२६; तदधीते तद्वेद ४ । २ । ५६

२—भ्रान्तिरियं नागेशस्य । द्रष्टव्यं व्या० शा० इति० भा० १, पृ० ५०७ ।

तद्विषयतैव स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीति च्छन्दोब्राह्मणानां तद्विषयवचनम्। एवमर्थमिदमुच्यते ॥ अस्ति प्रयोजनमेतत्? किं तर्हीति।

**तत्र यथाधिकारं तद्विषयप्रसङ्गः ॥ २ ॥**

तत्र यथाधिकारं तद्विषयता प्राप्नोति। अधीते वेदेति† वर्तते, तेनाध्येतृवेदित्रोरेव तद्विषयता स्यात्, येऽन्य उपचारास्तत्र न स्यात्। यथेह भवति 'पाणिनीयं महत्सुविहित'मिति, एवमिहापि स्यात् 'कठं महत्सुविहित'मिति।

**सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात् ॥ ३ ॥**

सिद्धमेतत्। कथम्? प्रोक्ताधिकार एव तद्विषयता वक्तव्या। 'तेन प्रोक्तम्' [ ४ । ३ । १०१ ] 'छन्दोब्राह्मणान्यध्येतृवेदित्रो'रिति।

तत्तर्ह्यध्येतृवेदितृग्रहणं कर्तव्यम्? ननु चेहापि क्रियते। परार्थमेतद्भवति तदधीते तद्वेदेति। एवं तर्हि यावदिह च्छन्दोब्राह्मणग्रहणं तावत्तत्राध्येतृवेदितृग्रहणम्। ननु च तत्रापि क्रियते। परार्थं तद्भविष्यति—'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' 'शौन-

प्र०—तत्र यथाधिकारमिति। अधिकारमनतिक्रम्येत्यर्थः। अधीते वेदेत्यधिकारादध्येतृवेदित्रोरेवविवक्षितयोस्तद्विषयता विधीयमाना तद्विषयमेव वाक्यं निवर्त्तयेन्न तु क्रियान्तरविषयमित्यर्थः। येऽन्य उपचारा इति। व्यवहारा इत्यर्थः।

सिद्धं त्विति। अध्येतृवेदित्रोरेव विवक्षितयोश्छन्दोब्राह्मणेषु प्रोक्तप्रत्यय उत्पद्यते नान्यत्रेत्येवं वक्तव्यमित्यर्थः। परार्थं तदिति। 'छन्दोब्राह्मणान्यध्येतृवेदित्रो'रिति परिभाषां कृत्वा

उ०—तद्विषयता स्यादिति कथमत आह—तद्विषयमेव वाक्यमिति। क्रियान्तरमिति। श्रवणादीत्यर्थः। भाष्ये—येऽन्य उपचारास्तत्र न स्यादिति। अन्यथा व्यवहारे प्रोक्तप्रत्ययान्तप्रयोगनिवृत्तिर्न स्यादित्यर्थः। तद्विषयता हि तन्निवृत्त्यर्थापीति भावः।

छन्दोब्राह्मणेष्विति। अभिधेयेष्वित्यर्थः। अध्येत्राद्यर्थे विवक्षित एव छन्दोब्राह्मणार्थकप्रोक्तप्रत्ययान्तानि प्रयोक्तव्यानीति भाष्यस्थवचनाद्वरार्थः। भाष्ये—ननु चेहापीति। तदर्थकं 'तद्विषयाणी'त्येतदित्यर्थः। परार्थमिति। यत्परार्थं कृतं 'तदधीते तद्वेदे'ति तदनुवृत्त्यैव सामान्येन नियमार्थताया 'अध्येतृवेदित्रो'रित्यनेन विनापि सिद्धत्वादिति भावः।

एवं तर्हीति। न्यासद्वयेऽपि समतेत्यर्थः। ननु चेति। छन्दोब्राह्मणग्रहणप्रयुक्तं गौरवं तुल्यमित्यर्थः। परार्थमिति। 'पुराणे'त्यादिसूत्रद्वये तदकरणाल्लाघवमित्यर्थः। इष्टानुवृत्तिज्ञान व्याख्यानात्सुलभमिति

† तदधीते तद्वेद ४ । २ । ५९

कादिभ्यश्छन्दसि' [ ४ । ३ । १०५; १०६ ] इति । इह वा छन्दोब्राह्मणग्रहणं क्रियते, तत्र वाध्येतृवेदितृग्रहणम्, को न्वत्र विशेषः ?

## याज्ञवल्क्यादिभ्यः प्रतिषेधः ॥ ४ ॥

याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । याज्ञवल्कानि* ब्राह्मणानि । सौलभानि† ।

किं प्रोक्ताधिकारे तद्विषयता क्रियत इत्यतो याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः ? नेत्याह । सर्वथा याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः ।

## इनिर्वा प्रोक्ते तद्विषयः ॥ ५ ॥

अथवा 'इनिः‡ प्रोक्ते तद्विषयो भवती'ति वक्तव्यम् ॥ यदि 'इनिः प्रोक्ते तद्विषयो भवती'त्युच्यते, [ एवमपि ] पैङ्गी+ कल्पः अत्रापि प्राप्नोति ।

प्र०—'पुराणप्रोक्ते' 'कल्पे चे'ति करिष्यते । चकारेण ब्राह्मणग्रहणमनुकृष्यते । ततः 'शौनकादिभ्य' इति । ततश्छन्दोग्रहणमनुवर्त्तिष्यत इति भावः । याज्ञवल्कयानीति । यज्ञवल्कस्यापत्यमिति गर्गादित्वाद्यञ् । तदन्तात्प्रोक्तार्थे 'कण्वादिभ्यो गोत्रे' इत्यण् । अत्र तद्विषयता न भवति । सौलभानीति । सुलभेन प्रोक्तानीति,—'तेन प्रोक्त'मित्यण् । सिद्धं त्वित्यस्यानन्तरं प्रतिषेधवचनात्तन्निमित्तत्वं प्रतिषेधवचनस्याशङ्क्य पृच्छति-किं प्रोक्ताधिकार इति ।

इनिर्वेति । इनिशब्देन णिनिरपि गृह्यते, 'कर्मन्दकृशाश्वादिनि'रित्ययमिनिरपि । तेनेनेरेव प्रोक्तार्थविहितस्य तद्विषयता भविष्यति न त्वण इत्यर्थः । पैङ्गीति । पिङ्गेन प्रोक्त. कल्प इति णिनिः । अत्रापि चच्छन्दोब्राह्मणग्रहणेऽक्रियमाणे तद्विषयताप्रसङ्गः ।

उ०—भावः । को न्वत्रेति । अत्रापि करणे लक्ष्यानुरोधेन सामान्याऽपेक्षनियमस्य व्याख्यातुं शक्यत्वादिति भावः । एवं सूत्रन्यासः स्थापितः । तद्विषयताबलादेव च सुबुत्पत्तेः पूर्वमीदृशे विषये प्रत्यय इति 'शैलालिनो नटा' इत्यादौ न नलोपः । नन्विनिर्वेत्युक्ते 'काश्यपिन' इत्यादौ णिनिविषये तद्विषयता न स्यादत आह—इनिशब्देनेति । नत्वण इति । एवञ्च याज्ञवल्क्यादिभ्यः प्रतिषेधोन वक्तव्य इति भावः । ननु छन्दस्त्वाद्यभावात्कथं 'पैङ्गीकल्प' इत्यत्र तद्विषयताप्राप्तिरत आह—छन्दोब्राह्मणेति । तदभावादियमापत्तिरिति भावः । ननु तत् णिनिविधायकं न तु तत्र 'कल्पे' इत्यस्ति तत्कथं नियमोऽत आह—इनिरध्येत्रिति । परिभाषामिति ।

---

* गर्गादिभ्यो यञ् ४ । १ । १०५; तेन प्रोक्तम् ४ । ३ । १०१; कण्वादिभ्यो गोत्रे ४ । २ । १११; आपत्यस्य च तद्धितेऽनाति ६ । ४ । १५१ † तेन प्रोक्तम् ४ । ३ । १०१

‡ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः; कर्मन्दकृशाश्वादिनिः ४ । ३ । १०३; १११

१—क्वचिन्न । + पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ४ । ३ । १०५

## काश्यपकौशिकग्रहणं च कल्पे नियमार्थम् ॥ ६ ॥

काश्यपकौशिकग्रहणं* च कल्पे नियमार्थं द्रष्टव्यम् । 'काश्यपकौशिकाभ्यामेवेनिः कल्पे तद्विषयो भवति नान्येभ्य' इति ।

एवमपि च्छणादीनां× तद्विषयता न प्राप्नोति—तैत्तिरीयाः वारतन्तवीयाः । यदि पुनश्छणादयः प्रोक्ते तद्विषया भवन्तीत्युच्येत । एवमपि पैङ्गी कल्पः अत्रापि प्राप्नोति । काश्यपकौशिकग्रहणंच कल्पे नियमार्थमित्येव ।

एवमप्यौत्सर्गिकाणस्तद्विषयता न प्राप्नोति—क्रौडाः काङ्कताः मौदाः पैप्पलादाः+ । छणादयश्चाप्यौत्सर्गिकानध्येतृवेदित्रोरेव बाधेरन्, येऽन्य उपचारास्तत्र न बाधेरन्—तित्तिरिणा प्रोक्ताः श्लोका इति ।

अस्तु तर्ह्यविशेषेण । ननु चोक्तं 'याज्ञवल्क्यादिभ्यः प्रतिषेध' इति । वक्ष्यत्येतद्

प्र०—काश्यपकौशिकग्रहणं चेति । 'इनिरध्येतृवेदित्रो'रिति परिभाषां कृत्वा 'काश्यपकौशिकाभ्यां कल्प' इति सूत्रं नियमार्थं कर्त्तव्यमित्यर्थः ॥ एवमपीति । इनेरेकस्योपादानात्तित्तिर्यादिसूत्रविहितानां छणादीनां तद्विषयता न स्यात् । क्रौडा इति । क्रोडेन प्रोक्तं छन्दोऽधीयते कङ्कतेन मुदेन पिप्पलादेन चेति । तेन प्रोक्तमित्यण् । तस्य छणादिष्वनन्तर्भावात्तद्विषयता न प्राप्नोति । दोषान्तरमुद्भावयति—छणादय इति । अध्येतृवेदितृविवक्षायामेव प्रोक्तार्थे उत्पद्यमानाश्छणादयस्तत्रैव स्वयं भवन्त औत्सर्गिकान्बाधेरन्, अन्यत्र तु स्वयमभवन्तो न बाधेरन्नित्यर्थः । तित्तिरिणा प्रोक्ता इति । 'तित्तिरिवरतन्तु' इत्यत्र छन्दोग्रहणं कर्त्तव्यमिति वक्ष्यते, तेनात्र छण्न भवति । तदभावेऽप्यण्नेष्यते । यद्येवमपवादाभाव उत्सर्गस्य प्रवृत्तिः केन निवार्यते, अथानभिधानादिकमुत्सर्गानुत्पत्तौ हेतुरभिधीयते तर्हि 'छणादयश्चापी'ति दोषो नोपन्यसनीय इति चिन्त्यमेतत् ।

अस्तु तर्हीति । इह वा 'छन्दोब्राह्मणानि च तद्विषयाणी'ति क्रियेत,प्रोक्ताधिकारे

उ०—नियमकारित्वात्तत्त्वम् । अण्नेष्यत इति । इदञ्चात्र भाष्ये, 'तित्तिरिवरे'ति सूत्रे च भाष्ये प्रत्ययान्तानुपन्यासाज्ज्ञायते । तर्हि च्छणादयश्चापीत्यस्य 'अनभिधानान्नोत्पत्स्यन्ते' इति शेषः । चिन्त्यमिति । केचित्तु तित्तिर्यादिभ्यः प्रोक्ते छन्दस्येव प्रत्ययः, स च छणेवेति द्विविधनियमेन श्लोकेष्वणभाव इति भाष्याशयः । नियमद्वयस्याऽप्यध्येत्रर्थादिविवक्षायामेव प्रवृत्तावयं दोष इत्याहुः ।

भाष्ये—अस्तु तर्ह्यविशेषेणेति । इनिरूपविशेषमनुपादायेत्यर्थः । तादृशवचनञ्चात्र वा

* काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ४ । ३ । १०३

× तित्तिरिवरतन्तुखण्डिकोखाच्छण् ४ । ३ । १०२

\+ तेन प्रोक्तम् ४ । ३ । १०१

'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वा'दिति* तत्रैव वक्तव्यं 'तद्विषयता च न भवती'ति ।

कथं काश्यपिनः कौशिकिन इति ? 'इनिः प्रोक्ते तद्विषयो भवती'त्युच्यमानेऽवश्यमत्र काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यम्, तदेवेदानीं विध्यर्थं भविष्यति ।

कथं पाराशरिणो भिक्षवः शैलालिनो नटाः† ? अत्रापि 'तद्विषयता चे'त्यनुवर्तिष्यते ।। ६६ ।।

प्र०—वा 'छन्दोब्राह्मणान्यध्येतृवेदित्रो'रित्युच्येत,नास्ति विशेषः । इहापि च प्रकरणे प्रोक्तग्रहणानुवृत्त्या प्रोक्तप्रत्ययान्तानां छन्दोब्राह्मणवाचिनां तद्विषयता विधीयमाना सर्वं स्वातन्त्र्यादि निवर्त्तयितुं क्षमेति यथाधिकारमित्ययं दोषो नावतरति । 'सिद्धं तु प्रोक्ताधिकार' इत्येतदपि वार्त्तिकमत्रैव सूत्रे 'प्रोक्ताल्लु'गित्यतः प्रोक्तशब्दस्याधिकार इत्येवं केचिद्व्याचक्षते । वक्ष्यत्येतदिति । 'पुराणप्रोक्ते'ष्वित्यत्र ।

कथमिति । कल्पे तद्विषयता न प्राप्नोतीति प्रश्नः । अत्रापि तद्विषयता चेति । अर्थमात्रमत्र निर्दिष्टम् । तथा हि—यद्यत्र प्रकरणे सूत्रमिदं क्रियते तदा व्यवहितत्वात्कथं तत्र तद्विषयग्रहणस्यानुवृत्तिः स्यात् । अथ प्रोक्तप्रकरणे 'छन्दोब्राह्मणान्यध्येतृवेदित्रो'रित्युच्यते तदा तद्विषयग्रहणं नास्ति । तस्मात्प्रोक्तप्रकरणेऽध्येतृवेदितृग्रहणं 'पाराशर्यशिलालिभ्या'मित्यादावनुवर्त्यमिति भाष्यकारो मन्यते । 'यद्वा—याज्ञवल्क्याद्यर्थं तद्विषयता च ने'ति यदुक्तं तदेव तद्विषयताग्रहणमुत्तरत्रानुवर्त्यमित्यर्थः ।। ६६ ।।

उ०—कर्त्तव्यम्, प्रोक्ताधिकारे वा, न विशेष इत्याह—इह वेति । अत एव 'सर्वथा याज्ञवल्क्यादिभ्य' इति भाष्ये 'सर्वथे'त्युपात्तम् । प्रोक्तग्रहणानुवृत्त्येति । इदं स्वरूपकथनम् ।

सर्वं स्वातन्त्र्यादीति । लक्ष्यानुसारिव्याख्यानादिति भावः । यद्यपि तदनुवृत्तिसामर्थ्यात्सर्वंनिवृत्तिरिति कैयटस्वरसः, तथापि सामर्थ्यं कथमिति चिन्त्यम् । छन्दोब्राह्मणशब्दानां तद्विषयतावारणाय तदनुवृत्तेरावश्यकत्वादित्याहुः । केचिद्व्याचक्षते इति । अत्रारुचिस्तु भाष्याननुगुणत्वम् । भाष्ये—तुल्यकालत्वादिति । यत्र 'शाट्यायनिन' इत्यादाविष्यते तैस्तुल्यकालत्वेनाऽस्यापि पुराणप्रोक्तत्वाणिणिनि प्राप्तिरित्यर्थः । भाष्ये—अत्रापि तद्विषयता चेति । अपिना 'काश्यपे' इत्यादिसूत्रे च । तस्मात्प्रोक्तप्रकरणे इति । प्रोक्तप्रकरणे यदा वचनं तदा तत्रस्थमध्येत्रादिग्रहणमित्यर्थः । उत्तरत्रानुवर्त्यमिति । केचित्तु—'छन्दोब्राह्मणानि चे'ति सूत्रस्थचस्यानुक्तसमुच्चयार्थत्वेन, इष्टानुरोधाद्व्याख्यानाच्च 'पुराणप्रोक्ते'ष्विति सूत्रविषयभिन्ने कल्पे सूत्रे च तद्विषयता । 'अत्रापी'त्यादिभाष्यस्यायमर्थः—काश्यपकौशिकप्रोक्ते कल्पे भिक्षुनटसूत्रयोश्च अनु—छन्दोब्राह्मणयोः पश्चात् तद्विषयता, वर्तिष्यते—करिष्यते, कुतस्तत्राह चेतीति । सूत्रे 'चे'त्युक्तेरितीति वदन्ति । ब्राह्मणानामच्छन्दस्त्वात्सूत्रे पृथग्ग्रहणम् ।। ६६ ।।

* ४ । ३ । १०५ वा० १    † पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ४ । ३ । ११०

## तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ४ । २ । ६७ ॥

## तेन निर्वृत्तम् ॥ ४ । २ । ६८ ॥

## तस्य निवासः ॥ ४ । २ । ६९ ॥ अदूरभवश्च ॥ ४ । २ । ७० ॥

किं पुनरयमेको योग आहोस्विन्नाना योगाः ? किं चातः ? यद्येको योगः, उत्तरेष्वर्थादेशनेषु 'देशे तन्नाम्नि' 'देशे तन्नाम्नी'त्यस्यानुवृत्तिः कर्तव्या, न ह्येकयोगेऽनुवृत्तिर्भवति । कथं ज्ञायते ? यदयं 'तदधीते तद्वेद' [ ४ । २ । ५९ ] इति द्विस्तद्ग्रहणं करोति । अथ नाना योगाः, 'ओरञ्' [ ४ । २ । ७१ ] इत्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनं तस्यैव विषये स्यात् । यथेच्छसि तथास्तु ।

अस्तु तावदेको योगः । ननु चोक्त'मुत्तरेष्वर्थादेशनेषु देशे तन्नाम्नि देशे तन्नाम्नीत्यस्यानुवृत्तिः कर्तव्या, न ह्येकयोगेऽनुवृत्तिर्भवती'ति । एकयोगेऽप्यनुवृत्तिर्भवति । कथं ज्ञायते ? यदयं 'तदस्यास्त्यस्मिन्निति मतुप्' [ ५ । २ । ९४ ] इति द्विस्तद्ग्रहणं न करोति । कथं 'तदधीते तद्वेदे'ति ? प्रमादकृतमाचार्यस्य, शक्यमकर्तुम् ।

प्र०—तदस्मिन्न । चतुर्णां योगानां किमेकवाक्यता अथ नानावाक्यतेति विचारः—किं पुनरिति । ननु समर्थविभक्तयः प्रत्ययार्थाश्च भिन्ना इति कथमेकयोगत्वसंभावना ? उच्यते—अणादयः 'प्राग्दीव्यतोऽण्' इत्यारभ्य पञ्चैतैर्योगैर्विधीयन्त इति तद्विधानापेक्षमेकयोगत्वं संभवति । यदा युगपदेतेष्वर्थेष्वणादयो विधीयन्ते ग्रहणकवाक्येनैकेन तदैकयोगत्वं, तदा चैतन्निबन्धनानि प्रक्रियावाक्यान्युपप्लवन्ते । यदा तु क्रमेण भिन्नेष्वर्थेषु प्रत्ययविधानं तदा नानावाक्यता । देशे तन्नाम्नीति । चतुर्ष्वपि योगेषु प्रत्ययान्तोपाधित्वेनैतदुपयुज्यते । एकयोगे च प्रथमेनैवार्थेनानन्तर्यात्सम्बध्येत नान्यैः, नानायोगत्वे तु स्वरितत्वादधिकारे सति सर्वैरर्थैरस्योपाधेः संबन्ध उपपद्यते ।

प्रमादकृतमिति । शिष्याणां सुखावबोधाय लाघवं प्रत्यनवधानलक्षणेन प्रमादेन कृतमित्यर्थः । लौकिको ह्यधिकारोऽपेक्षालक्षण एकस्मिन्नपि योगे न विरुध्यते । अर्थसमुदायं चापेक्ष्य

उ०—तदस्मिन्नस्तीति देशे । अणादय इति । अण्ण्याञ्नञ्स्नञः । एकयोगत्वमिति । विधेयभेदप्रयुक्तयोगभेदनिरासपरमेतत् । नन्वाचार्यस्य प्रमादोऽनुपपन्नोऽत आह-शिष्याणामिति । ननु स्वरितत्वगुणजन्यानुवृत्तिरेकसूत्रे कथं, स्वविषयवाक्यबोधानन्तरं निराकाङ्क्षतयान्यत्रान्यथाप्राप्तौ हि तत्प्राप्तये स्वरितासङ्गः, न चैतदेकयोगेऽत आह—लौकिक इति । अपेक्षामेव व्युत्पादयति—अर्थसमुदायञ्चेति । अन्यत्रेति । 'इको गुणवृद्धी' इत्यत्र । अधिकारमन्तरेणैवेति । एवशब्दोऽप्यर्थे । अनाश्रित्येति च पाठः । अधिकारमनन्तरेणेति पाठस्तूचितः । केचित्तु तद्भाष्यमेतद्विरोधादेकदेश्युक्तिरिति तदप्यावश्यकम् ।

अथवा सन्तु पुनर्नाना योगाः । ननु चोक्तम्—'ओरञित्येवमाद्यनुक्रमणं यदेव सर्वाऽन्त्यमर्थादेशनं तस्यैव विषये स्या'दिति । नैष दोषः । गोयूथवदधिकाराः । तद्यथा—,गोयूथमेकदण्डप्रवृत्तं सर्वं समं घोषं गच्छति, तद्वदधिकाराः ॥६७–७०॥

## ओरञ् ॥ ४ । २ । ७१ ॥

### ओरञ्विधेर्नद्यां मतुब्विप्रतिषिद्धम् ॥ १ ॥

ओरञ्विधेर्नद्यां मतुब्भवति विप्रतिषेधेन* । ओरञोऽवकाशः—कन्तु—कान्तवम् । कुकटेलु—कौकटेलवम् । मतुपोऽवकाशः—उदुम्बरावती मशकावती । इहोभयं प्राप्नोति—इक्षुमती द्रुमती । मतुब्भवति विप्रतिषेधेन ॥ ७१ ॥

## मतोश्च बह्वजङ्गात् ॥ ४ । २ । ७२ ॥

अङ्गग्रहणं किमर्थम् ? यथा बह्वज्ग्रहणमङ्गविशेषणं विज्ञायेत—'बह्वचोऽङ्गा'-दिति । अथाक्रियमाणेऽङ्गग्रहणे बह्वज्ग्रहणं कस्य विशेषणं स्यात् ? मत्वन्तविशेषणम् । तत्र को दोषः ? इहापि प्रसज्येत—मालावतामयं निवासो मालावतम् । अस्ति चेदानीं कश्चिदबह्वज्मत्वन्तो यदर्थो विधिः स्यात् ? अस्तीत्याह । श्ववान्

प्र०—समर्थविभक्तिरुपाधिर्वा निर्दिश्यमानः प्रत्येकमभिसम्बध्यते । यत्त्वन्यत्रोक्तं 'न चैकयोगेऽनुवृत्तिर्भवती'ति; तच्छास्त्रीयमधिकारमन्तरेणैव संबन्धस्य न्याय्यत्वमनाश्रित्येत्यविरोधः ।

गोयूथवदिति । स्वरितलिङ्गासङ्गदण्डनेर्यमाणा अधिकारगवाः आनन्तर्यव्यवधाननिरपेक्षाः सममेव कार्यदेशमनुसरन्तीत्यर्थः ॥ ६७—७० ॥

ओरञ् । उदुम्बरावतीति । 'मतौ बह्वचोऽनजिरादीना'मिति दीर्घः ॥ ७१ ॥

मतोश्च । अङ्गग्रहणमिति । 'मतोश्च बह्वच' इत्येवास्तु, व्यधिकरणे पञ्चम्यौ व्याख्यास्येते, बह्वचो यो विहितो मतुप्तदन्तादञ्भवतीति स एवार्थः सम्पद्यत इति प्रश्नः । यथेति ।

उ०—एवञ्च 'लौकिको ही' त्यादिक्लेशो व्यर्थ एव । स्वरितत्वेनाप्येकयोगेनुवृत्तौ बाधकाऽभावान्नैराकाङ्क्ष्येण सम्बन्धाप्राप्तौ सम्बन्धाय, एवं व्यवहितत्वादिना सम्बन्धाप्राप्तौ सम्बन्धायापि स्वरितत्वासङ्गे बाधकाऽभावादित्याहुः ॥ ६७-७० ॥

मतोश्च बह्व । सामानाधिकरण्य इति । तथा च वैयधिकरण्याऽन्वये तात्पर्यग्राहकमङ्गग्रहणमिति भावः । भाष्ये—यदर्थो विधिरिति । यद्व्यावृत्त्यर्थं बह्वच्पदस्य करणं स्यादित्यर्थः । श्ववान् स्ववानिति ।

१—'पुन सन्तु नाना' पा० ।　　* नद्यां मतुप् ४ । २ । ८५ ।
२—'काकपेलवम्' पा० । कीलहार्नपाठस्तु 'ओरञोऽवकाशः । कन्तु कान्तवम्' इत्येव ।

स्ववान् ॥ ७२ ॥

## नद्यां मतुप् ॥ ४ । २ । ८५ ॥

किमर्थं नद्यां मतुब्विधीयते, न 'तदस्यास्त्यस्मिन्निति मतुप्' [ ५ । २ । ९४ ] इत्येव सिद्धम् ।

### नद्यां मतुब्वचनं मत्वर्थेऽणिवधानात् ॥ १ ॥

नद्यां मतुब्वचनं क्रियते मत्वर्थेऽणिवधानात् । अयं मत्वर्थेऽणिवधीयते†, स विशेषविहितः सामान्यविहितं मतुपं बाधेत ।

### निर्वृत्ताद्यर्थं च ॥ २ ॥

निर्वृत्ताद्यर्थं च नद्यां मतुब्वचनं क्रियते । निर्वृत्ताद्यर्थेषु‡ मतुब्यथा स्यात् ॥ ८५ ॥

## कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ४ । २ । ८७ ॥

महिषाच्चेति[1] वक्तव्यम् । महिष्मान् ॥ ८७ ॥

## नडादीनां कुक् च ॥ ४ । २ । ९१ ॥

यदि पुनरयं कुक् परादिः क्रियेत ।

---

प्र०—सामानाधिकरण्ये सम्भवति वैय्यधिकरण्याश्रयणस्यायुक्तत्वादित्यर्थः ॥ ७२ ॥

नद्यां म । अयमिति । 'तदस्मिन्नस्तीति देशे तन्नाम्नी'त्येतत्सूत्रविहितः । नद्या अपि देशत्वात् । 'विशिष्टलिङ्गो नदीदेशोऽग्रामा' इत्यत्र तु पृथङ्नदीग्रहणं सर्वनदीवाच्यवयवद्वन्द्वपरिग्रहार्थम् । स विशेषविहित इति । देशे तन्नाम्नि विधानात् । निर्वृत्ताद्यर्थं चेति । निर्वृत्तादिषु त्रिष्वर्थेष्वप्राप्त एव मतुब्विधीयते । तदस्मिन्नस्तीत्यत्र त्वर्थे प्रतिप्रसूयत इत्यर्थः ॥ ८५ ॥

नडादीनां । सूत्रकारेण कुक्पूर्वान्तः कृतः, तत्र क्रुञ्चा अस्मिन् सन्तीति क्रुञ्चकीयमिति

---

उ०—एषां निवास इत्यर्थेऽञ्नेत्यर्थः ॥ ७२ ॥

नद्यां । ननु नदी न देशः, अत एव विशिष्टलिङ्ग इति देशात्पृथङ्नदीग्रहणमत आह—नद्या अपीति । पृथङ्नदीग्रहणमिति । वस्तुतस्तत्र अग्रामा इति पर्युदासाद्देशपदेन मनुष्यवासयोग्यजनपदनगराणामेव ग्रहणम् । अत एव पर्वतानां न,—कैलासगन्धमादने । एवञ्च नदीग्रहणसार्थक्यं स्पष्टमेव । नद्यादिसर्वावयवकग्रहणं तु विशिष्टलिङ्गादिसाहचर्याद्व्याख्यानाच्चेति बोध्यम् ॥ ८५ ॥

नडादीनां । ननु कुकः सूत्रोपात्तत्वात्परादित्वसम्भावनाभावोऽत आह—सूत्रेति । केऽण

---

† तदस्मिन्नस्तीति देशे तन्नाम्नि ४ । २ । ६७ ‡ तेन निर्वृत्तम्; तस्य निवासः; अदूरभवश्च ४ । २ । ६८–७० । १—'महिषाच्चे'ति वार्तिकं केचित् पठन्ति ।

**कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् ॥ १ ॥**

कुटि सति 'प्रत्ययादे'रित्यादेशस्यानुपपत्तिः । कुटि कृतेऽनादित्वादादेशो+ न प्राप्नोति ॥ एवं तर्हि पूर्वान्तः करिष्यते ।

**पूर्वान्ते ह्रस्वत्वम् ॥ २ ॥**

यदि पूर्वान्तो ह्रस्वत्वं वक्तव्यम्—कुञ्चकीयाः । परादौ पुनः सति 'केऽणः' [ ७ । ४ । १३ ] इति ह्रस्वत्वं सिद्धं भवति ।

अस्तु तर्हि परादिः । ननु चोक्तं 'कुटि कृतेऽनादित्वादादेशो न प्राप्नोती'ति ।

**सिद्धं त्वादिष्टस्य कुड्वचनात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? [ 'आदिष्टस्य कुड्वचनात्' ] 'कुद्वचादिष्टस्ये'ति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

**संनियोगात्सिद्धम् ॥ ४ ॥**

संनियोगः करिष्यते । क एष यत्नश्चोद्यते संनियोगो नाम ? चकारः कर्तव्यः, कुट् च । 'किं च' ? यच्चान्यत् प्राप्नोति । किं चान्यत्प्राप्नोति ? आदेशः । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'पूर्वान्ते ह्रस्वत्व'मिति । निपातनादेतत्सिद्धम् । किं निपातनम् ? 'कुञ्चा ह्रस्वत्वं चे'ति* । तत्तर्हि पूर्वान्ते सति निपातनं कर्तव्यम् । परादावप्येष दोषः । यद्धि तत्केऽण इति ह्रस्वत्वं, न तत्कादिमात्रे

प्र०—ह्रस्वो न सिध्यति । तत्तकीयमित्यत्र च नलोपो न प्राप्नोति । परादौ तु 'केऽण' इति ह्रस्वो नान्तस्य च पदत्वान्नलोपः सिध्यतीति मन्वान आह—यदि पुनरयमिति । क एष इति । आगमादेशौ सह भवत इत्युच्यमाने गौरवप्रसङ्ग इति मन्यते । निपातनादिति । गण एव 'कुञ्चा ह्रस्वत्वं च' 'तत्तन्नलोपश्चे'त्युच्चारणादित्यर्थः । यद्धि तदिति । 'केऽण' इत्यत्र कप्रत्ययस्य

उ०—इति । कादावित्यर्थं मन्यते । ननु गणे विधायकवचनस्यैव पाठान्निपातनादित्यसङ्गतमत आह—गण एवेति । निपातनम्—उच्चारणम् । स्वोक्तदोषस्यापि परिहारायाह—तत्तन्निति । भाष्यमुपलक्षणमिति

+ आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ७ । १ । २ ।

१—कीलहार्नस्तु नेदं पठति । * ४ । २ । ६१ गणसूत्रम् ।

शक्यं विज्ञातुम् । इहापि प्रसज्येत—नदीकल्पः परीवाहः, कुमारीकाम्यतीति । तस्मादुभाभ्यामेतद्वक्तव्यं—'कृष्वा ह्रस्वत्वं चे'ति ॥ ९१ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ।

## शेषे ॥ ४ । २ । ९२ ॥

शेष इत्युच्यते, कः शेषो नाम ? अपत्यादिभ्यश्चातुरर्थपर्यन्तेभ्यो† येऽन्येऽर्थाः स शेषः ।

किमर्थं पुनः शेषग्रहणं क्रियंते[1] ? शेषे घादयो‡ यथा स्युः, स्वार्थे मा भूवन्निति । नैतदस्ति प्रयोजनम् । इदं तावदयं प्रष्टव्यः—'अणादयः स्वार्थे कस्मान्न भवन्ती'ति ? अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, तेन स्वार्थे न भविष्यन्ति । इमेऽपि तर्हि जातादिष्वर्थेषु* विधीयन्ते तेन स्वार्थे न भविष्यन्ति ।

प्र०—ग्रहणं न तु वर्णमात्रस्य यतस्तदादिविधिः स्यादित्यर्थः ॥ ९१ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे चतुर्थस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ।

शेषे । शेषग्रहणमन्तरेणापत्यादीनां चातुरर्थपर्यन्तानां निवृत्तत्वाद्वक्ष्यमाणेषु जातादिषु घादयः सिध्यन्तीति मत्वा पृच्छति—कः शेष इति । इतरः शिष्यबुद्धिपरीक्षार्थं शेषं दर्शयति—अपत्यादिभ्य इति । येनाभिप्रायेण पृष्टवांस्तेनैव पुनः पृच्छति—किमर्थमिति । स्वार्थे मा भूवन्निति । अर्थानिर्देशे हि स्वार्थे घादिप्रसङ्गो, विप्रकर्षात्तु जातादिभिर्घादीनां सम्बन्धो न स्यादिति भावः ।

उ०—भावः । न स्विति । अत एव अकारोच्चारणमन्यथा कीति वदेदिति भावः ॥ ९१ ॥

इति श्रीकालोपनामकशिवभट्टसुतेन सतीदेवीगर्भजन्मना नागोजीभट्टेन कृते भाष्यप्रदीपोद्द्योते चतुर्थस्याध्यायस्य द्वितीयपादे प्रथममाह्निकम् ।

शेषे । कः शेष इत्यस्य—किम्प्रयोजनकं शेषपदमित्यर्थः । अतस्तदभावेऽपि तदर्थसिद्धिं दर्शयति—शेषग्रहणमिति । भाष्ये—चातुरर्थेति । चतुर्णामर्थानां समाहारश्चतुरर्थी, चतुरर्थ्येव चातुरर्थम्, प्रज्ञादित्वादण् । अस्मादेवाध्यात्मादित्वाट्ठञि 'चातुरर्थिक' इति बोध्यम् ।

ननु जाताद्यर्थनिर्देशात्कथं स्वार्थे विधानमत आह—विप्रकर्षात्त्विवति । ननु 'प्राग्दीव्यतोऽणि'त्यत्रापत्याधिकाराभावात्कथमेतदत आह—प्राग्दीव्यत इति । ननु विप्रकर्षोऽत आह—घादीति ।

† तस्यापत्यम्-अदूरभवश्च ४ । १ । ९२-४ । २ । ७०
‡ राष्ट्रावारपाराद् घखौ ४ । २ । ९३

[1]—'क्रियते' इति क्वचिन्न ।
* तत्र जातः ४ । ३ । २५

कथं पुनरिहोच्यमाना घादयो जातादिष्वर्थेषु शक्या विज्ञातुम् ? अनुवर्तिष्यन्ते तत्र घादयः । यद्यनुवर्तन्ते घादयः, या या परा प्रकृतिस्तस्यास्तस्याः पूर्वे पूर्वे प्रत्ययाः प्राप्नुवन्ति । एवं तर्हि जातादिष्वर्थेषु घादीनपेक्षिष्यामहे । अयुक्तैवं बहुनोऽपेक्षा । अपेक्षमाणोऽयमनन्तरं† योगमपेक्षेत । बहुनोऽप्यपेक्षा भवति । तद्यथा,—'कषादिषु यथाविध्यनुप्रयोगः' [ ३ । ४ । ४६ ] इति ससामान्यकं सविशेषकं सर्वमपेक्ष्यते ।

अथवा पुनरस्त्वनुवृत्तिः । ननु चोक्तं 'या या परा प्रकृतिस्तस्यास्तस्याः पूर्वे पूर्वे प्रत्ययाः प्राप्नुवन्ती'ति । नैष दोषः । संबन्धमनुवर्तिष्यते । 'राष्ट्रावारपाराद्घखौ' [ ४ । २ । ९३ ] । 'ग्रामाद्यखञौ' [ ९४ ] 'राष्ट्रावारपाराद्घखौ' । कत्त्र्यादिभ्यो ढकञ् [ ९५ ] 'राष्ट्रावारपाराद्घखौ' 'ग्रामाद्यखञा'विति ।

अत उत्तरं पठति—

**शेषवचनं घादीनामपत्यादिष्वप्रसङ्गार्थम् ॥ १ ॥**

प्र०—अपत्यादिष्विति । 'प्राग्दीव्यत' इति विशिष्टावधिपरिच्छिन्नार्थाश्रयेणाणादीनां विधानादिति भावः । इमेऽपीति । घादिविधानवाक्येष्वर्थनिर्देशाभावात्, 'तत्र जात' इत्यादिष्वर्थनिर्देशवाक्येषु प्रत्ययानुपादानात्परस्पराकाङ्क्षावशादेकवाक्यतायां सत्यां जातादिष्वेव घादयो भविष्यन्ति न तु स्वार्थ इत्यर्थः । एवं तर्हीति । 'तत्र जात' इत्यादिषु प्रत्ययानिर्देशादवश्याकाङ्क्षितव्या घादय इति भावः । अयुक्तेति । बहूनो वस्तुनोऽपेक्षा न युक्ता । अनन्तरेणैव प्रत्ययेनाकाङ्क्षाविच्छेदसम्भवादिति भावः । अनन्तरमिति । 'विभाषा पूर्वाह्णापराह्णाभ्या'मित्येतदित्यर्थः । कषादिष्विति । यथात्र कषादिष्विति वचनेनापेक्षा प्रतिपाद्यते तथेहापि योगविभागसामर्थ्यात्प्रत्ययसमुदायापेक्षा भविष्यतीति मन्यते । ससामान्यकमिति । 'उपमाने कर्मणि चे'त्यत्र धातुसामान्यं प्रकृतित्वेनोपादीयतेऽन्यत्र तु विशेषे सर्वस्यैवापेक्षा भविष्यतीत्यर्थः ।

अथवेति । स्वरितत्वादिति भावः ।

उ०—पाठविप्रकर्षेऽप्याकाङ्क्षावशात्सन्निधानमिति भावः । बहुनो वस्तुन इति । वैपुल्यवाचिबहुशब्दस्य नपुंसकैकवचनप्रयोग इति बोध्यम् । ननु तत्र 'कषादिषु' इत्युक्तत्वात्सर्वापेक्षा, न चैवमत्रेत्यत आह—यथात्रेति । योगविभागेति । 'विभाषा पूर्वे'त्यनेन योगविभागेत्यर्थः । नन्वधिकारपक्ष एव प्रकृते 'अथवे'त्ययुक्तमत आह—स्वरितत्वादिति । लौकिकाधिकारपरित्यागेन शास्त्रीयाधिकारद्योतनाय 'अथवे'त्युक्तिरिति भावः । एवञ्च शेषग्रहणे व्यर्थताप्राप्ते वार्तिककृत उत्तरं भाष्ये—शेषवचनमिति । तस्येदं-

१—'जातादिषु शक्या' पा० । २—'परा परा प्रकृतिः' पा० ।

† विभाषा पूर्वाह्णापराह्णाभ्याम् ४ । ३ । २४ ।

शेषवचनं क्रियते, शेषे घादयो यथा स्युरपत्यादिषु मा भूवन्निति ।

कथं च प्राप्नुवन्ति ?

**तस्येदंवचनात्प्रसङ्गः ॥ २ ॥**

तस्येदंविशेषा ह्येतेऽपत्यं समूहो निवासो विकार इति* ।

**विप्रतिषेधात्सिद्धम् ॥ ३ ॥**

अणादयः क्रियन्तां घादय इति, [ किमत्र[1] कर्तव्यम् ? ] अणादयो भवन्ति विप्रतिषेधेन ।

**न वा परत्वाद्घादीनाम् ॥ ४ ॥**

न वैष युक्तो विप्रतिषेधः । किं कारणम् ? 'परत्वाद्घादीनाम्' । 'विप्रतिषेधे पर'मित्युच्यते† पूर्वे चाणादयः परे घादयः ।

परेऽणादयः करिष्यन्ते । सूत्रविपर्यासश्चैवं कृतो भवति ।

**अणपवादत्वाच्चाणविषये घादिप्रसङ्गः ॥ ५ ॥**

अणपवादत्वाच्च घादीनामणविषये घादयः प्राप्नुवन्ति ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'नाणविषये घादयो भवन्ती'ति यदयं

---

प्र०—विप्रतिषेधादिति । पूर्वविप्रतिषेधादिति भावः । न वेति । अनिष्टप्रसङ्गाद्विप्रतिषेध आश्रयितुं न युक्तः । परशब्दस्य व्यवस्थाविषयस्य तत्र ग्रहणादिष्टवाची संगृह्यत इति चेदिष्टानिष्टत्वस्य वचनाद्विना दुर्ज्ञानत्वात्तद्ग्रहणस्यायुक्तत्वात् ।

अणपवादत्वादिति । नाप्राप्तेऽणि विधीयमाना घादयोऽपत्यादिष्वप्यणं बाधेरन्निति शेषाधिकारः कर्त्तव्य इत्यर्थः । इदानीं भाष्यकारोऽसत्यपि शेषाधिकारे ज्ञापकेनापत्यादिषु शेषाधि-

---

उ०—विशेषा हीति । सर्वे च विशेषा लाघवादिदंपदेनोक्ताः, 'तस्येद'मिति सूत्रे 'इदं'पदार्थस्येदन्त्वस्याश्रयभूता व्यक्तिविशेषा इत्यक्षरार्थः । यद्यपीदमिति प्रत्यक्षविषयत्वेन बोधकं तथापि तेन रूपेण सर्वविशेषसङ्ग्राहकमेतत् । प्रत्ययतश्च प्रकरणादितस्तत्तद्रूपेण बोधः । शेषग्रहणे तु शेषे इदमर्थे प्रत्यय इत्यर्थेनापत्यादीनामुक्तानामिदंत्वेन 'इदम्'शब्देनाग्रहणमिति तेषु एतद्व्यावृत्तिः । न च इदम्पदेनापत्यादीनामग्रहणे 'आपत्यं गोत्र'मिति वार्त्तिकप्रयोगानुपपत्तिः, अपत्यस्येदमापत्यमित्यर्थौ हि तत्रेति वाच्यं, तत्र शिवादिपाठेनाणसिद्धेः । 'दशरथ' इत्याद्यपि दशरथशब्दस्य शिवादिब्राह्वाद्योः पाठेन सिद्धमिति भावः ।

---

* तस्येदम् ४ । ३ । १२०; तस्यापत्यम् ४ । १ । ९२; तस्य समूहः ४ । २ । ३७; तस्य निवासः ४ । २ । ६९; तस्य विकारः ४ । ३ । १३४ ।

† विप्रतिषेधे परं कार्यम् १ । ४ । २ ।

१—कालहार्नसंस्करणे इदं नास्ति ।

'फेश्छ च' [ ४ । १ । १४६ ] इति फिञन्ताच्छं शास्ति‡ । नैतदस्ति ज्ञापकम् । फिनर्थमेतत्स्यात् । सौवीरगोत्रेष्विति§ वर्तते, न च फिनन्तं सौवीरगोत्रमस्ति ।

गोत्रग्रहणं सामूहिकेषु ज्ञापकम्, दैवयातवग्रहणं वैषयिकेषु, भास्त्रायणग्रहणं

प्र०—कारप्रत्याख्यानाय घादीन्व्यावर्त्तयति—नैष दोष इति । फेश्छ चेति । 'फेर्वे'त्येव ठग्विधानार्थं कर्त्तव्यम् । तत्र ठका मुक्ते पक्षे 'वृद्धाच्छ'इति च्छो भविष्यति नार्थश्छविधानेन । तत्तु ज्ञापकार्थं सम्पद्यते—'घादयोऽपत्यादिषु न भवन्ती'त्यर्थस्य । 'अपत्य एव ज्ञापकं स्या'दित्याशङ्क्य ज्ञापकान्तराण्याह—गोत्रग्रहणमिति । 'गोत्रोक्षोष्ट्रोरभ्रे'त्येतदिति भावः । 'गोत्रचरणाद्वुञ्'निति समूह इदमर्थान्तर्भूते वुञि सिद्धे पुनर्वुञ्विधानं यथोक्तार्थज्ञापनम् । दैवयातवग्रहणमिति । राजन्यादिगणपठितमिति भावः । देवयाज्ञूनामपत्यानि दैवयातवा इति । गोत्रप्रत्ययान्तमेतत् । भास्त्रायणग्रहणमिति । अरीहणादिगणपठितं वुञ्विधानार्थमिति भावः ।

यद्यपि न्यायेनापत्यादिषु घाद्यभावः सिध्यति, तथापि विस्पष्टप्रतिपत्तये भाष्यकारो ज्ञापकान्युपन्यास्थत् । तथा हि—विशेषशब्दसन्निधाने सामान्यशब्द उपादीयमानस्तत्रैव वा विशेषेऽवतिष्ठते, यथा वृक्षः शिंशपेति । विशेषान्तरेषु वा यथा 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याये'ति । तस्येदमिति सामान्यमपत्यादिशब्दमन्निधावुपादीयमानं यद्यपत्यादिष्वेव वर्त्तेत तदा सामान्योपादानमनर्थकमेव स्यात्तस्मादपत्यादिविशेषपरिहारेण विशेषान्तराणि 'तस्येद'मित्यनेन ग्राहिष्यन्ते ।

यदि तर्हि शेषग्रहणं प्रत्याख्यायते तदा तस्य लक्षणतया यानि शब्दरूपाणि साध्यानि तानि कथं सिध्यन्ति ?; चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । चतुर्भिरुह्यते—चातुरं शकटम् । अश्वो रथः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो यावकः । चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति । 'तस्येद'मिति 'संस्कृतं भक्षा' इति च सिद्धत्वान्नार्थस्तदर्थेन

उ०—पूर्वविप्रतिषेधोऽप्ययुक्तोऽपवादत्वादित्याह—भाष्ये—अणपवादत्वाच्चेति । अणविषये—अपत्यादिरूपेऽप्यणविषयेऽणं बाधित्वा घादयः प्राप्नुवन्तीत्यक्षरार्थः ।

इदानीम्भाष्यकारोऽसत्यपीति । शेषाधिकारप्रत्याख्यानाय ज्ञापकेनापत्यादिषु घादीनिति सम्बन्धः । भाष्यकार इत्यस्य—तस्यैकदेशीत्यर्थः । 'फेश्छ चे'त्यनेन सौवीरगोत्रात्फिञन्तादपत्ये ठक्छौ विधीयेते । इदमर्थान्तर्भूतेति । न चेदमर्थवुञन्तं त्रिलिङ्गं स्यात्, समूहे तु क्लीबमिति वाच्यं, 'लोकाश्रयत्वाल्लिङ्गस्ये'त्युक्तेः । यथा दधीति । अत्र ब्राह्मणशब्दः कौण्डिन्यसन्निधौ तदतिरिक्तविशेषे वर्त्तते । 'वृक्षः शिंशपे'त्यत्र तु फलग्रहणनिवृत्तये, लौकिके प्रयोगे लाघवमप्रत्यनादराच्च सामान्यशब्दोपादानमिति बोध्यम् । 'यद्यपत्यादी'त्यनेनाद्यः प्रकारो दूषितः, अतो द्वितीय एव प्रकार इत्याह—तस्मादिति । केचित्तु 'सामान्योपादानं व्यवहिताव्यवहितसर्वसङ्ग्रहाय स्यादतो विशेषान्तरस्य वात्र ग्रहणबोधनार्थं शेषग्रहणं. ज्ञापकोपन्यासो वावश्यकः । तत्र ज्ञापकेनानुमानिकवचनकल्पनापेक्षया सूत्रमेव न्याय इतीयमेकदेश्युक्ति'रित्याहुः ।

१—'फ्यन्ताच्छं' पा० । ‡ वृद्धाच्छः ४ । २ । ११४ ।

§ वृद्धाट्ठक् सौवीरेषु बहुलम् ४ । १ । १४८ ।

नैवासिकेषु[¶] ॥ ९२ ॥

## राष्ट्रावारपाराद्घखौ ॥ ४ । २ । ९३ ॥

### अवारपाराद्विगृहीतादपि ॥ १ ॥

'अवारपाराद्विगृहीतादपी'ति वक्तव्यम् । अवारीणः पारीणः अवारपारीणः ।

### विपरीताच्च ॥ २ ॥

'विपरीताच्चे'ति वक्तव्यम् । पारावारीणः ॥ ९३ ॥

## कत्त्र्यादिभ्यो ढकञ् ॥ ४ । २ । ९५ ॥

'ग्रामाच्चे'ति वक्तव्यम् । ग्रामेयकः ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'कत्त्र्यादिभ्यो ढक'ञित्यत्र 'ग्रामा'दित्यनुवर्तिष्यते* ॥ ९५ ॥

## कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ४ । २ । ९६ ॥

अयं योगः शक्योऽवक्तुम् । कथं कौलेयकः [ कौक्षेयकः ग्रैवेयकः ] ? कुलस्यापत्यम् ।

---

प्र०—शेषवचनेन । 'तत्र जात' इत्यत्र तु सूत्रेऽस्य लक्षणत्वमाश्रित्यैतेषां सिद्धिमभिधास्यति नागनाथः[2] ॥ ९२ ॥

कुल । कुलस्यापत्यमिति । शुनः प्रत्ययार्थत्वे श्वकुलं प्रकृत्यर्थः संपद्यते । कञिति ।

---

उ०—एतेषां सिद्धिमिति । आख्यातवाच्यार्थस्येदमा परामर्शायोगादनेनैव साधनं युक्तमिति भगवतो नागनाथ[3]स्याभिप्रायः । ज्ञापकेन वार्त्तिकोक्तार्थप्रत्याख्यानं त्वेकदेशिन इत्युक्तमेव । 'शैषिकान्मतुबर्थीया'दित्यस्य विषयलाभायाप्यधिकारसूत्रमावश्यकमिति बोध्यम् ॥ ९२ ॥

कुलकुक्षिग्रीवा । शुन इति । कुलशब्दादपूर्वपदादन्यतरस्यामिति ढकञ् । शब्दशक्तिस्वभावात्तद्धितस्याभिधानलक्षणत्वाच्च शुन्येवापत्ये इति भावः । ननु कुलस्यापत्येन कथं योग इति चेन्न, कुलशब्दस्य तत्प्रभवपरत्वात् । शुनि शैषिकोऽस्तु न, अनभिधानादिति बोध्यम् । स्वार्थिक इतीति ।

---

¶ गोत्रोक्षोष्ट्रोरभ्र········वुञ्; राजन्यादिगणे; अरीहणादिगणे ४।२।३६; ५३ ग०; ८० ग०; गोत्रचरणाद् वुञ् ४ । ३ । १२६ ।

१—'ग्रामाच्चे'ति वार्तिकं क्वचिद् दृश्यते ।

२—नागनाथः=पतञ्जलिः ।

३—इदं क्वचिन्न ।

* ग्रामाद्यखञौ ४ । २ । ९४ ।

कुक्षिग्रीवात्तु कन्ढञः ।

कुलस्यापत्यं कौलेयक इति भविष्यति* । कुक्षिग्रीवादपि ढञन्तात्कन्भविष्यति† ॥ ९८ ॥

## कापिश्याः ष्फक् ॥ ४ । २ । ९९ ॥

²बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् । बाह्लायनी और्दायनी पार्दायनी ॥९९॥

## रङ्कोरमनुष्येऽण्च ॥ ४ । २ । १०० ॥

अमनुष्य इति किमर्थम् ? राङ्कवको मनुष्यः ।

**रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् ॥ १ ॥**

रङ्कोरमनुष्यग्रहणमनर्थकम् । किं कारणम् ? 'मनुष्यतत्स्थयोर्वुञ्विधानात्' । अयं मनुष्ये मनुष्यस्थे च वुञ्विधीयते‡ स बाधको भविष्यति ।

प्र०—स्वार्थिक इति भावः ॥ ९८ ॥

कापिश्याः । बाह्ल्युर्दीति । 'अवृद्धादपी'ति वुञि प्राप्ते ष्फगारभ्यते इत्याहुः ॥ ९९ ॥

रङ्को । रङ्कवो जनपदस्ततः 'प्राग्दीव्यतोऽ'णित्यण्प्राप्तस्ततोऽवृद्धादपीति वुञ्प्राप्तः, तत 'ओर्देशे' ठञ्प्राप्तः, ततः 'कोपधादण्', ततः 'कच्छादिभ्यश्चे'त्यण् प्राप्तस्ततः ष्फगणौ विधीयेते । कच्छादिषु कोपधत्वादेवाणि सिद्धे रङ्कुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थः । स बाधक इति । विशेषविहितत्वादिति भावः ।

उ०—'दतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' 'ग्रीवाभ्योऽण्चे'त्यभिधानस्वाभाव्यादस्यलङ्कारयोरेवेति बोध्यम् । कन्निति 'संज्ञायां क'न्निति कन् ॥ ९८ ॥

कापिश्याः ष्फक् । अवृद्धादपीति । 'बाह्लायनी'त्यत्रापि नावृद्धादित्यर्थेन प्राप्तिः । क्वचित्तु 'बह्ल्युर्दी'त्येव पाठः ॥ ९९ ॥

रङ्कोर । ननु रङ्कोः कच्छादित्वादेवाणि सिद्धेऽणविधानं व्यर्थमत आह—रङ्कव इति । तत्र ष्फका बाधा मा भूदित्यणविधीयत इति भावः । नन्वेवं कच्छादिषु रङ्कुशब्दपाठो व्यर्थः, कोपधत्वादेव सिद्धेरत आह—कच्छादिष्विति । विशेषेति । रङ्कुशब्दविषयस्य तस्याचरितार्थत्वादिति भावः । न च रङ्कोर्मनुष्यवुञ्वैकल्पिक इत्यर्थज्ञापनार्थं तत्र रङ्कुशब्दपाठः, 'अमनुष्ये'त्यस्याभावे हि पक्षे ष्फगपि स्यात्, एवञ्च मनुष्ये 'राङ्कवः' 'राङ्कवक' इति रूपद्वयमिति वाच्यम्, एतत्सूत्रविहितयोर्द्वयोरप्यभावस्यामनुष्यग्रहणेन

* अपूर्वपदादन्यतरस्यां यड्ढकञौ ४ । १ । १४०

† दतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्; ग्रीवाभ्योऽण् च ४ । ३ । ५६; ५७; संज्ञायां कन् ५ । ३ । ८७

२–इतः पूर्वं 'बाह्ल्युर्दिपर्दिभ्यश्चे'ति वार्तिकं क्वचित् ।

‡ मनुष्यतत्स्थयोर्वुञ् ४ । २ । १३४

एवं तर्हि ज्ञापयत्याचार्योऽमनुष्ये मनुष्यस्थे ष्फगणौ भवत इति ।

**अमनुष्ये मनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् ॥ २ ॥**

अमनुष्ये मनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेत्तन्न । किं कारणम् ? 'अनिष्टत्वात्' । न ह्यमनुष्ये मनुष्यस्थे ष्फगणाविष्येते । किं तर्हि ? वुञेवेष्यते ।

**अण्ग्रहणं च कच्छादिभ्योऽण्वचनात् ॥ ३ ॥**

अण्ग्रहणं चानर्थकम् । किं कारणम् ? 'कच्छादिभ्योऽण्वचनात्' । कच्छादिपाठादत्राण्भविष्यति* ॥ १०० ॥

**अव्ययात्त्यप् ॥ ४ । २ । १०४ ॥**

परिगणनं कर्तव्यम् ।

**अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ।**

अमा—अमात्यः । अमा ॥ इह—इहत्यः । इह ॥ क्व—क्वत्यः । क्व ॥ तसि—

प्र०—अमनुष्ये मनुष्यस्थे इति । चूडादावित्यर्थः । यदि हि मनुष्यस्थे वुञं ष्फगणौ न बाधेयातां मनुष्यप्रतिषेधोऽनर्थकः स्यात् ॥ कच्छादिभ्योऽण्वचनादिति । ततश्चैकविषयत्वात्पर्यायेण ष्फगणौ भविष्यत इति नार्थोऽण्वचनेनेत्यर्थः । तदेवं 'रङ्कोश्चे'त्येव वक्तव्यम् । यत्तु कैश्चिदभ्यधायि—अमनुष्यग्रहणेन पर्युदासाश्रयेण मनुष्यसदृशे प्राणिनि ष्फग्विधीयते नाप्राणिनि । अत एव विशेषविहितत्वादणो बाधकः स्यादित्यण्ग्रहणमपि कृतमिति । तदयुक्तम् । न हि भाष्यकारवार्त्तिककाराभ्यामभियुक्ततरः शब्दविषये कश्चिदस्ति ॥ १०० ॥

अव्ययात्त्यप् । अमेहेति । योऽव्ययात्त्यब्विधिः सोऽमादिभ्य एव स्मृत इत्यर्थः । अमाशब्दः सहार्थे सामीप्ये च वर्त्तते । तेन समीपे भवतीत्यमात्यः । औत्तराह इति । 'आहि च दूरे'

उ०—बोधनात्, ज्ञापितेऽप्यणोऽलाभात् । न च तेन ष्फगभाव एव बोध्यते, विनिगमनाविरहात्सूत्रोपात्तत्वेन तत्र 'अमनुष्ये' इत्यस्यान्वयौचित्यात् ।

यदि हीति । एवञ्च वुञः ष्फगणौ बाधकाविति ज्ञाप्यत इत्यर्थः । ततश्चेति । न च मनुष्यतत्स्थयोर्वुञ्विध्यर्थः स पाठश्चरितार्थः, विनिगमनाविरहेण तत्पाठस्योभयार्थत्वादिति भावः । न हि भाष्येति । एवञ्च भाष्यसंमतमेव लक्ष्यं, सूत्रे तु स्पष्टप्रतिपत्त्यर्थं ग्रहणमिति भावः ॥ १०० ॥

अव्ययात्त्यप् । अमादिभ्यो यस्त्यब्विधिः सोऽव्ययादित्यन्वयेऽप्रसिद्धिर्वैयर्थ्यञ्चेत्यत आह—योऽव्ययादिति । ध्रुवं नियतमिति । ध्वंसाप्रतियोगित्वादिकमित्यर्थः ।

* कच्छादिभ्यश्च ४ । २ । १३३

ततस्त्यः यतस्त्यः । तसि ॥ त्र—तत्रत्यः यत्रत्यः ॥ इतरथा ह्यौत्तराहौपरिष्टपारतानां प्रतिषेधो वक्तव्यः स्यात् । औत्तराहः औपरिष्टः पारतः† ।

[ 'निशब्दादपि वाच्योऽयं ध्रुवार्थे नियते तथा ॥ ]

त्यब्नेर्ध्रुवे ॥ त्यब्नेर्ध्रुवे वक्तव्यः । नित्यः ।

निसो गते ॥ निसो गते त्यब्वक्तव्यः । निष्ट्यः* ।

अरण्याण्णः ॥ अरण्याण्णो वक्तव्यः । आरण्याः सुमनसः ।

दूरादेत्यः ॥ दूरादेत्यो वक्तव्यः । दूरेत्यः ।

उत्तरादाहञ् ॥ उत्तरादाहञ्वक्तव्यः । औत्तराहः ।

अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि ॥ १ ॥

अव्ययात्त्यबित्यत्राविष्ट्यस्य च्छन्दस्युपसङ्ख्यानं कर्तव्यम् । आविष्ट्यो वर्धते चारुरासु† ।

प्र०—'उत्तराच्च'त्याहिप्रत्ययः । उत्तराहि भवः । उपरिष्टाद्भवः । परतो भव इत्यण् । 'अव्ययानां भमात्रे' इति टिलोपः । 'परतःशब्दो 'विभाषा परावराभ्या'मित्यतसुजन्तः ।

त्यब्नेर्ध्रुवे इति । ध्रुवं नियतमुच्यते । निसो गत इति । निर्गतो वर्णाश्रमेभ्य इति निष्ट्यः चण्डालादिः । 'ह्रस्वात्तादौ तद्धित' इति सकारस्य मूर्द्धन्यस्तकारस्य ष्टुत्वम् । अरण्याण्ण इति । अणि सति ङीप्स्यादिति णो विधीयते ।

आविष्ट्य इति । आविशब्दाद्वृद्धाच्छे प्राप्ते त्यब्विधिः । आविर्भूत आविष्ट्यः ।

उ०—'निर्गत' इत्यस्य कस्मादित्याकाङ्क्षायाः सत्त्वादाह—वर्णाश्रमेभ्य इति । नन्वरण्यात्सामान्य-सूत्रेणाणसिद्ध एवेत्यत आह—अणीति । एतदर्थमेव भाष्ये स्त्रियामुदाहृतम् । परिगणनमभिप्रेत्याह वृद्धाच्छे इति । ननु परिगणनादत्र त्यपः प्राप्तिरेव नेत्यत आह—असतीति । परिगणनं भाष्यकृतोऽन्यवार्त्तिककारस्य वेति विप्रतिषेधवार्त्तिककारस्तन्न जानातीति भावः ।

ननु 'धन्वयोपधा'दित्यत्र 'वृद्धा'दित्यनुवृत्तेरनवकाशत्वात्परत्वोक्तिरसङ्गतेत्यत आह—परत्वेति ।

† उत्तराच्च; उपर्युपरिष्टात्; विभाषा परावराभ्याम् ५ । ३ । ३८; ३१; २९; प्राग्दीव्यतोऽण् ४ । १ । ८३; अव्ययानां च ६ । ४ । १४४ वा० ५

१—क्वचित्कोऽयं पाठः । काशिकायां त्वेवं दृश्यते—'निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा" इति ।

* ह्रस्वात्तादौ तद्धिते ८ । ३ । १०१    † ऋ० सं० १ । ९५ । ५

अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो विप्रतिषेधेन ॥२॥

अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो भवति विप्रतिषेधेन‡ । अव्ययात्त्यब्भवतीत्यस्यावकाशः—अमात्यः । छस्यावकाशः—शालीयः मालीयः । आरादुभयं प्राप्नोति—आरातीयः ॥ तीरोत्तरपदादञ्भवतीत्यस्यावकाशः—काखतीर[1]—काखतीरी । छस्य स एव । वायसतीरादुभयं प्राप्नोति—वायसतीरीयः ॥ रूप्योत्तरपदाञ्ञो भवतीत्यस्यावकाशः—चणारूप्य[2]—चाणारूप्या । छस्य स एव । माणिरूप्यादुभयं प्राप्नोति । तं चापि च्छं परत्वाद्योपधलक्षणो वुञ्बाधते+—माणिरूप्यकः ॥ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः—शिवपुर—शैवपुरः । छस्य स एव । वाडवकर्षादुभयं प्राप्नोति—वाडवकर्षीयः ॥ कोपधादण्भवतीत्यस्यावकाशः—निलीनक—नैलीनकः । छस्य स एव । औलूकादुभयं प्राप्नोति—औलूकीयः ।

प्र०—आरातीय इति । असति परिगणनेऽत्र प्राप्नोति । योपधलक्षण इति । 'धन्वयोपधाद्वुञ्' इति वुञ् । परत्वग्रहणेन बाधकत्वं लक्ष्यते । अपवादत्वादिह च्छस्य वुञ्—बाधकः । वार्त्तिककारेण तु प्राप्तिमात्राश्रयेण छस्य रूप्योत्तरपदलक्षणस्य च ञ्यस्य विप्रतिषेध उक्तः । शिवपुरमिति । शिवस्य पुरमिति षष्ठीसमासः । समासस्वरेणान्तोदात्तत्वम् । 'प्रस्थपुरवहान्ताच्चे'त्यत्र 'वृद्धात्प्राचा'मित्यतो वृद्धाधिकारादत्र वुञ्न भवति । कोपधादिति । 'प्रस्थोत्तरपदपलद्यादिकोपधाद'-णित्ययमणिववक्षितः । एतस्माद्धि परश्छः । यस्तु 'कोपधाद'णित्यण् स जनपदवुञोऽपवादः । तस्यापि 'वृद्धादकेकान्तखोपधा'दित्यत्र खोपधग्रहणाच्छो बाधकः, परत्वात् । औलूकादिति । उलूका अस्मिन् सन्तीति । तदस्मिन्नस्तीत्यण् । औलूको नाम ग्रामः ।

उ०—नन्वेवं 'रूप्योत्तरपदादञ्प्रत्ययाद्वृद्धाच्छः परत्वा'दिति वार्त्तिकासङ्गतिरत आह—वार्त्तिकेति । 'पुरे प्राचा'मित्यनेन पुरान्तसमासे पूर्वपदस्यान्तोदात्तत्वविधानान्नायमन्तोदात्तोऽत आह—शिवस्येति । तत्त्वधिकाराद्बहुव्रीहिविषयमिति भावः । ननु कथमयमञोऽवकाशः, परत्वेन पुरान्तलक्षणवुञापत्तेरत आह—प्रस्थेति । वुञोऽपवाद इति । स तु 'वृद्धाच्छ' इत्यतः पर इति भावः । कोपधग्रहणादिति । 'अकेकान्त'स्थाने 'कोपधग्रहणं कर्त्तव्य'मिति वार्त्तिकादिति भावः । एवञ्च तत्रापि फले न विशेषो यद्यपि तथापि 'वृद्धाच्छ' इति वार्त्तिकमसङ्गतं स्यादिति तात्पर्यम् । केचित्तु 'वृद्धाच्छ'पदेनोभयोरपि सङ्ग्रहं मन्वते । 'वृद्धादके' इति सूत्रस्थ कोपधा'दित्यस्य जनपदतदवधिविषयत्वात्र प्राप्तिरपि नेत्याह—औलूको नाम ग्राम इति ।

---

‡ अव्ययात्त्यप्; तीररूप्योत्तरपदादञ्ञौ; उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्; प्रस्थोत्तरपदपलद्यादिकोपधादण्; वृद्धाच्छः ४ । २ । १०४; १०६; १०९; ११०; ११४

१—'करवतीर' पा० । २—'वणारूप्य' पा० । + धन्वयोपधाद्वुञ् ४ । २ । १२१

## तेभ्यष्ठञ्ञिठौ ॥ ३ ॥

तेभ्यस्त्यबादिभ्यष्ठञ्ञिठौ भवतो विप्रतिषेधेन* ॥ अव्ययात्त्यब्भवतीत्यस्यावकाशः—प्रमात्यः । ठञ्ञिठयोरवकाशः—कारतन्तविकी कारतन्तविका[1] । आरान्नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति—आरात्की आरात्का ॥ तीरोत्तरपदादञ्भवतीत्यस्यावकाशः—करवतीर—कारवतीरी । ठञ्ञिठयोः स एव । कास्तीरं[2] नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति—कास्तीरिकी कास्तीरिका ॥ रूप्योत्तरपदाञ्ञो भवतीत्यस्यावकाशः—चणारूप्य—चाणारूप्या । ठञ्ञिठयोः स एव । दासरूप्यं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । तौ चापि ठञ्ञिठौ परत्वाद्योपधलक्षणो वुञ्बाधते†—दासरूप्यकः ॥ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः—शिवपुर—शैवपुरः । ठञ्ञिठयोः स एव । शाकलं नाम वाहीकग्रामस्तमादुभयं प्राप्नोति—शाकलिकी शाकलिका ॥ कोपधादण्भवतीत्यस्यावकाशः—निलीनक—नैलीनकः । ठञ्ञिठयोः स एव । सौसुकं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । तौ चापि ठञ्ञिठौ परत्वात्कोपधलक्षणश्छो बाधते‡—सौसुकीयः ।

### न वा ठञादीनां छापवादत्वात्तद्विषये चाभावादितरेषाम् ॥ ४ ॥

प्र०—तेभ्य इति । ये छस्य बाध्या अव्ययादिलक्षणाः प्रत्ययास्तेभ्य इत्यर्थः । आरात्कीति । परिगणनानपेक्षयायं विप्रतिषेध उक्तः । शाकलमिति । शकलानि सन्त्यस्मिन्निति पूर्ववदण् । कोपधलक्षण इति । 'वृद्धादकेकान्ते'त्यत्राकेकान्तग्रहणे कोपधग्रहणं कर्तव्यमिति विहितः ।

उ०—तच्छब्दपरामर्श्यमनुगतं रूपं दर्शयति—परिगणनानपेक्षयेति । 'ग्रामवाचिनोऽप्यव्ययत्व'मित्याभिप्रायेदम् । पूर्ववदिति । 'तदस्मिन्नस्ती'त्यनेन । अत्र सर्वत्र 'वाहीकग्रामेभ्य'श्चेति ठञ्ञिठौ ।

* अव्ययात्त्यप्; तीररूप्यो०; उदीच्यग्रामाच्च०; प्रस्थोत्तरपद०; वाहीकग्रामेभ्यश्च ४ । २ । १०४; १०६; १०९; ११०; ११७ ।  १—'कारन्तविकी कारन्तविका' इति कीलहार्नपाठः ।

२—'कास्तीरो नाम' पा० । 'कास्तीराजस्तुन्दे नगरे' ( ६ । १ । १५५ ) इत्यत्र वृत्तिः—'ईषत्तीरमस्य, अजस्येव तुन्दमस्येति व्युत्पत्तिरेव क्रियते नगरं तु वाच्यमेतयोः । कास्तीरं नाम नगरम् ।' इति । कास्तीरराष्ट्रकं वज्रं कौटिलीयार्थशास्त्रे ( अधि० २, प्र० २७, अ० ११ ) द्रष्टव्यम् ।

† धन्वयोपधाद् वुञ् ४ । २ । १२१ ।

‡ अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ४ । २ । १४१ वा० १ । पृ० ६८८

न वार्थो विप्रतिषेधेन । किं कारणम् ? 'ठञादीनां छापवादत्वात्'। ठञाद-यश्छापवादाः । 'तद्विषये चाभावादितरेषाम्' । तद्विषये छविषये त्यबादीनामभावः ।

कोपधादणः पुनर्वचनमन्यानिवृत्त्यर्थम् ।। ५ ।।

अयं चाप्ययुक्तो विप्रतिषेधो योऽयं कोपधादणश्छस्य च । किं कारणम् ? 'कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम्' । सिद्धोऽत्राणुत्सर्गेणैव*, तस्य पुनर्वचन एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैव तदपवादमञं† बाधते, एवं छमपि बाधेत ।

तस्मादन्तोदात्ते कोपधप्रतिषेधः ।। ६ ।।

तस्मादन्तोदात्ते कोपधादञः प्रतिषेधो वक्तव्यः ।। न वक्तव्यः । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्त' इत्येवं कोपधादणञं बाधिष्यते, छं न बाधिष्यते ।

छादोर्देशे कालाट्ठञ् ।। ७ ।।

छाद् 'ओर्देशे ठञ्' [ ४ । २ । ११९ ] कालाट्ठञ् [ ४ । ३ । ११ ] इत्येतद्भवति विप्रतिषेधेन । छस्यावकाशः—शालीयः मालीयः । ओर्देशे ठञ्भवतीत्य-

प्र०—न वेति । यदुक्तं तेभ्यश्छञ्ञिठाविति तन्निराकरोति । अव्ययादिलक्षणानां प्रत्ययानां परत्वाच्छेन बाधितानां छापवादैष्ठञादिभिरुत्कृष्टबलैः सह संप्रधारणा नास्तीत्यर्थः । अञं बाधत इति । उदीच्यग्रामलक्षणमित्यर्थः । तस्मादिति । 'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादकोपधा'दिति वक्तव्यमित्यर्थः । भाष्यकारो विप्रतिषेधं समर्थयितुमाह—न वक्तव्य इति । दाक्षिकर्षुक इति । दाक्षिकर्षूर्नाम वाहीकग्रामः । 'तत्र भव' इति ठञ् । 'इसुसुक्तान्तात्कः' 'केऽण' इति ह्रस्वः ।

उ०—छापवादैरिति । 'वाहीकग्रामेभ्यश्चे'त्यत्र वृद्धादित्यनुवृत्तेरिति भावः । ठञादिभिरिति । आदिना ञिठः । बहुवचनं प्रयोगबहुत्वाभिप्रायम् । भाष्ये—कोपधादणः पुनरिति । पूर्ववार्त्तिकोक्तो यः कोपधा—णछयोर्विप्रतिषेध 'औलूकीय' इत्येतद्विषयः, तत्खण्डकमिदम् । तदाह—अयञ्चापीति । तदपवादम्—अणपवादम् । उदीच्यग्रामलक्षणमिति । 'प्रस्थोत्तरपदेति कोपधलक्षणाणि'ति शेषः । अपवादत्वाच्च सोऽञो बाधकः, तत्र 'उदीच्यग्रामाच्चे'ति सम्पूर्णसूत्रानुवृत्तेरिति भावः । वक्तव्यमित्यर्थ इति । एवं हि अञि प्रतिषिद्धे यो यतः प्राप्नोति स ततो भविष्यतीति छः सिद्ध इत्यर्थः । वृद्धत्वं दर्शयितुमाह—

* प्राग्दीव्यतोऽण् ४ । १ । ८३ । † उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ४ । २ । १०९ ।

स्यावकाशः—निषादकर्षूर्नाम देशः—नैषादकर्षुकः । इहोभयं प्राप्नोति—दाक्षिकर्षुकः ॥ कालाट्ठञ्भवतीत्यस्यावकाशः—आर्धमासिकम् सांवत्सरिकम् । छस्य स एव । मासादुभयं प्राप्नोति—मासिकम् ।

## नक्षत्रादण् ॥ ८ ॥

नक्षत्रादण् छाद्भवति विप्रतिषेधेन‡ । अणोऽवकाशः—तैषः पौषः । छस्य स एव । स्वातेरुभयं प्राप्नोति—सौवातः ।

## अव्ययात्त्यप्ट्युट्युलौ ॥ ९ ॥

अव्ययाट्ट्युट्युलौ छाद्भवतो विप्रतिषेधेन§ । ट्युट्युलोरवकाशः—दोषातनम् दिवातनम् । छस्य स एव । प्रातःशब्दादुभयं प्राप्नोति—प्रातस्तनम् ।

## शरीरावयवाद्यत् ॥ १० ॥

शरीरावयवाद्यच्छाद्भवति विप्रतिषेधेन¶ । यतोऽवकाशः—दन्त्यम् ओष्ठ्यम् । छस्य स एव । पादशब्दादुभयं प्राप्नोति—पद्यम्+ ।

## वर्गान्ताच्चाशब्दे यत्खौ ॥ ११ ॥

वर्गान्ताच्चाशब्दे यत्खौ छाद्भवतो विप्रतिषेधेन* । यत्खयोरवकाशः—अक्रूरवर्ग्यः अक्रूरवर्गीणः । छस्य स एव । वासुदेववर्गादुभयं प्राप्नोति—वासुदेववर्ग्यः वासुदेववर्गीणः ।

प्र०—सौवात इति । अतेः सुपूर्वा'दज्यतिभ्या'मितीण्प्रत्ययः । स्वातिना युक्तः काल इत्यण् । तस्य 'लुबविशेषे'इति लुप् । स्वातौ भव इति सन्धिवेलादिसूत्रेणाण् । जातेऽर्थे तु लुका भाव्यं 'श्रविष्ठाफल्गुनी'त्यादिना । पद्यमिति । 'पद्यत्यतदर्थे' इति पद्भावः । अक्रूरवर्ग्य इति । अक्रूरो

उ०—दाक्षिकर्षूरिति । अत्रास्य ठञोऽवकाशप्रदर्शनभाष्ये "[1]निषादकर्षू"रिति पाठः । एतदुत्तरभाष्ये 'नक्षत्रादण्छात्परत्वात्', 'ट्यट्युलौ च छात्परत्वा'दिति विप्रतिषेधद्वयमुक्तं, तदेकदेश्युक्तिः, परत्वेन छबाधकठञपवादतयोत्कृष्टबलानामणादीनां दुर्बलेन छेन सम्प्रधारणाया अयोगात् । तद्विधावपि कालादिति वर्तत इति वृत्त्यनुसारिणः । वस्तुतस्तु ठञपवादत्वेऽपि परस्परपरिहारेण चारितार्थ्यस्यैव सम्प्रधारणा-

१—'निषादकर्षू'रिति नागेश संमतः पाठः । कीलहार्नपाठस्तु 'निषाहकर्षू नैषाहकर्षुकः'' इति ।
‡ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ४ । ३ । १६ । § सायंचिरं प्राह्णेप्रगेऽव्ययेभ्य-ष्ट्युट्युलौ तुट् च ४ । ३ । २३ । ¶ शरीरावयवाच्च ४ । ३ । ५५ । + पद्यत्यतदर्थे ६।३।५३।
* वर्गान्ताच्च; अशब्दे यत्खावन्यतरस्याम् ४ । ३ । ६३; ६४ ।

## बह्वचोऽन्तोदात्ताट्ठञ् ॥ १२ ॥

'बह्वचोऽन्तोदात्ताट्ठञ्' [ ४ । ३ । ६७ ] छाद्भवति विप्रतिषेधेन । ठञोऽवकाशः—नतानत—नातानतिकः । छस्य स एव । सामस्तादुभयं प्राप्नोति—सामस्तिकः ।

## आयस्थानेभ्यष्ठक् ॥ १३ ॥

आयस्थानेभ्यष्ठक् छाद्भवति विप्रतिषेधेन† । ठकोऽवकाशः—शौल्किकम् गौल्मिकम् । छस्य स एव । आपणादुभयं प्राप्नोति—आपणिकम् ।

## विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ १४ ॥

'विद्यायोनिसम्बन्धेभ्यो वुञ्' [ ४ । ३ । ७७ ] छाद्भवति विप्रतिषेधेन । वुञोऽवकाशः—औपाध्यायकम् पैतामहकम् । छस्य स एव । इहोभयं प्राप्नोति—आचार्यकम् मातुलकम् ।

## ऋतष्ठञ् ॥ १५ ॥

'ऋतष्ठञ्' [ ४ । ३ । ७८ ] छाद्भवति विप्रतिषेधेन । ठञोऽवकाशः—हौतृकम् स्वासृकम् । छस्य स एव । इहोभयं प्राप्नोति—शास्तृकम् भ्रातृकम् ।

## रूप्यमयटौ ॥ १६ ॥

रूप्यमयटौ छाद्भवतो विप्रतिषेधेन‡ । रूप्यमयटोरवकाशः—देवदत्तरूप्यम् देवदत्तमयम् । छस्य स एव । वायुदत्तादुभयं प्राप्नोति—वायुदत्तरूप्यम् वायुदत्तमयम् ।

प्र०—नाम क्षत्रियः भगवान् वासुदेवो वा । नातानतिक इति । नतोऽनुदात्तः । अनत उदात्तः । ततो द्वन्द्वः । समासस्वरेणान्तोदात्तः । सामस्तं नाम शास्त्रम् । आपणिकमिति । आपणादागतमिति ठक् । स्वासृकमिति । उणादीनां कचिद्व्युत्पत्तिकार्याभावात् । 'न य्वाभ्या'मिति न प्रवर्तते । शास्तृकमिति । शासेस्तृ स्तृचौ । 'शंसिक्षदादिभ्यः संज्ञायां चानिटा'विति

उ०—बीजत्वेन भाष्यासङ्गत्यभाव इति दिक् ॥ अविष्ठेति । तत्र सूत्रे 'स्वातितिष्ये'ति ह्रस्वान्तः पाठ इति भावः । वासुदेवो वेति । 'अक्रूरः पेशलो दक्ष' इति सहस्रनामसु पाठादिति भावः । अनत उदात्त इति । तत्तत्प्रतिपादकशास्त्रञ्च नतानतशब्दाभ्यामुच्यते, 'तस्य व्याख्यान'

† ठगायस्थानेभ्यः ४ । ३ । ७५ । ‡ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः; मयट् च ४ । ३ । ८१; ८२ ।

## अचित्ताट्ठक् ॥ १७ ॥

अचित्ताट्ठक् छाद्भवति विप्रतिषेधेन§ । ठकोऽवकाशः—आपूपिकः शाष्कुलिकः मौदकिकः । छस्य स एव । पायसादुभयं प्राप्नोति—पायसिकः ।

## गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ १८ ॥

'गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्' [ ४ । ३ । ९९ ] छाद्भवति विप्रतिषेधेन । वुञोऽवकाशः—ग्लौचुकायनकः त्रैगर्तकः । छस्य स एव । इहोभयं प्राप्नोति—गार्गकः वात्सकः मालवकः ।

## णिनिरन्तेवासिब्राह्मणेभ्यः ॥ १९ ॥

णिनिरन्तेवासिब्राह्मणेभ्यश्छाद्भवति विप्रतिषेधेन* । णिनेरवकाशः—हारिद्रविणः तौम्बुरविणः भाल्लविनः । छस्य स एव । इहोभयं प्राप्नोति—आरुणिनः शाट्यायनिनः ।

## पत्त्रपूर्वादञ् ॥ २० ॥

'पत्त्रपूर्वादञ्' [ ४ । ३ । १२२ ] छाद्भवति विप्रतिषेधेन । अञोऽवकाशः—उष्ट्र—औष्ट्रम्† औष्ट्ररथम् । छस्य स एव । इहोभयं प्राप्नोति—वामी—वामम् वामीरथम् ।

प्र०—तृन्प्रत्ययः । पायसिक इति । पयसि संस्कृत इत्यण् । ततष्ठक् । गार्गक इति । गार्ग्यो भक्तिरस्येति वुञ् । आपत्यस्येति यलोपः । मालवक इति । मालवस्यापत्यम् । 'वृद्धेत्कोसले'ति ञ्यङ् । पूर्ववद्वुञ्यलोपौ ।

भाल्लविन इति । भल्लुना प्रोक्तमधीयत इति 'पुराणप्रोक्ते'ष्विति णिनिः । तदन्तादध्येतर्यण् । तस्य 'प्रोक्ताल्लु'गिति लुक् । आरुणिन इति । अरुणिर्वैशम्पायनान्तेवासी । तेन प्रोक्तं छन्दोऽधीयत इति णिनिः । शाट्यायनिन इति । शटस्यापत्यं शाट्यः । तस्यापत्यं युवा । 'यञिञोश्चे'ति फक् । शाट्यायनेन प्रोक्तं ब्राह्मणमधीयत इत्यर्थविवक्षायां यूनि लुक् । 'फक्फिञोरन्यतरस्या'मिति पक्षे लुगभावः । 'पुराणप्रोक्ते'ष्विति णिनिः । औष्ट्ररथमिति । 'रथाद्यत्पत्त्रपूर्वा'दित्यञ् । वामीति । वामी—वडवा, तस्या वाह्यमिति पत्त्राध्वर्यिवित्यञ् ।

उ०—इत्यधिकारे 'बह्वचोऽन्तोदात्ता'दित्यस्य पाठात् । ततष्ठगिति । 'भक्ति'रित्यधिकारे 'अचित्तादेशकालाट्ठ'गित्यनेनेति भावः । मालवः-क्षत्रियः । हरिद्रुतुम्बुर्वो:-वैशम्पायनान्तेवासित्वेऽपि भल्लोस्तत्त्वाभावादाह-भल्लुनेति । णिनिद्वयस्यापि विप्रतिषेधो भाष्य उक्तः, 'अन्तेवासिब्राह्मणेभ्य' इत्युक्तेः । ब्राह्मणेभ्य इत्यस्य—ब्राह्मणबोधकप्रत्ययप्रकृतिभ्य इत्यर्थः । भाष्ये—पत्त्रपूर्वादञित्यनेन—'पत्त्रपूर्वादञ्' 'पत्त्राध्वर्युपरिषदश्चे'त्युभ-

§ अचित्तादेशकालाट्ठक् ४ । ३ । ९६ ।

* कलापिवैशम्पायनान्तेवासिभ्यश्च; पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ४ । ३ । १०४; १०५ ।

† पत्त्राध्वर्युपरिषदश्च ४ । ३ । १२३ ।

## द्वन्द्वाद्वुन्वैरमैथुनिकयोः ॥ २१ ॥

'द्वन्द्वाद्वुन्वैरमैथुनिकयोः' [ ४ । ३ । १२५ ] छाद्भवति विप्रतिषेधेन । वुनोऽवकाशः—अहिनकुलिका । छस्य स एव । इहोभयं प्राप्नोति—काकोलूकिका श्वावराहिका‡ ।

## गोत्रचरणाद्वुञ् ॥ २२ ॥

'गोत्रचरणाद्वुञ्' [ ४ । ३ । १२६ ] छाद्भवति विप्रतिषेधेन । वुञोऽवकाशः—ग्लौचुकायनकम् म्लौचुकायनकम् । काठकम् कालापकम् । छस्य स एव । इहोभयं प्राप्नोति—गार्गकम् वात्सकम् । मौदकम् पैप्पलादकम् ।

## कण्वादीञोऽणिवधेः ॥ २३ ॥

'कण्वादिभ्योऽणभवति' 'इञोऽणभवती'त्येतस्माद्वुञ्भवति विप्रतिषेधेन§ । 'कण्वादिभ्योऽणभवति' 'इञोऽणभवती'त्यस्यावकाशः—काण्वा दण्डमाणवाः । दाक्षा दण्डमाणवाः¶ । वुञः स एव । इहोभयं प्राप्नोति—काण्वकम् दाक्षकम् ।

## ठञ्ञिठाभ्यामोर्देशे ठञ् ॥ २४ ॥

ठञ्ञिठाभ्याम् 'ओर्देशे ठञ्' [ ४ । २ । ११९ ] इत्येतद्भवति विप्रतिषे-

प्र०—श्वावराहिकेति । श्वा च वराहश्चेति द्वन्द्वः । 'येषां च विरोध' इत्येकवद्भावः । शुनोदन्तदंष्ट्रे'ति दीर्घः । ततो वैरे वुन् । काण्वा इति । काण्व्यो गर्गादियञन्तः । तस्य 'दण्डमाणवा'

उ०—योरपि ग्रहणं, द्वयोरप्युदाहरणात् ॥ श्वावराहस्य वृद्धत्वमुपपादयति—श्वा चेति । शुनो दन्तेति । 'अन्येषामपि दृश्यते' इत्येतत्प्रपञ्चभूताभियुक्तोक्तिरियम् । भाष्ये—मौदकमिति । मौदपैप्पलादौ शाखाध्येतृवाचिनौ । ननु कण्वाद्यणश्छस्येव वुञोऽप्यपवादत्वात्कथं विप्रतिषेधोऽत आह—पुरस्तादिति । भाष्ये—ठञ्ञिठाभ्यामिति । 'काश्यादिभ्यष्ठञ्ञिठौ' 'वाहीकग्रामेभ्यश्चे'ति विहिताविस्यर्थः । कारतन्तवनापितवास्तू वाहीकग्रामौ ।

कठञोरपीति । 'ओर्देशे' इति ठञ् । भाष्ये कालाट्ठञ्तु वार्तिकोच्चारणप्रसङ्गेनोक्तः । ननु 'ओर्देशे' इत्यत्र 'वृद्धा'दित्यस्य निवृत्तावपि वृद्धाच्चावृद्धाच्च तेनैव तत्सिद्धौ 'वृद्धात्प्राचा'मिति व्यर्थमत आह—

‡ अन्येषामपि दृश्यते ६ । ३ । १३७ ।

§ कण्वादिभ्यो गोत्रे; इञश्च ४ । २ । १११; ११२; गोत्रचरणाद् वुञ् ४ । ३ । १२६ ।

¶ न दण्डमाणवान्तेवासिषु ४ । ३ । १३० ।

धेन ×। ठञ्ञिठयोरवकाशः—कारतन्तविकी कारतन्तविका। 'ओर्देशे ठञ्भवती'-त्यस्यावकाशः—निषादकर्षू—नैषादकर्षुकः। इहोभयं प्राप्नोति—नापितवास्तुकः। ठञ् भवति विप्रतिषेधेन।

न वा ठञोऽनवकाशत्वात् ॥ २५ ॥

न वार्थो विप्रतिषेधेन। किं कारणम्? 'ठञोऽनवकाशत्वात्'। अनवकाशष्ठञ् ठञ्ञिठौ बाधिष्यते। ननु चेदानीमेवावकाशः प्रक्लृप्तः—यदवृद्धमनुवर्णान्तं वाहीकग्रामः स ठञ्ञिठयोरवकाशः। यदवृद्धमुवर्णान्तमवाहीकग्रामः स ठञोऽवकाशः। यदवृद्धमुवर्णान्तं वाहीकग्रामश्च तस्मादुभयं प्राप्नोति।

एवं तर्हि नायमस्य विप्रतिषेधस्योपालम्भः। कस्य तर्हि? 'छादोर्देशे कालाद्व'ञित्येतस्य। ननु च तत्राप्यवकाशः प्रक्लृप्तः—यद्वृद्धमनुवर्णान्तं स च्छस्यावकाशः। यदवृद्धमुवर्णान्तं स ठञोऽवकाशः। यद्वृद्धमुवर्णान्तं देशश्च तस्मादुभयं प्राप्नोति। एवं तर्हि 'वृद्धात्प्राचाम्' [ ४। २। १२० ] इत्यनेन वृद्धग्रहणेन किं क्रियते? यावद्ब्रूयात्पूर्वस्मिन् योगे वृद्धाच्चावृद्धाच्चेति। यदेतस्मिन् योगे वृद्धग्रहणं तदनवकाशं तस्यानवकाशत्वादयुक्तो विप्रतिषेधः।

योपधप्रस्थादीनां वुञ् ॥ २६ ॥

योपधप्रस्थादीनां वुञ्ठञ्ञिठाभ्यां भवति विप्रतिषेधेन*। योपधाद्वुञ्भवती-

---

प्र०—इत्यण्। वुञत्र 'न दण्डमाणवान्तेवासि'ष्विति निषिद्धः। 'पुरस्तादपवादा' इति न्यायेनाण् छं बाधते न वुञमिति विप्रतिषेधो युक्तः।

एवं तर्हीति—छठञोरपि विप्रतिषेधो नास्तीति दर्शयति। 'वृद्धात्प्राचा'मिति ठञो विशेषविहितत्वादित्यर्थः। यावद्ब्रूयादिति। यदि वृद्धाच्छ इत्यतो वृद्धग्रहणमोर्देशे इत्यत्रानुवर्त्तेत तदा 'वृद्धा'-त्प्राचा'मिति सूत्रं न कुर्यात्। एतद्धि नियमार्थं कृतं प्राग्देशवाचिनो वृद्धादेव यथा स्यादवृद्धान्मा भूत्' माल्लवास्तव इति। न च वृद्धग्रहणानुवृत्ताववृद्धात्प्राप्तिष्ठञोऽस्तीति किं नियमार्थेन सूत्रेणेत्यर्थः।

---

उ०—तर्हीति। वृद्धात्प्राचामिति ठञ इति। एतत्सामर्थ्येन 'ओर्देशे ठ'ञित्यनेन वृद्धाट्ठञो विशेषविहितत्वानुमानादित्यर्थः। माल्लवास्तव इति। मल्लवास्तुः—प्रकृतिः। न चेति। एवञ्च तत्सामर्थ्यात्पूर्वसूत्रेण वृद्धेष्वपि विधानानुमानात्तस्यानवकाशत्वेनैव बाधकत्वोपपत्तेर्विप्रतिषेधोऽयुक्त इत्यर्थः।

---

× वाहीकग्रामेभ्यश्च ४। २। ११७।

१—'कारन्तविकी कारन्तविका' पा०। २—'निषाहकर्षू नैषाहकर्षुकः' पा०।

* धन्वयोपधाद् वुञ्; प्रस्थपुरवहान्ताच्च; वाहीकग्रामेभ्यश्च ४। २। १२१; १२२; ११७

त्यस्यावकाशः—साङ्काश्य—साङ्काश्यकः । [ [1]काम्पिल्यकः । ] ठञ्ञिठयोः स एव । दास[2]रूप्यं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति—दासरूप्यकः ।

'प्रस्थान्ताद्वुञ्भवती'त्यस्यावकाशः—मालाप्रस्थ—मालाप्रस्थकः । ठञ्ञिठयोः स एव । पातानप्रस्थं[3] नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति—पातानप्रस्थकः ।

'पुरान्ताद्वुञ्भवती'त्यस्यावकाशः—काञ्चीपुर—काञ्चीपुरकः । ठञ्ञिठयोः स एव । नान्दीपुरं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति—नान्दीपुरकः ।

'वहान्ताद्वुञ्भवती'त्यस्यावकाशः—वातवह-वातवहकः । ठञ्ञिठयोः स एव । कौक्कुडीवहं[4] नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति—कौक्कुडीवहकः ।

## ओश्च ठञः ॥ २७ ॥

ओश्च ठञो वुञ् भवति विप्रतिषेधेन* । ओष्ठञोऽवकाशः—नैषादकर्षुकः[5] । वुञः स एव । आप्रीतमायो[6]रुभयं प्राप्नोति—आप्रीतमायवकः ।

## जनपदानामकाणौ ॥ २८ ॥

जनपदानामकाणावोष्ठञो भवतो विप्रतिषेधेन† । अकस्यावकाशः—अङ्गाः—आङ्गकः । ओष्ठञः स एव । जिह्नवो नाम जनपदस्तस्मादुभयं प्राप्नोति—जैह्नवकः ॥ अणोऽवकाशः—ऋषिक—आर्षिकः । ओष्ठञः स एव । इक्ष्वाकवो नाम जनपदस्तस्मादुभयं प्राप्नोति—ऐक्ष्वाकः ।

## न वा वुञपवादत्वादणः ॥ २९ ॥

न वार्थो विप्रतिषेधेन । किं कारणम् ? 'वुञपवादत्वादणः' । वुञपवादोऽण्, वुञ् चोष्ठञं बाधिष्यते ।

## कोपधादणोऽकान्ताच्छः ॥ ३० ॥

प्र०—वुञ्श्चेति । परत्वादिति भावः । कोपधादण् इति ॥ जनपदवाचिनः कोपधाद्योऽणित्र-

उ०—भाष्ये—अकाणाविति । 'अवृद्धादपि बहुवचनविषया'दित्यकः । 'कोपधाद'णित्यण् । न वार्थो विप्रतिषेधेनेति । 'ओष्ठञणो'रिति शेषः । 'कोपधादणोऽकान्ताच्छ' इति भाष्ये पाठः ।

१–क्वचिन्न । २– 'दाशरूप्यं' पा० । ३–'पातालप्रस्थं' पा० ।
४–'कौक्कुटीवहं' 'कौक्कुटीवहकः' पा० ।
* ओर्देशे ठञ्; धन्वयोपधाद् वुञ् ४ । २ । ११९; १२१ ५–'नैषाहकर्षुकः' पा० । ६–'आप्रीतिमायोरुभयं' पा० ।
† अवृद्धादपि बहुवचनविषयात्; कोपधादण्; ओर्देशे ठञ् ४ । २ । १२५; १३२; ११९

'कोपधादण्भवती'त्येतस्मादकान्ताच्छो भवति विप्रतिषेधेन‡ । 'कोपधादण्भवती'त्यस्यावकाशः–निलीनक–नैलीनकः । अकान्ताच्छो भवतीत्यवकाशः-आरीहणक-आरीहणकीयः§ । ब्राह्मणको¶ नाम जनपदस्तस्मादुभयं प्राप्नोति—ब्राह्मणकीयः ।

धन्ववुञश्च ॥ ३१ ॥

धन्ववुञश्च च्छो* भवति विप्रतिषेधेन । 'धन्वनो वुञ्भवती'त्यस्यावकाशः—पारेधन्व–पारेधन्वकः । छस्य स एव । आष्टकं नाम धन्व तस्मादुभयं प्राप्नोति–आष्टकीयः ।

न वा छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् ॥ ३२ ॥

न वार्थो विप्रतिषेधेन । किं कारणम् ? 'छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम्' । सिद्धोऽत्र च्छो 'वृद्धाच्छः' [ ४ । २ । ११४ ] इत्येव । तस्य पुनर्वचन एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैवान्यांस्तदपवादान्बाधत एवमिममपि बाधिष्यते ॥ १०४ ॥

प्र०—धीयते तस्मादित्यर्थः । आरीहणकमिति । आरीहणेन निवृत्तमिति 'वुञ्छण्कठ'जिति वुञ् । अयं च न जनपदवाचीति कोपधादणो न विषयः । ब्राह्मणक इति । 'ब्राह्मणकोष्णिके संज्ञाया'-मित्यत्र ब्राह्मणा आयुधजीविनो यत्र देशे तस्मिन्नर्थे ब्राह्मणकशब्दो निपातितः ।

धन्ववुञ इति । धन्वशब्दो मरुदेशवाची । पारेधन्वेति । धन्वनः पारमिति 'पारे मध्ये षष्ठ्या वे'त्यव्ययीभाव । 'अनश्च' 'नपुंसकादन्यतरस्या'मिति पक्षे टच्समासान्तः ।

आष्टकीय इति । 'वृद्धादकेकान्ते'ति च्छः । येऽन्य इति । वुञादयः । स यथैवेति । ततश्चापवादत्वादेव छो बाधको न तु परत्वादित्यर्थः ॥ १०४ ॥

उ०—ननु 'प्रस्थोत्तरे'ति विहितकोपधाणो वृद्धाच्छः परस्तस्यापि जनपदवुञ्बाधकः, ततोऽपि परो 'वृद्धादके' इति सिद्धमेत्र तद्बाधकत्वमिति किमनेन वार्त्तिकेनेत्यत आह—जनपदवाचिन इति । 'कोपधाद'णिति स्वतन्त्रसूत्रेणेति भावः । ब्राह्मणकीये 'वृद्धादकेकान्ते'ति छः । 'पारेधन्व'शब्दो मरुदेशविशेषवाची । अत्र भाष्ये 'पारेधन्व'मिति पाठः । क्वचित् 'पारेधन्वे'ति, तदुभयसिद्धये आह—पक्षे ठमिति । 'अनश्चे'ति त्वनुवृत्तिप्रदर्शनार्थम् ॥ १०४ ॥

‡ कोपधादण् ; वृद्धादकेकान्तखोपधात् ४ । २ । १३२; १४१

§ वुञ्छण्कठजिल..............कुमुदादिभ्यः ४ । २ । ८०

¶ ब्राह्मणकोष्णिके संज्ञायाम् ५ । २ । ७१ * धन्वयोपधाद् वुञ् ४ । २ । १२१

## जनपदतदवध्योश्च ॥ ४ । २ । १२४ ॥

### जनपदतदवध्योर्वुञ्विधानेऽवयवमात्रात्प्रसङ्गः ॥ १ ॥

जनपदतदवध्योर्वुञो विधानेऽवयवमात्रात्प्राप्नोति । मौञ्जो नाम वाहीकेषु ग्रामस्तस्मिन्भवो मौञ्जीयः ॥ एवं तर्हि जनपदादेव जनपदावधेः ।

### जनपदादिति चेद्वचनानर्थक्यम् ॥ २ ॥

जनपदादिति चेदवधिग्रहणमनर्थकम् । सिद्धं 'जनपदा'दित्येव ।

इदं तर्हि प्रयोजनं जनपदाज्जनपदावधेर्वुञेव यथा स्याद्, यदन्यत्प्राप्नोति तन्मा भूदिति । किं चान्यत्प्राप्नोति ? छः । 'गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ्पूर्वविप्रतिषिद्ध'मिति वक्ष्यति* स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥ १२४ ॥

## अरण्यान्मनुष्ये ॥ ४ । २ । १२६ ॥

अत्यल्पमिदमुच्यते मनुष्य इति । पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् । आरण्यकः पन्थाः । आरण्यकोऽध्यायः । आरण्यको न्यायः ।

---

प्र०—जनपद । तस्यावधिस्तदवधिरिति षष्ठीसमासाश्रयेण चोदयति—जनपदेति । अवयवमात्रादिति । यो जनपदस्यावधिः—सीमा—अजनपदोऽपि तस्मादपि प्राप्नोति विशेषानुपादानादित्यर्थः । मौञ्जो नाम वाहीकेष्विति । सामीपिकमिदमधिकरणम् । तेन 'वाहीकग्रामेभ्य' इति ठञ्ञिठौ न भवतः । एवं तर्हीति । स चासाववधिस्तदवधिरिति कर्मधारय आश्रीयत इत्यर्थः । कस्यासाववधिरिति चेत्प्रत्यासत्त्या जनपदस्येति विज्ञायते । वुञेवेति । त्रिगर्त्तेषु भवस्त्रैगर्तक इत्यत्रेत्यर्थः ॥ १२४ ॥

---

जनपदतद । ननु 'तदवधि'रिति लाघवात्कर्मधारयस्तत्कथमिदं चोद्यमत आह—तस्यावधिरिति । ननु जनपदावयवस्य जनपदत्वाभावात्कथमवयवमात्राप्राप्तिरत आह—यो जनपदस्येति । तदवधिपदांश एव पूर्वपक्ष इति भावः । ननु वाहीकग्रामः कथं तस्य जनपदस्यावधिः, तत्त्वेऽपि वा ठञ्ञिठौ युक्ताविति—मौञ्जीय इत्ययुक्तमत आह—सामीपिकमिति । एवं च वाहीकसमीपः स ग्रामो वाहीकरूपजनपदस्यावधिश्चेति भावः । भाष्ये—अवयवमात्रादित्यस्यावधिभूतजनपदावयवमात्रात्सीमाग्रामादेरपीत्यर्थः ॥ १२४ ॥

---

* ४ । २ । १३७ वा० १ पृ० ६८६ १–'जहां बलवान् कमजोर को निगल जाता है । इस स्थिति को भाष्यकार ने 'आरण्यक न्याय' कहा है ।' (पतञ्जलिकालीन भारत पृ० ३६३, अग्निहोत्री कृत)

आरण्यको विहारः । आरण्यको मनुष्यः । आरण्यको हस्ती ।

वा[1] गोमयेष्विति वक्तव्यम् । आरण्यका गोमयाः । आरण्या[2] गोमयाः ॥१२९॥

## विभाषा कुरुयुगन्धराभ्याम् ॥ ४ । २ । १३० ॥

### कुरुयुगन्धरेभ्यो वाव्रचनान्मनुष्यतत्स्थयोर्वुञ्विधानम् ॥ १ ॥

कुरुयुगन्धरेभ्यो वाव्रचनात् 'मनुष्यतत्स्थयोर्वुञ्' [ ४ । २ । १३४ ] इत्येतद्भवति विप्रतिषेधेन । कुरुयुगन्धरेभ्यो वाव्रचनस्यावकाशः—कौरवः कौरवकः । यौगन्धरः यौगन्धरकः । 'मनुष्यतत्स्थयोर्वुञ्भवती'त्यस्यावकाशः–अन्ये कच्छादयः । काच्छको मनुष्यः । काच्छकमस्येङ्गितम्[3] जल्पितम् हसितम् स्मितम् । इहोभयं प्राप्नोति–कौरवको मनुष्यः । कौरवकमस्येङ्गितम्[3] जल्पितम् हसितम् स्मितम् । वुञ्भवति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः । न हि कुरुशब्दस्यान्ये कच्छादयोऽवकाशः[4] । कुरुशब्दस्य यः कच्छादिषु पाठः सोऽनवकाशः ।

न खल्वपि कुरुशब्दो विभाषां प्रयोजयति । अनेन वुञ् कच्छादि[5]पाठादण्भविष्यति* । सैषा युगन्धरार्था विभाषा ॥ १३० ॥

प्र०—विभाषा । अन्ये कच्छादय इति । समुदाये कार्यं विधीयमानं केषुचिदप्यवयवेषु प्रवर्तमानं सावकाशमेवेति मन्यते । न हीति । सर्व एवावयवास्तत्र कार्यित्वेन निर्दिष्टा इति भावः । सैषेति । ननु युगन्धरशब्दादप्यवृद्धादपीति नित्ये वुञि सिद्धेऽन्तरेणापि विभाषाग्रहणं विकल्पो विज्ञास्यते । नैतदस्ति । युगन्धरान्नित्यो वुञ् । अवृद्धादपीत्यनेन तु विभाषेत्येवमपि विज्ञायेत । तस्माद्विभाषाग्रहणं कर्तव्यमेव ॥ १३० ॥

उ०—विभाषा कुरु । आभ्यां वुञित्यर्थः । 'मनुष्यतत्स्थयो'रिति नित्यो वुञ् । ननु कुरोस्तत्र पाठो व्यर्थोऽत आह–समुदाये इति । भाष्ये–न खल्वपीति । विकल्पस्य कुरुग्रहणमात्रेण सिद्धेरिति भावः । एवञ्चामनुष्यतत्स्थयोरनेन वुञ्, कच्छादिपाठादण्, तयोस्तु कच्छाद्यणं बाधित्वा वुञेवेति विप्रतिषेधोऽनर्थक इति भावः ॥ १३० ॥

1–इतः पूर्वं 'वा गोमयेषु' इति वार्तिकं क्वचित् ।　२–'आरणा' इति प्रसिद्धा लोके ।
३–'मस्येङ्गितम्' पा० ।　४–'अवकाशः' पा० ।
५–'कच्छादिषु पाठात्' पा० ।　* कच्छादिभ्यश्च ४ । २ । १३३ ।

## कच्छादिभ्यश्च ॥ ४ । २ । १३३ ॥

किमर्थं साल्वानां कच्छादिषु पाठः क्रियते ?

**साल्वानां कच्छादिषु पाठोऽणविधानार्थः ॥ १ ॥**

साल्वानां कच्छादिषु पाठोऽणविधानार्थः क्रियते । अण्यथा स्याद् वुञ् मा भूदिति† ।

**न वापदातिगोयवागूग्रहणमवधारणार्थम् ॥ २ ॥**

न वैतत् प्रयोजनमस्ति । किं कारणम् ? अपदातिगोयवागूग्रहणमवधारणार्थं भविष्यति‡—'अपदातावेव साल्वात्', 'गोयवाग्वोरेव च साल्वा'दिति ॥ १३३ ॥

## गर्तोत्तरपदाच्छः ॥ ४ । २ । १३७ ॥

**गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ्पूर्वविप्रतिषिद्धम् ॥ १ ॥**

गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ्भवति पूर्वविप्रतिषेधेन* । गर्तोत्तरपदाच्छो भवतीत्यस्यावकाशः—श्वाविद्गर्त—श्वाविद्गर्तीयः । वुञोऽवकाशः—अङ्गाः—आङ्गकः । इहोभयं प्राप्नोति—त्रैगर्तकः । वुञ्भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । उक्तमेवावधिग्रहणस्य प्रयोजनं 'जनपदाज्जनपदावधेर्वुञेव यथा स्याद्, यदन्यत्प्राप्नोति तन्मा भू'दिति+ ॥ १३७ ॥

---

प्र०—कच्छा । साल्वशब्दो गणे पठ्यते तस्य प्रत्याख्यानायाह—न वेति । 'जनपदतदवध्यो'रिति वुञि सिद्धे'ऽपदातौ साल्वाद्गोयवाग्वोश्चे'ति वुञो नियमादन्यत्राण् भविष्यतीत्यर्थः । ननु वुञभावे छः प्राप्नोति न त्वणिति चिन्त्यमेतत् ॥ १३३ ॥

गर्तोत्तर । श्वाविद्गर्तीय इति । श्वानं विध्यतीति क्विप् । 'नहिवृती'ति दीर्घः । श्वाविधां गर्त इति समासः ॥ १३७ ॥

---

उ०—कच्छा । साल्वशब्द इति । 'साल्वाना'मिति भाष्ये बहुवचनं तु अर्थगतबहुत्वस्य शब्द आरोपाद्बोध्यम् । साल्वानां वाचकस्य किमर्थः पाठ इति वार्थः । वुञभावे छ इति । वृद्धत्वादिति भावः । 'अपदाता'विति सूत्रेऽणमनुवर्त्य वाक्यभेदेन तद्व्यतिरिक्तेऽर्थेऽणविधानमिति भाष्यतात्पर्यमाहुः ॥ १३३ ॥

---

† जनपदतदवध्योश्च ४ । २ । १२४ ‡ अपदातौ साल्वात्; गोयवाग्वोश्च ४।२।१२५; १३६
१—'पूर्वं' इति क्वचिन्न । * जनपदतदवध्योश्च; अवृद्धादपि बहुवचनविषयात् ४ । २ । १२४; १२५ । + ४ । २ । १२४ वा० २ भाष्ये पृ० ६८४ पं० ७

## गहादिभ्यश्च ॥ ४ । २ । १३८ ॥

### गहादिषु पृथिवीमध्यस्य मध्यमभावः ॥ १ ॥

गहादिषु पृथिवीमध्यस्य मध्यमभावो वक्तव्यः । पृथिवीमध्ये भवो मध्यमीयः ।

### चरणसम्बन्धेन निवासलक्षणोऽण् ॥ २ ॥

चरणसम्बन्धेन निवासलक्षणोऽण् वक्तव्यः । त्रयः प्राच्याः* । त्रय उदीच्याः† । त्रयो माध्यमाः‡ । सर्वे निवासलक्षणाः ॥ १३८ ॥

## वृद्धादकेकान्तखोपधात् ॥ ४ । २ । १४१ ॥

'ईकान्तादपी'ति वक्तव्यम् । इहापि यथा स्यात्—ऐणीकीयः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

प्र०—गहादि । 'मध्यो मध्यमं चाण् चरणे' इति गणपाठस्तं विशेषेऽवस्थापयितुमाह—गहादिष्विति । पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यो न तु मध्यान्तरवाचीत्यर्थः । चरणसम्बन्धेनेति । पृथिवीमध्यं निवास एषां चरणानामित्यत्रार्थे माध्यमाश्चरणा इति भवतीत्यर्थः । चरणाः—कठादयः । निवासलक्षण इति । 'सोऽस्य निवास' इत्यत्रार्थ इत्यर्थः ॥ १३८ ॥

उ०—गहादि । ननु पृथिवीमध्यस्य प्रकृतित्वे तद्घटकमध्यशब्दस्य मध्यमादेशेऽपि 'मध्यमीय' इत्यसङ्गतमत आह—वाच्येवेति । गहादिषु पृथिवीमध्यवाची 'मध्य'शब्दो ग्राह्यः, तस्य च मध्यमादेश इति वार्तिकार्थः । अन्ये तु—गणसूत्रमनार्षम्, पृथिवीमध्यशब्दस्यैव मध्यमादेश इत्याहुः । प्राङ्निवासो येषाम्, उदङ्निवासो येषां ते प्राच्या उदीच्याः । 'द्युप्रा'गिति यत् । माध्यमा इति । प्रकृतवार्तिकेनाण् । तदाह—भाष्ये सर्वे इति । अनेन भाष्येण प्रागुदग्भ्यां 'निवास एवे'ति सूचयतीति केचित् ॥ १३८ ॥

*—त्रयः प्राच्याः—१ आलम्बिः, २ पलङ्गः, ३ कमलः ।

†—त्रय उदीच्याः—१ श्यामायनः, २ कठः, ३ कलापी ।

‡—त्रयो माध्यमाः—१ ऋचाभः, २ आरुणिः, ३ ताण्ड्यः ।

इतीमे काशिकायां (४ । ३ । १०४) सूत्रे व्याख्याता नव वैशम्पायनान्तेवासिन एव भगवतो भाष्यकारस्याऽऽचार्यत्र्याख्रिके सङ्ग्राह्याः । सङ्ग्रहश्लोकश्चापि दृश्यते काशिकायाम्—

आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ ।
ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे ॥
श्यामायन उदीच्येषु उक्तः कठकलापिनोः ।

अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ॥ १ ॥

अकेकान्तग्रहणे कोपधग्रहणं कर्तव्यम् । किं प्रयोजनम् ? 'सौसुकाद्यर्थम्' । सौसुकीयः ॥ १४१ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य
द्वितीयेपादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ।

प्र०—वृद्धाद । अकेकान्तग्रहण इति । अकेकान्तग्रहणमपनीय कोपधग्रहणं व्यापकं कर्तव्यमित्यर्थः ॥ १४१ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ।

उ०—इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थस्याध्यायस्य
द्वितीयपादे द्वितीयमाह्निकम् ॥ पादश्च द्वितीयः समाप्तः ।

## युष्मदस्मदोरन्यतरस्यां खञ्च ॥ ४ । ३ । १ ॥

### युष्मदस्मद्भ्यां प्रत्ययाविधाने योगविभागः ॥ १ ॥

युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः कर्तव्यः । युष्मदस्मदोरन्यतरस्यां छो भवति । युष्मदीयः अस्मदीयः । ततः 'खञ्च' । खञ्च भवति युष्मदस्मदोरन्यतरस्याम् । यौष्माकीणः आस्माकीनः ॥ किमर्थो योगविभागः ?

### [1]समसङ्ख्याप्रतिषेधार्थः ॥ २ ॥

सङ्ख्यातानुदेशो* मा भूदिति ॥ १ ॥

प्र०—युष्मदस्मदोरन्यतरस्यां खञ् च । त्यदादित्वाद्वृद्धत्वाच्छे प्राप्ते खञ्विधीयते । ततश्छस्य बाधे प्राप्ते चकारेण छोऽनुकृष्यते । एवं च खञ्छावन्यतरस्यां युष्मदस्मदोर्विधीयेते । तेन पक्षे यथाप्राप्तमण् भवति । तत्र खञ्छयोर्युष्मदस्मदोश्च सङ्ख्यासाम्याद्यथासङ्ख्यं प्राप्नोति । तन्निराकरणायाह–युष्मदस्मद्भ्यामिति । केचित्त्वत्राहुः—एक एवानेन खञ्विधीयते, चकारेण तु तस्य सहायता द्योत्यते । तत्र प्रकरणाच्छेनेति विज्ञायते । अन्यतरस्यांग्रहणेन चाणः प्रतिप्रसवः क्रियते । तत्र यद्येक एवापूर्वः खञ् विधीयते, यदि वा त्रयः खञ्छाणः, सर्वथा नास्ति सङ्ख्यासाम्यमिति यथासङ्ख्यनिरासाय न कर्तव्यो योगविभाग इति । अत्राहुः–चकारेण छस्यानुकर्षणं क्रियते, तेन यावदुक्तं खञ्छाविति, तावत्खञ्चेति । ततश्च सिद्धोऽपि छप्रत्ययोऽनेनैवात्राधाय चकारेण समुच्चयार्थेनानुकृष्य विधीयत इति स्यादेव यथासङ्ख्यम् । अन्यतरस्यांग्रहणेन तु खञ्छयोः पक्षेऽनुत्पत्तिः प्रतिपाद्यते । तदनुत्पत्तौ चापवादाभावात्स्वशास्त्रेणाण् भवतीति कुतः प्रत्ययत्रयस्यानेन विधानम् ॥ १ ॥

उ०—युष्मदस्मदो । ननु खञ एवानेन विधानात्त्रयाणां वा खञ्छाणां विधानात्क्व यथासङ्ख्यप्राप्तिः, किमर्थो वा योगविभागोऽत आह—त्यदादित्वादिति । कुतः प्रत्ययत्रयस्येति । ननु यदि प्रत्ययत्रयाविधानं, तर्हि द्वयोरपि न विधानं, चेन ससहायतामात्रद्योतनात्, यदि तात्पर्यतस्तस्यापि विधानाद् द्वयोर्विधानं तर्हि त्रयाणामपीति चेन्न; अन्यतरस्यांग्रहणस्य हि पक्षेऽभावमात्रमर्थः, न त्वन्यभावोऽपि, नानार्थतापत्तेः । एवञ्च वाक्यस्य महाविभाषया सिद्धत्वादन्यतरस्यांग्रहणबोधिततदभावेऽणेवेति लक्ष्यसंस्कारवेलायां निर्णीयते । यथासंख्यसूत्रे च 'विध्यर्थप्रमितिकालिकं सङ्ख्यासाम्यं गृह्यते' इति 'अमङ्गे'ति सूत्रभाष्ये स्पष्टमित्याशयात् । ससहायत्वस्य तु प्रतियोगिसापेक्षत्वाद्वाक्यार्थवेलायामेव तदुपस्थितिरित्यदोषः । युष्मदस्मदोरिति—षष्ठी 'गापो'रितिवदानन्तर्ये । षष्ठ्युच्चारणमुत्तरार्थम् ॥ १ ॥

१—'सङ्ख्यातानुदेशप्रतिषेधार्थः' इति पा० । * यथासंख्यमनुदेशः समानाम् १ । ३ । १० ।

## तस्मिन्नणि च युष्माकास्माकौ ॥ ४ । ३ । २ ॥

### आदेशवचने च ॥ १ ॥

किम् ? योगविभागः कर्तव्यः । तस्मिन्नणि युष्माकास्माकौ भवतः । यौष्माकः आस्माकः । ततः 'खञि' । खञि च युष्माकास्माकौ भवतः । यौष्माकीणः आस्माकीनः । किमर्थो योगविभागः ? 'समसङ्ख्याप्रतिषेधार्थ' इत्येव ।

### तत्र पुनः खञ्ग्रहणम् ॥ २ ॥

तत्र पुनः खञ्ग्रहणं कर्तव्यम् । न ह्यन्तरेण खञ्ग्रहणं योगाङ्गमुपजायते ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । एवं वक्ष्यामि—तस्मिन्खञि युष्माकास्माकौ भवतः । ततोऽणि च' । अणि च युष्माकास्माकौ भवत इति ॥ २ ॥

## तवकममकावेकवचने ॥ ४ । ३ । ३ ॥

### एकार्थग्रहणं च ॥ १ ॥

एकार्थग्रहणं च कर्तव्यम् । 'एकार्थयोर्युष्मदस्मदो'रिति वक्तव्यम् । किमर्थम् ?

प्र०—तस्मिन्नणि च । तत्र पुनरिति । खञ्यणि चेति वक्तव्यमित्यर्थः । अन्यथा पूर्वसूत्रे खञ्चेति चकारेण छोऽनुकृष्ट इति स एवानन्तर्यात्तस्मिन्नित्यनेन परामृश्येत । एवं वक्ष्यामीति । एवं व्याख्यास्यामीत्यर्थः । 'तस्मि'न्नित्यनेन पूर्वेण साक्षाद्विहितः खञ्परामृश्यते, न तु चकारानुकृष्टश्छः । चशब्दो हि समुच्चयस्य द्योतकः प्रकृतमनुकर्षति । तत्र किं प्रकृतं स्यादिति विचारप्रवृत्तौ विलम्बिता छस्य प्रतीतिरव्यवहिता तु खञ इति तस्यैव सर्वनाम्ना परामर्शो युक्त इति भावः । अथवा पूर्वसूत्रे योगविभागस्य व्याख्यातत्वान्नैव चकारेण छस्यानुकर्षणमिति कुतस्तस्यानन्तर्यं यतस्तस्य परामर्शः स्यात् ॥ २ ॥

तवक । 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यया'दिति न्यायात्प्रत्ययस्यैकवचनस्य ग्रहणं स्यात्तस्य च नित्यत्वाल्लुक्प्रवर्तनात्प्रत्ययलक्षणप्रतिषेधाच्च एकवचनपरता युष्मदस्मदोर्न

उ०—तस्मिन्नणि च । ननु तच्छब्देन खञः परामर्शसिद्धेरसङ्गतमेव तदत आह—अन्यथेति । अव्यवहितात् खिति । साक्षादुच्चारणादिति भावः । तच्छब्दस्याव्यवहितबुद्धिस्थपरामर्शकत्वादिति तात्पर्यम् । तदेतत्पठन्ति—'चानुकृष्टं नोत्तरत्रे'ति । इदमेव युक्तम् । 'अथवे'त्यादि तु प्रौढ्या व्याख्यातम् ॥ २ ॥

तवक । ननु 'एकं वक्ती'ति व्युत्पत्त्या एकवचनशब्दस्यैव तदर्थत्वसम्भवादाह—कृत्रिमेति । नित्यत्वादिति । 'अन्तरङ्गानपी'ति न्यायाच्चेत्यपि बोध्यम् । ननूभयोर्ग्रहणं वा स्यात्, कृत्रिमस्यैव वा, अकृत्रि-

नैकवचन इत्येव सिद्धम् ? न सिध्यति । किं कारणम् ? 'एकवचनाभावात्' । एकवचन इत्युच्यते न चात्रैकवचनं पश्यामः ।

यदि पुनरेकवचनपरत्वेनाएस्वत्रौ विशेष्येयाताम् । नैवं शक्यम् । इह हि प्रसज्येयाताम्—युष्माकं छात्रो यौष्माकीणः आस्माकीनः । इह च न स्याताम्—तव च्छात्रास्तावकीनाः मामकीनाः । तस्मान्नैवं शक्यम् । न चेदेवमेकार्थग्रहणं कर्तव्यम् ।

न कर्तव्यम् । नेदं पारिभाषिकस्यैकवचनस्य* ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम्—उच्यते वचनम्, एकस्यार्थस्य वचनमेकवचनमिति ॥ ३ ॥

## अर्धाद्यत् ॥ ४ । ३ । ४ ॥

### अर्धाद्यद्विधाने सपूर्वाट्ठञ् ॥ १ ॥

प्र०—संभवतीति मत्वाह—एकार्थग्रहणं चेति । यदि पुनरिति । तवायं तावक इत्यादि सिध्यतीति मन्यते । नैवं शक्यमिति । अव्याप्त्यतिव्याप्तिदोषद्वयदुष्टत्वादिति भावः । अन्वर्थग्रहणमिति ।उभयगतिरिह शास्त्रे संभवति, तत्र विषयभेदेन क्वचित्कृत्रिमस्य ग्रहणं क्वचिदकृत्रिमस्य क्वचिदुभयोः ।

अथ वचनात् प्रत्ययलक्षणं भवतीति कस्मान्नाश्रितम्, उच्यते—अन्वर्थग्रहणे सत्यव्यवहिता प्रतिपत्तिर्भवतीति तदेवाश्रितम् । 'एकवचने' इति च प्रथमाद्विवचनान्तं युष्मदस्मदोः समानाधिकरणं विशेषणम् । एकस्येति । वाच्यवाचकसम्बन्धे षष्ठी । एकार्थाभिधानाय ये उच्येते युष्मदस्मदी तयोरादेशावित्यर्थः ॥ ३ ॥

उ०—मस्यैव ग्रहणं तु कथं लभ्यमत आह–तत्र विषयभेदेनेति । व्याख्यानादिति भावः । अव्यवहितेति । प्रत्ययलक्षणस्य तु निषेधप्रतिबन्धद्वारा व्यवहितेत्यर्थः । किञ्च शास्त्रबाधापेक्षया लौकिकन्यायबाधो युक्तः । किञ्च 'त्वमावेकवचने' 'प्रत्ययोत्तरपदयोश्च'स्यत्रास्या एव सरणेरावश्यकत्वेनात्रापीयमेवादृता भगवता । नन्वेवमेकवचन इति सप्तम्येकवचनासङ्गतिरत आह—एकवचने इति चेति । प्रथमाद्विवचनान्तमिति । एवञ्चैकार्थवाचके ये युष्मदस्मदी तयोरिति शेषोऽत्र बोध्यः । षष्ठ्यर्थे प्रथमाद्विवचनमित्यन्ये । ननु एकस्यार्थस्य वचनं—कथनं, न हि ते युष्मदस्मदी, अत आह—वाच्येति । वचनशब्दः करणव्युत्पत्त्या प्रतिपादकपर इति भावः ॥ ३ ॥

१—तवकममकादेशाविति शेषः ।

* तान्येकवचनद्विवचनबहुवचनान्येकशः, सुपः १ । ४ । १०२; १०३ ।

अर्धाद्यद्विधाने सपूर्वाट्ठञ् वक्तव्यः । बालेयार्धिकः गौतमार्धिकः ।

दिक्पूर्वपदाद्यच्च ॥ २ ॥

दिक्पूर्वपदाद्यच्च ठञ्च वक्तव्यः । पूर्वार्ध्यः पौर्वार्धिकः । दक्षिणार्ध्यः दाक्षिणार्धिकः । उत्तरार्ध्यः औत्तरार्धिकः ।

किमर्थमिदमुच्यते, यदाद्यन्यास एव दिक्पूर्वपदादर्धशब्दादुभयमुच्यते† । इदमद्यापूर्वं क्रियतेऽर्धाद्यद्विधाने सपूर्वाट्ठञिति । तद्द्वेष्यं विजानीयात्सर्वमेव विकल्पत इति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे 'दिक्पूर्वपदादर्धाद्यथान्यासमेव भवती'ति ॥ ४ ॥

श्वसस्तुट् च ॥ ४ । ३ । १५ ॥

श्वसस्तुट्यादेशानुपपत्तिरनादित्वात् ॥ १ ॥

श्वसस्तुटि कृत आदेशानुपपत्तिः । किं कारणम् ? 'अनादित्वात्' । तुटि कृतेऽनादित्वादादेशो‡ न प्राप्नोति ॥ एवन्तर्हि पूर्वान्तः करिष्यते ।

पूर्वान्ते कप्रतिषेधः ॥ २ ॥

यदि पूर्वान्तः कादेशस्य प्रतिषेधो वक्तव्यः । शौवस्तिकम् । 'तान्ता'दिति* कादेशः प्राप्नोति ॥ अस्तु परादिः । ननु चोक्तं 'श्वसस्तुट्यादेशानुपपत्तिरनादित्वा'दिति ।

प्र०—श्वसस्तुट् च । अनादित्वादिति । यद्यपि 'ठस्येक' इत्यत्रादिग्रहणं नास्ति—तथाप्यङ्गस्य निमित्तं यष्ठस्तस्येक इति सूत्रार्थाश्रयणाद्यथा 'कर्मणि घटोऽठ'जित्यठजङ्गस्य निमित्तं न 'ठ' इति 'कर्मठ' इत्यत्रेकादेशो न भवति, एवं तुटि कृते समुदायोऽङ्गसंज्ञानिमित्तं न तु ठमात्रमिति कादेशो न प्राप्नोतीति भावः । शौवस्तिकमिति । 'द्वारादीनां चे'ति वृद्धिप्रतिषेध

उ०—अर्धाद्यत् । भाष्ये-तद्द्वेष्यमिति । 'दिक्पूर्वपदा'दित्यस्य स्थाने सूत्रकृच्छिक्षणायेदं कृतमिति यो भ्राम्येत्तम्प्रतीदमाख्यायत इत्यर्थः ॥ ४ ॥

श्वसः । समुदायोऽङ्गसंज्ञानिमित्तमिति । चिन्त्यमिदं, 'ठस्येक'इत्यत्र वर्णग्रहणपक्षे वर्णमात्रस्यैव प्रत्ययत्वेन, समुदायग्रहणपक्षे च तस्यैव प्रत्ययत्वेन 'यदागमा' इति न्यायेन तुड्विशिष्टस्यापि प्रत्ययत्वेन ठग्रहणेन च ग्रहणात्, तस्याप्यङ्गसंज्ञानिमित्तत्वेऽपि निर्दिश्यमानपरिभाषया ठस्यैवादेशेन च दोषाभावात् । तस्मादङ्गात्परस्येति व्याख्यानमभिप्रेत्यानादित्वादिति भाष्यम् । तत्र 'योऽङ्गात्परो न स निर्दिश्यमानो यश्च निर्दिश्यमानो नासावङ्गात्पर' इत्यादेशानुपपत्तिरिति भावः । अनादित्वादित्यनेनाङ्गात्परत्वाभावो

१—'यथान्यास एव' पा० ।

† दिक्पूर्वपदाट्ठञ् च ४ । ३ । ६ ।

‡ ठस्येकः ७ । ३ । ५० ।

* इसुसुक्तान्तात् कः ७ । ३ । ५१ ।

## सिद्धं त्वादिष्टस्य तुड्वचनात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'तुडादिष्टस्ये'ति वक्तव्यम् ।

## संन्नियोगाद्वा ॥ ४ ॥

अथवा चेन संनियोगः करिष्यते—'तुट् च' । 'किं च ? यच्चान्यत्प्राप्नोति । किं चान्यत्प्राप्नोति ? आदेशः ॥ १५ ॥

## सर्वत्राण्च तलोपश्च ॥ ४ । ३ । २२ ॥

## हेमन्तस्याणि तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरत्वात् ॥ १ ॥

हेमन्तस्याणि तलोपवचनमनर्थकम् । किं कारणम् ? 'हेम्नः प्रकृत्यन्तरत्वात्' । प्रकृत्यन्तरं हेमन्शब्दः । आतश्च प्रकृत्यन्तरमेवं ह्याह—'हेमन्हेमन्नागनीगन्तिकर्णौ तस्मादेतौ हेमन्नशुष्यत' इति ।

प्र०—ऐजागमश्च । संनियोग इति । तेनागमादेशौ सह भवतः ॥ १५ ॥

सर्वत्राण् च । हेम्न इति । हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति तस्मादृत्वणि कृते 'हैमन'मिति भविष्यति नार्थस्तलोपविधानेन । सर्वत्राणित्येव वक्तव्यम् । भाषायां चैतद्वृत्तिविषय एव हेमन्शब्द ऋतुवाचीत्यस्वपदविग्रहः कर्तव्यः—हेमन्ते साधु हैमनमिति । 'अन्'इति प्रकृतिभावाट्टिलोपाभावः । हेमन्हेमन्निति । सप्तम्येकवचनस्य छन्दसि 'सुपां सुलु'गिति लुक् । 'न ङिसम्बु-

उ०—बोध्यते, आदित्वे हि निर्दिश्यमानस्याङ्गात्परत्वम्भवतीति बोध्यम् । समाधानान्तरमेव वक्तुम्—'अङ्गनिमित्तस्ये'ति नाश्रितम्भगवतेत्येव सारम् ॥ १५ ॥

सर्वत्राण् च । अनेन सूत्रेणाण्तलोपौ विधीयेते । ननु हेमशब्दस्य स्वर्णशक्तत्वादर्थभेदोऽत आह—हेमन्तेति । सर्वत्राणित्येव वक्तव्यमिति । वेदे ठञा बाधा मा भूदितीदं वक्तव्यम् । छन्दस्येवाण्विधाने लोके तदभाव आशङ्क्येतेति 'सर्वत्रे'ति वक्तव्यम् । ननु 'हेमन्हेमन्नागनीगन्तिकर्णौ तस्मादेतौ हेमन्नशुष्यत'इति वेदे प्रयोगाच्छन्दसि तत्सत्त्वेऽपि भाषायां तदभावेन तत्र 'हैमन'मितिप्रयोगसिद्ध्यर्थं तलोप आवश्यकः, भाषायामपि तत्स्वीकारेऽन्यत्रापि तत्प्रयोगापत्तिरत आह—एतद्वृत्तिविषय इति । प्रकृतिभावादिति । इदञ्च सूत्रे तलोपग्रहणेऽपि 'त' इति समुदायलोप इति पक्षे आवश्यकम् । अनेन व्यञ्जनस्यैव लोपः 'यस्येति चे'त्यल्लोप इति पक्षेऽल्लोपस्य स्थानिवत्त्वादसिद्धत्वाच्च न टिलोप इत्यपि बोध्यम् ।

१—'चसन्नियोगाद्वा' पा० ।

अलोपदर्शनाच्च ॥ २ ॥

अलोपः खल्वपि दृश्यते—पङ्क्तिर्हैमन्तीति ।

अपर आह—[ हेमन्तस्याण्वचनमणि च तलोपवचनमनर्थकं हेम्नः प्रकृत्यन्तरत्वात् । ] हेमन्तस्याण्वचनमणि च तलोपवचनमनर्थकम् । किं कारणम् ? 'हेम्नः प्रकृत्यन्तरत्वादलोपदर्शनाच्चे'त्येव । तत्र तुभ्य इत्येव सिद्धम्* ॥ २२ ॥

## सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ ४ । ३ । २३ ॥

चिरपरुत्परारिभ्यस्त्नो[1] वक्तव्यः[2] । चिरत्नम् परुत्नम् परारित्नम् ।

प्रगस्य[3] च्छन्दसि गलोपश्च त्नश्च वक्तव्यः । प्रत्नमात्मानम् ।

अग्रादिपश्चाड्डिमच् स्मृतः[4][5] । अग्रिमम् आदिमम् पश्चिमम् ।

अन्ताच्चेति[6] वक्तव्यम् । अन्तिमम् ।

प्र०—द्वयोरिति नलोपप्रतिषेधः ॥ अपर आहेति—सूत्रस्यैव प्रत्याख्यानम् । तथा हि छन्दस्येव रूपत्रयमिष्टं—हैमनं हैमन्तिकं हैमन्तमिति । तत्र हेमन्शब्दस्य ऋत्वणि हैमनमिति भवति, 'हेमन्ताच्चे'त्यनेन ठञि हैमन्तिकमिति, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'इति हेमन्तशब्दादृत्वणि हैमन्तमिति भवति । भाषायां तु हेमन्हेमन्तशब्दयोर्ऋत्वणि हैमनं हैमन्तमिति रूपद्वयमिष्टं सिध्यतीति नार्थः सूत्रेणेत्यर्थः ॥ २२ ॥

सायंचिरंप्राह्णेप्रगे । चिरपरुदिति । ट्युट्युल्भ्यां त्नस्य समावेश इष्यते न तु ट्युट्यु-

उ०—भाष्ये—अलोपः खल्वपीति । न च 'अणचे'ति चकारेण यथाप्राप्तऋत्वणोऽपि बोधनेन, तत्र च तलोपाभावाद्धैमन्तीति सिद्धयतीति वाच्यम्, भाष्यविरोधेन चस्य तत्तात्पर्यकत्वाभावात् । तदपेक्षया तलोपाकरणस्यैवोचितत्वादिति भावः । ननु 'सर्वत्र' ग्रहणसामर्थ्यात्पूर्वसूत्रेऽण्यस्यानुकर्षणेन भाषायां ठञा ऋत्वणो बाधा मा भूदिति 'सर्वत्रा'णित्यावश्यकमत आह—छन्दस्येवेति । 'सर्वत्र'ग्रहणन्तु 'सर्वत्र विभाषा गो'रितिवत्स्पष्टार्थमेवेति भावः । नन्वेवमपि ठञा बाधाद्वेदे 'हैमन्त'मित्यस्यासिद्धिरत आह—सर्वे विधय इति ॥ २२ ॥

सायञ्चिरं । समावेश इति । चिरशब्दे तद्दर्शनादिति भावः । इत्याहुरिति । अत्रारुचिबीजन्तु परुत्परारिभ्यां समावेशे मानाभाव इति । ननु मान्त'सायं'शब्दस्याव्ययत्वादेव सिद्धे सूत्रे तदुपादानं

१—अयं पाठः क्वाचित्कः । * सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ४ । ३ । १६

२—इतः पूर्वं 'चिरपरुत्परारिभ्यस्त्नः' इति वार्तिकं क्वचित् ।

३—इतः प्राक् 'प्रगस्य च्छन्दसि गलोपश्च' इति वार्तिकं क्वचित् ।

४—'अग्रादिपश्चाड्डिमच्' इति वार्तिकं क्वचित् ।

५—'वक्तव्यः' पा० । ६—'अन्ताच्च' इति वार्तिकं क्वचित् ।

अथ सायचिरयोः किं निपात्यते ?

**सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियुक्तम् ॥ १ ॥**

सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियोगेन निपात्यते । सायन्तनम् चिरन्तनम् ॥ नैतदस्ति प्रयोजनम् । मकारान्तः सायंशब्दः । यदि मकारान्तः, कथं सायाह्नः ?

सायमोऽह्नि मलोपः[1] ॥ सायमोऽह्नि मलोपो वक्तव्यः ॥ कथं सायतरे ? तरे[1] चेति वक्तव्यम् ॥ कथं सायम् साये ? वा सप्तम्यामिति वक्तव्यम् ।

अथ प्राह्णप्रगयोः किं निपात्यते ?

**प्राह्णप्रगयोरेकारान्तत्वम् ॥ २ ॥**

प्राह्णप्रगयोरेकारान्तत्वं निपात्यते । प्राह्णेतनम् प्रगेतनम् ।

प्र०—लोर्बाध इत्याहुः । सायचिरयोरिति । स्यतेर्घञि सायशब्दस्य चिरशब्दस्य च मान्तत्वं निपात्यते इत्यर्थः । मकारान्त इति । अनेन सायंशब्दः प्रत्याख्यायते, अव्ययत्वादेव ट्युट्युलोः सिद्धत्वात्, चिरशब्दस्यैव तु मान्तत्वं निपात्यते । सायशब्दस्तु घञन्तोऽवसानमात्रवाची न तु कालविशेषवाचीति तस्येह ग्रहणमयुक्तमिति भावः । सायमोऽह्न इति । 'अह्नोऽह्न एतेभ्य' इत्यह्नादेशष्टजन्तो निर्दिष्टः । 'संख्याविसायपूर्वस्याह्नस्ये'ति ज्ञापकादेकदेशिसमासः । सायतर इति । तरपि रूपमेतत् । 'वा सप्तम्या'मिति मलोपे च कृते 'साये' इति भाष्यकारवचनप्रामा-

उ०—व्यर्थमत आह—अनेनेति । नन्वेवमपि घञन्तस्य सायशब्दस्य 'सायिक' इत्येतद्व्यावृत्तये तदुपादनमत आह—सायशब्दस्त्विति । तस्येह ग्रहणमिति । एतत्प्रकरणस्थप्रत्यये प्रकृतित्वेन ग्रहणमित्यर्थः । अत्रापि 'काला'दित्यनुवर्तत इति भावः ।

न च सायशब्दस्यापि लक्षणया कालविशेषपरत्वे कालाट्ठञ्निवारणाय सूत्रे तद्ग्रहणम् अनभिधानेन तत्र तदभावकल्पनादित्याशयः । केचित्तु—"अकारान्तसायशब्दस्य घञन्तस्यानभिधानमेवेति भाष्याशयः ॥ अत एवाग्रे प्रश्नः—"कथं सायाह्न इत्यादिः, अन्यथावसनावचनस्य तस्य काललक्षणया 'सायाह्न' इत्येकदेशिसमासोपपत्तौ प्रश्नासङ्गतिः स्पष्टैवे"त्याहुः ।

ननु पूर्वादित्वाभावात्कथमनेनैकदेशिसमासः, अन्यसमासे तु पूर्वनिपातवैपरीत्यापत्तिरत आह—सङ्ख्यावीति । नन्वेवमव्ययत्वाद्विभक्तिश्रवणमसङ्गतमत आह—भाष्यकार इति । "सायमण्डनमभिरवरयन्त्य' इत्यादि तु चिन्त्यमेवेत्याहुः । चिरमिति । अव्ययत्वेनैव सिद्धे 'चिर'शब्दाच्च तेनैव ठञो बाधे सिद्धे

१—वार्तिकमिदमिति केचित् ।

नैतदस्ति प्रयोजनम् । सप्तम्या अलुकापि सिद्धम्* । भवेत्सिद्धं यदा सप्तमी यदा त्वन्या विभक्तयस्तदा न सिध्यति ।

तुट्युक्तम् ॥ ३ ॥

किमुक्तम् ? 'तुटयादेशानुपपत्तिरनादित्वा'दिति† । तुटि कृतेऽनादित्वादादेशो‡ न प्राप्नोति ॥ एवं तर्हि पूर्वान्तः करिष्यते ।

पूर्वान्ते विसर्जनीयः ॥ ४ ॥

यदि पूर्वान्तो विसर्जनीयो वक्तव्यः । प्रातस्तनम् पुनस्तनम् । परादौ पुनः सति 'खरवसानयोर्विसर्जनीयः' [ ८ । ३ । १५ ] इति विसर्जनीयः सिद्धो भवति ।

अस्तु तर्हि परादिः । ननु चोक्तं 'तुटि कृतेऽनादित्वादेशो न प्राप्नोती'ति ।

सिद्धं त्वादिष्टस्य तुड्वचनात् ॥ ५ ॥

सिद्धमेतत् । कथम् ? 'आदिष्टस्य तुड्वचनात्' । तुडादिष्टस्येति वक्तव्यम् । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

संनियोगाद्वा ॥ ६ ॥

अथवा चेन संनियोगः करिष्यते—तुट् च । किं च ? यच्चान्यत्प्राप्नोति । किं चान्यत्प्राप्नोति ? आदेशः ॥ २३ ॥

प्र०—ण्याद्व्ययसंज्ञाभावः । अलुकेति । 'घकालतनेषु कालनाम्न' इत्यनेन । यदा त्वन्या इति । प्राह्णः सोढोऽस्य प्राह्णेतन इत्यादौ । अनादित्वादिति । अङ्गसंज्ञानिमित्तस्य योरनादेश उच्यमानो मृत्युशब्द इव तुटि कृते 'त्यु'शब्दोऽङ्गनिमित्त न तु युशब्द इति न स्यादित्यर्थः । यदीति । पदान्तस्य रेफस्य विधीयमानस्तुकि कृते अपदान्तत्वान्न प्राप्नोतीत्यर्थः ॥ २३ ॥

उ०—तदुपादानाच्चिरमित्यव्ययमप्रामाणिकमित्याहुः । घकालेति । स च नित्य इति भावः । तत्रादिग्रहणाभावादाह—अङ्गसंज्ञेति । अत्रत्यमपि भाष्यं-'श्वसस्तुट् चे'तिसूत्रस्थभाष्यव्याख्यानरीत्यैव व्याख्येयम् । कैयटस्तु चिन्त्य एव ॥ २३ ॥

* घकालतनेषु कालनाम्नः ६ । ३ । १७

† ४ । ३ । १५ वा० १

‡ युवोरनाकौ ७ । १ । १

१—'चसंनियोगाद्वा' पा० ।

## विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ ४ । ३ । २४ ॥

### पूर्वाह्णापराह्णाभ्यां सुबन्तवचनं सप्तमिश्रवणार्थम् ॥ १ ॥

पूर्वाह्णापराह्णाभ्यां[1] सुबन्तत्वं वक्तव्यम् । किं प्रयोजनम् ? 'सप्तमीश्रवणार्थम्' । सप्तम्याः श्रवणं यथा स्यात्—पूर्वाह्णेतनम् अपराह्णेतनम् ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्यत्र सप्तमी'ति यदयं 'घकालतनेषु कालनाम्नः' [ ६ । ३ । १७ ] इति सप्तम्या अलुकं शास्ति ।

### अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमीप्रसङ्गः ॥ २ ॥

'अलुग्वचनं ज्ञापक'मिति चेदव्ययात्सप्तमी प्राप्नोति । दोषातनम् दिवातनम्* । अस्तु । अव्ययादिति लुग्भविष्यति† । इहापि [ तर्हि[2] ] लुक्प्राप्नोति—पूर्वाह्णेतनम् अपराह्णेतनम् । अलुगत्र लुकं बाधिष्यते । इहापि [ तर्हि ] बाधेत—दोषातनम् दिवातनम् । समानाश्रयो लुगलुका बाध्यते । कश्च समानाश्रयः ? यः[3] प्रत्ययाश्रयः‡, अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति ।

प्र०—विभाषा । सुबन्तवचनमिति । ङ्याप्प्रातिपदिकाधिकारात् प्रातिपदिकस्यैव तद्धितोत्पत्तौ प्रकृतित्वेन भाव्यं न तु सुबन्तस्येति भावः । दोषातनमिति । दोषाशब्दस्यापि कालवाचित्वादलुगनुमितायाः सप्तम्याः श्रवणप्रसङ्गः । समानाश्रय इति । 'सुपो धातुप्रातिपदिकयो'रित्ययं लुक्तद्धितोत्पत्तिनिमित्तप्रातिपदिकसंज्ञकसमुदायान्तर्वर्त्तिसुप्स्थानिकोऽलुकस्तद्धितविशेषनिमित्तस्य समानाश्रयः । अत्र चेति । 'अव्ययादाप्सुप' इत्ययं लुगव्ययमात्रापेक्षत्वादन्तर-

उ०—विभाषा पूर्वा । ननु समर्थात्तद्धितोत्पत्तिः, सामर्थ्यञ्च सुबन्तेनेति सुबन्तादेव तद्धित इति किं वचनेनेत्यत आह—ङ्याबिति । यथाकथञ्चित्काल्पनिकसामर्थ्यमादायैव शास्त्रप्रवृत्तिरिति भावः । भाष्ये—भवत्यत्रेति । अत्र—कालवाचकशब्दे । तदाह—कालवाचित्वादिति । ननु लुकोऽनैमित्तिकत्वात्किमादाय समानाश्रयत्वमत आह—सुपो धात्विति । समानकालप्रातिकत्वमेव समानाश्रयत्वमिति भावः ।

---

१—'सुबन्ताभ्यां तद्धितो भवतीति वक्तव्यम्' पा० ।

* सायंचिरं.........ट्युट्युलौ तुट् च ४ । ३ । २३

† अव्ययादाप्सुपः २ । ४ । ८२ २—क्वचिन्न ।

३—'यश्च' पा० । ‡ सुपो धातुप्रातिपदिकयोः २ । ४ । ७१

न सिध्यति। इह हि सति प्रत्यये लुका भवितव्यम्, सति लुक्यलुका भवितव्यम्। तत्र च प्रत्यय एव नास्ति कुतो लुग्भविष्यति। सैषा ज्ञापकेनासती विभक्तिराकृष्यते। सा यथैवेह[1] बाधिका भवति पूर्वाह्णेतनम् अपराह्णेतनमिति, एवमिहापि स्यात् दोषातनम् दिवातनमिति।

एवं तर्हि न ब्रू 'मोऽलुग्वचनं ज्ञापकं भवत्यत्र सप्तमी'ति। किं तर्हि? 'भवति सुबन्तादुत्पत्ति'रिति। किं पुनर्ज्ञाप्यमेतद्यावता समर्थानां प्रथमादिति+ वर्तते, सामर्थ्यं च सुबन्तेन? ज्ञाप्यमित्याह। कथम्? 'ङ्याप्प्रातिपदिकात्' [ ४। १। १ ] इत्यपि वर्तते, तत्र कुत एतत्सुबन्तादुत्पत्तिर्भविष्यति न पुनर्ङ्याप्प्रातिपदिकादिति। कथं

प्र०—ज्ञत्वाद्भवतीत्यर्थः। न सिध्यतीति। प्रातिपदिकात्प्रत्ययोत्पत्तिरलुग्विधानात्तु 'ज्ञापकाद्विभक्तिरिति पक्षः प्रक्रान्तः, तत्र प्रत्यय उत्पन्ने विभक्त्या भाव्यं न तु पूर्वं, तत'श्चाव्ययादाप्सुप' इत्ययमपि लुक्तद्धितोत्पत्त्युत्तरकालभाविसुप्स्थानिकत्वादलुकः समानाश्रयत्वाद्बाध्यत इत्यर्थः। एतच्च 'हलदन्ता'दित्यस्यानुवृत्तिमनपेक्ष्योच्यते। तत्र च प्रत्यय इति। प्राक्तद्धितोत्पत्तेः सुप्संज्ञकः प्रत्ययो नास्तीत्यर्थः।

कथं यदिति। यद्यलुग्विधानेन समर्थस्य प्रकृतित्वमनुमीयते तदा ङ्याप्प्रातिपदिकाधिकारस्य

उ०—अन्तरङ्गत्वादिति। 'अन्तरङ्गानपी'ति न्याये तु लुगतिरिक्ता एवान्तरङ्गा विधयो गृह्यन्त इति भावः। ननु 'अव्यया'दिति लुकः कथं तद्धितप्रत्ययापेक्षत्वमत आह—प्रातिपदिकादिति। एतच्चेति। एवञ्च तत्र तत्र तदनुवृत्तिर्वृत्तिकृतामेतद्भाष्यविरुद्धेति भावः। सुप प्रत्ययस्य सत्त्वादिदमयुक्तमत आह— प्राक्तद्धितेति। भाष्ये— आकृष्यत इति। उत्पाद्यत इत्यर्थः। सा यथैवेह बाधिकेति। तदनुमापकालुक्प्रवृत्त्येत्यर्थः।

भाष्ये—सुबन्तादुत्पत्तिरिति। 'स्वार्थद्रव्यलिङ्गसंख्याकारकैः परिपूर्णार्थस्य पदस्य पदान्तरेण सम्बन्ध' इत्यर्थो ज्ञाप्यत इत्यर्थः। यावता समर्थानाम्प्रथमादिति। 'किम्पुनः समर्थम्? अर्थाभिधाने यच्छक्तं कृतवर्णानुपूर्वीकम्पद'मिति तत्सूत्रभाष्योक्तेरिति भावः। कृतवर्णानुपूर्वीकत्वं परं—ङ्याप्प्रातिपदिकांशे एवेत्यन्यत्। न पुनर्ङ्याबिति। यद्यपि सत्यर्थबोधे शक्तम्, ततः प्रथमात्प्रातिपदिकादित्यर्थो भविष्यतीति भावः। ननु ज्ञापकात्सुबन्तस्य प्रकृतित्वेऽपि 'प्रातिपदिकात्परः सुबन्तात्पर' इत्यर्थः, तत्र सुबन्तात्परत्वमव्यवहितं, प्रातिपदिकात्तु व्यवहितं सामर्थ्यादिति—प्रातिपदिकस्यापि सन्निहितत्वात्तद्विशेषणं 'वृद्धा'दित्यादि भविष्यतीति को विरोधोऽत आह—यदीति। वृद्धादिविशेषणत्वेनेति बहुव्रीहिः। अयं भावः—'वृद्धाच्छ' इत्यादौ 'वृद्धा'दित्यादि प्रकृतिबोधकं, तस्य प्रातिपदिकविशेषणत्वे तस्यैव प्रकृतित्वं लभ्यते इति प्रकृतित्वप्रतिपादनरूपं यत्प्रयोजनं तदधिकारस्योक्तं तद्विरुध्यते इति। किञ्च विनिगमनाविरहादुभयोर्विशेषणं स्यात्, ततश्च 'ज्ञानामयं ज्ञीय' इत्यत्रैव स्यात्, 'ज्ञयोरय'मित्यत्र न स्यात्। 'ज्ञ'शब्दोऽत्रावन्त इति भावः।

१—'यथेह' पा०। + समर्थानां प्रथमाद्वा ४। १। ८२

यत्तदुक्तं 'वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थ'मिति × ? समर्थस्य यद्वृद्धं ङ्याप्प्रातिपदिकमित्येवमेतद्विज्ञायते ।

यद्येतज्ज्ञाप्यते कथं द्विपद आगतं द्विपाद्रूप्यम्, प्रष्ठौह आगतं प्रष्ठवाड्रूप्यम्, कीलालप आगतं कीलालपारूप्यम् पपुष आगतं पपिवद्रूप्यम्* ? पद्भाव ऊडाकारलोपः प्रसारणमित्येते विधय† प्राप्नुवन्ति । लुकि कृते न भविष्यन्ति ।

इह तर्हि सामसु साधुः सामन्यः वेमन्यः‡ 'नलोपः प्रातिपदिकान्तस्य' [ ८ । २ । ७ ] इति नलोपः प्राप्नोति । लुकि कृते भत्वान्न भविष्यति । इदमिह संप्रधार्यम्—लुक्क्रियतां नलोप इति किमत्र कर्तव्यम् ? परत्वान्नलोपः । एवं तर्हीदमिह संप्रधार्यम्–'नलोपः क्रियतां तद्धितोत्पत्ति'रिति किमत्र कर्तव्यम् ? परत्वान्नलोपः । असिद्धो नलोपस्तस्यासिद्धत्वात्तद्धितोत्पत्तिर्भविष्यति । परिगणितेषु कार्येषु*

प्र०—वृद्धादिविशेषणत्वेन ङ्याप्प्रातिपदिकस्य प्रकृतित्वप्रतिपादनं प्रयोजनं यदुक्तं तत्कथं न विरुध्यत इति प्रश्नः । परिहारमाह–समर्थस्येति । समर्थस्य विभक्त्यन्तस्य प्रत्ययप्रकृतित्वेनाश्रितस्यावयवभूतं ङ्याप्प्रातिदिकं वृद्धादि चेद्भवति ततः समर्थादेव प्रत्ययो भवतीति नास्ति विरोध इत्यर्थः ।कथं द्विपद इति । विभक्त्यन्तात्प्रत्ययोत्पत्तावाश्रीयमाणाया विभक्तिनिमित्तानि कार्याण्यन्तरङ्गत्वात्प्राप्नुवन्तीति प्रश्नः । सर्वत्र 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य' इति रूप्यप्रत्ययः । लुकि कृतइति । कृताकृतप्रसङ्गित्वान्नित्यत्वादिति भावः । वर्णाश्रयत्वाद्भसंज्ञायाः प्रत्ययलक्षणत्वाभावात्पद्भावादिकमनित्यम् ।

इह तर्हीति । नलोपस्य प्रत्ययलक्षणेन प्राप्त्या नित्यत्वं मन्यते । परत्वादिति ।

उ०—समर्थस्येति । लक्ष्यानुरोधात्प्रातिपदिकादित्येतत्सामर्थ्याच्च तस्यैव विशेषणं भविष्यतीति भावः । भाष्ये—प्रष्ठौह इति । 'वहश्चे'ति ण्विः । एतद्भाष्यप्रामाण्यात्तत्र 'छन्दसी'ति नानुवर्तते, न हि विग्रहवाक्यं छन्दः । ण्यन्ताद्विचि तु णिलोपस्य स्थानिवत्त्वादूठ् दुर्लभः, 'क्वौ लुप्त'मित्यत्र 'क्वि'ग्रहणं विचोऽप्युपलक्षणं वा । कीलालप इति । एतद्भाष्यप्रामाण्या'दातो मनि'न्नित्यादिसूत्रे 'छन्दसी'त्यस्यासम्बन्धः, तेनैवात्र विच् । क्विपि त्वत्रेत्त्वं स्यात्, आदन्तात्क्विपोऽनभिधानाच्चेत्याहुः ।

पपुष इति । एतद्भाष्यप्रामाण्यादेव क्वसुर्लोकेऽपि क्वचिद्भवति, 'भाषायां सदवसे'त्यत्र सदादिग्रहणन्तूदाहरणमात्रमित्याहुः । नित्यत्वादिति । पदस्य विभज्यान्वाख्याने इदम् । नलोपस्येति । लुक्यपि

× ४ । १ । १ वा० ३ * हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४ । ३ । ८१

† पादः पत्; वाह ऊठ्; आतो धातोः; वसोः सम्प्रसारणम् ६।४। १३०; १३२; १४०; १३१

‡ तत्र साधुः ४ । ४ । ९८

* नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८ । २ । २

नलोपोऽसिद्धो न चेदं तत्र परिगण्यते । इदमपि तत्र परिगण्यते । कथम् ? सुब्विधिरिति सर्वविभक्त्यन्तः समासः—सुपो विधिः सुब्विधिः, सुबन्ताद्विधिः सुब्विधिरिति ॥ २४ ॥

## तत्र जातः ॥ ४ । ३ । २५ ॥

किमर्थं जातादयोऽर्था निर्दिश्यन्ते ? जातादिष्वर्थेषु घादयो† यथा स्युः स्वार्थे मा भूवन्निति । नैतदस्ति प्रयोजनम् । 'शेषे' [ ४ । २ । ९२ ] इति वर्तते तेन स्वार्थे न भविष्यन्ति ॥ अत उत्तरं पठति—

प्र०—द्वावपि लुङ्नलोपौ नित्यौ । 'यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्य'-मिति नलोपोऽपि नित्य इति भावः । एतच्चा'न्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्येतदनाश्रित्योक्तम् । एतदेव त्वाश्रयणीयमन्यथान्तरङ्गत्वात्पद्भावादयो नित्यमपि लुकं बाधेरन् । तदुक्तम्—'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्व'मिति । सुबन्ताद्विधिरिति । ततश्च तद्धितोऽपि सुब्विधिरिति तत्र कर्तव्ये नलोपस्यासिद्धत्वादप्रवृत्तिः । तद्धिते तु कृते लुकोऽपि सुब्विधित्वात्तत्र नलोपस्यासिद्धत्वाल्लुक्प्रवर्तते । ततो भत्वान्नलोपाभावः ॥ २४ ॥

तत्र जातः । जातादिषु घादीनामपेक्षामाश्रित्य शेषग्रहणं प्रत्याख्यातम् । इह तु शेष इत्यस्य लक्षणत्वमधिकारत्वं चाश्रित्य जाताद्यर्थाक्षेपः—किमर्थमिति । प्रत्ययार्थवशेनाभिधानसामर्थ्येन च समर्थविभक्तिर्लप्स्यत इति तन्निर्देशोऽपि न कर्तव्य इति भावः । तेन स्वार्थ इति । ननु स्वार्थोऽपि प्रत्ययविधावनुपयोगाच्छेष इति कुतस्तत्र न स्युः । उच्यते—अन्तरेणापि शेषाधिकारं चातुरर्थपर्यन्तापत्याद्यर्थनिवृत्त्या स्वार्थे घादिषु प्राप्तेषु शेषाधिकारः स्वार्थ-

उ०—प्रत्ययलक्षणेन परत्वादिति भावः । ननु लुकि सति भत्वे पदत्वाभावान्नलोपाप्राप्तेः कथं तस्य नित्यत्वमत आह—यस्येति । परनित्येति । 'एते विषयो विरोधिभिः पूर्वादिभिः सन्निपाते भवन्ती'ति शेषः । तेषां मिथः प्रसङ्गे—परनित्याद्योरेकत्र प्रसङ्गे 'परनित्यान्तरङ्गे'ति पाठरीत्या यत्परं तद्बलीय इति परिभाषार्थः । अन्ये तु-पद्भावादिविषये 'लुकि कृते' इति भाष्यस्य—'अन्तरङ्गानपीति न्यायेने'ति शेषः । लुकि कृतेऽपि प्रत्ययलक्षणेन पदत्वसत्त्वान्नलोपः प्राप्नोतीत्याह—इह तर्हीति । उत्तरयति-लुकि कृते भत्वादिति । समानावधिकसर्वपदत्वबाधो भत्वेनेति भावः । 'इदमिहे'त्यादि भाष्यन्तु 'अन्तरङ्गानपी'ति परिभाषानभिज्ञयोरेकदेशिनोरुक्तिप्रत्युक्तिपरमित्याहुः ॥ २४ ॥

तत्र जातः । ननु 'शेष' इत्यधिकारेऽपि समर्थविभक्तिनिर्देशायैतान्यावश्यकानीत्यत आह—प्रत्ययार्थेति । ननु जातरूपप्रत्ययार्थे सप्तम्या इव तृतीयाया अपि योग्यत्वादाह—अभिधानेति । स्वार्थव्यतिरिक्तेति ।

† राष्ट्रावारपाराद् घखौ ४ । २ । ९३

## तत्रजातादिषु वचनं नियमार्थम् ॥ १ ॥

नियमार्थोऽयमारम्भः । जातादिष्वेव घादयो यथा स्युरिह मा भूवन् तत्रास्ते तत्र शेत इति ।

यदि नियमः क्रियते दार्षदाः सक्तवः, औलूखलो यावक इति न सिध्यति । 'संस्कृत'मित्येवं भविष्यति‡ । भवेत्सिद्धं दार्षदाः सक्तव इति । इदं तु न सिध्यति औलूखलो यावक इति । संस्कृतं हि नाम तद्भवति यत्तत एवापकृष्याभ्यवह्रियते, न च यावक उलूखलादेवापकृष्याभ्यवह्रियते, अवश्यं रन्धनादीनि प्रतीक्ष्याणि । तस्मान्नार्थोऽनेन नियमेन । कस्मान्न भवति तत्रास्ते तत्र शेत इति ? अनभिधानात् ।

तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेऽपि ह्यर्थनिर्देशेषु यत्र जातादिषूत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं न भवति, न भवति तत्र प्रत्ययोत्पत्तिः । तद्यथा—अङ्गुल्या खनति, वृक्षमूलादागत इति† ।

न तर्हीदानीं जातादयोऽर्था निर्देष्टव्याः ? निर्देष्टव्याश्च । किं प्रयोजनम् ? अपवादविधानार्थम् । 'प्रावृषष्ठप्' [ ४ । ३ । २६ ] प्रावृषि जातः प्रावृषिकः । क्व मा भूत् ? प्रावृषि भवाः प्रावृषेण्या बलाहकाः+ । यानि त्वेतानि निरपवादान्यर्थादेशनानि तानि शक्यान्यकर्तुम् । 'कृतलब्धक्रीतकुशलाः' [ ४ । ३ । ३८ ] स्रौघ्नो देवदत्त इति ॥ २५ ॥

प्र०—व्यतिरिक्तार्थपरिग्रहार्थः ।

तत्रास्ते इति । स्रुघ्न आस्त इत्यादावपि शेष इत्यस्य लक्षणत्वात्प्रत्ययप्रसङ्गः । संस्कृतमिति । उपयोगफला हि क्रिया संस्कार इति मन्यते । तच्चावश्यमिति । अर्थनिर्देशकरणवादिनाप्यनिष्टनिवृत्तयेऽवश्यमाश्रयितव्यमनभिधानमित्यर्थः । अपवादविधानार्थमिति । असंकरेण विशिष्ट एवार्थेऽपवादा यथा स्युरित्येवमर्था अर्थनिर्देशा इत्यर्थः ॥ २५ ॥

उ०—उपयुक्तादन्यस्योपयुक्तसजातीयस्यैव ग्रहणादिति भावः । भाष्ये—अयमारम्भ इति । 'तत्र जात' इत्यादिसूत्रसमूहारम्भ इत्यर्थः ।

नियमाभावे प्रत्ययप्रसङ्गमुपपादयति—स्रुघ्न इत्यादि । उपयोगः—साक्षाद्भोजनादौ विनियोगः । नन्वर्थनिर्देशं विनाप्यपवादविधाने को दोषोऽत आह—असंकरेणेति । अन्यथा प्रावृष एण्यठपोः सर्वेष्वर्थेषु पर्यायप्रसङ्गः स्यादिति भावः ॥ २५ ॥

‡ संस्कृतं भक्षाः ४ । २ । १६
† तेन दीव्यति खनति जयति जितम् ४ । ४ । २; तत आगतः ४ । ३ । ७४
+ प्रावृष एण्यः ४ । ३ । १७

## श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ४ । ३ । ३४ ॥

### लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम् ॥ १ ॥

लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानं कर्तव्यम् । चित्रायां जाता चित्रा स्त्री । चित्रा ॥ रेवती–रेवती स्त्री । रेवती ॥ रोहिणी–रोहिणी × स्त्री ।

### फल्गुन्यषाढाभ्यां टानौ ॥ २ ॥

फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । फल्गुनी* । अषाढा उपदधाति ।

### श्रविष्ठाषाढाभ्यां छण् ॥ ३ ॥

श्रविष्ठाषाढाभ्यां छण्वक्तव्यः । श्राविष्ठीयाः आषाढीयाः ॥ स[1] तर्हि वक्तव्यः ?

### न वा नक्षत्रेभ्यो बहुलं लुग्वचनात् ॥ ४ ॥

न वा वक्तव्यः । किं कारणम् ? 'नक्षत्रेभ्यो बहुलं लुग्वचनात्' । नक्षत्रेभ्यो बहुलं लुगित्येवमत्र लुग्भविष्यति† ॥ ३४ ॥

प्र०—श्रविष्ठा + रेवतीरोहिणीति । नक्षत्राणो लुकि कृते 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुक् । ततो गौरादिषु 'पिप्पल्यादयश्चे'ति पाठादादिशब्दस्य प्रकारार्थत्वान्ङीष्प्रत्ययः । न वेति । लुक एव प्रत्याख्यानं प्रत्ययास्तूपसंख्येयाः ॥ ३४ ॥

उ०—श्रविष्ठा । ननु गौरादौ 'रेवतीरोहिणी नक्षत्रे' इत्युक्तेः कथमत्र ङीषत आह–पिप्पल्यादयश्चेति । ङीष्प्रत्यय इति । 'काशकृत्स्ने'तिवत् 'लक्ष्ये लक्षणस्ये'ति न्यायस्तु न, कृतलुकां पिप्पल्यादिषु पाठादित्याहुः । ननु लुग्विधानेन कथं टानादिविधायकप्रत्याख्यानमत आह—लुक एवेति ॥ ३४ ॥

---

× लुक् तद्धितलुकि १ । २ । ४९; षिद्गौरादिभ्यश्च ४ । १ । ४१

* टिड्ढाणञ्……कञ्क्वरपः ४ । १ । १५

† नक्षत्रेभ्यो बहुलम् ४ । ३ । ३७

१–'तत्तर्हि वक्तव्यम्' पा० ।

## प्रायभवः ॥ ४ । ३ । ३९ ॥

### प्रायभवग्रहणमनर्थकं तत्रभवेन कृतत्वात् ॥ १ ॥

प्रायभवग्रहणमनर्थकम् । किं कारणम् ? 'तत्रभवेन कृतत्वात्' । यो हि राष्ट्रे प्रायेण भवति तत्रभवोऽसौ भवति, तत्र 'तत्र भवः' [ ४ । ३ । ५३ ] इत्येव सिद्धम् ।

न सिध्यति । अनित्यभवः प्रायभवः । [ नित्यभवस्तत्र 'भवः । ]

### अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् ॥ २ ॥

यद्भवान्मुक्तसंशयं तत्र भव उदाहरणं न्याय्यं मन्यते स्रौघ्नो देवदत्त इति तेनैतत्तुल्यम् । सोऽपि ह्यवश्यमुदकं देशादीन्यभिनिष्क्रामति । अथैतद्भवान्प्रायभव उदाहरणं न्याय्यं मन्यते तत्र भवे किमुदाहरणम् ? यत्तत्र नित्यं भवति—स्रौघ्नाः प्रासादाः, स्रौघ्नाः प्राकारा इति ।

एवं तर्हि 'तत्र भव' इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते‡ स यथा तस्मिन् दृष्टापचारे अङ्गुलीयमिति भवत्येवं प्रायभवेऽपि भविष्यति ।

प्र०—प्राय । तत्र भवेनेति । भवे सामान्ये प्रायभवस्यापि विशेषस्यान्तर्भावादिति भावः । अनित्यभव इति । अर्थभेदमनेनाचष्टे । यस्तत्र कदाचिद्भवति कदाचिन्न भवति स प्रायभवः । यस्य तु नियत आधाराधेयभावः स तत्र भव इति भावः । एतन्निराकरोति—मुक्तसंशयेनेति । अथेति । जानुसमीपस्थशरीरावयववाच्युपजानुशब्द इति भावः । एवं ठगपीति । तत्रभवा-

उ०—प्रायभवः । ननु भवेन प्रायभवस्य कथं गतार्थता, अर्थभेदादत आह—भवे इति । मुक्तसंशयेनेतीति । एवञ्च 'तत्र भव'इत्यत्र सर्वं गृह्यते, अभिधानस्वाभाव्याच्च व्यवस्थेति भावः । भाष्ये—देवदत्तस्यानित्यभवत्वमुपपादयति—सोऽपि ह्यवश्यमुदकदेशादीनीति । जलाहरणाद्यर्थमिति भावः । 'उदग्देशादीनी'ति क्वचित्पाठः । अयमेव युक्तः पाठः । जलादेः स्रुघ्नदेशेऽपि सुलभत्वादिति बोध्यम् । भाष्ये—यत्तत्र नित्यमिति । एवञ्च तदेवोदाहरणं स्यान्न तु 'स्रौघ्नो देवदत्त' इति । एवं च संग्रहादिषु तदुदाहरणदानमसङ्गतं स्यादिति भावः ।

नित्यभवस्यैव 'तत्र भव' इत्यत्र ग्रहणे दोषान्तरमाह भाष्ये—एवं तर्हीति । किञ्चेत्यर्थः । अभ्युपेत्य वा दोषान्तरमाह—एवं तर्हीति । दृष्टापचारे इति । दृष्टव्यभिचारे । अङ्गुलीसम्बन्धाभावेऽपीति यावत् ।

१—अयं पाठः क्वचिन्न ।　　२—'उदग्देशादीनी'ति नागेशसम्मतः पाठः ।

‡ जिह्वामूलाङ्गुलेश्छः ४ । ३ । ६२　　३—'यथैव' पा० ।

इदं तर्हि प्रयोजनम् । प्रायभव इति प्रकृत्योपजानूपकर्णोपनीवेष्ठक्ं वक्ष्यति§ स प्रायभव एव यथा स्यात्तत्र भवे मा भूत्—उपजानुभवं गड्विति ।

अथेदानीं 'तत्र भव' इति प्रकृत्य शरीरावयवाद्यद्विधीयते+ सोऽत्र कस्मान्न भवति ? अनभिधानात् । स यथैव तर्ह्यनभिधानाद्यन्न भवत्येवं ठगपि न भविष्यति ॥ ३९ ॥

## कोशाड्ढञ् ॥ ४ । ३ । ४२ ॥

### विकारे कोशाड्ढञ् ॥ १ ॥

विकारे* कोशाड्ढञ्वक्तव्यः—कोशस्य विकारः कौशेयम् ।

### सम्भूते ह्यर्थानुपपत्तिः ॥ २ ॥

सम्भूत इति ह्युच्यमानेऽर्थस्यानुपपत्तिः स्यात् । न ह्यदः कोशे सम्भवति । किं तर्हि ? कोशस्यादो विकारः ।

यदि विकार इत्युच्यते भस्मन्यपि प्राप्नोति । भस्मापि कोशस्य विकारः ।

---

प्र०—विकारे ठग्विधीयमानः प्रायभव एव भविष्यतीत्यर्थः ॥ ३९ ॥

कोशा । विकारे इति । 'तस्य विकार' इत्यत्र प्रकरणे सूत्रमिदं कर्तव्यम् । 'एण्या ढ'ञिति कृत्वा 'कोशा'दिति कर्तव्यम् । अर्थानुपपत्तिरिति । कौशेयशब्दस्य लौकिको योऽर्थः सूत्रवस्त्रलक्षणः स एवं नोपपद्यते, लौकिकोऽर्थो न संगृहीतः स्यादित्यर्थः । न ह्यद इति । कौशेय-शब्दाभिधेयं वस्त्रसूत्रलक्षणं कोशे न संभवतीत्यर्थः । ननु कोशस्य वस्त्रकारणत्वात्कारणे च कार्यस्य संभवात्कथमर्थानुपपत्तिः । नैष दोषः । लोकप्रसिद्धार्थबाध एवं कृतः स्यात् । न हि कार्यावस्थायां लोकः कार्यकारणयोः संभवक्रियापेक्षमाधाराधेयभावमवगच्छति, किन्तर्हि ?

---

उ०—तस्मिन्नङ्गुलीभवेऽङ्गुलीयमिति भवतीत्यर्थः । ननु 'उपजानु'शब्दस्य कथं शरीरावयववाचकत्वमत आह—जानुसमीपेति । प्रायभव एवेति । अभिधानस्वाभाव्यात्तत्र भवविशेष एव तदुत्पत्तिर्भविष्यतीति नार्थः 'प्रायभव' इत्यधिकारेणेति भावः ॥ ३९ ॥

कोशाड्ढञ् । विकारे इति नापूर्वमित्याह—तस्य विकार इति । तत्र लाघवमप्याह-एण्या इति । लौकिक इति । एवञ्च इष्टार्थानुपपत्ति रिति 'अर्थानुपपत्ति'रित्यस्यार्थ इति भावः । स एवमिति । सम्भूताधिकारे क्रियमाणे इत्यर्थः । सम्भवः—उत्पत्तिः, सम्भावनाधेयस्याधारपरिमाणानतिरेकश्च । अद इत्यस्य च—लोके

---

§ उपजानूपकर्णोपनीवेष्ठक् ४ । ३ । ४०

* तस्य विकारः ४ । ३ । १३४, ।

\+ शरीरावयवाच्च ४ । ३ । ५५

अथ सम्भूत इत्युच्यमाने क्रिमौ कस्मान्न भवति ? क्रिमिरपि हि कोशे सम्भवति । अनभिधानात् । यथैव तर्ह्यनभिधानात्क्रिमौ न भवत्येवं भस्मन्यपि न भविष्यति । अर्थश्चोपपन्नो भवति ॥ ४२ ॥

## कलाप्यश्वत्थयवबुसाद्वुन् ॥ ४ । ३ । ४८ ॥

अयुक्तोऽयं निर्देशः । 'काला'दिति† वर्तते, न च कलापी नाम कालोऽस्ति । नैष दोषः । साहचर्यात्ताच्छब्द्यं भविष्यति । कलापिसहचरितः कालः कलापी काल इति ॥ ४८ ॥

## तत्र भवः ॥ ४ । ३ । ५३ ॥

'तत्रे'ति‡ वर्तमाने पुनस्तत्रग्रहणं किमर्थम् ?

**तत्रप्रकरणे तत्रेति पुनर्वचनं कालनिवृत्त्यर्थम् ॥ १ ॥**

तत्रप्रकरणे तत्रेति पुनर्वचनं क्रियते कालनिवृत्त्यर्थम् । कालाधिकारो† निवर्त्यते ।

प्र०—प्रकृतिविकारभावम् । अर्थश्चेति । लौकिकोऽर्थो विकारे प्रत्ययविधानेन शास्त्रेणानुसृतत्वाद्युक्तियुक्तो भवतीत्यर्थः ॥ ४२ ॥

कलाप्यश्वत्थ । कलापिसहचरित इति । यस्मिन्काले मयूराः कलापिनो भवन्ति स कलापीत्यर्थः ॥ ४८ ॥

तत्र भवः । न हि काक इति । यथा काकवाशितस्य कालाधिकारनिवृत्तिर्नाभिधेया तथा तत्रशब्दस्यापीत्यर्थः । तत्रग्रहणं चेति । सप्तम्यर्थमात्रप्रतिपत्तिप्रयोजनं तत्रग्रहणं कालसम्बद्धस्य

उ०—बोध्यमानमित्यर्थस्तदाह—कौशेयेति । सम्भवक्रिया–उत्पत्तिक्रिया । किं तर्हि प्रकृतीति । 'तन्तुषु पट' इति तु न सम्भवक्रियापेक्ष आधाराधेयभावः, किन्त्ववयवेषु आधारत्वोपचारः । न हि तथा कोश इति भावः । युक्तियुक्तो भवतीति । स्वस्मिन् शब्दस्य साधुत्वनियामको भवतीत्यर्थः ॥ ४२ ॥

कलाप्यश्वत्थ । भाष्ये– कालादिति वर्तते इति । 'कालात्साधुपुष्प्य'दित्यतः । साहचर्यमुपपादयति–यस्मिन्निति ॥ ४८ ॥

तत्र भवः । भाष्ये—कालाधिकार इति । 'कालात्साध्वि'त्ययम् । निवर्त्यत इति । 'तत्रशब्देने'ति शेषः । न च 'तदस्य सोढ'मित्यनेन विच्छेदात्तत्रग्रहणासम्बन्धः, तस्यान्यत्रापि पठितुं शक्यत्वादिति

† कालात् साधुपुष्प्यत्पच्यमानेषु ४ । ३ । ४३　　‡ तत्र जातः ४ । ३ । २५

१–'वचन' पा० ।

न हि काको वाश्यत इत्येवाधिकारा निवर्तन्ते, को वाभिसंबन्धो यत्तत्रग्रहणं कालाधिकारं निवर्तयेत् ? एषोऽभिसंबन्धः । कालाभिसम्बद्धं [ हि[1] ] तत्रग्रहणमनुवर्तते, 'तत्र'ग्रहणं च 'तत्र'ग्रहणस्य निवर्तकं भवति, तस्मिंश्च निवृत्ते कालाधिकारोऽपि निवर्तते ॥ ५३ ॥

## गम्भीराञ्ञ्यः ॥ ४ । ३ । ५८ ॥

## [ अव्ययीभावाच्च ॥ ४ । ३ । ५९ ॥ ]

### ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ॥ १ ॥

ञ्यप्रकरणे परिमुखादिभ्य उपसङ्ख्यानं कर्तव्यम् । पारिमुख्यम् [ पारोष्ठ्यम् ] पारिहनव्यम् ।

### अव्ययीभावाद्विधान उपकूलादिभ्यः प्रतिषेधः ॥ २ ॥

अव्ययीभावाद् विधान* उपकूलादिभ्यः प्रतिषेधो वक्तव्यः । औपकूलः औपमूलः औपशालः ॥ ५८ ॥ ५९ ॥

प्र०—विशेषफलस्य तत्रग्रहणस्य निवृत्तिं विरोधात्करोतीत्यर्थः ॥ ५३ ॥

गम्भीरा । ञ्यप्रकरण इति । 'अव्ययीभावाच्चे'त्येतदतिव्यापकत्वादकृत्वा परिमुखादिभ्य एव ञ्यो विधेयः, गणे चाव्ययीभावकार्ययुक्तानि परिमुखादीनि पठितव्यानि न तु प्रातिपदिकान्येव । तेन तेषां बहुव्रीहितत्पुरुषाणां ग्रहणं न भवष्यितीति भावः । अथ सूत्रं क्रियते तदातिव्याप्तिपरिहारायेदं वक्तव्यमित्याह—अव्ययीभावादिति ॥ ५८ ॥ ५९ ॥

उ०—भावः । विशेषफलस्येति । कालनिष्ठसप्तम्यर्थप्रतिपत्तिफलस्येत्यर्थः ॥ ५३ ॥

गम्भीरा । ननु परिमुखादिभ्योऽव्ययीभावेभ्य एवेष्यते, अत एव सूत्रारम्भे 'उपकूलादिभ्यः प्रतिषेध' इत्युक्तं, तत्र 'अव्ययीभावाच्चे'त्येव सिद्धमत आह—अव्ययीभावाच्चेत्येतदिति । इदं वक्तव्यमिति । वक्ष्यमाणमुपकूलादिभ्यः प्रतिषेध इत्येतदित्यर्थः । एवञ्च 'परिमुखादिभ्य' इत्येवोक्त्वाव्ययीभावाच्चेति न वक्तव्यमिति भावः । बहुव्रीहितत्पुरुषाणामनभिधानान्न ग्रहणमित्यन्ये ॥ ५८ ॥ ५९ ॥

१—इदं क्वचिन्न ।

* अव्ययीभावाच्च ४ । ३ । ५९

## अन्तः पूर्वपदाट्ठञ् ॥ ४ । ३ । ६० ॥

अत्यल्पमिदमुच्यते ।

**समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।**

समानस्य—सामानिकः ॥ तदादेः—सामानग्रामिकः सामानदेशिकः ॥ अध्यात्मादिषु चेष्यते । आध्यात्मिकम् आधिदैविकम् आधिभौतिकम्[1] ।

**ऊर्ध्वं दमाच्च देहाच्च**

[ ऊर्ध्वं दमाच्च देहाच्च[2] ] ठञ्वक्तव्यः । और्ध्वदमिकम् और्ध्वदेहिकम् ।

**लोकोत्तरपदस्य च ॥ १ ॥**

[ लोकोत्तरपदस्य च ] ठञ्वक्तव्यः । ऐहलौकिकम् पारलौकिकम् ।

**मुखपार्श्वतसोरीयः**

'मुख' 'पार्श्व' इत्येताभ्यां तसन्ताभ्यामीय[3]प्रत्ययो वक्तव्यः । मुखतीयम् पार्श्वतीयम् ।

**कुग्जनस्य परस्य च ।**

[ जनस्य[2] परस्य च ] ईयो वक्तव्यः, कुक्[2]चागमः । जनकीयम् परकीयम् ।

**ईयः कार्योऽथ मध्यस्य**

[ मध्यस्य[2] ईयः कार्यः । ] मध्यीयः ।

---

प्र०—अन्तः । ऊर्ध्वं दमाच्चेति । दम उत्तरपदे ठञ्संनियोगेनोर्ध्वशब्दस्य मकारान्तत्व निपात्यते । ऐहलौकिकमिति । अनुशतिकादित्वादुभयपदवृद्धिः । मुखतीयमिति । 'अव्ययानां भमात्रे टिलोपः' । मध्यमीय इति । गहादिषु 'मध्यो मध्यमं चाण्चरण' इति यत्पठितं तत्र पृथिवीमध्यवाची मध्यशब्दो गृह्यत इत्युक्तम् । ततोऽन्यत्रापि भवार्थे मध्यमीयं इति यथा

---

उ०—अन्तः पूर्वं । उदाहरणे 'और्ध्व'मित्यनुस्वारश्रवणं कथमत आह—दमे इति । न तु देहे । और्ध्वदेहिकमिति भाष्ये तदनुच्चारणादिति भावः । भाष्ये—'तसन्ताभ्या'मिति वार्त्तिके आर्षत्वात्समासः । अव्ययानाम्भेति । 'मुखपार्श्वतसोर्लोपश्चे'त्यनार्षमिति भावः । गहादिपाठादेव सिद्धे इदं किमर्थमत आह—गहादिष्विति । प्रकृतवार्त्तिकप्रयोजनमाह—ततोऽन्यत्रापीति । ननु गहादिषु सर्वमध्यशब्दस्य ग्रहणमस्तु, इदञ्च न कार्यमत आह—जातादिष्विति । 'स्थाम्नो लु'गित्यादि । भवार्थप्रत्ययस्य लुगित्यर्थः । तदन्तविधि-

---

१—'आध्यात्मिकः आधिदैविकः आधिभौतिकः' पा० ।

२—इदं क्वचिन्न ।

३—'ईयो वक्तव्यः' पा० ।

मण्मीयौ चापि प्रत्ययौ ॥ २ ॥

मण्मीयौ चापि प्रत्ययौ वक्तव्यौ । माध्यमः मध्यमीयः ।

मध्यो मध्यं दिनण्चास्मात्[1]

मध्यशब्दो मध्यंशब्दमापद्यते, दिनण्चास्मात्प्रत्ययो वक्तव्यः । माध्यंदिन उद्गायति[2] ।

स्थाम्नो लुगजिनात्तथा ।

स्थाम्नो लुग् वक्तव्यः । अश्वत्थामा ॥ अजिनात्तथा । अजिनान्ताच्च लुग्वक्तव्यः । [ कृष्णाजिनः[3] ] उष्ट्राजिनः[4] सिंहाजिनः व्याघ्राजिनः ।

बाह्यो दैव्यः पाञ्चजन्यो गम्भीर्यं च ञ्य इष्यते ॥ ३ ॥

[ समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वं दमाच्च देहाच्च लोकोत्तरपदस्य च ॥ १ ॥
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयःकार्योऽथ मध्यस्य मण्मीयौ चापि प्रत्ययौ ॥ २ ॥
मध्यो मध्यं दिनण्चास्मात्स्थाम्नो लुगजिनात्तथा ।
बाह्यो दैव्यः पाञ्चजन्यो[5] गम्भीर्यं च ञ्य इष्यते ॥ ३ ॥]

प्र०—स्यादिति मीयप्रत्ययविधिः । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति यथा स्यान्मध्यान्तरवाचिनो मा भूदित्येवमर्थं गहादिषु पृथिवीमध्यस्य मध्यमभाव इत्युक्तम् । स्थाम्नो लुगजिनात्तथेति । उभाभ्यामपि तदन्तविधिरिष्यते । बाह्य इति । 'गम्भीराञ्ञ्य' इत्यत्रेदं वक्तव्यमित्यर्थः ॥ ६० ॥

उ०—रिष्यत इति । भाष्ये तदन्तोदाहरणादिति भावः । इदं वक्तव्यमिति । यो गम्भीराञ्ञ्य उक्तः, स एषु इष्यत इति भाष्याक्षरार्थः । यद्यपि बाह्यदैव्यौ—'बहिषष्टिलोपो यञ्च' 'देवाद्यञञौ' इति सिद्धौ, तथापि तयोरपि भवार्थे एव प्रवृत्तिं सूचयितुमिदमन्यत्राभिधानमिति भावः । अत एव तद्वार्त्तिके—'बहिर्भवो बाह्यः' इत्येव विग्रहो भाष्ये दर्शितः ॥ ६० ॥

1—'मध्य मध्यं' पा० ।
2—'उपगायति' पा० ।
3—इदं क्वचिन्न ।
4—'उलाजिनः' पा० ।
5—'बाह्यो दैव्यः पाञ्चजन्योऽथ गम्भीराञ्ञ्य इष्यते' पा० । "श्लोकबद्ध किसी प्राचीन व्याकरण के "समानस्य तदादेश्च" इत्यादि तीन श्लोक ४ । ३ । ६० के महाभाष्य में उद्धृत हैं । टीकाकारों ने इनको वार्तिक मानकर व्याख्या में कई असंबद्ध कल्पना की हैं ।" ( यु० मी०, व्या० शा० इतिहास भा० १, पृ० ८४ )

## तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥ ४ । ३ । ६६ ॥

किमर्थं भवव्याख्यानयोर्युगपदधिकारः क्रियते ?

**भवव्याख्यानयोर्युगपद्धिकारोऽपवादविधानार्थः ॥ १ ॥**

भवव्याख्यानयोर्युगपदधिकारः क्रियतेऽपवादविधानार्थः । युगपदपवादान्वक्ष्यामीति ॥ किमुच्यतेऽपवादविधानार्थ इति न पुनर्निर्देशार्थोऽपि स्यात् ?

**कृतनिर्देशौ हि तौ ॥ २ ॥**

कृतनिर्देशौ ह्येतावर्थौ । एकस्तत्र भवः [ ४ । ३ । ५३ ] इति, अपरस्तस्येदम् [ ४ । ३ । १२० ] इति ।

अथ व्याख्यातव्यनाम्नो ग्रहणं किमर्थम् ?

**तत्र व्याख्यातव्यनाम्नो ग्रहणं भवार्थम् ॥ ३ ॥**

तत्र व्याख्यातव्यनाम्नो ग्रहणं क्रियते भवार्थम् ।

किमुच्यते भवार्थमिति न पुनर्व्याख्यानार्थमपि स्यात् ?

**व्याख्याने ह्यवचनात्सिद्धम् ॥ ४ ॥**

व्याख्याने हि [1]सत्यन्तरेण वचनं सिद्धम् । यत्प्रति व्याख्यानमित्येतद्भवति तस्मादुत्पत्तिर्भविष्यति । किं [2]च प्रत्येतद्भवति ? व्याख्यातव्यनाम ।

---

प्र०—तस्य व्या । अधिकारोऽयमिति वृत्तिकारैर्व्याख्यायि, तत्र प्रयोजनं पृच्छति—किमर्थमिति । यथाविहितविधानार्थमेव भवव्याख्यानयोरुपादानं कस्मान्न भवतीति भावः । अपवादविधानार्थ इति । वक्ष्यमाणाष्ठञादयोऽपवादा भवव्याख्यानयोर्यथा स्युरित्येवमर्थस्तयोरधिकार इत्यर्थः । निर्देशार्थोऽपीति । अणादीनां घादीनाञ्चार्थनिर्देशार्थोऽपीत्यर्थः । भवार्थमिति । उत्तरैर्योगैर्भवे व्याख्यातव्यनाम्न एव यथा प्रत्यया स्युरित्येवमर्थमित्यर्थः । व्याख्याने हीति । व्याख्यानशब्दस्य संबन्धिशब्दत्वाद्व्याख्यातव्याक्षेपस्य सिद्धत्वादिति भावः ।

---

उ०—तस्य व्याख्यान । अधिकारोऽयमिति । विधौ फलाभाव इति तेषां गूढोभिप्रायः । अधिकारफलप्रश्नो युगपत्तत्करणफलप्रश्नश्चात्र । अन्त्यफलम्—पृथगपवादसूत्रकरणाभाव इति बोध्यम् । यथाविहितेति । घादिविध्यर्थमित्यर्थः । विध्यर्थमेव किन्नेति प्रश्नाशयः । विधौ फलाभाव इत्यभिप्रायेणैवाह भाष्ये—अपवादविधानार्थ इति । गूढाभिप्रायमजानान आह—न पुनर्निर्देशार्थ इति । व्याख्यातव्यनाम्नो ग्रहणं किमर्थमिति । व्याख्यानेनैव योग्यतावशादस्य सम्बन्धः । तत्राक्षेपादेव सिद्धिरिति मत्वा प्रश्नः ।

---

१—'क्रियमाणेऽन्तरेण' पा० ।   २—'च' क्वचिन्न ।

यदुच्यते भवार्थमिति तन्न । व्याख्यानार्थमपि व्याख्यातव्यनाम्नो ग्रहणं क्रियते । इह मा भूत्—पाटलिपुत्रस्य व्याख्यानी सुकोसलेति ।

अथ क्रियमाणेऽपि व्याख्यातव्यनाम्नो ग्रहणे कस्मादेवात्र न भवति ? अवयवशो ह्याख्यानं व्याख्यानं, पाटलिपुत्रं चाप्यवयवश आचष्ट ईदृशा अस्य प्राकाराः, ईदृशा अस्य प्रासादा इति । सत्यमेवमेतत् । क्वचित्तु काचित्प्रसृततरा गतिर्भवति । शब्दग्रन्थेषु चैषा प्रसमृततरा गतिर्भवति । निरुक्तं व्याख्यायते, व्याकरणं व्याख्यायत इत्युच्यते, न कश्चिदाह पाटलिपुत्रं व्याख्यायत इति ।

**भवे मन्त्रेषु लुग्वचनम् ॥ ५ ॥**

भवे मन्त्रेषु लुग्वक्तव्यः । अग्निष्टोमे भवो मन्त्रोऽग्निष्टोमः । राजसूयः । वाजपेयः ।

**कल्पे च व्याख्याने ॥ ६ ॥**

कल्पे च व्याख्याने लुग्वक्तव्यः । अग्निष्टोमस्य व्याख्यानः कल्पोऽग्निष्टोमः । राजसूयः वाजपेयः ॥ स तर्हि वक्तव्यः ?

**न वा तादर्थ्यात्ताच्छब्द्यम् ॥ ७ ॥**

न वा वक्तव्यः । किं कारणम् ? 'तादर्थ्यात्ताच्छब्द्यम्' । तादर्थ्यात्ताच्छब्द्यं भविष्यति । अग्निष्टोमार्थोऽग्निष्टोमः । राजसूयः वाजपेयः ॥ ६६ ॥

---

प्र०—पाटलिपुत्रस्येति । यादृशः सुकोसलायां प्राकारादिसंनिवेशः तादृशः पाटलिपुत्र इति पाटलिपुत्रं व्याख्यातव्यं भवतीति स्यादेव प्रत्ययः । व्याख्यातव्यनामग्रहणात्तु व्याख्यातव्यत्वेन प्रसिद्धतमस्य ग्रन्थस्य यन्नाम तस्य ग्रहणादतिप्रसङ्गाभावः । अग्निष्टोमे भव इति । अग्निष्टोमशब्दोऽत्र क्रतुवाच्येव न तु व्याख्यातव्यवाचीति ठञभावादणो लुक् । कल्पे चेति । अत्र ठञ एव लुक् ॥ ६६ ॥

---

उ०—ननु सामान्यतो विधानेनाऽपि ततः सिध्यतीत्यत आह–उत्तरैरिति । व्याख्यातव्यनामग्रहणादिति । भवार्थत्वस्य व्याख्यातव्यग्रहणेनैव सिद्धे नामग्रहणमेतदर्थकमिति भावः । भाष्ये—क्वचित्तु काचिदिति । एवञ्च भवार्थमेव व्याख्यातव्यनामग्रहणमिति भावः ।

नन्वग्निष्टोमादिभ्यो भवे लुग्विधाने 'क्रतुयज्ञेभ्यश्चे'ति भवे ठञ्विधानं व्यर्थं स्यादत आह—अग्निष्टोमशब्द इति । ठञ्विधानं तु तदर्थमन्त्रादिलाक्षणिकाग्निष्टोमादिभ्यश्चरितार्थमिति भावः । अत्र ठञ एवेति । व्याख्यातव्यनामत्वादिति भावः । भाष्ये—स तर्हीति । भवे मन्त्रे व्याख्याने कल्पे च लुगित्यर्थः । तादर्थ्यात्ताच्छब्द्यमिति । अग्निष्टोमार्थे मन्त्रे तदर्थे कल्पे चाग्निष्टोमत्वारोपेण प्रयोग इति भावः ॥ ६६ ॥

---

१–'चास्मा अवयवशः' पा० । २—'ईदृशा अस्य प्रासादा' क्वचिन्न ।

## क्रतुयज्ञेभ्यश्च ॥ ४ । ३ । ६८ ॥

क्रतुग्रहणं किमर्थम् ? 'यज्ञेभ्य' इतीयत्युच्यमाने य एव संज्ञीभूतका यज्ञास्तत उत्पत्तिः स्यात्—आग्निष्टोमिकः राजसूयिकः वाजपेयिकः । यत्र वा यज्ञशब्दोऽस्ति—नावयज्ञिकः पाकयज्ञिकः । इह न स्यात्—पाञ्चौदनिकः दाशौदनिकः शातौदनिक इति[1] । क्रतुग्रहणे पुनः क्रियमाणे न दोषो भवति ।

अथ यज्ञग्रहणं किमर्थम् ? 'क्रतुभ्य' इतीयत्युच्यमाने य एव संज्ञीभूतकाः क्रतवस्तत उत्पत्तिः स्यात्—आग्निष्टोमिकः राजसूयिकः वाजपेयिकः । इह न स्यात्—पाञ्चौदनिकः दाशौदनिकः शातौदनिक इति[2] । यज्ञग्रहणे पुनः क्रियमाणे न दोषो भवति ॥ ६८ ॥

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्

## ॥ ३ । ४ । ७२ ॥

### नामाख्यातग्रहणं सङ्घातविगृहीतार्थम् ॥ १ ॥

नामाख्यातग्रहणं सङ्घातविगृहीतार्थं द्रष्टव्यम् । नामिकः आख्यातिकः, नामाख्यातिकः ॥ ७२ ॥

---

प्र०—क्रतु । क्रतुयज्ञशब्दयोः पर्यायत्वात्प्रश्नः-क्रतुग्रहणमिति । संज्ञीभूतका इति । मुख्या इत्यर्थः । यत्र वेति । बहुवचननिर्देशात्स्वरूपग्रहणे निरस्ते तदन्तविधिः स्यादिति भावः । पाञ्चौदनिक इति । सोमपानाभावादमुख्यत्वमेषामिति भावः । तस्माद्गौणमुख्यपरिहारार्थमुभयोरुपादानम् ॥ ६८ ॥

---

उ०—क्रतुयज्ञे । मुख्या इति । सोमसाधनेऽन्नेतौ मुख्याविति बोध्यम् । बहुवचननिर्देशादिति । तेन 'स्वं रूप'मित्येतद्बाधेन विशेषग्रहणवद्ग्रहणवतेत्येतद्बाधेन तदन्तानामपि ग्रहणं स्यादिति भावः । भाष्ये—यत्र वेति । 'वा'शब्दश्चार्थः । अमुख्यत्वमिति । एवं नवयज्ञादीनामपि तत्त्वं बोध्यम् ॥ ६८ ॥

---

१—'सातौदनिकः' पा० ।　　२—'इति' क्वचिन्न ।

## विदूराञ्ञ्यः ॥ ४ । ३ । ८४ ॥

अयुक्तोऽयं निर्देशो न ह्यसौ विदूरात्प्रभवति । किं तर्हि ? वालवायात्प्रभवति विदूरे संस्क्रियते ।। एवं तर्हि—

वालवायो विदूरं च

वालवायशब्दो विदूरशब्दमापद्यते, ञ्यश्चास्मात्प्रत्ययो वक्तव्यः ।

प्रकृत्यन्तरमेव वा ।

अथवा प्रकृत्यन्तरं विदूरशब्दो वालवायस्य ।

न वै तत्र वालवायं विदूर इत्युपाचरन्ति ?

न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ।।

तद्यथा—वणिजो वाराणसीं जित्वरीत्युपाचरन्ति एवं वैयाकरणा वालवायं विदूर इत्युपाचरन्ति ।

वालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ।। ८४ ।।

प्र०—विदूरा । वालवाय इति । आदेश एव सूत्रे निर्दिष्टः । तेन त्वनुरूपः स्थानी वालवायशब्द आक्षिप्यते । यथा शिवादिगणे विश्रवणरवणेत्यादेशौ पठ्येते, ताभ्यां तु विश्रवःशब्दः स्थानित्वेनाक्षिप्यते । प्रकृत्यन्तरमिति । विदूरशब्दो नगरविशेषस्येव पर्वतविशेषस्यापि वाचकः, स एवात्र प्रकृतित्वेनाश्रीयत इत्यर्थः । पर्वते विदूरशब्दो न प्रसिद्ध इति चेत्, जित्वरीवद्व्यवहरेत् । प्रतिनियतपुरुषापेक्षापि प्रसिद्धिर्भवति । वणिजश्च मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्ति ।। ८४ ।।

उ०—विदूरा । 'वालवायो विन्दूरञ्चे'त्यस्य नापूर्वत्वमित्याह—आदेश एवेति । अनुरूपः—प्रभवतीत्यर्थानुरूपः । वालवायस्येति—भाष्ये । 'वाचक'इति शेषः । न वै तत्रेत्येतद्व्याचष्टे—न वै लोके इति । मङ्गलार्थां वाराणसीमिति । स्मरणमात्रेण सर्वमङ्गलप्रयोजनां वाराणसीं तत्वादेव 'जित्वरी'ति व्यवहरन्तीत्यर्थः । स्मरणमात्रेण सर्वमङ्गलदत्वान्मरणमात्रेण मुक्तिदत्वात्सर्वोत्कर्षवत्त्वाज्जित्वरीति व्यवहार इति भावः । एवं व्याकरणे एव वालवायस्य विदूरशब्देन व्यवहार इति भावः ।। ८४ ।।

१—वैदूर्यमणेरर्थशास्त्रेऽष्टौ भेदाः प्रतिपादिताः—"वैदूर्यः—उत्पलवर्णः शिरीषपुष्पक उदकवर्णो वंशरागः शुकपत्रवर्णः पुष्यरागो गोमूत्रको गोमेदकः ।" इति । ( कौटिलीय० अधि० २, प्र० २७, अ० ११ )

## अभिनिष्क्रामति द्वारम् ॥ ४ । ३ । ८६ ॥

अयुक्तोऽयं निर्देशः । चेतनावत एतद्भवति निष्क्रमणं वापक्रमणं वा, द्वारं चाचेतनम् । कथं तर्हि निर्देशः कर्तव्यः ? 'अभिनिष्क्रमणं द्वार'मिति ।

स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः । अचेतनेष्वपि चेतनवदुपचारो दृश्यते । तद्यथा—अयमस्य कोणोऽभिनिःसृतः, अयमभिप्रविष्ट इति ॥ ८६ ॥

## अधिकृत्य कृते ग्रन्थे ॥ ४ । ३ । ८७ ॥

### अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम् ॥ १ ॥

अधिकृत्य कृते ग्रन्थ इत्यत्र आख्यायिकाभ्यो बहुलं लुब्वक्तव्यः । वासवदत्ता सुमनोत्तरा । न च भवति—भैमरथी ॥ ८७ ॥

## शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ४ । ३ । ८८ ॥

### द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ॥ १ ॥

द्वन्द्वे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः । दैवासुरम् राक्षोसुरम् । दैवासुरी राक्षोऽसुरी ॥ ८८ ॥

प्र०—अभि । चेतनावत इति । निष्क्रमणस्य पादविक्षेपरूपत्वादिति भावः । यद्यपि शकटादीनां निष्क्रमणादि भवति तथापि चेतनाधिष्ठितानां न तु स्वतन्त्राणामिति भावः । अचेतनेष्वपीति । देशान्तरप्राप्तिलक्षणकार्यदर्शनादचेननेष्वपि क्रियाव्यवहारः । न च पादविक्षेप एव निष्क्रमणम् । 'वायुर्निष्क्रामती'ति दर्शनात् । ननु द्वारस्य देशान्तरप्राप्तिफलं निष्क्रमणं नैवास्ति । एवं तर्हि करणस्यापि कर्तृसाध्यक्रियारोपाद'भिनिष्क्रामति द्वार'मिति निर्देशः ॥ ८६ ॥

अधि । आख्यायिकाभ्य इति । तादर्थ्ये चतुर्थी । आख्यायिकाभिधानाय यः प्रत्ययस्तस्य बहुलं लुब्भवतीत्यर्थः ॥ ८७ ॥

उ०—अभिनिष्क्रामति । यद्यपीति । तेषाञ्च न पादविक्षेपरूपं निष्क्रमणमिति भावः । तथापीति । अश्वादिपादविक्षेपस्य तत्रापि सत्त्वमिति भावः । क्रियारोपादिति । असिश्छिनत्तीतिवदिति भावः ॥ ८६ ॥

अधिकृत्य । आख्यायिकावाचकात्प्रत्ययानुत्पत्तेः पञ्चम्यनुपपन्नेत्यत आह—तादर्थ्ये इति ॥८७॥

शिशुक्रन्दयम । भाष्ये—देवासुरमित्यत्राख्यानं विशेष्यम् । दैवासुरीत्यत्र—आख्यायिका विशेष्येति बोध्यम् ॥ ८८ ॥

## सोऽस्य निवासः ॥ ४ । ३ । ८९ ॥ अभिजनश्च ॥ ४ ॥ ३ । ९० ॥

निवासाऽभिजनयोः को विशेषः ? निवासो नाम यत्र संप्रत्युष्यते । अभिजनो नाम यत्र पूर्वैरुषितम् ॥ ८९ ॥ ९० ॥

## वासुदेवार्जुनाभ्यां वुन् ॥ ४ । ३ । ९८ ॥

किमर्थं वासुदेवशब्दाद् वुन्विधीयते न 'गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्' [ ४ । ३ । ९९ ] इत्येव सिद्धम् ? न ह्यस्ति विशेषो वासुदेवशब्दाद्वुञो वा वुनो वा । तदेव रूपं स एव स्वरः* ।

इदं तर्हि प्रयोजनं 'वासुदेवशब्दस्य पूर्वनिपातं वक्ष्यामी'ति† ।

अथवा नैषा क्षत्रियाख्या । संज्ञैषा तत्रभगवतः ॥ ९८ ॥

प्र०—सोऽस्य । निवासाभिजनयोरिति । अभिजनशब्देन पूर्वबान्धवा उच्यन्ते । तत्संबन्धाद्देशोऽभिजनो गृह्यते । निवासशब्देनाप्यधिकरणसाधनेन देश एवेत्यविशेषात् प्रश्नः । निवासो नामेति । यत्र स्वयं वसति स तस्य निवासः, यत्र पूर्वबान्धवानामुषितं सोऽभिजन इत्यर्थः । निवाससाहचर्याच्चाभिजनो देशो गृह्यते न तु पूर्वे बान्धवाः ॥ ८९ ॥ ९० ॥

वासुदेवा । वसुदेवस्यापत्यं वासुदेवः । 'ऋष्यन्धके'त्यणन्तः । तत्र गोत्रत्वात्क्षत्रियत्वाच्च वुञि रूपस्वरयोः सिद्धत्वात्प्रश्नः—किमर्थमिति । पूर्वनिपातमिति । 'अभ्यर्हितं पूर्वं निपतती'-त्यस्यार्थस्य ज्ञापनार्थमित्यर्थः । संज्ञैषेति । नित्यः परमात्मा देवताविशेष इह वासुदेवो गृह्यत इत्यर्थः । प्रसङ्गेन च निर्देशेन पूर्वोक्तोऽप्यर्थो ज्ञाप्यते ॥ ९८ ॥

उ०—सोऽस्य निवासः । पूर्वबान्धवोऽभिजनाः, निवासो देश इति विशेषः स्पष्ट एवेत्यत आह—अभिजनेति । ननु मुख्यार्थस्यैव ग्रहणं कुतो नेत्यत आह—निवाससाहचर्याच्चेति ॥ ८९ ॥ ९० ॥

वासुदेवार्जुनाभ्यां । वासुदेवस्य गोत्रत्वादि दर्शयति—वसुदेवस्येति । गोत्रत्वादिति । चिन्त्यमिदम् । अपत्याधिकारादुत्तरत्र लौकिकं गोत्रं, तच्च प्रवराध्यायप्रसिद्धमेव, न चैतत्तत्प्रसिद्धम् । अत एवाग्रे 'नैषा क्षत्रियाख्ये'त्येव भाष्ये वक्ष्यति । 'अभ्यर्हितं पूर्वमित्यर्थज्ञापनेऽपि चारितार्थ्यानुपपादनादाह-भाष्ये—अथवा नैषा क्षत्रियाख्येति । देवताविशेष इति—बहुव्रीहिः । देवतापदं चोपलक्षणमित्याहुः ॥ ९८ ॥

* ञ्नित्यादिर्नित्यम् ६ । १ । १९७ † अजाद्यदन्तम् २ । २ । ३३

# जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ ४ । ३ । १०० ॥

सर्ववचनं किमर्थम् ?

सर्ववचनं प्रकृतिनिर्ह्रासार्थम् ॥ १ ॥

सर्ववचनं क्रियते 'प्रकृतिनिर्ह्रासार्थम्' । प्रकृतिनिर्ह्रासो यथा स्यात् ।

तच्च मद्रवृज्यर्थम् ॥ २ ॥

तच्च मद्रवृज्यर्थं द्रष्टव्यम् । माद्रो भक्तिरस्य माद्रौ‡ वा भक्तिरस्य मद्रक इत्येव यथा स्यात् । वार्ज्यो भक्तिरस्य वार्ज्यौ* वा भक्तिरस्य वृजिक इत्येव यथा स्यात्† ॥१००॥

प्र०—जन । जनपदिनः—जनपदस्वामिनः क्षत्रियाः । तद्वाचिनां बहुवचने जनपदवाचिना शब्देन समानश्रुतीनां जनपदवत्सर्वं भवति, सोऽस्य भक्तिरित्येतस्मिन्विषये । यथा अङ्गा जनपदो भक्तिरस्य आङ्गक इ'त्यवृद्धादपी'ति वुञ्भवति । एवमङ्गाः क्षत्रिया भक्तिरस्येत्यत्रापि भवति । एवं स्थिते प्रश्नः—सर्ववचनमिति । अन्तरेणापि सर्ववचनं 'जनपदव'दिति सामान्येनातिदेशः क्रियमाणः सर्वस्य भविष्यतीति भावः ।

प्रकृतिनिर्ह्रासार्थमिति । असति सर्वग्रहणे प्रत्ययस्यैव प्राधान्यादतिदेशः स्यान्न तु प्रकृतेरपि । सर्वग्रहणात्तु भवति । निर्ह्रासः—अपचयोऽल्पत्वमित्यर्थः । वृद्धिनिमित्तेषु वुञादिषु विशेषाभावं मत्वाह—तच्चेति । द्वित्वैकत्वयोश्च शब्दभेदादतिदेशः प्रकृतिनिर्ह्रासार्थो न तु बहुत्वे । तत्र मद्रा इति शब्दभेदाभावात् । मद्रक इति । मद्रस्यापत्यमिति 'द्व्यञ्मगधे'त्यण् । माद्रशब्दस्य मद्रशब्दातिदेशस्तत्प्रत्ययादेशश्च । वार्ज्य इति । वृजेरपत्यमिति 'वृद्धेत्कोसले'ति ञ्यङ् ॥ १०० ॥

उ०—जनपदिनां । करिष्यमाणपूर्वपक्षस्य स्फुटप्रतिपत्तये सूत्रार्थमाह—जनपदिन इति । प्राधान्यादिति । विधेयत्वेन प्राधान्यम् । प्रकरणाच्चेत्यपि बोध्यम् । ननु निर्ह्रासो ह्रस्वः, एवं हि 'वृजिक' इत्यसङ्गतमत आह—निर्ह्रासोऽपचय इति । जनपदाऽधिकारविहितप्रत्ययप्रकृतितुल्यतेति वाच्यार्थः । एवं हि तस्यापचयः फलति ।

वृद्धिनिमित्तेष्विति । 'आङ्गक' इत्यादौ । ननु विग्रहे द्विवचनबहुवचनयोरेवोल्लेखो निर्बीजोऽत आह—द्वित्वेत्यादि । तत्प्रत्ययातिदेश इति । 'मद्रवृज्योः क'न्निति प्रत्ययः ॥ १०० ॥

‡ द्व्यञ्मगधकलिङ्गसूरमसादण् ४ । १ । १७०

* वृद्धेत्कोसलाजादाञ्ञ्यङ् ४ । १ । १७१

† मद्रवृज्योः कन् ४ । २ । १३१

# तेन प्रोक्तम् ॥ ४ । ३ । १०१ ॥

## प्रोक्तग्रहणमनर्थकं तत्रादर्शनात् ॥ १ ॥

प्रोक्तग्रहणमनर्थकम् । किं कारणम् ? 'तत्रादर्शनात्' । ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते तत्रादर्शनात् । न च तत्र प्रत्ययो दृश्यते ।

## ग्रन्थे च दर्शनात् ॥ २ ॥

यत्र च दृश्यते ग्रन्थः सः, तत्र 'कृते ग्रन्थे' [ ४ । ३ । ११६ ] इत्येव सिद्धम् ।

छन्दोऽर्थं तर्हीदं वक्तव्यम्, न हि च्छन्दांसि क्रियन्ते, नित्यानि च्छन्दांसि ।

## छन्दोऽर्थमिति चेत्तुल्यम् ॥ ३ ॥

छन्दोऽर्थमिति चेत्तुल्यमेतद् भवति । ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते तत्रादर्शनात् । न च तत्र प्रत्ययो दृश्यते । 'ग्रन्थे च दर्शनात्' । यत्र च दृश्यते ग्रन्थः सः, तत्र 'कृते ग्रन्थ' इत्येव सिद्धम् । ननु चोक्तं 'न हि च्छदांसि क्रियन्ते, नित्यानि च्छन्दांसी'ति । यद्यप्यर्थो नित्यो या त्वसौ वर्णानुपूर्वी सानित्या ।

प्र०—तेन । प्रपूर्वो वचिः प्रकाशने अध्यापनरूपे वा वर्तते, करणे वा । तत्राद्येऽर्थे प्रत्ययो न दृश्यते, द्वितीये तु सूत्रान्तरेण सिद्धमिति मत्वाह—प्रोक्तग्रहणमिति । ग्रामे ग्राम इति । सुशर्मादीनां प्रतिग्रामं प्रवक्तृत्वेऽपि सुशर्मणा प्रोक्तं काठकं सौशर्मणमिति प्रयोगो न दृश्यत इत्यर्थः ।

नित्यानीति । [1]कर्तुरस्मरणात्तेषामिति भावः । या त्वसाविति । [3]महाप्रलयादिषु वर्णानुपूर्वीविनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयाद्व वेदार्थं स्मृत्वा शब्दरचनां विदधतीत्यर्थः ।

उ०—तेन प्रोक्तम् । कालापककाठकयोर्गोत्रचरणाद् वुञ्धर्माम्नाययोरिति बोध्यम् । प्रपूर्वो वचिरिति । अध्यापनरूपे प्रकाशने वा वर्तते करणे वेत्यन्वयः । ननु 'काठक'मित्यादौ प्रत्ययदर्शनान्न प्रत्ययो दृश्यत इत्यनुपपन्नमत आह—सुशर्मादीनामिति । भाष्ये—ग्रन्थे चेति । तेन कृते ग्रन्थे इत्यर्थः । ग्रन्थः स इति । तेन कृतो ग्रन्थः स इत्यर्थः । तुल्यमेतदिति । वेदानुपूर्व्यनित्येत्यर्थः । अंशेन वेदस्य नित्यत्वं स्वीकृत्यां-

१—'स भवति' पा० ।    २—अनेन वेदानां नित्यत्वमपौरुषेयत्वं च सिध्यति ।

३—वर्णानुपूर्व्यनित्यत्वाच्च नानाशाखात्वं वेदस्य । आह च भगवान् पतञ्जलिः—"एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेदः" [ पस्पशान्हिके ७ वार्तिके, ३८ पृष्ठे ] । विस्तरस्तु मदीये वेदविमर्शे' ( १६–२४ पृ० ) द्रष्टव्यः ।

तद्भेदाच्चैतद्भवति काठकं कालापकं मौदकं पैप्पलादकमिति ।

न तर्हीदानीमिदं वक्तव्यम् ? वक्तव्यं च । किं प्रयोजनम् ? यत्तेन प्रोक्तं न च तेन कृतम्—माधुरी वृत्तिः ।

यदि तर्ह्यस्य निबन्धनमस्तीदमेव वक्तव्यं तन्न‡ वक्तव्यम् । तदप्यवश्यं वक्तव्यम् । यत्तेन कृतम्, न च तेन प्रोक्तम्—वाररुचं काव्यम् । जालूकाः श्लोकाः ॥ १०१ ॥

प्र०—तद्भेदादिति । आनुपूर्वीभेदादित्यर्थः । ततश्च कठादयो वेदानुपूर्व्याः कर्त्तार एव न तु स्थिताया एव सुशर्मादिवत्प्रवक्तारः । ततश्च छन्दस्यपि 'कृते ग्रन्थे' इत्येव सिद्धः प्रत्यय इति भावः । माधुरीति । माधुरेण प्रथमतः प्रकाशितेत्यर्थः । 'कलापिनोऽ'णित्यण्ग्रहणस्याधिकविधानार्थत्वा-द्वृद्धादप्यत्राण्भवति । द्विविधं चेह प्रोक्तं गृह्यते—परकृतं स्वकृतं वा यत्प्रकाशितम् । तेन प्रोक्ताधिकार एव कठादिभ्यो वक्ष्यमाणप्रत्ययविधानम् ॥ १०१ ॥

उ०—शैनानित्यत्वमाह—यद्यप्यर्थ इति । अनेन 'वेदत्वं शब्दार्थोभयवृत्ती'ति ध्वनितम् । ननु 'धाता यथापूर्वमकल्पय'दित्यादिश्रुतिबलेनानुपूर्व्यपि सैवेति नव्यपूर्वमीमांसासिद्धान्तात्सानित्येत्ययुक्तमत आह—महाप्रलयादिष्विति । आनुपूर्व्यास्तत्तत्त्वणाघटितत्वेनानित्यत्वमिति भाव इति केचित्, तन्न, 'यद्यप्यर्थो नित्य' इत्यादिवाक्यशेषविरोधात्, अर्थस्यापि ज्योतिष्टोमादेरनित्यत्वात् । प्रवाहाविच्छेदेन नित्यत्वन्तू-भयोरपि, तस्मान्मन्वन्तरभेदेनानुपूर्वी भिन्नैव । 'प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते' इत्युक्तेरित्यन्ये ।

परे तु । 'अर्थो नित्य' इत्यत्र कृतकत्वविरोधिनित्यत्वस्यैवाभ्युपगमः, पूर्वपक्षिणा तादृशानित्यत्व-स्यैव छन्दस्सूक्तेः । एवञ्चार्थशब्देनात्र ईश्वरः । मुख्यतया तस्यैव सर्ववेदतात्पर्यविषयत्वात्, 'वेदैश्च सर्वैरहमेव वेद्य' इति गीतोक्तेरित्याहुः । वर्णानुपूर्व्या अनित्यत्वे मानमाह भाष्ये—तद्भेदाच्चेति । अनित्यत्वव्याप्यभेदेन तत्सिद्धिः । भेदोऽत्र नानात्वम् । ईश्वरे तु न तत्त्वम् । भेदे मानं व्यवहारमाह—काठकेत्यादि । अर्थैक्येऽप्यानुपूर्वीभेदादेव काठककालापकादिव्यवहार इति भावः । अत्रानुपूर्व्यनित्येत्युक्तेः 'पदानि तान्येवे'ति ध्वनितम् । तदाह—ततश्च कठादय इति । अधिकं मञ्जूषायां द्रष्टव्यम् । ननु माधुरा-द्वृद्धाच्छेन भाव्यमत आह—कलापिनोऽणिति । नन्वेवं कठादिभ्यः प्रोक्ताधिकारे प्रत्ययविधानं व्यर्थं तत्र यत्प्रोक्तं न च तेन कृतमित्यर्थबाधादत आह—द्विविधञ्चेति । प्रोक्ताधिकार एवेति । कृतग्रहणेन स्वाप्रकाशितस्वकृतस्यैव ग्रहणादिति भावः ॥ १०१ ॥

‡ कृते ग्रन्थे ४ । ३ । ११६

## कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ ४ । ३ । १०४ ॥

### प्रत्यक्षकारिग्रहणम् ॥ १ ॥

प्रत्यक्षकारिग्रहणं कर्तव्यम्, अन्तेवास्यन्तेवासिभ्यो मा भूदिति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

### कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य ॥ २ ॥

यदयं कलापिखाडायनग्रहणं करोति* तज्ज्ञापयत्याचार्यो 'नान्तेवास्यन्तेवासिभ्यो भवती'ति । कथं कृत्वा ज्ञापकम् ? वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाडायनः । वैशम्पायनान्तेवासी कलापी । यदि चान्तेवास्यन्तेवासिभ्योऽपि स्यात्कलापिखाडायनग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति ततः कलापिखाडायनग्रहणं करोति ।

### छन्दोग्रहणं चेतरथा ह्यतिप्रसङ्गः ॥ ३ ॥

छन्दोग्रहणं च कर्तव्यम् । 'इतरथा ह्यतिप्रसङ्गः' । इतरथा ह्यतिप्रसङ्गः स्यात् । इहापि प्रसज्येत—तित्तिरिणा† प्रोक्ताः श्लोका इति ॥ १०४ ॥

प्र०—कलापि । प्रत्यक्षकारिग्रहणमिति । करोतेः क्रियासामान्यवाचित्वात्सामान्यस्य सर्वविशेषेषु समवायादध्ययनमिह करणं गृह्यते । शिष्यशिष्याणामपि शिष्यव्यवहारदर्शनाद्वार्त्तिकारम्भः ॥ कलापिखाडायनग्रहणमिति । वैशम्पायनान्तेवासी कलापी । कलाप्यन्तेवासिनां वैशम्पायनान्तेवासित्वाणिणनौ सिद्धे पृथक्कलापिग्रहणं प्रत्यक्षकारिग्रहणे लिङ्गम् । तथा वैशम्पायनान्तेवासी कठः, कठान्तेवासो खाडायनो वैशम्पायनान्तेवासी भवत्येवेति णिनौ सिद्धे शौनकादिषु णिन्यर्थं खाडायनग्रहणं साक्षाच्छिष्यग्रहणे लिङ्गमित्यर्थः ॥ तित्तिरिणेति । छणोऽभावे यथाणन भवति तथा 'छन्दोब्राह्मणानी'त्यत्रोक्तम् ॥ १०४ ॥

उ०—कलापिवैशम्पा । नन्वन्तेवासिनः प्रत्यक्षाध्येतारो न तु तथाकारिणोऽत आह—करोतेरिति । प्रत्यक्षत्वेन साक्षात्त्वमुपलक्ष्यते । ननु शिष्यशिष्या नान्तेवासिनोऽत आह—शिष्यशिष्याणामपीति । कलापीति सूत्रस्य—कलाप्यन्तेवासिभ्यो वैशम्पायनान्तेवासिभ्यश्च णिनिरित्यर्थः । भाष्ये—छन्दोग्रहणञ्चेति । शौनकादिसूत्रे 'छन्दसी'ति योगं विभज्य 'तित्तिरी'त्यादिसर्वसूत्रशेषत्वेन व्याख्येयमिति भावः । इत्यत्रोक्तमिति । 'अनभिधाना'दिति हि तत्रोक्तम् । प्रकारान्तरमपि मया तत्रोक्तम् ॥ १०४ ॥

* कलापिवैशंपायनान्तेवासिभ्यश्च ४ । ३ । १०४ इत्यत्र कलापिग्रहणम् । शौनकादिभ्यश्छन्दसि ४ । ३ । १०६ इत्यत्र गणे खाडायनग्रहणम् ।

† तित्तिरिवरतन्तुखण्डिकोखाच्छण् ४ । ३ । १०२

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ ४ । ३ । १०५ ॥

### पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात् ॥ १ ॥

पुराणप्रोक्तेषु ब्राह्मणकल्पेष्वित्यत्र याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । याज्ञवल्कानि‡ ब्राह्मणानि । सौलभानीति । किं कारणम् ? 'तुल्यकालत्वात्' । एतान्यपि तुल्यकालानीति ॥ १०५ ॥

## कृते ग्रन्थे ॥ ४ । ३ । ११६ ॥

### कृते ग्रन्थे मक्षिकादिभ्योऽण् ॥ १ ॥

कृते ग्रन्थे इत्यत्र मक्षिकादिभ्योऽणवक्तव्यः । मक्षिकाभिः कृतं माक्षिकम् ।

### तद्विशेषेभ्यश्च ॥ २ ॥

तद्विशेषेभ्यश्चाणवक्तव्यः । सरघाभिः कृतं सारघम् गार्मुतम् पौत्तिकम्² ।
स तर्हि वक्तव्यः ? न वक्तव्यः ।

### योगविभागात्सिद्धम् ॥ ३ ॥

योगविभागः करिष्यते* । 'कृते ग्रन्थे' । ततः 'सञ्ज्ञायाम्' । सञ्ज्ञायां च तेन कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सरघाभिः कृतं सारघम्

---

प्र०—पुराण । तुल्यकालत्वादिति । शाटचायनादिप्रोक्तैर्ब्राह्मणैरेककालत्वादित्यर्थः ॥ १०५ ॥

कृते । योगविभाग इति । 'संज्ञायां कुलालादिभ्यो वु'ञिति सूत्रं विभक्तव्य-

---

उ०—पुराणप्रो । शाठ्यायनादिति । येषु ब्राह्मणेषु णिनिरिष्यते तैरेतानि तुल्यकालानीत्येतान्यपि पुराणप्रोक्तानीति भावः । एतेन 'शाट्यायनाद्यपेक्षयैतानि आधुनिकानी'ति वृत्त्याद्युक्तमपास्तम् । 'अत्राणि तद्विषयताया अपि प्रतिषेध' इति 'छन्दोब्राह्मणानी'त्यत्र भाष्ये उक्तम् ॥ १०५ ॥

कृते ग्रन्थे । भाष्ये—मक्षिकादिभ्य इति । अग्रन्थार्थमिदम् । नविन्दं विभक्तमेव पठ्यते तत्क

---

१—"पुराणप्रोक्तेष्विति किम् ? याज्ञवल्कानि ब्राह्मणानि । ·········याज्ञवक्यादयोऽचिरकाला इत्याख्यानेषु वार्ता, तया व्यवहरति सूत्रकारः" इति काशिका-कौमुदी-तत्त्वबोधिनीकर्तॄणां वचनमयुक्तं वार्तिक-भाष्यविरोधात् । याज्ञवल्क्यादयोऽपि तुल्यकाला नाचिरकाला इति वार्तिकमारब्धम् । (द्रष्टव्यम् वैदिकसाहित्य और संस्कृति पृ० २१३ बलदेव उपाध्याय)।

‡ आपत्यस्य च तद्धितेऽनाति ६ । ४ । १५१ इति यलोपः ।

२—'माक्षिकम् सारघम् गार्मुतम् पौत्तिकम्' इति मधुनः संज्ञा एताः ।

* संज्ञायां कुलालादिभ्यो वुञ् ४ । ३ । ११७–११८ एकमेवेदं सूत्रमिति भाष्याशयः ।

गार्ग्युतम् पौत्तिकम् । ततः 'कुलालादिभ्यो वुञ्' । 'संज्ञाया'मित्येव ॥ ११६ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य
तृतीये पादे प्रथममाह्निकम् ।

## तस्येदम् ॥ ४ । ३ । १२० ॥

### तस्येदमित्यसंनिहितेऽप्राप्तिरिदमः प्रत्यक्षवाचित्वात् ॥ १ ॥

तस्येदमित्यसंनिहितेऽप्राप्तिः । किं कारणम् ? 'इदमः प्रत्यक्षवाचित्वात्' । इदमित्येतत्प्रत्यक्षे वर्तते तेनैव स्यात् तस्येदमिति, तस्याद इति तस्य तदित्यत्र न स्यात् ।

### सिद्धं तु यद्योगा षष्ठी तत्र ॥ २ ॥

सिद्धमेतत् । कथम् ? 'यद्योगा षष्ठी प्रवर्तते तत्रे'ति वक्तव्यम् ।

### अनन्तरादिषु च प्रतिषेधः ॥ ३ ॥

अनन्तरादिषु च प्रतिषेधो वक्तव्यः । तस्यानन्तरस्तस्य समीप इति ।

किं यद्योगा षष्ठी प्रवर्तत इत्यतोऽनन्तरादिषु प्रतिषेधो वक्तव्यः ? नेत्याह । सर्वथानन्तरादिषु प्रतिषेधो वक्तव्यः ।

---

प्र०—मित्यर्थः ॥ ११६ ॥

इत्युपाध्यायजैय्यटपुत्र कैय्यटकृते महाभाष्यप्रदीपे चतुर्थस्याध्यायस्य
तृतीये पादे प्रथममाह्निकम् ।

तस्येदम् । इदम इति । इदंशब्दाद्यो्ऽर्थः प्रतीयते तस्मिन्नेव प्रत्ययप्रसङ्ग इत्यर्थः । सिद्धं त्विति । येन सम्बन्धिना योगे षष्ठी विधीयते तस्मिन्नेव प्रत्यय इत्यर्थः । सर्वथेति । पाणिनीये कात्यायनीये च न्यास इत्यर्थः । पाणिनीयन्यासेऽपि देवदत्तस्येदमनन्तरमिति

---

उ०—योगविभागस्य कर्तव्यता चोद्यत इत्यत आह—संज्ञायां कुलालेति ॥ ११६ ॥

इति श्रीशिवभट्टसुतसतीगर्भसम्भवनागोजीभट्टेन कृते भाष्यप्रदीपोद्द्योते
चतुर्थस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

तस्येदम् । नन्विदमित्यनेन सम्बन्धिनि प्रत्ययविधानात्सर्वत्र सेत्स्यतीत्यत आह—इदंशब्दादिति । योऽर्थ इति । प्रत्यक्षविषयत्वावच्छिन्न इत्यर्थः । ननु 'षष्ठी शेष' इत्यस्यान्यसम्बन्धनिमित्तकत्वाभावादाह—येनेति । शेषे विशेषणे षष्ठी विधीयते, विशेषणञ्च विशेष्यनिरूपितमिति भावः । सूत्रन्यासेऽसाधारणं,

### सिद्धं तु परिगणनात् ॥ ४ ॥

सिद्धमेतत् । कथम् ? 'परिगणनात्' । परिगणनं कर्तव्यम् ।

### स्वे ग्रामजनपदमनुष्येभ्यः ॥ ५ ॥

स्वे ग्रामजनपदमनुष्येभ्य इति वक्तव्यम् । स्रौघ्नः माथुरः । ग्राम ॥ जनपद—आङ्गकः वाङ्गकः । जनपद ॥ मनुष्य—दैवदत्तः याज्ञदत्तः ।

### पत्त्राद्वाह्ये ॥ ६ ॥

पत्त्राद्वाह्य इति वक्तव्यम्* । आश्वम् औष्ट्रम् गार्दभम् ।

### रथाद्रथाङ्गे ॥ ७ ॥

रथाद्रथाङ्ग इति वक्तव्यम्† आश्वरथम् औष्ट्ररथम् गार्दभरथम् ।

### वहेस्तुरणिट् च ॥ ८ ॥

वहेस्तृन्तादण्वक्तव्यः, इट् च वक्तव्यः । संवोढुः स्वं सांवहित्रम् ।

### अग्नीधः शरणे रञ् भं च ॥ ९ ॥

अग्नीधः शरणे रञ् वक्तव्यः, भसंज्ञा च वक्तव्या । अग्नीधः शरणमाग्नीध्रम् ।

प्र०—प्रत्ययप्रसङ्गः । सिद्धं त्विति । असंनिहिते प्रत्ययविधानमनन्तरादिषु चाप्राप्तिरित्यर्थः ।

स्व इति । तेनात्मीयज्ञातिधनेष्वेव प्रत्यया भवन्ति न त्वनन्तरादिषु । पत्त्राद्वाह्य इति । 'पत्त्राध्वर्युपरिषदश्चे'त्यत्रायमर्थनिर्देशः ॥ रथादिति । 'रथाद्यत्' 'पत्रपूर्वाद'ञित्येतयोर्योगयोरर्थनिर्देशः । सांवहित्रमिति । तत्र 'पूर्वत्रासिद्ध'मिति ढत्वादीनामिटि कर्तव्येऽसिद्धत्वात्तृचि इटि रूपम् । आग्नीध्रमिति । अग्निमिन्धे इति क्विप् । अन्तर्भावितण्यर्थत्वादिन्धिः सकर्मकः । होता—

उ०—सूत्रवार्तिकन्यासयोः साधारणञ्च दोषं वार्तिककृत्स्वन्यासे परिहरति—सिद्धं त्विति । तद् ध्वनयन् व्याचष्टे—असन्निहिते प्रत्ययविधानमिति । तत्रायं दोष आद्येन 'सिद्धन्त्वि'त्यनेन 'अनन्तरादिषु चे'ति दोषो द्वितीयेन तेनोद्धृत इति भावः । 'असन्निहिते प्रत्ययविधाने'इति पाठे परिगणनेनासन्निहिते प्रत्ययविधाने कृते सति 'अनन्तरादि'ष्विति द्वितीयोऽपि दोष उद्धृत इत्यन्वय इत्येके । आत्मीयज्ञातिधनेष्वेवेति । ग्रामादिभ्य एष्वेवेत्यर्थः । पत्त्राध्वर्य्विति । अत एव 'आश्व'मित्यादि तदुदाहरणं भाष्ये दत्तम् । पत्रपूर्वादिति । अत एव 'आश्वरथ'मित्याद्युदाहरणम् । तृचि—तृजवस्थायाम् ।

होतेति । ऋत्विग्विशेष इत्यर्थः । अन्यथा होत्राख्यऋत्विजस्तस्य भिन्नत्वादसङ्गतिः स्पष्टैव ।

१— इदं क्वचिन्न ।  * पत्त्राध्वर्युपरिषदश्च ४ । ३ । १२३

† रथाद्यत्; पत्रपूर्वादञ् ४ । ३ । १२१, १२२

## समिधामाधाने षेण्यण् ॥ १० ॥

समिधामाधाने षेण्यण्वक्तव्यः । समिधामाधानो मन्त्रः सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ।

## चरणाद्धर्माम्नाययोः ॥ ११ ॥

'चरणाद्धर्माम्नाययो'रिति वक्तव्यम्* । कठानां धर्म आम्नायो वा काठकम् । कालापकम् मौदकम् पैप्पलादकमिति ।

तत्तर्हीदं बहु वक्तव्यम् । सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'तस्येदमित्यसंनिहितेऽप्राप्ति'रिति । किमिदं भवान् प्रत्ययार्थमेवोपालभते न पुनः प्रकृत्यर्थमपि । यथैव हीदमित्येतत्प्रत्यक्षे वर्तते, एवं तदित्येतत्परोक्षे वर्तते । तेनेहैव स्यात्तस्येदमिति, अस्यामुष्येत्यत्र न स्यात् ।

अस्त्यत्र विशेषः । एकशेषनिर्देशोऽत्र भविष्यति†—तस्य चास्य चामुष्य च 'तस्ये'ति । इहापि तर्ह्येकशेषनिर्देशो भविष्यति–तच्चादश्चेदं च 'इद'मित्येव ।

यदप्युच्यतेऽनन्तरादिषु च प्रतिषेधो वक्तव्य इति न वक्तव्यः । अनभिधानादन्तरादिषूत्पत्तिर्न भविष्यति ॥ १२० ॥

प्र०—अग्नीदुच्यते, तस्य शरणं—गृहम्—आग्नीध्रम् । भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वाभावः ।

चरणादिति । 'गोत्रचरणा'दित्यत्रायमर्थनिर्देशः । एकशेषनिर्देश इति । 'त्यदादीनि सर्वैर्नित्य'मित्येकशेषः । 'त्यदादीनां यद्यत्परं तत्तच्छिष्यत' इत्युक्तेः 'पूर्वशेषदर्शनाच्चे'त्युक्तमिति पूर्वस्यापि तदः शेषः । सौत्रत्वाच्च निर्देशस्यैकवचनम् । विभक्त्यन्तानां चैकशेषः । एकशेषद्वारेण चैतत्प्रतिपादयति—षष्ठ्यन्तमात्रं प्रकृतित्वेन विवक्षितं, तत्प्रतियोगिमात्रं च प्रत्ययार्थत्वेन । यत्त्वपरं लिङ्गसङ्ख्याप्रत्यक्षपरोक्षादिकं तदविवक्षितम् ॥ १२० ॥

उ०—भसंज्ञयेति । नन्वस्य भत्वस्याकडारस्थत्वाभावात्कथमनेन पदत्वबाधः, तद्बाधे च कथं नाङ्गत्वबाध इति चेन्न; 'यचि भ'मित्युत्तरं 'रथी'ति कर्तव्यमित्याशयात् । इत्युक्तेरिति । 'अनन्तर'मिति शेषः । इत्युक्तेरनन्तरमित्यर्थः । सप्तम्यन्तपाठे—इत्युक्ते सतीत्यर्थः । निर्देशस्य सौत्रत्वमावश्यकमित्याह—विभक्त्यन्तानामिति । तेषामेकशेषस्य सूत्रानारूढत्वादेकशेषोऽत्र सौत्रः । प्रत्यक्षत्वपरोक्षत्वादिकमिति । षष्ठ्यन्ताद्बुद्धिविषयत्वेन भासमाने बुद्धिविषयेऽर्थे प्रत्यय इत्यर्थ इति भावः । भाष्ये—अनभिधानादिति । अत एव वृक्षादिभ्योऽप्यनन्तरादिषु नोत्पत्तिरिति भावः ॥ १२० ॥

* गोत्रचरणाद् वुञ् ४ । ३ । १२६ † त्यदादीनि सर्वैर्नित्यम् १ । २ । ७२

## द्वन्द्वाद्वुन्वैरमैथुनिकयोः ॥ ४ । ३ । १२५ ॥

### वैरे देवासुरादिभ्यः प्रतिषेधः ॥ १ ॥

वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः । दैवासुरम् राक्षोऽसुरम् ॥ १२५ ॥

## सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ ४ । ३ । १२७ ॥

### सङ्घादिषु घोषग्रहणम् ॥ १ ॥

सङ्घादिषु घोषग्रहणं कर्तव्यम् । गार्गो घोषः । वात्सो घोषः ।

किमर्थो णकारः ? वृद्ध्यर्थः । 'ञ्णिती'ति वृद्धिर्यथा स्यात्‡ ।

### सङ्घादिषु प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ २ ॥

सङ्घादिषु प्रत्ययस्य णित्करणमनर्थकम् । किं कारणम् ? 'वृद्धत्वात्प्रातिपदिकस्य' । वृद्धमेवैतत्प्रातिपदिकम् ।

### लिङ्गपुंवद्भावप्रतिषेधार्थं तु ॥ ३ ॥

लिङ्गपुंवद्भावप्रतिषेधार्थं तु णकारः कर्तव्यः । लिङ्गार्थम्—वैदी* । पुंवद्भावप्रतिषेधार्थम्—वैदी स्थूणास्य वैदीस्थूणः । 'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधो यथा स्यात्† ॥ १२७ ॥

प्र०—सङ्घाङ्क । घोषग्रहणमिति । तेन घोषेऽपि प्रत्ययः सिध्यति । वैषम्याच्च यथासङ्ख्यं न भवति । लिङ्गेति । लिङ्गविहितप्रत्ययो लिङ्गशब्देनोच्यते ॥ १२७ ॥

उ०—सङ्घाङ्क । लिङ्गरूपार्थे पुंवद्भावाभावाल्लिङ्गार्थत्वस्यासि अभावाच्चाह-लिङ्गविहितेति ॥ १२७ ॥

‡ तद्धितेष्वचामादेः ७ । २ । ११७

* टिड्ढाणञ्......कञ्क्वरपः ४ । १ । १५

† वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६ । ३ । ३९

## रैवतिकादिभ्यश्छः ॥ ४ । ३ । १३१ ॥

### कौपिञ्जलहास्तिपदादण् ॥ १ ॥

कौपिञ्जलहास्तिपदादण्वक्तव्यः । कौपिञ्जलाः हास्तिपदाः ।

### आथर्वणिकस्येकलोपश्च ॥ २ ॥

आथर्वणिकस्येकलोपश्चाण्च वक्तव्यः । आथर्वणो धर्मः । आथर्वण आम्नायः ।

इदमाथर्वणार्थमाथर्वणिकार्थं च चतुर्ग्रहणं क्रियते । वसन्तादिष्वथर्वन्शब्द आथर्वणशब्दश्च पठ्यते‡ । षष्ठाध्याये प्रकृतिभावार्थं ग्रहणं क्रियते§ । इदं चतुर्थमिकलोपार्थम् । द्विर्ग्रहणं शक्यमकर्तुम् । कथम् ? 'तेन प्रोक्तम्' [ ४ । ३ । १०१ ] इति प्रकृत्यर्षिभ्यो लुग्वक्तव्यो वसिष्ठोऽनुवाकः विश्वामित्रोऽनुवाक इत्येवमर्थम् ।

प्र०—रैवति । अपाणिनीयः सूत्रेषु पाठ इत्याह-कौपिञ्जलेति । गोत्रवुञि प्राप्तेऽणिवधिः । अस्मादेव निपातनादपत्यार्थे कुपिञ्जलहस्तिपादशब्दाभ्यामण, पादस्य पद्भावश्च । गोत्राधिकाराद्गोत्रप्रत्ययान्तादिदं विधानम् ।

अण्च वक्तव्य इति । 'कौपिञ्जलहास्तिपदाद'णित्यस्यापाणिनीयत्वात् । ऋषिभ्यो लुगिति । वसिष्ठादिशब्दसिद्धयेऽवश्यवक्तव्यो लुक् । नन्वसत्यस्मिन् सूत्रे आथर्वणिकानां धर्म

उ०—रैवतिका । नन्वनयोः कथं गोत्रे साधुत्वमपत्याण इञा बाधादत आह—अस्मादेवेति । अल्लोपस्य स्थानिवत्त्वात्पादः पद्भावाप्राप्तेराह—पद्भावश्चेति । समासान्तलोपस्तु न, 'अहस्त्यादिभ्य' इति प्रतिषेधात् । नन्वनपत्याणन्तमेवात्रोदाहरणमस्त्वित्यत आह—गोत्राधिकारादिति । 'गोत्रचरणा'-दित्यतो गोत्रपदाधिकारः ।

ननु 'आथर्वणिके'त्यत्राणनुवृत्त्यैव सिद्धे'ऽण् च वक्तव्य'इति व्यर्थमत आह—कौपिञ्जलेति । वार्तिकस्थस्य सूत्रेऽनुवृत्तिर्दुर्लभेत्यर्थः । इदमपि वार्तिकमिति तु हरदत्तः । 'काम्ये. रो'रित्यादिवार्तिकानां

१—'कौपिञ्जलः हास्तिपादः' पा० ।

२—केषुचिद् भाष्यपुस्तकेषु "आथर्वणिकस्येकलोपश्च ॥ ४ । ३ । १३२ ॥ इति सूत्रत्वेनेदं मुद्रितमुपलभ्यते, तदनार्षम् । पूर्वसूत्रं [ कौपिञ्जलहास्तिपदादण् ] इदं [ आथर्वणिक० इति ] च वार्तिके दर्शनात् सूत्रेषु प्रक्षिप्त"मिति हरदत्तः । ( पदमञ्जरी ४ । ३ । १३३, पृ० १६० )

‡ वसन्तादिभ्यष्ठक् ४ । २ । ६३ गण० 'अथर्वन् आथर्वण' इत्येतयोः स्थाने 'अथर्वन् अथर्वन्' इत्यशुद्धपाठः काशिकादिषु । § दाण्डिनायनहास्तिनायनाथर्वणिक० ६ । ४ । १७४

ततो वक्तव्य'मथर्वणो वे'ति । तेन सिद्धमथर्वेति, आथर्वण इति च । अथ वसन्तादिष्वाथर्वणशब्दः पठितव्यः । तत्र नैवार्थः प्रकृतिभावार्थेन नापीकलोपार्थेन ।

यदि वसन्तादिष्वाथर्वणशब्दः पठ्यतेऽथर्वाणमधीत आथर्वणिक इति न सिध्यति । नैष दोषः । इहास्माभिस्त्रैशब्द्यं साध्यम् । [ अथर्वाणमधीते, आथर्वणमधीते, आथर्वणिक इति । ] तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन । तद्यथा—अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति आविकमिति । एवमाथर्वणमधीत इति विगृह्य आथर्वणिक इति भविष्यति, अथर्वाणमधीत इति विगृह्य वाक्यमेव । तत्राभिसम्बन्धमात्रं कर्तव्यमाथर्वणिकानामिदमिति, न चेदानीमन्यदाथर्वणिकानां स्वं भवितुमर्हत्यन्यदतो धर्माद्वा आम्नायाद्वा ॥ १३१ ॥

## तस्य विकारः ॥ ४ । ३ । १३४ ॥

तस्येति¶ वर्तमाने पुनस्तस्यग्रहणं किमर्थम् ?

**तस्यप्रकरणे तस्यपुनर्वचनं शैषिकनिवृत्त्यर्थम् ॥ १ ॥**

प्र०—आम्नायो वेत्यत्रार्थे आथर्वणशब्दो न सिध्यतीत्याह—तत्रेति । यदेवाथर्वणा प्रोक्तमाथर्वणं शास्त्रं तदेवाथर्वणिकानामाम्नायो न तु तेषामाम्नायान्तरमाथर्वणशब्दवाच्यं, धर्मस्तु आथर्वणसादृश्यादाथर्वणशब्देनाभिधास्यते । न चेदानीमिति । 'चरणाद्धर्माम्नाययो'रिति वचनादर्थान्तरे प्रत्ययाभावादित्यर्थः ॥ १३१ ॥

तस्य विकारः । शैषिकनिवृत्त्यर्थमिति । विकारावयवयोर्घादयो मा भूवन्नित्येवमर्थं

उ०—सूत्रेष्वनुवृत्तिदर्शनात्कैयटोक्तं चिन्त्यम् ॥ ननु 'ऋषिभ्यो लु'गिति वाच्यम्, अथर्वग्रहणं वा, को विशेषोऽत आह—वसिष्ठादीति । इत्याहेति । इतिर्हेतौ । भाष्ये—तत्राभिसम्बन्धमात्रमिति । तत्र 'आथर्वणिकसम्बन्ध्याम्नाय' इत्यर्थे सम्बन्धबोधकषष्ठीघटितवाक्यमेव प्रयोक्तव्यं, न तु ततः प्रत्यय इति भावः । आथर्वणसादृश्यादिति । सादृश्यञ्चाथर्वानुष्ठिततया तत्क्रियाविषयत्वेनेति बोध्यम् । ननु पुत्रधनादिकमपि तेषां स्वमत आह—चरणादिति । 'तस्येद'मित्यस्य व्यवस्थापकमेतदित्यर्थः ॥ १३१ ॥

तस्य विकारः । ननु वक्ष्यमाणप्रकृतिभ्यस्तत्प्रत्ययैर्बाधादेव शैषिकसामान्यप्रत्ययनिवृत्तिः । सिद्धेत्यत आह—विकारेत्यादि । भाष्ये—शैषिकेत्यस्य तदधिकारविहितघादीत्यर्थ इति भावः । अधिकारादेव

१—अयं पाठः कीलहार्नपुस्तके नास्ति । ¶ तस्येदम् ४ । ३ । १२० ॥

तस्य प्रकरणे तस्येति पुनर्वचनं क्रियते शैषिकनिवृत्त्यर्थम् । शैषिका* निवर्त्यन्ते ॥ कथं च प्राप्नुवन्ति ?

**तस्येदंवचनात्प्रसङ्गः ॥ २ ॥**

तस्येदंविशेषा ह्येतेऽपत्यं समूहो निवासो विकार इति† ।

किमर्थमिदमुच्यते ?

**बाधनार्थं कृतं भवेत्[1] ।**

ये तस्य‡ बाधकास्तद्बाधनार्थम् ॥ कथं पुनरशैषिकः शैषिकं बाधते[2] ?

**उत्सर्गः शेष एवासौ**

यो ह्युत्सर्गः सोऽपि शेष एव ।

प्र०—तस्यग्रहणमित्यर्थः । कथं चेति । किमधिकारात्प्राप्नुवन्ति, अथ 'तस्येद'मिति वचनात् ? यद्यधिकारात्प्राप्तानां तस्यग्रहणेन निवृत्तिः क्रियते तदा पुनरपि तस्येदमित्यनेन प्राप्नुवन्ति । अथ 'तस्येद'मित्यनेन प्राप्तानां 'तस्य'ग्रहणेन निवृत्तिः क्रियते तदासौ नोपपद्यते, उत्तरार्थत्वादस्य योगस्य तत्रैव चरितार्थत्वादिति प्रश्नः ।

तस्येदंवचनादिति । तस्यग्रहणं घादिसंबद्धस्य तस्यग्रहणस्य निवर्तकं,–घादीनपि निवर्तयति । तन्निवर्तनसामर्थ्या'त्तस्येद'मित्यनेनापि विकारावयवयोर्घादयो न भवन्ति । अन्यथा तन्निवर्तनमनर्थकं स्यादित्यर्थः । प्राग्दीव्यत इत्यवधिविशेषाश्रयेण त्वणादीनामधिकारादणादय इह संबध्यन्त इति विपर्ययोऽत्र न चोदनीयः–घादयोऽनुवर्तन्ताम्, अणादयो मानुवृतन्निति ।

किमर्थमिति । सर्वस्यैव सूत्रस्याक्षेपः । बाधनार्थमिति । 'तस्येद'मित्यत्राणादयो घादयश्चाणाद्यपवादा विहिताः । तत्र विकारावयवयोरणादय एव यथा स्युस्तदपवादा घादयो मा भूवन्नित्येवमर्थमिदमुच्यते । ये तस्येति । अण इत्यर्थः ।

कथं पुनरिति । 'तस्येद'मित्यस्मा'त्तस्य विकार' इत्यस्य पृथङ्निर्देशादनेन विधीयमानोऽण्प्रत्ययोऽशैषिकः कथं विकारेऽप्राप्तान्घादीन्बाधत इति प्रश्नः । उत्सर्ग इति । असत्य-

उ०—प्राप्तिसत्त्वात्'कथञ्चे'त्यनुपपन्नमत आह—किमिति । तत्रैवेति । अर्थनिर्देशवत्समर्थविभक्तिरप्युत्तरत्र चरितार्थेत्यभिमानः । सर्वस्यैवेति । 'तस्येद'मित्यनेनैव सिद्धेर्योगविषयः प्रश्न इत्यर्थः । नन्वपत्यादिचतुर्थीपर्यन्तादन्यत्वेन कथमशैषिकत्वमत आह–तस्येदमित्यस्मादिति । पृथग्योगकरणात्तस्यग्रहणाच्चास्याशैषिकत्वमित्यर्थः । अयम्भावः, 'तत्र जात' इत्यादिषु 'शेष' इति सम्बध्यते । यत्र यत्र च तस्य सम्बन्धस्ते शैषिकाः । अत्र च पृथग्योगात्तस्य ग्रहणाच्च तदसम्बन्ध इत्ययमशैषिक इति ।

* राष्ट्रावारपाराद् घखौ–रैवतिकादिभ्यश्छः ४ । २ । ९३–४ । ३ । १३१

† तस्यापत्यम् ४ । १ । ९२; तस्य समूहः; तस्य निवासः ४ । २ । ३७; ६९

१—श्लोकवार्तिकस्य द्वितीयतृतीयचरणावेवेह प्रसङ्गादुद्धृतौ । तस्यापत्यम् ४ । १ । ९२ सूत्रे कृत्स्नं व्याख्यातमतस्तत्रैव द्रष्टव्यम् । ‡ प्राग्दीव्यतोऽण् ४ । १ । ८३ २—'बाधेत' पा० ।

के पुनः शैषिकाणां विकारावयवयोः प्राप्नुवन्ति यावता सर्वमपवादैर्व्याप्तम् ? इह न किंचिदुच्यते 'हलसीराट्ठक्,' [ ४ । ३ । १२४ ] इति ।

कथं पुनरिच्छताप्यपवादः प्राप्नुवन् शक्यो बाधितुम् ? 'तस्य'ग्रहणसामर्थ्यात् ।

किमिदं भवानध्यारुह्य 'तस्य'ग्रहणस्यैव प्रयोजनमाह न पुनः सर्वस्यैव योगस्य ? अवश्यमुत्तरार्थोऽर्थनिर्देशः कर्तव्यः । समर्थविभक्तिरपि तर्ह्यवश्यमुत्तरार्था निर्देष्टव्या । प्रकृता समर्थविभक्तिरनुवर्तते 'तस्येद'मिति ।

**न वा संप्रत्ययः ॥ ३ ॥**

न वा संप्रत्यय इयता सूत्रेण शैषिकाणां निवृत्तेः । न हि काको वाश्यत

प्र०—स्मिन्पृथक्सूत्रे विकारोऽपि तस्येदमित्यत्रान्तर्भावाच्छेषो भवतीति घादयः प्राप्नुवन्ति । उत्सर्गत्वं विकारस्य प्रकृतिविशेषासम्बन्धात् । असति हि योगविभागे 'बिल्वादिभ्योऽण्विकार' इति वक्तव्यम् । तत्र प्रकृतिविशेषासम्बद्ध एव विकार उपयुक्तत्वादशेषः स्यात् । प्रकृतिमात्रसंबद्धस्त्वनुपयोगाच्छेष एव स्यात् । सति तु योगविभागे विकारस्याण्विधावुपयोगादशेषत्वाद्घादीनामप्राप्तिः । अप्राप्त्यनुमानमेव बाधेति भावः ।

के पुनरिति । शैषिकाणामिति निर्धारणे षष्ठी । अपवादैरिति । वक्ष्यमाणैरणादिभिरित्यर्थः । हलसीरादिति । हलशब्दो 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्तः । सीरशब्दोऽपि क्रन्नन्तो नित्त्वात् । ततश्चैताभ्यां विकारे न कश्चिदणपवादोऽस्तीति ठकं बाधित्वाणेव भवति—हालः सैर इति । कथं पुनरिति । 'हलसीराट्ठ'गित्ययमणपवादः कथमणैव शक्यो बाधितुं, योगस्तूत्तरार्थ एव स्यादिति प्रश्नः । तस्यग्रहणसामर्थ्यादिति । बाधकबाधनार्थादणः पुनर्विधानादित्यर्थः । तस्यग्रहणमेवानन्यार्थमिति तत्सामर्थ्यादित्युक्तम् । इदमर्थाद्विकारस्योत्कर्षो बाधकबाधनार्थ एवेत्यर्थः । न वेति । घादीनां प्राधान्यात्तस्यग्रहणे गुणे प्राक्तने निवर्तमानेऽपि निवृत्तिर्न शक्यते प्रतिपादयितुं, न हि गुणानुयायि प्रधानं भवति ।

उ०—विकारेऽप्राप्तानिति । अस्य शेषत्वाभावात्तस्येदमित्यनेनापि न प्राप्तिरिति भावः । विकारोऽपीति । प्रकृतिविशेषासम्बद्ध इत्यादिः । उत्सर्गत्वञ्चेति । 'योगविभागे'इति शेषः । उपयुक्तत्वादशेष इति । उपयुक्तश्च—उक्तो वक्ष्यमाणो वेत्यन्यत् । नन्वप्राप्तौ कथं तद्बाधकत्वमत आह—अप्राप्तीति । वक्ष्यमाणैरिति । केषुचित्कोपधाच्चण, केषुचिदोरञ्, केषुचिदनुदात्तादेरञिति भावः । ननु हलसीराभ्यामप्यनुदात्तादेरञित्यस्य प्राप्तिरत आह—हलशब्द इति । नन्वारम्भसामर्थ्यादेव बाधो भविष्यतीत्यत आह—योगस्त्विति । ननु सम्पूर्णसूत्रसामर्थ्यमेव कुतो नोक्तमत आह—तस्यग्रहणमेवेति । 'तस्ये'त्यनुवृत्त्यैव सिद्धेरिति भावः । अर्थनिर्देशस्तूत्तरार्थ इति बोध्यम् । तत्फलितमाह—इदमर्थादिति । प्राधान्यादिति । विधेयत्वेन तत्त्वम् ।

१—'मद्यापवादै':पा० ।

इत्येवाधिकारा निवर्तन्ते । यदि खल्वपि विकारावयवयोः शैषिका नेष्यन्ते, महता सूत्रेण निवृत्तिर्वक्तव्या ।

**अवयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिः ॥ ४ ॥**

अवयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिरिष्टा, तत्र च निवृत्तिः प्राप्नोति × । पाटलिपुत्रकाः+ प्रासादाः, पाटलिपुत्रकाः प्राकारा इति ।

**अण्मयटोश्च विप्रतिषेधानुपपत्तिर्मयडुत्सर्गात् ॥ ५ ॥**

अण्मयटोश्च विप्रतिषेधो नोपपद्यते । पठिष्यति हि विप्रतिषेधमणो वृद्धान्मयडिति* स विप्रतिषेधो नोपपद्यते । किं कारणम् ? मयडुत्सर्गात् । निवृत्तेषु हि शैषिकेषु वृद्धान्मयडुत्सर्गस्तस्याणपवादः, उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः ।

**अनुवृत्तौ हि च्छोत्सर्गापवादविप्रतिषेधान्मयट् ॥ ६ ॥**

अनुवर्तमानेषु हि शैषिकेषु वृद्धाच्छ† उत्सर्गस्तस्याणमयटावपवादौ । अपवादविप्रतिषेधान्मयड्भविष्यति ।

प्र०—अवयवे चेति । अवयवेऽर्थे घादीनां निवृत्तत्वादप्राण्योषधिवृक्षेभ्योऽप्रसङ्ग इत्यर्थः । पाटलिपुत्रका इति । पाटलिपुत्रस्यावयवा इति तस्येदमित्यत्रार्थे 'रोपधेतोः प्राचा'मिति वुञ् । मयडुत्सर्गादिति । मयडुत्सर्गः शैषिकेषु निवृत्तेषु सामान्येन विधानमित्यर्थः । अप्राप्त एव वृद्धाच्छे 'नित्यं वृद्धे'ति मयडारम्भात् । 'अनुदात्तादे'रित्ययमत्रवृद्धेषु कृतार्थस्तत्राविशेषादण्मयटोः 'कोपधाच्चे'त्ययमपवादोऽणिति शाकमयमित्यत्र मयण्न लभ्यत इत्यर्थः । अपवादविप्रतिषेधा-

उ०—भाष्ये—महता सूत्रेणेति । 'घादयो विकारावयवयोर्न'त्येवं सूत्रं कार्यमित्यर्थः ।

नन्ववयवे च प्राण्योषधिवृक्षेभ्य इत्युक्ते कथं तद्भिन्नेभ्योऽवयवेऽनिवृत्तिरित्यत आह—अवयवेऽर्थे इति । तेषामवयवार्थेनासम्बन्ध इत्यभिमानः । पाटलिपुत्रस्येमे इति । इदन्त्वेनावयवबोधे वुञिष्टस्तदाह—पाटलिपुत्रस्यावयवा इति । यद्वा तत्सम्बन्धिनो येन केनापि रूपेण बोधे प्रत्यय इति भावः । मयडुत्सर्गादिति—भाष्यस्य मयटः सामान्येन विधानान्न त्वन्यत्र प्राप्ते विधानादित्यर्थः । तदाह—मयडुत्सर्ग इति । षष्ठीतत्पुरुषः । ननु 'नित्यं वृद्धे'ति मयटश्छापवादत्वसम्भवात्कथमुत्सर्गत्वमत आह—अप्राप्ते एवेति । शैषिकाणामेतयोरर्थयोरप्राप्तेरिति भावः । अविशेषादिति । बाध्यसामान्यचिन्तयेत्यर्थः । अपवादोऽणिति । मयट् त्वनपवाद इति समबलत्वाभाव इति भावः । भाष्ये—छोत्सर्गापवादेति । छस्य उत्सर्गस्यापवादयोर्विप्रतिषेधादित्यर्थः ।

× अवयवे च प्राण्यौषधिवृक्षेभ्यः ४ । ३ । १३५  + रोपधेतोः प्राचाम् ४ । २ । १२३
* ४ । ३ । १५६ वा० १  † वृद्धाच्छः ४ । २ । ११४

यत्तावदुच्यते 'न वा संप्रत्यय इयता सूत्रेण शैषिकाणां निवृत्ते'रिति सम्प्रत्यय एव । न ह्यत्राण्दुर्लभः । सिद्धोऽत्राण् तस्येदमित्येव । सोऽयं पुनस्तस्य ग्रहणेन तस्य सापवादस्याणः प्रसङ्ग इमं निरपवादकमणं प्रतिपादयति । तत्र ये तावद्द्वितीयास्तानपवादत्वाद्बाधिष्यते, ये तृतीयास्तान्परत्वाद्, ये चतुर्थास्तत्र केचित् 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त' इत्येवमिमं न बाधिष्यन्ते, केचिन्'मध्येऽप-

प्र०—दिति । शाकशब्दाच्छापवादयोरणमयटोः परत्वान्मयट् सिध्यतीत्यर्थः ।

इदानीं भाष्यकारः सूत्रेणैवेष्टसिद्धिं प्रतिपादयितुमाह—यत्तावदिति । इममिति । घादीनामिह निवृत्तत्वादयमणिनरपवादः। घाद्यनुवृत्तौ हि योगविभागोऽनर्थकः स्यात्तस्येदमित्यनेनैव विकारेऽप्यणादीनां घादीनां च सिद्धत्वात् । तत्रेति । यथा 'हलसीराट्ठ'गित्यणि प्राप्ते ठग्विधीयमानो द्वितीयो भवति तमपवादत्वादयमण्बाधते तृतीयकक्षां प्राप्तः । ये तृतीया इति । तृतीयस्थानप्राप्तत्वादस्याणस्तुल्यकक्ष्यत्वात्परत्वाद्बाध्याः । यथा वृजीनां विकार इति तस्येदमित्यण्प्रथमः । अवृद्धादपीति वुञ्द्वितीयः । मद्रवृज्योः कन्निति तृतीयोऽनेन बाध्यते । वार्जं इति । वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनान्तोदात्तत्वविधानात्पक्षे आद्युदात्तत्वादण् । पक्षे 'अनुदात्तादेश्चे'त्यञ् । ये चतुर्था इति । यथा त्रिगर्तानां विकारस्त्रैगर्त इति । अत्र त्रिगर्तशब्दो बहुव्रीहिः पूर्वपदप्रकृतिस्वरेणान्तोदात्तः । अत्राण्प्रथमः । जनपदलक्षणो वुञ्द्वितीयः । गर्त्तोत्तरपदलक्षणश्छस्ततीयः । तदवधिग्रहणविहितो वुञ्चतुर्थः । केचिन्मध्य इति । यथा रङ्कूणां विकारो राङ्कव इति । अत्राण्प्रथमः । तदपवादयोरवृद्धादपीति 'ओर्देशे ठ'ञिति वुञ्ठञोस्तुल्यकक्ष्ययोरन्यतरो द्वितीयः । ततः 'कोपधाद'णिति वा कच्छादिपाठाद्वाण्तृतीयः । 'मनुष्यतत्स्थयोर्वु'ञिति चतुर्थः । पूर्वमेवाणं बाधते न तु विकाराणं बाधते । तेनैव तु परत्वाद्वुञ्बाध्यते । तत 'ओर'ञित्यञि प्राप्ते 'कोपधाच्चे'त्यण्प्रतिप्रसूयते ।

उ०—आर्षत्वाद्वृत्तिर्गमकत्वाद्वा । छापवादयोरिति । एवञ्चापवादत्वेन समत्वाद्विप्रतिषेधोपपत्तिरित्यर्थः ।

नन्वग्रेऽस्याप्यपवादानां वक्ष्यमाणत्वात्कथमयं निरपवादोऽत आह—घादीनामिति । अपवादशब्दस्तद्विशेषपर इति भावः । तन्निवृत्तावुक्तां युक्तिं स्मारयति—घाद्यनुवृत्तौ हीति । उत्सर्गस्य साक्षाद्बाधको द्वितीयः, तद्बाधकस्तृतीय इत्याह—यथेति । तमपवादत्वादिति । योगविभागात्तस्यग्रहणसामर्थ्याच्चेति भावः । तुल्यकक्ष्यत्वादिति । साक्षादण्बाधकबाधेन चरितार्थत्वादिति भावः ।

ननु 'वार्जं' इत्यत्र कथमण्, अनुदात्तादित्वेनाञ उचितत्वादित्यत आह—वृजिशब्दस्येति । फिट्सूत्रेष्विति । 'ह्यादीनामसंयुक्तलान्तानामन्तः पूर्वं वे'त्यनुवर्तमाने 'इगन्तानाञ्च द्व्यषा'मित्यनेन । अञ्प्राप्तिविघातायाह—पूर्वपदेति । अत्राण् प्रथमः, जनपदलक्षणो वुञ् द्वितीय इति पाठः । अत्र चतुर्थस्य वुञस्तृतीयकक्ष्याप्राप्तबाधकत्वेन बलवत्त्वात्तम्प्रति परत्वस्याप्रयोजकत्वात्सोऽस्याप्यणो बाधकः स्यादत

वादाः पूर्वान्विधीन्बाधन्त' इति । एतावन्तश्चैवैते स्युर्यदुत द्वितीयास्तृतीयाश्चतुर्था वा । न पञ्चमाः सन्ति न षष्ठाः ।

यदप्युच्यते'ऽवयवे चाप्राण्योषधिवृक्षेभ्यो निवृत्ति'रिति प्राण्योषधिवृक्षेभ्यो निवृत्तिरुच्यते तत्र कः प्रसङ्गो यदप्राण्योषधिवृक्षेभ्यो निवृत्तिः स्यात् ।

यदप्युच्यतेऽएमयटोश्च विप्रतिषेधानुपपत्तिर्मयड्उत्सर्गादिति मा भूद्विप्रतिषेधः । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त' इत्येवमणं‡ बाधिष्यते, मयटं न बाधिष्यते ॥ १३४ ॥

## अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ ४ । ३ । १३५ ॥

किमर्थं विकारावयवयोर्युगपदधिकारः [ क्रियते ] ?

### विकारावयवयोरुक्तम् ॥ १ ॥

किमुक्तम् ? तत्र§ तावदुक्तं 'भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि ता'विति । इहापि विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः,

प्र०—न पञ्चमा इति । शैषिका इति शेषः । अन्यथा प्रावृषो विकारः प्रावृण्मय इति मयडस्त्येवात्राण्प्रथमः । तदपवादः कालाट्ठञिति द्वितीयः । ऋत्वण्तृतीयः । 'प्रावृष एण्य' इति चतुर्थः । विकाराण्पञ्चमः । 'नित्यं वृद्धे'ति मयट् षष्ठो भवति ।

यदपीति । 'अवयवे च प्राण्यौषधिवृक्षेभ्य' इति प्रकृतिविशेषाद्विधीयमानोऽणतस्मादेव शैषिकाणां बाधको न तु प्रकृत्यन्तरात्, स्वयमेवाभावादित्यर्थः । अञमिति । 'ओरञ्' अनुदात्तादेश्चे'ति सूत्रद्वयविहितं कोपधाच्चेत्यणबाधिष्यते न तु मयटम् । मयटैव तु परत्वादणबाधिष्यत इत्यर्थः ॥ १३४ ॥

अवयवे । कृतनिर्देशौ ह्येताविति । यद्यपि शैषिकनिवृत्त्यर्थत्वमुक्तं तथापि तदनपेक्ष्य

उ०—आह-भाष्ये-केचित्पुरस्तादिति । तत ओरञीति । विकारे इत्यर्थः । स्वयमेवाभावादिति । एवञ्चात्र घादीनां निवृत्तावपि 'तस्येद'मित्यनेन 'पाटलिपुत्रका' इत्यादौ वुञ्सिद्धिरिति भावः । "परत्वादण् बाधिष्यते" इति पाठः ॥ १३४ ॥

अवयवे च । तदनपेक्ष्येति । यथा सामान्यविधानेऽपि 'स्वे ग्रामे'त्यादिव्यवस्थाभिधानमूलिका, तथानभिधानादेव घादीनां विकारावयवयोरभाव इति तदनपेक्ष्येति भावः । 'तथापि तदनपेक्ष्यैतदु'-

‡ ओरञ्; अनुदात्तादेश्च ४ । ३ । १३९; १४० १—क्वाचित्कः पाठः ।
§ ४ । ३ । ६६ वा० १; २

कृतनिर्देशौ ह्येतावर्थौ 'तस्येदम्' [ ४ । ३ । १२० ] इति ॥ १३५ ॥

## बिल्वादिभ्योऽण् ॥ ४ । ३ । १३६ ॥

किमर्थं बिल्वादिषु गवीधुकाशब्दः पठ्यते न 'कोपधाद'ण्इत्येव सिद्धम्¶ ?

**बिल्वादिषु गवीधुकाग्रहणं मयट्प्रतिषेधार्थम् ॥ १ ॥**

बिल्वादिषु गवीधुकाग्रहणं क्रियते मयट्प्रतिषेधार्थम् । मयडतो मा भूदिति* ॥ १३६ ॥

## अनुदात्तादेश्च ॥ ४ । ३ । १४० ॥

**अनुदात्तादेरञो विधान आद्युदात्तान्ङीष उपसङ्ख्यानम् ॥ १ ॥**

अनुदात्तादेरञो विधान आद्युदात्तान्ङीष उपसङ्ख्यानं कर्तव्यम् । कुवली—कौवलम् । बदरी—बादरम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । निघाते कृतेऽनुदात्तादेरित्येव सिद्धम् ॥ न सिध्यति । किं कारणम् ?

**पदस्य ह्यनुदात्तादित्वम् ॥ २ ॥**

पदस्य हि निघातः, सुबन्तं च पदम्, ङ्याप्प्रातिपदिकाच्च प्रत्ययो विधीयते† ।

प्र०—[ क्वचित्त्वा'वदणादयस्सिद्धाः—भास्मनं मार्तिकमित्यभिसंबन्धाय ] एतदुक्तम् ॥ १३५ ॥

अनु । कुवलीति । कुवलबदरशब्दौ 'ग्रामादीनां चे'त्याद्युदात्तौ । ताभ्यां गौरादित्वान्ङीष् । पदस्येति । 'अनुदात्तं पदमेकवर्ज'मिति वचनात् । इह चानुदात्तादिग्रहणस्य ङ्याप्प्रातिपदिकविशेषणत्वात् । यथोक्तं 'वृद्धावृद्धावर्णस्वरद्वयज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थ'मिति ।

उ०—कमित्येव कैयटे साम्प्रदायिक पाठः ॥ १३५ ॥

बिल्वादिभ्यो । भाष्ये—मयडत इति । परत्वान्मयड्वैतयोरिति प्राप्तः ॥ १३६ ॥

अनुदात्ता । आद्युदात्तान्ङीषित्यस्याद्युदात्तप्रकृतिकङीषन्तादित्यर्थः । ननु सुबन्तात्तद्धितोत्पत्तेस्तस्यैवानुदात्तादित्वं विशेषणमतो न दोषोऽत आह—अनुदात्तादिग्रहणस्येति । एवं च ङ्यन्तादेरेव प्रकृतित्वं न च तदनुदात्तादीति भावः । नन्वाद्युदात्तादिविषये परस्यापि निघातदर्शनात् 'पूर्वस्य निघात'

¶ कोपधाच्च ४ । ३ । १३७ * मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः ४ । ३ । १४३

† अनुदात्तं पदमेकवर्जम् ६ । १ । १५८; सुप्तिङन्तं पदम् १ । ४ । १४; स्वौजसमौट्...... ङ्योस्सुप् ४ । १ । २

१—अयं प्रदीपपाठोऽसाम्प्रदायिक इति नागेशाशयः ।

## न वा समर्थस्यानुदात्तादित्वात् ॥ ३ ॥

न वा कर्तव्यम् । किं कारणम् ? 'समर्थस्यानुदात्तादित्वात्' । समर्थमनुदात्तादित्वेन विशेषयिष्यामः ।

नैवं शक्यम् । इह च प्रसज्येत—वाचो विकारः, त्वचो विकार इति । एतद्धि समर्थमनुदात्तादि । इह च न स्यात्—सर्वेषां विकार इति‡ । तस्मान्नैवं शक्यम् । न चेदेवमुपसङ्ख्यानं कर्तव्यम् ।

न कर्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति 'यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात' इति, यदयं भिक्षादिषु§ गर्भिणीशब्दस्य पाठं करोति । कथं कृत्वा ज्ञापकम् ? भिक्षादिषु गर्भिणीशब्दस्य पाठ एतत्प्रयोजनम् 'अनुदात्तादिलक्षणोऽञ्मा भू'दिति* । यदि च पदस्य निघातो गर्भशब्दोऽयमाद्युदात्तस्तस्मादिनिः, इनन्ताद्यः प्रत्ययः प्राप्नोति स तावत्स्यात्, तस्मिन्नवस्थिते निघातः, तत्र कोऽनुदात्तादिलक्षणस्याञः प्रसङ्गः । पश्यति त्वाचार्यो 'यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात' इति । अतो भिक्षादिषु गर्भिणीशब्दं पठति ।

पदग्रहणं किमर्थम् ?

प्र०—न वेति । विभक्त्युत्पत्तौ सत्यां ङ्यन्तस्यानुदात्तादित्वं मन्यते । न च वृद्धावृद्धेत्यनेन विरोधः, समर्थावयवस्य ङ्याप्प्रातिपदिकस्य वृद्धादिविशेषणत्वेनाश्रयणात् ।

एतद्धीति । 'सावेकाच' इति विभक्तेरुदात्तत्वात्प्रातिपदिकयोस्तु धातुस्वरेणान्तोदात्तत्वम् । सर्वशब्दश्च 'सर्वस्य सुपी'ति सुप्याद्युदात्तः । केवलस्त्वयमुणादिष्वन्तोदात्तो निपातित इत्यनुदात्तादिः । तस्माद्विभक्त्युत्पत्तेः प्रागनुदात्तादित्वमाश्रयणीयम् । पूर्वस्य निघात इति । प्राग्व्यवस्थितस्य निघात इत्यर्थः । गर्भशब्द इति । 'अर्तिगृभ्यां भ'न्निति प्रत्ययस्य नित्त्वात् ।

उ०—इत्यसङ्गतमत आह—प्रागिति । प्राग्व्यवस्थितस्य तु तत्समकालमेव निघातोऽसन्निहितस्य तु पश्चादन्यतो'ऽनुदात्तौ सुप्पिता'विति भाष्येण न विरोध इति बोध्यम् । भाष्ये—तस्मादिनिरिति । स प्रत्ययस्वरेणोदात्तः । इनन्ताद्यः प्रत्यय इति । इनन्तान्ङीपि यः पदत्वप्रयोजकः सुप् स तावत्प्रथमं ततो निघात इति सुबुत्पत्तेः पूर्वं ङ्यन्तस्यानुदात्तादित्वाभावादञोऽप्राप्तिरित्यर्थः । यावत्येवेति । यदैवेत्यर्थः । यस्य पदत्वमिति । इदमुपलक्षणम् । यावतः पदत्वं तावति येऽन्यो भाविनस्तेषामुदात्तादिप्रवृत्तिकालेऽसन्निहिता-

‡ सावेकाचस्तृतीयादिर्विभक्तिः; सर्वस्य सुपि ६ । १ । १६८; १९१

§ भिक्षादिभ्योऽण् ४ । २ । ३८ * अनुदात्तादेरञ् ४ । २ । ४४

१—'तस्मादिनन्ताद्यः' ।

पदग्रहणं परिमाणार्थम् ॥ ४ ॥

पदग्रहणं क्रियते परिमाणार्थम् । पदावधेर्यथा[1] स्याद्वाक्यस्य मा भूदनुदात्तं पदमेकवर्जम् [ ६ । १ । १५८ ] इति ॥ १४० ॥

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ ४ । ३ । १४३ ।

किमर्थं मयड्वैतयोरित्युच्यते[2] ?

मयड्वैतयोर्वचनमपवादविषयेऽनिवृत्त्यर्थम् ॥ १ ॥

मयड्वैतयोरित्युच्यतेऽपवादविषयेऽनिवृत्तिर्यथा स्यात् । बिल्वमयम् बैल्वम्* ।

एतयोरित्यर्थनिर्देशः ॥ २ ॥

एतयोरित्यर्थनिर्देशो द्रष्टव्यः ॥ द्वेष्यं[3] विजानीयाद्योगयोर्वा [4]प्रत्यययोर्वेति । तदाचार्यः सुहृद्भूत्वान्वाचष्ट 'एतयोरित्यर्थनिर्देश' इति ॥ १४३ ॥

ञितश्च तत्प्रत्ययात् ॥ ४ । ३ । १५५ ॥

किमर्थमिदमुच्यते ?

प्र०—पदग्रहणमिति । यस्य पदत्वं भविष्यति तस्यैवैकवर्जमनुदात्तत्वं यथा स्यात् पदसमूहस्य मा भूदित्येवमर्थं पदग्रहणमित्यर्थः ॥ १४० ॥

मयड् । किमर्थमिति । विकारावयवौ प्रकृतावेवेति भावः । मयडिति । एतयोरित्येतस्मिन्सति पुनर्विधानं मयटो भवति, तच्चापवादविषयेऽपि प्राप्त्यर्थं संपद्यते । योगयोर्वेति । योगयोः प्रत्यययोर्वा विषये मयडित्यर्थः स्यादित्यर्थः ॥ १४३ ॥

ञितश्च तत्प्रत्ययात् । तयोर्विकारावयवयोर्यो ञित्प्रत्ययः तदन्ताद्विकारावयवयोरेवाऽभवतीति सूत्रार्थः । किमर्थमिति । अन्तरेणापि सूत्रं सिद्धिं मत्वा प्रश्नः । विकारावयवयो-

उ०—नामपि निघातार्थमित्यपि बोध्यम् ॥ १४० ॥

मयड्वैतयोः । नन्वेतयोरित्युक्तिमात्रेण कथमपवादबाधकत्वमत आह—एतयोरितीति । योगविभागेनावृत्त्या वा पुनर्विधानमित्यर्थः । योगयोरिति । 'पलाशादिभ्यो वा' 'शम्याःष्ल'ञित्येतयोरित्यर्थः । प्रत्यययोः—अञ्ष्लञोरित्यर्थः ॥ १४३ ॥

ञितश्च । विकारावयवयोरेवेति । एवकारः स्वरूपकथनपरः । क्वचित्तद्रहित एव पाठः । अन्तरेणापीति । वक्ष्यमाणप्रत्याख्यानरीत्येति भावः । सक्थ्यादेः कापोतस्येति । नन्वस्य प्राण्योषधिवृक्षत्वा-

१–'पदावधेर्यथा स्या'दिति कीलहार्नपुस्तके नास्ति ।
२–'किमर्थमेतयोरित्युच्यते' इति कीलहार्नपाठः ।
३–'तद्द्वेष्यं' पा० ।
४–'योगयोर्वाऽप्रत्यययोर्वेति' पा० ।
* बिल्वादिभ्योऽण् ४ । ३ । १३६

**विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् ॥ १ ॥**

विकारो विकारेण युज्यतेऽवयवेनावयवः । विकारावयवयोर्विकारावयवयुक्तत्वान्मयट् प्राप्नोति† । इष्यते चाञेव स्यादिति; तच्चान्तरेण यत्नं न सिध्यतीति मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् । एवमर्थमिदमुच्यते ।

**न वा दृष्टो ह्यवयवे समुदायशब्दो विकारे च प्रकृतिशब्दस्तस्मान्मयडभावः ॥ २ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? 'दृष्टो ह्यवयवे समुदायशब्दः' । तद्यथा—पूर्वे पञ्चालाः । उत्तरे पञ्चालाः । तैलं भुक्तम् । घृतं भुक्तम् । शुक्लः नीलः कृष्ण इति । 'विकारे च प्रकृतिशब्दः' । विकारे च प्रकृतिशब्दो दृश्यते । तद्यथा—शालीन्भुङ्क्ते मुद्गैः । शालिविकारान्मुद्गविकारैरिति[1] । 'तस्मान्मयडभावः' । तस्मान्मयडतो न भविष्यति ।

नैतद्विवदामहेऽवयवे समुदायशब्दोऽस्ति नास्तीति, विकारे वा प्रकृतिशब्द इति । किं तर्हि ? विकारावयवशब्दोऽपि त्वस्ति, तत उत्पत्तिः प्राप्नोति ।

**विकारावयवशब्दात्प्रसङ्ग इति चेन्न तेनानभिधानात् ॥ ३ ॥**

विकारावयवशब्दात्प्रसङ्ग इति चेत्तन्न । किं कारणम् ? 'तेनानभिधानात्' । न हि विकारावयवशब्दादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं स्यात् । अनभिधानात्तत

प्र०—रिति । कपोतस्य विकारो यन्मांसं कापोतं तस्यापि विकारो रसो भवति, कपोतावयवस्य सक्थ्यादेः कापोतस्यावयवोऽन्यो भवतीति वृद्धत्वान्मयट्प्रसङ्गे तन्निवृत्त्यर्थमञ्विधानमित्यर्थः । न वेति । यदा कपोतावयवस्य सक्थ्यादेरवयवो विवक्ष्यते तदा कपोतशब्दादेव सक्थ्याद्यवयववृत्तेरञ्भविष्यति । कपोतविकारमांसवृत्तेश्च कपोतशब्दान्मांसविकारे रस इत्यर्थः । तेनेति । मयटः

उ०—भावाच्चिन्त्यमिदम्भाष्यमिति चेन्न; प्राण्यवारोदेशाच्चेरित्याशयात् । यदा कपोतेति । अयञ्चारोपः सूत्रारम्भेऽप्यावश्यकः, अन्यथावयवे प्राण्यादित्वाभावात्ततोऽवयवे प्रत्ययो दुरुपपाद एवेति बोध्यम् । प्रयोगाभावादिति । मयटः प्रयोगेण तदर्थानवगमादित्यर्थः । मन्यत इति । 'गोश्च पुरीषे' इति तु पुरीषरूपे विकार एवेति नियमार्थमिति भावः । यदा त्विति । इदञ्चिन्त्यं, भाष्यविरोधात्, शरीरसम्बद्धाहारविकारत्वाच्च

† नित्यं वृद्धशरादिभ्यः ४ । ३ । १४४ [1]—'शालिविकारं मुद्गविकारेणेति' कीलहार्नपाठः ।

उत्पत्तिर्न भविष्यति ॥ तच्चावश्यमनभिधानमाश्रयितव्यम् ।

अभिधाने ह्यन्यतोऽपि मयट्प्रसङ्गः ॥ ४ ॥

अभिधाने हि सत्यन्यतोऽपि मयट् प्रसज्येत—बैल्वस्य* विकार इति ।

तस्मात्तत्प्रत्ययान्ताल्लुग्वचनम् ॥ ५ ॥

तस्मात्तत्प्रत्ययान्ताल्लुग्वक्तव्यः ।

यदि लुगुच्यते कथं गौमयं भस्म, द्रौवयं मानम्, कापित्थो रस इति‡ ? अन्यत्र[1] गोमायाद्द्रवयात्फलाच्च लुग्वक्तव्यः ।

इह तर्हि—औष्ट्रकी+ अनन्तादितीकारो† न प्राप्नोति । इष्टमेवैतत्संगृहीतम् । 'औष्ट्रिके'त्येव भवितव्यम् । एवं हि सौनागाः पठन्ति 'वुञश्चाञ्कृतप्रसङ्ग' इति ।

इह तर्हि पालाशी†† समिदित्यनुपसजनलक्षण ईकारो§ न प्राप्नोति । मा भूदेवम्

प्र०—कापोतमयमिति विकारावयवयोः प्रयोगाभावादित्यर्थः । तस्मादिति । यद्यनभिधानं नाश्रीयते तदा 'त्रितश्च तत्प्रत्यया'दिति सूत्रमपनीय बैल्वमयादिनिवृत्त्यर्थं 'तत्प्रत्ययाल्लु'गिति वक्तव्यम् ।

अन्यत्रेति । 'गोश्च पुरीषे'इति विकारे प्रत्ययं मन्यते । यदा तु पुरीषं नावयवो नापि विकारस्तदा गोर्मयट् तत्प्रत्यय एव न भवतीति लुकः प्रसङ्ग एव नास्ति । द्रुवयशब्दो द्रोर्विकार इति 'माने वय' इति वयप्रत्ययान्तः । एताभ्यामनुदात्तादिलक्षणोऽत्र । औष्ट्रकीति । वृद्धलक्षणस्य मयटो लुकि कृतेऽनन्तत्वाभावादीकाराप्रसङ्गः । वुञश्चेति । पाणिनीयलक्षणे दोषोद्भावनमेतत् ।

पालाशीति । पलाशस्य विकारः । 'पलाशादिभ्यो वे'ति पक्षेऽत्र् । तदन्ताद्विकारे मयटो

उ०—शरीरविकारत्वमपि तस्मिन्द्रष्टव्यम् । कापित्थो रस इति-भाष्ये । कपित्थशब्दात्फले विकारे प्रत्ययेऽपि तस्य लुकि 'लवावन्त' इति मध्योदात्ततया फलवाचिनोऽनुदात्ततयानुदात्तादेरित्यञ् ।

वुञश्चेति । चेन 'कंसीये'ति यतो ग्रहणम् । न च शामीलशब्दाल्लन्तादञि ङीप्याद्युदात्तम्पदम्, अभेदविवक्षायां षित्त्वान्ङीष्यन्तोदात्तं स्यादिति वाच्यं; भाष्यप्रामाण्याल्लञः षित्त्वस्यैवाङ्गीकारान्न दोष

* बिल्वादिभ्योऽण् ४ । ३ । १३६

‡ गोश्च पुरीषे; माने वयः; फले लुक्; अनुदात्तादेश्च ४ । ३ । १४५; १६२; १६३; १४०

१—'अन्यत्र गोमयाद् द्रुवयात् फलाच्च लुक्' इति वार्तिकं क्वचित् ।

\+ उष्ट्राद् वुञ् ४ । ३ । १५७　　† टिड्ढाणञ्......कम्क्करपः ४ । १ । १५

†† पलाशादिभ्यो वा ४ । ३ । १४१

§ अनुपसर्जनात्; टिड्ढाणञ्.........कम्क्करपः ४ । १ । १४; १५

'अन्योऽनुपसर्जन'मिति । 'अनन्तादनुपसर्जना'दित्येवं भविष्यति । नैवं शक्यम् । इह हि दोषः स्यात्—काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणीति+ । अणन्तादितीकारः प्रसज्येत ॥ तस्मादस्तु 'न तेनानभिधाना'दित्येव ।

इह तर्हि कापोतो रस इति प्राणिशब्दो× नोपपद्यते । नैष दोषः । इदं तावदयं प्रष्टव्यः—अथ योऽसावाद्यः कपोतः सलोमकः सपक्षो न च संप्रति प्राणिति कथं तत्र प्राणिशब्दो वर्तत इति ? अथ मतमेतत् 'प्रकृत्यन्वया विकारा भवन्ती'ति, इहापि न दोषो भवति ॥ १५५ ॥

प्र०—लुकि ईकाराप्रसङ्गः । पाणिनीयलक्षणे त्वत्रन्तादत्रि सतीकारः सिध्यति । काशकृत्स्नेति । अणन्तस्य स्त्रियामध्येत्र्यामनुपसर्जनत्वादीकारप्रसङ्गः । तस्मादिति । यस्माल्लुकि पालाशीति न सिध्यति तस्मादनभिधानान्मयटोऽनुत्पत्तिराश्रयितव्या । केषांचित्तु ग्रन्थः—"नैष दोषः । अध्ये-त्र्यामभिधेयायामण ईकारेण भवितव्यम् । यश्चाध्येत्र्यां वर्तते लुप्तः सः । यश्च श्रूयते उत्पन्नस्त-स्मादीकारः । अथवा पुनरस्तु न तेनानभिधाना"दिति । अनेन यद्यपि काशकृत्स्ना परिहृता तथाप्यापिशला न परिहृता भवति । पालाश्यापिशले न संवदेते । 'तस्मादस्तु न तेनानभिधाना'-दित्येष पाठो युक्तः ।

इह तर्हीति । उद्गतप्राणे मांसे प्राणिवाचिनः कपोतशब्दस्य वृत्तिः । सत्यां वृत्तौ प्राणि-वाचित्वाभावाद्रसे मांसविकारे कापोतशब्दो न सिध्यतीति चोद्यम् । कथं तत्रेति । तत्रापि लोके कपोतशब्दो दृश्यत इति प्रश्नः । प्रकृत्यन्वया इति । प्रकृतेरन्वयो येषु ते प्रकृत्यन्वयाः । प्रकृतिरेव विकाररूपतामापद्यमाना विकारावस्थायामपि क्वचित्प्रकृतिशब्देनाभिधीयत इत्यर्थः ॥ १५५ ॥

उ०—इत्याशयः । ईकारः प्रसज्येतेति । किञ्चानुपसर्जनादित्यस्य तदन्तविशेषणत्वेऽनुपसर्जनादित्यस्य वैयर्थ्य-मपि, 'बहुकुरुचरे'त्यत्रापि प्रसङ्गादिति बोध्यम् ॥ न परिहृतेति । 'स्त्रिया'मित्यस्य गृह्यमाणविशेषणत्वेन इदम्प-रिहर्तुं शक्यमिति चेत्तुल्यं पालाश्यामपीति बोध्यम् । वृत्तिरिति । आरोप इत्यर्थः । सत्यां वृत्ताविति । आरोपे इत्यर्थः । न सिध्यतीति । प्राणित्वाभावात् 'प्राणिरजतादिभ्योऽ'ञित्यस्याप्राप्तेरिति भावः । चोद्यमिति । विकारलक्षकप्रकृतेर्विकारे प्रत्यय इति प्रत्याख्यानपक्षे इदञ्चोद्यमित्यर्थः । न स सम्प्रतीति । मरणोत्तरा-वस्थायामित्यर्थः । तत्रापि लोके इति । तथारोपेणाऽन्यत्र वृत्तावपि प्राणिवाचकत्वात्प्रवृत्तिरिति भावः । प्राणिवाचको यो दृष्टस्ततः प्रत्यय इत्यर्थादिति बोध्यम् । प्रकृतेरिति । प्रकृतिवाचकशब्दस्येत्यर्थः ॥ १५५ ॥

+ ४ । १ । १४ वा० ५ × प्राणिरजतादिभ्योऽञ् ४ । ३ । १५४

## क्रीतवत्परिमाणात् ॥ ४ । ३ । १५६ ॥

कथमिदं विज्ञायते—'क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयो'-रिति । आहोस्वित् 'परिमाणात्क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयो'रिति ? किं चातः ? यदि विज्ञायते 'क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयो'रिति प्रत्ययमात्रं प्राप्नोति । अथ विज्ञायते 'परिमाणात्क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयो'रिति प्रकृतिमात्रात्प्राप्नुवन्ति । तस्मात्—

### क्रीतवत्परिमाणादङ्गं च ॥ १ ॥

अङ्गं च क्रीतवदिति वक्तव्यम् ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'क्रीतव'दिति वतिनिर्देशोऽयम् । यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन क्रीते प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन परिमाणाद्विकारावयवयोर्भवन्ति ततोऽमी क्रीतवत्कृताः स्युः । अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यान्नामी क्रीतवत्कृताः स्युः ।

### अणो वृद्धान्मयट् ॥ २ ॥

'अणो वृद्धान्मय'डित्येतद् भवति विप्रतिषेधेन* । अणोऽवकाशः—तित्तिडीक—तैत्तिडीकम् । मयटोऽवकाशः—काष्ठमयम् । इहोभयं प्राप्नोति—शाकमयम् ।

प्र०—क्रीतवत् । प्रत्ययमात्रमिति । मुद्गैः क्रीतं मौद्गिकमिति क्रीते ठग्विहित इति शूर्पस्य विकार इत्यत्रापि प्राप्नोति । प्रकृतिमात्रादिति । 'शूर्पादञन्यतरस्या'मित्यञ्ठञौ हलस्य विकार इत्यत्रापि प्राप्नुतः । अङ्गं चेति । 'कालेभ्यो भवव'दित्यत्र यदुक्तं 'सिद्धं तूभयनिर्देशा'दिति, तदेवानेन प्रतिपाद्यते । अङ्गग्रहणेन प्रत्यासत्त्या परिमाणमेव गृह्यते । तेनायमर्थो भवति क्रीतार्थे यथा परिमाणमङ्गं यथा च परिमाणात्प्रत्ययस्तथा विकारेऽपि परिमाणमङ्गं प्रत्ययश्च । तेन यस्मात्परिमाणात्क्रीते यः प्रत्ययस्तस्मादेव स एव विकारेऽपि भवति । न वक्तव्यमिति । क्रीते परिमाणादित्येवान्यतरविशेषणत्वे परिमाणस्य सिद्धे वतिनिर्देशात्सर्वसादृश्यपरिग्रहार्थादुभयविशेषणं परिमाणग्रहणमर्थाद्भवतीत्यर्थः । अण इति । 'कोपधाच्चे'ति विहितात् ।

उ०—क्रीतवत् । शूर्पस्येति । तत्र हि शूर्पादञिष्टः पक्षे ठञ् । ननु क्रीतेऽङ्गस्याऽविधानात् 'क्रीतवदङ्ग'मित्ययुक्तमत आह—कालेभ्य इत्यादि । अन्यतरेति । क्रीते ये परिमाणाद्विहिता इति, ये क्रीते विहितास्ते परिमाणाद्भवन्तीति वार्थः ।

* कोपधाच्च; नित्यं वृद्धशरादिभ्यः ४ । ३ । १३७; १४४

## ओरञोऽनुदात्तादेरञश्च ॥ ३ ॥

ओरञोऽनुदात्तादेरञश्च† मयड्भवति विप्रतिषेधेन । ओरञोऽवकाशः—अरडु—आरडवम् । मयटः स एव । इहोभयं प्राप्नोति—दारुमयम् ।

'अनुदात्तादेरञ्भवती'त्यस्यावकाशः—कौवलम् । जरद्वृक्ष—जारद्वृक्षम् । मयटः स एव । इहोभयं प्राप्नोति—आम्रमयम् ।

## मयटः प्राण्यञ्विप्रतिषेधेन ॥ ४ ॥

मयटः प्राण्यञ्भवति‡ विप्रतिषेधेन । प्राण्यञोऽवकाशः—गार्ध्रम् । मयटः स एव । इहोभयं प्राप्नोति—चाषम् भासम् । प्राण्यञ्भवति विप्रतिषेधेन ।

## न वानवकाशत्वादपवादो मयट् ॥ ५ ॥

न वैष युक्तो विप्रतिषेधः, योऽयमञो मयटश्च । किं कारणम्? 'अनवकाशत्वादपवादो मयट्' । अनवकाशो मयट् सावकाशमञं बाधिष्यते । स कथमनवकाशः? यद्यनुवर्तन्ते शैषिकाः¶ । अथ निवृत्ताः शैषिकाः, वृद्धमाद्युदात्तं

---

प्र०—कौवलमिति । कुवल्या विकार इत्यर्थेऽञ् । मयटः स एवेति । काष्ठमयमिति, काष्ठशब्दस्याद्युदात्तत्वात् । आम्रमयमिति । आम्रशब्दो'ऽमितम्योर्दीर्घश्चे'ति रगन्तोऽनुदात्तादिः । गार्ध्रमिति । गृध्रस्य विकार इत्यर्थः । न वेति ॥ ओरञोनुदात्तादेरञश्चे'ति यउक्तो विप्रतिषेधस्तन्निराकरोति । यद्यनुवर्तन्त इति । तस्य विकार इत्यत्र शैषिकाणामनुवृत्तौ छे प्राप्ते मयडारभ्यमाणोऽन्यपूर्वको भवतीति छस्येवात्रोऽपि बाधक इत्यर्थः । एतच्च बाध्यसामान्यचिन्तायां येन नाप्राप्त इति न्यायस्यानवतारादेतन्न्यायानपेक्षयोच्यते । अथेति । तन्निवृत्तौ विध्यन्तर-

---

उ०—भाष्ये—कौवलमिति पाठः । 'कुवली—कौवल'मित्यपपाठः । एवमग्रेऽपि गृध्र—गार्ध्रमित्यपपाठः । गार्ध्रमित्येव पाठः । प्राण्यञश्चेत्यस्य पौनरुक्त्यपरिहाराय आह—ओरञ इति । इदं कोपधाणोऽप्युपलक्षणम् । ननु छेनेवाञा येन नाप्राप्त्यभावात्कथमञोऽपि बाधोऽत आह—एतच्चेति । न्यायानपेक्षायां हेतुर्न्यायानवतारः । तन्निवृत्ताविति । तन्निवृत्तिबोधकतस्यग्रहणसामर्थ्या'त्तस्येद'मित्यनेनाऽपि विकारे छाप्राप्तिरिति भावः ।

---

† ओरञ्; अनुदात्तादेश्च ४ । ३ । १३९; १४० ‡ प्राणिरजतादिभ्योऽञ् ४ । ३ । १५४

१—'कुवली—कौवल'मित्यपपाठः । एवमग्रेऽपि 'गृध्र—गार्ध्र'मित्यपपाठः । 'गार्ध्र'मित्येव पाठः' इति नागेशः ।

मयटोऽवकाशः ।

**प्राग्यञश्च ॥ ६ ॥**

अयं चाप्ययुक्तो विप्रतिषेधो योऽयं मयटः प्राग्यञश्च । किं कारणम् ? 'अनवकाशत्वादपवादो मय'डित्येव । अनवकाशो मयट् । स यथैवोरञमनुदात्तादेरञं च बाधते, एवं प्राग्यञमपि बाधेत ।

**तस्मान्मयड्विधाने प्राणिप्रतिषेधः ॥ ७ ॥**

तस्मान्मयड्विधाने प्राणिभ्यः प्रतिषेधो वक्तव्यः ।

स तर्हि वक्तव्यः ? न वक्तव्यः । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्त' इत्येवमयं मयडोरञमनुदात्तादेरञं च बाधिष्यते, प्राग्यञं न बाधिष्यते ।

यद्येतदस्ति 'मध्येऽपवादाः' 'पुरस्तादपवादा' इति मानुवृतन् शैषिकाः । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त' इत्येवमयमणं बाधिष्यते, मयटं न बाधिष्यते ।

**अनुदात्तादेरञः प्राग्यञ्विप्रतिषेधेन ॥ ८ ॥**

प्र०—पूर्वको मयण् न भवतीति काष्ठमयादौ सावकाशः परत्वादेवात्रं बाधते न त्वपवादत्वादित्यर्थः ।

प्राग्यञश्चेति । पूर्वत्र विप्रतिषेधाभावेऽपीष्टसिद्धिर्भवत्येव—दारुमयमाम्रमयमिति । प्राग्यञि तु तदभावे चाषं भाममितीष्टं न सिध्यति, मयट्प्रसङ्गात् ॥ तस्मादिति । 'नित्यं वृद्धशरादिभ्योऽप्राणिन' इति वक्तव्यमित्यर्थः । यद्येतदस्तीति । यद्येतदाश्रीयत इत्यर्थः । मानुवृतन्निति । वृते'र्द्युद्भ्यो लुङी'ति वा परस्मैपदम् । 'पुषादिद्युतादी'ति श्लेरङादेशः । शैषिकाणां निवृत्त्यनुवृत्त्योरपि विप्रतिषेधोपपत्त्या मयटा परत्वात्कोपधलक्षणोऽणबाध्यत इत्यर्थः ।

उ०—ननु पूर्ववार्त्तिकेनैव सिद्धाविदं व्यर्थमतस्ततो विशेषं दर्शयति—पूर्वत्रेति । अपवादत्वेनेति भावः । मयट्प्रसङ्गादिति । अपवादत्वादिति भावः । यद्येतदित्यादिना भाष्ये कोपधलक्षणाणो मयटश्च विप्रतिषेधः स्थाप्यते । अत्राधिकारे शैषिकानुवृत्तौ मयट् छापवादः, 'कोपधाच्चे'त्यण् 'ओरञ्' इत्याद्यञोऽपवादः । तत्रापवादविप्रतिषेधो न्याय्यः । अननुवृत्तौ तु कोपधाणोऽञ इव मयडपवादत्वादयुक्तः स स्यादिति बोध्यम् । 'पुरस्ता'दिति न्यायाङ्गीकारे तु मयटो नापवाद इति सर्वथायुक्तो विप्रतिषेध इति तात्पर्यम् । तद्ध्वनयन्वक्ष्यति—'मयटा परत्वात्कोपधलक्षणोऽणबाध्यत' इति । वृतेरनुदात्तत्वात्परस्मैपदं कथमत आह—

1 वृद्धाच्छः ४ । २ । ११४

अनुदात्तादेरञः प्राण्यञ्भवति विप्रतिषेधेन* । 'अनुदात्तादेरञ्भवती'त्यस्यावकाशः—जरद्वृत्त—जारद्वृत्तम् । प्राण्यञः स एव । इहोभयं प्राप्नोति—कपोत—कापोतम् । प्राण्यञ्भवति विप्रतिषेधेन ।

कः पुनरत्र विशेषस्तेन वा सत्यनेन वा ? सापवादकः स विधिरयं पुनर्निरपवादकः[1] । यदि तेन स्यादिह न स्यात्—श्वाविधो विकारः शौवाविधम् ॥ १५६ ॥

## फले लुक् ॥ ४ । ३ । १६३ ॥

### फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात् ॥ १ ॥

फले लुग्वचनमनर्थकम् । किं कारणम् ? 'प्रकृत्यन्तरत्वात्' । प्रकृत्यन्तरमामलकशब्दः फले वर्तते ॥ एकान्तदर्शनात्प्राप्नोति ।

प्र०—जरद्वृत्त इति । जरद्वृत्तशब्दः समासस्वरेणान्तोदात्तत्वादनुदात्तादिः । स एवेति । गार्ग्रमिति । कपोतशब्दो 'लघावन्त'इति मध्योदात्तत्वादनुदात्तादिः । सापवाद इति । मयटा परत्वाद्बाध्यमानत्वात् । अयमिति । अनेन परत्वान्मयटो बाधनात् । श्वाविध इति । श्वानं विध्यतीति क्विप् । 'नहिवृती'ति दीर्घः । कृत्स्वरेणोत्तरपदस्यान्तोदात्तत्वानुदात्तादित्वम् । अत्र मयडभावात् प्राण्यञ्भवतीति 'द्वारादीनां चे'ति वृद्धिप्रतिषेध ऐजागमश्च ॥ १५६ ॥

फले । प्रकृत्यन्तरत्वादिति । आमलकादिशब्दः फले न यौगिकः—आमलक्याः फलमिति, किं तर्हि जातिशब्द एवेत्यर्थः । एकान्तदर्शनादिति । आमलक्या अवयवे आमलकं दृश्यते, ततश्च यौगिक एव फले आमलकशब्द इत्यर्थः । फलैकान्त इति । फलमेकान्तोऽस्येति बहुव्रीहिः ।

उ०—वृत्तेरिति । कपोते उभयप्राप्त्युपपादनाय आह—कपोतशब्द इति । परत्वादिति । अपवादशब्दो बाधकमात्रपर इति भावः । मयडभावादिति । प्राण्यञा परत्वाद्बाधेन तदभावो बोध्यः ॥ १५६ ॥

फले लुक् । ननु यौगिकत्वेऽपि अप्रकृत्यपेक्षयान्यत्वमस्त्येवेत्यत आह—आमलकादिशब्दा इति । फलं हि वृक्षस्य नावयवोऽनारम्भकत्वान्नापि विकारः । स हि द्विविधः प्रकृत्युपमर्दको—यथा भस्मादिः । प्रकृतेर्व्यपदेशान्तरकारी वा, यथा—खादिरः स्रुव इति । फलन्तु नैवं विधमिति तत्र प्रत्ययाप्राप्तेः प्रकृत्यन्तरत्वमावश्यकमिति भावः ।

भाष्ये—एकान्तदर्शनादिति । एकान्तोऽवयवः । आमलक्या अवयव इति । अवयव्युत्पत्तेः प्रागसत्त्वादनारम्भकेऽपि दन्तशृङ्गादौ गवाद्यवयवत्ववत्फलमप्यवयव इति भावः । एवं विकारत्वमपि बोध्यम्, प्रकृतेरवस्थान्तरस्यैव विकारत्वाद्भवति चाफलितावस्थायाः फलितावस्थावस्थान्तरमिति । एवञ्चाम-

* अनुदात्तादेश्च; प्राणिरजतादिभ्योऽञ् ४ । ३ । १४०; १५४

[1]—'सापवादः' 'निरपवादः' पा० ।

## एकान्तदर्शनात्प्रसङ्ग इति चेद्वृक्षे लुग्वचनम् ॥ २ ॥

एकान्तदर्शनात्प्रसङ्ग इति चेद्वृक्षे लुग्वक्तव्यः । वृक्षोऽपि हि फलैकान्तः ॥१६३॥

## लुप् च ॥ ४ । ३ । १६६ ॥

## लुप्प्रकरणे फलपाकशुषामुपसङ्ख्यानम् ॥ १ ॥

लुप्प्रकरणे फलपाकशुषामुपसङ्ख्यानं कर्तव्यम् । व्रीहयः यवाः माषाः मुद्गाः तिलाः ।

## पुष्पमूलेषु च बहुलम् ॥ २ ॥

पुष्पमूलेषु च बहुलं लुग्वक्तव्यः । मल्लिका करवीरम् बिसम् मृणालम् । न च भवति—पाटलानि* मूलानि ॥ १६६ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य
तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

---

प्र०—यदि संबन्धदर्शनाद्यौगिकत्वमामलकशब्दस्य फले व्यवस्थाप्यते तदा संन्बन्धाविशेषादामलकस्येयमामलकी वृक्ष इति वृक्षावयविनि प्रत्ययमुत्पाद्य लुग्विधेयः । तस्मादुभयत्राप्यामलकादयो जातिशब्दा एव स्वभावतो वर्तन्ते इत्यभ्युपगन्तव्यमित्यर्थः ॥ १६३ ॥

लुप्च । फलपाकशुषामिति । फलपाकेन ये शुष्यन्ति व्रीह्यादयस्तद्वाचिनामित्यर्थः । व्रीहय इति । बिल्वाद्यण् । यवा माषा इति । 'तृणधान्यानां च द्व्यषा'मित्याद्युदात्तत्वादौत्सर्गिकोऽण् । मुद्गशब्दाद्बिल्वाद्यण् । पाटलानीति । पाटलिशब्दो बिल्वादिः ॥ १६६ ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य
तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

---

उ०—लकीमयमित्यादिनिवृत्त्यर्थं लुगावश्यक इति भावः । भाष्ये फलैकान्तशब्देन फलवृक्षयोः सम्बन्धो दर्शितस्तदाह—यदि सम्बन्धेति । लुग्विधेय इति । 'आमलकीयो वृक्ष' इत्यादिनिवृत्त्यर्थमिति भावः । स्वभावतो वर्तन्त इति । अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति भावः ॥ १६३ ॥

लुप् च । पाटलिशब्दस्य वृद्धत्वान्मयड्डुचितोऽत आह—बिल्वादिरिति ॥ १६६ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते चतुर्थस्याध्यायस्य
तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥

---

* बिल्वादिभ्योऽण् ४ । ३ । १३६

## प्राग्वहतेष्ठक् ॥ ४ । ४ । १ ॥

### ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसङ्ख्यानम् ॥ १ ॥

ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसङ्ख्यानं कर्तव्यम् । माशब्दिकः नैत्यशब्दिकः कार्यशब्दिकः ।

### आहौ प्रभूतादिभ्यः ॥ २ ॥

आहौ प्रभूतादिभ्यष्ठग्वक्तव्यः । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः ।

### पृच्छतौ सुस्नातादिभ्यः ॥ ३ ॥

पृच्छतौ सुस्नातादिभ्यष्ठग्वक्तव्यः । सौस्नातिकः सौखरात्रिकः सौखशायनिकः ।

### गच्छतौ परदारादिभ्यः ॥ ४ ॥

गच्छतौ परदारादिभ्यष्ठग्वक्तव्यः । पारदारिकः गौरुतल्पिकः ।

[ माशब्दादेस्तदाहेति प्रभूतादेश्च ठक्स्मृतः । गच्छतौ परदारादेः सुस्नातादेश्च पृच्छतौ ॥ ]

प्र०—प्राग्वहतेष्ठक् । तदाहेति । तदिति कर्ममात्रं निर्दिश्यते न तु द्वितीया समर्थविभक्तिः, 'आहौ प्रभूतादिभ्य' इत्यतो भेदेन वचनात् । तेन पदसमुदायादयं प्रत्ययः । माशब्द इत्याह—माशब्दिकः । नित्यः शब्द इत्याह—नैत्यशब्दिकः । तत्र पदसमुदायार्थ इतिना प्रत्यवमृश्यमानो वचनक्रियासंबन्धात्कर्म संपद्यते । अप्रातिपदिकत्वात्तु द्वितीयानुत्पत्तिः । प्रभूतमाहेति । क्रियाविशेषणत्वात्कर्मत्वम् । पृच्छताविति । तिङन्तानुकरणमेतत् । तत्र शब्दे कार्यासम्भवात्तिङन्तार्थे ठग्विधिः ॥ १ ॥

उ०—प्राग्वह । ननु 'तदाहे'ति द्वितीयासमर्थात्प्रत्यय इति लभ्यते, न च तद्युक्तं, वाक्यात्प्रत्ययविधानेन वाक्यस्य द्वितीयान्तत्वासम्भवादत आह—तदिति कर्मेति ॥ भेदेन वचनादिति । तेन हि पदादेव द्वितीयान्ताद्विधीयते । केवल'मा'शब्दस्योच्चारयितरि प्रत्ययस्यानिष्टेराह—माशब्द इति । शब्दो मा कारीत्यर्थः । वृत्तौ करोतिक्रियान्तर्भूता बोध्या । भाष्ये—माशब्दमाहेत्यपपाठः । आहौ पृच्छताविति । बहुलग्रहणाद्धात्वर्थनिर्देशे इक्श्तिपौ । पृच्छतौ प्रकारान्तरमप्याह—तिङन्तेति । सौखशायनिके उभयपदवृद्धिरनुशतिकादित्वात् ॥ १ ॥

१—'सौखशायिकः' इति कीलहार्नपाठः । २—क्वाचित्कोऽयं पाठः ।

## आकर्षात् ष्ठल् ॥ ४ । ४ । ९ ॥

इह केषांचित्सांहितिकं षत्वं केषांचित् षिदर्थम्* । तत्र न ज्ञायते केषां सांहितिकं षत्वं केषां षिदर्थमिति ? तंत्र किं न्याय्यम् ? परिगणनं कर्तव्यम् ।

आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।

आवसथात्किसरादेः षितः षडेते ठगधिकारे† ॥ ९ ॥

## विभाषा विवधात् ॥ ४ । ४ । १७ ॥

वीवधाच्चेति वक्तव्यम् ।

वैवधिकः । [ वीवधिकः ] ॥ १७ ॥

## त्रेर्मब्नित्यम् ॥ ४ । ४ । २० ॥

नित्यग्रहणं किमर्थम् ? विभाषा मा भूत् । नैतदस्ति प्रयोजनम् । पूर्वस्मिन्नेव

---

प्र०—आकर्षात् । इहेति । एकस्य वानेकस्य वा षकारस्य व्यञ्जनपरस्य श्रुत्या विशेषानवधारणात्सांहितिकेऽपि वा षकारे 'ऽनचि चे'ति द्विर्वचनविधानादनेकषकारस्वसंभवात्संशय । आकर्षेति । श्लोकवार्तिककारः संदिग्धानसंदिग्धांश्च भ्रान्तिनिरासाय पर्यजीगणत् । षडेत इति । विधिवाक्यापेक्षं षट्त्वं, प्रत्ययास्तु सप्तैते ॥ ९ ॥

विभाषा । वीवधाच्चेति वक्तव्यमिति । अत्र विवधवीवधशब्दौ पर्यायौ । तत्राविरविकन्यायो न संभवति, उभाभ्यां प्रत्ययस्येष्टत्वात् । ततो 'वीवधाच्चेति वक्तव्य'मित्युक्तम् ॥ १७ ॥

त्रेर्मप् । विभाषा मा भूदिति । द्वे अत्र विभाषे संभवतः । एका महाविभाषा, अपरा

---

उ०—आकर्षात् । एकस्य वेति । 'भस्त्रादिभ्यः ष्ठ'न्नित्यादावयं सन्देहः ॥ ननु कुसीदसूत्रे ष्ठन्ष्ठचोर्द्वयोर्विधानात् 'षडि'त्ययुक्तमत आह विधिवाक्येति ॥ ९ ॥

विभाषा वि । उभाभ्यांप्रत्ययस्येति । ष्ठन इत्यर्थः । 'वीवधिक' इत्यस्यापीष्टत्वादिति भावः । एकदेशविकृतन्यायेनैव वीवधग्रहणस्य सिद्धाविदं व्यर्थमित्यन्ये । विवधवीवधशब्दौ स्वतन्त्रावेव, न प्रकृतिविकारभावापन्नाविति वार्तिकाशयः ॥ १७ ॥

त्रेर्मप् । नन्वणकुटिलिकाया इत्यत्राननुवृत्त्या 'विभाषा विवधा'दित्यस्यास्वरितत्वादेव निवृत्तिसि-

---

* षिद्गौरादिभ्यश्च ४ । १ । ४१      १—'किमत्र न्याय्यम्' पा० ।

† आकर्षात् ष्ठल ; पर्पादिभ्यः ष्ठन् ; भस्त्रादिभ्यः ष्ठन् ; कुसीददशैकादशात् ष्ठन्ष्ठचौ; किशरादिभ्यः ष्ठन् ; आवसथात् ष्ठल् ४ । ४ । ९; १०; १६; ३१; ५३; ७४

२—इदं वार्तिकमिति नागेशाशयः । 'विभाषा विवधवीवधात्' इति सूत्रपाठस्त्वनार्षः ।

३—क्वचिन्न ।

योगे विभाषाग्रहणं‡ निवृत्तम् ॥ इदं तर्हि प्रयोजनम् ।

त्रेर्मम्नित्यवचनं विषयार्थम् ॥ १ ॥

नित्यं त्र्यन्तं§ मब्विषयमेव यथा स्यात्, केवलस्य प्रयोगो मा भूत् ।

अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

तत्र यथाधिकारं तद्विषयप्रसङ्गः ॥ २ ॥

तत्र यथाधिकारं तद्विषयता प्राप्नोति । निर्वृत्ते¶ इति वर्तते, तेन निर्वृत्त एव त्र्यन्तं मब्विषयं स्यात्, येऽन्य उपचारास्तत्र न स्यात्—कृत्रिमं महत्सुविहितमिति ।

एवं तर्हि भाव इति प्रकृत्येमब्वक्तव्यः कुट्टिमा भूमिः, सेकिमोऽसिरित्येवमर्थम् । ततो वक्तव्यं 'त्रेः' । त्रेश्चेमब्भवति । 'ततो नित्यम्' । नित्यं त्र्यन्तादिमबिति । किमर्थमिदम् ? नित्यं त्र्यन्तमिमब्विषय एव यथा स्यात्, केवलस्य प्रयोगो

प्र०—'विभाषा विवधा'दिति । तत्रान्तरेणापि नित्यग्रहणं पूर्वसूत्र एवानन्तरस्य विभाषाग्रहणस्यास्वरितत्वादननुवृत्तत्वान्महाविभाषा नित्यग्रहणेन निवर्त्यते । इतरोऽनन्तरा विभाषा निवर्त्येत इत्युक्तमिति मत्वाह—नैतदस्तीति । इतरः स्वाभिप्रायं प्रकाशयति—इदं तर्हीति । निर्वृत्त एवेति । पक्त्रिमा निर्वृत्तमित्यस्यैव वाक्यस्य निवृत्तिः स्यान्न तु पक्त्रिमः क्रियत इत्यादेरपीत्यर्थः । कृत्रिमं महदिति । प्रत्ययप्रयोगमन्तरेणापि महत्वादीनि कृत्रिमशब्दार्थविशेषणानि स्युरित्यर्थः । भाव इति प्रकृत्येति । भाववाचिनः शब्दान्निर्वृत्तेऽर्थे इमब्विधेय इत्यर्थः । त्रेरिति । पूर्वेण सिद्धे नित्यार्थं वचनम् । तेन निर्वृत्ते तावद्वाक्यं निवर्त्यते । ततो 'नित्य'मित्यनेनोपचारान्तर-

उ०—द्वे विभाषा मा भूदित्यसङ्गतमत आह—द्वे अत्रेति । भाष्ये—इदं तर्हीति । महाविभाषानिवृत्त्यर्थमित्यर्थः । तदाह—नित्यं त्र्यन्तं मब्विषयमेवेति । नित्यपदस्यैवार्थ एवकारेण दर्शितः । ननु 'कृत्रिमम्मह'दिति प्रयोग इष्ट एवेत्यत आह—प्रत्ययप्रयोगमिति । कृत्रिमं महदितिवत् 'महती कृत्रि'रित्याद्यपि प्रयुज्येतेति भाष्यार्थ इति भावः ।

ननु भावे इमब्विधाने 'कुट्टिमा भूमि'रित्युदाहरणासङ्गतिरत आह—भाववाचिन इति । कुट्टनं कुट्टस्तेन निर्वृत्तेत्यर्थः । ततो नित्यमित्यनेनेति । शङ्खो नित्यं पाण्डुर इतिवन्नित्यशब्दोऽयोगव्यवच्छेदार्थः । तत्र हि न कदाप्यपाण्डुर इति प्रतीयते । एवञ्च योऽयं निर्वृत्ते इमप् स त्र्यन्ताद्भवत्येवेत्यर्थ इति भावः । यद्यपि केवलसूत्रेऽपि योगविभागेन तत्सामर्थ्यादयमर्थः साधयितुं शक्यते, तथापि मप्पदाकरणबोधनाय

‡ विभाषा विवधात् ४ । ४ । १७ § ड्वितः क्त्रिः ३ । ३ । ८८

¶ निर्वृत्तेऽक्षद्यूतादिभ्यः ४ । ४ । १९

१—कुट्टिमः=पक्का फर्श । "मम्लतुर्न मणिकुट्टिमोचिता" विति कालिदासः ( रघु० ११ । ९ )

२—'विषयमेव' पा० ।

मा भूदिति ॥ २० ॥

## चूर्णादिनिः ॥ ४ । ४ । २३ ॥

अयं योगः शक्योऽवक्तुम् । कथं चूर्णी चूर्णिनौ चूर्णिन इति ? इनिनैतन्मत्वर्थीयेन सिद्धम्* ॥ २३ ॥

## लवणाल्लुक् ॥ ४ । ४ । २४ ॥

### लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात् ॥ १ ॥

लवणाल्लुग्वचनमनर्थकम् । किं कारणम् ? 'रसवाचित्वात्' । रसवाच्येष लवणशब्दो नैष [1]संसृष्टनिमित्तः ॥ आतश्च रसवाची—

### असंसृष्टे च दर्शनात् ॥ २ ॥

असंसृष्टेऽपि हि लवणशब्दो वर्तते । तद्यथा—लवणं क्षीरम्, लवणं पानीयमिति ।

### संसृष्टे चादर्शनात् ॥ ३ ॥

संसृष्टेऽपि च यदा नोपलभ्यते तदाह अलवणः सूपः [ [2]अलवणा यवागूः ] अलवणं शाकमिति ॥ २४ ॥

---

प्र०—विषयस्यापि वाक्यस्य निवृत्तिः क्रियत इति तद्विषयता त्रिप्रत्ययस्य सिध्यति ॥ २० ॥

चूर्णा । इनिनेति । ठक् तु 'संसृष्टे' इत्यनेनानभिधानान्न भविष्यतीति भावः ॥ २३ ॥

लवणा । रसवाचित्वादिति । रसस्य गुणत्वाद्गुणवाचिनां शुक्लादीनां गुणगुणिनोरभेदोपचाराद्गुणवृत्तिदर्शनान्नार्थो लुकेत्यर्थः । असंसृष्टे चेति । लवणेन द्रव्येण यदसंसृष्टं लवणरसयुक्तं तत्रापि लवणशब्दस्य दर्शनाद्गुणशब्दत्वमेवास्येत्यर्थः । संसृष्टे चेति । लवणद्रव्यसंसृष्टमपि यल्लवणरसं न भवति तत्र न दृश्यते लवणशब्द इत्यर्थः ॥ २४ ॥

---

उ०—भगवता वार्तिकपूर्वकं योगविभागो दर्शित इति बोध्यम् ॥ २० ॥

लवणा । रसस्य गुणत्वादिति । द्रव्येण द्रव्यस्यैव च संसृष्टव्यवहारादिति भावः ॥ ननु समवायादिसंसर्गस्य गुणेनापि सत्त्वात्ततोऽपि प्रत्ययः स्यादित्यत आह—अभेदेति । भेद एव संसृष्टव्यवहारो न हि गुणगुणिनोः स इति भावः । रूपादिवद्रसशब्दस्य गुणिसमानाधिकरणत्वाभावेऽपि शुक्लादिवल्लवणशब्दस्य तत्त्वमिति तात्पर्यम् । लवणद्रव्यसंसृष्टे 'लावणिक' इति त्वनभिधानाद्वारणीयमिति तत्त्वम् ॥ २४ ॥

---

* अत इनिठनौ ५ । २ । ११५

१—'संसृष्टिनिमित्तः' पा० ।

२—कीलहार्नपुस्तके नास्ति ।

## प्रयच्छति गर्ह्यम् ॥ ४ । ४ । ३० ॥

अयुक्तोऽयं निर्देशः । यदसावल्पं दत्त्वा बहु गृह्णाति तद्गर्ह्यम् । कथं तर्हि निर्देशः कर्तव्यः ?

प्रयच्छति गर्ह्यायेति[1] ॥ १ ॥

स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः । तादर्थ्यात्ताच्छब्द्यं भविष्यति—गर्ह्यार्थं गर्ह्यम् ।

मेस्याल्लोपो वा ॥ २ ॥

मेस्याच्छब्दलोपो वा द्रष्टव्यः । द्विगुणं मे स्यादिति प्रयच्छति द्वैगुणिकः । त्रैगुणिकः ।

वृद्धेर्वृधुषिभावः ॥ ३ ॥

वृद्धेर्वृधुषिभावो वक्तव्यः । वार्धुषिकः[2] ॥ ३० ॥

## धर्मं चरति ॥ ४ । ४ । ४१ ॥

अधर्माच्च ॥ १ ॥

अधर्माच्चेति वक्तव्यम् । आधर्मिकः† ॥ ४१ ॥

प्र०—प्रयच्छति । अयुक्त इति । उत्तमर्णो यदल्पं ददाति न तद्गर्ह्यम्, यत्त्वल्पं दत्वा बहु गृह्णाति तदेव गर्ह्यमित्यर्थः । गर्ह्यायेति । द्विगुणाय प्रयच्छति द्वैगुणिक इति चतुर्थ्यन्तात्प्रत्ययो विधेय इत्यर्थः । मे स्याल्लोपो वेति । उपचारापेक्षया विकल्पार्थो वाशब्दः । द्विगुणं मे स्यादिति वाक्यात्प्रत्ययो मे स्याच्छब्दलोपश्च । वार्धुषिक इति । वृद्ध्यर्थं धनं प्रयच्छतीत्यर्थः ॥ ३० ॥

धर्मं । अधर्माच्चेति । तदन्तविधेर्ग्रहणवता प्रातिपदिकेन निषेधाद्वचनम् । 'येन विधि'रित्यत्र 'धर्मान्नञ' इति वार्तिकमनपेक्ष्यैतदुक्तम् ॥ ४१ ॥

उ०—प्रयच्छति । उत्तमर्णे चायमिष्यते न च तत्र प्राप्नोतीत्याह—उत्तमर्ण इति । एवञ्च न तत्र प्रत्ययार्थः, यत्र चाधमर्णः प्रत्ययार्थो न तत्रेष्यत इति भावः ॥ वृद्ध्यर्थमिति । 'योऽल्पवृद्धिदानमङ्गीकृत्य परकीयं धनं गृहीत्वा बहुवृद्धयेऽन्यस्मै यच्छति, तत्रैवायमिष्यत' इत्यन्ये ॥ ३० ॥

---

१—'गर्ह्याय ॥ १ ॥ इति' पा० ।

२—'कुसीदिको वार्धुषिको वृद्ध्याजीवश्च वार्धुषिः' इत्यमरः ।

† धर्मान्नञः १।१।७२ वा० २० ( पृ० ५५४ ) 'धर्माच्चेति न वक्तव्यं भवति ।' इति पतञ्जलिः । तत्र ५५४ पृष्ठटिप्पण्यां ४ । ४ । ४६ वा० १ स्थाने ४ । ४ । ४१ वा० १ कर्तव्यम् ।

## ऋतोऽञ् ॥ ४ । ४ । ४९ ॥

### नृनराभ्यामञ्वचनम् ॥ १ ॥

नृनराभ्यामञ्चेति वक्तव्यम् । नुर्धर्म्या नारी । नरस्यापि नारी ।

### विशसितुरिड्लोपश्च ॥ २ ॥

विशसितुरिड्लोपश्चाञ् च वक्तव्यः । विशसितुर्धर्म्यं वैशस्त्रम् ।

### विभाजयितुर्णिलोपश्च ॥ ३ ॥

विभाजयितुर्णिलोपश्चाञ्च वक्तव्यः । विभाजयितुर्धर्म्यं वैभाजित्रम् ॥ ४९ ॥

## शिल्पम् ॥ ४ । ४ । ५५ ॥

किं यस्य मृदङ्गः शिल्पं स मार्दङ्गिकः ? किंचातः ? कुम्भकारे प्राप्नोति । एवं तर्ह्युत्तरपदलोपो[1] द्रष्टव्यः । शिल्पमिव शिल्पम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । मौरजिकः[2] । पाणविकः[2] । पैठरिकः ॥ ५५ ॥

---

प्र०—ऋतोऽञ् । नृनराभ्यामिति । नृशब्दस्य सूत्रेणैव सिद्धे प्रत्यये दृष्टान्तत्वेनोपादानम् । यथा नृशब्दादञ्भवत्येवं नरशब्दादपीत्यर्थः ॥ ४९ ॥

शिल्पम् । अभ्यासपूर्वकं क्रियासु कौशलं शिल्पम् । मृदङ्गादिषु द्विविधा क्रिया, अभ्याहननलक्षणा, निष्पादनलक्षणा च । तत्र विशेषानुपादानात्पृच्छति—किं यस्येति । एवं तर्हीति । उपचरितवृत्तिः शिल्पशब्द आश्रीयत इत्ययमेवेवशब्दलोपः । कुम्भकारस्य हि मृदङ्गो मुख्यं शिल्पं वादकस्य तूपचरितम् । मृदङ्गवादनमिति । लोके तु मार्दङ्गिकशब्दस्य मृदङ्गवादनशिल्पोऽभिधेयः । तत्र साहचर्यान्मृदङ्गशब्दस्य वृत्तिविषये वृत्त्या गतार्थत्वादप्रयोगो वादनशब्दस्य ॥५५॥

---

उ०—ऋतो । नरशब्दादपीति । ठग्निवृत्त्यर्थं वचनम् । अनेनैवोभयोर्नार्यां सिद्धायां 'नृनरयोर्वृद्धिश्चे'ति गणसूत्रमनार्षम् । सर्वथा आद्युदात्तत्वान्नुर्नरस्य वा तज्जातीयैव धर्म्येति जातिप्रतीतिरपि सिद्धा । नरीति तु नरस्येष्यत एव । नृशब्दात्तु ङीषोऽनभिधानम्, तच्च तवाप्यावश्यकं पुंयोगेन ङीषो वारणायेत्याहुः ॥४९॥

शिल्पम् । ननु लोके द्रव्यसौन्दर्यजनकक्रियाकौशले शिल्पशब्दप्रसिद्धेर्मृदङ्गवादनकौशलवति कथं प्रत्ययोऽत आह—अभ्यासेत्यादि । मुख्यगौणसाधारणमिदं लक्षणम् । द्विविधेति । तत्रान्त्ये मुख्यमाद्ये औपचारिकम् । स्पष्टञ्चेदम्भाष्ये । विशेषानुपादानादिति । 'गौणस्यैव ग्रहण'मित्यर्थबोधकविशेषानुपादानादित्यर्थः ॥ उपचरितेति । मुख्येऽनभिधानेन सामर्थ्यादुपचरितस्य ग्रहणमिति भावः । उपचरितमिति । 'मृदङ्गवादन'मिति शेषः । क्वचित्तु तथैव पाठः । तदुपचरितं शिल्पमित्यर्थः । नन्वेवं 'मार्दङ्गवादनिक' इति स्यादत आह—तत्र साहचर्यादिति । वृत्तिविषये वृत्त्येति । तद्धितवृत्तिविषये लक्षणयेत्यर्थः । 'मृदङ्गवादन'शब्दात्त्वनभिधानात्प्रत्ययाभाव इति भावः ॥ ५५ ॥

---

१—'लोपोऽत्र' पा० । २—'मौरजिकः । पाणविकः' इति कीलहार्नभाष्ये नास्ति ।

## शक्तियष्ट्योरीकक् ॥ ४ । ४ । ५९ ॥

किमर्थमीकगुच्यते न कगेवोच्येत ? का रूपसिद्धिः ? शाक्तीकः याष्टीक इति । शक्तियष्ट्योरीकारोऽन्ते* कशब्दश्च प्रत्ययः । न सिध्यति । विभाषा चैव हि शक्तियष्ट्योरीकारः, अपि च 'केऽणः' [ ७ । ४ । १३ ] इति ह्रस्वत्वं प्रसज्येत ।

एवं तर्हि इकगुच्यते । का रूपसिद्धिः शाक्तीको याष्टीक इति ? सवर्णदीर्घत्वेन† सिद्धम् । न सिध्यति । यस्येति लोपः‡ प्राप्नोति । इकारोच्चारणसामर्थ्यान्न भविष्यति । यदि तर्हि प्राप्नुवन् विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । यस्येति लोपं च प्रतीकारोच्चारणमनर्थकं सवर्णदीर्घस्य तु निमित्तमेव ॥ ५९ ॥

प्र०—शक्ति । ईकारान्त इति । बह्वादिपाठात्—'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति वचनाच्चशक्तियष्टीशब्दाभ्यां कग्भविष्यतीत्यर्थः । इकारोच्चारणसामर्थ्यादिति । अन्यथा ककमेव विदध्यात् । न चावग्रहनिवृत्तिरिकारस्य प्रयोजनम्; यतो 'न लक्षणेन पदकारा¹ अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्'। यं विधिमिति । एवं च दीर्घोच्चारणं प्रत्याख्यातम्, इकका सिद्धत्वात् । अन्ये त्वाहुः—शक्तियष्टिभ्यां ठगिति ठग्विधानादेव 'यस्ये'ति लोपाभावः सिद्धः । प्रहरणमित्यनेन हि ठकि सिद्धे पुनष्ठग्विधानं 'यस्ये'ति लोपाभावार्थमेव । वाक्यनिवृत्तये नित्यार्थं तत्स्यादिति चेत्तन्न, शक्तियष्टिभ्यामित्येवाधिकस्य ठकः पूर्वेण सिद्धस्य पुनर्विधानेन वाक्यनिवृत्तेरपि सिद्धत्वात् ॥ ५९ ॥

उ०—शक्ति । ननु सूत्रे ह्रस्वपाठात्कथमीकारोऽन्ते, कथं वा तदन्तात्प्रत्ययोऽत आह—बह्वादीति । तत्र हि शक्तियष्टिशब्दौ पठितौ । भाष्ये—विभाषेति । तथा च ङीषभावे 'शाक्तिक' इत्यापत्तिरिति भावः ॥ ननु लोपायैवेकारोच्चारणं स्यादत आह—अन्यथेति । इककेति । न च 'नञ्स्नञीक'गिति ङीब्विधायकवार्त्तिकेऽस्य ग्रहणार्थं दीर्घपाठः, तत्रापि ह्रस्वस्य सुपठत्वात् । 'कर्कलोहितादीकक्' 'तीयादीक'गित्यादेस्तु न तत्र ग्रहणं, नञ्स्नञ्साहचर्येणास्वार्थिकस्यैव तत्र ग्रहणादिति भावः । वाक्यनिवृत्तेरपि सिद्धत्वादिति । एवञ्च ठगेव वक्तुं युक्त इति भावः । वस्तुतष्ठको विकाराभावार्थत्वस्यापि सम्भावितत्वेनैकादेशदीर्घयोरभावापत्तिरिति चिन्त्यमिदम् ॥ ५९ ॥

---

* बह्वादिभ्यश्च ४ । १ । ४५ इत्यनेन ङीष् ।
† अकः सवर्णे दीर्घः ६ । १ । १०१
‡ यस्येति च ६ । ४ । १४८
१—पदकाराः=संहितानां पदपाठकारा ग्राह्याः ।

## अस्तिनास्तिदिष्टं मतिः ॥ ४ । ४ । ६० ॥

किं यस्यास्ति मतिः स आस्तिकः । किं चातः ? चौरेऽपि प्राप्नोति । एवं तर्हीतिलोपोऽत्र द्रष्टव्यः । अस्तीत्यस्य मतिरास्तिकः । नास्तीत्यस्य मतिर्नास्तिकः । दिष्टमित्यस्य मतिर्दैष्टिकः ॥ ६० ॥

## छत्रादिभ्यो णः ॥ ४ । ४ । ६२ ॥

किं यस्य च्छत्रधारणं शीलं स च्छात्त्रः । किं चातः ? राजपुरुषे प्राप्नोति । एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः—छत्त्रमिव च्छत्त्रम् । गुरुश्छत्त्रम् । गुरुणा शिष्यश्छत्त्रवच्छाद्यः, शिष्येण च गुरुश्छत्त्रवत्परिपाल्यः[2] ॥ ६२ ॥

प्र०—अस्ति । चौरेऽपीति । तस्यापि मतिसद्भावात् । अचेतनश्च पदार्थो नास्तिकः स्यादिति वक्तव्यम् । न्यायस्य तु प्रदर्शनाद्भाष्यकारेण प्रतिपदं नोक्तम् । अस्तीत्यस्येति । परलोककर्तृका च सत्ता विज्ञेया । तत्रैव विषये लोके प्रयोगदर्शनात् । तेन परलोकोऽस्तीति मतिर्यस्य स आस्तिकस्तद्विपरीतो नास्तिकः । दिष्टशब्दो दैवपर्यायस्तेन दैवपरायणो दैष्टिकः ॥ ६० ॥

छत्त्रा । राजपुरुष इति । यः पुरुषो राज्ञश्छत्त्रं धारयति स छात्त्रशब्दाभिधेयः स्यादित्यर्थः । उत्तरपदलोप इति । उत्तरपदस्येवशब्दस्य लोपो द्रष्टव्य इत्यर्थः । गौणी वृत्तिश्छत्त्रशब्दस्याश्रयणीया । तत्रैव प्रत्ययस्य दर्शनादित्युक्तं भवति । गुरुश्छत्त्रमिति । अज्ञानं शिष्यस्य छादयति-निवर्तयति यतस्तत्र छत्त्रं शीलमस्य, गुरुविषयं पालनं शीलमस्येत्यर्थः ॥ ६२ ॥

उ०—अस्तिनास्ति । इति वक्तव्यमिति । इत्यपि वक्तुं योग्यमिति भावः । न्यायस्य त्विति । एवञ्च अर्थतस्तदुक्तमेवेति विशिष्य नोक्तमित्यर्थः । नन्वेवं घटादिकर्तृकसत्तामतिमत्यपि 'आस्तिक' इति स्यादत आह—परलोकेति ॥ ६० ॥

छत्त्रादि । अज्ञानमिति । यथा छत्रमुष्णादिनिवर्तयत्येवमज्ञानं गुरुर्निवर्त्तयति, तत्सदृशत्वाद्गुरुः-छत्रम् । वृत्तौ तद्विषयपालनादौ छत्रशब्दस्य वृत्तिः । तदुक्तं भाष्ये—शिष्येण च गुरुश्छत्रमिव परिपाल्य इति । मुख्यार्थात्तु प्रत्ययो नानभिधानादिति बोध्यम् ॥ ६२ ॥

---

१—"छत्रं शीलमस्य छात्रः । छादनावरणाच्छत्रम् । गुरुकार्येष्ववहितस्तच्छिद्रवारणप्रवृत्तश्छत्रशीलः शिष्यश्छात्रः" इति काशिकायां ( ४ । ४ । ६२ ) सूत्रे छात्रपरिभाषायां 'छिद्रवारणप्रवृत्त'-पदग्रहणं शिक्षकाणां पतनं सूचयति, भाष्ये त्वस्य गन्धोऽपि नास्ति । तथा चोक्तम्—

"गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ॥"

( महाभारत आदिपर्वणि १३४ अ० ५४ श्लोकः )

२—'छत्रमिव परिपाल्यः' इति नागेश सम्मतः पाठः ।

## हितं भक्षाः ॥ ४ । ४ । ६५ ॥

### हितं भक्षा इति चतुर्थीनिर्देशः ॥ १ ॥

हितं भक्षा इति चतुर्थीनिर्देशः कर्तव्यः ।

### इतरथा ह्यनिर्देशः ॥ २ ॥

इतरथा हि निर्देशो न भवति । हितशब्देन च योगे चतुर्थी विधीयते* सा प्राप्नोति ॥ स तर्हि चतुर्थीनिर्देशः कर्तव्यः ? न कर्तव्यः । एवं वक्ष्यामि†—'हितं भक्षास्तदस्मै' । ततो 'दीयते नियुक्तम्' । तदस्मा इति ॥ ६५ ॥

## तद्वहति रथयुगप्रासङ्गम् ॥ ४ । ४ । ७६ ॥

### वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानानर्थक्यं विहितत्वात् ॥ १ ॥

वहतीत्यभिधाने रथशकटहलसीरेभ्यः‡ प्रत्ययविधानमनर्थकम् । किं कारणम् ? 'विहितत्वात्' । विहितोऽत्र प्रत्यय'स्तस्येदम्' [ ४ । ३ । १२० ] इति ।

'शब्दभेदादविधानम्' । शब्दभेदादविधिः स भवति । अन्यो हि शब्दो रथं वहति, अन्यो हि शब्दो रथस्य वोढेति ।

प्र०—हितं । इतरथा हीति । यदि हि चतुर्थी न निर्दिश्यते तदा प्रकृताया अस्येति षष्ठ्याः संबन्धायोग्यत्वादिहानुपस्थानात्प्रत्ययार्थो न निर्दिष्टः स्यादित्यर्थः ॥ ६५ ॥

तद्वहति । शब्दभेदादिति । षष्ठ्यन्तात्प्रत्ययो विधीयमानो द्वितीयान्तान्न प्राप्नोतीत्यर्थः । अर्थसामान्यादिति । अर्थस्यैक्यात्षष्ठ्यन्तादेव प्रत्ययोत्पत्ताविष्टसिद्धिर्भवत्येवेत्यर्थः । ननु 'रथाद्रथाङ्गे'

उ०—हितं । सम्बन्धायोग्यत्वादिति । हितयोगे चतुर्थीविधानादिति भावः । भाष्ये—अनिर्देश इति । अर्थानिर्देश इत्यर्थः । तदेवाह—सा प्राप्नोतीति । चतुर्थी प्राप्नोतीति—अस्येति षष्ठ्यनुपपत्तिरित्यर्थः ॥६५॥

तद्वहति । ननु सूत्रे वहनकर्तृरूपार्थस्यैव विवक्षितत्वाद्वहति वोढेति शब्दभेदकथनमसङ्गतमत आह—षष्ठ्यन्तादिति । षष्ठीवाच्यकर्मत्वापेक्षया द्वितीयावाच्यकर्मत्वं विजातीयमित्यभिमानः । अर्थस्यैक्यादिति । 'वहती'त्यस्य क्रियाप्रधानत्वेऽपि विशेषणविशेष्यभावव्यत्यासेन कर्तृरूपार्थस्यैव सूत्रे प्रतीत्या

* चतुर्थी चाशिष्यायुष्य········सुखार्थहितैः २ । ३ । ७३

† तदस्मै दीयते नियुक्तम् ४ । ४ । ६६

‡ तद्वहति रथयुगप्रासङ्गम्; शकटादण्; हलसीराट्ठक् ४ । ४ । ७६; ८०; ८१

§ रथाद् यत्; हलसीराट्ठक् ४ । ३ । १२१; १२४

**शब्दभेदादविधानमिति चेदर्थाश्रयत्वात्प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् ॥ २ ॥**

शब्दभेदादविधानमिति चेदर्थाश्रयः प्रत्ययविधिः । स[1] एवार्थो रथं वहति, स एव रथस्य वोढेति । तत्रार्थसामान्यात्सिद्धम् ।

इदं तर्हि प्रयोजनम्—यो द्वौ रथौ वहति स द्विरथ्यः । यो द्वयो रथयोर्वोढा स द्विरथः । तेन* सति लुग्भवति† । अनेन सति कस्मान्न भवति ? प्राग्दीव्यत इत्युच्यते‡ ॥ ७६ ॥

## संज्ञायां जन्याः ॥ ४ । ४ । ८२ ॥

किं निपात्यते ? जनन्या जनीभावो निपात्यते, यश्च प्रत्ययः ।

**जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात् ॥ १ ॥**

जन्या इति निपातनमनर्थकम् । किं कारणम् ? 'पञ्चमीनिर्देशात्' । जनीश-

प्र०—इति तत्रोक्तम्; वोढर्यपि प्रयोगदर्शनादिष्यतामित्यदोषः । द्विरथ्य इति । 'रथसीताहलेभ्यो यद्विधा'विति तदन्तविधिः ॥ ७६ ॥

संज्ञायां । निपातनानर्थक्यमिति । वृत्तिकारैर्यन्निपातनमाश्रितं तदनर्थकं विधिनैवेष्ट-

उ०—तस्यैव तद्धितार्थत्वेन विवक्षितत्वादिति भावः । कर्मत्वयोर्वैजात्ये मानाभाव इति तत्त्वम् । भाष्ये—य एवार्थ इति । तद्धितार्थोपदर्शकविग्रहवाक्यस्य तिङन्तस्येत्यर्थः । तदुक्तम्—

'आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः' ॥ इति ।

तुल्यन्यायात्कृदर्थोपदर्शकविग्रहवाक्यस्थतिङन्तेऽप्येवमेव, अत एव वृत्तिविग्रहयोः समानार्थत्वनिर्वाहः । इदमपि वृत्त्यर्थोपदर्शकवाक्यविषयमेव । तेन स्वातन्त्र्येण प्रयुज्यमाने धात्वर्थप्रधानत्वमेव । एवञ्च तुल्यन्यायाच्चित्रगुरित्यस्यार्थोपदर्शके 'चित्रा गावो यस्ये'ति वाक्येऽपि तद्व्यत्यासेन 'चित्रगोसम्बन्धी'त्येव बोधः । अत एव तत्रापि वृत्तिविग्रहयोः समानार्थत्वनिर्वाहः । एतद्बोधनायैव तत्र 'स' इत्यस्य विग्रहवाक्ये प्रयोग इत्याहुः । तत्रोक्तमिति । एवञ्च वोढरि कथं तेन सिद्धिरिति भावः । भाष्ये—तेन सति लुगिति । अनजादित्वेऽपि यथास्य लुक्तथा 'द्विगोर्लु'गित्यत्रोक्तम् ॥ ७६ ॥

संज्ञायां । भाष्ये—जनन्या जनीभाव इति । योग्यतावशात्पुत्रजनन्यत्र जननीशब्देन गृह्यते ।

१—'य एवार्थो' पा० । * रथाद् यत् ४ । ३ । १२१
† द्विगोर्लुगनपत्ये ४ । १ । ८८ ‡ द्विगोर्लुगनपत्ये; प्राग्दीव्यतोऽण् ४ । १ । ८८; ८३; तेन दीव्यति खनति जयति जितम् ४ । ४ । २

ब्दादेषा पञ्चमी ॥ इदं तर्हि प्रयोजनं । सर्वकालः प्रत्ययविधिर्यथा विज्ञायेत । जनीं वहन्ति जन्याः । जनीं वोढारो जन्याः । जनीमवाद्दर्जन्या इति ॥ ८२ ॥

## विध्यत्यधनुषा ॥ ४ । ४ । ८३ ॥

### विध्यत्यकरणेन ॥ १ ॥

विध्यत्यकरणेनेति वक्तव्यम् ।

### इतरथा ह्यतिप्रसङ्गः ॥ २ ॥

अधनुषेति ह्युच्यमानेऽतिप्रसङ्गो भवति । इहापि प्रसज्येत—शर्कराभिर्विध्यति, कण्टकैर्विध्यतीति ॥ तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कस्मान्न भवति 'शर्कराभिर्विध्यति' 'कण्टकैर्विध्यती'ति ? अनभिधानात् ॥ ८३ ॥

## गृहपतिना संयुक्ते ञ्यः ॥ ४ । ४ । ९० ॥

गृहपतिना संयुक्त इत्युच्यते तत्र दक्षिणाग्नावपि प्राप्नोति । दक्षिणाग्निरपि

प्र०—सिद्धिर्भवत्येवेत्यर्थः । जनीशब्दादिति । जायतेऽस्याङ्गर्भ इति जनी वधूरुच्यते । 'जनिसहिभ्या'मितीण्प्रत्ययः । 'जनिवध्योश्चे'ति वृद्धिप्रतिषेधः । सर्वकाल इति । यद्यपि विध्यर्थत्वेऽपि सङ्ख्याकालयोरविवक्षयैतत्सिध्यति तथापि न्यायानुसरणे प्रतिपत्तिगौरवं स्यादिति निपातनाश्रयणम् ॥ ८२ ॥

विध्य । शर्कराभिरिति । प्रधानस्यात्र सापेक्षत्वाद्वृत्तिप्रसङ्गः । अनभिधानादिति । शर्कराभिः पद्य इति प्रयोगाभावादित्यर्थः । एवं चाधनुषेत्यपि न वक्तव्यम् । अन्ये त्वाहुः—धनुषा करणविशेषेण करणमात्रं लक्ष्यत इति सर्वत्र करणे प्रतिषेधः प्रवर्तते ॥ ८३ ॥

गृह । गृहपतिर्यजमानः । यस्मिन्निति । यजमानेन पत्न्या च ये यागविशेषाः क्रियन्ते

उ०—जनीं वोढार इति । लुटि रूपम् ॥ ८२ ॥

विध्यत्य । अकरणेनेत्यस्य—करणाऽयोगेनेत्यर्थः । प्रधानस्यात्रेति । नन्वाख्याते क्रियायाः प्राधान्येऽपि तद्धिते साधनप्राधान्यादिदमयुक्तं, कारकांशे गुणभूतक्रियाया अपि नित्यसापेक्षत्वेनादोषात् । अत एव 'कृतपूर्वी कट'मित्यादि सिध्यति । प्रत्ययार्थत्वात्तु 'प्रधानस्ये'त्युक्तमुपाध्यायैः । इदन्तु बोध्यं—प्रत्ययान्तयोगे न तृतीया, तदर्थंप्रति करणत्वाभावस्य करणसंज्ञाभावस्य च 'कर्तृकर्मणो'रिति सूत्रस्थभाष्यसंमतत्वात्, विग्रहकालिककरणत्वमादाय तु करणत्वव्यवहार इति ॥ ८३ ॥

गृहपतिनासं । ननु गृहपतिरग्निविशेषस्तेन संयोगो गार्हपत्यस्यैवेति कथं दक्षिणाग्नौ प्राप्तिरत

गृहपतिना संयुज्यते ॥ एवं तर्हि गृहपतिना संयुक्त इत्युच्यते सर्वश्च गृहपतिना संयुक्तस्तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो यो गृहपतिना संयुक्त' इति । कश्च साधीयः ? यस्मिन्पत्नीसंयाजाः क्रियन्ते ॥ अथवा गृहपतिर्नाम मन्त्रः स यस्मिन्नुच्यते ॥ अथवा संज्ञायामिति† वर्तते ॥ ९० ॥

## मत्वर्थे मासतन्वोः ॥ ४ । ४ । १२८ ॥

### मासतन्वोरनन्तरार्थे वा ॥ १ ॥

मासतन्वोरनन्तरार्थे वेति वक्तव्यम् । मध्वस्मिन्नस्ति मध्वनन्तरमिति वा मधव्यः माधवः ।

### लुगकारेकाररेफाश्च प्रत्ययाः ॥ २ ॥

लुगकारेकाररेफाश्च प्रत्यया वक्तव्याः । लुक्—मधुः तपः नभः । अकारः—इषः ऊर्जः । इकारः—शुचिः । रेफश्च—शुक्रः ॥ १२८ ॥

## वसोः समूहे च ॥ ४ । ४ । १४० ॥

### अक्षरसमूहे छन्दस उपसंख्यानम् ॥ १ ॥

अक्षरसमूहे छन्दस उपसङ्ख्यानं कर्तव्यम् । 'ओ श्रावये'ति चतुरक्षरम् ।

प्र०—ते पत्नीसंयाजास्ते च गार्हपत्य एव क्रियन्ते न दक्षिणाग्नौ ॥ अथवेति । स च मन्त्रो गार्हपत्यविषय एव ॥ ९० ॥

मत्वर्थे । अनन्तरार्थे वेति । वाशब्दः समुच्चये । मत्वर्थे मासतन्वर्थविशेषणेऽपि प्रत्ययोऽनन्तरार्थेऽपीत्यर्थः । मधुरिति । मधु विद्यतेऽस्मिन्, नभांसि विद्यन्तेऽस्मिन्, तपो विद्यतेऽस्मिन्निति यतो लुक् । नभःशब्दोऽत्राऽभ्रवाची । अत्र नभस्तप इति नपुंसकत्वं छान्दसत्वात् । इष इति । एषणमिट्, साऽस्मिन्नस्ति ऊर्गस्मिन्नस्ति । शोचनं शुक्, साऽस्मिन्नस्तीति प्रत्ययाः । शुक्र इत्यत्रायस्मयादित्वाज्जश्त्वाभावः ॥ १२८ ॥

वसोः । अक्षरसमूह इति । अक्षरसमूहवाचिनश्छन्दःशब्दाद्यत्प्रत्ययः । ओ श्रावयेति ।

उ०—आह—यजमान इति । स च गार्हपत्य इव दक्षिणाग्नावपि कार्याणि करोतीति तेनापि स संयुक्त इति भावः । प्रकर्षगतेर्मन्त्रविशेषस्य वा ग्रहणे बीजाभावादाह—भाष्ये—अथवा संज्ञायामिति ॥ ९० ॥

मत्वर्थे मास । मासतन्वर्थविशेषणेऽपीति । सामान्यस्य विशेषम्प्रति विशेषणत्वादिति भावः । ननु लुकि विशेष्यनिघ्नतया पुंस्त्वं स्यादत आह—नपुंसकत्वमिति । वार्तिके बाहुलकात् 'र' इति समुदायनिर्देशेऽपि इफः कृतः । क्वचित्तु—'रशब्दाश्च प्रत्यया' इति पाठः ॥ १२८ ॥

वसोः स । ननु 'छन्दः'शब्दस्याक्षरसमूहवाचकत्वात्ततस्तत्र प्रत्ययविधानानुपपत्तिरत आह—

† संज्ञायां धेनुष्या ४ । ४ । ८९ १—'मध्वस्मिन्ननन्तरमिति' पा० ।

'अस्तु श्रौष'डिति चतुरक्षरम् । 'ये यजामहे'इति पञ्चाक्षरम् । 'यजे'ति द्व्यक्षरम् । द्व्यक्षरो 'वष'ट्कारः । एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञमनुविहितः ।

**छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् ॥ २ ॥**

छन्दसि बहुभिर्वसव्यैरुपसङ्ख्यानं कर्तव्यम् । 'हस्तौ पृणस्व बहुभिर्वसव्यैः'* ।

**अग्निरीशे वसव्यस्य ॥ ३ ॥**

'अग्निरीशे वसव्यस्य'† इत्युपसङ्ख्यानं कर्तव्यम् ।

तत्तर्हि उपसङ्ख्यानं कर्तव्यम् ? न कर्तव्यम् ।

**स्वार्थविज्ञानात्सिद्धम् ॥ ४ ॥**

स्वार्थविज्ञानात्सिद्धमेतत्[२] । वसव एव वसव्याः पान्तु ॥ १४० ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादोऽध्यायश्च चतुर्थः समाप्तः ॥

प्र०—अक्षराणि गण्यन्ते । स्वार्थविज्ञानादिति । वसोरिति योगविभागः कर्तव्यः । तेन स्वार्थे भविष्यतीत्यर्थः ॥ १४० ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादोऽध्यायश्च चतुर्थः समाप्तः ।

उ०—अक्षरसमूहवाचिन इति । अक्षरसमूहे वर्तमानात्प्रातिपदिकादिति वार्तिकार्थः । प्रत्ययस्तु स्वार्थे इति भावः । भाष्ये-प्रजापतिः । प्रजापतिदृष्ट इत्यर्थः । पृणस्वेति । पृणातिः—पूरणकर्मा । स्वार्थे यतो विधानाभावादाह—योगविभाग इति । वस्तुतः स्वार्थिकप्रकरणे एषामुपसंख्यानं कर्तव्यं, यत्प्रत्यय उपसङ्ख्येयो वेति भाष्यार्थ इति पञ्चमे वक्ष्यते ॥ १४० ॥

इति श्रीकालोपनामकशिवभट्टसुतसतीदेवीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादोऽध्यायश्च चतुर्थः समाप्तः ।

---

१—इदं भाष्यकारेण तैत्तिरीयब्राह्मणादुद्धृतम् । * अथर्व० ७ । २७ । ८
† ऋ० ४ । ५५ । ८ २—'इति' क्वचिन्न ।
३—अत्रत्यानि वार्तिकानि भाष्यं च ५ । ४ । ३० सूत्रेऽपि व्याख्यास्यन्ते ।

मुद्राकरकराघातैर्वाणी चेद् विकला क्वचित् । मात्रासंयोजनैरेतां सान्त्वयन्तु विचक्षणाः ॥
गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति वेदविमर्शादिपुस्तकलेखकेन 'सुधारक'मासिकपत्रसम्पादकेनानेकग्रन्थसम्पादकानुवादकेन वेद-व्याकरण-दर्शनाद्याचार्येण वेदव्रतशास्त्रिणा विहितायां 'विमर्श'टिप्पण्यां चतुर्थोऽध्यायः पूर्णतां गतः ।

# व्याकरणमहाभाष्य-परिशिष्टम्

## तृतीयचतुर्थाध्यायस्थश्लोकवार्तिकसङ्ग्रहः

* अथ तृतीयोऽध्यायः *

### धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ ३ । १ । २२ ॥

१. [1]वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

### कण्ड्वादिभ्यो यक् ॥ ३ । १ । २७ ॥

२. धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥

### णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ३ । १ । ४८ ॥

३. नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥

### सार्वधातुके यक् ॥ ३ । १ । ६७ ॥

४. [2]सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥ १ ॥

५. भावकर्मणोरित्यननुवृत्त्यैव सिद्धे सत्यनुवृत्तिर्यको भावाय ।
कर्तरीति च योगविभागः श्यनः पूर्वविप्रतिषेधावचनाय ॥ २ ॥

### तनादिकृञ्भ्य उः ॥ ३ । १ । ७९ ॥

६. तनादित्वात् कृञः सिद्धं सिज्लोपे च न दुष्यति ।
चिण्वद्भावेऽत्र दोषः स्यात् सोऽपि प्रोक्तो विभाषया ॥

### व्यत्ययो बहुलम् ॥ ३ । १ । ८५ ॥

७. सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥

### धातोः ॥ ३ । १ । ९१ ॥

८. आद्ये योगे न व्यवाये तिङः स्युः, न स्यादेत्वं टेष्टितां यद्विधत्ते ।
एशः शित्त्वं यच्च लोटो विधत्ते, यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात् ॥

---

१–कारिकेयं ३ । १ । ३६ सूत्रभाष्येऽपि विद्यते ।

२–कारिकेयं ३ । ३ । १६१ सूत्रभाष्येऽप्यस्ति ।

### भृञोऽसंज्ञायाम् ॥ ३ । १ । ११२ ॥

९. संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति ॥ १ ॥

१०. अथवा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम् ।
यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा ॥ २ ॥

### राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ३ । १ । ११४ ॥

११. सूसर्तिभ्यां सर्तेरुत्वं सुवतेर्वा रुडागमः ।

### अमावस्यदन्यतरस्याम् ॥ ३ । १ । १२२ ॥

१२. अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥

### छन्दसि निष्टर्क्य······स्ताव्योपचाय्यपृडानि ॥ ३ । १ । १२३ ॥

१३. निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् ।
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥ १ ॥

१४. ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः ।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ २ ॥

### आनाय्योऽनित्ये ॥ ३ । १ । १२७ ॥

१५. आनाय्योऽनित्य इति चेद्द दक्षिणाग्नौ कृतं भवेत् ।
एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥

---

### आतोऽनुपसर्गे कः ॥ ३ । २ । ३ ॥

१६. नित्यं प्रसारणं ह्वो यण् वार्णादाङ्गं न पूर्वत्वम् ।
योऽनादिष्टादचः पूर्वस्तत्कार्ये स्थानिवत्त्वं हि ॥ १ ॥

१७. प्रोवाच भगवान् कात्यस्तेनासिद्धिर्यणस्तु ते ।
आतः को लिण्नैङः पूर्वः सिद्ध आह्वस्तथा सति ॥ २ ॥

### कर्तरि भुवः खिष्णुच्खुकञौ ॥ ३ । २ । ५७ ॥

१८. इष्णुच इकारादित्वमुदात्तत्वात् कृतं भुवः ।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥

### उपेयिवाननाश्वाननूचानश्च ॥ ३ । २ । १०९ ॥

१९. नोपेयिवान्निपात्यो द्विर्वचनादिड् भविष्यति परत्वात् ।
अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ॥ १ ॥

२०. अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य ।
द्विर्वचने चैकाच्त्वात् तस्मादिड्बाधते द्वित्वम् ॥ २ ॥

## परोक्षे लिट् ॥ ३ । २ । ११५ ॥

२१. परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम् ।
उत्वं वादेः परादक्षणः सिद्धं वास्मान्निपातनात् ॥

## लट् स्मे ॥ ३ । २ । ११८ ॥

२२. स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति ।
न स्मपुराद्यतन इति ब्रुवता कात्यायनेनेह ॥ १ ॥

२३. अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नास्ति नञ्कार्यम् ।
अपरोक्षानद्यतनौ ननौ च नन्वोश्च विनिवृत्तौ ॥ २ ॥

२४. न पुराद्यतन इति भवेदेतद्वाच्यं तत्र चापि लुङ्ग्रहणम् ।
अथ बुद्धिरविशेषात् स्मपुरा हेतू तत्र चापि शृणु भूयः ॥ ३ ॥

२५. अपरोक्षे चेत्येष प्राक् पुरिसंशब्दनादविनिवृत्तः ।
सर्वत्रानद्यतनस्तथा सति नञा किमिह कार्यम् ॥ ४ ॥

२६. स्मादावपरोक्षे चेत्यकार्यमिति शक्यमेतदपि विद्धि ।
शक्यं हि निवर्तयितुं परोक्ष इति लट् स्म इत्यत्र ॥ ५ ॥

२७. स्यादेषा तव बुद्धिः स्मलक्षणेऽप्येवमेव सिद्धमिति ।
लट् स्म इति भवेन्नार्थस्तस्मात् कार्यं परार्थं तु ॥ ६ ॥

## तौ सत् ॥ ३ । २ । १२७ ॥

२८. अवधारणं लृटि विधानं योगविभागतश्च विहितं सत् ।

## ग्लाजिस्थश्च क्स्नुः ॥ ३ । २ । १३९ ॥

२९. स्नोर्गित्त्वान्न स्थ ईकारः किङ्तोरीत्त्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ॥

## मतिबुद्धिपूजार्थेभ्यश्च ॥ ३ । २ । १८८ ॥

३०. शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ १ ॥

३१. हृष्टतुष्टौ तथा क्रान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः ॥ २ ॥

---

## उणादयो बहुलम् ॥ ३ । ३ । १ ॥

३२. बाहुलकं प्रकृतेस्तनुदृष्टेः, प्रायसमुच्चयनादपि तेषाम् ।
कार्यसशेषविधेश्च तदुक्तं, नैगमरूढिभवं हि सुसाधु ॥ १ ॥

३३. नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम् ।
यन्न विशेषपदार्थसमुत्थं, प्रत्ययतः प्रकृतेश्च तदुह्यम् ॥ २ ॥

३४. संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥ ३ ॥

## हेतुहेतुमतोर्लिङ् ॥ ३ । ३ । १५६ ॥

३५. देव[1]त्रातो गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

## विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ ३ । ३ । १६१ ॥

३६. [2]सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥

---

## करणे हनः ॥ ३ । ४ । ३७ ॥

३७. हन्तेः पूर्वविप्रतिषेधो वार्तिकेनैव ज्ञापितः ।

॥ तृतीयोऽध्यायः समाप्तः ॥

---

# अथ चतुर्थोऽध्यायः

## स्त्रियाम् ॥ ४ । १ । ३ ॥

३८. स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥ १ ॥

३९. लिङ्गात् स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप् प्रसज्यते ।
नत्वं खरकुटीः पश्य खट्वावृक्षौ न सिध्यतः ॥ २ ॥

४०. नापुंसकं भवेत्तस्मिन् तदभावे नपुंसकम् ॥ ३ ॥

४१. असत्तु मृगतृष्णावत्, गन्धर्वनगरं यथा ।
आदित्यगतिवत्सन्न, वस्त्रान्तर्हितवच्च तत् ॥ ४ ॥

---

१—श्लोकवार्तिकमिदं ७ । ४ । ४१ सूत्रेऽपि विद्यते ।

२—इयं कारिका ३ । १ । ६७ सूत्रभाष्येऽप्यस्ति ।

४२. तयोस्तु तत्कृतं दृष्ट्वा यथाकाशेन ज्योतिषः ।
अन्योऽन्यसंश्रयं त्वेतत् प्रत्यक्षेण विरुध्यते ॥ ५ ॥

४३. तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवसास्यति ।
संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः ॥ ६ ॥

४४. संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् ।
तस्योक्तौ लोकतो नाम गुणो वा लुपि युक्तवत् ॥ ७ ॥

## न षट्स्वस्रादिभ्यः ॥ ४ । १ । १० ॥




४५. षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ।
प्रत्याहाराच्चापा सिद्धं दोषस्त्वित्त्वे तस्मान्नोभौ ॥

## सर्वत्र लोहितादिकतन्तेभ्यः ॥ ४ । १ । १८ ॥

४६. कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते ।
पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम् ॥

## अन्तर्वत्पतिवतोर्नुक् ॥ ४ । १ । ३२ ॥

४७. अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् ।
गर्भिण्यां जीवपत्यां च वा च च्छन्दसि नुग्भवेत् ॥

## वोतो गुणवचनात् ॥ ४ । १ । ४४ ॥

४८. सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

अपर आह—

४९. उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि ।
वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ४ । १ । ५४ ॥

५०. अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथा युतम् ॥

## जातेरस्त्रीविषयादयोपधात् ॥ ४ । १ । ६३ ॥

५१. आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥

अपर आह—

५२. प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ४ । १ । ७८ ॥

५३. प्रकर्षे चेत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुरु ।
आम्विधिः केन ते न स्यात् प्रकर्षे यद्ययं तमः ॥ १ ॥

५४. उद्गतस्य प्रकर्षोऽयं गतशब्दोऽत्र लुप्यते ।
नाव्ययार्थप्रकर्षोऽस्ति धात्वर्थोऽत्र प्रकृष्यते ॥ २ ॥

५५. उद्गतोऽपेक्षते किञ्चित् त्रयाणां द्वौ किलोद्गतौ ।
चतुष्प्रभृतिकर्तव्यो वाराह्यायां न सिध्यति ॥ ३ ॥

५६. भिद्यतेऽस्य स्वरस्तेन विधिश्चामो न लक्ष्यते ।
शब्दान्तरमिदं विद्याद् दृष्टमभ्यन्तरं त्रिषु ॥ ४ ॥

५७. अनुबन्धौ त्वया कार्यौ चाबर्थं टाब्विधिर्मम ।
उक्तेऽपि हि भवन्त्येते..................॥ ५ ॥

५८. अस्थानिवत्त्वे दोषस्ते वृद्धिरत्र न सिध्यति ।
त्वयाप्यत्र विशेषार्थं कर्तव्यं स्याद्विशेषणम् ॥ ६ ॥

५९. अक्रियैव विशेषोत्र सानुबन्धौ विशेषवान् ।
पाश्यायां ते कथं न स्यादेको मे स्याद्विशेषणम् ॥ ७ ॥

६० अन्यस्मिन् सूत्रभेदः स्यात् षिति लिङ्गं प्रसज्यते ।
ङिति चेत्क्रीयिते दोषो व्यवधानान्न दुष्यति ॥ ८ ॥

६१. योऽनन्तरो न धातुः स यो धातुः सोऽनन्तरः ।
न चेदुभयतः साम्यमुभयत्र प्रसज्यते ॥ ९ ॥

६२. यङा विशेष्येत यदीह धातुर्यङ् धातुना वा यदि तुल्यमेतत् ।
उभौ प्रधानं यदि नात्र दोषस्तथा प्रसार्येत तु वाक्पतिस्ते ॥ १० ॥

६३. धातुप्रकरणस्येह न स्थानमिति निश्चयः ।
आत्त्वार्थं यदि कर्तव्यं तत्रैवैतत् करिष्यते ॥ ११ ॥

६४. उपदेशे यदेजन्तं तस्य चेदात्त्वमिष्यते ।
उद्देशो रूढिशब्दानां तेन गोर्न भविष्यति ॥ १२ ॥

## गोत्रेऽलुगचि ॥ ४ । १ । ८९ ॥

६५. भूम्नीति च लुक् प्राप्तो बाह्ये चार्थे विधीयतेऽजादिः ।
बहिरङ्गमन्तरङ्गाद्विप्रतिषेधादयुक्तं स्यात् ॥ १ ॥

६६. भूम्नि प्राप्तस्य लुको यदजादौ तद्धितेऽलुकं शास्ति ।
एतद्ब्रवीति कुर्वन् समानकालावलुग्लुक् च ॥ २ ॥

६७. यदि वा लुकः प्रसङ्गे भवत्यलुक् छस्तथा प्रसिद्धोऽस्य ।
लुग्वालुकः प्रसङ्गं प्रतीक्षते छेऽलुगस्य तथा ॥ ३ ॥

**यूनि लुक् ॥ ४ । १ । ९० ॥**

६८. [1]राजन्याद्वुञ् मनुष्याच्च ज्ञापकं लौकिकं परम् ।

**तस्यापत्यम् ॥ ४ । १ । ९२ ॥**

६९. तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥

**एको गोत्रे ॥ ४ । १ । ९३ ॥**

७०. अपत्यं समुदायश्चेन्नियमोऽत्र समीक्षितः ।
तस्मिन् सुबहवः प्राप्ता नियमोऽस्य भविष्यति ॥

**स्त्रीभ्यो ढक् ॥ ४ । १ । १२० ॥**

७१. वडवाया वृषे वाच्ये अण् क्रुञ्चाकोकिलात् स्मृतः ।
आरक् पुंसि ततोऽन्यत्र गोधाया द्रृग्विधौ स्मृतः ॥

**मनोर्जातावञ्यतौ षुक् च ॥ ४ । १ । १६१ ॥**

७२. अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

**वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ ४ । १ । १६५ ॥**

७३. गोत्रयूनोः समावेशे को दोषस्तत्कृतं भवेत् ।
यस्कादिषु न दोषोऽस्ति न यूनीत्यनुवर्तनात् ॥ १ ॥

७४. दोषोऽत्रिबिदपञ्चाला न यूनीत्यनुवर्तनात् ।
कण्वादिषु न दोषोऽस्ति न यून्यस्ति ततः परम् ॥ २ ॥

७५. एको गोत्रे प्रतिपदं गोत्राद्य यूनि च तत् स्मरेत् ।
[2]राजन्याद्वुञ् मनुष्याच्च ज्ञापकं लौकिकं परम् ॥ ३ ॥

---

**दृष्टं साम ॥ ४ । २ । ७ ॥**

७६. दृष्टे समनि जाते चाप्यण् डिद्द्विर्वा विधीयते ।
तीयादीकग् न विद्याया गोत्रादङ्कवदिष्यते ॥

**वामदेवाड्ड्यड्यौ ॥ ४ । २ । ९ ॥**

७७. सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ।
ग्रहणं मातदर्थे भूद्व वामदेव्यस्य नञ्स्वरे ॥

**कौमारापूर्ववचने ॥ ४ । २ । १३ ॥**

७८. कौमारापूर्ववचने कुमार्या अण् विधीयते ।
अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥

---

१–पूर्वार्धं त्वस्य ४ । १ । १६५ सूत्रे द्रष्टव्यम् । २–इदं ४ । १ । ९० सूत्रेऽप्यस्ति ।

**खण्डिकादिभ्यश्च ॥ ४ । २ । ४५ ॥**

७९. अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।
गोत्राद्वुञ् न च तद्गोत्रं तदन्तान्न स सर्वतः ॥ १ ॥

८०. ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः ।
सेनायां नियमार्थं वा यथा बाध्येत वाञ् वुञा ॥ २ ॥

**क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ४ । २ । ६० ॥**

८१. अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः ।
इकन् पदोत्तरपदात् शतषष्टेः षिकन् पथः ॥

**कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ४ । २ । ९६ ॥**

८२. ………………… कुक्षिग्रीवात्तु कन् ढञ् ।

**अव्ययात्त्यप् ॥ ४ । २ । १०४ ॥**

८३. अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात् स्मृतः ।

---

**अन्तःपूर्वपदाट्ठञ् ॥ ४ । ३ । ६० ॥**

८४. समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वं दमाच्च देहाच्च लोकोत्तरपदस्य च ॥ १ ॥

८५. मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ चापि प्रत्ययौ ॥ २ ॥

८६. मध्यो मध्यं दिनण् चास्मात् स्थाम्नो लुगजिनात्तथा ।
बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य इष्यते ॥ ३ ॥

**विदूराञ्ञ्यः ॥ ४ । ३ । ८४ ॥**

८७. वालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ॥

**तस्य विकारः ॥ ४ । ३ । १३३ ॥**

८८. [1] ………………………बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ……………………… ॥

---

**आकर्षात् ष्ठल् ॥ ४ । ४ । ९ ॥**

८९. आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात् किसरादेः षितः षडेते ठगधिकारे ॥

**॥ चतुर्थोऽध्यायः समाप्तः ॥**

---

१–कृत्स्नं तु ४ । १ । ९२ सूत्रे द्रष्टव्यम् ।

# तृतीयभागस्थभाष्यशुद्धिपत्रकम्

## [ तृतीयोऽध्यायः ]

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | २ | -हती | महती |
| १४ | १ | तद्यथा | तद्यथा— |
| १७ | ४ | द्वय-ऽजादीनां | द्वयसजादीनां |
| २१ | १५ | नाद्यदात्तत्वे | नाद्युदात्तत्वे |
| २२ | १० | ज्ञापकं ? | ज्ञापकम् ? |
| २८ | ९ | ाद्युदात्तत्वस्य | वाद्युदात्तत्वस्य[2] |
| २९ | ५;६;८ | कते | कृते |
| ३२ | ८ | सिद्धयति | सिध्यति |
| ३२ | ११ | नवाऽभ्यास | न वाभ्यास |
| ३३ | ४ | नर्थंक्यम् | नर्थक्यम् |
| ३४ | ९ | नहि | न हि |
| ३९ | ८ | स बन्द्धुम | सम्बन्द्धुम |
| ४१ | ५ | लोष्ठाः | लोष्टाः |
| ४८ | १० | माभू'दिति | मा भू'दिति |
| ५० | १० | जातुत् प्रचित्य-यान्तेन | जातुचित् प्रत्यया-न्तेन |
| ५१ | ७ | तहि | तर्हि |
| ५४ | ७ | अपरआहुः-'भवित-व्यमिति | अपर आहुर्भवित-व्यमिति |
| ५६ | ७ | नर्थंक्यम् | नर्थक्यम् |
| ५९ | ६ | विकलीबांचक्रे | विक्लीबांचक्रे |
| ६२ | २ | भशादि | भृशादि |
| ६२ | ७ | [1]प्रसज्येत | [2]प्रसज्येत |
| ६८ | ६ | नाम् | नाम |
| ७१ | ५ | हति | इति |
| ७४ | ५ | समभिहारः इति | समभिहारः |
| ८३ | १ | सिद्धा त | सिद्धा तत्र |
| ९३ | ११ | ग्राम | ग्रामे |
| १०२ | १२ | प्राप्नोति | प्राप्नोति । |
| ११० | ८ | परत्वाछ्थनादयः | परत्वाच्छ्थनादयः |
| ११० | १२ | निर्द्दिष्टं | निर्दिष्टं |
| ११३ | ४ | श्रयते | श्रूयते |
| ११७ | ३ | एतद्रपं | एतद्रूपं |
| ११८ | १२ | कथं चिद्दर्ते | कथंचिद्दर्ते |
| ११९ | ५ | इयेव | इयेष |
| १२३ | ४ | लङ् परस्य | लङ्परस्य |
| १२३ | ३ | न लङ् | न लङ्— |
| १२६ | २ | वचनेचिल | वचने चिल |
| १३१ | ८ | 'अनिादतां | 'अनिदितां |
| १३६ | ७ | क ाविधिः' | क्सविधिः' |
| १४० | ९ | जृतम्भुम्रचु | जृस्तम्भुम्रुचु |
| १४० | ११ | ताव ग्लुचि | तावद्ग्लुचि |
| १४३ | ४ | श्रयते | श्रूयते |
| १५० | ९ | किंचिद्रजति | किंचिद्रुजति |
| १५१ | ६ | वाधितुम् | बाधितुम् |
| १५१ | ७ | वाध्यते | बाध्यते |
| १५४ | ११ | तस्माछ्नमेषः | तस्माच्छ्नमेषः |
| १६२ | ७ | लिङ्गास्सिद्धम् | लिङ्गत्वात् सिद्धम् |
| १७१ | ४ | इति । कर्ता | इति कर्ता |
| १:८ | ११ | वाधनं | बाधनं |
| १८१ | १३ | भूद्वत्वं | भूद्वत्वं |
| १८३ | ७ | यथास्युः | यथा स्युः |
| १८६ | ४ | यत्र— | यत्र |
| १८८ | ७ | कु भं | कुम्भं |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६२ | १ | पवति | पचति |
| १६४ | २ | यदताऽजन्ता | यदुताजन्ता |
| २०३ | १५ | वक्तव्कम् | वक्तव्यम् |
| २०८ | ११ | त्त्रियाः | त्त्रियाः |
| २१० | ५ | कृष्ट च्या | कृष्टपच्या |
| २१५ | १६ | कारणं ? | कारणम् ? |
| २१६ | १ | इति— | इति । |
| २२४ | १० | मांसकामुक | मांसकामक |
| २२५ | १० | इत्येतद्रपं | इत्येतद्रूपं |
| २२८ | ८ | स्थानिवत्वं | स्थानिवत्त्वं |
| २२८ | १० | लिगानैङः | लिण्नैङः |
| २३८ | १० | कर्त्तृ क | कर्तृक |
| २४१ | ११ | दधगिति | दध्गिति |
| २४१ | १४ | क्विवैप | क्विवैष |
| २४३ | १२ | सुब्ग्रहणं | सुब्ग्रहणं |
| २४६ | ६ | क्रिपं | क्विपं |
| २५० | ६ | तहि | तर्हि |
| २५७ | ३ | श्रतावेव | श्रुतावेव |
| २६१ | ६;७ | ऋकारान्तानां | ॠकारान्तानां |
| २६७ | ५ | दाषः | दोषः |
| २७० | ११ | पराचे | परोक्षे |
| २७१ | ६ | तहि | तर्हि |
| २७६ | ३ | सवेभ्यो | सर्वेभ्यो |
| २७९ | ११ | पुष्य | पुष्य— |
| २८० | ३ | कि | किं |
| २८८ | ४ | तद्विदेश | स तद्विदेश |
| २८८ | ५ | आहस्वित् | आहोस्वित् |
| २८९ | ३ | भक्तिरितिः | भक्तिः |
| २९० | १० | तिङादेशः | तिङादेशः |
| २९२ | ५ | क्रियाया | क्रियाया |
| २९७ | १२ | [ ४।१।१०० ] | [ १।४।१०० ] |
| ३०२ | १० | ताच्छीलिकेष | ताच्छीलिकेषु |
| ३०४ | ८ | ऋच्छत्यताम् | ऋच्छत्यृताम् |
| ३१८ | १ | तह्यं भयमनेन | तर्ह्युभयमनेन |
| ३२० | २ | सद्विधिनित्यम | सद्विधिर्नित्यम |
| ३२६ | ३ | व्या ।चोरी | व्यावचोरी |
| ३३१ | १३ | क्रियते | क्रियते |
| ३३५ | ८ | रणे रण | रणे रणे |
| ३३५ | १४ | तेनाऽऽयुधम | तेनायुधम् |
| ३३८ | ३ | क्विन्— | क्विन् |
| ३३८ | ११ | श्रयते | श्रूयते |
| ३४३ | ५ | कृत्यल्युटा | कृत्यल्युटो |
| ३४६ | ४ | युधिष्ठशिभ्यो | युधिष्ठशिष्ठषिभ्यो |
| ३४९ | ७ | नावयवत्वादा | नावयवत्वादा |
| ३४९ | ७ | संभावनवयवा- | संभावनावयवा- |
| ३५० | ११ | देवश्चेद्वृष्टो | देवश्चेद्वृष्टो |
| ३५१ | ८ | यत्त | यत्तु |
| ३५५ | ६ | अत्रापि-नानद्य | अत्रापि 'नानद्य |
| ३६६ | ६ | इम मा भूत् | इह मा भूत् |
| ३७१ | ११ | प्राप्नाति | प्राप्नोति |
| ३७३ | ५ | वच्यामी ति | वक्ष्यामी'ति । |
| ३७५ | १ | सेसेनसेअसन् | सेसेनसेऽसेन् |
| ३८२ | ६ | कि | किं |
| ३९० | ७ | कि | किं |
| ३९६ | ३ | मेताषामस्ति | मेषामस्ति |
| ४०१ | १ | प्रथमपंक्तिः पुनर्मुद्रिता | न स्यात् |
| ४०२ | ६ | होभयं | इहोभयं |
| ४०७ | १ | आद्य दात्त | आद्युदात्त |
| ४०८ | ७ | टायनस्येव | टायनस्यैव |
| ४०९ | १ | इत्येवमुत्व | इत्येवमुत्व- |
| ४०९ | ६ | रुकारय | रुकारस्य |
| ४१६ | ३ | बाससाभिध | बासाभिध |
| ४१६ | २६ | चतुष्टयम् | तुर्यकम् |





## [ चतुर्थोऽध्यायः ]

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४३१ | १६ | नेन्सिद्ध | नेन्सिद्ध |
| ४३४ | २ | स्वर | स्वरे |
| ४३४ | १४ | भित्तुकाः | भित्तुकाः |
| ४५७ | ५ | गार्ग्यायणी | गार्ग्यायणी |
| ४५७ | ६ | ताव | तावद् |
| ४५८ | ३ | प्र द्धि | प्रसिद्धि |
| ४६२ | ६ | तद्ग्रह्णम् | तद्ग्रहणम् |
| ४६३ | ३ | रेत ग्रहणम् | रेतद्ग्रहणम् |
| ४६८ | ४ | मित्युच्यतेः ? | मित्युच्यते ? |
| ४७१ | ५ | उत्त ' | उत्तरं |
| ४७४ | ७ | श्रयते | श्रूयते |
| ४८८ | ४ | कप, | कप्, |
| ४८८ | १६ | न वक्तव्य । | न वक्तव्यम् । |
| ४६४ | २ | ग्रहणान | ग्रहणेन |
| ४६४ | ७ | वक्तयाः | वक्तव्याः |
| ४६५ | ६ | तर्त्तिह | तर्त्तहिं |
| ५०३ | १ | चोक्त | चोक्तं |
| ५०६ | ३ | वर्णावाची | वर्णवाची |
| ५१३ | ५ | स्व ङ्ग' | स्वाङ्गं |
| ५१४ | ११ | विशेषण | विशेषणं |
| ५१६ | ५ | पूर्वदम | पूर्वपदम |
| ५१६ | ६ | यागे | योगे |
| ५२० | १ | सर्वभाक | सर्वभाक् |
| ५२४ | ७ | ङका : ? | ङकारः ? |
| ५२४ | ७ | विशे णार्थेनार्थः | विशेषणार्थेनार्थः |
| ५२५ | १० | ऊङ् | ऊङ् |
| ५२७ | ५ | विमाषा | विभाषा |
| ५३४ | ४ | कस्योदेश | कस्यादेश |
| ५४४ | २ | कस्तहि | कस्तर्हि |
| ५४७ | १३ | य | यञ् च |
| ५५१ | ६ | सङ्गृीतम् | सङ्गृहीतम् |
| ५५२ | १ | प्राग्वभवनात् | प्राग्भवनात् |
| ५५२ | ६ | सौंस्नमिति | पौंस्नमिति |
| ५५५ | ८ | ऽ ारस्मादुत्पत्ति | ऽपरस्मादुत्पत्ति |
| ५५६ | ८ | विप्रतिपधात्तु | विप्रतिषेधात्तु |
| ५५६ | ६ | उर्वः | उर्वाः |
| ५५६ | ६ | गार्गी यः | गार्गीयः |
| ५५७ | १ | भूम्नाति | भूम्नीति |
| ५५७ | २ | प्रतिषंधाद | प्रतिषेधाद |
| ५५७ | ३ | भूम्नि | भूम्नि |
| ५५७ | ४ | एनद्ब्रवीति | एतद्ब्रवीति |
| ५५८ | २ | ग्लुग्वक्तव्यः | रलुग्वक्तव्यः |
| ५५८ | ७ | बैदस्या त्यं | बैदस्यापत्यं |
| ५५८ | १० | य बहु | यद्बहु |
| ५५६ | १ | वदच्यते | वदुच्यते |
| ५६० | ३ | कुशिकि | कुशिकि |
| ५६१ | ७ | पुनलु को | पुनर्लु को |
| ५६५ | ७ | का पि | कापि |
| ५६७ | ६ | 'क्फिञो | 'फक्फिञो |
| ५६६ | १ | गत्र' | गोत्र' |
| ५७० | ५ | प्रयोजोनम् | प्रयोजनम् |
| ५७० | ६ | वृद्धान्य | वृद्धान्यस्य |
| ५७० | ७ | वृद्धा नि | वृद्धानि |
| ५७० | ८ | शक्या बाधतुम् | शक्यो बाधितुम् |
| ५७० | १० | कतव्यः | कर्तव्यः |
| ५७१ | ५ | निदेशः | निर्देशः |
| ५७५ | १ | वचन | वचनं |
| ५७५ | ४ | व्य दिशति | व्यपदिशति |
| ५७७ | ३ | द्वितीय | द्वितीयं |
| ५७८ | ४ | उर त्या | उरपत्या |
| ५८४ | ८ | अणान्त दि | अणान्तादि |
| ५६३ | ८ | इ ति | इति |
| ५६४ | २७ | 'चितस्तद्धितस्ये'-स्येकं | तद्धितस्य कित' इत्येकं |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५६७ | ४ | मिताय | मितीय |
| ५६७ | ४ | पुनर्वंश्चमिदानीं | पुनर्वंचनमिदानीं |
| ६०० | ३ | मृष्यण | मृष्यण् |
| ६०३ | ७ | स्मृतः | स्मृतः |
| ६०६ | १० | प्रतिपदिकस्य | प्रातिपदिकस्य |
| ६०६ | ५ | ि मिताभ्यां | मिमताभ्यां |
| ६१२ | २;४ | कार्माभ्यां | कार्मार्याभ्यां |
| ६१२ | १५ | सिध्यर्थं'मिति | सिद्धयर्थं मिति |
| ६१३ | ४ | युङ्वचनात् | युड्वचनात् |
| ६१३ | ७ | कुक् च | कुक् च |
| ६१४ | १० | तापसा- | तापसा- |
| ६१६ | ३ | प्रभते | प्रभृते |
| ६१६ | ११ | युवसंज्ञाश्च | युवसंज्ञश्च |
| ६२० | २ | रूप'त्तिमविष्यति | रूपत्तिर्भविष्यति |
| ६२० | २ | बैदस्या त्यानि | बैदस्यापपत्यं |
| ६२० | ३ | बि । इति | बिदा इति |
| ६२१ | १ | स्मृ ो हि 'ग ग्यौ | स्मृते हि 'गार्ग्यौ |
| ६२१ | २ | गोत्रयूनाः | गोत्रयूनोः |
| ६२१ | २ | उताहा | उताहो |
| ६२१ | ४ | गोत्रयूनेः | गोत्रयूनोः |
| ६२१ | ८ | वर्तन त् | वर्तनात् |
| ६२२ | १० | तद्यौपग स्या | तद्यौपगवस्या |
| ६२२ | १२ | एका गात्रे | एको गोत्रे |
| ६२५ | १ | इत्यन्नप्नोति | इत्यण् प्राप्नोति |
| ६२७ | ७ | विप्रातषेधेन | विप्रतिषेधेन |
| ६३२ | १ | विशषे | विशेषे |
| ६३२ | २ | विशेषश्चात्र | विशेषाश्चात्र |
| ६३२ | १२ | श्रवणश्चात्थास्याम् | श्रवणाश्वत्थाभ्याम् |
| ६३४ | ४ | गो ादङ्कवष्यिते | गोत्रादङ्कवदिष्यते |
| ६३४ | ८ | दवाड्डयड्डय | देवाड्डयड्डयौ |
| ६३५ | ८ | ि निः | द्विनिः |
| ६३५ | ६ | पाण्डुक वली | पाण्डुकम्बली |
| ६३८ | १;२ | ब्रूहिं ति | ब्रूहीं ति |
| ६३८ | ३ | क्रयते | क्रियते |
| ६३८ | ३ | प्रजाप तश्च | प्रजापतिश्च |
| ६३८ | ४ | कि ाः | किमः |
| ६३६ | २ | छ्रक यो | छप्रकरणे |
| ६३६ | ३ | त्रादिभ्य | पुत्रादिभ्य |
| ६४५ | ३ | कृते | कृते § |
| ६५० | १ | ज्ञास्या 'मीह | ज्ञास्या'मीह |
| ६५० | १० | सं ाठं | संपाठं |
| ६५१ | ६ | यज्ञिक | याज्ञिकः |
| ६५६ | २ | एवमथमि | एवमर्थमि |
| ६६१ | ८ | द्रमती | द्रुमती |
| ६६७ | पृष्ठाङ्कम् | ६६७ | ६६५ एवमग्रेऽपि |
| ६६८ | ११ | सूत्र वपर्या | सूत्रविपर्या |
| ६७० | ४ | बक्तव्यम् | वक्तव्यम् |
| ६७० | ११ | कोलेयक | कौलेयकः |
| ६७५ | २ | प्रमात्यः | अमात्यः |
| ६७६ | १२ | कालाद्टञ् | कालाट्ठञ् |
| ६७८ | १५ | रूप्यमयटौ | रूप्यमयटौ |
| ६८१ | १३ | याव ब्रूयात् | यावद्ब्रूयात् |
| ६८२ | ७ | 'वहान्ता | 'वहान्ताद् |
| ६६२ | २ | पूर्वदाद्यच | पूर्वपदाद्यच |
| ६६४ | ५ | तुभ्य | ऋतुभ्य |
| ६६४ | ६ | ट्युट ुलो | ट्युटयुलौ |
| ७०६ | १ | निवतन्ते | निवर्तन्ते |
| ७०८ | १० | [१]समानस्य | [३]समानस्य |
| ७०६ | १ | व्याख्य तव्य | व्याख्यातव्य |
| ७११ | ११ | ३ ४:७२ | ४।३।७२ |
| ७१२ | १० | चरन्ति | चरन्ति। |
| ७२६ | २ | सिद्धोऽन्त्राण | सिद्धोऽन्त्राण् |
| ७३२ | ८ | गभिणि | गर्भिणी |
| ७३५ | ७ | द्रवयात् | द्रुवयात् |
| ७३७ | १४ | मयट्॥३॥ | मयट्॥२॥ |
| ७४१ | २ | चे वृत्ते | चेद्वृत्ते |
| ७५० | १२ | इति। | इति §। |
| ७५२ | १ | प्रयोजनं। | प्रयोजनं |
| ७५२ | २ | जनीमवाच | जनीमवाचु |
| ७५४ | २ | द्व्यचरो | द्व्यचरो |
| ७५५ | ११ | सुख | सुखं |
| ७६२ | ७ | ल | लः |
| ७६२ | ८ | शतपष्टेः | शतषष्टेः |

